# निर्घण्टः ।

अथ सन्दर्भाणां प्रकरणनिर्घण्टः । तत्र तत्त्वसन्दर्भस्य । प्रथमं श्रीभागवतस्य सर्वप्रमाण-श्रेष्ठत्वम् । ततो द्वितीयवाक्यपर्य्यन्तं सङ्क्षेपतात्पर्य्यम् । सप्तमवाक्यपर्य्यन्तं सामान्याकारतत्त्व-निरूपणम् । एवमङ्गेषु सर्वत्र तत्पर्य्यन्तत्वं ज्ञेयम् ॥ २५ ॥ सर्गविसर्गादिव्याख्या । इति प्रथमसन्दर्भः ॥ * ॥

अथ भगवत्सन्दर्भस्य ॥४॥ ब्रह्मत्वपरमात्मत्वादिना विशेषतस्तत्त्वनिरूपणम् ॥ ७ ॥ ब्रह्मादीना-माविर्भावयोग्यता तेषामाविर्भावभेदो वैकुण्ठनिरूपणं विशुद्धसत्त्वनिरूपणञ्च ॥८॥ स्वरूपस्य सशक्ति-त्वस्थापनम् ॥ ११ ॥ विरुद्धशक्त्याश्रयत्वस्थापनम् ॥ १२ ॥ शक्तेरचिन्त्यत्वस्थापनम् ॥ १३ ॥ स्वाभाविकतादृशशक्त्यैव स्वाभाविकनानात्वस्थापनम् अन्तरङ्गादिभेदनिरूपणञ्च ॥ १४ ॥ माया-शक्तिर्निरूप्यते ॥ १५ ॥ स्वरूपशक्तिः ॥२४॥ गुणानां स्वरूपभूतत्वम् ॥२८॥ श्रीविग्रहस्य नित्य-त्वम् ॥४५॥ तस्य विभुत्वसर्वाश्रयत्वे ॥४६॥ स्थूलसूक्ष्मातिरिक्तत्वम् ॥४७॥ प्रत्यग्रूपत्वस्वप्रकाशत्वे ॥५२॥ जन्मकर्म्मगुणरूपाणामप्राकृतत्वम् ॥ ६० ॥ श्रीविग्रहस्य पूर्णस्वरूपत्वम् ॥६२॥ तत्परिच्छदानां स्वरूपांशत्वम् ॥७१॥ वैकुण्ठस्य ॥८०॥ पार्षदानाम् ॥८४॥ त्रिपाद्विभूतेरप्राकृतत्वम् ॥८५॥ सनका-द्यनुभवेन तेषां पूर्वोक्तानां ब्रह्मानन्दतोऽप्युत्कर्षः ॥८६॥ विशेषतोऽपि ॥९९॥ ब्रह्मभगवत्तार-तम्यम् ॥१०३॥ भगवत एव पूर्णतत्त्वाकारत्वम् ॥१०८॥ सर्ववेदाभिधेयत्वम् ॥११०॥ श्रुतिस्तुति-सङ्गतिः ॥११९॥ स्वरूपशक्तिविवरणम् ॥१२२॥ सर्वप्रकरणार्थसंग्रहेण भगवल्लक्षणं तादृशस्यापि भगवतो वेदभक्त्येकगम्यत्वञ्च ॥ इति द्वितीयः ॥ * ॥

अथ परमात्मसन्दर्भस्य ॥१॥ परमात्मा ॥५॥ तद्भेदाः ॥११॥ गुणावताराः ॥१८॥ तत्तार-तम्यम् ॥४७॥ जीवः ॥५५॥ माया ॥५६॥ जगत् ॥५९॥ परिणामस्थापनं विवर्त्तसमाधानञ्च ॥६३॥ जगतः परमात्मनः अनन्यत्वम् ॥८४॥ जगतः सत्यत्वं तदनन्तरं स्वामिमतानुमतिश्च ॥९२॥ निर्गुणस्येश्वरस्य कर्त्तृत्वादियोजना ॥१०४॥ भगवल्लीलावतारादीनां भक्तभावार्थप्रवृत्तित्वम् ॥१०६॥ षड्विधलिङ्गेन भगवति तात्पर्य्यम् । इति तृतीयः ॥ * ॥

अथ श्रीकृष्णसन्दर्भस्य ॥२८॥ श्रीकृष्णस्य स्वयम्भगवत्त्वम् ॥२९॥ अंशत्ववाक्यानां गतिः महा-कालपुराख्यानस्य केशत्वस्य नृसिंहादिसाम्यस्य च समाधानम् ॥ २७ ॥ लीलागुणपुरुषाव-तारकर्त्तृत्वेन तस्यैव पूर्णत्वम् ॥४२॥ तादृशभगवत्तायां स्वामिसम्मतयः ॥४३॥ तदवतारप्रसङ्गस्यापि तदनुगमः ॥ ७८ ॥ सर्वश्रोतृवक्तॄणां तदेकतात्पर्य्यं तदन्ते तत्राभ्यासः ॥७८॥ कृष्णस्त्विति वाक्यस्य प्रतिनिधिवाक्यानि तदन्ते सामान्यतः सर्वशास्त्राणां तत्रैव समन्वयः ॥८१॥ मतान्तराप-वादः तदन्ते तन्नाममहिमद्वारापि गतिसामान्यं तदन्ते गीतादिनामपि तदनुगतिः ॥८९॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीबलदेवादीनां महासङ्कर्षणादित्वम् ॥९२॥ श्रीकृष्णे सर्वांशप्रवेशयुक्ति: ॥९६॥ श्रीकृष्ण
नित्या स्थिति: ॥१०५॥ तत्र द्विभुजत्वेनापि तदन्ते तद्विरोधिवाक्यव्याख्या। गोलोकनिरूपणं वृन्दा
वनादीनां नित्यकृष्णधामत्वं गोलोकवृन्दावनयोरैकत्वञ्च ॥११६॥ एतेषु मूलप्रमाणानि ॥१५
श्रीयदुगोपादीनां नित्यतत्परिकरत्वं तदन्ते ततस्ततोऽन्यत्र गमनसमाधानम् ॥१७६॥ प्रकटाप्रक
लीलाव्यवस्था। तदन्ते विभुत्वेऽपि तत्र तत्रैव स्थितौ समाधानम् ॥१८१॥ तल्लीलाद्वयसमन्वय:
१८२ ॥ तदनन्तरस्थिति: तदन्ते श्रीकृष्णस्य गोकुल एव प्रकाशातिशय: ॥ १८३ ॥ श्रीप
महिष्यादीनां स्वरूपशक्तित्वम् ॥ १८८ ॥ ताभ्योऽपि श्रीगोपीनामुत्कर्ष:। तदन्ते तन्नामानि
१९९॥ तत्रापि श्रीराधाया उत्कर्ष: ॥ इति चतुर्थ: ॥*॥

अथ भक्तिसन्दर्भस्य ॥२॥ श्रीभगवत: साक्षाद्भक्तेरेवाभिधेयत्वम् ॥९१॥ निखिलसम्वादैर्
तस्यास्तत्तानिर्द्धारणम् ॥९३॥ अन्वयव्यतिरेकाभ्यामपि ॥९४॥ तत्रान्वये सर्वशास्त्रश्रवणफलत्वेन
वर्णाश्रमाचारफलत्वेन ॥९६॥ अन्तर्भूतज्ञानत्वेन ॥९९॥ व्यतिरेके कर्म्मानादरेण ॥१०१॥ तत्र
मुखविप्रनिन्दया तदन्ते भगवत्समर्पितकर्म्मणोऽप्यनादरेण ॥१०३॥ योगानादरेण ॥१०५॥ ज्ञानस्
श्रमत्वादिना ॥१०६॥ आश्रयान्तरस्वातन्त्र्यानादरेण तन्मध्ये तदीयत्वेन सर्वेषामादरविधानम् ॥११
तदभक्तसाचानादर: ॥११६॥ जीवन्मुक्तपरममुक्तशिवादिपर्य्यन्तेषु भक्तेर्नित्यता तदन्ते षड्लि
लिङ्गेन तस्या अभिधेयत्वम् ॥ ११४ ॥ गतिसाम्येन च ॥ १२० ॥ दशलक्षणादौ कथित
च ॥१२१॥ तस्या: सर्वफलदातृत्वम् ॥१३८॥ नैर्गुण्यम् ॥१४०॥ स्वप्रकाशत्वपरमसुखरूपत्वे
भगवत्प्रीतिहेतुत्वादि ॥१५२॥ यत्किञ्चिद्ज्ञजनभक्त्याभासादिनापि तत्तत् फलं तदन्ते भक्त्याभा
पराधेनापि ॥१६४॥ तत्तत्फलादर्शने समाधानम् ॥१६९॥ निष्कामभक्तिप्रशंसा ॥१७७॥ अधिका
भेदव्यवस्थयापि पुनर्निष्कामभक्तिस्थापनम्। अथ तादृशभगवत्साम्मुख्ये सत्सङ्गस्यैव निद
त्वम् ॥१९८॥ महतां भेदा: ॥२०१॥ सद्विशेषलक्षणं तदन्ते तदेव ॥२१३॥ गुर्वाश्रयविवेक: ॥२
भक्तिभेदनिरूपणे ज्ञानस्य लक्षणम्। तदन्ते अहंग्रहोपासनस्य ॥२१६॥ भक्तेर्लक्षणम्।
रोपसिद्धादीनाम् ॥२३९॥ वैधभक्तौ शरणापत्ति: ॥२३७॥ श्रीगुरुसेवा ॥ २४२ ॥ महाभार
प्रसङ्ग: ॥२४६॥ तत्परिचर्य्या। तदन्ते सामान्यवैष्णवसेवा ॥२६१॥ श्रवणं तदन्ते च कि
॥२७४॥ कीर्त्तनम् ॥२७९॥ स्मरणम् ॥२८२॥ पादसेवनं तदन्ते च किञ्चित् २९९॥ अ
॥३०१॥ तत्रापराधा:। तदन्ते च तत्क्षमणम् ॥३०३॥ वन्दनम् ॥३०५॥ दास्यम् ॥३०८॥
॥३०९॥ आत्मनिवेदनम् ॥३१४॥ अथ रागानुगाविवेचनं तदन्ते च तदेव ॥३३८॥ श्री
भजनवैशिष्ट्यम् ॥३४०॥ सिद्धिक्रम: ॥ इति पञ्चम: ॥ * ॥

अथ प्रीतिसन्दर्भस्य। तत्र प्रथमत: प्रमाणान्तरेण श्रीभगवत्प्रीते: परमपुरुषार्थनि
तत्रैव परतत्त्वनावसाक्षात्कारस्य परमपुरुषार्थत्वं तत्रैव तस्य मुक्तित्वमपि तत्रैव सवि
निर्विशेषभेद: तत्रैव जीवन्मुक्त्युत्क्रान्तमुक्तिभेद: तत्रैव भगवत: साक्षात्कारद्वय' तत्रैव

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मुक्तिभ्यो भगवत्प्रीतेराधिक्यम् ॥२॥ अथ श्रीभागवतप्रमाणेन परतत्त्वमात्रसाक्षात्कारस्य परमपुरुषार्थत्वं तदन्ते सद्योमुक्तिक्रममुक्ती ॥ ४ ॥ ब्रह्मसाक्षात्कारलक्षणा जीवन्मुक्तिः ॥६॥ भगवत्साक्षात्कारलक्षणा जीवन्मुक्तिः तल्लक्षणा उत्क्रान्तमुक्तिः भगवत्साक्षात्कारस्य मुक्तित्वं तदन्ते तस्यैवान्तर्बहिर्भेदेन द्वैविध्यं तस्यैव ब्रह्मसाक्षात्कारात् परमत्वम्॥८॥ तत्रापि बहिःसाक्षात्कारस्य ॥ ९॥ तत्साक्षात्कारलक्षणा जीवन्मुक्तिः तदन्ते तल्लक्षणा उत्क्रान्तमुक्तिः तत्र सालोक्यादिभेदाः तत्रैव सामीप्यस्याधिक्यम् ॥१६॥ भगवद्भक्तेर्मुक्तित्वम् ॥१७॥ तस्या एवोपादेयत्वम्॥४०॥ तत्रोपपत्तिः ॥६०॥ तत्रान्यथोदाहरणसमधानम्॥६१॥ अथ श्रीभगवत्प्रीतेः स्वरूपलक्षणम् ॥६६॥ तस्या गुणातीतत्वादि ॥ ७२॥ तत्तटस्थलक्षणम् ॥७७॥ तदाविर्भावभेदाः। तदन्ते प्रीतिलक्षणवाक्यानां निष्कर्षः ॥८३॥ तत्र श्रीकृष्णप्रीतेः श्रीकृष्णाविर्भावपूर्णत्वेन श्रैष्ठ्यं तदन्ते प्रीतिरत्यादिभेदनिरूपणम्। तदन्ते प्रीतौ रत्यादिभेदाः। तदन्ते अभिमानभेदेन प्रीतेर्भक्तस्य च भेदाः। तदन्ते श्रीव्रजदेवीनां कामस्य शुद्धप्रेमत्वस्थापनम्। तदन्ते ज्ञानभक्त्यादीनां कचिन्मिश्रत्वनिरूपणम् ॥९३॥ श्रीभागवतमतेन रत्याद्युदाहरणं तदन्ते ज्ञानिभक्तादिषु रत्यादिव्यवस्था ॥९४॥ तत्तारतम्ये परिकराभिमानिनां प्रीत्युत्कर्षः ॥९६॥ श्रीभगवतेऽपि तत्तदभिमानत्वम् ॥९७॥ ऐश्वर्य्यमाधुर्य्यानुभवयोस्तारतम्यम् ॥९९॥ तत्र गोकुलवासिनां श्रैष्ठ्यम् ॥१००॥ तत्रापि सखीनां तदन्ते पित्रोः ॥ १०८ ॥ श्रीगोपीनाम् ॥ १०९ ॥ तत्रापि श्रीराधायाः ॥ ११० ॥ श्रीभगवत्प्रीते रसतापत्तिस्थापनं तदन्ते अनुकार्य्येऽपि रसत्वस्थापनं तदन्ते तस्य लौकिकरसात् श्रैष्ठ्यम् ॥ ११५ ॥ तत्रालम्बनविभावाः। तदन्ते तत्सन्देहनिरासः। तदन्ते उद्दीपनविभावाः ॥ ११९ ॥ तत्र गुणाः क्वचिद्गुणविरोध्यपि गुणः ॥१४२॥ तत्रैव भगवत्कामविशेषस्य प्रेमविशेषत्वं तदन्ते च किञ्चित् ॥१४९॥ तदन्ते धीरोदात्तादिभेदाः ॥१५२॥ ऐश्वर्य्यमाधुर्य्यमय्योर्माधुर्य्यमय्या लीलायाः श्रैष्ठ्यं तदन्ते च किञ्चित् ॥ १५४॥ तत्र धर्म्मज्ञानलीलयोः समाधानम्॥१५६॥ उद्दीपने द्रव्याणि कालाश्च तदन्ते गोकुलगतप्रकाशलीलयोराधिक्यं तदन्ते अनुभावसञ्चारिभावविवेचनं रसस्य पाञ्चविध्यस्थापनञ्च ॥१७३॥ गौणरससप्तकमिति ॥ २०२ ॥ रसाभासाः तदन्ते मुख्यरसनिरूपणे शान्ताख्यभक्तिरसः भक्तिमये रसे आश्रयभक्तिरसः ॥२१७॥ तत्र दास्यभक्तिरसः ॥ २२३ ॥ प्रश्रयभक्तिरसः ॥२४१॥ वत्सलः ॥२७३॥ मैत्रीमयः ॥२८७॥ उज्ज्वले आलम्बनविवेके तद्वल्लभानां भेदाः ॥२८८॥ तासु प्रपिपच्चमदमानादीनां समाधानम्॥३१३॥ उद्दीपनविभावाः ॥३३६॥ अनुभावाः ॥३६२॥ व्यभिचारिणः ॥ ३६४ ॥ स्थायी तदन्ते साक्षात्सम्भोगात्मकतदनुमोदनात्मकभेदयोर्विवेकः ॥३६३॥ तत्रैव तद्भावभेदाः तदन्ते सम्भोगविप्रलम्भादिभेदाः ॥ ३८३ ॥ पूर्वरागाख्यो विप्रलम्भः स सम्भोगः ॥३८६॥ मानाख्यः ससम्भोगः ॥३८७॥ प्रेमवैचित्त्याख्यः ससम्भोगः ॥४२१॥ प्रवासाख्यः ससम्भोगः तदन्ते च किञ्चित् ॥४१९॥ सम्भोगभेदाः तदन्ते श्रीराधिकादेव्या महिमा ॥*॥

---

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

# ग्रन्थकृत्परिचयः ।

श्रीकृष्णचैतन्यसम्प्रदायप्रसिद्धानां षण्णां गोस्वामिनाम् अन्यतरः श्रीजीवनामा गोस्वामिपादोऽ
ग्रन्थस्य प्रणेता। स तु सनातनानुजस्य वल्लभस्य पुत्रः। श्रीजीवगोस्वामी पितृव्यश्रीसनात
गोस्वामिना रामकेलीति प्रसिद्धे स्थाने शैशवं निनाय। तत एव तस्य वैष्णवधर्म्मेऽनुर
जाता। अथ तस्य पितरि श्रीवल्लभे ज्येष्ठेन श्रीरूपगोस्वामिना सह श्रीमहाप्रभोर्दर्शनार्थं प्र
प्रस्थिते स तु चन्द्रद्वीपं गत्वा व्याकरणादीनधीत्य श्रीमन्नवद्वीपं जगाम। तत्र च प्रभुवर
श्रीमन्नित्यानन्दस्य आदेशं शिरसि निधाय श्रीमद्वृन्दावनं गत्वा ब्रह्मचर्य्येणैव अवशिष्टं क
यापयामास। पथि श्रीवाराणस्यां तत्कालप्रथितस्य श्रीमन्मधुसूदनवाचस्पतेः सकाशात् तस्य
वेदान्तादिशास्त्राध्ययनस्य वार्त्तापि श्रूयते। तदनन्तरं श्रीजीवः श्रीमद्वृन्दारण्यमागत्य पितृव्यं
श्रीरूपसनातनयोः चरणसन्निधावुवास। स तु श्रीरूपगोस्वामिना दीक्षितः शिक्षितः सर्वथा पितृ
योरनुवर्त्ती चासीदिति प्रसिद्धिः। तद्रचितग्रन्थसंग्रहश्लोकाः ;—श्रीमद्वल्लभपुत्रश्रीजीवस्य कृति
यते। शब्दानुशासनं नाम्ना हरिनामामृतं तथा॥ तत्सूत्रमालिका तत्र प्रयुक्तो धातुसंग्रहः
कृष्णार्चादीपिका सूक्ष्मा गोपालविरुदावली॥ रसामृतस्य शेषश्च श्रीमाधवमहोत्सवः। सङ्क
कल्पवृक्षो यश्चम्पूभावार्थसूचकः॥ टीका गोपालतापन्याः संहितायाश्च ब्रह्मणः। रसामृतं
ज्वलस्य योगसारस्तवस्य च॥ तथा चाग्निपुराणस्थगायत्रीविवृतिरपि। श्रीकृष्णपदचिह्न
पाद्मोक्तानामथापि च॥ लक्ष्मीविशेषरूपा या श्रीमद्वृन्दावनेश्वरी। तस्याः करपदस्थ
चिह्नानाञ्च समाहृतिः॥ पूर्वोत्तरतया चम्पूद्वयी या च त्रयी त्रयी। सन्दर्भाः सप्त विस्त
श्रीमद्भागवतस्य वै॥ तत्त्वाख्यो भगवत्संज्ञः परमात्माख्य एव च। कृष्णभक्तिप्रीतिसं
क्रमाख्यः सप्तमः स्मृतः॥ सम्बन्धस्य विधेयस्य प्रयोजनमिति त्रयम्। हस्तामलकवद्येषु तं
रार्यैः प्रकाशितम्। इत्यलमतिविस्तरेण।

---

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

षट्सन्दर्भनामक-

# श्रीभागवतसन्दर्भे

## तृतीयः

## परमात्मसन्दर्भः ।

तौ सन्तोषयता सन्तौ श्रीलरूपसनातनौ ।
दाक्षिणात्येन भट्टेन पुनरेतद्विविच्यते ॥
तस्याद्यं ग्रन्थनालेखं क्रान्तव्युत्क्रान्तखण्डितम् ।
पर्य्यालोच्याथ पर्य्यायं कृत्वा लिखति जीवकः ॥

अथ परमात्मा विव्रियते । अत्र तं जगद्गतजीवनिरूपणपूर्व्वकं निरूपयति द्वाभ्याम् ।

क्षेत्रज्ञ एता मनसो विभूतीर्जीवस्य मायारचितस्य नित्याः । आविर्हिता क्वापि तिरोहिताश्च शुद्धो विचष्टे ह्यविशुद्धकर्त्तुः ॥ क्षेत्रज्ञ आत्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरजः परेशः । नारायणो भगवान् वासुदेवः स्वमाययात्मन्यवधीयमानः ॥ १ ॥

यः शुद्धोऽपि मायातः परोऽपि मायारचितस्य वक्ष्यमाणस्य सर्व्वक्षेत्रस्य मायया कल्पितस्य मनसोऽन्तःकरणस्यैताः प्रसिद्धा विभूतीर्वृत्तीर्विचष्टे विशेषेण पश्यति, पश्यंस्तत्राविष्टो भवति, स खल्वसौ जीवनामा स्वशरीरहृदयलक्षणक्षेत्रस्य ज्ञातृत्वात् क्षेत्रज्ञ उच्यते इत्यर्थः । तदुक्तम् । यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकम् । परोऽपि मनुतेऽनर्थं तत्कृतञ्चाभिपद्यते ॥ इति । तस्य मनसः कीदृशतया मायारचितस्य तत्राह, जीवस्य जीवो-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पाधितया जीवतादात्म्येन रचितस्य। ततश्च तत्तयोपचर्य्यमान-स्येत्यर्थः। ततश्च कीदृशस्य, अविशुद्धं भगवद्वहिर्मुखं कर्म्म करोतीति तादृशस्य। कीदृशीर्विभूतीर्नित्या अनादित एवानु-गताः। अत्र च कदा कीदृशीरित्यपेक्षायामाह, जाग्रत्स्वप्नयो-राविर्भूताः सुषुप्तौ तिरोहिताश्चेति। यस्तु पुराणो जगत्कारणभूतः पुरुषः, आद्योऽवतारः पुरुषः परस्येत्यादि द्वितीयादौ प्रसिद्धः, साक्षादेव स्वयं ज्योतिः स्वप्रकाशो नतु जीववदन्यापेक्षया, अजो जन्मादिशून्यः, परेषां ब्रह्मादीनाम् अपीशः, नारं जीवसमूहः स्वनियम्यत्वेनायनं यस्य सः, भगवान् ऐश्वर्य्याद्यंशवान्, भगवदंश-त्वात्, वासुदेवः सर्व्वभूतानामाश्रयः, स्वमायया स्वस्वरूपशक्त्या आत्मनि स्वस्वरूपे अवधीयमानः अवस्थाप्यमानः, कर्म्मकर्त्तृ प्रयोगः, मायायां मायिकेऽप्यन्तर्यामितया प्रविष्टोऽपि स्वरूपशक्त्या स्वरूपस्थ एव नतु तत्संसक्त इत्यर्थः, वासुदेवत्वेन सर्व्वक्षेत्रज्ञात्-त्वात् सोऽपरः, (मायामोहितात् जीवादन्यः मायारहित शुद्धः) क्षेत्रज्ञ आत्मा परमात्मेति। तदेवमपि मुख्यं क्षेत्रज्ञत्वं परमात्मन्येव। तदुक्तम्। सर्व्वं पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्व्वज्ञमनन्तमीड़े इति। तथा श्रीगीतोपनिषत्सु। इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते। एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः। क्षेत्रज्ञञ्चापि मां विद्धि सर्व्वक्षेत्रेषु भारत। क्षेत्रक्षेत्रज्ञयो-र्ज्ञानं यत्तज्ज्ञानं मतं मम॥ अत्र खलु क्षेत्रज्ञञ्चापि मां विद्धीति सर्व्वेष्वपि क्षेत्रेषु माञ्च क्षेत्रज्ञं विद्धि, नतु जीवमिव स्वक्षेत्र एव इत्येवार्थं वहति। नच जीवेशयोः सामानाधिकरण्येन निर्व्विशेष-चिद्वस्त्वेव ज्ञेयतया निर्द्दिशति, सर्व्वक्षेत्रेष्वित्यस्य वैयर्थ्यापत्तेः। ज्ञेयं यत्तत् प्रवक्ष्यामीत्यादौ सर्व्वतः पाणिपादन्तत् सर्व्वतोऽक्षिशिरो-मुखमित्यादिना सविशेषस्यैव निर्द्देक्ष्यमाणत्वात् अमानित्वमित्या

दिना ज्ञानस्य च तथोपदेक्ष्यमाणत्वात्। किञ्च क्षेत्रज्ञञ्चापीत्यत्र तत्त्वमसीतिवत् सामानाधिकरण्येन तन्निर्विशेषज्ञाने विवक्षिते क्षेत्रज्ञेश्वरयोर्ज्ञानमित्येवानूद्येत नतु क्षेत्रक्षेत्रज्ञयोर्ज्ञानमिति। किन्तु क्षेत्रक्षेत्रज्ञयोरित्यस्यायमर्थः। द्विविधयोरपि क्षेत्रक्षेत्रज्ञयोर्यज्ज्ञानं तन्ममैव ज्ञानं मतम्। अन्यार्थस्तु परामर्श इति न्यायेन सज्ज्ञानैकतात्पर्य्यकमित्यर्थः। ज्ञेयस्यैकत्वेनैव निर्द्दिष्टत्वात् योग्यत्वाच्च। नच निरीश्वरसांख्यवत् क्षेत्रक्षेत्रज्ञमात्रविभागादत्र ज्ञानं मतं मामित्यनेनेश्वरस्यापेक्षितत्वात्। नच विवर्त्तवादवदीश्वरस्यापि भ्रममात्रप्रतीतपुरुषत्वं तद्वचनलक्षणसवेदगीतादिशास्त्राणामप्रामाण्यात् बौद्धवादापत्तेः। तस्याञ्च सत्यां बौद्धानामिव विवर्त्तवादिनां तद्व्याख्यानायुक्तेः। नच तस्य सत्यपुरुषत्वेऽपि निर्व्विशेषज्ञानमेव मोक्षसाधनमिति तदीयशास्त्रान्तरतः समाहार्य्यम्। एवं सततयुक्ता ये इत्यादि पूर्व्वाध्याये निर्व्विशेषज्ञानस्य हेयत्वेन विवक्षितत्वात्। तत्रैव च ये तु सर्व्वाणि कर्म्माणीत्यादिनानन्यभक्तानुद्दिश्य तेषामहं समुद्धर्त्ता मृत्युसंसारसागरादित्यनेन तज्ज्ञानापेक्षापि नादृतेति। तदुक्तमेकादशे स्वयं भगवता। यत्कर्म्मभिर्यत्तपसेत्यादि। मोक्षधर्म्मे च। या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये। तया विना तदाप्नोति नरो नारायणाश्रय इति। अत्र तु पूर्व्वाध्यायविश्लाघितं तदेवाद्वेष्टा-कर्त्तुं सविशेषतया निर्द्दिश्य, इति क्षेत्रं तथा ज्ञानं ज्ञेयञ्चोक्तं समासतः। मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यत, इत्यन्तेन भक्तिसम्बलिततया सुकरार्थप्रायं कृतम्। अतएवात्र व्यष्टिक्षेत्रज्ञ एव भक्तत्वेन निर्द्दिष्टः समष्टिक्षेत्रज्ञस्तु ज्ञेयत्वेनेति क्षेत्रज्ञानाभ्यां सह ज्ञेयस्य पाठादनुस्मार्य्यं तदनन्तरञ्च तस्य तस्य च जीवत्वमीश्वरत्वञ्च क्षरं नेति दर्शितम्। यतः, पुरुषः प्रकृतिस्थो हि भुङ्क्ते

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रकृतिजान् गुणान्। कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु॥ इति जीवस्य प्रकृतिस्थत्वं निर्दिश्य स्वतस्तस्या प्राकृतत्वदर्शनया स्फुटमेवाक्षरत्वं ज्ञापितम्। उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः। परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः पर इति जीवात्परत्वेन निर्द्दिष्टस्य परमात्माख्यपुरुषस्य तु कैमुत्येनैव तद्दर्शितम्। द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः॥ इत्यत्र जीवस्याप्यक्षरत्वं कण्ठोक्तमेव। तत्रोपद्रष्टा परमसाक्षी, अनुमन्ता तत्तत्कर्म्मानुरूपः प्रवर्त्तकः, भर्त्ता पोषकः, भोक्ता पालयिता, महेश्वरः सर्व्वाधिकर्त्ता, परमात्मा सर्व्वान्तर्यामीति व्याख्येयम्। उत्तरपद्ययोस्तु। कूटस्थ एकरूपतया तु यः काल-व्यापी स कूटस्थ इत्यमरकोषादवगतार्थः। असौ शुद्धजीव एव उत्तमः पुरुषस्त्वन्य इत्युत्तरात्। तदेवमत्रापि क्षेत्रक्षेत्रज्ञसर्व्व-क्षेत्रज्ञा उक्ताः। अत्र चोत्तरयोरन्य इत्यनेन भिन्नयोरेव सतो-रक्षरयोर्न तत्तद्रूपतापरित्यागः सम्भवेदिति न कदाचिदपि निर्व्विशेषरूपेणावस्थितिरिति दर्शितम्। तस्मान्मद्भावायोपपद्यते इति यदुक्तं तदपि तत्साष्टिंप्राप्तितात्पर्य्यकम्। तदेवं द्वयोरक्षरत्वेन साम्येऽपि जीवस्य हीनशक्तित्वात् प्रकृत्याविष्टस्य तन्निवृत्त्यर्थ-मीश्वर एव भजनीयत्वेन ज्ञेय इति भावः। तस्मादिदं शरीर-मित्यादिकं पुनरित्थं विवेचनीयम्। इदं स्वस्यापरोक्षमित्यर्थः। शरीरक्षेत्रयोरेकैकत्वेन ग्रहणमत्र व्यक्तिपर्य्यवसानेन जातिपुर-स्कारेणैवेति गम्यते। सर्व्वक्षेत्रेष्विति बहुवचनेनानुवादात्। एतद्यो वेत्ति इत्यत्र देहोऽसवोऽक्षामनव इत्यादौ सर्व्वं पुमान् वेद गुणांश्च तज्ज्ञ इत्युक्तदिशा क्षेत्रज्ञ एता मनसो विभूतीरित्युक्त-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दिशा च जानातीत्यर्थः। क्षेत्रज्ञञ्चापि मां विद्धीत्यत्र मां स्वयं भगवन्तमेव सर्व्वेष्वपि समष्टिव्यष्टिरूपेषु क्षेत्रेषु नतु पूर्व्वक्षेत्रज्ञवत् निजनिजक्षेत्र एव क्षेत्रज्ञञ्च विद्धीति। तदुक्तम्—विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति। यत्र गत्यन्तरं नास्ति तत्रैव लक्षणामयकष्टमाश्रीयते। तथापि तेन सामानाधिकरण्यं यदि विवक्षितं स्यात्तर्हि क्षेत्रज्ञञ्चापि मां विद्धीत्येतावदेव तं च मां विद्धीत्येतावदेव वा प्रोच्येत नतु सर्व्वक्षेत्रेषु भारतेत्यधिकमपि। किन्तु क्षेत्रज्ञ एता मनसो विभूतीरित्यादिवत् क्षेत्रज्ञद्वयमपि वक्तव्यमेव स्यात्। तथा च ब्रह्मसूत्रम्। गुहां प्रविष्टावात्मानौ हि तद्दर्शनादिति। तद्द्वैविध्यमेव चोपसंहृतम्। पुरुषः प्रकृतिस्थो हीत्यादिना। तस्मादुपक्रमार्थस्योपसंहाराधीनत्वादेष एवार्थः समञ्जसः। यथोक्तं ब्रह्मसूत्रकृद्भिः। असद्व्यपदेशान्नेति चेन्न धर्म्मान्तरेण वाक्यशेषादिति। अथ क्षेत्रक्षेत्रज्ञयोर्ज्ञानमित्यत्र यत् क्षेत्रे ज्ञानेन्द्रियगतञ्चेतनागतञ्च ज्ञानं दर्शयिष्यते यच्च पूर्व्वक्षेत्रज्ञे निजनिजक्षेत्रज्ञानं दर्शितं तत्तत् मज्ज्ञानांशस्य क्षेत्रेषु च्छायारूपत्वात् क्षेत्रज्ञेषु यत्किञ्चिदंशांशतया प्रवेशान्ममैव ज्ञानं मतमिति। तस्मात् साधूक्तं मुख्यं क्षेत्रज्ञत्वं परमात्मन्येवेति।

अत्र श्रीभगवतः परमात्मरूपेणाविर्भावोऽपि। अजनि च यन्मयं तदविमुच्यनियन्तृ भवेदित्युक्तदिशा शक्तिविशेषालिङ्गिताद् यस्मादेवांशाज्जीवानामाविर्भावस्तेनैवेति ज्ञेयम्। तदुक्तं तत्रैव। विष्टभ्याहमित्यादि। श्रीविष्णुपुराणे च। यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थिता। परब्रह्मस्वरूपस्य प्रणमाम तमव्ययमिति। पूर्णंशुद्धशक्तिस्तु कलाकाष्ठानिमेषादीत्यनेन दर्शिता। तथा श्रीनारदपञ्चरात्रे। नारद उवाच। शुद्धसर्गमहं देव ज्ञातुमिच्छामि तत्त्वतः। सर्गद्वयस्य चैवास्य यः परत्वेन वर्त्तते।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तत्रैतत् पूर्व्वोक्तः प्राधानिकः शाक्तश्चेत्येतत् सर्गद्वयस्येति ज्ञेयम्। श्रीभगवानुवाच। यः सर्व्वव्यापको देवः परब्रह्म च शाश्वतम्। चित्सामान्यं जगत्यस्मिन् परमानन्दलक्षणम्। वासुदेवादभिन्नन्तु वह्न्यर्केन्दुशतप्रभम्। वासुदेवोऽपि भगवांस्तद्धर्म्मा परमेश्वरः। स्वां दीप्तिं क्षोभयत्येव तेजसा तेन वै युतम्। प्रकाशरूपो भगवानच्युतश्चासकृद्द्विज। सोऽच्युतोऽच्युततेजाश्च स्वरूपं वितनोति वै। आश्रित्य वासुदेवञ्च खस्थो मेघो जलं यथा। क्षोभयित्वा स्वमात्मानं सत्यभास्वरविग्रहम्। उत्पादयामास तदा समुद्रोर्म्मि-र्जलं यथा। स चिन्मयः प्रकाशात्मा उत्पाद्यात्मानमात्मना। पुरुषाख्यमनन्तञ्च प्रकाशप्रसरं महत्। स च वै सर्व्वजीवाना-माश्रयः परमेश्वरः। अन्तर्यामी स तेषां वै तारकाणामिवाम्बरम्। सेन्धनः पावको यद्वत् स्फुलिङ्गनिचयं द्विज। अनिच्छातः प्रेरयति तद्वदेव परः प्रभुः। प्राग्वासनानिबन्धानां बन्धानाञ्च विमुक्तये। तस्माद्विद्धि तदंशांस्तान् सर्व्वांशन्तमजं प्रभुमिति। अतएव यत्तु ब्रह्मादौ श्रीप्रद्युम्नस्य मन्वादौ श्रीविष्णोः रुद्रादौ श्रीसङ्कर्षण-स्यान्तर्यामित्वं श्रूयते तन्नानांशमादायावतीर्णस्य तस्यैव तत्तदंशेन तत्तदन्तर्यामित्वमिति मन्तव्यम्। अतएव रुद्रस्यस्य सङ्कर्षणप्रकृतित्वं पुरुषप्रकृतित्वञ्चेत्युभयमप्याम्नातं प्रकृतिमात्मनः सङ्कर्षणसंज्ञं भव उपधावतीत्यादौ आदावभूच्छतधृतिरित्यादौ च। एष एव भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान्। आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः। इत्यादौ विवृतम्। तस्मात् सर्व्वान्तर्यामी पुरुष एव ब्रह्मेति परमात्मेतीत्यादौ परमात्मत्वेन निर्द्दिष्ट इति स्थितम्। व्याख्यातञ्च स्वामिभिः। तस्मै नमो भगवते ब्रह्मणे परमात्मन इत्यत्र वरुणस्तुतौ। परमात्मने सर्व्व-जीवनियन्त्रे इति। अस्य परमात्मनो मायोपाधितया पुरुषत्वन्तूप-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

चरितमेव । तदुक्तं वैष्णवे एव । नान्तोऽस्ति यस्य नच यस्य समुद्भवोऽस्ति, वृद्धिर्न यस्य परिणामविवर्ज्जितस्य । नापक्षयञ्च समुपैत्यविकल्पवस्तु यस्तं नतोऽस्मि पुरुषोत्तममाद्यमीड्यम् ॥ तस्यैव योऽनुगुणभुग्बहुधैक एव शुद्धोऽप्यशुद्ध इव मूर्त्तिविभागभेदैः । ज्ञानान्वितः सकलसत्त्वविभूतिकर्त्ता । तस्मै नतोऽस्मि पुरुषाय सदाव्ययायेति ॥ तस्यैवानु पूर्व्वोक्तात् परमेश्वरात् समनन्तरम् । बहुधा ब्रह्मादिरूपेण । अशुद्ध इव सृष्ट्यादिष्वासक्त इव । मूर्त्तिविभागानां दक्षादिमन्वादिरूपाणां भेदैः । सर्व्वसत्त्वानां विभूतिकर्त्ता विस्तारकृत् इति । स्वामी । तत्र गुणभुगिति षाड़्गुण्यानन्दभोक्तेत्यर्थः । यत्तत् सूक्ष्ममविज्ञातमव्यक्तमचलं ध्रुवम् । इन्द्रियैरिन्द्रियार्थैश्च सर्व्वभूतैश्च वर्ज्जितम् । स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते । त्रिगुणव्यतिरिक्तो वै पुरुषश्चेति कल्पित इति मोक्षधर्म्मेऽपि नारायणीयोपाख्याने । श्रुतयोऽप्येनं शुद्धत्वेनैव वर्णयन्ति । एको देवः सर्व्वभूतेषु गूढ़ः सर्व्वव्यापी सर्व्वभूतान्तरात्मा । कर्म्माध्यक्षः सर्व्वभूताधिवासः साक्षी चेताः केवलो निर्गुणश्च । अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोन्य इत्याद्याः । तस्मात् साधु व्याख्यातं क्षेत्रज्ञ एता इत्यादिपद्यद्वयम् ॥ १ ॥ ११ ॥ श्रीब्राह्मणोरहुगणम् ॥

अथ तस्याविर्भावे योग्यताप्राग्वद्भक्तिरेव ज्ञेया । आविर्भावस्तु त्रिधा यथा नारदीये तन्त्रे ।

विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः । एकन्तु महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् । तृतीयं सर्व्वभूतस्थं तानि ज्ञात्वा विमुच्यते ॥

तत्र प्रथमो यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति स ऐक्षतेत्या-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

द्युक्तः। महासमष्टिजीवप्रकृत्योरैकतापन्नयोर्द्रष्टेत्येक एव। अयमेव सङ्कर्षण इति महाविष्णुरिति च। ब्रह्मसंहितायां यथा। तल्लिङ्गं भगवान् शम्भुर्ज्योतीरूपं सनातनम्। तस्मिन्नाविरभूल्लिङ्गे महाविष्णुर्जगत्पतिः। सहस्रशीर्षा पुरुष इत्यारभ्य, नारायणः स भगवानापस्तस्मात् सनातनात्। आविरासन् कारणार्णोनिधिः सङ्कर्षणात्मकः। योगनिद्रां गतस्तस्मिन् सहस्रांशः स्वयं महान्। तद्रोमविलजालेषु वीजं सङ्कर्षणस्य च। हैमान्यण्डानि जातानीत्यादि। लिङ्गमिति यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थितेत्यनुसारेण तस्य महाभगवतः श्रीगोविन्दस्य पुरुषोत्पादकत्वाल्लिङ्गमिव लिङ्गं यः खल्वंशविशेषस्तदेव शम्भुः शम्भुशब्दस्य मुख्याया वृत्तेराश्रय इत्यर्थः।

अथ द्वितीयपुरुषस्तत्सृष्ट्वा तदेवानुप्राविशदित्याद्युक्तः समष्टिजीवान्तर्यामी। तेषां ब्रह्माण्डात्मकानां बहुभेदाद्बहुभेदः। तत्रैव सूक्ष्मान्तर्यामी प्रद्युम्नः स्थूलान्तर्याम्यनिरुद्ध इति क्वचित्।

अनेन महावैकुण्ठस्थाः सङ्कर्षणादयस्तदंशिनः। ये तु चित्ताद्यधिष्ठातारो वासुदेवादयस्ते तदंशा एवेत्यादि विवेचनीयम्।

तृतीयोऽपि पुरुषो "द्वा सुपर्णा सयुजा सखायाः समानं वृक्षं परिषस्वजाते। एकस्तयोः खादति पिप्पलान्नमन्यो निरश्नन्नभिचाकशीतीत्याद्युक्तो व्यष्ट्यन्तर्यामी। तेषां बहुभेदाद्बहुभेदः।

तत्र प्रथमस्याविर्भावो यथा आद्योऽवतारः पुरुषः परस्येति ॥ २ ॥ टीका च "परस्य भूम्नः पुरुषः प्रकृतिप्रवर्त्तकः। यस्य सहस्रशीर्षेत्याद्युक्तो लीलाविग्रहः स आद्योवतार" इतेषा। अत्र चान्यत्रचावतारत्वं नामैकपादविभूत्याविर्भावत्वं ज्ञेयम् ॥२॥६॥ श्रीब्रह्मानारदम्।

द्वितीयस्य यथा ॥ कालेन सोऽजः पुरुषायुषाभिः प्रवृत्तयोगेन

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विरूढ़बोधः । स्वयं तदन्तर्हृदयेऽवभातमपश्यतापश्यत यन्न पूर्व्वम् । मृणालगौरायतशेषभोगपर्य्यङ्क एकं पुरुषं शयानमित्यादि ॥ ३ ॥

अयं गर्भोदकस्थः सहस्रशीर्षा प्रद्युम्न एव। पुरुषायुषा वत्सरशतेन। योगो भक्तियोगः। एतदग्रेऽप्यव्यक्तमूलमित्यत्र अव्यक्तं प्रधानं मूलमधोभागो यस्येत्यर्थः। भुवनाङ्घ्रिपेन्द्रमिति। भुवनानि चतुर्द्दश तद्रूपा अङ्घ्रिपास्तेषामिन्द्रं तन्नियन्तृत्वेन वर्त्तमानमित्यर्थः ॥ ३ ॥ ८ ॥ श्रीमैत्रेयो विदुरम् ।

तृतीयस्याविर्भावो यथा—केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्। चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ति इत्यादि ॥ ४ ॥

प्रादेशस्तर्जन्यङ्गुष्ठयोर्विस्तारस्तत्प्रमाणं ह्यपेक्षया तु मनुष्याधिकारत्वादिति न्यायेन ॥ २ ॥ २ ॥ श्रीशुकः ।

एवं पुरुषस्यानेकविधत्वेऽपि दृष्टान्तेनैक्यमुपपादयति ।

यथानिलः स्थावरजङ्गमानामात्मस्वरूपेण निविष्ट ईशेत्। एवं परो भगवान् वासुदेवः क्षेत्रज्ञ आत्मेदमनुप्रविष्टः ॥ ५ ॥

आत्मस्वरूपेण प्राणरूपेण ईशेदीशीत नियमयति। इदं विश्वम्। श्रुतिश्च—वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव। एकस्तथा सर्व्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो वहिश्चेति काठके ॥ ५ ॥ ११ ॥ श्रीब्राह्मणो रहुगणम् ।

तथा, एक एव परो ह्यात्मा सर्व्वेषामेव देहिनाम्। नानेव गृह्यते मूढ़ैर्यथा ज्योतिर्यथा नभः ॥ ६ ॥

देहिनां जीवानाम्। आत्मा परमात्मा ॥ १० ॥ ५४ ॥ श्रीबल॰ देवः श्रीरुक्मिणीम् ।

एवम्, एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः। यथेन्दुरुदपात्रेषु भूतान्येकात्मकानि च ॥ ७ ॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भूतेषु जीवेषु एक एव पर आत्मा नत्वसौ जीववत्तत्र लिप्तो भवति इत्याह आत्मनि स्वस्वरूप एवावस्थितः। भूतानि जीवा देहा अपि येन कारणरूपेणैकात्मकानीति ॥ ११ ॥ १८ ॥ श्रीभगवानुद्धवम् ।

एवमेकस्य पुरुषस्य नानात्वमुपपाद्य तस्य पुनरंशा विव्रियन्ते। अत्र द्विविधा अंशाः स्वांशा विभिन्नांशाश्च। विभिन्नांशा तटस्थ-शक्त्यात्मका जीवा इति वक्ष्यते। स्वांशास्तु गुणलीलाद्यवतारभेदेन विविधाः। तत्र लीलाद्यवताराः प्रसङ्गसङ्गत्या श्रीकृष्णसन्दर्भे वक्ष्यन्ते।

गुणावतारा यथा—आदावभूच्छतधृती रजसास्य सर्गे विष्णुः स्थितौ क्रतुपति र्द्विजधर्म्मसेतुः। रुद्रोऽप्ययाय तमसा पुरुषः स आद्य इत्युद्भवस्थितिलयाः सततं प्रजासु ॥ ८ ॥

स युगपत् गुणत्रयाधिष्ठाताद्यः पुरुषः पृथक् पृथगपि तत्तद्-गुणाधिष्ठानलीलयैव आदौ रजसा अस्य जगतः सर्गे विसर्गे कार्य्ये शतधृतिर्ब्रह्माभूत्। स्थितौ विष्णुः सत्त्वेनेति शेषः। तत्र साक्षाद्-गुणानुक्तिश्च तस्यातिरोहितस्वरूपतया तत्सम्बन्धोपचारस्याप्युट्टङ्कन-मयुक्तमित्यभिप्रायेण। पालनकर्त्तृत्वेन क्रतुपतिस्तत्फलदाता। यज्ञरूपस्तु लीलावतारमध्य एव श्रीब्रह्मणा द्वितीये गणितः। द्विजानां धर्म्माणाञ्च सेतुः पालक इत्यर्थः। तमसा त्वस्याप्ययाय रुद्रोऽभूत् इत्यनेन प्रकारेणोद्भवस्थितिलया भवन्तीति। अत्र ब्रह्मरुद्रयोरवतारावसरो मोक्षधर्म्मे विविक्तोऽस्ति। यथा— ब्राह्मे रात्रिक्षये प्राप्ते तस्य ह्यमिततेजसः। प्रसादात् प्रादुरभवत् पद्मं पद्मनिभेक्षण। ततो ब्रह्मा समभवत् स तस्यैव प्रसादजः। अह्नः क्षये ललाटाच्च सुतो देवस्य वै तथा। क्रोधाविष्टस्य संजज्ञे रुद्रः संहारकारक इति। श्रीविष्णोस्तु तृतीये दृश्यते—तल्लोकपद्मं

CC,0- Jangamwadi Math Collection. Digitized by eGangotri

स उ एव विष्णुः प्रावीविशत् सर्व्वगुणावभासम् । तस्मिन् स्वयं वेदमयो विधाता स्वयम्भुवं यं स्म वदन्ति सोऽभूत् इति । अस्यार्थः—तल्लोकात्मकं पद्मम् । सर्व्वगुणान् जीवभोग्यानर्थान् अवभासयतीति तथा । तत् यस्माज्जातं श्रीनारायणाख्यः पुरुष एव विष्णुसंज्ञः सन् स्थापनरूपान्तर्यामितायै प्रावीविशत् प्रकर्षेणा-लुप्तशक्तितयैवाविशत् । स्वार्थे णिच् । तस्मिन् श्रीविष्णुना लब्ध-स्थितौ पद्मे पुनः सृष्ट्यर्थं स्वयमेव ब्रह्माभूत् स्थितस्यैव मृदादे-र्घटादितया सृष्टेः । अतएव—स्थित्यादये हरिविरिञ्चिहरेति संज्ञा इत्यन्यत्रापि ॥ ११ ॥ ४ ॥ श्रीद्रविड़ो निमिम् ।

एवम्—यो वा अहञ्च गिरिशश्च विभुः स्वयं चेत्यादौ त्रिपा-दिति ॥ ८ ॥

टीका च "यो वै एकस्त्रिपात् त्रयो ब्रह्मादयः पादाः स्कन्धा यस्य" इत्येषा । वृक्षरूपत्वेन तद्वर्णनादेषां स्कन्धत्वम् ॥ २ ॥ ८ ॥ ब्रह्मा गर्भोदशायिनम् ।

तेषामाविर्भावो यथा—तप्यमानं त्रिभुवनं प्राणायामैधसा-ग्निना । निर्गतेन मुनेर्मूर्द्ध्नः समीक्ष्य प्रभवस्त्रयः । अप्सरोमुनि-गन्धर्व्वसिद्धविद्याधरोरगैः । वितायमानयशसस्तदाश्रमपदं ययु-रित्यादि ॥ १० ॥

मुनिरत्रिः ॥ ४ ॥ ७ ॥ श्रीमैत्रेयः ।

यथा वा । सरस्वत्यास्तटे राजन् ऋषयः सत्रमासते । वितर्कः समभूत्तेषां त्रिष्वधीशेषु को महानित्यादिरितिहासः ॥ ११ ॥

श्रीविष्णोः स्थानञ्च क्षीरोदादिकं पाद्मोत्तरखण्डादौ जगत्-पालननिमित्तकनिवेदनार्थं ब्रह्मादयस्तत्र मुहुर्गच्छन्तीति प्रसिद्धेः । विष्णुलोकतया प्रसिद्धेश्च । बृहत्सहस्रनाम्नि च क्षीराब्धि-मन्दिर इति तन्नामगणे पठ्यते । श्वेतद्वीपपतेः क्वचिदनिरुद्धतया

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ख्यातिश्च तस्य साक्षादेवाविर्भाव इत्यपीक्षयेति ॥ १० ॥ ८९ ॥

श्रीशुकः ॥

एवं परीक्षया तत्र त्रिदेव्यास्तारतम्यमपि स्फुटम्। तथा चान्यत्र द्वयेनाह।

सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते। स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥ १२ ॥

इह यद्यप्येक एव परः पुमानस्य विश्वस्य स्थित्यादये सृष्टिस्थितिलयार्थं तैः सत्त्वादिभिर्युक्तः सन् हरिविरिञ्चिहरेति संज्ञा भिन्ना धत्ते तत्तद्रूपेणाविर्भवतीत्यर्थः। तथापि तत्र तेषां मध्ये श्रेयांसि धर्म्मार्थकाममोक्षभक्त्याख्यानि शुभफलानि सत्त्वतनोरधिष्ठितसत्त्वशक्तेः श्रीविष्णोरेव स्युः। अयं भावः। उपाधिदृष्ट्या तौ द्वौ सेवमाने रजस्तमसोर्घोरमूढत्वात् भवन्तोऽपि धर्म्मार्थकामा नातिसुखदा भवन्ति तथोपाधित्यागेन सेवमाने भवन्नपि मोक्षो न साक्षान्न च झटिति किन्तु कथमपि परमात्मांश एवायमित्यनुसन्धानाभ्यासेनैव परमात्मन एव भवति। तत्र तत्र साक्षात्परमात्माकारेणाप्रकाशात् तस्मात्ताभ्यां श्रेयांसि न भवन्तीति। अथोपाधिदृष्ट्यापि श्रीविष्णुं सेवमाने सत्त्वस्य शान्तत्वात् धर्म्मार्थकामा अपि सुखदाः। तत्र निष्कामत्वेन तु तं सेवमाने सत्त्वात् संजायते ज्ञानमिति कैवल्यं सात्त्विकं ज्ञानम् इति चोक्तेर्मोक्षश्च साक्षात्। अत उक्तं स्कान्दे—बन्धको भवपाशेन भवपाशाच्च मोचकः। कैवल्यदः परं ब्रह्म विष्णुरेव सनातन इति। उपाधिपरित्यागेन तु पञ्चमपुरुषार्थो भक्तिरेव भवति तस्य परमात्माकारेणैव प्रकाशात्। तस्मात् श्रीविष्णोरेव श्रेयांसि स्युरिति। अत्र तु यत्त्रयाणामभेदवाक्येनोपजप्तमतयो विवदन्ते तत्रेदं ब्रूमः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यद्यपि तारतम्यमिदमधिष्ठानगतमेव अधिष्ठाता तु परः पुरुष एक एवेति भेदासम्भवात् सत्यमेवाभेदवाक्यं तथापि तस्य तत्र तत्र साक्षात्त्वासाक्षात्त्वभेदेन प्रकाशेन तारतम्यं दुर्निवारमेवेति सदृष्टान्तमाह ।

पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः । तमसस्तु रजस्तस्मात् सत्त्वं यद्ब्रह्मदर्शनम् ॥ १३ ॥

पार्थिवात्तु धूमवदंशेनाग्नेयात् तत एव वेदोक्तकर्म्मणः साक्षात् प्रवृत्तिप्रकाशरहिताद्दारुणो यज्ञीयात्मथनकाष्ठात् सकाशादंशेनाग्नेयो धूमस्त्रयीमयः पूर्व्वापेक्षया वेदोक्तकर्म्माधिक्याविर्भावास्पदम् । तस्मादपि स्वयमग्निस्त्रयीमयः साक्षात्तदुक्तकर्म्माविर्भावास्पदम् । एवं काष्ठस्थानीयात् सत्त्वगुणविदूरात्तमसः सकाशाद्धूमस्थानीयं किञ्चित् सत्त्वसन्निहितं रजो ब्रह्मदर्शनम् । वेदोक्तकर्म्मस्थानीयस्य तत्तदवतारिणः पुरुषस्य प्रकाशद्वारम् । तुशब्देन लयात्मकात्तमसः सकाशाद्रजसः सोपाधिकज्ञानहेतुत्वेनैषद्गुणच्छविप्रादुर्भावरूप किञ्चित् ब्रह्मदर्शनप्रत्यासत्तिमात्रमुक्तं न तु सर्व्वथा विक्षेपकत्वात् । यदग्निस्थानीयं सत्त्वं तत् साक्षात् ब्रह्मणो दर्शनम् । साक्षादेव सम्यक् तत्तद्गुणरूपाविर्भावद्वारं शान्तस्वच्छस्वभावात्मकत्वात् । अतो ब्रह्मशिवयोरसाक्षात्त्वं श्रीविष्णौ तु साक्षात्त्वं सिद्धमिति भावः । तथाच श्रीवामनपुराणे— ब्रह्मविष्णीशरूपाणि त्रीणि विष्णोर्म्महात्मनः । ब्रह्मणि ब्रह्मरूपः सः शिवरूपः शिवे स्थितः । पृथगेव स्थितो देवो विष्णुरूपी जनार्द्दन इति । तदुक्तं ब्रह्मसंहितायाम्—भास्वान् यथाश्मसकलेषु निजेषु तेजः स्वीयं कियत् प्रकटयत्यपि तद्वदत्र । ब्रह्मा य एव जगदण्डविधानकर्त्ता गोविन्दमादिपुरुषं तमहं भजामि ॥ क्षीरं यथा दधि विकारविशेषयोगात् संजायते न तु ततः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पृथगस्ति हेतोः। यः शम्भुतामपि तथा समुपैति कार्य्याद्-गोविन्दमादिपुरुषं तमहं भजामि॥ दीपार्च्चिरेव हि दशान्तर-मभ्युपेत्य दीपायते विवृतहेतुसमानधर्म्मा। यस्तादृगेव हि च विष्णुतया विभाति गोविन्दमादिपुरुषं तमहं भजामीत्यादि। न च दधिदृष्टान्तेन विकारित्वमायातम्। तस्य श्रुतेस्तु शब्द-मूलत्वादितिन्यायेन मुहुः परिहृतत्वात्। यथोक्तम्—यत उदयास्तमयौ विकृतेर्मृदिवाविकृतादिति। दृष्टान्तत्रयेण तु क्रमेणेदं लभ्यते। सूर्य्यकान्तस्थानीये ब्रह्मोपाधौ सूर्य्यस्येव तस्य किञ्चित् प्रकाशः। दधिस्थानीये शम्भूपाधौ चीरस्थानीयस्य न तादृगपि प्रकाशः। दशान्तरस्थानीये विष्णूपाधौ तु पूर्ण एव प्रकाश इति॥ १॥ २॥ श्रीसूतः॥

एवमेवाह त्रिभिः—शिवः शक्तियुतः शश्वत्त्रिलिङ्गो गुण-संवृतः। वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा। ततो विकारा अभवन् षोड़शामीषु किञ्चन। उपाधावन् विभूतीनां सर्व्वासा-मश्नुते गतिम्॥ हरि र्हि निर्गुणः साक्षात् पुरुषः प्रकृतेः परः। स सर्व्वदृगुपद्रष्टा तं भजन् निर्गुणो भवेत्॥ १४॥

शश्वच्छक्तियुतः प्रथमतस्तावन्नित्यमेव शक्त्या गुणसाम्यावस्थ-प्रकृतिरूपोपाधिना युक्तः। गुणक्षोभे सति त्रिलिङ्गो गुणत्रयो-पाधिः। प्रकटैश्च सद्भि स्तैर्गुणैः संवृतश्च। ननु तमउपाधित्व-मेव तस्य श्रूयते कथं तत्तदुपाधित्वं तत्राह वैकारिक इति। अहमहन्तत्त्वं हि तत्तद्रूपेण त्रिधा। स च तदधिष्ठातेत्यर्थः। मुख्य-तया नास्तां नामान्यद्गुणद्वयं गौणतया त्वास्त एवेत्यर्थः। ततस्तेन भगवत्प्रतिनिधिरूपेणाधिष्ठितादहन्तत्त्वात् षोड़श विकारा ये अभवन् अमीषु विकारेषु मध्ये सर्व्वासां विभूतीनां सम्बन्धि किञ्चन उपाधावन्। तदुपाधिकत्वेन तमुपासीनो गतिं प्राप्य

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

फलं लभते । हि प्रसिद्धौ हेतौ वा । हरिस्तु प्रकृतेरुपाधितः परस्तद्धर्म्मैरस्पृष्टः । अतएव निर्गुणोऽपि कुतस्त्रिलिङ्गत्वादिक-मितिभावः । तत्र हेतुः साक्षादेव पुरुष ईश्वरः । न तु प्रतिविम्ब-वद्व्यवधानेनेत्यर्थः । अतो विद्याविद्ये मम तनू इतिवत् तनुशब्दोपादानात् कुत्रचित् सत्त्वशक्तित्वश्रवणमपि प्रेक्षादिमात्रे-णोपकारित्वादिति भावः । अतएव सर्व्वेषां शिवब्रह्मादीनां दृक् ज्ञानं यस्मात्तथाभूतः सन्नुपद्रष्टा तदादिसाक्षी भवति । अतस्तं भजन्निर्गुणो भवेद्गुणातीतफलभाग्भवतीति ॥ १० ॥ ८८ ॥ श्रीशुकः ।

अतएव विष्णोरेव परमपुरुषेण साक्षादभेदोक्तिमाह ।

सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः । विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृगिति ॥ १५ ॥

अहं ब्रह्मा । श्रुतिश्चात्र—स ब्रह्मणा सृजति स रुद्रेण विलापयति । सोऽनुत्पत्तिरलय एव हरिः परः परमानन्द इति महोपनिषदि ॥ २ ॥ ६ ॥ ब्रह्मा नारदम् ।

तथैवाह—अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान् हरिः । यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः ॥ १६ ॥

अत्र श्रीविष्णुर्न कथित इति तेन साक्षादभेद एवेत्यायातम् । तदुक्तं—स उ एव विष्णुरिति । श्रुतिश्च—पुरुषो ह वै नारायणो-ऽकामयत अथ नारायणादजोऽजायत यतः प्रजाः सर्व्वाणि भूतानि । नारायणः परं ब्रह्म तत्त्वं नारायणः परम् । ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलमिति । एको नारायण आसीन्न ब्रह्मा न च शङ्करः । स मुनिर्भूत्वा समचिन्तयत् । तत एव व्यजायन्त विश्वो हिरण्यगर्भोऽग्निर्वरुणरुद्रेन्द्रा इति च । तस्मात्तस्यैव वर्ण-नीयत्वमपि युक्तम् ॥ १२ ॥ १५ ॥ श्रीसूतः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ननु त्रयाणामेकभावानां यो न पश्यति वै भिदां, तथा, न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते इत्यादावभेदः श्रूयते, पुराणान्तरे च विष्णुतस्तयोर्भेदे नरकः श्रूयते, सत्यं, वयमपि भेदं न ब्रूमः। परमपुरुषस्यैव तत्तद्रूपमित्येकात्मत्वेनैवोपक्रान्तत्वात्। शिवो ब्रह्मा च भिन्नस्वभावादितया दृश्यमानोऽपि प्रलये सृष्टौ च तस्मात् स्वतन्त्र एवान्य ईश्वर इति न मन्तव्यं किन्तु विष्ण्वात्मक एव सः स इति हि तत्रार्थः। तदुक्तम्—ब्रह्मणि ब्रह्मरूपः स इत्यादि। न च प्रकाशस्य साक्षादसाक्षाद्रूपत्वादि तारतम्यं वयं कल्पयामः परं शास्त्रमेव वक्ति। शास्त्रन्तु दर्शितम्। एवं भगवदवतारानुक्रमणिकासु त्रयाणां भेदमङ्गीकृत्यैव केवलस्य श्रीदत्तस्य गणना सोमदुर्व्वाससोस्त्वगणना। किञ्च ब्राह्मे ब्रह्मवैवर्त्ते च ब्रह्मवाक्यम्—नाहं शिवो न चान्ये च तच्छक्त्येकांशभागिनः। बालक्रीड़नकैर्यद्वत् क्रीड़तेऽस्माभिरच्युत इति। अतएव श्रुतौ—यं कामये तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधामित्युक्ता मम योनिरप्स्वन्तरिति शक्तिवचनम्। अप्स्वन्तरिति कारणोदशायी सूच्यते। आपो नारा इति प्रोक्ता इत्यादेः। योनिः कारणम्। एवमेव स्कान्दे—ब्रह्मेशानादिभिर्देवैर्यत् प्राप्तुं नैव शक्यते। तद्वत् स्वभावः कैवल्यं स भवान् केवलो हरे इति। तथा विष्णुसामान्यदर्शिनो दोषः श्रूयते। यथा वैष्णवतन्त्रे—न लभेयुः पुनर्भक्तिं हरेरैकान्तिकीं जड़ाः। ऐकाग्र्येण मनसश्चापि विष्णुसामान्यदर्शिन इति। अन्यत्र—यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः। समत्वेनैव वीक्षेत स पाषण्डी भवेद्ध्रुवमिति। तथाच मन्त्रवर्णः—मध्ये वामनमासीनं विश्वे देवा उपासत इति। ननु क्वचिदन्यशास्त्रे शिवस्यैव परमदेवत्वमुच्यते सत्यं तथापि शास्त्रस्य सारासारत्वविवेकेन तद्बाधितमिति। तथाच

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पाद्मशैवयोरुमां प्रति श्रीशिवेन श्रीविष्णुवाक्यमनुक्तम्—त्वामाराध्य तथा शम्भो ग्रहिष्यामि वरं सदा। द्वापरादौ युगे भूत्वा कलया मानुषादिषु। स्वागमैः कल्पितैस्त्वन्तु जनान् मद्विमुखं कुरु। माञ्च गोपय येन स्यात् सृष्टिरेषोत्तरोत्तरा इति। वाराहे च—एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति। त्वञ्च रुद्र महाबाहो मोहशास्त्राणि कारय। अतथ्यानि वितथ्यानि दर्शयस्व महाभुज। प्रकाशं कुरु चात्मानमप्रकाशञ्च मां कुर्विति। पुराणानाञ्च मध्ये यद्‌ यत् सात्त्विककल्पकथामयं तत्तत् श्रीविष्णुमहिमपरं यद्‌ यत् तामसकल्पकथामयं तच्छिवादिमहिमपरमिति श्रीविष्णुप्रतिपादकपुराणस्यैव सम्यक्ज्ञानप्रदत्वम्। सत्त्वात् संजायते ज्ञानमिति दर्शनात्। तथाच मात्स्ये—सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः। राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः। तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च। सङ्कीर्णेषु सरस्वत्याः पितॄणाञ्च निगद्यते इति। अत उक्तं स्कान्दे षण्मुखं प्रति श्रीशिवेन। शिवशास्त्रेषु तद्ग्राह्यं भगवच्छास्त्रयोगि यत्। परमो विष्णुरेवैकस्तज्ज्ञानं मोक्षसाधनम्॥ शास्त्राणां निर्णयस्त्वेषस्तदन्यन्मोहनाय हीति॥ तथैव च दृष्टं मोक्षधर्म्मे नारायणोपाख्याने। वैशम्पायन उवाच। साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा। ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै॥ सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते। हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः। अपान्तरतमाश्चैव वेदाचार्य्यः स उच्यते। प्राचीनगर्भं तमृषिं प्रवदन्ति हि केचन। उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः। उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः। पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयम्। सर्व्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते। यथागमं यथाज्ञानं निष्ठा नारायणः प्रभुः।


CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नचैनमेवं जानन्ति तमोभूता विशाम्पते। तमेव शास्त्रकर्त्तारः प्रवदन्ति मनीषिणः। निष्ठां नारायणमृषिं नान्योऽस्तीति वचो मम। निःसंशयेषु सर्व्वेषु नित्यं वसति वै हरिः। ससंशयाद्धेतुबलान्नाध्यावसति माधवः। पञ्चरात्रविदो ये तु यथाक्रमपरा नृप। एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै। सांख्यञ्च योगश्च सनातने द्वे वेदाश्च सर्व्वे निखिलेषु राजन्। सर्व्वैः समस्तैऋषिभिर्निरुक्तो नारायणो विश्वमिदं पुराणमिति। अत्रापान्तरतमा इति श्रीकृष्णद्वैपायनस्यैव जन्मान्तरनामविशेष इति तत्रैव ज्ञेयम्। अत्रैवं व्याख्येयम्। पञ्चरात्रसम्मतं श्रीनारायणमेव सर्व्वोत्तमत्वेन वक्तुं नानामतं दर्शयति। सांख्यमिति। तत्र पञ्चरात्रमेव गरिष्ठमाचष्टे पञ्चरात्रस्येत्यादौ भगवान् स्वयमिति। अथ द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च। इति श्रीगीतासु श्रूयते। यदेव तानि नानामतानीत्युक्तं तत्त्वासुरप्रकृत्यनुसारेणेति ज्ञेयम्। दैवप्रकृतयस्तु तत्तत्सर्व्वावलोकनेन पञ्चरात्रप्रतिपाद्ये श्रीनारायण एव पर्य्यवस्यन्तीत्याह सर्व्वेष्विति। आसुरांस्तु निन्दति नचैनमिति। तदुक्तं विष्णुधर्म्माग्निपुराणयोः—द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च। विष्णुभक्तिपरो दैव आसुरस्तद्विपर्य्यय इति। ननु तत्र तत्र नानामतय एव दृश्यन्ते तत्राह तमेवेति। पञ्चरात्रेतरशास्त्रकर्त्तारो हि द्विविधाः किञ्चिज्ज्ञाः सर्व्वज्ञाश्च। तत्राद्या यथा। स्वस्वज्ञानानुसारेण यत् किञ्चित्तत्त्वैकदेशं वदन्ति तत्तु समुद्रैकदेशवर्णनं समुद्र इव पूर्णतत्त्वे श्रीनारायण एव पर्य्यवस्यतीति ते तमेव वदन्ति। ये तु सर्व्वज्ञास्ते चैवमभिप्रायन्ति नास्माभिरासुराणां मोहनार्थमेव कृतानि शास्त्राणि किन्तु दैवानां व्यतिरेकेण बोधनार्थम्। ते हि रजस्तमःप्रबलस्य खण्डस्य च तत्त्वस्य तथा क्लेशबहुलस्य साधनस्य प्रति-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पादकान्येतानि शास्त्राणि दृष्ट्वा वेदांश्च दुर्गान् दृष्ट्वा निर्व्विद्य सर्व्ववेदार्थसारस्य शुद्धाखण्डतत्त्वश्रीनारायणस्य सुखमयतदाराधनस्य च सुष्ठुप्रतिपादके पञ्चरात्रे एव गाढ़ं प्रवेक्ष्यन्तीति । तदेतदाह निःसंशयेष्विति । तस्मात् झटिति वेदार्थप्रतिपत्तये पञ्चरात्रमेवाध्येतव्यमित्याह । पञ्चरात्रेति । यत एवं तत उपसंहरति सांख्यञ्च योगश्चेति । तदेवं पञ्चरात्रपतिपाद्यस्य श्रीभगवत एवमुत्कर्षे स्थिते आत्मारामाश्च मुनय इत्याद्यसक्कृदपूर्व्वमुपदिशता श्रीभागवतेन प्रतिपाद्यरूपस्य तस्य किमुतेत्यपि विवेचनीयम् । तदेतदुक्तानुसारेण सदाशिवेश्वरत्रिदेवीरूपव्यूहोऽपि निरस्तः । तस्मादेव च श्रीभगवत्पुरुषयोरेव शैवागमे सदाशिवादिसंज्ञे तन्महिमख्यापनाय धृते इति गम्यते । सर्व्वशास्त्रशिरोमणौ श्रीभागवते तु त्रिदेव्यामेव तत्तारतम्यजिज्ञासा पुरुषभगवतोस्तु तत्प्रसङ्ग एव नास्ति । ननु, न ते गिरित्राखिललोकपालविरिञ्चिवैकुण्ठसुरेन्द्रगम्यम् । ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद्ब्रह्म निरस्तभेदमित्यत्र तस्य परत्वं श्रूयत एवाष्टमे । मैवम् । महिम्ना स्तूयमाना हि देवा वीर्य्येण वर्द्धतु इति वैदिकन्यायेन तद्युक्तेः । स हि स्तवः कालकूटनाशार्थ इति । तत्रैव—प्रीते हरौ भगवति प्रीयेऽहं सचराचर इति । तथा नवमे—वयं न तात प्रभवाम भूम्नि यस्मिन् परेऽन्येऽप्यजजीवकोषाः । भवन्ति काले न भवन्ति हीदृशाः सहस्रशो यत्र वयं भ्रमाम इति । एते वयं यस्य वशे महात्मनः स्थिताः शकुन्ता इव सूत्रयन्त्रिताः ॥ इति च तद्वाक्यविरोधात् । अथवा यत् शिवस्य ज्योतिस्तत्र स्थितं परमात्माख्यं चैतन्यं तत्सम्यक्ज्ञाने तस्याप्यक्षमता युक्तैव । यदुक्तम् । द्युपतय एव ते न ययुरन्तमनन्ततया त्वमसीति । ब्रह्मसंहितामते तु भगवदंशविशेष एव सदाशिवो नत्वन्यः । यथा तत्रैव सर्व्वादिकारण-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

गोविन्दकथने। नियतिः सा रमादेवी तत्प्रिया तद्वशम्बदा। तल्लिङ्गं भगवान् शम्भुर्ज्योतीरूपः सनातनः। या योनिः सा परा शक्तिरित्यादि तस्मिन्नाविरभूल्लिङ्गे महाविष्णुरित्याद्यन्तम्। तदेतदभिप्रेत्य सदाशिवत्वादिप्रसिद्धिमप्याक्षिप्याह।

अथापि यत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः। सेशं पुनात्यन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थः॥ १७॥

स्पष्टम्॥ १॥ १८॥ श्रीसूतः।

तस्मान्नाहं न च शिवोऽन्ये च तच्छक्त्येकांशभागिनः इत्येवोक्तं साध्वेव इत्याह। ब्रह्मा भवोऽहमपि यस्य कलाः कलाया इति॥ १८॥ शेषं स्पष्टम्॥ १०॥ ६८॥ श्रीबलदेवः।

अथ परमात्मपरिकरेषु जीवस्तस्य च तटस्थलक्षणं क्षेत्रज्ञ एता इत्यत्रोक्तं स्वरूपलक्षणं पाद्मोत्तरखण्डादिकमनुसृत्य श्रीरामानुजाचार्य्यादतिप्राचीनेन श्रीवैष्णवसम्प्रदायगुरुणा श्रीजामातृमुनिनोपदिष्टम्। तत्र प्रणवव्याख्याने पाद्मोत्तरखण्डं यथा। ज्ञानाश्रयो ज्ञानगुणश्चेतनः प्रकृतेः परः। न जातो निर्व्विकारश्च एकरूपः स्वरूपभाक्॥ अणुर्नित्यो व्याप्तिशीलश्चिदानन्दात्मकस्तथा। अहमर्थोऽव्ययः क्षेत्री भिन्नरूपः सनातनः॥ अदाह्योऽच्छेद्य अक्लेद्य अशोष्योऽक्षर एव च। एवमादिगुणैर्युक्तः शेषभूतः परस्य वै। मकारेणोच्यते जीवः क्षेत्रज्ञः परवान् सदा। दासभूतो हरेरेव नान्यस्यैव कदाचनेति। श्रीजामातृमुनिनाप्युपदिष्टं यथा—आत्मा न देवो न नरो न तिर्य्यक् स्थावरो न च। न देहो नेन्द्रियं नैव मनः प्राणो न नापि धीः। न जड़ो न विकारी च ज्ञानमात्रात्मको न च। स्वस्मै स्वयं प्रकाशः स्यादेकरूपः स्वरूपभाक्। चेतनो व्याप्तिशीलश्च चिदानन्दात्मकस्तथा। अहमर्थः प्रतिक्षेत्रं भिन्नोऽणुर्नित्यनिर्म्मलः। तथा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ज्ञातृत्वकर्त्तृत्वभोक्तृत्वनिजधर्म्मकः । परमात्मैकशेषत्वस्वभावः सर्व्वदा स्वतः ॥ इति । श्रीरामानुजभाष्यानुसारेण व्याख्या चेयम् । तत्र देवादित्वं निरस्तमेवास्ति तत्त्वसन्दर्भे । अण्डेषु पेशिषु तरुष्वविनिश्चितेषु प्राणो हि जीवमुपधावति तत्र तत्र । सन्ने यदिन्द्रियगणेऽहमि च प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्नः इत्यनेन ।

देहादित्वं निरस्यन्नाह । विलक्षणः स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृक् । यथाग्निर्दारुणो दाह्याद्दाहकोऽन्यः प्रकाशकः ॥ १९ ॥

विलक्षणत्वे हेतुः ईक्षिता तस्य तस्य द्रष्टा प्रकाशकस्य स्वयन्तु स्वदृक् स्वप्रकाश इति ॥ ११ ॥ १० ॥ श्रीभगवान् ।

जड़त्वं निरस्यन्नाह । जाग्रत्स्वप्नसुषुप्तञ्च गुणतो बुद्धिवृत्तयः । तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ॥ २० ॥

या तु मयि तुर्य्ये स्थितो जह्यादित्यादौ परमेश्वरेऽपि तुर्य्यत्व-प्रसिद्धिः सान्यथैव । विराट् हिरण्यगर्भश्च कारणञ्चेत्युपाधयः । ईशस्य यत्त्रिभिर्हीनं तुरीयं तत्पदं विदुः । इत्याद्युक्तेर्व्वासुदेवस्य चतुर्व्यूहे तुर्य्यकक्षाक्रान्तत्वाद्वा ॥ ११ ॥ १३ ॥ श्रीभगवान् ।

विकारित्वं निरस्यन्नाह । विसर्गाद्याः श्मशानान्ता भावा देहस्य नात्मनः । कलानामिव चन्द्रस्य कालेनाव्यक्त-वर्त्मना ॥ २१ ॥

चन्द्रस्य जलमयमण्डलत्वात् कलानां सूर्य्यप्रतिच्छविरूप-ज्योतिरात्मत्वात् यथा कलानामेव जन्माद्या नाशान्ता भावा न तु चन्द्रस्य तथा देहस्यैव ते भावा अव्यक्तवर्त्मना कालेन भवन्ति नत्वात्मन इत्यर्थः ॥ ११ ॥ ७ ॥ श्रीदत्तात्रेयो यदुम् ।

ज्ञानात्मको न चेति किन्तर्हि ज्ञानमात्रत्वेऽपि ज्ञानशक्तित्वं प्रकाशस्य प्रकाशनशक्तित्ववत् तादृशत्वमपि । नात्मा जजान न

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मरिष्यति नैधतेऽसौ न चीयते सवनविद् व्यभिचारिणां हि। सर्व्वत्र अखदनपाय्युपलब्धिमात्रं प्राणो यथेन्द्रियबलेन विकल्पितं सत्। इत्यन्तेन तत्त्वसन्दर्भ एव दर्शितम्। उपलब्धिमात्रत्वेऽपि सवनवित्त्वेनोक्तिः। अतएव शुद्धो विचष्टे ह्यविशुद्धकर्त्तुरित्युक्तम्।

प्रकारान्तरेणापि तदाह। गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः। विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥ २२ ॥

अत्र विलोक्येत्यनेन मुमुहे इत्यनेन च पराग्भूतायाः प्रकृतेस्तत्कृतादज्ञानाच्च प्रत्यग्भूतं यज्ज्ञानं तत्तस्य स्वरूपशक्तिरिव स्यादिति गम्यते। श्रीगीतोपनिषदश्च तथा। अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः। इति ॥ ३ ॥ २६ ॥ श्रीकपिलदेवः।

श्रुत्यन्तरञ्चाहुः। स यदजया त्वजामनुशयीत गुणांश्च जुषन् भजति सरूपतां तदनु मृत्युमपेतभग इति ॥ २३ ॥

टीका च—स तु जीवः यद् यस्मादजया मायया अजाम् अविद्याम् अनुशयीत आलिङ्गेत ततो गुणांश्च देहेन्द्रियादीन् जुषन् सेवमानः आत्मतया अध्यस्यन् तदनु तदनन्तरं सरूपतां तद्धर्म्मयोगञ्च जुषन् अपेतभगः पिहितानन्दादिगुणः सन् मृत्युं संसारं भजति प्राप्नोतीत्येषा ॥ १० ॥ ८७ ॥ श्रुतयः।

तथा—तत्सङ्गभ्रंशितैश्वर्य्यं संसरन्तं कुभार्य्यवत्। तद्गतीरबुधस्येह किमसत्कर्म्मभिर्भवेत् ॥ २४ ॥

तस्याः पुंश्चलीरूपाया मायायाः सङ्गेन भ्रंशितमैश्वर्य्यं किञ्चित् ज्ञेयज्ञानादिसामर्थ्यं यस्य तम्। तस्या गतीः संसरन्तं गच्छन्तं जीवं स्वस्वरूपमबुधस्याजानत इत्यर्थः ॥ ६ ॥ ५ ॥ हर्य्यश्वाः।

तथा—ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनमिति ॥ २५ ॥

ईश्वरस्य किञ्चिज्ज्ञानादिशक्तिमतः ॥ ३ ॥ ७ ॥ मैत्रेयः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथा—विप्रलब्धो महिष्यैवं सर्व्वप्रकृतिवञ्चितः । नेच्छन्ननुकरोत्यज्ञः क्लैव्यात् क्रीड़ामृगो यथा ॥ २६ ॥

महिष्या पुरञ्जन्या विप्रलब्धः पुरञ्जनः सर्व्वया प्रकृत्या ज्ञानादिरूपया वञ्चितः त्याजितः सन् नेच्छन् तदिच्छयैवेत्यर्थः । अनुकरोति तद्धर्म्ममात्मन्यध्यस्यति । अत्र जीवस्य शक्तिमत्तायां पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्य्ययावित्येतत् सूत्रमप्यनुसन्धेयम् ॥ ४ ॥ २५ ॥ श्रीनारदः श्रीप्राचीनवर्हिषम् ।

पूर्व्वोक्तमेवार्थं व्यञ्जयितुं स्वस्मै स्वयं प्रकाश इत्युक्तम् । तथाभूतत्वञ्च विलक्षण इत्याद्युक्तपद्य एव स्वदृगित्यनेन व्यक्तमस्ति । तत्र प्रकाशस्तावद्‌गुणद्रव्यभेदेन द्विविधः । प्रथमो निजाश्रयस्य स्फूर्त्तिरूपः । द्वितीयः स्वपरस्फूर्त्तिनिदानं वस्तुविशेषः । तत्रात्मनो द्रव्यत्वादयमेव गृह्यते । यथा दीपश्चक्षुः प्रकाशयन् स्वरूपस्फूर्त्तिं स्वयमेव करोति नतु घटादिप्रकाशवत्तदादिसापेक्षः । तस्मादयं स्वयं प्रकाशः । तथापि स्वं प्रति न प्रकाशते यत एव जड़ इत्युच्यते । तस्मात्तु स्वं परञ्च प्रकाशयन् स्वात्मानं प्रति प्रकाशमानत्वात् स्वस्मै स्वयं प्रकाशः । यत एव चिद्रूप उच्यते । तदुक्तमन्यैरपि । स्वयं प्रकाशत्वं स्वव्यवहारे परानपेक्षत्वम् अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं वेति । तत्र पूर्व्वत्र स्वस्मैपदमपेक्ष्यम् उत्तरत्र तु स्पष्टार्थम् । अतः स्वदृक् स्वस्मै स्वयं प्रकाश इत्यर्थः । न चासौ परमात्मप्रकाश्यत्वे घटवत् परप्रकाश्यः परमात्मनस्तत्परमस्वरूपत्वेन परप्रकाश्यत्वाभात् । एवमेवाह द्वाभ्याम् ।

ममाङ्ग माया गुणमय्यनेकधा विकल्पबुद्धीश्च गुणैर्विधत्ते। वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिभूतमधिदैवमन्यत् ॥ दृग्रूपमार्कं वपुरत्र रन्ध्रे परस्परं सिध्यति यः स्वतः खे । आत्मा यदेषामपरो य आद्यः स्वयानुभूत्याखिलसिद्धसिद्धिः ॥ २७ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विकल्पं भेदं तद्वुद्वीश्च। अनेकधात्वं प्रपञ्चयति वैकारिक इति। अनेकविकारवानप्यसौ स्थूलदृष्ट्या तावत्त्रिविधः। त्रैविध्यमाह अध्यात्ममित्यादिना। तानि क्रमेणाह दृगादित्रयेण। वपुरंशः। अत्र रन्ध्रे दृग्गोलके प्रविष्टं तत्त्रयञ्च परस्परमेव सिध्यति नतु स्वतः। यस्तु खे आकाशे अर्को वर्त्तते स पुनः स्वतः सिध्यति। चक्षुर्विषयत्वेऽपि स्वविरोधिनः प्रतियोग्यपेक्षाभावमात्रेण स्वत इत्युक्तम्। एवं यथा मण्डलात्मार्कः स्वतः सिध्यति तथात्मापीत्याह। यद् यतः पूर्व्वोक्तदृष्टान्तहेतोरात्मा एषामध्यात्मादीनां यो ऽपर आद्यस्तेषामाश्रयः सोऽपि स्वतः सिध्यति किन्तु स्वयानुभूत्येति चिद्रूपत्वाद्विशेषः। न केवलमेतावदपि तु अखिलानां परस्परसिद्धानां सिद्धिर्यस्मात्तथाभूतः सन्निति॥ ११॥ २२॥ श्रीभगवान्।

यस्मात् स्वरूपभूतयैव शक्त्या तथा प्रकाशते तस्मादेकरूपस्वरूपभाक्त्वमपि दीपवदेव। नात्मा जजानेत्यादावुपलब्धिमात्रमित्यनेनैवोक्तं मात्रपदं तद्धर्म्माणामपि स्वरूपानतिरिक्तत्वं ध्वनयति। अथ चेतनत्वं नाम स्वस्य चिद्रूपत्वेऽप्यन्यस्य देहादेश्चेतयितृत्वं दीपादिप्रकाशयितृत्ववत्। तदेतद्विलक्षण इत्यादावेव दृष्टान्तेनोक्तम्। प्रकाशक इति चेतयितृत्वे हेतुः। व्याप्तिशीलत्वमुदाहरिष्यमाण आत्मेत्यादौ श्रीप्रह्लादवाक्ये व्यापक इत्यनेनोक्तं व्याप्तिशीलत्वमतिसूक्ष्मतया सर्व्वाचेतनान्तःप्रवेशस्वभावत्वम्। ज्ञानमात्रात्मको न चेत्यत्र चिदानन्दात्मक इत्यपि हेत्वन्तरम्। तत्र तस्य जड़प्रतियोगित्वेन ज्ञानत्वं दुःखप्रतियोगित्वेन तु ज्ञानत्वमानन्दत्वञ्च। ज्ञानत्वन्तूदाहृतम्। आनन्दत्वं निरुपाधिप्रेमास्पदत्वेन साधयति।

तस्मात् प्रियतमः स्वात्मा सर्व्वेषामेव देहिनाम्। तदर्थमेव सकलं जगच्चैतच्चराचरम्॥ २८॥

स्पष्टम्॥ १०॥ १४॥ श्रीशुकः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तस्मिंश्चानन्दात्मके ज्ञाने प्रतिस्वं युष्मदर्थत्वं न भवति। किन्त्वात्मत्वादस्मदर्थत्वमेव। तच्चास्मदर्थत्वमहम्भाव एव। ततोऽहमित्येतच्छब्दाभिधेयाकारमेव ज्ञानं शुद्ध आत्मा प्रकृत्यावेशोऽन्यथा नोपपद्यते। यत एवावेशात्तदीयसङ्घात एवाहमित्यहम्भावान्तरं प्राप्नोति तदेतदभिप्रेत्य तस्याहमर्थत्वमाह।

एवं पराभिध्यानेन कर्त्तृत्वं प्रकृतेः पुमान्। कर्म्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥ २९ ॥

पराभिध्यानेन प्रकृत्यावेशेन प्रकृतिरेवाहमितिमननेन प्रकृतेर्गुणैः क्रियमाणेषु कर्म्मसु कर्त्तृत्वमात्मनि मन्यते। अत्र निरहम्भावस्य पराभिध्यानासम्भवात् परावेशजाताहङ्कारस्य चावरकत्वादस्त्येव तस्मिन्नन्योऽहम्भावविशेषः। स च शुद्धस्वरूपमात्रनिष्ठत्वान्न संसारहेतुरिति स्पष्टम्। एतदेवाहङ्कारद्वयं सन्ने यदिन्द्रियगणेऽहमिति प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्न इत्यत्र दर्शितम्। उपाध्यभिमानात्मकस्याहङ्कारस्य प्रसुप्तत्वात्तदनुस्मृतिर्न इत्यनेन सुखमहमस्वाप्समित्यात्मनोऽहन्तयैव परामर्शाच्च अतएव मामहं नाज्ञासिषमित्यत्र परामर्शेऽपि उपाध्यभिमानिनोऽनुसन्धानाभावः। अन्यस्य त्वज्ञानसाक्षित्वेनानुसन्धानमिति दिक् ॥ ३ ॥ २६ ॥ श्रीकपिलदेवः ॥ २९ ॥

तथा—नृत्यतो गायतः पश्यन् यथैवानुकरोति तान्। एवं बुद्धिगुणान् पश्यन्ननीहोऽप्यनुकार्य्यते ॥३०॥

पूर्व्ववत् ॥११॥२२॥ श्रीभगवान् ॥ ३० ॥

एवमेव स्वप्नदृष्टान्तमपि घटयन्नाह। यदर्थेन विनामुष्य पुंस आत्मविपर्य्ययः। प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः ॥ ३१ ॥

उपद्रष्टुरमुष्येति स्वप्नद्रष्टा अमुना जीवेनेत्यर्थः ॥ ३ ॥ ७ ॥ श्रीमैत्रेयः ॥ ३१ ॥

साधिते च स्वरूपभूतेऽहम्भावे प्रतिचेत्रं भिन्नत्वमपि साधितम्। यत्तु, वस्तुनो यद्यनानात्वमात्मनः प्रश्न ईदृशः। कथं घटेत वो विप्रा



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वन्नुर्वा मे क आश्रयः ॥ इत्यादौ ज्ञानिनो लौकिकगुरुरीतिं तदीय-प्राकृतदृष्टिं वानुसृत्य स्वस्य जीवान्तरसाधारण्यकल्पनामये श्रीहंस-देववाक्ये जीवात्मनामैकत्वं, तत् खलु अंशभेदेऽपि ज्ञानेच्छून् प्रति ज्ञानोपयोगित्वेन तन्मात्रविवक्षयैव समानाकारत्वेन। भेदव्यपदेशः यथा तत्रैव। पञ्चात्मकेषु भूतेषु समानेष्वपि वस्तुतः। को भवा-निति वः प्रश्नो वाचारम्भो ह्यनर्थकः ॥ इति। तत्राप्यंशभेदो-ऽस्त्येव। अत उक्तं स्वयं भगवता—शुनि चैव श्वपाके च पण्डिताः समदर्शिन इति। निर्दोषं हि समं ब्रह्मेत्यादि च। अत्र ब्रह्मेति जीवब्रह्मैवोच्यते। यथा—ययाहमेतत् सदसत् स्वमायया पश्ये मयि ब्रह्मणि कल्पितं परे इति। मयि ब्रह्मणि देहात्मकं परे ब्रह्मणि च जगदात्मकं सदसत् कार्य्यकारणसङ्घातं स्वविषयकमायया जीव-मायाख्यया देह एवाहं तथा इन्द्रचन्द्राद्यात्मकं जगदेवेश्वर इतीदं कल्पितमेव यया मत्या पश्ये पश्यामीत्यर्थः। समानाकारत्वादेव पूर्व-वदन्यत्र च सोऽहं स च त्वमिति। तदेवं सर्वेषामेव जीवानामेका-कारत्वे सति, यावत् सत्त्वाद्गुणवैषम्यं तावन्नानात्वमात्मनः। नानात्व-मात्मनो यावत् पारतन्त्र्यं तदैव हीत्यादिषु देवादिदेहभेदकृतागन्तुक-नानात्वं निन्द्यते। वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः। अभेद-व्यापिनो वायोस्तथा तस्य महात्मनः ॥ इत्यादिकन्तु परमात्मविषयक-मेव। तदेतत् सर्वमभिप्रेत्य जीवानां प्रतिचेत्रं भिन्नत्वं स्वपक्षत्वेन निर्दिशन्ति। अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगता इति ॥ ३२ ॥

अत्र यदिशब्दात् पूर्वपाठेनापरिमितत्वं ध्रुवत्वञ्चासन्दिग्धमिति तत्र स्वपक्षत्वं पश्चात् पाठेन सर्वगतत्वन्तु सन्दिग्धमिति तत्र परपक्षत्वं स्पष्टमेव। अतएव, एको देवः सर्वभूतेषु गूढ़ इत्यादिकं परमात्मपरं वाक्यं जीवानामनेकत्वं बोधयति ॥ १० ॥ ८७ ॥ श्रुतयः ॥ ३२ ॥

प्रतिचेत्रभिन्नत्वे हेत्वन्तरमणुरिति। अणुः परमाणुरित्यर्थः। पर-माणुश्च यस्य दिग्भेदेऽप्यंशो न कल्पयितुं शक्यते स एवांशस्य परा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

काष्ठेति तद्विदः । अणोरप्यखण्डदेहचेतयितृत्वं प्रभावविशेषाद् गुणादेव भवति। यथा शिर आदौ धार्य्यमाणस्य जतुजटितस्यापि मह्यौषधिखण्डस्याखण्डदेहपुष्टीकरणादिहेतुः प्रभावः। यथा वायस्कान्तादेर्लोहचालनादिहेतुः प्रभाव एव तद्वत् । तदेतदणुत्वमाह—सूक्ष्माणामप्यहं जीव इति ॥ ३२ ॥

तस्मात् सूक्ष्मतापराकाष्ठाप्राप्तो जीव इत्यर्थः। दुर्ज्ञेयत्वाद् यत् सूक्ष्मत्वं तदत्र न विवक्षितम्। महताञ्च महानहं सूक्ष्माणामप्यहं जीव इति परस्परप्रतियोगित्वेन वाक्यद्वयस्यानन्तर्य्योक्तौ स्वारस्यभङ्गात्। प्रपञ्चमध्ये हि सर्वकारणत्वान्महत्तत्त्वस्य महत्त्वं नाम व्यापकत्वं न तु पृथिव्याद्यपेक्षया सुज्ञेयत्वं यथा तद्वत् प्रपञ्चे जीवानामपि सूक्ष्मत्वं परमाणुत्वमेवेति स्वारस्यम्। श्रुतयश्च। एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेशेति। वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेय इति। आराग्रमात्रो ह्यपरोऽपि दृष्ट इति च ॥११॥१६॥ श्रीभगवान् ॥ ३२ ॥

तथा—अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगतास्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा। अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत् सममनुजानतां यदमतं मतदुष्टतया ॥ ३४ ॥

अयमर्थः—परमात्मनोऽंशत्वं तस्माज्जायमानत्वञ्च जीवस्य श्रूयते। तत्र ममैवांशो जीवलोके इत्यादिसिद्धेऽंशत्वे तावत्तस्य विभूत्वमयुक्तमित्याहुः। अपरिमिता वस्तुत एवानन्तसंख्या नित्याश्च ये तनुभृतो जीवास्ते यदि सर्वगता विभवः स्युः तर्हि तेषां व्याप्यत्वाभावेन समत्वात् शास्यतेति नियमो न स्यात्। ईश्वरो नियन्ता जीवो नियम्य इति वेदशतनियमो न घटत इत्यर्थः। हे ध्रुव! इतरथा जीवस्याणुत्वेन व्याप्यभावे तु सति न तन्नियमो न अपि तु स घटत एवेत्यर्थः। अथ यतो वा इमानि भूतानि जायन्ते इति जायमानत्वावस्थायामपि व्याप्यव्यापकत्वेनैव नियन्तृत्वं भवति। सर्वत्रैव कार्य्यकारणयोस्तथाभावदर्शनादित्याहुः,

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अजनीति। यस्मयं यदुपादानकं यदजनि जातं जायत इत्यर्थः। तदुपादानं कर्तृ तस्य जायमानस्य यन्नियन्तृ भवेत् तदविमुच्य किञ्चिदप्यनुक्त्वा व्याप्यैवेत्यर्थः। किञ्च यदुपादानरूपं परमात्माख्यं तत्त्वं केनाप्यपरेण समं समानमित्यनुजानतां यः कश्चित्तथा वदति तत्रानुज्ञामपि ददतामसतं ज्ञातं न भवतीत्यर्थः। तत्र हेतुः, मतदुष्टतया तस्य मतस्याशुद्धत्वेन। तन्नाशुद्धत्वं श्रुत्या च विरोधात्। श्रुतिश्च—असमो वा एष परो न हि कश्चिदेवं दृश्यते सर्वे त्वेते न वा जायन्ते च म्रियन्ते च छिद्रा ह्येते भवन्त्यथ परो न जायते न म्रियते सर्वे ह्यपूर्णाश्च भवन्तीति चतुर्वेदशिखायाम्। न तत् समश्चाभ्यधिकश्च दृश्यते इति। अथ कस्मादुच्यते ब्रह्म बृंहति बृंहयति चेति चान्यत्र। बृहत्वाद्बृंहणत्वाच्च यद् ब्रह्म परमं विदुरिति श्रीविष्णुपुराणे। अतः परमात्मन एवं सर्वव्यापकत्वम्। एको देवः सर्वभूतेषु गूढ़ः सर्वव्यापी सर्वभूतान्तरात्मा इत्यादौ। तस्मादणुरेव जीव इति। यत्तु श्रीभगवद्गीतासु नित्यः सर्वगतः स्थाणुरित्यादिना जीवनिरूपणं तत्र सर्वगतः श्रीभगवानेव तत्स्थस्तदाश्रितश्चासावणुश्च इति सर्वगतः स्थाणुर्जीवः प्रोक्तः॥ १०॥ ८७॥ स्तुतयः॥ ३४॥

अथ शुद्धस्वरूपत्वान्नित्यनिर्मलत्वमुदाहृतमेव। शुद्धो विचष्टे ह्यविशुद्धकर्तुरित्यनेन। तथा तेनैव शुद्धस्यापि ज्ञातृत्वमप्युदाहृतम्। ज्ञानञ्च नित्यस्य स्वाभाविकधर्मत्वान्नित्यम् अतएव न विक्रियात्मकमपि। तथा चैतन्यसम्बन्धेन देहादेः कर्तृत्वदर्शनात्। क्वचिदचेतनस्य कर्तृत्वञ्च। न ऋते त्वत् क्रियते किञ्चनारे इत्यादावन्तर्यामिचैतन्यसम्बन्धेन भवतीत्यङ्गीकाराच्च शुद्धादेव कर्तृत्वं प्रवर्त्तते। तदुक्तम्। देहेन्द्रियप्राणमनोधियोऽमी यदंशविद्धाः प्रचरन्ति कर्मस्विति। तत्तूपाधिप्राधान्येन प्रवर्त्तमानमुपाधिधर्मत्वेन व्यपदिश्यते। यथा—कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुरित्यादौ। परमात्मप्राधान्येन प्रवर्त्तमानन्तु निरुपाधिकमेवेत्याह।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः । तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥ ३५ ॥

स्पष्टम् ॥ ११॥२५॥ श्रीभगवान् ॥ ३५ ॥

अथ भोक्तृत्वं सम्वेदनरूपत्वेन यथा तथा तत्रैव चिद्रूपे पर्य्यवस्यतीत्याह—भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परमिति ॥ ३६ ॥ कारणमिति पूर्वेणैवान्वयः ॥ ३ ॥ २६ ॥ श्रीकपिलदेवः ॥ ३६ ॥

अथ परमात्मैकशेषत्वेति व्याख्येयम् । एकः परमात्मनोऽन्यः शेषोऽंशः । स चासौ स च एकशेषः । परमात्मन एकशेषः परमात्मैकशेषः । तस्य भावस्तत्त्वं तदेव स्वभावः प्रकृतिर्यस्य स परमात्मैकशेषत्वस्वभावः । तथाभूतश्चायं सर्वदा मोक्षदशायामपीत्यर्थः । एतादृशत्वञ्चास्य स्वतः स्वरूपत एव न तु परिच्छेदादिना । तदीयस्वाभाविकाचिन्त्यशक्त्या स्वाभाविकतदीयरश्मिपरमाणुस्थानीयत्वात् औपाधिकावस्थायास्त्वंशेन प्रकृतिशेषत्वमपि भवति इति च स्वत इत्यस्य भावः । शक्तिरूपत्वञ्चास्य तटस्थशक्त्यात्मकत्वात्, तथा तदीयरश्मिस्थानीयत्वेऽपि नित्यतदाश्रयित्वात् तद्व्यतिरेकेण व्यतिरेकात्, हेतुर्जीवोऽस्य सर्गादेरित्यनुसारेण जगत्सृष्टौ तत्साधनत्वात्, द्रव्यरूपत्वेऽपि प्रधानसाम्याच्चावगम्यते । उक्तञ्च प्रकृतिविशेषत्वेन तस्य शक्तित्वम्—विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा । अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥ इति विष्णुपुराणे । भूमिरापोऽनलो वायुरित्यादौ भिन्ना प्रकृतिरष्टधेत्यनन्तरम्, अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्य्यते जगदिति श्रीगीतोपनिषत्सु च । विष्णुशक्तिः परा प्रोक्तेत्यादिविष्णुपुराणवचने तु तिसृणामेव पृथक्शक्तित्वनिर्देशात् क्षेत्रज्ञस्याविद्याकर्मसम्बन्धेन शक्तित्वमिति परास्तम् । किन्तु स्वरूपेणैवेत्यायातम् । तथाच गीतम्—ममैवांश इति । अतएवापरेयमितस्त्वन्यामित्युक्तम् । क्षेत्रज्ञ एता मनसो विभूतीरित्यादौ क्षेत्रज्ञ-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

शब्दस्य शुद्धेऽपि प्रवर्त्तते चेत्रशब्दस्योपलक्षणमात्रत्वात्। तदेवं शक्तित्वेऽप्यन्यत्वमस्य तटस्थत्वात्, तटस्थत्वञ्च मायाशक्त्यतीतत्वात्, अस्याविद्यापराभवादिरूपेण दोषेण परमात्मनो लेपाभावाच्चोभय-कोटावप्रवेशात्। तस्य तच्छक्तित्वे सत्यपि परमात्मनस्तल्लेपाभावश्च यथा क्वचिदेकदेशस्थे रश्मौ छायया तिरस्कृतेऽपि सूर्य्यस्यातिरस्कारस्तद्वत्। उक्तञ्च तटस्थत्वं श्रीनारदपञ्चरात्रे—यत्तटस्थन्तु चिद्रूपं स्वसंवेद्या-द्विनिर्गतम्। रञ्जितं गुणरागेण स जीव इति कथ्यते॥ इत्यादौ। अतो विष्णुपुराणेऽप्यन्तराल एव पठितोऽसौ। अन्यत्वञ्च श्रुतौ—अस्मा-न्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः। तयोरन्यः पिप्पलं स्वाद्वत्तीत्यादौ। अतएवोक्तं वैष्णवे—विभेदजनके ज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्य-तीति॥ देवत्वमनुष्यत्वादिलक्षणो विशेषतो यो भेदस्तस्य जनकेऽप्य-ज्ञाने नाशं गते ब्रह्मणः परमात्मनः सकाशादात्मनो जीवस्य यो भेदः स्वाभाविकस्तं भेदमसन्तं कः करिष्यति अपितु सन्तं विद्यमानमेव सर्व एव करिष्यतीत्यर्थः। उत्तरत्र पाठे नासत्त्वमित्येतस्य विधेयत्वा-दन्यार्थः कष्टसृष्ट एवेति मोक्षदशायामपि तदंशत्वाव्यभिचारः स्वाभा-विकशक्तित्वादेव। अतएवाविद्याविमोक्षपूर्वकस्वरूपावस्थितिलक्षणायां मुक्तौ तल्लीनस्य तत्साधर्म्यापत्तिर्भवति। निरञ्जनः परमं साम्यमुपैतीत्यादिश्रुतिभ्यः। इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चेति श्रीगीतोपनिषद्भ्यश्च। अतएव ब्रह्म वेद ब्रह्मैव भवतीत्यादिषु च ब्रह्मतादात्म्यमेव बोधयति। स्वाभाव्यापत्तिरुपपत्तेरितिवत्। तदेवं शक्तित्वे सिद्धे शक्तिशक्ति-मतोः परस्परानुप्रवेशात् शक्तिमद्व्यतिरेके शक्तिव्यतिरेकात् चित्त्वा-विशेषाच्च क्वचिदभेदनिर्देश एकस्मिन्नपि वस्तुनि शक्तिवैविध्यदर्शनात् भेदनिर्देशश्च नासमञ्जसः। श्रीरामानुजीयास्तु अधिष्ठानाधिष्ठात्रोरपि जीवेशयोरभेदव्यपदेशो व्यक्तिजात्योर्गवादिव्यपदेशवदिति मन्यन्ते।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यथा श्रीविष्णुपुराणे—योऽयं तवागतो देव समीपं देवतागणः। स त्वमेव जगत्स्रष्टा यतः सर्वगतो भवानिति। श्रीगीतासु च सर्वं समाप्नोसि ततोऽसि सर्व इति। तत्र ज्ञानेच्छून् प्रति शास्त्रमभेदमुपदिशति भक्तीच्छून् प्रति तु भेदमेव। क्वचित्तु परमात्मप्रतिविम्बत्वं यदस्य श्रूयते, यथा—यथा पुरुष आत्मानमेकमादर्शचक्षुषोः। द्विधाभूतमवेक्षेत तथैवान्तरमावयोरिति, तदपि ज्ञानेच्छून् प्रत्यभेददृष्टिपोषणार्थमेवोच्यते न वास्तवतत्त्वेव प्रतिविम्बत्वेन। अद्वयवादगुरुमतेऽप्यम्बुवदग्रहणादिति न्यायविरोधाद्, वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवमिति न्यायेन यथाकथञ्चित् प्रतिविम्बसादृश्यमात्राङ्गीकाराच्च। तदेतत्तस्य परमात्मांशरूपताया नित्यत्वं श्रीगीतोपनिषद्भिरपि दर्शितम्—ममैवांशो जीवलोके जीवभूतः सनातन इति। तदेवमंशत्वं तावदाह, तत्र समष्टेः—

एष ह्यशेषसत्त्वानामात्मांशः परमात्मनः। आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यते ॥ ३७ ॥

टीका च—अशेषसत्त्वानां प्राणिनामात्मा व्यष्टीनां तदंशत्वात् अंशो जीवः। अवतारतोक्तिस्तस्मिन्नारायणाविर्भावाभिप्रायेणेत्येषा २ ॥ ६ ॥ श्रीशुकः ॥ ३७ ॥

अथ व्यष्टेः—एकस्यैव ममांशस्य जीवस्यैव महामते। बन्धोऽस्याविद्ययानादेर्विद्यया च तथेतरः ॥ ३८ ॥

इतरो मोक्षः। अत्र रश्मिपरमाणुस्थानीयो व्यष्टिः। तत्र सर्वाभिमानी कश्चित् समष्टिरिति ज्ञेयम् ॥ ११ ॥ श्रीभगवान् ॥ ३८ ॥

तत्र शक्तित्वेनैवांशत्वं व्यञ्जयन्ति—स्वकृतपुरेष्वमीष्ववहिरन्तरसंवरणं तव पुरुषं वदन्त्यखिलशक्तिधृतोऽंशकृतमिति ॥ ३९ ॥

अवहिरन्तरसंवरणं वहिर्वहिरङ्गाणि कार्य्याणि अन्तरन्तरङ्गाणि कारणानि तैरसंवरणं कार्य्यकारणैरसंस्पृष्टम्। अंशकृतमंशमित्यर्थः। अखिलशक्तिधृतः सर्वशक्तिधरस्येति विशेषणं जीवशक्तिविशिष्टस्यैव

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तत्र जीवोऽंशो न तु शुद्धस्येति गमयित्वा जीवस्य तच्छक्तिरूपत्वे-नैवांशत्वमित्यनेनैवांशत्वमित्येतद्व्यञ्जयन्ति। अथ तटस्थत्वञ्च स यदजया त्वजामनुशयीतीत्यादौ व्यक्तमस्ति उभयकोटावप्रविष्टत्वादेव ॥ १० ॥ ८७ ॥ श्रुतयः श्रीभगवन्तम् ॥ ३९ ॥

अथ ज्ञानेच्छुं प्रति जीवेशयोरभेदमाह—अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भोः। न नौ पश्यन्ति कवयश्छिद्रं या तु मनागपि ॥ ४० ॥

स्पष्टम् ॥ ४ ॥ २८ ॥ श्रीपरमात्मा पुरञ्जनम् ॥ ४० ॥

तत्र पूर्वोक्तरीत्या प्रथमन्तावत् सर्वेषामेव तत्त्वानां परस्परानु-प्रवेशविवक्षयैक्यं प्रतीयते इत्येवं शक्तिमति परमात्मनि जीवाख्यशक्त्यनु-प्रवेशविवक्षैव तयोरैक्यपक्षे हेतुरित्यभिप्रैति श्रीभगवान्—

परस्परानुप्रवेशात्तत्त्वानां पुरुषर्षभ।
पौर्वापर्यप्रसंख्यानं यथा वक्तुर्विवक्षितम् ॥ ४१ ॥

टीका च—अन्योन्यस्मिन्ननुप्रवेशाद्वक्तुर्यथा विवक्षितं तथा पूर्वा अल्पसंख्या अपरा अधिकसंख्या तयोर्भावः पौर्वापर्य्यं तेन प्रसंख्यानं गणनमित्येषा ॥ ११ ॥ २२ ॥ श्रीभगवान् ॥ ४१ ॥

अथाव्यतिरेकेण चिद्रूपत्वाविशेषेणापि तयोरैक्यमुपदिशति।

पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि। तदन्यकल्पनापार्थेति ॥४२॥

टीका च—कथं तर्हि पञ्चविंशतिपक्षस्तत्राह पुरुषेति। वैल-क्षण्यं विसदृशत्वं नास्ति द्वयोरपि चिद्रूपत्वात्। अतस्तयोरत्यन्त-मन्यत्वकल्पनापार्थेत्येषा। अत्र सदृशत्वानन्यत्वाभ्यां तयोः शक्ति-शक्तिमत्त्वं दर्शितम्। तेनाव्यतिरेकोऽपि ॥ ११ ॥ २२ ॥ श्रीभग-वान् ॥ ४२ ॥

अथ भक्तीच्छुं प्रति तयोर्भेदमुपदिशति। यदा रहितमात्मानं भूतेन्द्रियगुणाशयैः। स्वरूपेण मयोपेतं पश्यन् स्वाराज्यमृच्छति ॥४३॥

आत्मानं जीवं स्वरूपेण तस्या जीवशक्तेराश्रयभूतेन शक्तिमता

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मया उपेतं युक्तम् । स्वाराज्यं साम्यादिकम् ॥ ३ ॥ ९ ॥ गर्भोदशायी ब्रह्माणम् ॥ ४३ ॥

तत्र भेदे हेतुमाह—

अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम् ।
स्वतो न सम्भवादन्यस्तत्त्वज्ञो ज्ञानदो भवेत् ॥ ४४ ॥

टीका च—स्वतो न सम्भवति, अन्यतस्तु सम्भवात्, स्वतः सर्वज्ञः परमेश्वरोऽन्यो भवेदिति षड्विंशतितत्त्वपक्षाभिप्राय इत्येषा । ज्ञानदत्वमत्र ज्ञानाज् ज्ञातुश्च वैलक्षण्यमीश्वरस्य बोधयत्येवेति भावः । एवं त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तेऽत्र शक्तित इत्युद्धववाक्यञ्चाग्रे । अत्र यदि जीवाज्ञानकल्पितमेव तस्य परमेश्वरत्वं स्यात्तर्हि स्थाणुपुरुषवत्तस्य ज्ञानदत्वमपि न स्यादित्यतः सत्य एव जीवेश्वरभेद इत्येवं श्रीमदीश्वरेणैव स्वयं स्वस्य पारमार्थिकेश्वराभिमानित्वेनैवास्तित्वं मूढ़ान् प्रति बोधितमिति स्पष्टम् । भेदवादिनस्त्वत्रैव प्रकरणे, यथा विविक्तं यदक्तं ब्रह्मीमो युक्तिसम्भवादित्यत्र परमविवेकजस्तु भेद एवेति, तथा, मायां मदीयामुद्गृह्य वदतां किन्नु दुर्घटमित्यत्र, तथापि भगवच्छक्त्यैव तत्र तत्र नानावादावकाश इति च मन्यन्ते । ननु, श्रुतिः प्रत्यक्षमैतिह्यमनुमानञ्चतुष्टयम् । प्रमाणेष्वनवस्थानाद्विकल्पात् स विरज्यते ॥ इत्यत्र भेदमात्रं निषिध्यते विकल्पशब्दस्य संशयार्थत्वात् । संशयं परित्यज्य वस्तुन्येव निष्ठां करोतीत्यर्थः । अतएव कर्म्मणां परिणामित्वादाविरिञ्च्यादमङ्गलम् । विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवदित्यत्रास्योत्तरश्लोकेऽपि विरिञ्च्यमेवावधिं कृत्वा नश्वरत्वदृष्टिरुक्ता न तु वैकुण्ठादिकमपीति ॥ ११ ॥ २२ ॥ श्रीभगवान् ॥ ४४ ॥

अन्यत्रापि श्रीजामातृमुनिभिरुपदिष्टस्य जीवलक्षणस्यैवोपजीव्यत्वेन तं लक्षयति त्रिभिः ।

अहं ममाभिमानोत्थैः कामलोभादिभिर्मलैः । वीतं यदा मनः



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

शुद्धमदुःखमसुखं समम् ॥ तदा पुरुष आत्मानं केवलं प्रकृतेः परम्। निरन्तरं स्वयं ज्योतिरणिमानमखण्डितम् ॥ ज्ञानवैराग्य-युक्तेन भक्तियुक्तेन चेतसा। परिपश्यत्युदासीनं प्रकृतिञ्च हतौ-जसम् ॥ ४५ ॥

स्पष्टैव योजना। तत्राहमिति पद्येन स आत्मा नित्यनिर्म्मल इति। आत्मानमित्यनेनैवाहमर्थं इति। अन्यथा ह्यात्मत्वप्रतीत्यभावः स्यात्। केवलमित्यनेनैकरूपस्वरूपभागिति। प्रकृतेः परमित्यनेन विकाररहितः। भक्तियुक्तेनेत्यनेन परमात्मप्रसादाधीनतत्प्रकाशत्वात् निरन्तरमित्यनेन नित्यत्वात् परमात्मैकशेषत्वमिति। स्वयं ज्योति-रित्यनेन स्वस्मै स्वयं प्रकाश इति ज्ञानमात्रात्मको न च इति च। अणिमानमित्यनेनाणुरेवेति प्रतिक्षेत्रं भिन्न इति च। अखण्डित-मित्यनेन विच्छिन्नज्ञानादिशक्तित्वात् ज्ञातृत्वकर्त्तृत्वभोक्तृत्वनिजधर्म्मक इति व्यञ्जितम् ॥ ३ ॥ २५ ॥ श्रीकपिलदेवः ॥ ४५ ॥

तथेदमपि प्राक्तनलक्षणाविरुद्धम्।

आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः। अविक्रियः स्वदृग्-हेतुर्व्यापकोऽसङ्ग्यनावृतः ॥ एतैर्द्वादशभिर्विद्वानात्मनो लक्षणैः परैः। अहं ममेत्यसद्भावं देहादौ मोहजं त्यजेत् ॥ ४६ ॥

अव्ययः अपक्षयशून्यः। एको नतु देहेन्द्रियादिसङ्घातरूपः। क्षेत्रज्ञो ज्ञातृत्वादिधर्म्मकः। इन्द्रियादीनामाश्रयः। स्वाभाविकज्ञातृत्वादेवावि-क्रियः। स्वदृक् स्वस्मै स्वयं प्रकाशः। हेतुः सर्गादिनिमित्तम्। तदुक्तं श्रीसूतेन। हेतुर्जीवोऽस्य सर्गादेरविद्याकर्म्मकारक इति। व्यापको व्याप्तिशीलः। असङ्गी अनावृतश्च स्वतः प्रकाशरूपत्वात्। अहं ममेत्यसद्भावं देहादौ मोहजं त्यजेदिति देहाद्यधिकरणकस्य मोहजस्यैव त्यागो न तु स्वरूपभूतस्येत्यहमर्थं इति व्यज्यते। तदेवं जीवस्तदंशत्वात् सूक्ष्मज्योतीरूप इत्येके। तथैव हि कौस्तुभांशत्वेन व्यञ्जितम्। तथाच स्कान्दप्रभासखण्डे जीवनिरूपणे—न तस्य रूपं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वर्णो वा प्रमाणं दृश्यते क्वचित् । न शक्यः कथितुं वापि सूक्ष्मत्वानन्त-विग्रहः ॥ वालाग्रशतभागस्य शतधा कल्पितस्य च । तस्मात् सूक्ष्म-तरो देवः स चानन्त्याय कल्पते ॥ आदित्यवर्णं सूक्ष्माभमब्बिन्दुमिव पुष्करे । नक्षत्रमिव पश्यन्ति योगिनो ज्ञानचक्षुषेति ॥ ७ ॥ ७ ॥ श्रीप्रह्लादोऽसुरवालकान् ॥ ४६ ॥

तदेवमनन्ता एव जीवाख्यास्तटस्थाः शक्तयः । तत्र तासां वर्गद्वयम् । एको वर्गोऽनादित एव भगवदुन्मुखः अन्यस्त्वनादित एव भगवत्परा-ङ्मुखः । स्वभावतस्तदीयज्ञानभावात्तदीयज्ञानाभावाच्च । तत्र प्रथमो-ऽन्तरङ्गाशक्तिविलासानुगृहीतो नित्यभगवत्परिकररूपो गरुड़ादिकः । यथोक्तं पाद्मोत्तरखण्डे त्रिपाद्विभूतेर्लोकास्त्वित्यादौ भगवत्सन्दर्भोदा-हृते । अस्य च तटस्थत्वं जीवत्वप्रसिद्धेरीश्वरत्वकोटावप्रवेशात् । अप-रस्तु तत्पराङ्मुखत्वदोषेण लब्धच्छिद्रया मायया परिभूतः संसारी । यथोक्तं हंसगुह्यस्तवे—सर्वं पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञ-मनन्तमीड़े । इति । एकादशे च—भयं द्वितीयाभिनिवेशतः स्यादि-त्यादि । तद्वर्गद्वयमेवोक्तं श्रीविदुरेणापि—तत्त्वानां भगवंस्तेषां कतिधा प्रतिसंक्रमः । तत्रेमं क उपासीरन् क उ स्विदनुशेरते ॥ इत्यनेन । तत्र परमेश्वरपराङ्मुखानां शुद्धानामपि तच्छक्तिविशिष्टात् पर-मेश्वरात् सोपाधिकं जन्म भवति । तच्च जन्म निजोपाधिजन्मना निजजन्माभिमानहेतुकाध्यात्मिकावस्थाप्राप्तिरेव । तदेतदाहुः ।

न घटत उद्भवः प्रकृतिपुरुषयोरजयोरुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत् । त्वयि त इमे ततो विविधनामगुणैः परमे सरित इवार्णवे मधुनि लिल्युरशेषरसाः ॥ ४७ ॥

प्रकृतेस्त्रैगुण्यं पुरुषः शुद्धो जीवस्तयोर्द्वयोरप्यजत्वादुद्भवो न घटते ये चासुभृत आध्यात्मिकरूपाः सोपाधयो जीवा जायन्ते तत्तदुभयशक्ति-युजा परमात्मनैव कारणेन जायन्ते प्रकृतिविकारप्रलयेन सुप्तवासन-त्वात् शुद्धास्ताः परमात्मनि लीना जीवाख्याः शक्तयः सृष्टिकाले विका-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

रिणीं प्रकृतिमासज्य क्षुभितवासनाः सत्यः सोपाधिकावस्थां प्राप्नुवन्त्य एव व्युच्चरन्तीत्यर्थः। एतदभिप्रेत्यैव भगवानेक आसेदमित्यादि-तृतीयस्कन्धप्रकरणे—कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः। पुरुषेणात्मभूतेन वीर्य्यमाधत्त वीर्य्यवान्॥ इत्यनेन वीर्य्यशब्दोक्तस्य जीवस्य प्रकृतावाधानमुक्तम्। एवं श्रीगीतोपनिषत्स्वपि। मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्। इत्यत्रोक्तम्। टीका-कारैश्च ब्रह्मशब्देन प्रकृतिर्व्याख्याता गर्भशब्देन जीव इति। पुन-रेष एव तृतीये—दैवात् क्षुभितधर्म्मिण्यां स्वस्यां योनौ परः पुमान्। आधत्त वीर्य्यं सासूत महत्तत्त्वं हिरण्मयमित्यत्र वीर्य्यं चिच्छक्तिमिति टीकायां व्याख्यातमतः शक्तित्वमस्य टीकासम्म-तम्। ततोऽकस्मादुद्भवमात्रांशे दृष्टान्तः। जलबुद्बुदवदिति। अतः पुनरपि प्रलयसमये इमे सोपाधिका जीवास्त्वयि विस्फुलिङ्गस्थानीय-मूलचिद्रूपे रश्मिस्थानीयचिदेकलक्षणशुद्धजीवशक्तिमये। सत एव स्वमपीतो भवतीत्यादिश्रुतौ स्वशब्दाभिधेये परमे परमात्मनि विविध-नामगुणैर्विविधाभिर्देवादिसंज्ञाभिर्विविधैः शुभाशुभगुणैश्च सह लिल्यु-र्लीयन्ते। पूर्ववत् प्रलयेऽपि दृष्टान्तः सरित इवार्णव इति अशेषरसा इव मधुनि इति च। अत्र देवमनुष्यादिनामरूपपरित्यागेन तस्मिन् लीनेऽपि स्वरूपभेदोऽस्त्येव तत्तदंशसद्भावादित्यभिप्रायः। अत्र श्रुतयः—हन्तेमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नाम-रूपे व्याकरवाणीति। अजामेकामित्यादि। यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमिति। यथा सौम्येमा मधुकृतो निस्ति-ष्ठन्ति नानारूपाणां वृक्षाणां रसान् समवहारमेकतां रसं गमयन्ति ते यथा विवेकं न लभन्ते अमुष्याहं वृक्षस्य रसोऽस्मीत्येवं खलु सौम्येमाः सति सम्पद्य न विदुः सति सम्पद्यामह इतीति॥१०॥८७॥ श्रुतयः श्रीभगवन्तम्॥ ४७॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदेवं परमात्मनस्तटस्थाख्या शक्तिर्विवृता । अन्तरङ्गाख्या तु पूर्ववदेव ज्ञेया । अथ बहिरङ्गाख्या विव्रियते ।

एषा माया भगवतः सृष्टिस्थित्यन्तकारिणी ।
त्रिवर्णा वर्णितास्माभिः किं भूयः श्रोतुमिच्छसि ॥ ४८ ॥

भगवतः स्वरूपभूतैश्वर्य्यादेः परमात्मन एषा तटस्थलक्षणेन पूर्वोक्ता जगत्सृष्ट्यादिकारिणी मायाख्या शक्तिः । त्रयो वर्णा यस्याः सा । तथा चाथर्वणिकाः पठन्ति । सितासिता च कृष्णा च सर्वकामदुघा विभोरिति । उक्तञ्च । दैवी ह्येषा गुणमयी मम माया दुरत्ययेति । ११ ॥ ३ ॥ अन्तरीक्षो विदेहम् ॥ ४८ ॥

तस्या मायायाश्चांशद्वयम् । तत्र गुणरूपस्य मायाख्यस्य निमित्तांशस्य द्रव्यरूपस्य प्रधानाख्यस्योपादानांशस्य च परस्परं भेदमाह चतुर्भिः ।

अथ ते सम्प्रवक्ष्यामि सांख्यं पूर्व्वैर्विनिश्चितम् ।
यद्विज्ञाय पुमान् सद्यो जह्याद्वैकल्पिकं भ्रमम् ॥ ४९ ॥

टीका च—अद्वितीयात् परमात्मनो मायया प्रकृतिपुरुषद्वारा सर्वं द्वैतमुदेति पुनस्तत्रैव लीयते इत्यनुसन्दधानस्य पुरुषस्य द्वन्द्वभ्रमो निवर्त्तते इति वक्तुं सांख्यं प्रस्तौति अथेतीत्येषा । अत्र प्रधानपर्य्यायः प्रकृतिशब्दः ॥४९॥

आसीज्ज्ञानमथो अर्थ एकमेवाविकल्पितम् ।
यदा विवेकनिपुणा आदौ कृतयुगे युगे ॥ ५० ॥

टीका च—अथोशब्दः कार्त्स्न्ये । ज्ञानं द्रष्टृ । तेन दृश्यरूपः कृत्स्नोऽप्यर्थश्च विकल्पशून्यमेकमेव । ब्रह्मण्येव लीनमासीदित्यर्थः । इत्येषा । तृतीयस्कन्धे च भगवानेक आसेदमग्र आत्मात्मनां विभूरित्यादौ यद्भगवत्त्वेन शब्द्यते तदेवात्र ब्रह्मत्वेन शब्द्यते इति वदन्तीत्यादिवदुभयत्रैकमेव वस्तु प्रतिपाद्यम् । अन्ते तु एष सांख्यविधिः प्रोक्त इत्यादौ परावरदृशा मयेत्यनेन भगवद्रूपेणाप्यवस्थितिः स्पष्टैव ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कदेत्यपेक्षायामाह। यदा आदौ कृतयुगे विवेकनिपुणा जना भवन्ति तस्मिन् युगे तत्पूर्वस्मिन् प्रलयसमय इत्यर्थः ॥ ५० ॥

तन्मायाफलरूपेण केवलं निर्विकल्पितम्।
वाङ्मनोगोचरं सत्यं द्विधा समभवद्बृहत् ॥ ५१ ॥

टीका च—तद्बृहद्ब्रह्म वाङ्मनोगोचरं यथा भवति तथा। माया दृश्यम्। फलं तत्प्रकाशः। तद्रूपेण मायारूपेण विलासरूपेण च द्विधाभूदित्येषा। अत्र माया दृश्यमिति फलं तत्प्रकाश इति छेदः। तेन ब्रह्मणा यद्दृश्यं वस्तु तन्माया, तस्य ब्रह्मणो यः प्रकाशविशेषः स फलमितरर्थः ॥ ५१ ॥

तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका।
ज्ञानन्त्वन्यतमो भावः पुरुषः सोऽभिधीयते ॥ ५२ ॥

टीका च—तयोर्द्विधाभूतयोरंशयोर्मध्ये उभयात्मिका कार्य्यकारणरूपिणी इत्येषा। श्रीविष्णुपुराणे—विष्णोः स्वरूपात् परतो हि तेऽन्ये रूपे प्रधानं पुरुषश्च विप्र। इत्यत्र तेषामेव टीका च—परतो निरुपाधेर्विष्णोः स्वरूपात् ते प्रागुक्ते प्रधानं पुरुषश्चेति द्वे रूपे अन्ये मायाकृते इति ॥ ११ ॥ २४ ॥ श्रीभगवान् ॥५२॥

अन्यत्र तयोरुपादाननिमित्तयोरंशयोर्वृत्तिभेदेन भेदानप्याह।

कालो दैवं कर्म्म जीवः स्वभावो द्रव्यं क्षेत्रं प्राणमात्मा विकारः।
तत्सङ्घातो बीजरोहप्रवाहस्तन्मायैषा तन्निषेधं प्रपद्ये ॥ ५३ ॥

टीका च—कालः क्षोभकः, कर्म्म निमित्तं, तदेव फलाभिमुखमभिव्यक्तं दैवं, स्वभावस्तत्संस्कारः, जीवस्तद्वान्, द्रव्यं भूतसूक्ष्माणि, क्षेत्रं प्रकृतिः, प्राणः सूत्रम्, आत्मा अहङ्कारः, विकार एकादशेन्द्रियाणि महाभूतानि चेति षोड़शकः, तत्सङ्घातो देहः, तस्य च बीजरोहवत् प्रवाहः। रोहोऽङ्कुरः। देहाद्बीजरूपं कर्म्म। ततोऽङ्कुररूपो देहः। ततः पुनर्बीजमिति प्रवाहः। तं त्वां निषेधावधिभूतं प्रपद्ये भजे इति। इत्येषा। अत्र कालदैवकर्म्मस्वभावा निमित्तांशाः अन्ये उपादानांशास्तद्वान् जीवस्तु

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भयात्मकस्तथोपादानवर्गे निमित्तशक्त्यंशोऽप्यनुवर्त्तते । यथा जीवोपाधिलक्षणेऽहमाख्ये तत्त्वे तदीयाहंभावः स ह्यविद्यापरिणाम इत्यादि । यथोक्तं तृतीयस्य षष्ठे—आत्मानञ्चास्य निर्भिन्नमभिमानोऽविशत् पदम् । कर्म्मणांशेन येनासौ कर्त्तव्यं प्रतिपद्यते ॥ इति । अत्रात्मानमहङ्कारमभिमानो रुद्रः कर्म्मणाहंवृत्त्येति टीका च । अत्र च यन्निर्भिन्नं तदधिष्ठानं वागादीन्द्रियं तृतीयान्तमध्यात्ममिति प्रकरणनिर्णयः टीकायामेव ज्ञेयोऽस्ति । कर्म्मणो बीजरूपत्वं कारणतामात्रविवक्षया । तदेवमत्रापि मूलमायायाः सर्वोपादानांशमूलभूतं चेत्रशब्दोक्तं प्रधानमप्यंशरूपमित्यधिगतम् । जीवस्तद्वानित्यनेन शुद्धजीवस्य मायातीतत्वं बोधयति ॥ १० ॥ ६३ ॥ ज्वरः श्रीभगवन्तम् ॥५३॥

अथ निमित्तरूपांशस्य प्रथमे द्वे वृत्ती आह ।

विद्याविद्ये मम तनू विद्धुद्धव शरीरिणाम् । बन्धमोक्षकरी आद्ये मायया मे विनिर्मिते ॥ ५४ ॥

टीका च—तन्व्यौ बन्धमोक्षावाभ्यामिति तनू शक्ती मे मायया विनिर्मिते । मायावृत्तिरूपत्वाद्बन्धमोक्षकरीत्येकवचनं द्विवचनार्थे । ननु तत्कार्य्यत्वे बन्धमोक्षयोरनादित्वनित्यत्वे न स्यातां तत्राह, आद्ये अनादी । ततो यावदविद्यां प्रेरयामि तावद्बन्धः यदा विद्यां ददामि तदा मोक्षः स्फुरतीत्यर्थः । इत्येषा । अत्र मायावृत्तित्वादिति वस्तुतो मायावृत्ती एव ते । विनिर्मितत्वन्त्वपरानन्तवृत्तिकया तया प्रकाश्यमानत्वादेवोच्यते । यतोऽनादी इत्यर्थः । तथा स्फुरतीत्यस्य मोक्ष इत्यनेनैवान्वयः । जीवस्य स्वतो मुक्तत्वमेव । बन्धस्त्वविद्यामात्रेण प्रतीतः । विद्योदये तु तत् प्रकाशतेमात्रम् । ततो नित्य एव मोक्ष इति भावः । न च वाच्यमेषा मायेत्यादौ सामान्यलक्षणे मोक्षप्रदत्वं तस्या नोक्तमित्यसम्यक्त्वमिति । अन्तकारित्वेनात्यन्तप्रलयरूपस्य मोक्षस्याप्युपलक्षितत्वात् । अत्र विद्याख्या वृत्तिरियं स्वरूपशक्तिवृत्तिविशेषविद्याप्रकाशे द्वारमेव न तु स्वयमेव सेति ज्ञेयम् । अथाविद्याख्यस्य

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भागस्य द्वे वृत्ती। आवरणात्मिका विक्षेपात्मिका च। तत्र पूर्वा जीव एव तिष्ठन्ती तदीयं स्वाभाविकं ज्ञानमावृण्वाना, उत्तरा च तं तदन्यथाज्ञानेन सञ्जयन्ती वर्त्तत इति ॥ ११॥११॥ श्रीभगवान् ॥५४॥

अत्र निमित्तांशस्त्वेवं विवेचनीयः। यथा निमित्तांशरूपया मायाख्ययैव प्रसिद्धा शक्तिस्त्रिधा दृश्यते ज्ञानेच्छाक्रियारूपत्वेन। तत्र तस्याः परमेश्वरज्ञानरूपत्वं यथा तृतीये। सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका। माया नाम महाभाग ययेदं निर्ममे विभुरित्यस्य टीकायाम्। सा वै द्रष्टृदृश्यानुसन्धानरूपा। सद्दृश्यम्, असद्दृश्यम्, आत्मा स्वरूपम्। सदसतोरात्मा यस्यास्तदुभयानुसन्धानरूपत्वादिति। तदिच्छारूपत्वं यथा तत्रैव, आत्मेच्छानुगतावात्मेत्यस्य टीकायाम्, आत्मेच्छा माया तस्यानुगतौ लये सतीति। तत् क्रियारूपत्वञ्चैकादशे एषा माया भगवत इत्युदाहृतवचने एव द्रष्टव्यम्। यद्यपि परमेश्वरस्य साक्षाज्ज्ञानादिकं न माया, किन्तु स्वरूपशक्तिरेव, तथापि तज्ज्ञानादिकं प्राकृते कार्य्ये न तदर्थं प्रवर्त्तते, किन्तु भक्तार्थमेव प्रवर्त्तमानमनुषङ्गेनैव प्रवर्त्तत इत्यग्रे विवेचनीयत्वात्, तत्प्रवृत्त्याभाससम्वलितं यन्मायावृत्तिरूपं ज्ञानादिकमन्यत्तदेव तज्ज्ञानादिशब्देनोच्यते। तथाभूतं च तज्ज्ञानादिकं द्विविधम्। स्वभावसिद्धत्वात् केवलपरमेश्वरनिष्ठं तद्दत्तत्वात् जीवनिष्ठञ्च। तत्र प्रथमं द्रष्टृदृश्यानुसन्धानसिसृक्षाकालादिरूपं द्वितीयं विद्याविद्याभोगेच्छाकर्मादिरूपमिति। अथोपादानांशस्य प्रधानस्य लक्षणम्।

यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्। प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥ ५५ ॥

यत् खलु त्रिगुणं सत्त्वादिगुणत्रयसमाहारस्तदेवाव्यक्तं प्रधानं प्रकृतिश्च प्राहुः। तत्राव्यक्तसंज्ञत्वे हेतुरविशेषं गुणत्रयसाम्यरूपत्वादनभिव्यक्तविशेषम् अतएवाव्याकृतसंज्ञञ्चेति गमितम्। प्रधानसंज्ञत्वे हेतुः विशेषवत् स्वकार्य्यरूपाणां महदादिविशेषाणामाश्रयरूपतया

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तेभ्यः श्रेष्ठम् । प्रकृतिसंज्ञत्वे हेतुः, सदसदात्मकं, सदसत्सु कार्य्य-कारणरूपेषु महदादिषु कारणत्वादनुगत आत्मा स्वरूपं यस्य तत् । तथा नित्यं प्रलये कारणमात्रात्मनावस्थितसर्वांशत्वेन सृष्टिस्थित्योश्च पञ्चीकृतांशत्वेनाविकृतं स्वरूपं यस्य तादृशमिति ब्रह्मत्वं महदादि-रूपत्वञ्च व्यावृत्तम् । ब्रह्मणो निर्गुणत्वात् महदादीनाञ्चाव्यक्तापेक्षया कार्य्यरूपत्वात् । एवञ्च श्रीविष्णुपुराणे—अव्यक्तं कारणं यत्तत् प्रधान-मृषिसत्तमैः । प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम् । अक्षय्यं नान्यदाधारममेयमजरं ध्रुवम् । शब्दस्पर्शविहीनं तद्रूपादिभिरसंहतम् । त्रिगुणन्तज् जगद्योनिरनादिप्रभवाप्ययम् । तेनाग्रे सर्व्वमेवासीद्व्याप्यं वै प्रलयादन्वित्यादि । इदमेव प्रधानमनादेर्जगतः सूक्ष्मावस्थारूप-मव्याकृताव्यक्ताद्यभिधं वेदान्तिभिरपि परमेश्वराधीनतया मन्यते तद-धीनत्वादर्थवदित्यादिन्यायेषु, निषिध्यते तु सांख्यवत् स्वतन्त्रतया आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति चेत्यादिन्यायेषु । श्वेताश्वतरोपनिषदि प्रधानशब्दश्च श्रूयते । प्रधान-क्षेत्रज्ञपतिर्गुणेशः संसारबन्धस्थितिमोक्षहेतुरित्यादौ ॥ ३ ॥ २६ ॥ श्रीकपिलदेवः ॥५५॥

तदेवं सन्दर्भद्वये शक्तिचयविवृतिः कृता । तत्र नामाभिन्नताजनित-भ्रान्तिहानाय संग्रहश्लोकाः—माया स्यादन्तरङ्गायां वहिरङ्गा च सा स्मृता । प्रधानेऽपि क्वचिद्दृष्टा तद्वृत्तिर्मोहिनी च सा । आद्ये त्रये स्यात् प्रकृतिश्चिच्छक्तिस्त्वन्तरङ्गिका । शुद्धजीवेऽपि ते दृष्टे तथैश्वज्ञानवीर्य्ययोः । चिन्मायाशक्तिवृत्त्योस्तु विद्याशक्तिरुदीर्य्यते । चिच्छक्तिवृत्तौ मायायां योगमाया समा स्मृता । प्रधानाव्याकृताव्यक्तं त्रैगुण्ये प्रकृतौ परम् । न मायायां न चिच्छक्तावित्याद्यूह्यं विवेकिभिरिति । अथ मायाकार्य्यं जगल्लिख्यते ।

ततस्तेनानुविद्धेभ्यो युक्तेभ्योऽण्डमचेतनम् । उत्थितं पुरुषो यस्मा-दुदतिष्ठदसौ विराट् । एतदण्डं विशेषाख्यं क्रमवृद्धैर्दशोत्तरैः ।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तोयादिभिः परिवृतं प्रधानेनावृतैर्बहिः। यत्र लोकवितानोऽयं रूपं भगवतो हरेः ॥५६॥

तैनेश्वरेणानुविद्धेभ्यः क्षुभितेभ्यो महदादिभ्योऽण्डमचेतनमुत्थितम्। यस्मादण्डादसौ विराट् पुरुषस्तू दतिष्ठत्। भगवतः पुरुषस्य। ३ ॥ २६ ॥ श्रीकपिलदेवः ॥५६॥

तदेवं भगवतो रूपमित्युक्तेस्तस्यापि प्राग्वदप्राकृतत्वमायतति। तन्निषेधायाह।

अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते। उभे अपि न गृह्णन्ति मायासृष्टे विपश्चितः ॥ ५७ ॥

अमुनी अमू उपासनार्थं भगवत्यारोपिते जगदात्मके स्थूलसूक्ष्माख्ये विराट् हिरण्यगर्भापरपर्य्याये समष्टिशरीरे ये मया तुभ्यमनुवर्णिते ते उभे अपि विपश्चितो न गृह्णन्ति वस्तुतया नोपासते किन्तर्हि तदीयवहिरङ्गाधिष्ठानतयैवेत्यर्थः। तदुक्तं वैष्णवे—यदेतद्दृश्यते मूर्त्तमेतज्ज्ञानात्मनस्तव। भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिन इति। एतन्मूर्त्तं जगद्भ्रान्तिज्ञानेनैव तव रूपं जानन्तीत्यर्थः। श्रुतिश्च—नेदं यदिदमुपासत इति। यदिदं जगदुपासते प्राणिनः नेदं ब्रह्मेति श्रीरामानुजभाष्यम्। अतएव न गृह्णन्तीत्यत्र हेतुर्मायासृष्टे न तु स्वरूपशक्तिप्रादुर्भाविते। अनेन चतुर्भुजादिलक्षणस्य साक्षाद्रूपस्य मायातीतत्वमपि व्यक्तम्। अतोऽस्य जगतो मायामयस्य पुरुषरूपत्वे पुरुषगुणावताराणां विष्णादीनां सत्त्वादिमयान्तदंशा रूपाणीति ज्ञेयम्। तान्यपेक्ष्य चोक्तं मार्कण्डेये—विष्णुः शरीरग्रहणमहमीशान एव च। कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान् भवेत् इति। शरीरशब्दस्य तत्तन्निजशरीरवाचित्वे तु तद्ग्रहणात् पूर्वं विष्ण्वादिभेदासम्भवात्तन्निर्द्देशानुपपत्तेः ॥ २ ॥ १० ॥ श्रीशुकः ॥ ५७ ॥

पूर्वं मायासृष्टे इत्युक्तम्। तत्र मायाशब्दस्य नाज्ञानार्थत्वम्। तद्

CC-0- Jangamwadi Math Collection. Digitized by eGangotri

वादे हि सर्वमेव जीवादिद्वैतमज्ञानेनैव स्वस्वरूपे ब्रह्मणि कल्प्यते इति मतम् । निरहङ्कारस्य केनचिद्धर्म्मान्तरेणापि रहितस्य सर्वविलक्षणस्य चिन्मात्रस्य ब्रह्मणस्तु नाज्ञानाश्रयत्वं न चाज्ञानविषयत्वं न च भ्रमहेतुत्वं सम्भवतीति । परमालौकिकवस्तुत्वादचिन्त्यशक्तित्वन्तु सम्भवेत् । यत् खलु चिन्तामण्यादावपि दृश्यते, यथा त्रिदोषघ्नौषधिवत् परस्परविरोधिजातमपि गुणानां धारित्वा तस्य निरवयवत्वादिके सत्यपि सावयवत्वादिकमङ्गीकृतं, तत्र शब्दश्चास्ति प्रमाणम् । विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशः स्युरित्यादिकः श्वेताश्वतरोपनिषदादौ । आत्मेश्वरोऽतर्क्यसहस्रशक्तिरित्यादिकः श्रीभागवतादिषु । तथाच ब्रह्मसूत्रम् । आत्मनि चैवं विचित्राश्च हीति । तत्र द्वैतान्यथानुपपत्त्यापि ब्रह्मण्यज्ञानादिकं कल्पयितुं न शक्यते असम्भवादेव । ब्रह्मण्यचिन्त्यशक्तिसद्भावस्य युक्तिलब्धत्वात् श्रुतत्वाच्च द्वैतान्यथानुपपत्तिश्च दूरे गता । ततश्चाचिन्त्यशक्तिरेव द्वैतोपपत्तौ कारणं पर्य्यवसीयते । तस्मान्निर्विकारादिस्वभावेन सतोऽपि परमात्मनोऽचिन्त्यशक्त्या विश्वाकारत्वादिना परिणामादिकं भवति चिन्तामण्ययस्कान्तादीनां सर्वार्थप्रसवलोहचालनादिवत् । तदेतदङ्गीकृतं श्रीवादरायणेन श्रुतेस्तु शब्दमूलत्वादिति । ततस्तस्य तादृशशक्तित्वात् प्राकृतवन्मायाशब्दस्येन्द्रजालविद्यावाचित्वमपि न युक्तम् । किन्तु मीयते विचित्रं निर्म्मीयतेऽनयेति विचित्रार्थकरशक्तिवाचित्वमेव । तस्मात् परमात्मपरिणाम एव शास्त्रसिद्धान्तः । तदेतच्च भगवत्सन्दर्भे विवृतमस्ति । तत्र चापरिणतस्यैव सतोऽचिन्त्यया शक्त्या परिणाम इत्यसौ सन्मात्रतावभासमानस्वरूपव्यूहरूपद्रव्याख्यशक्तिरूपेणैव परिणमते न तु स्वरूपेणेति गम्यते । यथैव चिन्तामणिः । अतस्तन्मूलत्वान्न परमात्मोपादानतासंप्रतिपत्तिभङ्गः । तदुक्तमेकादशे श्रीभगवता । प्रकृतिर्य्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयन्त्वहमिति । अतएव क्वचिदस्य ब्रह्मोपादानत्वं क्वचित्

प्रधानोपादानत्वं श्रूयते। तत्र सा मायाख्या परिणामशक्तिश्च द्विविधा वर्ण्यते। निमित्तांशो माया उपादानांशः प्रधानमिति। तत्र केवला शक्तिर्निमित्तं तद्व्यूहमयी तूपादानमिति विवेकः। अतएव श्रुतावपि विज्ञानञ्चाविज्ञानञ्चेति कस्यचिद्भागस्याचेतनता श्रूयते। अथ मूलप्रमाणे श्रीभागवतेऽपि तृतीयादौ मुख्य एव सृष्टिप्रस्तावे च ज्ञानवैराग्याङ्गत्वेन च पुराणान्तरगतिसामान्यसेवितः प्रधानपरिणाम एव स्फुटमुपलभ्यते। क्व च स्तुत्यादौ ज्ञानवैराग्याङ्गतयैव विवर्त्तोऽपि यः श्रूयते सोऽपि जगतो नान्यथासिद्धतापरः किन्तु परमात्मव्यूहप्रधानपरिणामेन सिद्धस्यैव तस्य समष्टिव्यष्टिरूपस्य यथायथं शुद्धे परमात्मनि तदंशरूपात्मनि वांत्मात्मीयताध्यारोपिततापरः। तत्र परमात्मनि विराडुपासनावाक्यादिश्रवणं हेतुरात्मनि तु तत्तदावेशो हेतुरिति विवेचनीयम्। अन्यत्र सिद्धस्य वस्तुन एवान्यत्रारोपो मिथ्याखपुष्पादेरारोपासम्भवात् पूर्वपूर्वविवर्त्तमात्रसिद्धानादिपरम्परात्वे दृष्टान्ताभावाच्च। किञ्च पूर्वं वारिदर्शनाद्यार्थाकारा वृत्तिर्जातापि तदप्रसङ्गसमये सुप्ता तिष्ठति तत्तुल्यवस्तुदर्शनेन तु जागर्त्ति तद्विशेषानुसन्धानं विना तदभेदेन स्वतत्त्वारोपयति तस्मान्न वारि मिथ्या न वा स्मरणमयी तदाकारा वृत्तिर्न वा तत्तुल्यं मरीचिकादि वस्तु किन्तु तदभेदेनारोप एवायथार्थत्वान्मिथ्या। स्वप्ने च मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति न्यायेन जाग्रद्दृष्टवस्त्वाकारायां मनोवृत्तौ परमात्ममाया तद्वस्त्वभेदमारोपयतीति पूर्ववत्। तस्माद्वस्तु तस्तु न क्वचिदपि मिथ्यात्वम्। शुद्ध आत्मनि परमात्मनि वा तादृशतदारोप एव मिथ्या न तु विश्वं मिथ्येति। ततो जगतः परमात्मजातत्वेन साक्षात्तदात्मत्वाभावाद्बहिरङ्गशक्तिमयत्वेन च वैकुण्ठवत् साक्षात्तदात्मीयत्वाभावादबुधानामेव तत्र शुद्धे तत्तद्बुद्धिः। यद्यपि शुद्धाश्रयमेव जगत् तथापि जगता तत्संसर्गो नास्ति। तदुक्तमसक्तं सर्वभृच्चैवेति गीतासु। तथा देहगेहादावात्मात्मीयताज्ञामन्तेषामेव स्यादित्यु भयत्रैवारोपः शास्त्रे श्रूयते।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यथा, यदेतद्दृश्यते मूर्त्तमित्यादिकं विष्णुपुराणे। यथा वा,त्वामात्मनं परं मत्वा परमात्मानमेव च। आत्मा पुनर्बहिर्मृग्य अहो अज्ञजनाज्ञतेति। त्वामात्मानं सर्वेषां मूलरूपं परमितरं तद्विपरीतं मत्वा तथा परमितरं जीवमेव च मूलरूपात्मानं मत्वा सांख्यविद इव तस्य तथा मन्यमानस्य पुनः स जीवात्मा बहिर्मृग्यो भवति। तस्य तेनैव हेतुना लब्धच्छिद्रया मायया देहात्मबुद्धिः कार्य्यत इत्यर्थः। अहो अज्ञजनताया अज्ञता क्रमाज्ज्ञानभ्रंश इत्यर्थः। तदुक्तं हंसगुह्यस्तवे—देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत्। सर्वं पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीड़े इति। तथा श्रीभगवदुद्धवसंवादे—आत्मा परिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदात्मनिष्ठः। व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकादिति। किञ्च विवर्त्तस्य ज्ञानादिप्रकरणपठितत्वेन गौणत्वात् परिणामस्य तु स्वप्रकरणपठितत्वेन मुख्यत्वात् ज्ञानाद्युभयप्रकरणपठितत्वेन संदंशन्यायसिद्धप्राबल्याच्च परिणाम एव श्रीभागवततात्पर्य्यमिति गम्यते। तच्च भगवदचिन्त्यैश्वर्य्यज्ञानार्थं मिथ्यात्वाभिधानन्तु नश्वरत्वाभिधानवत् विश्वस्य परमात्मबहिर्मुखत्वापादकत्वाद्वैयताज्ञानमात्रार्थं न तु वस्त्वेव तन्न भवतीति जीवेशस्वरूपैक्यज्ञानमात्रार्थं वैधर्म्म्याच्च न स्वप्नादिवत् इति न्यायेन। तथाच नारदीये—जगद्विलापयामासुरित्यु च्येताथ तत्स्मृतेः। न च तत्स्मृतिमात्रेण लयो भवति निश्चितमिति। तत्र मुख्य एव सृष्टिप्रस्तावे प्रधानपरिणाममाह—

कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः। पुरुषेणात्मभूतेन वीर्य्यमाधत्त वीर्य्यवान्॥ ततोऽभवन् महत्तत्त्वमव्यक्तात् कालचोदितात्। विज्ञानात्मात्मदेहस्थं विश्वं व्यञ्जंस्तमोनुद इत्यादि॥ ५८॥

भगवानेक आसेदमिति प्राक्तनानन्तरग्रन्थादधोक्षजो भगवान् पुरुषेण प्रकृतिद्रष्टात्मभूतेन स्वांशेन द्वारभूतेन कालो वृत्तिर्यस्यास्तया मायया निमित्तभूतया गुणमय्यां मायायामव्यक्ते वीर्य्यं जीवाख्य-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

माधत्त। हन्तेमास्तिस्रो देवता इत्यादिश्रुतेः। विज्ञानात्मैव महत्तत्त्वम्। तमोनुदः प्रलयगताज्ञानध्वंसकर्त्ता ॥३॥५॥ श्रीमैत्रेयः ॥५८॥

ज्ञानाद्यङ्गत्वेऽप्याह—

एको नारायणो देवः पूर्वसृष्टं स्वमायया। संहृत्य कालकलया कल्पान्त इदमीश्वरः॥ एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः। कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु॥ सत्त्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः। परावराणां परम आस्ते कैवल्यसंज्ञितः॥ केवलानुभवानन्दसन्दोहो निरुपाधिकः। केवलात्मानुभावेन स्वमायां त्रिगुणात्मिकाम्॥ संक्षोभयन् सृजत्यादौ तया सूत्रमरिन्दम। तामाहुस्त्रिगुणव्यक्तिं सृजन्तीं विश्वतोमुखम्॥ यस्मिन् प्रोतमिदं सर्वं येन संसरते पुमान्। यथोर्णनाभिर्हृदयादूर्णां सन्तत्य वक्त्रतः॥ तया विहृत्य भूयस्तां ग्रसत्येव महेश्वरः॥ ५९॥

कालः कला यस्यास्तया स्वाधीनया मायया। श्रुतिश्च, यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति तथा सतः पुरुषात् केशलोमानि तथाक्षरात् संभवतीह विश्वमिति ॥११॥९॥ श्रीदत्तात्रेयो यदुम् ॥५९॥

तदेवं सूक्ष्मचिदचिद्वस्तुरूपशुद्धजीवाव्यक्तशक्तेः परमात्मनः स्थूलचेतनाचेतनवस्तुरूपाण्याध्यात्मिकजीवादिपृथिव्यन्तानि जायन्त इत्युक्तम्। ततः केवलस्य परमात्मनो निमित्तत्वं शक्तिविशिष्टस्योपादानत्वमित्युभयरूपतामेव मन्यन्ते। प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुरोधादित्यादौ। तदेवं तस्य सदा शुद्धत्वमेव। तत्र शक्तेः शक्तिमदव्यतिरेकादनन्यत्वमुक्तम्। तथा सत्कार्य्यवादाङ्गीकारे स्वान्तःस्थितस्वधर्म्मविशेषाभिव्यक्तिलब्धविकाशेन कारणस्यैवांशेन कार्य्यत्वमित्येवं वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिश्रुतिसिद्धं कार्य्यस्य कारणादनन्यत्वं कारणस्य तु कार्य्यादन्यत्वमित्यायाति। तदेवं जगत्कारणशक्तिविशिष्टात् परमात्मनोऽनन्यदेवेदं जगतस्त्वसावन्य एवेत्याह।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवाः। तद्धि स्वयं वेद भवांस्तथापि वै प्रदेशमात्रं भवतः प्रदर्शितम् ॥ ६० ॥

इदं विश्वं भगवानिव भगवतोऽनन्यदित्यर्थः। तस्मादितरस्तटस्थाख्यो जीवश्च स इवेति पूर्ववत्। अतएव ऐतदात्म्यमिदं सर्वमिति सर्वं खल्विदं ब्रह्मेति श्रुतौ। यतो भगवतः। भवतो भवन्तं प्रति प्रदेशमात्रं किञ्चिन्मात्रं दर्शितमित्यर्थः ॥१॥५॥ श्रीनारदः श्रीव्यासम् ॥ ६० ॥

स्पष्टमेवाह—सोऽयं तेऽभिहितस्तात भगवान् विश्वभावनः। समासेन हरेर्नान्यदन्यस्मात् सदसच्च यत् ॥६१॥

सोऽयं समासेनैव संक्षेपेणाभिहितः। कथं तटस्थलक्षणेनैवेत्याह। सत् कार्य्यं स्थूलमशुद्धजीवजगदाख्यं चेतनाचेतनं वस्तु, असत् कारणं सूक्ष्मं शुद्धजीवप्रधानाख्यं चिदचिद्वस्तु च यत् तत् सर्वं हरेरन्यन्न भवति सूक्ष्मस्य तच्छक्तिरूपत्वात् स्थूलस्य तत्कार्य्यरूपत्वादितिभावः। इदमेव श्रीहंसदेवेनोक्तम्—अहमेव न मत्तोऽन्यदिति बुध्यध्वमञ्जसेति। जगतस्तदनन्यत्वेऽपि शुद्धस्य तस्य तद्दोषसाङ्कर्य्यं नास्तीत्याह अन्यस्मादिति ॥२॥७॥ श्रीब्रह्मा श्रीनारदम् ॥ ६१ ॥

तत्रानन्यत्वे युक्तिं विवृणोति पञ्चभिः।

आदावन्ते जनानां सद्बहिरन्तः परावरम्। ज्ञानं ज्ञेयं वचो वाच्यं तमो ज्योतिश्च यत् स्वयम् ॥६२॥

जनानां देहादीनामादौ कारणत्वेन अन्ते चावधित्वेन यत् परमात्मलक्षणं सर्वकारणं वस्तु, सद्वर्त्तमानं तदेव स्वयं वहिर्भोग्यं अन्तर्भोक्तृ परमवरञ्चोच्चनीचं तमोऽप्रकाशः ज्योतिः प्रकाशश्च स्फुरति नान्यत्। अन्यस्य तद्विना स्वतः स्फुरणानिरूप्यत्वादितिभावः। ननु कथं तर्हि तस्मादत्यन्तपृथगिवार्थजातं प्रतीयते तत्राह—

आवाधितोऽपि ह्याभासो यथा वस्तुतया स्मृतः। दुर्घटत्वादैन्द्रियकं तद्वदर्थविकल्पितम् ॥६३॥

आवाधितस्तर्कविरोधेन सर्वतो वाधितः स्वातन्त्र्यसत्तायाः सका-

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi
CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ग्नानिरस्तोऽपि यथा आभासः सूर्य्यादिप्रतिरश्मिर्वालादिभिः पृथक् प्रकाशमानतादर्शनाद्वस्तु तया स्वतन्त्रपदार्थतया स्मृतः .कल्पितः तद्वदैन्द्रियकं सर्वं मूढ़ैः स्वतन्त्रार्थत्वेन विविधं कल्पितं तत्तु न तत्त्वदृष्ट्या स्वातन्त्र्यनिरूपणस्य दुर्घटत्वादित्यर्थः। तदेवाह द्वाभ्याम्—

क्षित्यादीनामिहार्थानां छाया न कतमापि हि। न सङ्घातो विकारोऽपि न पृथङ् नान्वितो मृषा ॥ ६४ ॥

क्षित्यादीनां पञ्चभूतानां छाया ऐक्यबुद्ध्यालम्बनरूपं देहादिसंघातारम्भपरिणामानां मध्ये कतमाप्यन्यतमापि न भवति। न तावत्तेषां सङ्घातो वृक्षाणामिव वनम् एकदेशाकर्षणे सर्वाकर्षणानुपपत्तेः। न ह्येकस्मिन् वृक्ष आकृष्टे सर्वं वनमाकृष्यते। न च विकारः आरब्धोऽवयवी। अपिशब्दात् परिणामोऽपि। कुतः। स किमवयवेभ्यः पृथगारभ्यते परिणमते च तदन्वितो वा। न तावदत्यन्तं पृथक् तथा अप्रतीतेः। न चान्वितः। स किं प्रत्यवयवमन्वेति अंशेन वा। आद्ये अङ्गुलिमात्रेऽपि देहबुद्धिः स्यात्। द्वितीये तस्याप्यंशाङ्गीकारे सत्यनवस्थापातः स्यात्। अतो देहादेः स्वातन्त्र्येणावस्थितिर्मृषैवेति। एवं देहादेः स्वातन्त्र्येणानिरूप्यत्वमुक्त्वा तद्धेतूनां क्षित्यादीनामपि तथैवानिरूप्यत्वमाह।

धातवोऽवयवित्वाच्च तन्मात्रावयवैर्विना। न स्युर्ह्यसत्यवयविन्यसन्नवयवोऽन्ततः ॥६५॥

धारयन्तीति धातवो महाभूतानि तन्मात्रैः सूक्ष्मैरवयवैर्विना न स्युः। अवयवित्वात्तेषामपि। तर्ह्यवयव एव स्वतन्त्र इति चेत्तत्राह उक्तप्रकारेणावयविनि निरूपयितुमसति अवयवोऽप्यन्ततो निरूपयितुमसन्निव स्यात्। अवयविप्रतीत्यन्यथानुपपत्तिं विना परमाणुलक्षणावयवसद्भावे प्रमाणाभावादित्यर्थः। तदुक्तं पञ्चमे—एवं निरुक्तं क्षितिशब्दवृत्तमित्यादि। तस्मादैक्यबुद्ध्यालम्बनरूपं यत् प्रतीयते तत् सर्वत्र परमात्मलक्षणं सर्वकारणं वस्त्वेवेति साधूक्तमादावन्ते जनानां सदित्यादिना। एवमेव तृतीयेऽप्युक्तम्—इति तासां स्वप्र-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्तीनां सतीनामसमेत्य सः। प्रसुप्तलोकतन्त्राणां निशाम्य गतिमीश्वरः॥ कालसंज्ञां ततो देवीं बिभ्रच्छक्तिमुरुक्रमः। त्रयोविंशतितत्त्वानां गणं युगपदाविशत्॥ सोऽनुप्रविष्टो भगवांश्चेष्टारूपेण तं गणम्। भिन्नं संयोजयामास सुप्तं कर्म्म प्रबोधयन्निति। अतएव यस्य पृथिवी शरीरमित्यादिश्रुतौ सर्वस्य परमात्मशरीरत्वेन प्रसिद्धिः परमात्मनस्तु शरीरित्वेन। तदेवमवयवरूपेण प्रधानपरिणामः सर्वत्रावयवी तु परमात्मवस्त्वेवेति सिद्धम्। ततोऽप्यमिथ्यात्वमेव जगत उपपद्येत।

ननु यदि परमात्मवस्त्वेव सर्वत्रावयवी देहः स्यात्ततश्च तत्रैव ब्राह्मणत्वादिसंज्ञाप्राप्तेर्गुणदोषहेतू विधिनिषेधावपि स्यातां, तौ च न सम्भवतः, तस्मादन्य एवावयवी युज्यते, इत्याशङ्क्याह—

स्यात् सादृश्यभ्रमस्तावद्विकल्पे सति वस्तुनः। जाग्रत्स्वापौ यथा स्वप्ने तथा विधिनिषेधता॥ ६६॥

वस्तुनः परमात्मनो विकल्पे संशये सतीति तस्य तादृशत्वेन निर्णयो यावन्न स्यात् इत्यर्थः, तावदेव तस्मात् सर्वैक्यबुद्धिनिदानात् पृथग्देहैक्यबुद्धिः सादृश्यभ्रमः स्यात्, पूर्वापरावयवानुसन्धाने सति परस्परमासज्यैकत्र स्थितत्वेनावयवत्वसाधारण्येन चैक्यसादृश्यात् प्रत्यवयवमेकतया प्रतीतिः, सोऽयं देह इति भ्रम एव भवतीत्यर्थः, प्रतिवृक्षं तदिदं वनमितिवत्। यथोक्तं स्वयं भगवता—सोऽयं दीपोऽर्चिषां यद्वत् स्रोतसां तदिदं जलम्। सोऽयं पुमानिति नृणां मृषा धीर्गीर्मृषायुषामिति। ततश्च तत्रैव ब्राह्मणत्वाद्यभिमाने सति स्वप्नविषयकौ जाग्रत्स्वप्नाविव तद्विषयकौ विधिनिषेधौ स्यातामित्याह जाग्रदिति। तथा तेन प्रकारेण विधेर्विधिता निषेधस्य निषेधतेत्यर्थः। एवं, परस्वभावकर्म्माणि न प्रशंसेन्न गर्हयेत्। विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण चेत्यादिरेकादशाष्टाविंशतितमाध्यायो ज्ञेयः। तत्र च किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियदित्यादिकं स्यात् सादृश्यभ्रमस्तावदित्याद्यनुसारेणैव व्याख्येयम्। अवस्तु यद्द्वैतं तस्येत्यर्थः। तस्मात्



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्वातन्त्र्येण निरूपणासहतया परमात्मनोऽनन्यदेव सर्वमिति प्रकरणार्थः ॥ ७ ॥ १५ ॥ श्रीनारदः श्रीयुधिष्ठिरम् ॥ ६६ ॥

अत आह—त्वं वायुरग्निरवनिर्वियदम्बु मात्राः प्राणेन्द्रियाणि हृदयं चिदनुग्रहश्च। सर्वं त्वमेव सगुणो विगुणश्च भूमन् नान्यत्त्वदस्त्यपि मनोवचसो निरुक्तम् ॥ ६७ ॥

हृदयमन्तरिन्द्रियं, मनो बुद्ध्यहङ्कारचित्तात्मकं, चित् शुद्धो जीवः, अनुग्रहः स्वसम्मुखीकरणशक्तिः, किं बहुना सगुणो मायिको विगुणश्चामायिकः सर्वार्थस्त्वमेवेति ॥ ७ ॥ ९ ॥ श्रीप्रह्लादः श्रीनृसिंहम् ॥ ६७ ॥

अथ तस्य मायाशक्तिकार्य्य-माया-जीवेभ्योऽन्यत्वञ्च स्पष्टयति।

यथोल्मुकाद्विस्फुलिङ्गाद्धूमाद्वापि स्वसम्भवात्। अप्यात्मत्वेनाभिमताद् यथाग्निः पृथगुल्मुकात्। भूतेन्द्रियान्तःकरणात् प्रधानाज्जीवसंज्ञितात्। आत्मा तथा पृथग्द्रष्टा भगवान् ब्रह्मसंज्ञितः ॥ ६८ ॥

अयमर्थः। स्वसम्भवात् स्वोपादानकारणात् उल्मुकात् काष्ठमुख्योपाधिकात् अग्नेर्हेतोर्यो विस्फुलिङ्गो यश्च धूमस्तस्मात्तस्माद् यथा तत्तदुपादानमग्निः पृथग् यथा च तस्मादुल्मुकात्तदुपादानमसावग्निः पृथक्, कीदृशादपि तत्त्रयादप्यात्मत्वेनाभिमतात् तापकतया धूमेऽप्यंशसद्भावेनाग्निस्वरूपतया प्रतीतादपि तथा विस्फुलिङ्गस्थानीयाज्जीवसंज्ञिताज्जीवात् उल्मुकस्थानीयात् प्रधानात् प्रधानोपाधिकभगवत्तेजसः धूमस्थानीयाद्भूतादेः सर्वोपादानरूपो भगवान् पृथक्, स एवात्मा स्वांशेन तत्तदन्तर्यामितया परमात्मा, क्वचिदधिकारिणि निर्विशेषचिन्मात्रतया स्फुरन् ब्रह्मसंज्ञितश्च, यत एव द्रष्टा, तेषामादिमध्यान्तावस्थासाक्षीति ॥ ३ ॥ २८ ॥ श्रीकपिलदेवः ॥ ६८ ॥

तत्र येषां मनः परमात्मनि नास्ति ते परमात्मात्मके जगत्यसदंशमेव गृह्णन्ति, ये तु परमात्मविदस्ते सदंशमेव गृह्णन्तीत्याह—

सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात् सदभिमृशन्त्यशेष

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मिदमात्मतयात्मविदः । न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्मतयावसितम् ॥ ६८ ॥

त्वय्यसदवर्त्तमानं यद्यनस्तत् खलु त्रिवृत् त्रिगुणकार्य्यं जगति वर्त्तमानं सत्त्वयि सदिव वर्त्तमानमिव विभाति, दर्व्वीसूपरसन्यायेन स्वावगाढ़े जगति सतोऽपि परमात्मनो ग्रहणाभावात् न तु वर्त्तमानमेव विभातीत्यर्थः । अतएवासदंशस्य त्रिगुणमायामयत्वं मनोमयत्वञ्चोक्तम्—यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः । नश्वरं गृह्यमाणञ्च विद्धि मायामनोमयमिति ॥ ये त्वात्मविदस्त्वद्वेत्तारस्ते आमनुजात् सोपाधिकजीवस्वरूपमभिव्याप्य इदमशेषं जगदेव आत्मतया त्वद्रूपतया सदभिमृशन्ति, तेषां सदंश एव दृष्टिर्नान्यत्रेत्यर्थः । तत्र दृष्टान्तः—न हि विकृतिमिति । तेषां कनकमात्रं मृगयमानानां कनकवणिजां हि कनकविकारे सुन्दरकुरूपाकारतायां दृष्टिर्नास्ति, शुद्धकनकमात्रग्राहित्वात्, तथात्मविदामपीति भावः । दार्ष्टान्तिकेऽपि तदात्मत्वे हेतुत्रयमाहुः—इदं जगत् स्वेन सच्छक्तिविशिष्टेन सता उपादानरूपेण त्वया कृतं पश्चात् सिद्धेऽपि कार्य्ये कारणांशाव्यभिचारितयान्तर्यामितया च स्वेन त्वया प्रविष्टं पुनः प्रलयेऽप्यात्मतया सच्छक्तिविशिष्टसद्रूपतयैवावसितं चेति । एवं दृष्टान्तेऽपि विवेचनीयम् । तदेतत् सर्व्वमभिप्रेत्योक्तं वैष्णवे—ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥ ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् । ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वरेति ॥१०॥८७॥ श्रुतयः ॥ ६८ ॥

तदेवं परिणामादिकं साधितं, विवर्त्तश्च परिहृतः । ततो विवर्त्तवादिनामिव रज्जुसर्पवन्न मिथ्यात्वं किन्तु घटवन्नश्वरत्वमेव तस्य । ततो मिथ्यात्वाभावेऽपि त्रिकालव्यभिचाराभावाज्जगतो न सत्त्वं विवर्त्तपरिणामादिद्वित्वेन तद्दोषद्वयाभाववत्येव हि वस्तुनि सत्त्वं विधीयते । यथा परमात्मनि तच्छक्तौ वा । सदेव सौम्येदमग्र आसीदित्यादौ इदं-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

शब्दोक्तं जगत्, सूक्ष्मावस्थालक्षणतच्छक्तिब्रह्मणोर्मिथस्तादात्म्या-पन्नयोः सच्छन्दवाचनात्। अतः सत्कार्य्यवादश्च सूक्ष्मावस्थामवलम्ब्यैव प्रवर्त्तते। तदेवं स्थितेऽपि पुनराशङ्कते। ननु सदुपादानं जगत् कार्य्यं तद्वदनश्वरतामपि भजन्न खलु सत् स्यात्, यदि च नश्वरं स्यात्, तर्हि कथं शुक्तिरजतवद् व्यभिचारित्वेन केवलविवर्त्तान्तःपाति न स्यात्, तदेतत् प्रश्नमुट्टङ्क्य परिहरन्ति।

सत इदमुत्थितं सदिति चेन्ननु तर्कहतं व्यभिचरति क्व च क्व च मृषा न तथोभययुक्। व्यवहृतये विकल्प इषितोऽन्धपरम्परया भ्रमयति भारती त उरुवृत्तिभिरुक्थजड़ान् ॥ ७० ॥

इदं विश्वं धर्मि, सदिति साध्यो धर्म्मः, सत उत्पन्नत्वात्, यद् यत उत्पन्नं तत् खलु तदात्मकमेव दृष्टं, यथा कनकादुत्पन्नं कुण्डलादिकं तदात्मकं, तद्वत्। अतोऽत्थितमेव न तु शुक्तौ रजतमिव तत्रारोपित-मिति सिद्धान्तिनः स्वमतमनूदितं नैवेत्याहुः। ननु तर्कहतमिति। अपादाननिर्द्देशेन भेदप्रतीतेर्विरुद्धहेतुत्वात्, ननु नाभेदं साधयामः किन्तु तत उत्पन्नत्वेन कुण्डलादिवन्नेदमनूद्य प्रतिषेधामः। तत्र भेद एव स्यादित्याशङ्क्यानैकान्तिकत्वेन हेतुं दूषयति। व्यभिचरति क्व चेति। क्व च कुत्रापि कारणधर्म्मानुगतिर्व्यभिचरति, कार्य्यं कारण-धर्म्मस्य सर्वांशेनानुगतं भवतीति नियमो न विद्यत इत्यर्थः। दहनाद्युद्भवे प्रभादौ दाहकत्वादिधर्म्मादर्शनादिति भावः। द्वे रूपे ब्रह्मण-स्तस्य मूर्त्तञ्चामूर्त्तमेव च। क्षराक्षरस्वरूपे ते सर्वभूतेष्ववस्थिते। अक्षरं तत् परं ब्रह्म क्षरं सर्वमिदं जगदित्याद्यनन्तरम्, एकदेशस्थित-स्याग्नेर्ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगदित्येतदेवं व्याख्यातं श्रीस्वामिभिरेव, श्रीविष्णुपुराणे,—नन्व-क्षरस्य परब्रह्मणस्तद्विलक्षणं क्षररूपं कथं स्यादित्याशङ्क्य दृष्टान्ते-नोपपादयति एकदेशेति। प्रादेशिकस्याग्नेर्दीपादेर्दाहकस्यापि तद्वि-लक्षणा ज्योत्स्ना प्रभा यथा तत्प्रकाशविस्तारस्तथा ब्रह्मणः शक्ति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कृतविस्तार इदमखिलं जगदिति । प्रकृतमनुसरामः । ननु तर्हि व्यभिचारित्वे शुक्तिरजतवदेवास्तु, तत्राहुः—क्व च मृषेति । क्व च शुक्त्यादावेव प्रातीतिकमात्रसत्ताकं रजतादिकं मृषा । अन्यत्र यत्र उभयं प्रतीतिमर्थक्रियाकारित्वञ्च युनक्ति भजते तत्र न तथा मृषेति । ननु कूटताम्रिकादिष्वर्थक्रियाकारितापि दृश्यते इत्याशङ्क्याहुः—व्यवहृतय इति । क्रयविक्रयादिलक्षणव्यवहारायैव विकल्पो भ्रम इष्टः । न तु तत्तत्प्रसिद्धसम्यगर्थक्रियाकारितायै । तद्दानादौ यथावत् पुण्यफलादिकं न भवतीति । तथा शुण्ठीतया प्रख्यापितं विषग्रन्थ्यादिकं क्रीत्वा शुण्ठीज्ञानेन भक्षितमपि नारोग्यजनकं प्रत्युत मारकमेव इति । तस्मात्तत्तत्प्रसिद्धसम्यगर्थक्रियाकारितयैव सत्यत्वमङ्गीक्रियते । एकाङ्गेन सा कूटसर्पादौ भयादिरूपा त्वस्त्येवेति न तद्धेतुः, किन्त्वन्धपरम्परयेति । स च क्रयविक्रयादिलक्षणव्यवहारोऽपि न तु यथार्थताम्रिकस्येव तद्व्यवहारकुशलेष्वपि, किन्त्वन्धपरम्परयैव । अतस्तत्र तदीयकुशलेष्वसिद्धत्वेन व्यवहारस्याभ्यासमात्रत्वात्तस्मादन्यथा नानुमेयम् । धूमाभासे हि वह्निव्यभिचारस्यौचित्यमेवेति भावः । तदेवमर्थक्रियाकारित्वेनास्त्येवेतरस्य भ्रमवस्तुवैलक्षण्यात् सत्यत्वमिति विवर्त्तवादिनि निरस्ते पुनरनश्वरवादी प्रत्युत्तिष्ठते । नन्वपाम सोमममृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीति श्रुत्यैव कर्म्मफलस्य नित्यत्वप्रतिपादनान्नश्वरत्वं न घटते इत्याशङ्क्याहुः, भ्रमयतीति । हे भगवन् ! ते तव भारती उक्थवृत्तिभिः वह्नीभिर्गौणलक्षणादिभिर्वृत्तिभिः उक्थजड़ान्, उक्थानि यज्ञे शस्यन्ते तत्र जड़ाः कर्म्मश्रद्धाभराक्रान्तमन्दमतय इत्यर्थः, तान्, भ्रमयति । अयं भावः, न हि वेदः कर्म्मफलं नित्यमभिप्रैति, किन्तु लक्षणया प्राशस्त्यमात्रम्, अन्येषां वाक्यानां विध्येकवाक्यत्वेन विधावेव तात्पर्य्यात्, अन्यथा वाक्यभेदप्रसङ्गः, तद्यथा इह कर्म्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयत इति न्यायोपबृंहितश्रुत्यन्तरविरोधश्च । अतः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कर्म्मजड़ानामिदं भ्रममात्रं जगत्तु सत्यमपि परिणामधर्म्मत्वेन नश्वरमेवेति। तदुक्तं भट्टेनैव—अथर्वेतिहासपुराणप्रामाण्यात् सृष्टिप्रलयावपीष्येते इति। अथवा नाभेदं साधयाम इत्यादिकमाशङ्क्य प्रसिद्धस्य सत्तात्रयस्य मिथो वैलक्षण्यात् परिहरति, क्व च घटादौ अर्थक्रियाकारिण्यपि व्यभिचरति सत्तेति शेषः। वस्त्वन्तरस्यार्थक्रियाकारितायामसामर्थ्यात् देशान्तरे स्वयमविद्यमानत्वात् कालान्तरे तिरोभावित्वाच्च। क्व च शुक्तिरजतादौ तत्रापि तदानीमपि मृषा अर्थक्रियाकारित्वाभावात्। या तूभययुक् उभयत्र घटादिसत्तायां शुक्तिरजतादिसत्तायाञ्च युग् योगो यस्याः। यया सा सत्ता लब्धपदा भवतीत्यर्थः। सा परमकारणसत्ता न तथा किन्तु सर्वत्रापि सर्वदापि तत्तदुपाध्यनुरूपसर्वार्थक्रियाद्यधिष्ठानरूपेत्यर्थः। तस्मादर्थक्रियाकारित्वेन सत्यमपि परिणतत्वेन घटवन्नश्वरमेव जगत् न प्रतीतमात्रसत्ताकं न चानश्वरसत्ताकमिति परस्परवैलक्षण्यदर्शनात् कथमेकमन्यन्नवितुमर्हतीति भावः। कूटतान्त्रिकत्वमाशङ्क्याहुः, व्यवहृतय इति। विकल्प्यते अन्यत्रारोप्यते इति विकल्पः स्वतः सिद्धस्तान्त्रिकादिरर्थः, स एव व्यवहृतये इषितः। अयमर्थः। अत्र कूटतान्त्रिकेण यं व्यवहारं मन्यसे सोऽपि न तेन सिद्ध्यति, किन्तर्हि सत्यतान्त्रिकेणैव, अर्थान्तरं व्यवहर्त्तुं हृदि तस्यैव प्रत्यक्षत्वात्, कूटतान्त्रिकमत्रोपलक्षणमेव, क्वचित्तं विनापि तव गृहे तान्त्रिको दत्त इति पश्चाद्दातव्य इति वा छलप्रयोगे स्मर्य्यमाणेनापि तेन तथा व्यवहारसिद्धेः। तस्माद्व्यवहाररूपाप्यर्थक्रियाकारिता तस्यैव भवतीति स सत्य एव। अन्यथा सत्यस्य तान्त्रिकस्याभावे शतमप्यन्धानां न पश्यतीति न्यायेन कूटतान्त्रिकपरम्परयापि व्यवहारोऽपि न सिद्ध्येदित्याहुः। अन्धपरम्परयेति। अन्धपरम्परादोषात् स एव व्यवहृतय इषित इत्यन्वयः। यथान्धपरम्परया व्यवहारो न सिद्ध्येत् तथा कूटतान्त्रिकपरम्परयापीत्यर्थः। इत्थमेव विज्ञानवादोऽपि निराकृतः, शङ्करशारीरकेऽपि, अनादित्वेऽप्यर्थं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

परम्परान्यायेनाप्रतिष्ठैवानवस्था व्यवहारविलोपिनी स्यात् नाभिप्राय-सिद्धिरित्युक्ता। एतदुक्तं भवति—यथेदं सुवर्णं केन क्रीतमिति प्रश्ने कश्चिदाह अनेनान्धेनेति, अनेन कथं परिचितमिति पुनराह तेनान्धेन परिचायितं, तेन च कथमित्याह केनाप्यपरेणान्धेनेत्यन्धपरम्परयापि न सिद्ध्येद्व्यवहारः, किन्तु तत्रान्धपरम्परायां यद्येकोऽपि चक्षुष्मान् सर्वादिप्रवर्त्तको भवति तदैव सिद्ध्यति, यथा च तत्र सर्वेष्वपि चक्षुष्मत एव व्यवहारसाधकत्वं, तथा कस्मिंश्चित्तात्त्विके प्रथमं सत्ये सत्येव व्यवहारः सिद्ध्यति, तत्र च सत्यस्यैव व्यवहारसाधकत्वं, तदनुसन्धानेनैव तत्र प्रवृत्तेश्चक्षुष्मत इव प्रवर्त्तकत्वात्ततश्च न तात्त्विकः सत्य इति स्थिते, यत्र तद्व्यवहारकुशलैः परीक्षया सत्यतावगम्यते स एव कूटतात्त्विकेऽप्यारोप्यमाणः सत्यो भवेत्। तदेवमर्थक्रियाकारित्वेन तस्य सत्यत्वे तदुपलक्षितं विश्वमेव भ्रमवस्तुविलक्षणं सत्यमिति सिद्धम्। परमात्मन एवावयवित्वव्यवहारसाधितत्वाद् युक्तमेव तत्। तथा च ब्रह्मादिभिस्तुतम्—सत्यस्य योनिमिति। तत् सत्यमित्याचक्षत इति श्रुतिश्च। शिष्टमन्यत् समानम्। एवं जगतः सत्यत्वमङ्गीकृतं, तच्च नश्वरमिति। तत्र नश्वरत्वं नात्यन्तिकं किन्त्वव्यक्ततया स्थितेरदृश्यतामात्रमेव, सत्कार्य्यतासंप्रतिपत्तेः, यद्भूतं भवच्च भविष्यच्चेत्यादिश्रुतेः। अतएव शुक्तित्वे रजतत्वमिव तस्याव्यक्तरूपत्वे जगत्त्वमसन्न भवति पटवच्चेति नायेन जगदेव हि सूक्ष्मतापन्नमव्यक्तमिति दृश्यत्वेन भ्रान्तिरजतकक्षमपि जगत्तद्विलक्षणसत्ताकं तथात्मवदपरिणतत्वाभावेन नैकावस्थसत्ताकमित्येवमर्थसिद्धये तदनन्तरमेवाहुः।

न यदिदमग्र आस न भविष्यदतो निधनादनुमितमन्तरा त्वयि विभाति मृषैकरसे। अत उपमीयते द्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयन्त्यबुधाः॥ ७१॥

यद् यदि इदं विश्वम् अग्रे सृष्टेः पूर्वं नास नासीत्तदा न भविष्यन्नाभविष्यदेव अड़ागमाभाव आर्षः आकाशे कुसुममिवेति। श्रुतय-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्वासीदेवेति वदन्ति—सदेव सौम्येदमग्र आसीत् आत्मा वा इदमग्र-आसीदित्याद्याः। तदेवं सूक्ष्मतया त्वत्तादात्म्येन स्थितं कारणा-वस्थमिदं जगत् विस्तृततया कार्य्यावस्थं भवति। अतो यन्निधना-न्नाममात्राज्जन्तोः शुक्तौ रजतमिव त्वयि तदिदमन्तरा सृष्टिमध्य एव न त्वग्रे चान्ते च विभातीत्यनुमितं तन्मृषेति प्रमाणसिद्धं न भवतीत्यर्थः। तत्र हेतुमाहुरेकरसे इति। अनुभवान्तराविषयानन्दस्वाद इति, यस्मिन्ननुभूते सति विषयान्तरस्फूर्त्तिर्न सम्भवति, तस्मिंस्त्वयि शुक्त्यादिनिकृष्टवस्तुनीव विषयारोपः कथं स्यादित्यर्थः। दधति सञ्चरणस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरा-वसथानित्यस्माकमिवोक्तेः। अतोऽचिन्त्यशक्त्या स्वरूपादच्युतस्यैव तव परिणामस्वीकारेण द्रविणजातीनां द्रव्यमात्राणां मृल्लोहादीनां विकल्पा भेदा घटकुण्डलादयस्तेषां पन्थानो मार्गाः प्रकारास्तैरेवास्माभिरुप-मीयते न तु कुत्रापि भ्रमरजतादिभिः। यस्मादेवं तस्माद्वितथा मनोविलासा य एतादृशमेव ऋतं तद्रूपं ब्रह्मैवेदं जगदित्यबुधा एवा-वयन्ति मन्यन्ते। तस्य तदधिष्ठानत्वासम्भवादिति भावः। ऋतशब्द-प्रयोगस्त्वत्र मिथ्यासम्बन्धराहित्यव्यञ्जनार्थमेव कृत इति ज्ञेयम्। अत्र सत्कार्य्यवादिनामयमभिप्रायः। मृत्पिण्डादिकारकैर्यो घट उत्पद्यते स सन्न सन् वा। आद्ये पिष्टपेषणम्। द्वितीये क्रियाया कारकैश्च तत्-सम्बन्धस्य खपुष्पधारणवदसम्भवात्तेन च तेषामन्यथात्वात् कथं तत्-सिद्धिरिति दिक्। तस्मान्न प्रकटमेव सन्न चात्यन्तमसन् किन्त्वव्यक्त-तया मृत्पिण्डे एव स्थितोऽसौ यथा कारकतन्निष्पन्नक्रियायोगेन व्यज्यते, तथा परमकारणे त्वयि स्थितं विश्वं त्वत्स्वाभाविकशक्ति-तन्निष्पन्नक्रियायोगेनेति। अत्र स्ववेदान्तित्वप्रख्यापकानामप्यन्यथामननं वेदान्तविरुद्धमेव। मन एव भूतकार्य्यम् इति हि तत्र प्रसिद्धं युक्ति-विरुद्धञ्च। मनोऽहङ्कारादीनां मनःकल्पितत्वासम्भवात्। तथा हि सति वेदविरुद्धोऽनीश्वरवादश्च प्रसज्येत। स च निन्दितः पाद्मे—स्तुतयः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्मृतयश्चैव युक्तयश्चेश्वरं परम्। वदन्ति तद्विरुद्धं यो वदेत्तस्मान्न चाधम इति॥ असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्। अपरस्पर-सम्भूतं किमन्यत् कामहैतुकम्॥ इति श्रीगीतोपनिषदनीश्वरवादिन एवं व्याचष्टे। असत्यं मिथ्याभूतं सत्यासत्याभ्यामनिर्वचनीयत्वेना-प्रतिष्ठं निर्देशशून्यं स्थाणौ पुरुषत्ववत् ब्रह्मणीश्वरत्वस्याज्ञानमात्र-कल्पितत्वादीश्वराभिमानी तत्र कश्चिन्नास्तीत्यनीश्वरमेव जगत् अपरस्परसम्भूतमनाद्यज्ञानपरम्परासम्भूतम् अपरस्पराः क्रियासातत्ये अतः कामहैतुकं मनःसंकल्पमात्रजातं स्वप्नवदित्यर्थः। अत्र प्रवृत्तिञ्चेत्यादिना तेषां संस्कारदोष उक्तः एतां दृष्टिमित्यादिना तु गतिश्च निन्दिष्यते इति ज्ञेयम्। एभिरेव ब्रह्मण ऐश्वर्य्योपाधिर्मायापि जीवा-ज्ञानकल्पिता तयैव जगत्सृष्टिरिति मतम्। यदुक्तं तदीयभाष्ये तदनन्यत्वमित्यादिसूत्रे—सर्वज्ञेश्वरस्यात्मभूते इवाविद्याकल्पिते नाम-रूपे तत्त्वातत्त्वाभ्यामनिर्वचनीये संसारप्रपञ्चबीजभूते सर्वज्ञेश्वरस्य मायाशक्तिः प्रकृतिरिति श्रुतिस्मृत्योरभिलप्येते इति। किन्त्वत्र विद्याविद्ये मम तनू इत्यादिश्रीभगवद्वाक्येन तु विरुद्धमिति। अतो मायावादतया चायं वादः ख्यायते। तदेवञ्च पाद्मोत्तरखण्डे देवीं प्रति पाषण्डशास्त्रं गणयता श्रीमहादेवेनोक्तम्—मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते। मयैव कथितं देवि! कलौ ब्राह्मणरूपिणा। वेदान्ते तु महाशास्त्रे मायावादमवैदिकम्। मयैव वक्ष्यते देवि! जगतां नाशकारिणादिति। तच्चासुराणां मोहनार्थं भगवत एवाज्ञ-येति तत्रैवोक्तमस्ति। तथा च पाद्म एवान्यत्र शैवे च—द्वापरादौ युगे भूत्वा कलया मानुषादिषु। स्वागमैः कल्पितैस्त्वञ्च जनान् मद्वि-मुखान् कुरु॥ इति श्रीभगवद्वाक्यमिति दिक्। अतएवोक्तं श्रीनृसिंह-पुराणे यमवाक्यम्—विषधर-कणभक्ष-शङ्करोक्तीर्दशबल-पञ्चशिखाक्ष-पादवादान्। महदपि सुविचार्य्य लोकतत्त्वं भगवदुक्तिमृते न सिद्धिरस्तीति। सर्वेऽत्र वादग्रन्था एव निर्दिष्टा न तु मन्त्रग्रन्था इति



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नामाक्षरैव साक्षान्निर्दिष्टमिति च नान्यथा मननीयम् । अतो यत् क्वचित्तत्तत्प्रशंसा वा स्यात्तदपि नितान्तनास्तिकवादं निर्जित्यार्धनास्तिकवादः स्थापित इत्यपेक्षया ज्ञेयम् । तस्मात् स्वतन्त्र ईश्वर एव सर्वस्रष्टा न तु जीवः स्वाज्ञानेन स्वप्नस्यैवेत्यायातम् । तदुक्तं श्रीबादरायणेनापि बहुत्व, संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत् कुर्वत उपदेशादित्यादिषु । अतस्तस्मनोऽसृजत मनः प्रजापतिमित्यादौ मनःशब्देन समष्टिमनोऽधिष्ठाता श्रीमाननिरुद्ध एव । बहु स्यां प्रजायेयेति तत्सङ्कल्प एव वा वाच्यः । सत्यस्वाभाविकाचिन्त्यशक्तिः परमेश्वरस्तुच्छमायिकमपि न कुर्य्यात् चिन्तामणीनामधिपतिः स्वयं चिन्तामणिरेव वा कूटकानकादिवत् । तथा च माध्वभाष्यप्रमाणिता श्रुतिः—अथैनमाहुः सत्यकर्मेति सत्यं ह्येवेदं विश्वमसृजतेति । एवञ्च—सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितञ्च सत्ये । सत्यस्य सत्यमृतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः ॥ इत्यत्र सत्यसङ्कल्पत्वं सत्यपरायणत्वं सृष्ट्यादिकालत्रयेषु सत्यत्वं सत्यस्य विश्वस्य कारणत्वं सत्य एव विश्वस्मिन्नन्तर्यामितया स्थितत्वं सत्यस्य तस्य सत्यताहेतुत्वं सत्यवदनस्याव्यभिचारिदिष्टेश्च प्रवर्त्तकत्वं सत्यरूपत्वमित्येतेषामर्थानामाकूतं परिपाटी च संगच्छते । अन्यथा सत्यस्य योनिमित्यादौ त्वयि तन्नापि निहितस्य सत्य इत्यत्राकस्मादर्द्धजरतीयन्यायेन कष्टकल्पनामयार्थान्तरे तु भगवता स्वप्रतिश्रुतं सत्यव्रतं यत् तत्तदयुक्तमेवेत्यतो ब्रह्मादिभिस्तथा स्तवे स्वारस्यभङ्गः स्यात् प्रक्रमभङ्गश्च । तस्मात् सत्यमेव विश्वमिति स्थितम् ॥ १० ॥ ८७ ॥ स्तुतयः श्रीभगवन्तम् ॥ ७० ॥ ७१ ॥

तदेवं न यदिदमग्र आसीत्यनेन प्राकृतलयोऽपि सत्कार्य्यवादेऽनुमितः । आत्यन्तिके तु मोक्षलक्षणलये न पृथिव्यादीनां नाशः । जीवकृतेन तथा भावनामात्रेण स्वाभाविकपरमात्मशक्तिमयानां तेषां नाशासुक्तेः । लब्धमोक्षेषु श्रीपरीक्षितादिषु तद्देहस्थानामपि पृथिव्य

ध्वंशानां स्थितिः श्रवणात्तथा हिरण्यगर्भांशानां बुद्धादीनामपि भवि-
ष्यति। अतस्तेष्वध्यासपरित्याग एवात्यन्तिकलय इत्युच्यते। अतएव,
घटे भिन्ने घटाकाश आकाशः स्याद् यथा पुरा। एवं देहे मृते जीवो
ब्रह्म सम्पद्यते पुनरित्यत्र। तथा—एवं समीक्ष्य चात्मानमात्मन्याधाय
निष्कले। दशन्तं तक्षकं पादे लेलिहानं विषाननैः। न द्रक्ष्यसि शरीरं
त्वं विश्वञ्च पृथगात्मन इत्यत्राप्युपाधेः संयोग एव परित्यज्यते न तु
तस्य मिथ्यात्वं प्रतिपाद्यते। तथाहि बुद्धीन्द्रियेत्यादिप्रकरणम्। तत्र
तदाश्रयत्वतत्प्रकाश्यत्वतदव्यतिरिक्तत्वेभ्यो हेतुभ्यो बुद्धीन्द्रियादीनां
परमात्मस्वभावशक्तिमयत्वमाह।

बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम्। दृश्यत्वाव्यतिरेका-
भ्यामाद्यन्तवदवस्तु यत्॥ ७२॥

अन्तःकरण-वहिःकरण-विषयरूपेण परमात्मलक्षणं ज्ञानमेव भाति
तस्मादनन्यदेव बुद्धादिवस्त्वित्यर्थः। यतस्तदाश्रयं तेषामाश्रयरूपं तज्-
ज्ञानम्। क्लीवत्वमार्षम्। तथापि राजभृत्ययोरिवात्यन्तभेदः स्यात्। तत्र
हेत्वन्तरे आह। दृश्यत्वं तत्प्रकाश्यत्वम् अव्यतिरेकस्तद्व्यतिरेके
व्यतिरेकः ताभ्याम्। तस्मात्, एकदेशस्थितस्याग्ने र्ज्योत्स्ना विस्तारिणी
यथा इत्यादिवद्बुद्धादीनां तत्स्वाभाविकशक्तिमयत्वमेव सेत्स्यतीति
भावः। यत् खल्वाद्यन्तवत् शुक्त्यादौ कदाचिदेवारोपितं रजतं तत्
पुनरवस्तु तदाश्रयकत्व-तत्प्रकाशकत्व-तदव्यतिरेकाभावात् शुक्त्यादि-
वस्तु न भवति शुक्त्यादिभ्योऽनन्यन्न भवतीत्यर्थः। ततश्चैकविज्ञा-
नेन सर्वविज्ञानप्रतिज्ञा विरुद्धेतेति भावः। एवमसत्कार्य्यवादान्तरे-
ऽपि ज्ञेयम्। एकस्यापि वस्तुनोऽंशभेदेनाश्रयाश्रयित्वं स्वयमेव दृष्टा-
न्तेन स्पष्टयति—

दीपश्चक्षुश्च रूपञ्च ज्योतिषो न पृथग् भवेत्।
एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात्॥ ७३॥

दीपचक्षूरूपाणां महाभूतज्योतिरंशरूपत्वात् दीपादिकं न ततः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पृथक्। एवं धीप्रभृतीनि ऋतात् परमात्मनो न पृथक् स्युः। तथापि यथा महाभूतज्योतिर्दीपादिदोषेण न लिप्यते तथा बुद्ध्यादिदोषेण परमात्मापि तद्वदस्याप्यन्यतमत्वादित्याह अन्यतमादिति। तदेवं धीप्रभृतीनां परमात्मस्वाभाविकशक्तिमयत्वमुक्त्वा तथापि तेभ्यो बहिरङ्गशक्तिमयेभ्योऽन्तरङ्गशक्ति-तटस्थशक्तिविशिष्टपरमात्मनोऽन्यतमत्वेन तेषामशुद्धत्वव्यञ्जनया सदोषत्वमुक्त्वा तेषु धीवृत्तिषु तावच्छुद्धस्यैव जीवस्य सकारणमध्यासमाह—

बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति चोच्यते।
मायामात्रमिदं राजन्नानात्वं प्रत्यगात्मनि ॥ ७४ ॥

बुद्धिवृत्तिरूपं जागरणं स्वप्नः सुषुप्तिरितीदं प्रत्यगात्मनि शुद्धजीवे विश्वतैजसप्राज्ञत्वाख्यं नानात्वं मायामात्रं मायाकृताध्यासमात्रेण जातमित्यर्थः। ततः परमात्मनि बुद्ध्यादिमयस्य जगतः सतोऽपि सम्पर्कः सुतरां नास्तीत्यर्थं स्वाह—

यथा जलधरा व्योम्नि भवन्ति न भवन्ति च।
ब्रह्मणीदं तथा विश्वमवयव्युदयाप्ययात् ॥ ७५ ॥

यथा व्योम्नि व्योमकार्य-वायु-ज्योतिः-सलिल-पार्थिवांशधूमपरिणता जलधराः स्वेषामेवावयविनामुदयाद्भवन्ति दृश्यन्ते अप्ययान्न भवन्ति न दृश्यन्ते च ते च तन्न स्पृशन्तीति ज्ञेयम्। यथा ब्रह्मणीदं विश्वमिति योज्यम्। ततः सूक्ष्मरूपेण तस्य स्थितिरस्त्येव जगच्छक्तिविशिष्टकारणास्तित्वात्। इत्थमेवोक्तम्—सतोऽभिव्यञ्जकः काल इति। तदेवं वक्तुं कारणास्तित्वं दृष्टान्तेन प्रतिपादयति—

सत्यं ह्यवयवः प्रोक्तः सर्वावयविनामिह।
विनार्थेन प्रतीयेरन् पटस्यैवाङ्ग तन्तवः ॥ ७६ ॥

सर्वेषामवयविनां स्थूलवस्तूनामवयवः कारणं सत्यं सत्यो व्यभिचाररहितः प्रोक्तः। लोके तथा दर्शनादित्याह—विनेति। अर्थेन स्थूलरूपेण पटेनापि विना तस्मिन् कार्य्यास्तित्वमपि व्यतिरेकेण प्रतिपादयति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यत् सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः ॥ ७७ ॥

अयमर्थः । यद्येवमुच्यते, पूर्वं सूक्ष्माकारेणापि जगन्नासीत् किन्तु सामान्यं केवलं शुद्धं ब्रह्मैवासीत्तदेव शक्त्या निमित्तभूतया विशेषाकारेण जगद्रूपेण परिणतमिति, तदसत्, यतः यदेव सामान्यविशेषाभ्यामुपलभ्येत स भ्रमो विवर्त्तवाद एव, तत्र हि शुद्धं ब्रह्मैवाज्ञानरूपया शक्त्या जगत्तया विवृतमिति मतं, न चास्माकं तदभ्युपपत्तिः परिणामवादस्य सत्कार्य्यतापूर्वकत्वादित्यर्थः । नन्वपूर्वमेव कार्य्यमारभ्यविवर्त्तवादिनामिव युष्माकमपि जायतां तत्राह—

अन्योन्यापाश्रयात् सर्वमाद्यन्तवदवस्तु, यत् ॥ ७८ ॥

यदाद्यन्तवदपूर्वं कार्य्यं तत् पुनरवस्तु निरूपणासहमित्यर्थः । तत्र हेतुरन्योन्योपाश्रयात् । यावत् कार्य्यं न जायते तावत् कारणत्वं मृत्सुवर्णादेर्न सिध्यति कारणत्वासिद्धौ च कार्य्यं न जायत एवेति परस्परसापेक्षत्वदोषात् । ततः कारणत्वसिद्धये कार्य्यप्रतीतिस्तत्रावश्यमभ्युपगन्तव्या । सा च कार्य्यसूक्ष्मावस्थैवेति कार्य्यास्तित्वं सिध्यति । तथापि स्थूलरूपतापादकत्वान्मृदादेः कारणत्वमपि सिध्यतीति भावः । तदेवं स्वाभाविकशक्तिमयमेव परमात्मनो जगदित्युपसंहरति—

विकारः ख्यायमानोऽपि प्रत्यगात्मानमन्तरा ।
न निरूप्योऽस्त्यणुरपि स्याच्चेच्चित्सम आत्मवत् ॥ ७९ ॥

यद्यपि ख्यायमानः प्रकाशमान एव तथापि स्वल्पोऽपि विकारः प्रत्यगात्मानं परमात्मानं विना तद्व्यतिरेकेण स्वतन्त्रतया न निरूप्योऽस्ति । तदुक्तं तदनन्यत्वविवरण एव । यदि च तं विनापि स्यात्तदा चित्समः स्याच्चिद्रूपेण समः स्वप्रकाश एवाभविष्यत् । आत्मवत् परमात्मवन्नित्यैकावस्थश्चाभविष्यत् । ननु यदि परमात्मानं विना विकारो नास्ति तर्हि परमात्मनः सोपाधित्वे निरुपाधित्वं न सिध्यति । तस्मात् सोपाधेर्निरुपाधिरन्य एव किमित्यत्राह—

न हि सत्यस्य नानात्वमविद्वान् यदि मन्यते ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वा तयोरिव ॥ ८० ॥

सत्यस्य परमात्मनो नानात्वं न हि विद्यते। यदि तस्य नानात्वं मन्यते तर्ह्यविद्वान् यतस्तस्य निरुपाधित्वसोपाधित्वलक्षणं नानात्वं महाकाशघटाकाशयोर्यद्वत् तद्वद् गृहाङ्गनगतसर्वव्यापितेजसोरिव वाह्यशारीरवाय्वोरिव चेति। यस्माद् विकारः ख्यायमानोऽपि प्रत्यगात्मानमन्तरा। न निरूप्योऽस्त्यणुरपि तस्मात् सर्वशब्दवाच्योऽपि स एवेति सदृष्टान्तमाह—

यथा हिरण्यं बहुधा प्रतीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु।
एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः ॥ ८१ ॥

क्रियाभिस्तत्तद्रचनाभेदैर्बहुधा कटककुण्डलादिरूपेण यथा सुवर्णमेव वचोभिस्तत्तन्नामभिः प्रतीयते तथा लौकिकवैदिकैः सर्वैरेव वचोभिर्भगवानेव व्याख्यायते। तदुक्तम्—सर्वनामाभिधेयश्च सर्ववेदेड़ितश्च सः। इति स्कान्दे। तदेवं जगतः परमात्मस्वाभाविकशक्तिमयत्वमुक्त्वा तेन च जीवकर्तृकेण भ्रमेण तन्नाशनासामर्थ्यं व्यज्य मोक्षार्थं तदध्यासपरित्यागमुपदेष्टुं परमात्मशक्तिमयस्यापि तस्योपाध्यध्यासात्मकस्य जीवस्वरूपप्रकाशावरकत्वरूपं दोषं सदृष्टान्तमुपपादयति—

यथा घनोऽर्कप्रभवोऽर्कदर्शितो ह्यर्कांशभूतस्य च चक्षुषस्तमः।
एवन्त्वहं ब्रह्मगुणस्तदीक्षितो ब्रह्मांशकस्यात्मन आत्मबन्धनः ॥ ८२ ॥

अर्करश्मय एव मेघरूपेण परिणता वर्षन्ति। अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः। इति वचनात्। अयमर्थः। यथार्कप्रभवोऽर्केणैव दर्शितः प्रकाशितश्च घनो निविड़ो मेघः अर्कांशभूतस्य चक्षुषस्तमः दिवि भूमौ च महान्धकाररूपो भवति, एवमहं प्राकृताहंकारो ब्रह्मगुणः परमात्मशक्तिकार्य्यभूतः तदीक्षितस्तेनैव परमात्मना प्रकाशितश्च ब्रह्मांशकस्य तटस्थशक्तिरूपत्वात् परमात्मनो यो हीनांशस्तस्यात्मनो जीव-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्यात्मबन्धनः स्वरूपप्रकाशावरको भवति। स चाध्यासपरित्यागः स्वतो न भवति किन्तु परमात्मजिज्ञासया तत्प्रभावेनैवेति वक्तुं पूर्ववदेव दृष्टान्तपरिपाटीमाह—

घनो यदार्कप्रभवो विदीर्य्यते चक्षुः स्वरूपं रविमीक्षते तदा।
यदा ह्यहङ्कार उपाधिरात्मनो जिज्ञासया नश्यति तर्ह्यनुस्मरेत् ॥८३॥

घनो यदार्कप्रभवो विदीर्य्यते इति दृष्टान्तांशे तद्विदारणस्य न चक्षुःशक्तिसाध्यत्वं किन्तु सूर्य्यप्रभावसाध्यत्वमिति व्यक्तम्। अनेन दार्ष्टान्तिकेऽपि आत्मनः परमात्मनो जिज्ञासया जातेन तत्प्रसादेनाहङ्कारो नश्यति पलायते इत्यत्रांशे पुरुषज्ञानसाध्यत्वमहङ्कारनाशस्य खण्डितम्। अतो विवर्त्तवादो नाभ्युपगतः। अत्र चोपाधिरिति विशेषणेन स्वरूपभूताहङ्कारस्त्वन्य एवेति स्पष्टीभूतम्। एवं यथा दृष्टान्ते घनमयमहान्धकारावरणाभावात् तत्प्रभावेन योग्यतालाभाच्च चक्षुः कर्त्तृभूतं स्वरूपं कर्म्मभूतमीक्षते स्वस्वरूपप्रकाशमस्तित्वेन जानाति स्वशक्तिप्राकट्यं लभत इत्यर्थः। कदाचित्तदीक्षणोन्मुखः सन् रविञ्चेक्षते तथा दार्ष्टान्तिकोऽप्यनुस्मरेत् स्मर्त्तुरनुसन्धातुं योग्यो भवति, आत्मानञ्चेति शेषः।

निगमयति—यद्येवमेतेन विवेकहेतिना मायामयाहङ्करणात्मबन्धनं छित्वाच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यन्तिकमङ्ग संप्लवम् ॥ ८४ ॥

एतेन पूर्वोक्तविवेकशस्त्रेण। मायामयेति विशेषणं स्वरूपभूताहङ्कारस्य व्यवच्छेदार्थम्। अवतिष्ठते स्वस्वरूपेणावस्थितो भवति। न केवलमेतावदेव अच्युतात्मानुभवः अच्युतेऽच्युतनाम्न्यात्मनि परमात्मन्यनुभवो यस्य तथाभूत एव सन्नवतिष्ठते॥१२॥४॥ श्रीशुकः॥७२—८४॥

अत्रायमप्येकेषां पक्षः, परमेश्वरस्य शक्तिद्वयमस्ति स्वरूपाख्या मायाख्या चेति। पूर्वया स्वरूपवैभवप्रकाशनम् अपरया त्विन्द्रजालवत्तयैव मोहितेभ्यो जीवेभ्यो विश्वसृष्ट्यादिदर्शनम्। दृश्यते चैकस्य नानाविद्यावतः कस्यापि तथा व्यवहारः। न चैवमद्वैतवादिनामिवेद-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मापतितम्। सत्येनैव कर्त्रा सत्यमेव द्रष्टारं प्रति सत्ययैव तया शक्त्या वस्तुनः स्फोरणात् लोकेऽपि तथैव दृश्यत इति भवत्वपीदं नाम। यतः, सत्यं न सत्यं नः कृष्णपादाब्जामोदमन्तरा। जगत् सत्यमसत्यं वा कोऽयन्तस्मिन् दुराग्रहः। तदेतन्मते सत इदमुत्थितमित्यादिवाक्यानि प्रायो यथाटीकाव्याख्यानमेव ज्ञेयानि। क्वचित्तत्कृतानुमानादौ भेदमात्रस्यासत्त्वे प्रसक्ते वैकुण्ठादीनामपि तथात्वप्रसक्तिस्तन्मते स्यादित्यत्र तु तेषामयमभिप्रायः। वयं हि यल्लोकप्रत्यक्षादिसिद्धं वस्तु तदेव तत्सिद्धवस्त्वन्तरदृष्टान्तेन तद्धर्म्मकं साधयामः। यत्तु तदसिद्धं शास्त्रविद्वदनुभवैकगम्यताद्दृशत्वं तत् पुनस्तद्दृष्टान्तपराद्धींदिनाप्यन्यथाकर्त्तुं न शक्यत एवेति। तथा जीवेश्वराभेदस्थापना च चिद्रूपतामात्र एवेति। अथ स्वाभाविकमायाशक्त्या परमेश्वरो विश्वसृष्ट्यादिकं करोति जीव एव तत्र मुह्यतीत्युक्तम्। तत्र सन्देहं प्रश्नोत्तराभ्यां परिहरत्यष्टभिः—

श्रीविदुर उवाच। ब्रह्मन् कथं भगवतश्चिन्मात्रस्याविकारिणः। लीलया वापि युज्येरन् निर्गुणस्य गुणाः क्रियाः ॥८५॥

हे ब्रह्मन् चिन्मात्रस्य चिन्मात्रस्वरूपस्य सतः स्वरूपशक्त्या भगवतः श्रीवैकुण्ठादिगततादृशैश्वर्य्यादियुक्तस्य अतएव निर्गुणस्य प्राकृतगुणास्पृष्टस्य तत एवाविकारिणस्तादृक्स्वरूपशक्तिविलासभूतानां क्रियाणामनन्तानामपि सदोदितत्वरानन्तविधप्रकाशे तस्मिन्नित्यसिद्धत्वात्तत्तत्क्रियाविर्भावकर्त्तुस्तस्यावस्थान्तरप्राप्तत्वाभावात् प्राकृतकर्त्तुरिव न विकारापत्तिरिति। निर्विकारस्य च कथं सत्त्वादयः प्राकृतगुणाः कथं वा तदासङ्गहेतुकाः स्थित्यादयः क्रियाश्च युज्येरन्। ततश्च चिन्मात्रवस्तुविरोधादेव ते च ताश्च न युज्यन्ते। भगवत्त्वे तु स्वैरचेष्टयापि न युज्येरन् इत्याह लीलया वापीति। अत्राविकारित्वनिर्गुणत्वाभ्यां सह चिन्मात्रभगवत्त्वं चेत्युभयमपि स्वीकृत्यैव पूर्वपक्षिणा पृष्टम्। ततश्च तस्य चिन्मात्रस्वरूपस्य भवतु भगवत्त्वं, तत्रा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्माकं न सन्देहः, किन्तु तस्य कथमितरगुणादिस्वीकारो युज्यते इत्येव पृच्छत इति वाक्यार्थः। ततश्चिन्मात्रत्वे भगवत्त्वे च तस्य तुच्छा गुणाः क्रियाश्च न सम्भवन्त्येवेति द्विगुणीभूयैव प्रश्नः। लीलया वापि कथं युज्येरन् इति विशदयति—

क्रीड़ायामुद्यमोऽर्भस्य कामश्चिक्रीड़िषान्यतः।
स्वतस्तृप्तस्य च कथं निवृत्तस्य सदान्यतः॥ ८६॥

उद्यमयति प्रवर्त्तयति इत्युद्यमः। अर्भकस्य क्रीड़ायां प्रवृत्तिहेतुः कामोऽस्ति, अन्यतस्तु वस्त्वन्तरेण बालान्तरप्रवर्त्तनेन वा तस्य क्रीड़ेच्छा भवति, भगवतस्तु स्वतः स्वेनात्मना स्वरूपवैभवेन च तृप्तस्य अतएवान्यतः सदा निवृत्तस्य च कथमन्यतो जीवाज्जगतश्च निमित्तात् चिक्रीड़िषेति। न च तस्य ते गुणास्ताः क्रियाश्च न विद्यन्ते इत्यपलपनीयं, तथैव प्रसिद्धेरित्याह—

अस्राक्षीद्भगवान् विश्वं गुणमय्यात्ममायया।
तया संस्थापयत्येतद्भूयः प्रत्यपिधास्यति॥ ८७॥

गुणमय्या त्रैगुण्यव्यञ्जिन्या आत्माश्रितया मायया संस्थापयति पालयति प्रत्यपिधास्यति प्रातिलोम्येन तिरोहितं करिष्यति। जीवस्य च कथं मायामोहितत्वं घटेतेत्याक्षेपान्तरमाह—

देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः।
अविलुप्तावबोधात्मा स युज्येताजया कथम्॥ ८८॥

योऽसौ देशादिभिरविलुप्तावबोध आत्मा जीवः स कथमजया-विद्यया युज्येत। तत्र देशव्यवधानतो देशगतदोषतो वा चक्षुःप्रकाश इव कालतो विद्युदिव अवस्थातः स्मृतिरिव स्वतः शुक्तिरजतमिव अन्यतो घटादिवस्त्विव न तस्यावबोधो लुप्यते अव्याहतस्वरूपभूतज्ञानाश्रयत्वादेवेत्यर्थः। तत्रैव विरोधान्तरमाह—

भगवानेक एवैष सर्वक्षेत्रेष्ववस्थितः।
अमुष्य दुर्भगत्वं वा क्लेशो वा कर्म्मभिः कुतः॥ ८९॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एष एक एव भगवान् परमात्मापि सर्वचेत्रेषु सर्वस्य जीवस्य चेत्रेषु देहेष्ववस्थित:। तत्र सति कथममुष्य जीवस्य दुर्भगत्वं स्वरूपभूतज्ञानादिलोप: कर्मभि: क्लेशश्च तस्य वा कुतो नास्ति। न ह्येकस्मिन् जलादौ स्थितयोर्वस्तुनो: कस्यचित्तत्संसर्ग: कस्यचिन्नेति युज्यत इत्यर्थ:। तत्र केवलं चिन्मात्रत्वं न सम्भवतीति भगवत्त्वमेवाङ्गीकृत्य श्रीमैत्रेय उवाच।

सेयं भगवतो माया यन्नयेन विरुध्यते।
ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम्॥ ८०॥

यया विश्वसृष्ट्यादिकं भवति सेयं भगवतोऽचिन्त्यस्वरूपशक्तेर्मायाख्या शक्ति:। यद् या च नयेन तर्केण विरुध्यते तर्कातीततया सेयमप्यचिन्त्येत्यर्थ:। यद्यप्येवं द्वयोरप्यचिन्त्यत्वं तथापि भगवतो मायेत्यनेन व्यक्तत्वात् स्वरूपशक्तेरन्तरङ्गत्वाद्बहिरङ्गाया मायाया गुणै: सत्त्वादिभिस्तत्कार्यै: स्थापनादिलीलाभिश्च नासौ स्पृश्यत इत्यर्थ:। तन्त्रेण चायमर्थ:। यद् यया मायया येन भगवता सह न विरुध्यते नासौ विरोधविषयीक्रियत इति। यद्वा येन भगवता न विरुध्यते न सर्वथा निर्विषयीक्रियते इति च। एवमेव षष्ठे नवमाध्याये—दुरवबोध इवायमित्यादिना गद्येन तस्य सगुणकर्तृत्वं विरुध्य पुनरथ तत्र भवानिति गद्येनान्तर्यामितया गुणविसर्गपतितत्वेन जीववद् भोक्तृत्वयोगं सम्भाव्य न विरोध उभयमित्यादिगद्येन तत्र तत्रावितर्क्यशक्तित्वमेव च सिद्धान्ते योजितम्। तत्र स्वरूपशक्तेरवितर्क्यत्वं भगवतीत्यादिभिर्विशेषणैर्मायायाश्चात्ममायामित्यनेन दर्शितम्। तत्र स्वरूपद्वयाभावादित्यस्य तथाप्यचिन्त्यशक्त्या तत्कर्तृत्वं तदन्त:पातित्वञ्च विद्यते इत्यर्थ:। समविषममतीनामिति तु गद्यं तथाप्युच्चावचबुद्धीनां तथा स्फुरसीति प्रतिपत्त्यर्थं ज्ञेयम्। दुरवबोध इवेति प्राक्तनगद्ये त्वशरीर इति शरीरचेष्टां विना अशरण इति भूम्याद्याश्रयं विना इत्यर्थ:। अथ तत्रेत्यादौ स्वकृतेऽपि तस्यापि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

हेतुकर्त्तृत्वाद् योजनीयम्। तस्मादत्रापि स्वरूपशक्तेरेव प्राधान्यं दर्शितम्। अतएव ऋतेऽर्थं यत् प्रतीयेतेत्यादौ मायाया आभासस्थानीयत्वं प्रदर्श्य तदस्पृश्यत्वमेव भगवतो दर्शितम्। त्वमाद्यः पुरुषः साक्षादित्यादौ मायां व्युदस्य चिच्छक्त्येत्यनेन च तथा ज्ञापितम्। माया परैत्यभिमुखे च विलज्जमानेत्यनेन च। तदेवं भगवति तद्विरोधं परिहृत्य जीवेऽप्यविद्यासम्बन्धमतर्क्यत्वेन दर्शितया तन्माययैव समादधति। ईश्वरस्येति यदित्यनेनैव सम्बध्यते। अर्थवशादत्र च तृतीयया परिणम्यते। यद् यया ईश्वरस्य स्वरूपज्ञानादिभिः समर्थस्य अतएव विमुक्तस्य जीवस्य कार्पण्यं तत्तत्प्रकाशतिरोभावस्तथा बन्धनं तद्दर्शिगुणमयजालप्रवेशश्च भवतीति। तदुक्तम्—तत्सङ्गभ्रंशितैश्वर्य्यमिति। तदेतत् सर्वमभिप्रेत्य श्रुतयोऽप्याहुः—स यदजया त्वजामित्यादावपेतभग इति च। अत्र मूलपद्ये भगवतो मायेत्यनेन भगवत्त्वन्तु मायिकमित्यायातम्। इन्द्रस्य मायेत्यत्र यथेन्द्रत्वम्। एवं पूर्वत्रापि ज्ञेयम्। पुनरपि जीवस्य वस्तुतः स्वीयतत्तदवस्थत्वाभावेऽपि भगवन्माययैव तत्तत्प्रतीतिरिति सदृष्टान्तमुपपादयति।

यदर्थेन विनामुष्य पुंस आत्मविपर्य्ययः।
प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः॥ ८१॥

यद् यस्य। मायाया हेतोरर्थेन विनापि। यद्यपि तस्य त्रिकालमेव सोऽर्थो नास्ति तथाप्यात्मविपर्य्ययः आत्मविस्मृतिपूर्वकपराभिमानेनाहमेव तदस्मीत्येवंरूपः सोऽर्थः स्यात्। उपद्रष्टुर्जीवस्य। तृतीयार्थे षष्ठी। स्वप्नावस्थायां जीवेन स्वशिरश्छेदनादिकोऽतीवासम्भवोऽर्थः प्रतीयते। न हि तस्य शिरश्छिन्नं, न तु वा स्वशिरश्छेदं कोऽपि पश्येत्, किन्तु भगवन्मायैवान्यत्र सिद्धं तद्रूपमर्थं तस्मिन्नारोपयतीति। मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति न्यायेन। अतएव शुद्धस्यापि सतो जीवस्यौपाधिकेनैव रूपेणोपाधिधर्म्मापत्तिरिति दृष्टान्तान्तरेणोपपादयति—

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः ।
दृश्यते सन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः ॥ ९२ ॥

यथा जले प्रतिबिम्बितस्यैव चन्द्रमसो जलोपाधिकृतः कम्पादिगुणो धर्मो दृश्यते न त्वाकाशस्थितस्य तद्वदनात्मनः प्रकृतिरूपोपाधेर्धर्मः आत्मनः शुद्धस्यासन्नपि अहमेव सोऽयमित्याविशाञ्चाययोपाधितादात्म्यापन्नाहङ्काराभासस्य प्रतिबिम्बस्थानीयस्य तस्य द्रष्टुराध्यात्मिकावस्थस्यैव यद्यपि स्यात्तथापि शुद्धोऽसौ तदभेदाभिमानेन तं पश्यतीत्यर्थः। तदुक्तमेकादशे श्रीभगवता—नृत्यतो गायतः पश्यन् यथैवानुकरोति तान्। एवं बुद्धिगुणान् पश्यन्ननीहोऽप्यनुकार्य्यत इति। तथैवोक्तम्—शुद्धो विचष्टे ह्यविशुद्धकर्त्तुरिति। विशब्दस्य चात्र तदावेश एव तात्पर्य्यं, तस्माद्भगवतोऽचिन्त्यस्वरूपात्मरङ्गमहाप्रबलशक्तित्वाद्बहिरङ्गया प्रबलयाप्यचिन्त्ययापि माययापि न सृष्टिः। जीवस्य तु तया सृष्टिरिति सिद्धान्तितम् ॥ ३ ॥ ७ ॥ श्रीशुकः ॥ ८५—९२ ॥

एवं सृष्ट्यादिलीलात्रये सामान्यतो योजितेऽपि पुनर्विशेषतः संशय्य सिद्धान्तः क्रियते स्थूणानिखननन्यायेन। ननु पालनलीलायां ये येऽवतारास्तथा तत्रैव स्वप्रसादव्यञ्जकस्मिताभयमुद्रादिचेष्टया सुरपक्षपातो युद्धादिचेष्टया दैत्यसंहार इत्यादिका या या वा लीलाः श्रूयन्ते ते च ताश्च स्वयं परमेश्वरेण क्रियन्ते न वा। आद्ये पूर्वपक्षस्तदवस्थ एव प्रत्युत पक्षपातादिना वैषम्यञ्च। अन्ते तेषामवताराणां लीलानाञ्च न स्वरूपभूतता सिद्ध्यतीति सम्प्रतिपत्तिभङ्गः। अत्रोच्यते। सत्यं विश्वपालनार्थं परमेश्वरो न किञ्चित् करोति किन्तु स्वेन सहैवावतीर्णान् वैकुण्ठपार्षदान् तथाधिकारिकदेवाद्यन्तर्गतान् तथा तटस्थानन्यांश्च भक्तानानन्दयितुं स्वरूपशक्त्याविष्कारेणैव नानावतारान् लीलाश्चासौ प्रकाशयति। तदुक्तं पाद्मे—मुहूर्त्तेनापि संहर्त्तुं शक्तो यद्यपि दानवान्। मद्भक्तानां विनोदार्थं करोमि विविधाः क्रियाः। दर्शनध्यानसंस्पर्शैर्मत्स्यकूर्म्मविहङ्गमाः। स्वान्यपत्यानि पुष्णन्ति तथाहमपि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पद्मजेति। हरिभक्तिसुधोदये—नित्यञ्च पूर्णकामस्य जन्मानि विविधानि मे। भक्तसर्वेष्टदानाय तस्मात् किं ते प्रियं वदेति॥ तथा श्रीकुन्तिदेवोवचनञ्च—भक्तियोगविधानार्थं कथं पश्येम हि स्त्रिय इति। अत्र भक्तियोगविधानार्थं तदर्थमवतीर्णं त्वामिति टीका च। श्रीब्रह्मवचनञ्च—प्रपञ्चं निष्प्रपञ्चोऽपि विड़म्बयसि भूतले। प्रपन्नजनतानन्दसन्दोहं प्रथितुं प्रभो इति। स्वरूपशक्त्यैवाविष्कारश्च श्रीब्रह्मणैव दर्शितः—एष प्रपन्नवरदो रमयात्मशक्त्या यद्यत् करिष्यति गृहीतगुणावतार इत्यादिना। गृहीता गुणाः कारुण्यादयो यत्र तथाभूतोऽवतारो यस्येत्यर्थः। तदेवं भक्तानन्दार्थमेव तान् प्रकटयतस्तस्यानुसंहितमपि सुरपक्षपातादिविश्वपालनरूपं तन्मायाकार्य्यं स्वत एव भवति। लोके यथा केचिद्भक्ताः परस्परं भगवत्प्रेमसुखोल्लासाय मिलितास्तदनभिज्ञानपि कांश्चिन्मार्दङ्गिकादीन् संगृह्य तद्गुणगानानन्देनोन्मत्तवन्नृत्यन्तो विश्वेषामेवामङ्गलं घ्नन्ति मङ्गलमपि वर्द्धयन्तीति। तदुक्तं वागगद्गदेत्यादौ मद्भक्तियुक्तो भुवनं पुनातीति। एवमेवोक्तम्—सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु। कुरुते केवलानन्दाद् यथा मर्त्तस्य नर्त्तनमिति। न च वक्तव्यं स्वेन तेषां तैरपि स्वस्यानन्दने स्वतस्तृप्तताहानिः स्यात् तथान्यान् परित्यज्य च तेषामेवानन्दने वैषम्यान्तरमपि स्यादिति। तत्राद्ये विशुद्धोर्जितसत्त्वतनुमाश्रितेऽपि मुनिजने स्वतस्तृप्तिपराकाष्ठां प्राप्तो भक्तवात्सल्यदर्शनात्तदनुचर एवासौ गुणो न तु तत्प्रतिघातीति लभ्यते। यथा सर्वान् मुनीन् प्रति श्रीपरीक्षिद्वाक्यम्—नेहाथ वामुत्र च कश्चनार्थम् ऋते परानुग्रहमात्मशीलमिति। तथा जड़भरतचरितादौ—सिन्धुपतय आत्मसतत्त्वं विगणयतः परानुभावः परमकारुणिकतयोपदिश्येत्यादि। श्रीनारदपूर्वजन्मनि—चक्रुः कृपां यद्यपि तुल्यदर्शनाः शुश्रूषमाणे मुनयोऽल्पभाषिणीति च। तथा कुन्तिस्तवे—नमोऽकिञ्चनवित्ताय निवृत्तगुणवृत्तये। आत्मारामाय शान्ताय कैवल्यपतये नम इति। अकिञ्चना भक्ता एव वित्तं सर्वस्वं यस्येति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

टीका च। ततोऽन्यथा चाज्ञतज्ञतादोषश्च निर्दोषे भगवत्यापतति। ततः सिद्धे तथाविधस्यापि भक्तवात्सल्ये भक्तानां दुःखहान्या सुख-प्राप्त्या वा स्वानन्दो भवतीत्यायातमेव। किञ्च परमसारभूताया अपि स्वरूपशक्तेः सारभूता ह्लादिनी नाम या वृत्तिस्तस्या एव सारभूतो वृत्तिविशेषो भक्तिः सा च रत्यपरपर्य्याया। भक्तिर्भगवति भक्तेषु च निक्षिप्तनिजोभयकोटिः सर्वदा तिष्ठति। अतएवोक्तं भगवान् भक्त-भक्तिमानिति। तस्माद्भक्तस्थया तया भगवतस्तृप्तौ न स्वतस्तृप्तिता-हानिः, प्रत्युत शक्तित्वेन स्वरूपतो भिन्नाभिन्नाया अपि तस्याः, ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति न्यायेन, भक्तचित्तस्फुरि-ताया भेदवृत्तेरेव स्फुरणात्, भगवतो, मां ह्लादयत्यस्य भक्तिरिति, आनन्दचमत्कारातिशयश्च भवति। शक्तितद्वतोर्भेदमतेऽपि विशिष्ट-स्यैव स्वरूपत्वं सम्प्रतिपन्नम्। तदेतत् सर्वमभिप्रेत्य भणितं दुर्वा-ससं प्रति श्रीविष्णुना—अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज। साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः॥ नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना। श्रियञ्चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परा॥ ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम्। हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे॥ मयि निर्बद्धहृदयाः साधवः समदर्शिनः। वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा॥ मत्सेवया प्रतीतं ते सालोक्यादिचतुष्टयम्। नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् काल-विप्लुतम्॥ साधवो हृदयं मह्यं साधूनां हृदयन्त्वहम्। मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि॥ इति। अत्र ये दारागारेति त्रयम् अज्ञतज्ञतानिवारणे, साधवो हृदयं मह्यमिति स्वतस्तृप्तिपरिहारे, भक्तेः स्वरूपशक्तिसारह्लादिनीसारत्वे च अहं भक्तपराधीन इति द्वयम्। तत्रैव भक्तेष्वपि भक्तिरूपेण तत्प्रवेशे सति विशेषतो मत्सेवया प्रतीतमित्यपि ज्ञेयम्। ततो न प्राक्तनो दोषः। द्वितीयेऽप्येवमाचक्ष्महे। परानन्दने प्रवृत्तिर्द्विधा जायते परतो निजाभीष्टसम्पत्तेः क्वचित्तदभीष्ट-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मात्रसम्पत्तै च । तत्र प्रथमो नात्राप्युपयुक्तः स्वात्मार्थमात्रतया क्वापि पक्षपाताभावात् । अथोत्तरपक्षे तु परसुखस्य परदुःखस्य चानुभवेनैव परानुकूल्येनैव प्रवृत्तीच्छा जायते न तु यत्किञ्चिज्ज्ञानमात्रेण चित्तस्य परदुःखाद्यस्पर्शे कृपारूपविकारासम्भवात् । यथा कण्टकविद्धाङ्गो जन्तोर्नेच्छति तां व्यथाम् । जीवसाम्यं गतो लिङ्गैर्न तथाविद्धकण्टकः ॥ इति न्यायात् । ततश्च सदा परमानन्दैकरूपेऽपहतकल्मषे भगवति प्राकृतस्य सुखाभिधदुःखस्य प्रसिद्धदुःखस्य च सूर्ये पेचकचक्षुर्ज्योतिष इव तमस इव चात्यन्ताभावात्तत्तदनुभवो नास्त्येव । यत्तु भगवति दुःख-सम्बन्धं परिजिहीर्षन्तोऽपि केचिदेवं वदन्ति, तस्मिन् दुःखानुभवज्ञान-मस्त्येव, तच्च परकीयत्वेनैव भासते न तु स्वीयत्वेनेति, तदपि घट्ट-कुड्यां प्रभातम् । दुःखानुभवो नाम हि अन्तःकरणे दुःखस्पर्शः, स च स्वस्माद्भवतु परस्माद्वेति, दुःखसम्बन्धाविशेषात्, असर्वज्ञतादोषश्च सूर्य-दृष्टान्तेनैव परिहृतः, प्रत्युत गुणत्वेनैव दर्शितश्च । तस्मात्तस्मिन् यत्-किञ्चिद्दुःखज्ञानमस्तु, दुःखानुभवस्तु नास्त्येव । यत एव कर्त्तुमकर्त्तु-मन्यथा कर्त्तुं समर्थे परमकरुणामयनिचयशिरोमणौ तस्मिन् विराज-मानेऽप्यद्यापि जीवाः संसारदुःखमनुभवन्तीत्यत्र नैर्घृण्यपरिहारश्च भवति । यत्तु भक्तानां सुखं तत्तस्य भक्तिरूपमेव, तथा तेषां दुःखं भगवत्प्राप्त्यन्तरायेणैव भवति, तत्र चाधिका भगवत्येव चित्तार्द्रता जायते सा च भक्तिरेवेति । क्वचिद्गजेन्द्रादीनामपि प्राकृत एव दुःखे स एव मम शरणमित्यादिना तथैव भक्तिरुद्भूतैवेति । क्वचिद् यमलार्ज्जु-नादिषु श्रीनारदादिभक्तानां भक्तिः स्फुटैवेति च सर्वथा दैन्यात्मकभक्त-भक्त्यनुभव एव तं करुणयति न तु प्राकृतं दुःखं, योग्ये कारणे सत्य-योग्यस्य कल्पनानौचित्यात् दुःखसद्भावस्यैव कारणत्वे सर्वसंसारोच्छित्तेः । अथ तस्य परम्पराकारणत्वमस्त्येव चेदस्तु न कापि हानिरिति । तस्मादुभयथा भक्तानन्दने तद्भक्त्यनुभव एव भगवन्तं प्रवर्त्तयतीति सिद्धम् । तत एतदुक्तं भवति । यद्यन्यस्य सुखदुःखमनुभूयापि तत्प्रति-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्यागिनेतरस्य सुखं दुःखहानिं वा सम्पादयति तदैव वैषम्यमापतति। श्रीभगवति तु प्राकृतसुखदुःखानुभवाभावान्न तदापतति, यथा कल्पतरौ। तदुक्तं श्रीमदक्रूरेण—न तस्य कश्चिद्दयितः सुहृत्तमो न चाप्रियो द्वेष्य उपेक्ष्य एव वा। तथापि भक्तान् भजते यथा तथा सुरद्रुमो यद्वदुपाश्रितोऽर्थद इति। अत्र भक्तादन्य एव कश्चिदिति ज्ञेयम्। काःपण्डितस्त्वदपरं शरणं समीयाद्भक्तप्रियादृतगिरः सुहृदः कृतज्ञादित्येतत्तद्वाक्यनैव तत्प्रियत्वप्रोक्तेः। श्रीमहादेवेनाप्युक्तम्—न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा। आत्मत्वात् सर्वभूतानां सर्वभूतप्रियो हरिः। तस्य चायं महाभागश्चित्रकेतुः प्रियोऽनुगः। सर्वत्र समदृक् शान्तो ह्यहञ्चैवाच्युतप्रिय इति। तथोक्तं श्रीप्रह्लादेनापि—चित्रं तवेहितमहोऽमितयोगमायालीलाविसृष्टभुवनस्य विशारदस्य। सर्वात्मनः समदृशोऽविषमः स्वभावो भक्तप्रियो यदसि कल्पतरुस्वभाव इति। अर्थश्च—यस्त्वं भक्तप्रियोऽसि सोऽपि समदृशस्तव स्वभावोऽविषमः विषमो न भवति। तत्र हेतुगर्भविशेषणं कल्पतरुस्वभाव इति। तस्माद्विषमस्वभावतया प्रतीतेऽपि त्वय्यवैषम्यमित्यतीव चित्रमिति। अथवा परत्रापि कल्पवृक्षादिलक्षणे समान एवाश्रयणीये वस्तुनि भक्तपक्षपातरूपवैषम्यदर्शनाद्वैषम्यमपि समस्यैव स्वभाव इति लब्धे तदपरिहार्यमेवेति सिद्धान्तयितव्यम्। ततश्च विषमस्वभाव इत्येव व्याख्येयम्। तथा पूर्वत्रापि भक्तान् भजत इति वैषम्य एव योजनीयमिति। वस्तुतस्तु श्रीभगवत्यचिन्त्यमैश्वर्य्यमेव मुख्यस्तदविरोधे हेतुः। यदुक्तम्—नमो नमस्तेऽस्त्वृषभाय सात्वतामित्यादौ द्वितीयस्य चतुर्थे टीकायाम्। तदेवं वैषम्यप्रतीतावप्यदोषत्वायाचिन्त्यमैश्वर्य्यमार्हति। तदुक्तं श्रीभीष्मेण—सर्वात्मनः समदृशो ह्यद्वयस्यानहङ्कृतेः। तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित्॥ तथाप्येकान्तभक्तेषु पश्य भूपानुकम्पितम्। यन्मेऽसूंस्त्यजतः साक्षात् कृष्णो दर्शनमागत इति। तथा श्रीभगवता—समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहमिति ॥ तदेवं तत्तद्दोषे, भक्तपक्षपातस्य स्वरूपशक्तिसारभूतत्वे भक्तविनोदार्थमेव स्वरूपशक्त्यैव स्वयमेव च तत्तदवतारलीलाः करोति भगवान्, ततो विश्वपालनन्तु स्वयमेव सिध्यतीति स्थिते, न वैदुरप्रश्नस्तदवस्थः। अत्र देवादीनां प्राकृततया तैः सह लीलायां स्वतस्तृप्तताहानिस्तेषु तदंशावेशादि-स्वीकारेणाग्रे परिहर्त्तव्या। तथा नचावतारादीनां स्वरूपशक्तप्राप्तता-हानिः। तथा भक्तविनोदैकप्रयोजनकस्वैरलीलाकैवल्येन चान्यत्र रागद्वेषाभावान्न वैषम्यमपि प्रत्युत पित्तदूषितजिह्वानां खण्डाईरस्य इव तस्मान्निग्रहेऽप्यनुभूयमाने तेषां दुष्टतादिक्षपणलक्षणं हितमेव भवति। अत्र न ह्यस्य जन्मनो हेतुः कर्मणो वा महीपते। आत्म-मायां विनेशस्य परस्य द्रष्टुरात्मनः। यन्मया चेष्टितं पुंसः स्थित्युत्पत्त्य-प्ययाय हि। अनुग्रहस्तन्निवृत्तेरात्मलाभाय चेष्यत इति नवमान्तस्थ-श्रीशुकवाक्यानुसारेण प्रलये लीनोपाधेर्जीवस्य धर्म्माद्यसम्भवादुपाधि-सृष्ट्यादिना धर्म्मादिसम्पादनेनानुग्रह इति तदीयटीकानुसारेण च। तथा, लोके भवान् जगति नः कलयावतीर्णः सद्रक्षणाय खलनिग्रह-णाय चान्यः। कश्चित्तदीयमभियाति निदेशमीश किंवा जनः स्वकृत-मिच्छति तन्न विद्म इति जरासन्धबद्धराजवृन्दनिवेदनेऽपि ईश्वरे त्वयि सद्रक्षणार्थमवतीर्णेऽपि चेदस्माकं दुःखं स्यात्तर्हि किमन्यः कश्चि-ज्जरासन्धादिस्त्वदाज्ञामपि लङ्घयति किञ्च त्वया रक्ष्यमाणोऽपि जनः स्वकर्म्मदुःखं प्राप्नोत्येवेति न विद्मः। न चैतदुभयमपि युक्तमिति भावः। इति तदीयटीकानुसारेण च लीलायाः स्वैरत्वेऽपि दुर्घ-टनी मायैव तदा तदा देवासुरादीनां तत्तत्कर्म्मोद्बोधसन्धानमपि घट-यति। यया स्वस्वकर्म्मणा पृथगेव चेष्टमानानां जीवानां चेष्टाविशेषाः परस्परशुभाशुभशकुनतया घटिता भवन्तीत्यादिकं लोकेऽपि दृश्यते। यत्र तु क्वचिदेषा तल्लीलाजवमनुगन्तुं न शक्नोति तत्रैव परमेश्वरः स्वैरता व्यक्तीभवति। यथा—गुरुपुत्रमिहानीतं निजकर्म्मनिबन्धनम्।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

आनयस्व महाराज ! मच्छासनपुरस्कृत इति यमविषयकश्रीभगवदु-
देशादौ। ततश्च तस्यातिविरलप्रचारत्वान्न सर्वञ्च कृतहान्यकृताभ्या-
गमप्रसङ्गश्च। अथ यदि केचिद्भक्तानामेव द्विषन्ति तदा तदा भक्त-
पक्षपातान्तःपातित्वाद्भगवता स्वयं तद्द्वेषेऽपि न दोषः प्रत्युत भक्तवि-
षयकतद्रतेः पोषकत्वेन ह्लादिनीवृत्तिभूतानन्दोल्लासविशेष एवासौ। दे-
ह्ि द्वेषेण प्रतिपदप्रोन्मीलत्सान्द्रानन्दवैचित्रीसमतिरिक्तभक्तिरसमहा-
स्य तत्र भक्तैवस्थापादनरूपत्वेन तदीयभक्तिरसमहाप्रतियोगितया ततो-
ऽन्यथा दुश्चिकित्स्यतया च तत्रोचितम्। तदुत्थभगवत्तेजसा तत्-
स्वरूपशक्तेरपि तिरस्कारेण ध्वंसाभावतुल्यम्। स्वर्गापवर्गनरकेष्वपि
तुल्यार्थदर्शिन इति न्यायेनान्येषामतीव दुःसहं तेषामपि कामुकानां
निकाममनभीष्टमुद्दण्डदण्डविशेषं कुर्वत्येव भगवति तस्य सर्वहित-
पर्य्यवसायिचारित्रस्वभावत्वादेव तत्तद्दुर्वारदुर्वासनामयाशेषसंसार-
क्लेशनाशोऽपि भवति। यः खल्वभेदोपासकानामतिकृच्छ्रसाध्यः
पुरुषार्थः। क्वचिच्च परमार्थवस्त्वभिज्ञानां नरकनिर्विशेषं तेषां कामि-
नान्तु निकाममभीष्टं विटकीटानामिवामेध्यं स्वर्गविशेषं तेभ्यो ददाति
स परमेश्वरः। अतएवोक्तं नागपत्नीभिः—रिपोः सुतानामपि तुल्य-
दृष्टेर्धत्से दमं फलमेवानुशंसन्निति। अत्र सुतानां सुतवत्पाल्यानां
देवानामित्यर्थः। दममिति यतो दसमपीत्यर्थः। यत्तु पूतनादी-
वृत्तमभक्तगतिः श्रूयते तद्भक्तानुकरणमाहात्म्यैनैवेति तत्र तत्र स्पष्टमेव।
यथा, सद्वेषादिव पूतनापि सकुलेत्यादि। अथ यदि केचिद्भक्ता एव
सन्तो भक्तान्तरेषु कथञ्चिदपराध्यन्ति तदा तेनैवापराधेन भक्तेषु भग-
वति च विवर्त्तमानं द्वेषवाड़वानलज्वालाकलापमनुभूय चिरात् कथ-
ञ्चित् पुनः सद्वेषेणापि भगवत्संस्पर्शादिना सपरिकरे तदपराधदोषे
विनष्टे स्वपदमेव प्राप्नुवन्ति, न तु ब्रह्मकैवल्यं, भक्तिलक्षणबीजस्या-
नश्वरस्वभावत्वात्। तेषु भगवतः क्रोधश्च बालेषु मातुरिवेति।
तस्मात् सर्वं समञ्जसम्। तथाहि श्रीराजोवाच—

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

समः प्रियः सुहृद्ब्रह्मन् भूतानां भगवान् स्वयम् ।
इन्द्रस्यार्थे कथं दैत्यानवधीद्विषमो यथा ॥ ९३ ॥

परमात्मत्वेन समः सुहृत् हितकारी प्रियः प्रीतिविषयो भगवान् । एवं सति साम्ये नैवोपकर्त्तव्यत्वेन प्रीतिविषयत्वेन च सर्वेष्वेव प्राप्तेषु कथं विषम इव दैत्यानवधीत् । विषमत्वमुपलक्षणम् । असुहृदि वा अप्रिय इव चेति । किञ्च यस्य यैः प्रयोजनं सिध्यति स तत्पक्षपाती भवति, येभ्यो बिभेति तान् द्वेषेण हन्ति, न तु तदत्रास्तीत्याह—

न ह्यस्यार्थः सुरगणैः साक्षान्निःश्रेयसात्मनः ।
नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य हि ॥ ९४ ॥

निःश्रेयसं परमानन्दः ।

अतः—इति नः सुमहाभाग नारायणगुणान् प्रति ।
संशयः सुमहान् जातस्तद्भवान् छेत्तुमर्हति ॥ ९५ ॥

गुणान् अनुग्रहनिग्रहादीन् प्रति तत्तत् संशयम् । अत्र श्रीऋषिरुवाच—

साधु पृष्टं महाराज ! हरेश्चरितमद्भुतम् ।
यद्भागवतमाहात्म्यं भगवद्भक्तिवर्द्धनम् ॥ ९६ ॥

हे महाराज ! इदं यत् पृष्टं तत् साधु सुविचारितमेव । किन्तु हरेश्चरितमद्भुतम् अपूर्वम् अवैषम्येऽपि विषमतया प्रतीयमानत्वेन विचारातीतत्वात् । यद् यत्र हरेश्चरिते भगवद्भक्तिवर्द्धनं भागवतमाहात्म्यं भागवतानां प्रह्लादोपलक्षितभक्तवृन्दानां माहात्म्यं वर्त्तते । अनेन भागवतार्थमेव सर्वं करोति भगवान्न त्वन्यार्थमित्यस्यैवार्थस्य पर्य्यवसानं भविष्यतीति व्यञ्जितम् । टीका च—स्वभक्तपक्षपातेन तद्विपक्षविदारणम् । नृसिंहमद्भुतं वन्दे परमानन्दविग्रहमित्येषा ।

अतो—गीयते परमं पुण्यमृषिभिर्नारदादिभिः ।
नत्वा कृष्णाय मुनये कथयिष्ये हरेः कथाम् ॥ ९७ ॥

परमं पुण्यं यथा स्यात्तथा या गीयते तां कथामिति यत्तदोरध्या-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

द्वारेणान्वयः। अत्र च तैर्गीयमानत्वेन भक्तैकसुखप्रयोजनत्वमेव व्यञ्जितम्। तत्र तावद्व्यञ्जितार्थानुरूपमेव प्रश्नस्योत्तरमाह—

निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान् प्रकृतेः परः।
स्वमायागुणमाविश्य बाध्यबाधकतां गतः॥ ९८॥

यस्मात् प्रकृतेः परस्तस्मान्निर्गुणः प्राकृतगुणरहितः तत एवाजो नित्यसिद्धः तत एव चाव्यक्तः प्राकृतदेहेन्द्रियादिरहितत्वान्नान्येन व्यज्यते इति स्वयंप्रकाशदेहादिरित्यर्थः। ततश्च प्रकृतिगुणोत्थरागद्वेषादि-रहितश्चेति भावः। एवमेवम्भूतोऽपि स्वेषु भक्तेषु या माया कृपा तत्रोचितो यो गुणो लीलाकौतुकमयविशुद्धोर्जितसत्त्वाख्यस्तमाविश्या-लम्ब्य भगवान् नित्यमेव प्रकाशितषड्गुणैश्वर्यः सन्, एतदप्युपलक्षणं, कदाचिदित्यादौ जातः सन् लोकेन्द्रियेषु व्यक्तोऽपि सन् बाध्य-बाधकतां गतः। निजदृष्टिपथेऽपि स्थातुमसमर्थेषु अतिक्षुद्रेषु देवा-सुरादिषु स्वसाहाय्यप्रतियोद्धृत्वसम्पादनाय स्वयं सञ्चारितं किञ्चि-त्तदंशलक्षणमेव तेजः समाश्रित्य बाध्यतां बाधकताञ्च गतः। युद्ध-लीलावैचित्र्याय प्रतियोद्धृषु तदानीं स्वस्मिन् प्रकाश्यमानादपि तेजसो-ऽधिकं तेजोऽंशं सञ्चार्य्य बाध्यतां पराजयं कदाचित्तु तस्मान्न्यूनं सञ्चार्य्य बाधकतां जयं प्राप्त इत्यर्थः। स्यात् कृपादम्भयोर्माया इति विश्वप्रकाशः। अत्र सत्यप्यर्थान्तरे भागवतानुग्रहप्रयोजनत्वेनैवोप-क्रान्तत्वादुपसंहरिष्यमाणत्वाच्च गतिसामान्याच्च छलमयमायया तत्तत्-कर्तृत्वेऽप्यधिकदोषापाताच्च तन्नापेक्षते। तस्माद्भक्तविनोदैकप्रयो-जनकस्वैरलीलाकैवल्ये नान्यत्र रागद्वेषाभावान्नात्र वैषम्यमिति भावः। अतएव बाध्यतामपि यातीति बाधकतया सहैवोक्तम्। तथा निजस्वरूप-शक्तिविलासलक्षणलीलाविष्कारेण सर्वेषामेव हितं पर्य्यवस्यतीति सुहृत्त्वादिकञ्च नापयतीति ध्वनितम्। अथ कथं सोऽपि विशुद्ध-सत्त्वाख्यो गुणः प्राकृतो न भवति कदा वा कुत्र तं वीर्य्यातिशयं सञ्चारयति कथं वा कृतहान्यकृताभ्यागमप्रसङ्गो न भवतीत्यादिकं माशङ्क्याह द्वाभ्याम्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सत्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ।
न तेषां युगपद्राजन् ह्रास उल्लास एव वा॥ ९९ ॥

सत्वादयो गुणाः प्रकृतेरेव नात्मनः । आत्मनः परमेश्वरस्य तस्य तु ये सर्वेऽपि नित्यमेवोल्लासिनो गुणास्ते तु ते न भवन्तीत्यर्थः। तदुक्तम्— सत्वादयो न सन्तीश इति। ह्लादिनी सन्धिनी सम्वित्त्वय्येका सर्वसंस्थिताविति च । यस्मान्नात्मनस्ते तस्मादेव युगपत् ह्रास एव वा उल्लास एव वा नास्ति, किन्तु विकारित्वेन परस्परमुपमर्द्यत्वात् कस्यचित् कदाचित् ह्रासः कस्यचित् कदाचिदुल्लासो भवतीत्यर्थः। ततश्च देवादीनां तत्साहाय्ये सुरादीनाञ्च तद्युद्धे योग्यतां दर्शयति। तथा सत्वाद्युल्लासकाले तल्लीलायास्तदधीनत्वमिव यत् प्रतीयते तदनुवदन् परिहरति ।

जयकाले तु सत्त्वस्य देवर्षीन् रजसोऽसुरान् ।
तमसो यक्षरक्षांसि तत्कालानुगुणोऽभजत् ॥ १०० ॥

सत्त्वस्य जयकाले देवान् ऋषींश्चाभजत् भजति भगवान् तत्तद्देहेषु सत्त्वोपाधिकनिजतेजः सञ्चारयति येन च तान् सहायमानान् करोतीत्यर्थः। एवं रजसो जयकाले असुरेषु रजउपाधिकं तमसो जयकाले यक्षरक्षःसु तमउपाधिकमिति योजनीयम्। ततश्च येन तान् यक्षादीन् प्रतियोद्धॄन् कुर्वन् देवादीन् पराजितान् करोति स्वयमपि तथा दर्शयतीत्यर्थः। तदेवं भक्तरसपोषलीलावैचित्र्याय वाध्यवाधकतां यातीति दर्शितम्। यच्च क्षीरोदमथने श्रूयते—तथा सुराणाविशदासुरेण रूपेण तेषां बलवीर्य्यमीरयन्। उद्दीपयन् देवगणांश्च विष्णुर्दैवेन नागेन्द्रमबोधरूप इति। तत्रापि तद्वैचित्र्यार्थमेव तथा तत्तदावेशस्तस्येति लभ्यते। नन्वायाता तस्य तत्तद्गुणोद्बोधकालपारवश्येन स्वैरलीलताहानिः। ततश्च गुणसम्बन्धातिशये वैषम्यादिकञ्च स्पष्टमेवेत्याशङ्क्याह—तत्कालानुगुण इति। तेषां सत्वादीनां काल एवानुगुणो यस्य सः। भगवच्छरण इतिवत् समासः। स्वैरमेव

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्रीड़ति तस्मिन्नित्यमेव तदनुगतिकया मायया तदनुसारेणैवानादि-सिद्धप्रवाहं तं जगत्कर्म्मसमुदायं प्रेर्य्य स्ववृत्तिविशेषरूपत्वेन प्रवर्त्त्य-मानः सत्त्वादिगुणानां काल एव तदधीनो भवतीत्यर्थः। कालस्य मायावृत्तित्वमुदाहृतं, कालो दैवमित्यादौ त्वन्मायैषेति। यद्वा तेषां कालोऽपि सदानुगतो भक्तानुग्रहमात्रार्थं स्वैरचेष्टात्मकप्रभावलक्षणो गुणो यस्य स इत्यर्थः। ततोऽपि तच्चेष्टानुसारेणैव मायया तत्तत्प्रव-र्त्तनमिति भावः। यदुक्तम्—योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टा-माहुश्चेष्टते येन विश्वमिति। तथा चोभयथापि न पारवश्यमित्या-यातम्। इत्थमेव श्रीकपिलदेवोऽपि—यः कालः पञ्चविंशक इति। प्रभावं पौरुषं प्राहुः कालमेके यतो भयमिति च। तत्र मायाव्यङ्गत्व-पुरुषगुणत्वलक्षणमतद्वयमुपन्यस्तवान्। अत्र तस्य चेष्टाप्रभावस्य भक्तविनोदायैव मुख्या प्रवृत्तिः। गुणोक्षोभादिकार्य्यन्तु तत्र स्वत एव भवतीति तत्र प्रवृत्त्याभास एव। ततश्च पूर्वोऽंशः स्वयमेवेति स्वरूपशक्ते-रेव विलासः परस्तदाभासरूप एवेत्याभासशक्तेर्मायाया एवान्तर्गतः। योऽयं काल इत्यादौ निमेषादिरित्युक्तिस्तु द्वयोरभेदविवक्षयैवेति ज्ञेयम्। अत एवं व्याख्येयम्। यथा भृत्यस्यानुगतो भृत्योऽनुभृत्यः तथात्र प्रभावलक्षणस्य गुणस्यानुगत आभासरूपो गुणोऽनुगुणः। तथा च तेषां कालोऽप्यनुगुणो न तु साक्षाद्गुणो यस्येति। ननु तेषु तेषु तेनावेश्यमानं तेजः कथं न लक्ष्यते तत्राह—

ज्योतिरादिरिवाभाति सङ्घातान्न विविच्यते।
विदन्त्यात्मानमात्मस्थं मथित्वा कवयोऽन्ततः॥ १०१॥

यद्यपि तेषु तेषु निजतेजोऽंशेनाविष्टोऽसौ सङ्घातात् सम्मिश्रत्वात् न विविच्यते लोकैर्विवेक्तुं न शक्यते, तथापि कवयो विवेकनिपुणा अन्ततो मथित्वा तस्यापि साहाय्यं तेनापि युद्धमित्यादिकासम्भवार्थ-निषेधेन विविच्य तदंशेनात्मस्थं तत्तदात्मनि प्रविष्टमात्मानमीश्वरं विदन्ति जानन्ति। तत्र हेतुगर्भो दृष्टान्तः। यस्मात्तत्तेजः ज्योतिरादि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पदार्थ इवाभाति द्रष्टृष्विति विशेषः । अयमर्थः । यथा नेदं मणेस्तेजः पूर्वमदर्शनात्, किन्तु तदातपसंयोगेन सौरन्तेज एवात्र प्रविष्टमिति सूर्यकान्तादौ तुलादिदाहेन तदनुभविषु तदा भाति ; यथा च पूर्ववदेव वायोरयं गन्धः पार्थिव एव प्रविष्ट इति तेष्वाभाति ; तथात्रापीति । अथवा नन्वेवं तत्र तत्राविशितैः स्वतेजोभिरिव क्रीड़तीत्यायातम् । कथं तर्हि तैरपि क्रीड़तीति दृश्यते तत्राह, ज्योतिरिति । यथा चक्षुरादिज्योतिभिः स्वांशे रूपमात्रेऽपि प्रकाश्यमाणे गन्धादिगुणपञ्चका त्मदेवासौ प्रकाशत इति प्रतीयते ; यथा च कर्णादिनभसा स्वांशे शब्दमात्रेऽपि गृह्यमाणे दुन्दुभिरिवासाविति प्रतीयते, तच्च तत्तद्गुणानां संमिश्रत्वादेव भवति न वस्तुतः ; तथा कवयः आत्मानमीश्वरं तत्तत्संघातस्थत्वेनान्यैरविविक्तमपि आत्मस्थं स्वांशतेजोभिरेव क्रीड़न्तं जानन्तीत्यर्थः । तदेवं युद्धादिनिजलीलाभिर्भक्तविनोदनमेव प्रयोजनं, विश्वपालनन्तु ततः स्वत एव भवतीत्युक्त्वा, सृष्टिप्रलययोः प्रकृतीक्षणादावपि सर्वाशङ्कानिरासार्थमतिदिशन्, त्रिष्वप्यविशेषमाह—

यदा सिसृक्षुः पुरमात्मनः परो रजः सृजत्येष पृथक् स्वमायया ।
सत्त्वं विचित्रासु रिरंसुरीश्वरः शयिष्यमाणस्तम ईरयत्यसौ ॥१०२॥

यदा यत्र स्वचेष्टालक्षणे काले एष परः परमेश्वरः स्वमायया भक्तकृपया आत्मनः पुरः प्राचीनसृष्टिगतसाधकभक्तरूपाणि स्वस्याधिष्ठानानि सिसृक्षुर्भवति प्रकृत्या सह तेषु लीनेषु आविर्भावनार्थमीक्षां करोति तदा पृथक् स्वरूपशक्तेरितरासौ जीवमायाख्या शक्तिः पूर्ववत्तच्चेष्टात्मकप्रभावाभासोद्दीप्ता रजः सृजति स्वांशभूताद्गुणत्रयसाम्यादव्यक्तादिद्विपति उद्बोधयतीति वा । यद्वा पृथङ्मायानुगत एष काल एव सृजति, तथासौपदेन च काल एवोच्यते । अथ विचित्रासु नानागुणवैचित्रीमतीषु तल्लक्षणासु पूर्षु यदा रन्तुमिच्छुर्भवति तदासौ सत्त्वं सृजति, यदा पुनस्ताभिरेव मिलित्वा शयिष्यमाणः शयितुमिच्छुर्भवतीत्यर्थः तदासौ तमः सृजतीति । ततो भक्तनिमित्तमेव सर्वा एव सृष्ट्या-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दिक्रियाः प्रवर्त्तन्ते इति भावः। यथाङ्गीकृतमेकादशस्य तृतीये टीकाकृद्भिरपि। किमर्थं ससर्ज्ज स्वमाचात्मप्रसिद्धये। स्वं मिमीते प्रमिमीयते य आत्मानमुपास्ते स स्वमाता तस्यात्मनो जीवस्य प्रकृष्टा ये सिद्धय इति शयनमत्र पुरुषावतारस्य कदाचित् प्रलयोदधौ योगनिद्रा कदाचिद्भगवत्प्रवेशो वा। यद्यपि सर्वेष्वपि जीवेषु अन्तर्यामितया परमेश्वरस्तिष्ठति तथापि तत्रासंसक्तत्वादस्थित एव भवति तद्भक्तेषु तु समासक्तत्वान्न तथेति। न च तत्सङ्गादौ तस्येच्छेति यथोक्तव्याख्यानमेव बलवत्। तथा च श्रीभगवदुपनिषदः—मत्स्थानि सर्व्वभूतानि न चाहं तेष्ववस्थितः। न च मत्स्थानि भूतानि पश्य मे योगमैश्वरमिति। ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहमिति च। उक्तञ्च हरिभक्तिसुधोदये—भक्तानां हृदयं शान्तं सश्रियो मे प्रियं गृहम्। वसामि तत्र शोभैव वैकुण्ठाख्यादिवर्णनेति। एवं प्रसङ्गेन सृष्टिप्रलयावपि व्याख्याय पुनः पालनमेव व्याचचाणः प्रकरणमुपसंहरति सार्द्धेन।

कालं चरन्तं सृजतीश आश्रयं प्रधानपुंभ्यां नरदेव सत्यकृत्। य एष राजन्नपि काल ईशिता सत्त्वं सुरानीकमिवैधयत्युत। तत्प्रत्यनीकानसुरान् सुरप्रियो रजस्तमस्कान् प्रमिणोत्युरुश्रवाः॥१०३॥

सत्यकृत् स्वरूपशक्तिविलासेनैव स्वयं परमार्थसत्यक्रियाविर्भावक एव सन् स्वचेष्टारूपं कालं सृजति व्यञ्जयति। किं कुर्वन्तं प्रधानपुंभ्याञ्च चरन्तं तत्तत्सम्बन्धानां साधकभक्तानां देवादिप्रविष्टं निजतेजोऽंशाचरन्तं तत्तत्सम्बन्धानां साधकभक्तानां देवादिप्रविष्टं निजतेजोऽंशा-

ीयते। ;व ये तु देवेषु भक्ता असुरेषु भक्ताश्चेत्यस्तान् स्वयं पालयति
रमाङ्गुष्ठ चैवेति पूर्वमेवोक्तम्। यस्मात्तत्त्वेष्टालक्षणस्य कालस्यैवं वार्त्ता
तेनैव ;द्वेष्टितापि एधयतीव ग्रसिष्णोतीव चेति। हे राजन्निति पूर्वा-
भिप्रायमेव। ननु यदि चेशितुः प्रयोजनं न भवति तर्हि कथं कदाप्य-
सुरानपि स्वपक्षान् विधाय देवैर्न युध्येत, तत्राह—सुरप्रियः।
-रेषु वर्त्तमानाः प्रिया भक्ता यस्य सः। सत्त्वप्रधानेषु सुरेषु
प्रायशस्तेषां सर्वेषामनुगमनेनैव तस्यानुगमनम्। कदाचिद्दक्ष-
सत्यादिषु महत्स्वपराधे तु तेषां मालिन्येन सुरत्वाच्छादना-
त्तेषां तस्य चैतेष्वननुगमनं स्यादिति। जयकाले तु सत्त्वस्येत्याद्युक्त-
मितिभावः। ननु कथं तेऽपि तान्नानुगच्छन्ति तत्राह—रजस्तमस्का-
निति। अत्यन्तभगवद्बहिर्मुखताकरयोस्तयोर्गुणयोररोचकत्वादेवेति
भावः। तर्ह्यसौ सदैवासुराणां निग्रहमेव करोतीत्यथाप्यसामञ्जस्य-
मित्याशङ्क्याह—उरुश्रवाः। वैरेण यं नृपतय इति अहो बकीयं
स्तनकालकूटमित्यादिभिश्च सर्वतो विस्तृतं महत्तमं वा श्रवः
कीर्त्तिर्यस्य स तेषामप्यनुग्रहं करोतीति भावः। तदेवं सिद्धान्तं
प्रदर्श्य तत्र स्वभक्तानुग्रहमात्रप्रयोजनस्तत्तत् करोति परेश इति
प्रतिज्ञातार्थोदाहरणाय प्रह्लादजयविजयादिकथायाः सूचकमितिहास-
विशेषमाह—तत्रैवोदाहृतः पूर्वमितिहासं सुरर्षिणा। प्रीत्या महाक्रतौ
राजन् पृच्छतेऽजातशत्रव इत्यादि ॥ १०४ ॥ टीकैव दृश्या ॥ ७ ॥ १ ॥
श्रीशुकः ॥ ८३—१०४ ॥

तदेवं सर्वं अपि वैषम्यनैर्घृण्ये परिहृते। ईश्वरस्तु पर्जन्यवद्-
द्रष्टव्य इत्यस्य ब्रह्मसूत्रनिर्गतार्थं न्यायस्याप्यत्रैवान्तर्भावसिद्धेः।
इति ब्रह्मभगवत्परमात्मानो विवृताः। तदेवं त्रिव्यूहत्वमेव व्याख्या-
तम्। क्वचिद्वासुदेवादिचतुर्व्यूहादित्वञ्च दृश्यते। स च भेदः कस्यचित्
केनचिदभेदविवक्षया च नायुक्तः। तदुक्तं मोक्षधर्मे नारायणीये—
एकव्यूहविभागो वा क्वचिद्द्विव्यूहसंज्ञितः। त्रिव्यूहश्चापि संख्यात-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्तुर्व्यूहस्य इष्यते ॥ इति । श्रुतिश्च—स एकधा भवति त्रिधा ... ख्याता । अथ पूर्वरीत्या चतुर्व्यूहत्वाद्यविसम्वादितया यदत्र ... इत्थं तत्र प्रथमव्यूहस्य श्रीभगवत एव मुख्यत्वं तत्प्रतिपादकत्वेनैव श्रीभागवतमित्याख्या । यथोक्तम्—इदं भागवतं नाम पुराणं ब्रह्म-सम्मितमिति । तस्य हि प्राधान्ये षड्विधेन लिङ्गेन तात्पर्य्यमपि पर्य्यालोच्यते । उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोप-पत्ती च लिङ्गं तात्पर्य्यनिर्णये ॥ इत्युक्तप्रकारेण । तथाहि तावदुप-क्रमोपसंहारयोरैक्येन—

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः । तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा । योगीन्द्राय तदात्मनाथ भगवद्राताय कारु-ण्यतस्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ॥ १०५ ॥

अत्र पूर्वस्यार्थः । अर्थोऽयं ब्रह्मसूत्राणामिति गारुड़ोक्तेरस्य महा-पुराणस्य ब्रह्मसूत्रार्थभाष्यात्मकत्वात् प्रथमं तदुपादायैवावतारः । तत्र पूर्वमथातो ब्रह्मजिज्ञासेति व्याचष्टे तेजोवारिमृदामित्याद्यर्द्धेन । योजनायां प्राथमिकत्वादस्य पूर्वत्वम् । तत्र ब्रह्मजिज्ञासेति व्याचष्टे परं धीमहीति । परं श्रीभगवन्तं धीमहि ध्यायेम । तदेवं मुक्तप्र-ग्रहया योगवृत्त्या बृहत्वाद् ब्रह्म यत् सर्वात्मकं तद्धीश्च भवति । तत्तु निजरश्म्यादिभ्यः सूर्य्य इव सर्वेभ्यः परमेव स्वतो भवतीति मूलरूपत्व-प्रदर्शनाय परपदेन ब्रह्मपदं व्याख्यायते । तच्चात्र भगवानेवेत्यभिमतम् । पुरुषस्य तदंशत्वान्निर्गुणस्य ब्रह्मणो गुणादिहीनत्वात् । उक्तञ्च श्रीरामानुजचरणैः—सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः । बृहत्त्वञ्च स्वरूपेण गुणैश्च यत्रानवधिकातिशयः सोऽस्य मुख्योऽर्थः । स च सर्वे-श्वर एवेति । उक्तञ्च प्रचेतोभिः—नह्यन्तो यद्विभूतीनां सोऽनन्त इति

गीयते। अतएव विविधमनोहरानन्ताकारत्वेऽपि तत्तदाकाराश्रय-परमाङ्गुतमुख्याकारत्वमपि तस्य व्यञ्जितम्। तदेवं मूर्त्तत्वे सिद्धे तेनैव परत्वेन तस्य विष्णादिरूपकभगवत्त्वमेव सिद्धम्। तस्यैव ब्रह्म-शिवादिपरत्वेन दर्शितत्वात्। अत्र जिज्ञासेत्यस्य व्याख्या धीमहीति। यतस्तज्जिज्ञासायास्तात्पर्य्यं तद्ध्यान एव। तदुक्तमेकादशे स्वयं भग-वता—शब्दब्रह्मणि निष्णातो न निष्णायात् परे यदि। श्रमस्तस्य श्रम-फलो ह्यधेनुमिव रक्षत इति। ततो धीमहीत्यनेन श्रीरामानुजमतं जिज्ञासापदं निदिध्यासनपरमेवेति स्वीयत्वेनाङ्गीकरोति श्रीभागवत-नामा सर्ववेदादिसाररूपोऽयं ग्रन्थ इत्यायातम्। धीमहीति बहुवचनं कालदेशपरम्परास्थितस्य सर्वस्यापि तत्कर्त्तव्यताभिप्रायेण अनन्त-कोटिब्रह्माण्डान्तर्व्वासिनां पुरुषाणामंशिभूते भगवत्येव ध्यानस्याभि-धानात्। अनेनैकजीववादजीवनभूतो विवर्त्तवादोऽपि निरस्तः। ध्याय-तिरपि भगवतो मूर्त्तत्वमपि बोधयति ध्यानस्य मूर्त्त एवाकष्टार्थत्वात्। सति च सुसाध्ये पुरुषार्थोपाये दुःसाध्यस्य पुरुषाप्रवृत्त्या स्वत एवाप-कर्षात्तदुपासकस्यैव युक्ततमत्वनिर्णयाच्च। तथा च गीतोपनिषदः—मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते। श्रद्धया परयोपेतास्ते मे युक्ततमा मताः। ये त्वक्षरमनिर्द्देश्यमव्यक्तं पर्य्युपासते। ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः। क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्। अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते। इति। इदमेव च विवृतं ब्रह्मणा—श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवल-बोधलब्धये। तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषाव-घातिनाम्॥ इति। अतएवास्य ध्येयस्य स्वयं भगवत्त्वमेव साधितम्। शिवादयश्च व्यावृत्ताः। तथा धीमहीति लिङा द्योतिता पृथगनुसन्धान-रहिता प्रार्थना ध्यानोपलक्षितभगवद्भजनमेव परमपुरुषार्थत्वेन व्यनक्ति। ततो भगवतस्तु तथात्वं स्वयमेव व्यक्तम्। ततश्च यथोक्त-परममनोहरमूर्त्तित्वमेव लभ्यते। तथा च वेदानां सामवेदोऽस्मीति,

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तत्र च बृहत् साम तथा साम्नामित्युक्तमहिम्नि बृहत्साम्नि—
बृहद्धाम बृहत् पार्थिवं बृहदन्तरीक्षं बृहद्दिवं बृहद्धाम बृहद्भ्यो धाम
धामभ्यो धामेति। तदेवं ब्रह्मजिज्ञासेति व्याख्यातम्। अथात
इत्यस्य व्याख्यामाह—सत्यमिति। यतस्तत्राथशब्द आनन्तर्ये अतः
शब्दो वृत्तस्य हेतुभावे वर्त्तते तस्मादथेति स्वाध्यायक्रमतः प्राक्
प्राप्तकर्म्मकाण्डे पूर्वमीमांसया सम्यक् कर्म्मज्ञानादनन्तरमित्यर्थः।
अत इति तत्क्रमतः समनन्तरं प्राप्तब्रह्मकाण्डे तूत्तरमीमांसया
निर्णयसम्यगर्थेऽधीतचराद् यत्किञ्चिदनुसंहितार्थात् कुतश्चिद्वाक्या-
द्धेतोरित्यर्थः। पूर्वमीमांसायाः पूर्वपक्षत्वेनोत्तरमीमांसानिर्णयोत्तर-
पक्षेऽभिलक्ष्यापेक्ष्यत्वादविरुद्धांशे सहायत्वात् कर्म्मणः शान्त्यादि-
लक्षणसत्त्वशुद्धिहेतुत्वाच्च तदनन्तरमित्येव लभ्यम्। वाक्यानि चैतानि—
तद्यथेह कर्म्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः
क्षीयते अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यकामांस्तेषां
सर्वेषु लोकेषु कामचारो भवतीति न स पुनरावर्त्तत इति स चान-
न्ताय कल्पत इति निरञ्जनः परमं साम्यमुपैतीति। इदं ज्ञानमुपा-
श्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति
चेति। तदेतदुभयं विवृतं रामानुजशारीरके—मीमांसापूर्वभागज्ञातस्य
कर्म्मणोऽल्पास्थिरफलत्वं तदुपरितनभागावसेयस्य ब्रह्मज्ञानस्य त्वन-
न्ताक्षयफलत्वं श्रूयते, अतः पूर्ववृत्तात् कर्म्मज्ञानादनन्तरं ब्रह्म ज्ञात-
व्यमित्युक्तं भवति, तदाह सर्वादिवृत्तिकारो भगवान् बौधायनः,
वृत्तात् कर्म्माधिगमादनन्तरं ब्रह्मविविदिषेतीति। एतदेव पुरञ्जनो-
पाख्याने च दक्षिणवामकर्णयोः पितृहूदेवहूशब्दनिरुक्तौ व्यक्त-
मस्ति। तदेवं सम्यक् कर्म्मकाण्डज्ञानानन्तरं ब्रह्मकाण्डगतेषु केषु-
चिद्वाक्येषु स्वर्गाद्यानन्दस्य वस्तुविचारेण दुःखरूपत्वव्यभिचारित्वा-
ल्पत्वज्ञानपूर्वकं ब्रह्मणस्त्वव्यभिचारिपरमानन्दत्वेन सत्यत्वज्ञान-
मेव ब्रह्मजिज्ञासायां हेतुरिति अथात इत्यस्यार्थो लब्धः तन्निर्गलिता-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

र्थमेवाह सत्यमिति। सर्वसत्तादात्रव्यभिचारिसत्ताकमित्यर्थः, परमित्यनेनान्वयात् सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र श्रुतौ च ब्रह्मेत्यनेन। तदेवमन्यस्य तदिच्छाधीनसत्ताकत्वेन व्यभिचारिसत्ताकत्वमायाति। तदेवमत्र तदेतदवधि व्यभिचारिसत्ताकमेव ध्यातवन्तो वयमिदानोमव्यभिचारिसत्ताकं ध्यायेमेति भावः। अथ परत्वमेव व्यनक्ति धाम्नेति। अत्र धामशब्देन प्रभाव उच्यते प्रकाशो वा। गृहदेहत्विट्प्रभावा धामनीत्यमरादिनानार्थवर्गात्, न तु स्वरूपम्। तथा कुहकशब्देनात्र प्रतारणमुच्यते। तच्च जीवस्वरूपावरणविक्षेपकारित्वादिना मायावैभवमेव। ततश्च स्वेन धाम्ना स्वप्रभावरूपया स्वप्रकाशरूपया वा शक्त्या सदा नित्यमेव निरस्तं कुहकं मायावैभवं यस्मात्तम्। तदुक्तम्—मायां व्युदस्य चिच्छक्त्येति। तस्या अपि शक्तेरागन्तुकत्वेन स्वेनेत्यस्य वैयर्थ्यं स्यात्। स्वस्वरूपेणेत्येवं व्याख्याने तु स्वेनेत्यनेनैव चरितार्थता स्यात्। यथा कथञ्चित्तथा व्याख्यानेऽपि कुहकनिरसनलक्षणा शक्तिरेवापद्यते। सा च साधकतमरूपया तृतीयया व्यक्तेति। एतेन मायातत्कार्य्यविलक्षणं यद्वस्तु तत्तस्य स्वरूपमिति स्वरूपलक्षणमपि गम्यम्। तच्च सत्यं ज्ञानमानन्दं ब्रह्मेति विज्ञानमानन्दं ब्रह्मेति श्रुतिप्रसिद्धमेव। एतच्छ्रुतिलक्षकमेव च सत्यमिति विन्यस्तम्। तदेवं स्वरूपशक्तिश्च साक्षादेवोपक्रान्ता ततः सुतरामेवास्य भगवत्त्वं स्पष्टम्। अथ मुख्ये सत्यत्वे युक्तिं दर्शयति यत्रेति। ब्रह्मत्वात् सर्वत्र स्थिते वासुदेवे भगवति यस्मिन् स्थितस्त्रयाणां गुणानां भूतेन्द्रियदेवतात्मको यस्यैवेशितुः सर्गोऽप्ययममृषा शुक्त्यादौ रजतादिकमिवारोपितो न भवति। किन्तु यतो वा इमानीति श्रुतिप्रसिद्धे ब्रह्मणि यत्र सर्वदा स्थितत्वात् संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत् कुर्व्वत उपदेशादिति न्यायेन यदेककर्त्तृकत्वाच्च सत्य एव। तत्र दृष्टान्तेनाप्यमृषात्वं साधयति—तेज-आदीनां विनिमयः परस्परांशव्यत्ययः परस्परस्मिन्नंशेनावस्थितिरित्यर्थः। स यथा मृषा न भवति किन्तु यथैवेश्वरनिर्म्माणन्तथेत्यर्थः।

CC-0- Jangamwadi Math Collection. Digitized by eGangotri

इन्त्येमास्तिस्रो देवतास्त्रिवृदेकैका भवति। यदग्नेरोहितं रूपं तेजस-स्तद्रूपं यत् शुक्लं तदपां यत् कृष्णं तत् पृथिव्याः तदन्नस्येति श्रुतिः। तदेवमर्थस्यास्य श्रुतिमूलत्वात् कल्पनामूलत्वन्योऽर्थः स्वत एव परास्तः। तत्र च सामान्यतया निर्दिष्टानां तेज-आदीनां विशेषत्वे संक्रमणं न शाब्दिकानां हृदयमध्यारोहति। यदि च तदेवामंस्यत तदा वार्य्यादीनि मरीचिकादिषु यथेत्येवावक्ष्यत। किञ्च तन्मते ब्रह्मत-स्त्रिसर्गस्य मुख्यं जन्म नास्ति किन्त्वारोप एव जन्मेत्युच्यते। स पुन-र्भ्रमादेव भवति। भ्रमश्च सादृश्यावलम्बी। सादृश्यन्तु कालभेदेनोभय-मेवाधिष्ठानं करोति। रजतेऽपि शुक्तिभ्रमसम्भवात्। न चैकात्मकं भ्रमाधिष्ठानं बह्वात्मकन्तु भ्रमकल्पितमित्यस्ति नियमो मिथो मिलितेषु विदूरवर्त्ति धूमपर्व्वतवृत्तेष्वखण्डमेघभ्रमसम्भवात्। तदेवं प्रकृतेऽ-प्यनादित एव त्रिसर्गः प्रत्यक्षं प्रतीयते, ब्रह्म च चिन्मात्रतया स्वत एव स्फुरदस्ति। तस्मादनाद्यज्ञानाक्रान्तस्य जीवस्य यथा सद्रूपता-सादृश्येन ब्रह्मणि त्रिसर्गभ्रमः स्यात्तथा त्रिसर्गेऽपि ब्रह्मभ्रमः कथं न कदाचित् स्यात्। ततश्च ब्रह्मण एवाधिष्ठानत्वमित्यनिर्णये सर्वनाश-प्रसङ्गः। आरोपकत्वन्तु जड़स्येव चिन्मात्रस्यापि न सम्भवति। ब्रह्म च चिन्मात्रमेव तन्मतमिति। ततश्च श्रुतिमूल एव व्याख्याने सिद्धे सोऽयमभिप्रायः, यत्र हि यन्नास्ति किन्त्वन्यत्रैव दृश्यते तत्रैव तदारोपः सिद्धः। ततश्च वस्तुतस्तदयोगात् तत्र तत्सत्तया तत्सत्ता कर्त्तुं न शक्यत एव। त्रिसर्गस्य तु तच्छक्तिविशिष्टाद्भगवतो मुख्यवृत्त्यैव जातत्वेन श्रुतत्वात्तद्व्यतिरेकात्तत्रैव सर्वात्मके सोऽस्ति। ततस्तस्मिन्न चारोपितश्च। आरोपस्तु तथापि धाम्नेत्यादिरीत्यैवाचिन्त्यशक्तित्वात्तेन तच्छङ्कारूप एव। तथा च—एकदेशस्थितस्याग्ने-लिङ्गत्वाभावेऽपि ज्योत्स्ना विस्तारिणी यथेत्यनुसारेण तत्सत्तया तत्सत्ता भवति। ततो भगवतो मुख्यं सत्यत्वं त्रिसर्गस्य च न मिथ्यात्वमिति। तथा च श्रुतिः—सत्यस्य सत्यमिति तथा प्राणा वै सत्यं तेषामेव सत्यमिति—

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

[illegible]शब्दोदितानां स्थूलसूक्ष्मभूतानां व्यवहारतः सत्यत्वेनाधिगतानां
[illegible]कारणभूतं परमसत्यं भगवन्तं दर्शयतीति। अथ तमेव तटस्थ-
[illegible]लक्षणेन च तथा व्यञ्जयन् प्रथमं विशदार्थतया ब्रह्मसूत्राणामेव विवृति-
[illegible]रियं संहितेति विबोधयिषया च तदनन्तरं सूत्रमेव प्रथममनुवदति
जन्माद्यस्य यत इति। जन्मादीति सृष्टिस्थितिप्रलयम्। तद्गुणसंवि-
[illegible]ज्ञानवहुव्रीहिः। अस्य विश्वस्य ब्रह्मादिस्तम्बपर्य्यन्तानेककर्त्तृभोक्तृ-
संयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्य-
विविधविचित्ररचनारूपस्य यतो यस्मादचिन्त्यशक्त्या स्वयमुपादान-
रूपात् कर्त्रादिरूपाच्च जन्मादि तं परं धीमहीत्यन्वयः। अत्र विषय-
वाक्यञ्च—भृगुर्वै वारुणिर्वरुणं पितरमुपससार अधीहि भो भगवो ब्रह्मे-
त्यारभ्य यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति
यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति तत्तेजोऽसृजते-
त्यादि च। जन्मादिकमिह्नोपलक्षणं न तु विशेषणम्। ततस्तज्ज्ञाने तन्न
प्रविशति। किन्तु शुद्ध एव ध्येय इति। किञ्च अत्र प्रागुक्तविशेषणविशिष्ट-
विश्वजन्मादेस्तादृशहेतुत्वेन सर्वशक्तित्वं सत्यसङ्कल्पत्वं सर्वज्ञत्वं सर्वे-
श्वरत्वञ्च तस्य सूचितम्। यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयन्तपः सर्वस्य
वशी इत्यादि श्रुतेः। तथा परत्वेन निरस्ताखिलहेयप्रत्यनीकस्वरूपत्व
ज्ञानाद्यनन्तकल्याणगुणत्वं सूचितम्। न तस्य कार्य्यं करणञ्च
विद्यते इत्यादि श्रुतेः। ये तु निर्विशेषवस्तु जिज्ञास्यमिति वदन्ति
तन्मते ब्रह्मजिज्ञासायां जन्माद्यस्य यत इत्यसङ्गतं स्यात्। निरति-
शयबृहद् बृंहणञ्चेति निर्वचनात्। तच्च ब्रह्म जगज्जन्मादिकारण-
मिति वचनाच्च। एवमुत्तरेष्वपि सूत्रेषु सूत्रोदाहृतश्रुतिगणे चेक्षणा-
द्यन्वयदर्शनात् सूत्राणि सूत्रोदाहृतश्रुतयश्च न तत्र प्रमाणम्।
तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषयत्वान्न निर्वि-
शेषवस्तुनि प्रमाणम्। जगज्जन्मादिभ्रमो यतस्तद्ब्रह्मेति स्वोत्प्रेक्ष-
पक्षे च न निर्विशेषवस्तुसिद्धिः। भ्रममूलमज्ञानमज्ञानसाक्षि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ब्रह्मेति उपगमात्। साक्षित्वं हि प्रकाशैकरसतयोच्यते। प्रकाशत्वन्तु जड़ाद्व्यावर्त्तकं स्वस्य परस्य च व्यवहारयोग्यतापादनस्वभावेन भवति। तथा सति सविशेषत्वं, तदभावे प्रकाशतैव न स्यात्, तुच्छतैव स्यात्, किञ्च तेजोवारिमृदामित्यनेनैव तेषां विवक्षितं स्येत्स्यतीति जन्माद्यस्य यत इत्यप्रयोजकं स्यात्, अतस्तद्विशेषवत्त्वे लब्धे स च विशेषः शक्तिरूप एव। शक्तिश्चान्तरङ्गा वहिरङ्गा तटस्था चेति त्रिधा दर्शिता। तत्र विकारात्मकेषु जगज्जन्मादिषु साक्षाद्धेतुता वहिरङ्गाया एव स्यादिति सा मायाख्या चोपक्रान्ता। तटस्था च वयं धीमहीत्यनेन। अथ यद्यपि भगवतोऽंशात्तदुपादानभूतप्रकृत्याख्यशक्तिविशिष्टात् पुरुषादेवास्य जन्मादि तथापि भगवत्येव तद्धेतुता पर्य्यवस्यति। समुद्रैकदेशे यस्य जन्मादि तस्य समुद्र एव जन्मादीति। यथोक्तम्—प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः। सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयन्त्वहमिति। तस्य च भगवतो जन्माद्यस्य यत इत्यनेनापि मूर्त्तत्वमेव लभ्यते। यतो सूर्य्यस्य जगतो मूर्त्तिशक्तेर्निधानरूपताद्दृष्टानन्तपरशक्तीनां निधानरूपोऽसाविल्याक्षिप्यते। तस्य परमकारणत्वाङ्गीकारात्। न च तस्य मूर्त्तत्वे सत्यन्यतो जन्मापत्तेत् अनवस्थापत्तेरेकस्यैवादित्वेनाङ्गीकारात् सांख्यानान्यतो जन्मापतेत् अनवस्थापत्तेरेकस्यैवादित्वेनाङ्गीकारात् ... न चास्य कश्चिज्जनिता न मव्यक्तस्यैव। स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिप इति श्रुतिनिषेधात् अनादिसिद्धप्राकृतस्वाभाविकमूर्त्तित्वेन तस्य तत्प्रसिद्धेश्च। तदेवं मूर्त्तत्वे सिद्धे स च मूर्त्तो विष्णुर्नारायणादिसाक्षाद्रूपकः श्रीभगवानेव नान्यः। तथाच—यतः सर्वाणि भूतानि भवन्त्यादियुगागमे। यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षय इत्यादितत्प्रतिपादकसहस्रनामादौ तत्रैव तु यथोक्तम्—अनिर्द्देश्यवपुः श्रीमानिति। एवञ्च स्कान्दे—स्रष्टा पाता च संहर्त्ता स एको हरिरीश्वरः। स्रष्टृत्वादिकमन्येषां दारुयोषावदुच्यते। एकदेशक्रियादक्षादतु सर्वं लक्ष्यते दितम्। इच्छादिकं दृ.दृ.तु

देव परं भवेदिति । महोपनिषदि च—स ब्रह्मणा सृजति
रुद्रेण विलापयति इत्यादिकम् । अतएव विवृतम्—निमित्तं
मस्य विश्वसर्गनिरोधयोः । हिरण्यगर्भः सर्वस्य कालस्यारूपिण-
ति ॥ तत्र तयो रूपरहितः कालः कालशक्तिस्तस्य निमित्तमात्र-
व्यधिकरण एव षष्ठी । तथा आद्योऽवतारः पुरुषः परस्येत्यादि ।
यतोऽस्य स्थितिजन्मनाशा इत्यादि च । तदेवमत्रापि तथाविध-
र्तिर्भगवानेवोपक्रान्तः । तदेवं तटस्थलक्षणेन परं निर्द्धार्य्य तदेव
लक्षणं ब्रह्मसूत्रे शास्त्रयोनित्वात् तत्तु समन्वयादित्येतत्सूत्रद्वयेन
स्थापितमस्ति । तत्र पूर्वसूत्रस्यार्थः,—कुतो ब्रह्मणो जगज्जन्मादिहेतुत्वं
त्राह, शास्त्रं योनिर्ज्ञानकारणं यस्य तत्त्वात् । यतो वा इमानि
जातानीत्यादिशास्त्रप्रमाणकत्वादिति । नात्र दर्शनान्तरवत् तर्कप्रमाण-
त्वम् । तर्काप्रतिष्ठानात् अत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणा-
विषयत्वाद् ब्रह्मणश्चेति भावः । वैनाशिकास्त्वविरोधाध्याये तर्केणैव
निराकरिष्यन्ते । अत्र तर्काप्रतिष्ठानञ्चैवम्—ईश्वरः कर्त्ता न भवति
प्रयोजनशून्यत्वान्मुक्तात्मवत् ; तनुभुवनादिकं जीवकर्त्तृकं कार्य्यत्वात्
घटवत् ; विमतिविषयः कालो न लोकशून्यः कालत्वात् वर्त्तमान-
कालवदित्यादि । तदेवं दर्शनानुगुण्येनेश्वरानुमानं दर्शनान्तरप्राति-
कूल्यपराहतमिति शास्त्रैकप्रामाणिकः परब्रह्मभूतः सर्वेश्वरः पुरुषो-
त्तमः । शास्त्रन्तु सकलेतरप्रमाणपरिदृष्टसमस्तवस्तुविजातीयसार्व-
ज्ञसत्यसङ्कल्पत्वादिमिश्रानवधिकातिशयापरिमितोदारविचित्रगुणसा-
गरं निखिलहेयप्रत्यनीकस्वरूपं प्रतिपादयतीति न प्रमाणान्तराव-
सितवस्तुसाधर्म्यप्रयुक्तदोषगन्धः । अतएव स्वाभाविकानन्तनित्य-
मूर्त्तिसत्त्वमपि तस्य सिध्यति । अथोत्तरसूत्रस्यार्थः,—ब्रह्मणः कथं
शास्त्रप्रमाणकत्वं तत्राह, तत्त्विति । तुशब्दः प्रसक्ताशङ्कानिवृ-
त्त्यर्थः । तच्छास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवत्येव । कुतः, समन्व-
यात् । अन्वयव्यतिरेकाभ्यामुपपादनं समन्वयस्तस्मात् । तत्रान्वयः—



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सत्यं ज्ञानमनन्तं ब्रह्मेति आन
तत् सत्यं स आत्मेति सदेव सौम्य... पकाशैकरसतयोच्यते। प्रका-
मेकमेवाग्र आसीदिति आत्मा वा इदमेक एवाग्र ...योग्यतापादनस्वभा-
इति पुरुषो ह वै नारायण इति एको ह वै नार... ैव न स्यात्,
बहु स्यां प्रजायेयेति तस्माद्वा एतस्मादात्मन आकाशः ... विवक्षितं
तत्तेजोऽसृजतेति यतो वा इमानि भूतानि जायन्त इति पुरुषो ह
नारायणोऽकामयत अथ नारायणादजोऽजायत यतः प्रजाः सर्वा
भूतानि नारायणं परं ब्रह्म तत्त्वं नारायणः परम् ऋतं सत्यं
ब्रह्म पुरुषं कृष्णपिङ्गलमित्यादिषु च। अथ व्यतिरेकः—कथमस
सज्जायेतेति को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो
स्यादिति एको ह वै नारायण आसीन्न ब्रह्मा न च शङ्कर इत्यादिषु
अन्येषां च वाक्यानां समन्वयस्तत्रैव वक्ष्यते, आनन्दमयोऽभ्यासादि-
त्यादिना। स चैवं परमानन्दरूपत्वेनैव समन्वितो भवतीति तदुप-
लब्धेरेव परमपुरुषार्थत्वसिद्धेर्न प्रयोजनशून्यत्वमपि। तदेवं सूत्रद्व-
स्थिते तदेतद्व्याचष्टे, अन्वयादितरतश्चार्थेष्विति। अर्थेषु नानाविध
वेदावाक्यार्थेषु सत्सु अन्वयात् अन्वयमुखेन यतो यस्मात् एकस्मादस्य
जन्मादि प्रतीयते तथेतरतो व्यतिरेकमुखेन च यस्मादेवास्य तत्
प्रतीयत इत्यर्थः। अतएव तस्य श्रुत्यन्वयव्यतिरेकदर्शितेन परमसुख
रूपत्वेन परमपुरुषार्थत्वञ्च ध्वनितम्। एको ह वै नारायण आसीदि
त्यादिशास्त्रप्रमाणत्वेन प्राक् स्थापितरूपश्चेति। अथेक्षतेर्नाशब्दमिति
व्याचष्टे, अभिज्ञ इति। अत्र सूत्रार्थः,—इदमाम्नायते छान्दोग्ये, सदेव
सौम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म तदैक्षत बहु स्यां प्रजायेयेति
तत्तेजोऽसृजतेत्यादि। अत्र परोक्तं प्रधानमपि जगत्कारणत्वेनायाति,
तच्च नेत्याह, ईक्षतेरिति। यस्मिन् शब्द एव प्रमाणं न भवति तदशब्द-
मानुमानिकं प्रधानमित्यर्थः। न तदिह प्रतिपाद्यम्। कुतोऽशब्दत्वं
तस्येत्याशङ्क्याह, ईक्षतेः। स ऋक्स्वाच्यसम्बन्धिव्यापारविशेषाभिधायिन

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

...रेव परं भवेदिति। महोक्षणञ्चाचेतने प्रधाने न सम्भवेत्।
...द्रेण विलापयति इत्यादि स ऐक्षत लोकान्नु सृजा इति स
...शस्य विश्वसर्गस्थित्यादौ। ईक्षणञ्चात्र तदेशसृज्यविचारात्मकत्वात्
...ति॥ तत्र ...ङ्गीकरोति। तदेतदाह, अभिज्ञ इति। ननु
...सु व्यधित्तेत्यमित्युक्तेस्तस्येक्षणसाधनं न सम्भवति तत्राह,
...डिति। स्वस्वरूपेणैव तथा राजत इति। न तस्य कार्य्यं करणञ्च
... इत्यादौ स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतेः। एतेन-
...मूर्त्तिमत्त्वमपि तस्य स्वाभाविकमित्यायातम्। निःश्वसित-
...ग्रे दर्शयिष्यमाणत्वात्। तच्च यथोक्तमेवेति च। अथ शास्त्र-
...त्वादित्यस्यार्थान्तरं व्याचष्टे, तेन इति। तच्चार्थान्तरं यथा—
तस्य जगज्जन्मादिकर्त्तृत्वं कथं वा नान्यतन्त्रोक्तस्य प्रधानस्य न
...येति तत्राह, शास्त्रस्य वेदलक्षणस्य योनिः कारणन्तद्रूपत्वात्।
...आ अरे अस्य महतो भूतस्य निश्वसितमेतद् यदृग्वेदो यजु-
...सामवेदोऽथर्वाङ्गिरस इतिहासपुराणं विद्या उपनिषदः श्लोकाः
...न्यनुपसूत्राणि व्याख्यानानीति श्रुतेः। शास्त्रं हि सर्वप्रमाणा-
...विविधानन्तज्ञानमयं, तस्य च कारणं ब्रह्मैव श्रूयत इति।
...ं मुख्यं सर्वज्ञं तादृशं सर्वज्ञत्वं विना च सर्वसृष्ट्यादिकमन्यस्य
...पद्यत इति प्रोक्तलक्षणं ब्रह्मैव जगत्कारणं, न प्रधानं, न जीवा-
...मिति। तदेव विवृत्याह—तेने ब्रह्म हृदा य आदिकवय इति।
वेदमादिकवये ब्रह्मणे ब्रह्माणं प्रति हृदान्तःकरणद्वारैव, न तु
...द्वारा, तेने आविर्भावितवान्। अत्र बृहद्वाचकेन ब्रह्मपदेन सर्व-
...मयत्वं तस्य ज्ञापितम्। हृदेत्यनेनान्तर्य्यामित्वं सर्वशक्तिमय-
... ज्ञापितम्। आदिकवय इत्यनेन तस्यापि शिक्षानिदानत्वा-
...त्रयोनित्वञ्चेति। श्रुतिश्चात्र—यो ब्रह्माणं विदधाति पूर्वं यो
...वेदं दधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै .तं ह देवम्
...मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये इति। मुक्तजीवा अपि तत्-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कारणं नेत्याह, मुह्यन्तीति। यत्र ब्रह्मणि वेदाख्ये सूरयः
योऽपि। अनेन च शयनलीलाव्यञ्जितनिश्वसितमयवेदो
विविधाननलोचनस्य यः पद्मनाभस्तदादिमूर्त्तिकः
वाभिहितः। विवृतञ्चैतत्, प्रचोदिता येन पुरा सरस्वती
अथ तत्तु समन्वयादित्यस्यार्थान्तरं, यथा शास्त्रयोनित्वे हेतुः
इत्याह, तत्त्विति। समन्वयोऽत्र सम्यक् सर्वतोमुखोऽन्वयो
वेदार्थपरिज्ञानं यस्मात्तत्, शास्त्रनिदानत्वं निश्चीयत इति
सम्यक् ज्ञानमेव नास्ति प्रधानन्त्वचेतनमेवेतिभावः। स वेत्ति
नहि तस्य वेत्तेति श्रुतेः। तदेतदस्य तदीयसम्यग्ज्ञानं व्यतिरेक
मुखेन बोधयितुं जीवानां सर्वेषामपि तदीयसम्यक्ज्ञानाभाव
मुह्यन्तीति। सूरयः शेषादयोऽपि यद् यत्र शब्दब्रह्मणि मुह्यन्ति
तदेतद्विवृतं स्वयं भगवता—किं विधत्ते किमाचष्टे किमनूद्य विक
ल्पयेत्। इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चनेति। अनेन
साक्षाद्भगवानेवाभिहितः। अथेक्षतेर्नाशब्दमित्यस्यार्थान्तरमभिप्र
त्रैव व्यञ्जितमस्ति। अत्र सूत्रार्थः—नन्वशब्दमसर्वधर्मरूपमव्यय
मित्यादि श्रुतेः। कथं तस्य शब्दयोनित्वं, तत्र हि प्रकृतब्रह्म
हीनं न भवति, कुतः, ईक्षतेः। तदैक्षत बहु स्यां प्रजायेयेत्यत्र
स्यामिति शब्दात्मकेक्षधातोः श्रवणात्। तदेतदाह, अभिज्ञः
स्यामित्यादिशब्दात्मकविचारविदग्धः। स च शब्दादिशक्तिसमु
स्तस्य न प्राकृतः प्रकृतिक्षोभात् पूर्वं तत्रापि सद्भावात्। ततः
एवेत्याह स्वराड़िति। अत्र पूर्ववत्तादृशं सधर्म्मकत्वं मूर्त्तिम
सिद्धम्। यथाहुः सूत्रकाराः—अन्तस्तद्धर्मोपदेशादिति। अतोऽ
दिकं प्राकृतशब्दहीनत्वादिकमेवेति ज्ञेयम्। अत्रोत्तरमीमांसा
चतुष्टयस्याप्यर्थो दर्शितः। तत्रान्वयादितरतश्चेति समन्वया
मुह्यन्ति यत् सूरय इत्यविरोधाध्यायस्य धीमहीति साधना
सत्यं परमिति फलाध्यायस्येति। तथा गायत्र्यर्थोऽपि स्पष्टः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

जन्माद्यस्य यत इति प्रणवार्थः सृष्ट्यादिशक्तिमत्त्ववाचित्वात्। तदेव-मेवाग्निपुराणे गायत्रीव्याख्याने प्रोक्तम्—तज्ज्योतिर्भगवान् विष्णुर्जग-ज्जन्मादिकारणमिति। यत्र त्रिसर्गोऽमृषेति व्याहृतित्रयार्थः। उभयत्रापि लोकत्रयस्य तदनन्यत्वेन विवक्षितत्वात्। स्वराडिति सवितृप्रकाशक-परमतेजोवाचि। तेने ब्रह्म हृदेति बुद्धिवृत्तिप्रेरणाप्रार्थना सूचिता। एव-तदेव कृपया स्वध्यानायास्माकं बुद्धिवृत्तीः प्रेरयतादिति भावः। एव-मेवोक्तम्—गायत्र्या च समारम्भ इति। तच्च तेजस्तत्र अन्तस्तद्धर्मो-पदेशादित्यादिना सम्प्रतिपन्नं यन्मूर्त्तं तदाद्यनन्तमूर्त्तिमदेव ध्येय-मिति। तत्र चाग्निपुराणक्रमवचनानि—एवं सन्ध्याविधिं कृत्वा गाय-त्रीञ्च जपेत् स्मरेत्। गायत्युक्थानि शास्त्राणि भर्गं प्राणांस्तथैव च। ततः स्मृतेयं गायत्री सावित्री यत एव च। प्रकाशिनी सा सवितु-र्वाग्रूपत्वात् सरस्वती। तज्ज्योतिः परमं ब्रह्म भर्गस्तेजो यतः स्मृतः। भर्गः स्याद् भ्राजत इति बहुलं छन्दसीरितम्। वरेण्यं सर्वतेजोभ्यः श्रेष्ठं वै परमं परम्। सर्गापवर्गकामैर्वा वरणीयं सदैव हि। वृणोते-र्वरणार्थत्वात् जाग्रत्स्वप्नादिवर्ज्जितम्। नित्यं शुद्धं बुद्धमेकं नित्यं भर्गमधीश्वरम्। अहं ब्रह्म परं ज्योति र्ध्यायेम हि विमुक्तये। तज्ज्योति-र्भगवान् विष्णुर्जगज्जन्मादिकारणम्। शिवं केचित् पठन्ति स्म शक्ति-रूपं पठन्ति च। केचित् सूर्यं केचिदग्निं दैवतान्यग्निहोत्रिणः। अग्न्यादिरूपी विष्णुर्हि वेदादौ ब्रह्म गीयते। तत् पदं परमं विष्णो-र्देवस्य सवितुः स्मृतम्। दधातेर्वा धीमहीति मनसा धारयेमहि। नोऽस्माकं यच्च भर्गस्तत् सर्वेषां प्राणिनां धियः। चोदयात् प्रेरयाद्बुद्धिं भोक्तॄणां सर्वकर्मसु। दृष्टादृष्टविपाकेषु विष्णुः सूर्याग्निरूपभाक्। ईश्वर-प्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा। ईशावास्यमिदं सर्वं महदादि-जगद्धरिः। स्वर्गाद्यैः क्रीडते देवो यो हंसः पुरुषः प्रभुः। ध्यानेन पुरुषो-ऽयञ्च द्रष्टव्यः सूर्यमण्डले। सत्यं सदाशिवं ब्रह्म विष्णोर्यत् परमं पदम्। देवस्य सवितुर्देवो वरेण्यं हि तुरीयकम्। योऽसावादित्य-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पुरुषः सोऽसावहमनुत्तमम्। जनानां शुभकर्म्मादीन् प्रवर्त्तयति सदेत्यादि। यत्राधिकृत्य गायत्रीं वर्ण्यते धर्म्मविस्तरः। वृत्रासुरवधोत्सितं तद्भागवतमुच्यते इत्यादीनि च। तस्माद्भर्गब्रह्मपरा वि भगवच्छब्दाभिन्नवर्णतया तत्र तत्र निर्द्दिष्टा अपि भगवत्प्रतिपादका एव ज्ञेयाः। मध्ये मध्ये त्वहंग्रहोपासनानिर्द्देशस्तत्साम्य इव तस्ये तदुपासनायोग्यता भवतीति। तथा दशलक्षणार्थोऽप्यत्रैव दृश्यः। तत्र सर्ग विसर्ग स्थाननिरोधा जन्माद्यस्य यत इत्यत्र मन्वन्तरेशानुकथे स्थानान्तर्गते पोषणन्तेन इत्यादौ ऊतिर्मुह्यन्तीत्यादौ मुक्तिः जीवानामा तत्सान्निध्ये सति कुहकनिरसनव्यञ्जके धाम्ने त्यादौ आश्रयः सत्यं प मित्यादौ। स च स्वयं भगवत्त्वेन निर्णीतत्वात् श्रीकृष्ण एवेति पूर्वो प्रकार एव व्यक्त इति। तदेवमस्मिन्नुपक्रमवाक्ये सर्वेषु पदवाक्यतात्पर्ये तस्य ध्येयस्य सविशेषत्वं मूर्त्तिमत्त्वं भगवदाकारत्वञ्च व्यक्तम्। तत्र युक्तम्। स्वरूपवाक्यान्तरव्यक्तत्वात्। योऽस्योत्प्रेक्षक आदिमध्य निधने योऽव्यक्तजीवेश्वरो, यः सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरः शास्ति ताः। यं सम्पद्य जहात्यजामनुशयी सुप्तः कुलायं यथा, तं कैवल्य निरस्तयोनिमभयं ध्यायेदजस्रं हरिमिति। अतो धर्म्मः प्रोज्झितकैत दावनन्तरवाक्येऽपि किं वा परैरित्यादिना तत्रैव तात्पर्य्यं दर्शितम्। तथोपसंहारवाक्याधीनार्थत्वादुपक्रमस्य नातिक्रमणीयमेव। कस्मै येन विभासितोऽयमित्यादिदर्शितं तस्य तादृशविशेषवत्त्वादिकम्। यथैवाक्य गृहीतिरितरवदुत्तरादित्यत्र शङ्करशारीरकस्यापरस्यां योजनायामुप क्रमोक्तस्य सच्छब्दवाच्यस्यात्मत्वमुपसंहारस्यादात्मशब्दाल्लभ्यते तद्वदि हापि चतुःश्लोकीवक्तुर्भगवत्त्वं, दर्शितञ्च श्रीव्याससमाधावपि तस्यै ध्येयत्वम्। तदेव च स्वसुखनिभृतेत्यादि श्रीशुकहृदयानुगतमिति।

१ ॥ १ ॥ श्रीव्यासः ॥ १०४ ॥

अथोपसंहारवाक्यस्याप्ययमर्थः। कस्मै गर्भोदकशायिपुरुषनाभि कमलस्थाय ब्रह्मणे तत्रैव येन महावैकुण्ठं दर्शयता द्वितीयस्कन्धवर्णि

तादृग्रश्रीमूर्त्यादिना भगवता विभाषितः प्रकाशितः न तु तदापि रचितः अयं श्रीभागवतरूपः पुरा पूर्वपरार्द्धादौ तद्रूपेण ब्रह्मरूपेण तद्रूपिणा श्रीनारदरूपिणा योगीन्द्राय श्रीशुकाय तदात्मना श्रीकृष्ण-द्वैपायनरूपेण। तदात्मनेत्यस्योत्तरेणाप्यन्वयः। तत्र तदात्मना श्रीशुक-रूपेणेति ज्ञेयम्। तद्रूपेणेत्यादिभिस्त्रिभिः पदैर्न केवलं चतुःश्लोक्येव तेन प्रकाशिता किन्तर्हि तत्र तत्राविष्टेनाखण्डमेव पुराणमिति द्योतितम्। अत्र मद्रूपेण च युष्मभ्यमिति सङ्कोचेनानुक्तोऽपि श्रीसूत-वाक्यशेषो गम्यः। एवं सर्वस्यापि श्रीभागवतगुरोर्महिमा दर्शितः। सङ्कर्षणसम्प्रदायप्रवृत्तिस्तु कृष्णद्वैपायनकर्तृकप्रकाशनान्तर्गतैवेति पृथङ्नोच्यते। तत्परं सत्यं श्रीभगवदाख्यं तत्त्वं धीमहि। यत्तत्परमनुत्तममिति सहस्रनामस्तोत्रात् परशब्देन च श्रीभगवानेवोच्यते। आद्योऽवतारः पुरुषः परस्येति द्वितीयात्। ब्रह्मादीनां बुद्धिवृत्तिप्रेरकत्वेनाभिधानाद् गायत्र्यर्थोपलक्षितेन धीमहीति गायत्रीपदेनैव यथोपक्रमसुपसंहरन् गायत्र्या अप्यर्थोऽयं ग्रन्थ इति दर्शयति। तदुक्तम्—गायत्रीभाष्यरूपोऽसौ भारतार्थविनिर्णय इति ॥ १२ ॥ १३ ॥ श्रीसूतः ॥ १०५ ॥

अथाभ्यासेन—कलिमलसंहृतिकालनोऽखिलेशो हरिरितरत्र न गीयते ह्यभीक्ष्णम्। इह तु पुनर्भगवानशेषमूर्त्तिः परिपठितोऽनुपदं कथाप्रसङ्गैः ॥ १०६ ॥

कालनो नाशनः। इतरत्र कर्मब्रह्मादिप्रतिपादकशास्त्रान्तरे। अखिलेशो विराडन्तर्यामी नारायणोऽपि तत्पालको विष्णुर्वापि न गीयते क्वचिद् गीयते वा तत्र त्वभीक्ष्णं नैव गीयते तुशब्दोऽवधारणे साक्षात् श्रीभगवान् पुनरिह श्रीभागवते एवाभीक्ष्णं गीयते। नारायणादयो वा येऽत्र वर्णितास्तेऽप्यशेषा एव मूर्त्तयोऽवतारा यस्य सः। तथाभूत एव गीयते न त्वितरत्रेव तदविवेकेनेत्यर्थः। अतएव तत्तत्कथाप्रसङ्गैरनुपदं पदं पदमपि लक्ष्यीकृत्य भगवानेव परि सर्वतोभावेन पठितो

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

व्यक्तमेवोक्ता इति। अनेनापूर्वतापि व्याख्याता अन्यत्रानधिगतत्वात्॥ १२ ॥ १२ ॥ श्रीसूतः ॥ १०६ ॥

अथ फलेनापि—पिबन्ति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु संभृतम्। पुनन्ति ते विषयविदूषिताशयं व्रजन्ति तच्चरणसरोरुहान्तिकम् ॥ १०७ ॥

सतामात्मनः प्राणेश्वरस्य यद्वा व्यधिकरणे षष्ठी सतामात्मनः स्वरूयो भगवांस्तस्येत्यर्थः। तेषां भगवति स्वामित्वेन ममतास्पदत्वात्। अत्र कथामृतं प्रक्रस्यमाणं श्रीभागवताख्यमेव मुख्यम्। यस्यां वै श्रूयमाणायामित्यादिकञ्च तथैवोक्तमिति ॥२॥२॥ श्रीशुकः ॥१०७॥

अथार्थवादेन—यं ब्रह्मा वरुणेन्द्ररुद्रमरुतस्तुन्वन्ति दिव्यैः स्तवैर्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः। ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥ १०८ ॥

स्तवैर्वेदैश्च स्तुन्वन्ति स्तुवन्ति। ध्यानेनावस्थितं निश्चलं तद्गतं यन्मनस्तेन ॥ १२ ॥ १२ ॥ श्रीसूतः ॥१०८॥

अथोपपत्त्या—भगवान् सर्वभूतेषु लक्षितः स्वात्मना हरिः। दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः ॥ १०९ ॥

प्रथमं द्रष्टा जीवो लक्षितः। कैः दृश्यैर्बुद्ध्यादिभिः। तदेव द्वेधा दर्शयति—दृश्यानां जड़ानां बुद्ध्यादीनां दर्शनं स्वप्रकाशं द्रष्टारं विना न घटत इत्यनुपपत्तिद्वारा लक्षणैः स्वप्रकाशद्रष्टृलक्षकैः तथा बुद्ध्यादीनि कर्त्तृप्रयोज्यानि करणत्वाद्वास्यादिवदिति व्याप्तिद्वारानुमापकैरिति। अथ भगवानपि लक्षितः, केन सर्वभूतेषु सर्वेषु तेषु द्रष्टृषु प्रविष्टेन स्वात्मना स्वांशरूपेणान्तर्यामिणा। आदौ सर्वद्रष्टृभिरन्तर्यामी लक्षितः ततस्तेन भगवानपि लक्षित इत्यर्थः। स च स पूर्ववत् द्विधैव लक्ष्यते। तथाहि कर्त्तृत्वभोक्तृत्वयोरस्वातन्त्र्यदर्शनात् कर्मणां जड़त्वात् सर्वेषामपि जीवानां तत्र तत्र प्रवृत्तिरन्तःप्रयोजक-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विशेषं विना न घटत इत्यनुपपत्तिद्वारान्तर्यामी लक्ष्यते । एवं छन्नेनात्मना चक्षुषा दर्शयति श्रोत्रेण श्रावयति मनसा मनयति बुद्ध्या बोधयति तस्मादेता वाङ्ः । स्तुतिरस्तुतिरिति भाल्लवेयश्रुतिश्च । अथ तस्मै चान्तर्यामित्वैश्वर्य्याय तेषु यदि सर्वांशेनैव प्रविशति कोऽपि परस्तदा स्वतः पूर्णत्वाभावादनीश्वरत्वमेव स्यादित्यनुपपत्तिद्वारान्तर्यामिरूपेण तस्यांशेन भगवानपि लक्षितः । अत एव गीतोपनिषत्सु—अथवा बहुनैतेन किं ज्ञातेन तवार्जुन । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् इति । विष्णुपुराणे च—यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थिता इति । तथा जीवाः प्रयोजककर्त्तृप्रेरितव्यापाराः, अस्वातन्त्र्यात्, तच्चादिकर्म्मकरजनवदित्येवमन्तर्यामिणि तत्त्वे व्याप्तिद्वारा सिद्धे, पुनस्तेनैव भगवानपि साध्यते । तुच्छवैभवजीवान्तर्यामिस्वरूपमीश्वरतत्त्वं निजांशितत्त्वाश्रयं, तथैव पर्य्याप्तेः, राजप्रभुत्वाश्रिततच्चादिकर्म्मकरप्रयोजकप्रभुत्वादिवदिति । अथवात्र, यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः । एको नानेयते तद्वद्भगवान् शास्त्रवर्त्मभिरित्येवोदाहरणीयम् । अनेनैव गतिसामान्यञ्च सिद्धतीति ॥२॥२॥ श्रीशुकः ॥ १०८ ॥ प्रत्यवस्थापितं वदन्तीत्यादिपद्यम् ॥

इति श्रीकलियुगपावनस्वभजनविभजनप्रयोजनावतार-
श्रीभगवत्कृष्णचैतन्यदेवचरणानुचरविश्ववैष्णव-
राजसभाजनभाजनश्रीरूपसनातनानुशासन-
भारतीगर्भे श्रीभागवतसन्दर्भे परमात्म-
सन्दर्भो नाम तृतीयः सन्दर्भः ।

श्रीभागवतसन्दर्भे सर्वसन्दर्भगर्भगे ।
परमात्माभिधेयोऽसौ सन्दर्भोऽभूत्तृतीयकः ॥

समाप्तोऽयं तृतीयः सन्दर्भः ।



SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY.
Jangamwadi Math, VARANASI
Acc. No.
CC.0- Jangamwadi Math Collection. Digitized by eGangotri

षट्सन्दर्भनामक-

# श्रीभागवतसन्दर्भे

चतुर्थः

## श्रीकृष्णसन्दर्भः ।

तौ सन्तोषयता सन्तौ श्रीलरूपसनातनौ ।
दाक्षिणात्येन भट्टेन पुनरेतद्विविच्यते ॥
तस्याद्यं ग्रन्थनालेखं क्रान्तव्युत्क्रान्तखण्डितम् ।
पर्य्यालोच्याथ पर्य्यायं कृत्वा लिखति जीवकः ॥

अथ पूर्वसन्दर्भत्रयेण यस्य सर्वपरत्वं साधितं तस्य श्रीभगवत् निर्द्धारणाय सन्दर्भोऽयमारभ्यते। तत्र प्रथमस्य द्वितीये वदन्ति त्यादिना तदेकमेव तत्त्वं ब्रह्मादितया शब्द्यत इत्युक्तम्। तदे ब्रह्मादित्रयं तृतीये विविच्यते। ब्रह्म त्विह, यत्रेमे सदसद्रूपे प्रतिषि स्वसंविदा। अविद्ययात्मनि कृते इति तद्ब्रह्मदर्शनम् ॥ इत्यादिना त विविक्तमपि, एकाकाराविर्भावतया संशयाभावान्नोपयुक्तम्, इति त चत्रं नोदाहरणीयम्। श्रीभगवत्परमात्मनोस्तूदाह्रियते। तत्र ईश्वरो नाम निराकारो नास्तीति पूर्वं निर्णीतं, परमात्मशब्देन च सर्वान्त र्य्यामिपुरुषः प्रतिपादितः, तेष्वेव सन्दर्भेषु। तथाच सति तस्मिंस्तृतीया ध्यायारम्भ एवमाभास्यम्। ननु पूर्वं ब्रह्मादितया त्रिधैव तत्त्वमेकमु क्तम्। तत्र ब्रह्मणः किं लक्षणं भगवत्परमात्मनोर्वा तत्र विशेषः कश्चि किमस्तीति श्रीमदीश्वराकारादिषु वहुषु च सत्सु श्रीभगवान् कतमाकारः परमात्मा वा तयोश्च किं स्वरूपादिकमिति श्रीशौनकादि प्रश्नमाशङ्क्य प्रथमं श्रीभगवत्परमात्मानौ निर्द्धारयन् श्रीसूत उवाच।

जगृहे पौरुषं रूपं भगवान्महदादिभिः ।
सम्भूतं षोड़शकलमादौ लोकसिसृक्षया ॥ १ ॥

आदौ जीवाविर्भावमहदादिसृष्टितः पूर्वं पौरुषं रूपं जगृहे प्रकटितवान् । केन हेतुना, लोकसिसृक्षया, लोकानां समष्टिव्यष्टि-जीवानां तदधिष्ठानानाञ्च प्रादुर्भावार्थमित्यर्थः । तस्मिन् हि तानि लीनान्यासन्निति । अतस्तत्प्रादुर्भावस्तृतीये तद्द्वारैवोक्तः, भगवानेक आसेदमित्यादिप्रकरणे, कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः । पुरुषेणात्मभूतेन वीर्य्यमाधत्त वीर्य्यवान् इति । तत्र तेषां सद्भावं विष्णोति, महदादिभिः सम्भूतं मिलितम् अन्तर्भूतमहदादितत्त्वमित्यर्थः । सोऽन्तःशरीरेऽर्पितभूतसूक्ष्म इति तृतीयादेव । संपूर्वो भवतिः सङ्ग-मार्थे प्रसिद्ध एव, सम्भूयाम्भोधिमभ्येति महानद्या नगापगेत्यादौ । तदेवं विष्णोस्तु त्रीणि रूपाणि इत्यादौ महत्स्रष्टृत्वेन प्रथमं पुरुषाख्यं रूपं यत् श्रूयते, यच्च ब्रह्मसंहितादौ कारणार्णवशायिसङ्कर्षणत्वेन श्रूयते, तदेव जगृहे इति प्रतिपादितम् । तस्य जगत्सृष्ट्यादिकर्त्तृत्वेन ततोऽपि परत्वैश्वर्य्यसम्भावनार्थमाह, षोड़शकलं सम्पूर्णसर्वशक्तियुक्त-मित्यर्थः । पूर्णत्वञ्चापेक्षिकं, स्वरूपशक्तिनिधिरपि स्वसान्निध्येन मायावृत्तिभिर्जगत्सृष्ट्यादिकर्त्ता भगवदंशविशेषः सर्वान्तर्य्यामिपुरुषा-परपर्य्यायः परमात्मा, भगवांस्तु ततोऽपि परस्तदंशी स्वरूपशक्त्येक-विलासवान् इत्यभिहितम् । तदेवं सामान्यतो भगवत्परमात्मानौ निरूप्य परमात्मानं तावदनेकैः स्थानकर्म्मस्वरूपाकारविशेषैः निर्द्धा-रयति त्रिभिः ।

यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः ।
नाभिह्रदाम्बुजादासीद्ब्रह्मा विश्वसृजां पतिः ॥ २ ॥

यस्य पौरुषरूपस्याम्भसि प्रलयकालीनगर्भोदके शयानस्य सतः । तथाच भारते मोक्षधर्म्मनारायणीये—अस्मन्मूर्त्तिश्चतुर्थी या सासृज-च्छेषमव्ययम् । स हि सङ्कर्षणः प्रोक्तः प्रद्युम्नं सोऽप्यजीजनत् । प्रद्यु-म्नादनिरुद्धोऽहंसर्गो मम पुनः पुनः । अनिरुद्धात्तथा ब्रह्मा तन्नाभि-कमलोद्भवः । ब्रह्मणः सर्वभूतानि स्थावराणि चराणि च । तत्रैव व्यासः—

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

परमात्मेति यं प्राहुः सांख्ययोगविदो जनाः । महापुरुषसंज्ञां स लभ
स्वेन कर्मणा ॥ तस्मात् प्रसूतमव्यक्तं प्रधानं तद्विदुर्बुधाः । अव्यक्ता
द्व्यक्तमुत्पन्नं लोकसृष्ट्यर्थमीश्वरात् ॥ अनिरुद्धो हि लोकेषु मह
नात्मेति कथ्यते । योऽसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम्
इति । ततोऽत्रावान्तरभेदेऽप्यभेदस्वीकारेण द्विव्यूह्योक्तिरित्येव विज्ञे
इति वासुदेवस्थानीयो भगवांस्तस्मादन्य एवेत्यायातम् । एवमेव
दशमे च—भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन्
स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ॥ इत्यत्र तैः
व्याख्यातम् । आदौ पुरुषावतारमाह भूतैरिति । यदा स्वसृष्टैः
भूतैः विराजं ब्रह्माण्डं पुरं निर्माय तस्मिन् लीलया प्रविष्टः न
भोक्तृत्वेन प्रभूतपुरुषस्य जीवस्य तत्र भोक्तृत्वादित्येवमस्योत्तरत्र श्लोक
द्वयेऽप्येवमेवार्थो दृश्यते । तथा द्वितीयस्य षष्ठे—स एष आद्यः पुरु
इत्यादिपद्ये च टीका, स एष आद्यो भगवान् यः पुरुषावतारः स
सृष्ट्यादिकं करोतीत्येषा । एवमाद्योऽवतारः पुरुषः परस्येत्य
टीका च दर्शितैव । तथा तृतीयस्य विंशे दैवेनेत्यादिकं सोऽनिरुद्ध
सटीकमेव प्रकरणमत्रानुसन्धेयम् । तस्माद्विराट्त्वेन तद्रूपं न
व्याख्यातम् । अत्र महत्स्रष्टृब्रह्माण्डप्रविष्टपुरुषयोरभेदेनैवोक्तिः
अथ तटस्थस्वरूपलक्षणाभ्यां तदेव विशिनष्टि ।

यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः ।
तद्वै भगवतो रूपं विशुद्धं सत्त्वमूर्जितम् ॥ ३ ॥

अवयवसंस्थानैः साक्षात् श्रीचरणादिसन्निवेशैर्लोकविस्तरो विरा
ड़ाकारः प्रपञ्चः कल्पितः । यथा तदवयवसन्निवेशस्तथैव पाताल
मेतस्य हि पादमूलमित्यादिना नवीनोपासकान् प्रति मनःस्थैर्या
प्रख्यापितः । न तु वस्तुतस्तदेव तस्याङ्गमित्यर्थः । तत् श्रीभगवत
पौरुषं रूपं वै प्रसिद्धौ विशुद्धोर्जितसत्त्वाभिव्यक्तत्वात् शक्तिस्वरूपयो
रभेदाच्च तद्रूपमेवेत्यर्थः । उक्तञ्च स्वरूपत्वं तद्रूपस्य—नातः परं पर

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यद्भवतः स्वरूपमित्यत्र। विशुद्धं जाड्यांशेनापि रहितं, स्वरूप-शक्तिवृत्तित्वात्। ऊर्जितं सर्वतो बलवत्, परमानन्दरूपत्वात्। को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यादिति श्रुतेः। तदेवं पुरुषस्य स्थानकर्म्मस्वरूपाण्यभिधायाकारमप्याह—

पश्यन्त्यदो रूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतम्।
सहस्रमूर्द्धश्रवणाक्षिनासिकं सहस्रमौल्यम्बरकुण्डलोल्लसत्॥ ४॥

अदः पौरुषरूपमदभ्रचक्षुषा भक्त्याख्येन। पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्ययेत्युक्तेः। अस्य सहस्रपादादित्वञ्च व्यञ्जितं तृतीयस्य चतुर्थे श्रीमैत्रेयेण—विश्वभुजाङ्घ्रिपाङ्घ्रेरिति दोर्दण्ड-सहस्रशाखमिति किरीटसाहस्रहिरण्यशृङ्गमिति च। तथा नवमस्य चतुर्दशे श्रीशुकेन—सहस्रशिरसः पुंसो नाभिह्रदसरोरुहात्। जातस्या-सीत् सुतो धातुरत्रिः पितृसमो गुणैरिति। तस्य पूर्णत्वमेव विवृणोति।

एतन्नानावताराणां निधानं वीजमव्ययम्।
यस्यांशांशेन सृज्यन्ते देवतिर्य्यङ्नरादयः॥ ५॥

निधानं स्वरश्मीनां सूर्य्य इव सदैवाश्रयः। अतएवाव्ययम् अन-पचयम्। वीजमुद्गमस्थानम्। न केवलमवताराणां वीजं जगतोऽपी-त्याह, यस्येति। अथ प्राचुर्य्येण तदवतारान् कथयंस्तदैक्यविवक्षया तदंशांशिनोरप्याविर्भावमात्रं गणयति विंशत्या।

स एव प्रथमं देवः कौमारं सर्गमाश्रितः।
चचार दुश्चरं ब्रह्मा ब्रह्मचर्य्यमखण्डितम्॥ ६॥

योऽम्भसि शयानो यस्य सहस्रपादादिरूपः स एव पुरुषाख्यो देवः। एते चांशकलाः पुंस इत्युपसंहारस्यापि संवादात्। कौमारं चतुः-सनरूपम्। ब्रह्मा ब्राह्मणो भूत्वा।

द्वितीयन्तु भवायास्य रसातलगतां महीम्।
उद्धरिष्यन्नुपादत्त यज्ञेशः शौकरं वपुः॥ ७॥

अस्य विश्वस्य उद्भवाय।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तृतीयमृषिसर्गं वै देवर्षित्वमुपेत्य सः ।
तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्म्मणां यतः ॥ ८ ॥

ऋषिसर्गमुपेत्य तत्रापि देवर्षित्वं नारदत्वमुपेत्य। सात्वतं वैष्णवम्। तन्त्रं पञ्चरात्रागमम्। कर्म्मणां कर्म्माकारेणापि सतां श्रीभगवद्धर्म्माणां यतस्तन्त्रान्नैष्कर्म्यं कर्म्मबन्धमोचकत्वेन कर्म्मभ्यो निर्गतत्वं तेभ्यो भिन्नत्वं प्रतीयत इति शेषः।

तुर्य्ये धर्म्मकलासर्गे नरनारायणावृषी।
भूत्वात्मोपशमोपेतमकरोद्दुश्चरं तपः ॥ ९ ॥

स्पष्टम्।

पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम्।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम् ॥ १० ॥

आसुरिनाम्ने विप्राय।

षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया।
आन्विक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान् ॥ ११ ॥

अत्रिणा तत्सदृशपुत्रोत्पत्तिमात्रं प्रकटं याचितमिति चतुर्थ्यभिप्रायः। एतद्वाक्येनानसूयया तु कदाचित् साक्षादेव श्रीमदीश्वरस्यैव पुत्रभावो वृतोऽस्तीति लभ्यते। उक्तञ्च ब्रह्माण्डपुराणे प्रतिव्रतोपाख्याने—अनसूयाब्रवीन्नत्वा देवान् ब्रह्मेशकेशवान्। यूयं यदि प्रसन्ना मे वरार्हा यदि वाप्यहम्। प्रसादाभिमुखो भूत्वा मम पुत्रत्वमेष्यथेति। आन्विक्षिकीमात्मविद्याम्। श्रीविष्णोरेवावतारोऽयम्।

ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत।
स यामाद्यैः सुरगणैरपात् स्वायम्भुवान्तरम् ॥ १२ ॥

स यज्ञः तदा स्वयमिन्द्रोऽभूदित्यर्थः।

अष्टमे मेरुदेव्यान्तु नाभेर्जात उरुक्रमः।
दर्शयन् वर्त्म धीराणां सर्वाश्रमनमस्कृतम् ॥ १३ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

उरुक्रमो ऋषभो जातः ।

ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः ।
दुग्धेमामोषधीर्विप्रास्तेनायं स उशत्तमः ॥ १४ ॥

पार्थिवं राजदेहं पृथुरूपम् । उशत्तमः कमनीयतमः ।

रूपं स जगृहे मात्स्यं चाक्षुषान्तरसंप्लवे ।
नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् ॥ १५ ॥

चाक्षुषमन्वन्तरे य उदधिसंप्लवस्तस्मिन् । वैवस्वतमिति भाविनी संज्ञा सत्यव्रतस्य । प्रतिमन्वन्तरावसानेऽपि प्रलयः श्रूयते । श्रीविष्णुधर्मोत्तरे प्रथमकाण्डे—मन्वन्तरे परिक्षीणे कीदृशी द्विज जायत इति श्रीवज्रप्रश्नस्य मन्वन्तरे परिक्षीणे इत्यादिमार्कण्डेयदत्तोत्तरे—ऊर्मिमाली महावेगः सर्वमावृत्य तिष्ठति । भूर्लोकमाश्रितं सर्वं तदा नश्यति यादव । न विनश्यन्ति राजेन्द्र ! विश्रुताः कुलपर्वताः । नौर्भूत्वा तु महादेवी इत्यादि च । एवमेव मन्वन्तरेषु संहार इत्यादिप्रकरणं श्रीहरिवंशे तदीयटीकासु च स्पष्टमेव । अतस्त्वाक्षुषे वैवस्वतमित्युपलक्षणम् ।

सुरासुराणामुदधिं मथ्नतां मन्दराचलम् ।
दध्रे कमठरूपेण पृष्ठ एकादशे विभुः ॥ १६ ॥

स्पष्टम् ।

धान्वन्तरं द्वादशमं त्रयोदशममेव च ।
अपाययत् सुरानन्यान्मोहिन्या मोहयन् स्त्रिया ॥ १७ ॥

बिभ्रदित्युत्तरेणान्वयः । द्वादशमं धान्वन्तरं रूपं बिभ्रत् त्रयोदशमञ्च मोहिनीरूपं बिभ्रत् । सुरानपाययत् सुधामिति शेषः । केन रूपेण, मोहिन्या स्त्रिया, तद्रूपेणेत्यर्थः । किं कुर्वन्, अन्यानसुरान् मोहयन्, धन्वन्तरिरूपेण सुधाञ्चोपहरन्निति शेषः । अजितस्यावतारा एते त्रयः ।

चतुर्दशं नारसिंहं बिभ्रद्दैत्येन्द्रमूर्जितम् ।
ददार करजैरूरावेरकां कटकृद् यथा ॥ १८ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नारसिंहं रूपं बिभ्रत् ।

पञ्चदशं वामनकं कृत्वागादध्वरं बलेः ।
पादत्रयं याचमानः प्रत्यादित्सुस्त्रिपिष्टपम् ॥ १९ ॥

कृत्वा प्रकटय्य ।

अवतारे षोड़शमे पश्यन् ब्रह्मद्रुहो नृपान् ।
त्रिःसप्तकृत्वः कुपितो निःक्षत्रामकरोन्महीम् ॥ २० ॥

अवतारे श्रीपरशुरामाभिधे ।

ततः सप्तदशे जातः सत्यवत्यां पराशरात् ।
चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥ २१ ॥

स्पष्टम् ।

नरदेवत्वमापन्नः सुरकार्य्यचिकीर्षया ।
समुद्रनिग्रहादीनि चक्रे वीर्य्याख्यतः परम् ॥ २२ ॥

नरदेवत्वं श्रीराघवरूपेण । अतः परमष्टादशे। अयं साक्षात् पुरुष एव । स्कान्दे श्रीरामगीतायां विश्वरूपं दर्शयतस्तस्य ब्रह्मविष्णुरुद्रकृतस्तुतेः श्रवणात् ।

एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी ।
रामकृष्णाविति भुवो भगवानहरद्भरम् ॥ २३ ॥

भगवानिति साक्षाद्भगवत एवाविर्भावोऽयं न तु पुरुषसंज्ञस्यानिरुद्धस्येति विशेषप्रतिपत्त्यर्थं तत्र तस्य साक्षाद्रूपत्वात् श्रीकृष्णरूपेण निजांशरूपत्वाद्रामरूपेणापि भारहारित्वं भगवत एवेत्युभयत्रापि भगवानहरद्भरमिति श्लिष्टमेव । अतो रामस्याप्यनिरुद्धावतारत्वं स्वयं प्रत्याख्यातम् । श्रीकृष्णस्य वासुदेवत्वाच्छ्रीरामस्य च सङ्कर्षणत्वाद् युक्तमेव च तदिति ।

ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषाम् ।
बुद्धो नाम्नाजिनसुतः कीकटेषु भविष्यति ॥ २४ ॥

कीकटेषु गयाप्रदेशे ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अथासौ युगसन्ध्यायां दस्युप्रायेषु राजसु ।
जनिता विष्णुयशसो नाम्ना कल्किर्जगत्पतिः ॥ २५ ॥

युगसन्ध्यायां कलेरन्ते ।

अथ श्रीहयग्रीवहरिहंसपृश्निगर्भविभुसत्यसेनवैकुण्ठाजितसार्वभौम-विष्वक्सेनधर्मसेतुसुधामयोगेश्वरबृहद्भान्वादीनां मुक्तादीनाञ्चानुक्तानां संग्रहार्थमाह—

अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः ।
यथाविदासिनः कुल्याः सरसः स्युः सहस्रशः ॥ २६ ॥

असंख्येयत्वे हेतुः सत्त्वनिधिः सत्त्वस्य तत्प्रादुर्भावशक्तेः सेवधि-रूपस्य । तत्रैव दृष्टान्तः यथेति । अविदासिन उपक्षयशून्यात् सरसः सकाशात् । अत्र येऽंशावतारास्तेषु चैष विशेषो ज्ञेयः । श्रीकुमार-नारदादिष्वाधिकारिकेषु ज्ञानभक्तिशक्त्यंशावेशः । श्रीपृथ्वादिषु क्रिया-शक्त्यंशावेशः । क्वचित्, स्वयमावेशस्तेषां भगवानेवाहमिति वच-नात् । अथ श्रीमत्स्यदेवादिषु साक्षादंशत्वमेव । तत्र चांशत्वं नाम साक्षाद्भगवत्त्वेऽप्यव्यभिचारिताहृशतदिच्छावशात् सर्वदैकदेशतयैवाभि-व्यक्तशक्त्यादिकत्वमिति ज्ञेयम् । तथैवोदाहरिष्यते—रामादिमूर्त्तिषु कलानियमेन तिष्ठन्निति । अथ विभूतीराह—

ऋषयो मनवो देवा मनुपुत्रा महौजसः ।
कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः ॥ २७ ॥

कला विभूतयः । अल्पशक्तेः प्रकाशादिभूतित्वं महाशक्तेस्त्वावे-शत्वमिति भेदः । तदेवं परमात्मानं साङ्गमेव निर्द्धार्य प्रोक्तानुवाद-पूर्वकं श्रीभगवन्तमप्याकारेण निर्द्धारयति—

एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमिति ॥ २८ ॥

एते पूर्वोक्ताः च शब्दादनुक्ताश्च प्रथममुद्दिष्टस्य पुंसः पुरुषस्यांश-कलाः, केचिदंशाः स्वयमेवांशाः साक्षादंशत्वेनांशांशत्वेन च द्विविधाः, केचिदंशाविष्टत्वादंशाः, केचित्तु कला विभूतयः । इह यो विंशति-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तस्यावतारत्वेन कथितः स कृष्णस्तु भगवान् पुरुषस्याप्यवतारी
भगवान् स एव एवेत्यर्थः। अत्र अनुवादमनुक्त्वैव न विधेयमुदीरये
दिति वचनात् कृष्णस्यैव भगवत्त्वलक्षणो धर्म्मः साध्यते न तु भगव
कृष्णत्वमित्यायातम्। ततश्च श्रीकृष्णस्यैव भगवत्त्वलक्षणधर्मि
सिद्धे मूलावतारित्वमेव सिद्ध्यति, न तु ततः प्रादुर्भूतत्वम्। एतदे
व्यनक्ति स्वयमिति। तत्र च स्वयमेव भगवान् न तु भगवतः प्रादुर्भू
तया, न तु वा भगवत्त्वाध्यासेनेत्यर्थः। न चावतारप्रकरणेऽपि पठि
इति संशयः, पौर्वापर्य्ये पूर्वदौर्बल्यं प्रकृतिवदिति न्यायात्। यथाग्नि
ष्टोमे यद्युद्गाता विच्छिद्याददक्षिणेन यजेत यदि प्रतिहर्त्ता सर्ववे
दक्षिणेनेति श्रुतिः। तयोश्च कदाचिद्द्वयोरपि विच्छेदे प्राप्ते विरुद्ध
प्रायश्चित्तयोः समुच्चयासम्भवे च परमेव प्रायश्चित्तं सिद्धान्तितं तद्वदि
हापि इति। अथवा कृष्णस्त्विति श्रुत्या प्रकरणस्य बाधात्, यथ
शङ्करशारीरके भाष्ये श्रुत्यादिबलीयस्त्वाच्च न बाध इति सूत्रे, ते
विद्याचित एवेति श्रुतिर्मनश्चिदादीनामग्नीनां प्रकरणप्राप्तं क्रियाङ्ग
प्रवेशलक्षणम् अस्वातन्त्र्यं बाधित्वा विद्याचित्त्वेनैव स्वातन्त्र्यं स्थाप
यति, तद्वत्। अत एतत्प्रकरणेऽप्यन्यत्र क्वचिदपि भगवच्छब्दम
कृत्वा तत्रैव भगवानङ्करमिति अनेन कृतवान्। ततश्चास्या
वतारेषु गणनात्तु स्वयं भगवानप्यसौ स्वरूपस्थ एव निजपरि
जनवृन्दानामानन्दविशेषचमत्काराय किमपि माधुर्य्यं निजजन्मादि
लीलया पुष्णन् कदाचित् सकललोकदृश्यो भवतीत्यपेक्ष्यैवेत्या
यातम्। यथोक्तं ब्रह्मसंहितायाम्—रामादिमूर्त्तिषु कलानियमेन
तिष्ठन्नानावतारमकरोद्भुवनेषु किन्तु कृष्णः स्वयं समभवत् परमः
पुमान् यो गोविन्दमादिपुरुषं तमहं भजामीति। अवतारश्च प्राकृत
वैभवेऽवतरणमिति। श्रीकृष्णसाहचर्य्येण श्रीरामस्यापि पुरुषांशत्वात्त्वं
ज्ञेयः। अत्र तुशब्दोऽंशकलाभ्यः पुंसश्च सकाशाद्भगवतो वैलक्ष
बोधयति। यद्वानेन तुशब्देन सावधारणा श्रुतिरियं प्रतीयते।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ततः सावधारणा श्रुतिर्बलवतीति न्यायेन श्रुत्यैव श्रुतमप्यन्येषां मत्स्या-
नारायणादीनां स्वयं भगवत्त्वं गुणीभूतमापद्यते। एवं पुंस इति भग-
वानिति च प्रथमसुपक्रमोद्दिष्टस्य शब्दद्वयस्य तत्सङ्केतोदेश्य तेनैव
शब्देन च प्रतिनिर्देशात्ताविव खल्वेताविति स्मारयन्ति। उद्देशप्रति-
निर्देशयोः प्रतीतिस्थगितत्वानिरसनाय विद्वद्भिरेक एव शब्दः प्रयुज्यते
तत्समकर्णा वा। यथा ज्योतिष्टोमाधिकरणे वसन्ते वसन्ते च
ज्योतिषा यजेतेत्यत्र ज्योतिःशब्दो ज्योतिष्टोमविषयो भवतीति। अत्र
तत्त्ववादगुरवस्तु चशब्दस्थाने स्वशब्दं पठित्वैवमाचक्षते, एते प्रोक्ता
अवताराः, मूलरूपी स्वयमेव, किंस्वरूपाः स्वांशकला न तु जीववद्वि-
भिन्नांशाः। यथा वाराहे—स्वांशश्चाथ विभिन्नांश इति द्वेधांश इष्यते।
अंशिनो यत्तु सामर्थ्यं यत् स्वरूपं यथा स्थितिः। तदेव नाणुमात्रोऽपि
भेदः स्वांशांशिनोः क्वचित्। विभिन्नांशोऽल्पशक्तिः स्यात् किञ्चित् साम-
र्थ्यमात्रयुगितीति। अत्रोच्यते। अंशानामंशिसामर्थ्यादिकं तदैक्येनैव
मन्तव्यम्। तच्च यथाविदासिन इत्यादौ तस्याक्षयत्वेन तासामक्षयत्वं
यथा तद्वत् अंशांशित्वानुपपत्तेरेव। तथा च श्रीवासुदेवानिरुद्धयोः सर्वथा
साम्ये प्रसक्ते कदाचिदनिरुद्धेनापि वासुदेवस्याविर्भावना प्रसज्येत।
तच्च श्रुतिविपरीतमित्यसदेव। तस्मादस्त्येवावतार्यवतारयोस्तारतम्यम्।
अतएव तृतीयस्याष्टमे—आसीनमुर्व्यां भगवन्तमाद्यं सङ्कर्षणं देवस-
कुण्ठधिष्ण्यम्। विवित्सवस्तत्त्वमतः परस्य कुमारमुख्या मुनयोऽन्व-
पृच्छन्। स्वमेव धिष्ण्यं बहु मानयन्तं यद्वासुदेवाभिधमामनन्तीत्यादौ
वासुदेवस्य सङ्कर्षणादपि परत्वं श्रूयते। यत्तु तेषां तथा व्याख्यानम्—
अत्र कृष्णस्त्वित्यनर्थकं स्यात्, भगवान् स्वयमित्यनेनैवाभिप्रेतसिद्धेः।
किञ्च तैः स्वयमेव प्रकाशादिवन्नैवं पर इति सूत्रे स्फुटमंशांशिभेदो
दर्शितः। अंशत्वेऽपि न मत्स्यादिरूपी पर एवम्बिधो जीवसदृशः।
यथा तेजोऽंशस्यैव सूर्यस्य खद्योतस्य च नैकप्रकारतेत्यादिना। तस्मात्
स्थिते भेदे साध्वेव व्याख्यातं, कृष्णस्तु भगवान् स्वयमिति। इन्द्रारीति

पश्चार्द्धं त्वत्र नान्वेति, तुशब्देन वाक्यस्य भेदनात्, तच्च तावतैवाकाङ्क्षा-परिपूर्त्तेः। एकवाक्यत्वे तु चशब्द एवाकरिष्यत। ततश्चेन्द्रारीत्यर्थ-र्थास्त एव पूर्वोक्ता एव मृड़यन्तीत्यायाति ॥१॥३॥ श्रीसूतः ॥१—२५॥

तदेवं श्रीकृष्णो भगवान् पुरुषस्तु सर्वान्तर्यामित्वात् परमात्मेति निर्धारितम्। तत्राशङ्क्यते, नन्विदमेकमंशित्वप्रतिपादकं वाक्यसंशय-प्रतिपादकबहुवाक्यविरोधे गुणवादः स्यात्। अत्रोच्यते। तानि किं श्रीभागवतीयानि परकीयाणि वा। आद्ये जन्मगुह्याध्यायो ह्ययं सर्व-भगवदवतारवाक्यानां सूत्रं सूचकत्वात् प्राथमिकपाठात्तदनन्तर-तस्यैव विवरणाच्च। तत्र चैते चांशकलाः पुंस इति परिभाषेति अवतारवाक्येषु अन्यान् पुरुषांशत्वेन जानीयात्। कृष्णस्तु स्वयं भग-वत्त्वेनेति प्रतिज्ञाकारेण ग्रन्थार्थनिर्णायकत्वात्। तदुक्तम्। अनियमे नियमकारिणी परिभाषेति। अथ परिभाषा च सकृदेव पठ्यते शास्त्रे न त्वभ्यासेन। ततश्च वाक्यानां कोटिरप्येकेनैवामुना शासनीया भवे-दिति नास्य गुणवादत्वं प्रत्युतैतद्विरुध्यमानानां एतदनुगुणार्थत्वे-वैदुषी। न च पारिभाषिकत्वात्तच्छास्त्र एव स व्यवहारो ज्ञेयः, न सर्व-त्रेति गौणत्वमाशङ्क्यं, परमार्थवस्तुपरत्वाच्छ्रीभागवतस्य तत्राप्यार्थिक-त्वाच्च तस्याः परिभाषायाः। किञ्च प्रतिज्ञावाक्यमात्रस्य च दृश्यते प-त्रापि नानावाक्यान्तरोपमर्द्दकत्वम्। यथाकाशस्यानुत्पत्तिश्रुतिः प्राप्य नाद्य तच्छ्रुतिः स्वविरोधिनी नान्या श्रुतिश्च आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति इदं सर्वं यदयमात्मेत्यादिनोपमर्द्येत। अतएव स्वामिप्रभृतिभिरप्येतदेव वाक्यं तत्तद्विरोधनिरासाय भूयोभूय उप-दर्शितम्। तदेवं श्रीभागवतमते सिद्धे च तस्य वाक्यस्य बलवत्त्वमपि श्रीभागवतस्य सर्वशास्त्रोपमर्द्दकत्वेन प्रथमे सन्दर्भे प्रतिपन्नत्वाद-स्मिन्नेव प्रतिपत्स्यमानत्वाच्च परकीयानामप्येतदानुगुण्यमेव विद्व-ज्जनदृष्टम्। यथा राज्ञः शासनं तथैव हि तदनुचराणामपीति। तत्र श्रीभागवतीयानि वाक्यानि तदनुगतार्थं तया दर्श्यन्ते। तत्रांशिनाद-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तीर्णस्येति अंशेन बलदेवेन सहेत्यर्थः। कलाभ्यां नितरां हरिरिति
हरिः कला पृथ्वी आभ्यां रामकृष्णाभ्यामिति। दृष्टाश्च ते कुक्षिगतः
परः पुमानंशेन साक्षाद्भगवान् भवाय न इत्यत्र यो मत्स्यादिरूपेणांशे-
नैव पूर्वं नोऽस्माकं भवायाभूत् हे अम्ब स तु साक्षात् स्वयमेव तव
कुक्षिगतोऽस्तीति। ततो जगन्मङ्गलमच्युतांशमिति तु समस्यन्य-
पदार्थो बहुव्रीहिः। तस्मिन्नंशिन्यवतरति तेषामंशानामप्यत्र प्रवेशस्य
व्याख्यास्यमानत्वात्। पूर्णत्वेनैव तत्र सर्वात्मकमात्मभूतमित्युक्तम्।
तथा नातिविद्वज्जनवाक्ये—एतौ भगवतः साक्षाद्धरेर्नारायणस्य हि।
अवतीर्णाविहांशेन वसुदेवस्य वेश्मनीत्यत्रापि सरस्वतिप्रेरिततया अंशेन
सर्वांशेन सहैवेत्यर्थः। एवमेव ताविमौ वै भगवतो हरेरंशाविहागतौ।
भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ इत्यत्र आगताविति कर्त्तरि
निष्ठा कृष्णाविति कर्म्मणि द्वितीया। ततश्च भगवतो नानावतार-
बीजस्य हरेः पुरुषस्य ताविमौ नारायणाख्यौ अंशौ कर्त्तृभूतौ कृष्णौ
कृष्णार्जुनौ कर्म्मभूतावागतवन्तौ तयोः प्रविष्टवन्तावित्यर्थः। कीदृशौ
कृष्णौ भुवो भारव्ययाय चकाराद्भक्तसुखदनानालीलान्तराय च। यदु-
कुरूद्वहौ यदुकुरुवंशयोरवतीर्णावित्यर्थः। अर्जुने तु नरावेशः
कृष्णो नारायणः स्वयमित्यागमवाक्यं श्रीमदर्जुने नरप्रवेशापेक्षया।
यस्तु स्वयमनन्यसिद्धो नारायणः नारायणस्त्वं न हि सर्वदेहिना-
मित्यादिना दर्शितः स पुनः कृष्ण इत्यर्थान्तरापेक्षया मन्तव्यम्।
ययोरेव समं वीर्य्यमित्यादिन्यायात्। तथा विष्णुधर्मे—यस्त्वां वेत्ति
स मां वेत्ति यस्त्वामनु स मामनु। अभेदेनात्मनो वेद्मि त्वामहं पाण्डु-
नन्दनेति। तं प्रति श्रीभगवद्वाक्याच्चार्जुनस्यापि श्रीकृष्णसखत्वेन
नारायणसखान्नरात् पूर्णत्वात्तत्र प्रवेशः समुचित एव। कुत्रचिच्चांशादि-
शब्दप्रयोगः—नाहं प्रकाशः सर्वस्य योगमायासमावृतः। इति श्रीगोप-
निषदिशा पूर्णस्यापि साधारणजने खण्डांशप्रकाशात्तत्प्रतीताविवांश
इवांश इति ज्ञेयम्। नारायणसमो गुणैरित्यत्रापि नारायणः पर-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

व्योमाधिप एव गुणैः समो यस्येत्येव गर्गाभिप्रायः। तदेवं महाकाल-पुराख्यानेऽपि प्रतिज्ञावाक्यमिदमविरुद्धं स्यात्। किञ्च शास्त्रं हि शासनात्मकं शासनञ्चोपदेशः। स च द्विधा साक्षादर्थान्तरद्वारा च। साक्षादुपदेशस्तु श्रुतिरिति परिभाष्यते। साक्षात्त्वञ्चात्र निरपेक्षत्वमुच्यते। तदुक्तं निरपेक्षरवा श्रुतिरिति। तथा च सति श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादित्युक्तानुसारेण चरमस्य पूर्वापेक्षया दूरप्रतीत्यर्थत्वे कृष्णस्तु भगवान् स्वयमिति श्रीशौनकं प्रति श्रीसूतस्य साक्षादुपदेशेन इतिहासद्वारोपदेशो बाध्येत। न च मे कलावतीर्णाविति च महाकालपुराधिप एव श्रीकृष्णं साक्षादेवोपदिष्टवानिति वाच्यं श्रीकृष्णस्य सार्वज्ञाव्यभिचारेण वक्तृश्रीत्वभावपूर्वकसङ्गमाप्रस्तावेन द्विजात्मजा मे युवयोर्दिदृक्षुणेति कार्य्यान्तरतात्पर्य्यदर्शनेन च तस्यैतन्महापुराणस्तत्रोपदिष्टसूतादिवत्तदुपदेशे तात्पर्य्याभावात्तच्चमाणार्थान्तर एव नैकवाक्येन पदसम्बन्धाच्च। किञ्च भवतु वा तुष्यतु न्यायेन, श्रीकृष्णस्य तदपेक्षापूर्णत्वं, तथापि सर्वासम्प्यवताराणां नित्यमेव स्वस्थत्वेन दर्शयिष्यमाणत्वात्, केषाञ्चिन्मते तु स्वयं पुरुषत्वेऽपि स्वतन्त्रस्थितित्वात्, युवां नरनारायणावृषीति त्वरयेतमन्तिम इति च तत्तदर्थत्वे विरुध्येत। अस्तु तावदस्माकमन्या वार्त्ता। न च कुत्रापि महाकालोऽयमंशेन तत्तद्रूपेणावतीर्ण इत्युपाख्यायते वा। ततश्चाप्रसिद्धकल्पना प्रसज्जेत। तत्रैव च त्वरयेतमन्तिमे इति युवां नरनारायणावृषी धर्म्ममाचरतामित्यादेशद्वयस्य पारस्परिकविरोधः स्फुट एव। किञ्च यदि तस्य तावंशावभविष्यतां तर्हि करतलमणिवत् सदा सर्वमेव पश्यन्नसौ तावपि दूरतोऽपि पश्यन्नेवाभविष्यत्। तच्च युवयोर्दिदृक्षुणेति तद्वाक्येन व्यभिचारितम्। यदि स्वयमेव श्रीकृष्णस्तत्तद्रूपावात्मानौ दर्शयति तदेव तेन तौ दृश्येयातामित्यानीतञ्च। तथाच सति तयोर्दृश्यत्वाभावादंशत्वं नोपपद्यते। तस्मादप्यधिकशक्तित्वेन प्रत्युत

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पूर्णत्वमेवोपपद्यते। एवमपि यत्त्वर्ज्जुनस्य तज्ज्योतिःप्रताड़िताक्षत्वं तद्दर्शनजातसाध्वसत्वं च जातं तत्र स्वयमेव भगवता तत्तल्लीलारसोपयिकमायाशक्तेः प्रकाशनादन्यस्याः स्थिताया अपि कुण्ठनान्न विरुद्धम्। दृश्यते च स्वस्यापि क्वचिद्युद्धे प्राकृतादपि पराभवादिकम्। यथात्रैव तावत् स्वयमेव वैकुण्ठादागतानामप्यश्वानां प्राकृततमसा भ्रष्टगतित्वम्। तदेवमेव श्रीकृष्णस्य तस्मिन् अनभिभवदर्शनेनाप्यन्यथा न मन्तव्यम्। श्रीरुद्रादौ श्रीनारदादौ च तथा दर्शनात्। एवमत्र परत्र वा तदीयलीलायान्तु पूर्वपक्षो नास्ति तस्य स्वैराचरणत्वात्। अतस्तदीयतात्पर्य्यशब्दोत्थावर्थाविवमेव दृश्येते। तत्तात्पर्य्योत्थो यथासौ श्रीकृष्णः स्वयं भगवानपि यथा गोवर्द्धनमखलीलायां श्रीगोपगणविस्मापनकौतुकाय काञ्चिन्निजां दिव्यमूर्त्तिं प्रदर्शयन् तैः सममात्मनैवात्मानं नमश्चक्रे तथैवार्ज्जुनविस्मापनकौतुकाय महाकालरूपेणैवात्मना द्विजबालकान् हारयित्वा पथि च तं तच्चमत्कारमनुभाव्य महाकालपुरे च तां कामपि निजां महाकालाख्यां दिव्यमूर्त्तिं दर्शयित्वा तेन समं तद्रूपमात्मानं नमश्चक्रे तद्रूपेणैव सार्ज्जुनमात्मानं तथा बभाषे च। तदुक्तम्—तस्मै नमो व्रजजनैः सह चक्रेऽऽत्मनात्मन इतिवत् अत्रापि बवन्ध आत्मानमनन्तमच्युत इति। अतएव हरिवंशे तत्समीपज्योतिरुद्दिश्य चार्ज्जुनं प्रति श्रीकृष्णेनोक्तम्—मत्तेजस्तत् सनातनमिति। अथ शब्दोत्थोऽप्यर्थो यथा तत्र श्रीमहाकालमुद्दिश्य पुरुषोत्तमोत्तममिति विशेषणस्यार्थः। पुरुषो जीवस्तस्मादुत्तमस्तदन्तर्यामी तस्मादुत्तमं भगवत्प्रभावरूपमहाकालशक्तिमयं तमिति। अथ श्रीमहाकालवाक्यस्य, द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीता भुवि धर्म्मगुप्तये कलावतीर्णाववनेर्भरासुरान् हत्वेह भूयस्त्वरयेतमन्तिमे इत्यस्य, युवयोर्युवां दिदृक्षुणा मया द्विजपुत्रा मे मम भुवि धाम्नि उपनीता आनीता इत्येकं वाक्यं, वाक्यान्तरमाह हे धर्म्मगुप्तये कलावतीर्णौ कला अंशास्तदयुक्ताववतीर्णौ मध्यमपदलोपी

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

समासः, कलायामंशलक्षणे मायिकप्रपञ्चेऽवतीर्णौ वा, पादोऽस्य विश्वा भूतानीति श्रुतेः, भूयः पुनरपि अवशिष्टानवनेर्भरासुरान् हत्वा मे मम अन्ति समीपाय समीपमागमयितुं युवां त्वरयेतं त्वरयतम् अत्र प्रस्थाप्य तान् मोचयतमित्यर्थः, तद्धतानां मुक्तिप्रसिद्धेः महाकालज्योतिरेव मुक्ताः प्रविशन्तीति, ब्रह्मतेजोमयं दिव्यं महद्यद्दृष्टवानसीति श्रीहरिवंशोक्तेश्च, त्वरयेतमिति प्रार्थनायां हेतुनिजन्तस्य लिङि रूपम्, अन्तीत्यव्ययाच्चतुर्थ्या लुक्, चतुर्थी च एधोभ्यो व्रजतीतिवत् क्रियार्थोपपदस्य च कर्म्मणि स्थानिन इति स्मरणात् काशीं हत्वा प्रस्थापयतीतिवदुभयोरेकेनैव कर्म्मणान्वयः। तस्मादेष एवार्थः स्पष्टमकष्टो भवति। अर्थान्तरे तु सम्भवत्येकपदत्वे पदच्छेदः कष्टाय कल्पेत। तथा पूर्णकामावपि युवां नरनारायणावृषी धर्म्ममाचरतां स्थित्यै ऋषभौ लोकसंग्रहमित्यस्य। न केवलमेतद्रूपेणैव युवां लोकहिताय प्रवृत्तौ अपि तु वैभवान्तरेणापीति स्तौति पूर्णेति। स्वयं भगवत्त्वेन तत्सहत्वेन च ऋषभौ सर्वावतारावतारिश्रेष्ठावपि पूर्णकामावपि स्थित्यै लोकरक्षणाय लोकसंग्रहं लोकेषु तत्तद्धर्म्मप्रचारहेतुं धर्म्ममाचरतां कुर्वतां मध्ये युवां नरनारायणावृषी इत्यनयोरत्यांशत्वेन विभूतिवन्निर्देशः। उक्तश्चैकादशे श्रीभगवता विभूतिकथन एव—नारायणो मुनीनाञ्चेति। धार्मिकमौलित्वाद्द्विजपुत्रार्थमवश्यमेष्यथ इत्यत एव मया तथा व्यवसितमिति भावः। तथाच हरिवंशे श्रीकृष्णवाक्यम्—मद्दर्शनार्थं ते बाला हृतास्तेन महात्मना। विप्रार्थमेष्यते कृष्णो नागच्छेदन्यथा त्विहेति। अत्राचरतमित्यर्थे आचरतामिति प्रसिद्धमित्यतश्च तथा न व्याख्यातम्। तस्मान्महाकालतोऽपि श्रीकृष्णस्यैवाधिक्यं सिद्धम्। तदेतन्महिमानुरूपमेवोक्तम्—निशाम्य वैष्णवं धाम पार्थः परमविस्मितः। यत्किञ्चित् पौरुषं पुंसां मेने कृष्णानुभावितमिति। अत्र महाकालानुभावितमिति तु नोक्तम्। एवमेव स चेति लक्षणो भगवान् श्रीकृष्ण एवेति दर्शयितुमाख्याना-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

माह एकदेतीति । श्रीस्वामिलिखिततत्प्रकरणचूर्णिकापि सुसङ्गता भवति । अथ परकीयाण्यपि विरुद्धायमानानि वाक्यानि तदनुगतार्थतया दृश्यन्ते । तत्र श्रीविष्णुपुराणे—उज्जहारात्मनः केशौ सितकृष्णौ महामुने । इति । महाभारते—स चापि केशौ हरिरुद्बवर्ह शुक्लमेकमपरञ्चापि कृष्णम् । तौ चापि केशावाविशतां यदूनां कुले स्त्रियौ रोहिणीं देवकीञ्च । तयोरेको बलभद्रो बभूव योऽसौ श्वेतस्तस्य देवस्य केशः । कृष्णो द्वितीयः केशवः संबभूव केशो योऽसौ वर्णतः कृष्ण उक्त इति । अत्र तात्पर्य्यं स्वामिभिरित्थं विवृतं भूमेः सुरेतरवरूथेत्यादिपद्ये । सितकृष्णकेश इत्यत्र सितकृष्णकेशत्वं शोभैव न तु वयःपरिणामकृतम् अविकारित्वात् । यच्च उज्जहारात्मनः केशावित्यादि तत्तु न केशमात्रावताराभिप्रायं किन्तु भूभारावतारणरूपं कार्य्यं कियदेतत् मत्केशावेव तत् कर्त्तुं शक्ताविति द्योतनार्थं रामकृष्णयोर्वर्णसूचनार्थञ्च केशोद्धरणमिति गम्यते । कृष्णस्तु भगवान् स्वयमित्येतद्विरोधाच्चेति । इदमप्यत्र तात्पर्य्यं सम्भवति । ननु देवाः किमर्थं मामेवावतारयितुं भवद्भिरागम्यते अनिरुद्धाख्यपुरुषप्रकाशविशेषस्य क्षीरोदस्थे तद्वीपधाम्नो मम यौ केशाविव स्वस्वशिरोधार्य्यभूतौ तावेव श्रीवासुदेवसङ्कर्षणौ स्वयमेवावतरिष्यतः । ततश्च भूभारहरणं ताभ्यामीषत्करमेवेति । अथ उज्जहारात्मनः केशावित्यस्यैव शब्दार्थोऽपि मुक्ताफलटीकायां केशौ सुखस्वामिनौ सितौ रामः आत्मनः सकाशादुज्जहार उद्धृतवान् । हरिवंशे हि कस्याञ्चिद् गिरिगुहायां भगवान् स्वमूर्त्तिं निक्षिप्य गरुड़ञ्च तत्रावस्थाप्य स्वयमत्रागत इत्युक्तम् । तदुक्तम्—स देवानभ्यनुज्ञायेत्यादि । यैस्तु यथाश्रुतमेवेदं व्याख्यातं ते न सम्यक् परामृष्टवन्तः, यतः सुरमालस्यापि निर्जरत्वप्रसिद्धिः । अकालकलिते भगवति जरानुदयेन केशशौक्ल्यानुपत्तिः । न चास्य केशस्य नैसर्गिकसितकृष्णतेति प्रमाणमस्ति । अतएव नृसिंहपुराणे कृष्णावतारप्रसङ्गे शक्तिशब्द एव प्रयुज्यते न तु केश-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

शब्दः। तथाहि, वसुदेवाच्च देवक्यामवतीर्य्य यदोः कुले। सितकृष्णौ च मच्छक्ती कंसाद्यान् घातयिष्यत इत्यादिना। अस्तु तर्हि अंशोपलक्षकः केशशब्दः। न। अविप्लुतसर्वशक्तित्वेन साक्षादादिषुरूपलक्ष्यैव निर्वक्तुं शक्यत्वात्। कृष्णविष्ण्वादिशब्दानामविशेषतः पर्य्यायप्रतीतेः। नैवमवतारान्तरस्य कस्य वान्यस्य जन्मदिनं जयन्त्याख्ययातिप्रसिद्धम्। अतएवोक्तं भारते—भगवान् वासुदेवश्च कीर्त्त्यतेऽत्र सनातनः। शाश्वतं ब्रह्मपरमं योगिध्येयं निरञ्जनमितीति। तस्याकालकलितत्वं, योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुरित्यादौ श्रीदेवकीदेवीवाक्ये, नताः स्म ते नाथ सदाङ्घ्रिपङ्कजं विरिञ्चिवैरिञ्च्यसुरेन्द्रवन्दितम् परायणं क्षेममिहेच्छतां परं न यत्र कालः प्रभवेत् परः प्रभुरित्यादौ श्रीद्वारकावासिवाक्ये च, प्रसिद्धम्। अतो यत् प्रभासखण्डे केशस्य बालत्वमेव तत्सितिम्नः कालकृतपलितलक्षणत्वमेव च दर्शितं, तस्य शरीरिणां शुष्कवैराग्यप्रतिपादनप्रकरणपतितत्वेन सुरमात्रनिर्जरताप्रसिद्धत्वेन चासुख्यार्थत्वान्न स्वार्थप्रामाण्यम्। ब्रह्मा येनेत्यारभ्य विष्णुर्येन दशावतारगहने क्षिप्तो महाशङ्कटे रुद्रो येन कपालपाणिरभितो भिक्षाटनं कारित इत्यादौ तस्मै नमः कर्म्मण इति गारुड़वचनवत्। किन्तु तत्प्रतिपादनाय शब्दसाम्येन छलोक्तिरेवेयम्। यथा—अहो कनकदौरात्म्यं निर्वक्तुं केन युज्यते। नामसाम्यादसौ यस्य धुस्तुरोऽपि मदप्रद इति। शिवशास्त्रीयत्वाच्च नातिवैष्णवसिद्धान्तविरुद्धस्य तस्योपयोगः। यत उक्तं स्कान्द एव षण्मुखं प्रति श्रीशिवेन—शिवशास्त्रेऽपि तद्ग्राह्यं भगवच्छास्त्रयोगि यत् इति। अन्यतात्पर्य्यकत्वेन स्वतस्तत्राप्रामाण्यादयुक्तञ्चैतत् यथा पङ्केन पङ्काम्भ इत्यादिवत्। पाद्मोत्तरखण्डे च शिवप्रतिपादकानां पुराणानामपि तामसत्वमेव दर्शितम्। मात्स्येऽपि तामसकल्पकथामयत्वमिति। युक्तञ्च तस्य वृद्धसूतस्य श्रीभागवतमपठितवतः श्रीबलदेवाक्रमातुः श्रीभगवत्तत्त्वासम्यक्ज्ञानजं वचनम् एवं वदन्ति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

राजर्षे ऋषयः केचनान्विता इतिवत् । एतादृशश्रीभागवतवाक्येन स्वविरुद्धपुराणान्तरवचनबाधनञ्च । यथेह कर्म्मजितो लोकः क्षीयत इत्यादिवाक्येन अपाम सोमममृता अभूमेत्यादिवचनबाधनवज्ज्ञेयम् । अत्रापि यत् स्ववाचो विरुध्येत नूनं ते न स्मरन्त्यमुमिति युक्तिसद्भावो दृश्यते । तत्रैवात्मनः सन्दिग्धत्वमेव तेन सूतेन व्यञ्जितम् । अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदित्यादिना । किञ्च तत्रैवोत्तरग्रन्थे चन्द्रस्य कलङ्कापत्तिकारणकथने श्रीकृष्णावतारप्रसङ्गे स्वयं विष्णुरेवेत्युक्तत्वात् स्वेनैव विरोधश्च । तस्मान्न केशावतारत्वेऽपि तात्पर्य्यं केशशब्दस्य बालत्ववाचनञ्च । छलतो भगवत्तत्त्वाज्ञानतो वेति । अतो वैष्णवादिपद्यानां शब्दोत्थमर्थमेवं पश्यामः । अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः । सर्वज्ञाः केशवं तस्मान्मामाहुर्मुनिसत्तम ॥ इति सहस्रनामभाष्योत्थापितभारतवचनात् केशशब्देनांशुरुच्यते । तत्र च सर्वत्र केशेतरशब्दाप्रयोगात् नानावर्णांशूनां श्रीनारददृष्टतया मोक्षधर्म्मप्रसिद्धेश्च । तथा चांशुत्वे लब्धे तौ चांशू वासुदेवसङ्कर्षणावतारसूचकतया निर्दिष्टाविति तयोरेव स्यातामिति गम्यते । तदीययोरपि तयोरनिरुद्धेऽभिव्यक्तिश्च युज्यत एव । अवतारितेजोऽन्तर्भूतत्वादवतारस्य । एवमेव सत्त्वं रजस्तम इत्यादिप्रथमस्कन्धपद्यप्राप्तमनिरुद्धाख्यपुरुषावतारत्वं भवानीनाथैरित्यादिपञ्चमस्कन्धगद्यप्राप्तं सङ्कर्षणावतारत्वं च भवस्य सङ्गच्छते । ततश्चोज्जहारेत्यस्यायमर्थः । आत्मनः सकाशात् श्रीवासुदेवसङ्कर्षणांशभूतौ केशावंशू उज्जहार उद्धृतवान् प्रकटीकृत्य दर्शितवानित्यर्थः । अत्रायं सुमेरुरित्येकदेशदर्शनेनैवाखण्डमेरुनिर्देशवत् तद्दर्शनेनापि पूर्णस्यैवाविर्भावनिर्देशो ज्ञेयः । अथ स चापि केशावित्यादिकव्याख्या । उद्दबर्हे योगबलेनात्मनः सकाशाद्विच्छिद्य दर्शयामास । स चापीति चशब्दः पूर्वमुक्तं देवकर्त्तृकं निवेदनरूपमर्थं समुच्चिनोति । अपिशब्दस्तदुद्दर्हणे श्रीभगवत्सङ्कर्षणयोरपि हेतु-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कर्तृत्वं सूचयति। तौ चापीति चशब्दोऽनुक्तसमुच्चयार्थत्वेन भगवत्सङ्कर्षणौ स्वयमाविविशतुः पश्चात्तौ च तत्तादात्म्येनाविविशतुरिति बोधयति। अपिशब्दो यत्रानुस्यूतावमू सोऽपि तदंशयोरिति गमयति। तयोरेको बलभद्रो बभूवेत्यादिकन्तु नरो नारायणं भवेत् हरिरेव भवेन्नर इत्यादिवत्तदैक्याभासापेक्षया। केशवः श्रीमथुरायां केशवस्थानाख्यमहायोगपीठाधिपत्वेन प्रसिद्धः स एव कृष्ण इति। अतएवोदाहरिष्यते। भूमेः सुरेतरेत्यादि। श्रीनृसिंहपुराणे सितासिते च मच्छक्ती इति तच्छक्तिद्वारैव श्रीकृष्णेन तद्घातनापेक्षया। अर्जुने तु नरावेशः कृष्णो नारायणः स्वयमित्यागमवाक्ये श्रीमदर्जुने नरप्रवेशापेक्षया। यस्तु स्वयमनन्यसिद्धो नारायणः, नारायणस्त्वं नहि सर्वदेहिनामित्यादौ दर्शितः, स पुनः कृष्ण इत्यार्थान्तरापेक्षया च मन्तव्यम्। अतएव पुरुषनारायणस्य तथागमनप्रतिपादकं श्रीहरिवंशवाक्यमपि तत्तेजसामाकर्षणविवक्षयैवोक्तम्। सर्वेषां प्रवेशश्च तस्मिन् सयुक्तिकमेवोदाहरणीयः। अतः पाद्मोत्तरखण्डे नृसिंहरामकृष्णेषु षाड्गुण्यं परिपूरणमित्यवतारान्तरसाधारण्यमपि न मन्तव्यम् किन्त्ववताराणां प्रसङ्गे तेषु श्रेष्ठे विविदिषिते सामान्यतस्तावत् सर्वश्रेष्ठास्त्रय उक्तास्तेष्वप्युत्तरोत्तरत्वाधिक्यक्रमाभिप्रायेण श्रीकृष्णश्रैष्ठ्यं विवक्षितम्। अतएव श्रीविष्णुपुराणे मैत्रेयेण हिरण्यकशिपुत्वादिषु तयोरमुक्तिमुक्तिकारणे पृष्टे श्रीपराशरोऽपि श्रीकृष्णस्यैवात्युद्रेकैश्वर्यमाह। किञ्च श्रीकृष्णमप्राप्यान्यत्र त्वसुराणां मुक्तिर्न सम्भवति। एवकारद्वयेन स्वयमेव श्रीगीतासु तथा सूचनात्। तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु। आसुरीं योनिमापन्ना मूढ़ा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिमिति। कुत्रचिद्भगवद्द्वेषिणां तत्स्मरणादिप्रभावेन श्रूयतां वा मुक्तिः, सर्वेषामपि तद्द्वेषिणान्तु मुक्तिप्रदत्वमन्यत्रावतारेऽवतारिणि वा न क्वचित् श्रूयते। तस्मात्तेषामपि मुक्तिदातृत्वा

श्रीपराशरः। अतएव श्रीकृष्ण एवैश्वर्य्याधिक्यं युक्तमेव वर्णयामास पूर्वमैश्वर्य्यसाक्षात्कारस्य मुक्तिहेतुत्वमुक्त्वा पुनः पूतनादिमोक्षं विचिन्त्य कालनेम्यादीनाञ्च तदभावमाशङ्क्य तदप्यसहमानस्तस्य तु श्रीकृष्णाख्यस्य भगवतः परमाद्भुतस्वभाव एवायमित्युवाच सर्वान्तिमगद्येन। अयं हि भगवान् कीर्त्तितः संस्मृतश्च द्वेषानुबन्धेनाप्यखिलसुरासुरादिदुर्लभं फलं प्रयच्छति किमुत सम्यक् भक्तिमतामित्यनेन। अतः श्रीभागवतमते तयोर्जन्मत्रयनियमश्च श्रीकृष्णादेव मोक्षः सम्भवेदित्यपेक्षयैवेति ज्ञेयम्। अतएव श्रीनारदेनापि तमुद्दिश्यैवोक्तम्। वैरेण यं नृपतय इत्यादि। सर्वेषां मुक्तिदत्वञ्च तस्य कृष्णस्य निजप्रभावातिशयेन यथा कथञ्चित् स्मर्तृचित्ताकर्षणातिशयस्वभावात्। अन्यत्र तु तथा स्वभावो नास्तीति नास्ति मुक्तिदत्वम्। अतएव वेणस्यापि विष्णुद्वेषिणस्तद्वदावेशाभावान्मुक्त्यभाव इति। अतएवोक्तम्। तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेदिति। तस्मादस्यैव सर्वतोऽप्याश्चर्य्यतमा शक्तिः श्रीकृष्णस्य इति सिद्धम्। तदेवं विरोधपरिहारेण विरुद्धार्थानामप्यर्थानुकूल्येन श्रीकृष्णस्य स्वयं भगवत्त्वमेव दृढ़ीकृतम्। तत्र च वेदान्तसूत्रादावप्येकस्य महावाक्यस्य नानावाक्यविरोधपरिहारेणैव स्थापनाया दर्शनान्नाप्यत्रैवेदृशमित्यश्रद्धेयम्। वाक्यानां दुर्बलबलित्वमेव विचारणीयम्। न तु बहुलता। दृश्यते च लोके एकेनापि युद्धे सहस्रपराजय इति। एवञ्च बहुविरोधपरिहारेणैव स्वस्मिन् श्रीकृष्णाख्ये परब्रह्मणि सर्ववेदाभिधेयत्वमाह—

किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत्। इत्यस्य हृदयं लोके नान्यो मद्वेद कश्चन। मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहमिति ॥ २९ ॥

विकल्प्य विविधं कल्पयित्वा अपोह्यते तत्तन्निषेधेन सिद्धान्ततो यत्तदहं श्रीकृष्णलक्षणं वस्त्विति ॥ ११ ॥ २१ ॥ श्रीभगवान् ॥ २९ ॥

तदेवं कृष्णस्तु भगवान् स्वयमित्येतत् प्रतिज्ञावाक्याय महावीर-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

राजायैवात्मनैव निर्जित्यात्मसात्कृतविरोधिशतार्थायापि शोभाविशेषेण प्रेक्षावतामानन्दनार्थं चतुरङ्गिनीं सेनामिवान्यामपि वचश्रेणीमुपहरामि। तत्र तस्य लीलावतारकर्त्तृत्वमाह—

मत्स्याश्वकच्छपनृसिंहवराहहंसराजन्यविप्रविबुधेषु कृतावतार त्वं पासीत्यादि ॥३०॥ स्पष्टम् ॥१०॥२॥ देवाः श्रीभगवन्तम् ॥ ३०।

तथा, सुरेष्वृषिष्वीश तथैवेत्यादि ॥ ३१ ॥ स्पष्टम् ॥ १० ॥ १४। ब्रह्मा तम् ॥ ३१ ॥

तथा, बहूनि सन्ति नामानि रूपाणि च सुतस्य ते इत्यादि ॥३२॥ स्पष्टम् ॥१०॥८॥ गर्गः श्रीव्रजेश्वरम् ॥ ३२ ॥

एवं, यस्यावतारा ज्ञायन्ते शरीरिष्वशरीरिणः इत्यादि ॥ ३३॥ शरीरिष्वशरीरिण इत्यपि ज्ञाने हेतुगर्भविशेषणम्। शरीरिषु मध्येऽप्यवतीर्णस्य सतः स्वयमशरीरिणः। नातः परं परम यद्भवतः स्वरूपमित्यादिद्वितीयसन्दर्भोदाहरणप्रघट्टकदृष्ट्या जीववद्देहदेहिपार्थक्याभावेन मुख्यमत्वर्थाभावात् ॥ १० ॥ १० ॥ यमलार्जुनौ श्रीभगवन्तम् ॥ ३३ ॥

अपरञ्च, यत्पादपङ्कजरजः शिरसा बिभर्त्ति श्रीरब्जजः सगिरिशः सह लोकपालैः। लीलातनूः स्वकृतसेतुपरीप्सया यः काले दधत् स भगवान् मम केन तुष्येत् ॥ ३४ ॥ स्पष्टम् ॥ १० ॥ ५८ ॥ नग्नजिच्छ्रीभगवन्तम् ॥ ३४ ॥

परञ्च, नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे। यो धत्ते सर्वभूतानामभवायोशतीः कलाः ॥ ३५ ॥

टीका च—नम इति श्रीकृष्णावतारतया नारायणं स्तौति। एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमित्युक्तेरित्येषा। अतएव तच्छ्रवणानन्तरं तस्मा एव नमस्कारात् स्तुतिस्तु तावपि श्रीकृष्ण एव स्तुत्य इत्यायातम्। तथैव श्रुतिभिरपि निभृतमरुन्मनोक्षेत्यादिपद्ये निजारिमोक्षप्रदत्वाद्यसाधारणलिङ्गेन स एव व्यञ्जितः ॥ १० ॥ ८७। स्पष्टम्। श्रीनारदः ॥ ३५ ॥

तथा गुणावतारकर्तृत्वमाह—

इत्युद्धवेनाप्यनुरक्तचेतसा पृष्टो जगत्क्रीड़नकः स्वशक्तिभिः ।
गृहीतमूर्त्तित्रय ईश्वरेश्वरो जगाद सप्रेममनोहरस्मितः ॥ ३६ ॥

स्पष्टम् । अत्र अजानतां त्वत्पदवीमित्युदाहृतं वचनमप्यनुसन्धेयम् ॥ ११ ॥ २९ ॥ श्रीशुकः ॥ ३६ ॥

अथ पुरुषावतारकर्त्तृत्वमप्याह—

इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुङ्गवे विभूम्नि ।
स्वसुखमुपगते क्वचिद्विहर्त्तुं प्रकृतिमुपेयुषि यद्भवप्रवाहः ॥ ३७ ॥

टीका च—परमफलरूपां श्रीकृष्णरतिं प्रार्थयितुं प्रथमं स्वकृतमर्पयति इतीति । विगतो भूमा यस्मात्तस्मिन् यमपेक्ष्यान्यस्य महत्त्वं नास्तीत्यर्थः । तदेव पारमैश्वर्य्यमाह, स्वसुखं स्वरूपभूतं परमानन्दमुपगते प्राप्तवत्येव । क्वचित् कदाचिद्विहर्त्तुं क्रीड़ितुं प्रकृतिमुपेयुषि स्वीकृतवति न तु स्वरूपतिरोधानेन जीववत् पारतन्त्र्यमित्यर्थः । विहर्त्तुमित्युक्तं प्रपञ्चयति यद्यतो भवप्रवाहः सृष्टिपरम्परा भवतीत्येषा ॥ १ ॥ ९ ॥ भीष्मः श्रीभगवन्तम् ॥ ३७ ॥

अतएव, भवभयमपहर्त्तुमित्यादौ तस्यादिपुरुषत्वं श्रेष्ठत्वमप्याह—पुरुषमृषभमाद्यं कृष्णसंज्ञं नतोऽस्मीति ॥ ३८ ॥

कृष्णेति संज्ञा यस्येति मूर्त्त्यन्तरं निषिध्यते । तन्मूर्त्तेर्नमस्क्रियमाणत्वेन च नित्यसिद्धत्वं दर्श्यते । अत्रैव टीकाकृद्भिरपि तं वन्दे परमानन्दं नन्दनन्दनरूपिणमित्युक्तम् ॥ ११ ॥ २९ ॥ श्रीशुकः ॥३८॥

तदेवं, जगृहे इत्यादिप्रकरणे यत् स्वयमुत्प्रेक्षितं तच्छ्रीस्वामिसम्मत्या दृढ़ीकृतम् । पुनरपि तत्सम्मतिरभ्यस्यते यथा—

श्रुत्वाजितं जरासन्धं नृपतेर्ध्यायतो हरिः ।
आहोपायं तमेवाद्य उद्धवो यमुवाच ह ॥ ३९ ॥

टीका च—आद्यो हरिः श्रीकृष्ण इत्येषा ॥ १० ॥ ७२ ॥
श्रीशुकः ॥ ३९ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

किञ्च, अथाहमंशभागेन देवक्याः पुत्रतां शुभे प्राप्स्यामीत्यादि॥४।
अंशभागेनेत्यत्र पूर्णतोचितमेवार्थं वहुधा योजयद्भिर्मध्ये अं
पुरुषरूपेण मायया भागो भजनमीक्षणं यस्य तेनेति च व्याचक्षाणैरं
सर्वथा परिपूर्णरूपेणेति विवक्षितं, कृष्णस्तु भगवान् स्वयमित्युक्तत्वात्
इत्येवं हि तैर्व्याख्यातम् ॥ १० ॥ २ ॥ श्रीभगवान् योगमायाम् ॥४०
एवं—यस्यांशांशांशभागेन विश्वोत्पत्तिलयोदयाः। भवन्ति कि
विश्वात्मंस्त्वं त्वाद्याहं गतिं गता ॥ ४१ ॥
टीका च—यस्यांशः पुरुषस्तस्यांशो माया तस्या अंशा गुणास्ते
भागेन परमाणुमात्रलेशेन विश्वोत्पत्त्यादयो भवन्ति तं त्वा त्वां गति
शरणं गतास्मीत्येषा ॥ १० ॥ ८५ ॥ श्रीदेवकी भगवन्तम् ॥ ४१ ॥
यथा च—नारायणस्त्वं न हि सर्वदेहिनामित्यादौ नारायणो
नरभूजलायनादिति ॥ ४२ ॥
टीका च—नरादुद्भूता येऽर्थाः तथा नराज्जातं यज्जलं तदयन
यो नारायणः प्रसिद्धः सोऽपि तवाङ्गं मूर्त्तिरित्येषा। अत्र स तवा
त्वं पुनरङ्गीत्यसौ तु विशदोऽर्थः। न तु स्तुतिमात्रमिदम्। इ
घासुरमोक्षणं प्रभवतः प्राप्तः परं विस्मयमित्युक्तरीत्या क्वचिदप
तार्थ्यवतारान्तरेषु तादृशस्यापि मोक्षमदृष्टचरं दृष्ट्वा विस्मयं प्राप्तवा
ब्रह्मा। द्रष्टुं मञ्जुमहित्वमन्यदपि तद्वत्सानितो वत्सपान् नीत्वान्य
कुरूद्वहान्तरदधादित्युक्तरीत्या तस्यापरमपि माहात्म्यं दिदृक्षु
माहात्म्यं दर्शयति प्रकरणसारस्येनापि लब्धम्। न चापरमाहात्म्यदर्श
सम्भावनामात्रम्। तावत् सर्वे वत्सपालाः पश्यतोऽजस्य तत्क्षणात्
व्यदृश्यन्त घनश्यामाः पीतकौषेयवाससः॥ इत्यादिना भक्तिभिरजाद्या
भिरैश्वर्यैरणिमाद्यैश्चतुर्विंशतिसंख्यतत्त्वैर्महदादिभिः तत्तदुपकारिभि
कालस्वभावाद्यैस्तत्सम्भूतैर्ब्रह्माण्डैस्तदन्तर्भूतस्रष्टृभिर्ब्रह्मादिभिर्जीवै
स्तम्बपर्य्यन्तैः पृथक् पृथगुपासितास्तादृशब्रह्माण्डेश्वरकोटयः श्रीकृष्ण
नैव तत्तदंशांशिनाविर्भाव्य ब्रह्माणं प्रति साक्षादेव दर्शिता इति कृष्ण

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदोद्दिष्टमेव कृष्णस्तु भगवान् स्वयमित्यत्राविष्कृतसर्वशक्तित्वादित्येतत् स्वामिव्याख्यानस्यासाधारण्यं बीजं भवेत् विश्वरूपदर्शनादीनां तत्तद्-ब्रह्माण्डान्तर्यामिपुरुषाणामेकतरेणापि शक्यत्वात् । तस्मात् विराट्-पुरुषयोरिव पुरुषभगवतोरपि जगृहे पौरुषं रूपमित्यादावुपासनार्थ-मेव तैरभेदव्याख्या कृतेति गम्यते । वस्तुतस्तु परमाश्रयत्वेन श्रीकृष्ण एव तैरङ्गीकृतोऽस्ति । यथा, विश्वसर्गविसर्गादिनवलक्षणलक्षितम् । श्रीकृष्णाख्यं परं धाम जगद्धाम नमामि तत् । दशमे दशमं लक्ष्य-माश्रिताश्रयविग्रहम् । क्रीड़द् यदुकुलाम्भोधौ परानन्दमुदीर्य्यते इति । यद्यन्येषामपि परमाश्रयत्वं तन्मतं तदा दशम इत्यनर्थकं स्यात् । तस्मान्नारायणोऽङ्गमिति युक्तमुक्तम् ॥१०॥१४॥ ब्रह्मा श्रीकृष्णम् ॥४२॥

अवतारप्रसङ्गेऽपि तथैव स्पष्टम्—

गिरं समाधौ गगने समीरितां निशम्य वेधास्त्रिदशानुवाच ह । गां पौरुषीं मे शृणुतामराः पुनर्विधीयतामाशु तथैव माचिरम् ॥ पुरैव पुंसावधृतो धराज्वरो भवद्भिरंशैर्यदुषूपजन्यताम् । स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद्भुवि ॥ वसुदेवगृहे साक्षाद्भग-वान् पुरुषः परः । जनिष्यते तत्प्रियार्थं सम्भवन्तु सुरस्त्रियः ॥ ४३ ॥

पौरुषीं पुरुषेण स्वयमेवोक्तां गां वाचम् । पुरुषस्यैव वाचमनुवदति पुरैवेति । पुंसा आदिपुरुषेण स्वयं भगवतेत्यर्थः । अंशैः श्रीकृष्णांश-भूतैस्तत्पार्षदैः श्रीमदुद्धवादिभिः सह । इत्यमेव प्रादुर्भावेणोक्तम् । नन्दाद्या ये व्रजे गोपा याश्चामीषाञ्च योषितः । वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः । सर्वे वै देवताप्राया उभयोरपि भारत । ज्ञातयो बन्धुसुहृदो ये च कंसमनुव्रता इति । तस्यादिपुरुषत्वमेव व्यनक्ति स इति । सर्वान्तर्यामित्वात् पुरुषस्तावदीश्वरः । तस्याप्यंशित्वात् स आदिपुरुषः श्रीकृष्णः पुनरीश्वरेश्वरः नरधीशशब्दवत् । तथाच दशमस्य पञ्चाशीतितमे श्रीमदानकदुन्दुभिनोक्तम् । युवां न नः सुतौ साक्षात् प्रधानपुरुषेश्वराविति । स्वकालशक्त्या स्वशक्त्या कालशक्त्या च ।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ईश्वरेश्वरत्वे हेतुः साक्षात् स्वयमेव भगवानिति। तदलं मयि तत् प्रार्थनयेति भावः। तत्प्रियार्थं तत्प्रीत्यै। अमरस्त्रियः श्रीमदुपेन्द्र-प्रेयस्यादिरूपाः काश्चित् सम्भवन्तु मिलिता भवन्तु। साक्षादवतारे श्रीभगवतो नित्यानपायिमहाशक्तिरूपास्तु तत्प्रेयस्योऽवतरन्तीति श्रीभगवति तदंशान्तरवत् ता अपि प्रविशन्त्वित्यर्थः। तत्प्रियार्थं तासामेव दास्यादिप्रयोजनाय जायन्तामिति वा। अनेन तैरप्रार्थित-स्याप्यसार्थस्यादेशेन परमभक्ताभिस्ताभिर्लीलाविशेष एव भगवतः स्वयमवतितीर्षायां कारणं भारावतरणस्त्वानुषङ्गिकमेव भवतीति व्यञ्जितम्। तदेवं श्रुतीनाञ्च दण्डकारण्यवासिनां मुनीनाञ्चान्ये-षुत्राणाञ्च श्रीगोपिकादित्वप्राप्तिर्यत् श्रूयते तदपि पूर्ववदेव मन्तव्यम्। अत्र प्रसिद्धार्थे नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः स्वर्योषितां नलिन-गन्धरुचां कुतोऽन्या इति विरुध्येत। न च सुरस्त्रीणां सम्भववाक्यं श्रीमहिषीवृन्दपरम्। तासामपि तन्निजशक्तिरूपत्वेन दर्शयिष्यमाण-त्वात्॥ १० ॥ १ ॥ श्रीशुकः ॥ ४३ ॥

तदेवमवतारप्रसङ्गेऽपि श्रीकृष्णस्य स्वयं भगवत्त्वमेवायातम्। यस्मा-देवं तस्मादेव श्रीभागवते मध्याश्रोतृवक्तॄणामपि श्रीकृष्ण एव तात्पर्यं लभ्यते। तत्र श्रीविदुरस्य—यच्चान्यदपि कृष्णस्य भवेद्भगवतः प्रभोः। श्रवः सुश्रवसः पुण्यं पूर्वदेहकथाश्रयम्॥ भक्ताय मेऽनु-रक्ताय तव चाधोक्षजस्य च। वक्तुमर्हसि यो दुह्यद्वै स्वरूपेण गामि-माम्॥ ४४ ॥

पूर्वदेहः पृश्न्यवतारः। लोकदृष्टावभिव्यक्तिरीत्या पूर्वत्वम्। तत्-कथैवाश्रयो यस्य तत्॥ ४॥ १७ ॥ विदुरः ॥ ४४ ॥

अथ श्रीमैत्रेयस्य तदनन्तरमेव—चोदितो विदुरेणैवं वासु-देवकथां प्रति। प्रशस्य तं प्रीतमना मैत्रेयः प्रत्यभाषत॥ ४५ ॥

तत्प्रशंसया प्रीतमनस्त्वेन चास्यापि तथैव तात्पर्यं लभ्यते। अत एवात्र वसुदेवनन्दनत्वेनैव वासुदेवशब्दः प्रयुक्तः॥४॥१७॥ श्रीसूतः॥४५॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अथ श्रीपरीक्षितः—अथो विहायेममसुञ्च लोकं विमर्शितौ हेय-तया पुरस्तात्। कृष्णाङ्घ्रिसेवामधिमन्यमानः उपाविशत् प्राय-ममर्त्यनद्याम् ॥ ४६ ॥

टीका च—श्रीकृष्णाङ्घ्रिसेवामधिमन्यमानः सर्वपुरुषार्थाधिकां जानन्नित्येषा ॥ १ ॥ १९ ॥ श्रीसूतः ॥ ४६ ॥

न वा इदं राजर्षिवर्य्य चित्रं भवत्सु कृष्णं समनुव्रतेषु। येऽध्या-सनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामाः ॥ ४७ ॥

भवत्सु पाण्डोर्वंशेषु ये जहुरिति श्रीयुधिष्ठिराद्यभिप्रायेण। अतएव तत्र स्थितानां सर्वश्रोतॄणामपि श्रीकृष्ण एव तात्पर्य्यमायाति ॥१॥१९॥ श्रीमहर्षयः परीक्षितम् ॥ ४७ ॥

अपि मे भगवान् प्रीतः कृष्णः पाण्डुसुतप्रियः। पैतृष्वसेयप्रीत्यर्थं तद्गोत्रस्यात्तबान्धवः ॥ अन्यथा तेऽव्यक्तगतेर्दर्शनं नो कथं नृणाम्। नितरां म्रियमाणानां संसिद्धस्य वनीयसः ॥ ४८ ॥

तेषां पैतृष्वस्रीयाणां पाण्डुसुतानां गोत्रस्य मे आत्तं स्वीकृतं बान्धवं बन्धुकृत्यं येन ते तव श्रीकृष्णस्यैकरसिकस्य वनीयसः अत्यु-दारतया मां याचेथा इति प्रवर्त्तकस्येत्यर्थः ॥ १ ॥ १९ ॥ राजा श्रीशुकम् ॥ ४८ ॥

स वै भागवतो राजा पाण्डवेयो महारथः।
बालः क्रीड़नकैः क्रीड़न् कृष्णक्रीड़ां य आददे ॥ ४९ ॥

या या श्रीकृष्णस्य वृन्दावनादौ बालक्रीड़ा श्रुतास्ति तत्प्रेमावेशेन तत्सख्यादिभाववान् तां तामेव क्रीड़ां यः कृतवानित्यर्थः ॥ २ ॥ ३ ॥ श्रीशौनकः ॥ ४९ ॥

एवंजातीयानि वहून्येव वचनानि विराजन्ते। तथा कथितो वंशविस्तार इत्यारभ्य नैषातिदुःसहा क्षुन्मामित्यन्तं दशमस्कन्धप्रक-रणमप्यनुसन्धेयम्। किञ्च इत्थं द्विजा यादवदेवदत्त इत्यादि ॥ ५० ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

येन श्रवणेन नितरां गृहीतं वशीकृतं चेतो यस्य सः ॥१०॥१२॥ श्रीसूतः ॥ ५० ॥

तथा, येन येनावतारेण इत्यादि यत् शृण्वतोऽपैतीत्यादि च ॥ ५१ ॥

टीका च—कृष्णार्भकसुधासिन्धुसंप्लवानन्दनिर्भरः। भूयस्तदेव संप्रष्टुं राजान्यदभिनन्दति। येन येन मत्स्याद्यवतारेणापि यानि कर्माणि करोति तानि नः कर्णसुखावहानि मनःप्रीतिकराणि च भवन्त्येव तथापि यच्छृण्वतः पुंसः पुंसामसुखारतिर्मनोग्लानिस्तन्मूलभूता विविधा तृष्णा च अपगच्छति तथा सत्वशुद्धिर्हरिभक्तिर्हरिदासैः सख्यानि च भवन्त्यचिरेणैव तदेवं शुभं हरेश्चरितं मनोज्ञं वा यदि अनुग्रहं यदि करोषीत्येषा ॥ १० ॥ ७ ॥ राजा ॥ ५१ ॥

अथ श्रीशुकदेवस्य—अपि मे भगवान् प्रीतः कृष्णः पाण्डुसुतप्रियः इत्यादिना श्रीकृष्ण एव रतिं व्यज्य म्रियमाणानां श्रोतव्यादिप्रश्नेनैवान्तकाले श्रीकृष्ण एव मय्युपदिश्यतामिति राजाभिप्रायानन्तरं वरीयानेष ते प्रश्नः कृतो लोकहितं नृप। आत्मवित् सम्मतः पुंसां श्रोतव्यादिषु यः परः ॥ ५२ ॥

ते त्वया पुंसां श्रोतव्यादिषु मध्ये यः परः श्रीकृष्णश्रवणाभिप्रायः परमः प्रश्नः कृतः एष वरीयान् सर्वावतारावतारिप्रश्नेभ्यः परः वरः। लोकहितं यथा स्यात्तथैव कृतः। त्वन्तु तथाभूतश्रीकृष्णैकनिबद्धप्रेमत्वात् कृतार्थ एवेति भावः। तदुक्तम्। वैयासकेरिति वचस्तत्त्वनिश्चयमात्मनः। उपधार्य मतिं कृष्णे औत्तरेयः सतीं व्यधादिति। सती विद्यमाना कृष्णे या मतिस्तामेव विशेषेण धृतवानित्यर्थः। एतदेव व्यक्तीकरिष्यते राज्ञा, हरेरद्भुतवीर्यस्य कथा लोकसुमङ्गलाः कथयस्व महाभाग यथाहमखिलात्मनि। कृष्णे निवेश्य निःसङ्गं मनस्त्यक्ष्ये कलेवरमिति ॥ २ ॥ १ ॥ श्रीशुकः ॥ ५२ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एवमेव, कथितो वंशविस्तार इत्याद्यनन्तरं सम्यग्व्यवसिता बुद्धि-रित्यादि ॥ ५२ ॥

पूर्वं मया नानावतारादिकथाभिरभिनन्दितस्यापि यत् श्रीवसुदेव-नन्दनस्यैव कथायां नैष्ठिकी स्थायिरूपा रतिर्जाता एषा बुद्धिस्तु सम्यग्व्यवसिता परमविदग्धेत्यर्थः ॥१०॥१॥ श्रीशुकः ॥५२॥

तथा, इत्थम् द्विजा यादवदेवदत्तः श्रुत्वा स्वरातुश्चरितं विचित्रम् इत्यनन्तरम् इत्थं स्म पृष्टः स च वादरायणिस्तत्स्मारितानन्तकृता-खिलेन्द्रियः। कृच्छ्रात् पुनर्लब्धवहिर्दृशिः शनैः प्रत्याह तं भागवतो-त्तमोत्तमम् ॥ ५४ ॥

अनन्तः प्रकटितपूर्णैश्वर्य्यः श्रीकृष्णः सर्वदा तेन स्मर्य्यमाणेऽपि तस्मिन् प्रतिक्षणं नव्यत्वेनैव तत्स्मारितेत्युक्तम् ॥ १० ॥ १२ ॥ श्रीसूतः ॥ ५४ ॥

अतएव, स वै भागवतो राजेत्याद्यनन्तरं राज्ञा समानवासनत्वेनैव तमाह—वैयासकिश्च भगवान् वासुदेवपरायणः। उरुगायगुणोदाराः सतां स्युर्हि समागमे ॥ ५५ ॥

चशब्दः प्राग्वर्णितेन समानवासनत्वं बोधयति। तस्मात् श्रीवसु-देवनन्दनत्वेनैवात्रापि वासुदेवशब्दो व्याख्येयः। अन्येषामपि सतां समागमे तावदुरुगायस्य गुणोदाराः कथा भवन्ति। तयोस्तु श्रीकृष्ण-चरितप्रधाना एव ता भवेयुरिति भावः ॥२॥३॥ श्रीशौनकः ॥५५॥

किं वहुना श्रीशुकदेवस्य श्रीकृष्ण एव तात्पर्य्यं तदेकचरितमयौ ग्रन्थार्द्धायमानौ दशमैकादशस्कन्धावेव प्रमाणम्। स्कन्धान्तरेष्वन्येषां चरितं संक्षेपेणैव समाप्य ताभ्यां तच्चरितस्यैव विस्तारितत्वात्। अत आरम्भ एव तत्प्रसादं प्रार्थयते श्रियः पतिरित्यादौ पतिर्गतिश्चान्धक-वृष्णिसात्वतां प्रसीदतां मे भगवान् सतां गतिः ॥ ५६ ॥ स्पष्टम् ॥४॥ श्रीशुकः ॥५६॥

अथ श्रीव्यासदेवस्य—अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

लोकस्याजानतो व्यासश्चक्रे सात्वतसंहिताम्। यस्यां वै श्रूयमाणायां कृष्णे परमपुरुषे। भक्तिरुत्पद्यते पुंसः शोकमोहभयापहा ॥५७॥

अधोक्षजे श्रीकृष्णे। अधोऽनेन शयानेन शकटान्तरचारिणा। राक्षसी निहता रौद्रा शकुनीवेशधारिणी। पूतना नाम घोरा सा महाकाया महाबला। विषदिग्धस्तनं क्षुद्रा प्रयच्छन्ती जनार्दने। ददृशुर्निहतां तत्र राक्षसीं वनगोचराः। पुनर्जातोऽयमित्याहुरुक्तस्तस्मादधोक्षजः॥ इति हरिवंशे श्रीवासुदेवमाहात्म्ये। तन्नाम्नः श्रीकृष्णविषयतया प्रसिद्धेः। अतएवोत्तरत्र पद्ये साक्षात् कृष्ण इत्येवोक्तम्। श्रीभगवन्नामकौमुदीकाराश्च कृष्णशब्दस्य तमालश्यामलत्विषि यशोदास्तनन्धये परब्रह्मणि रूढ़िरिति प्रयोगप्राचुर्य्यात्तत्रैव प्रथमतरप्रतीतिरुदय इति चोक्तवन्तः। नामोपनिषदि च—कृष्णाय देवकीनन्दनायेति। अत्र ग्रन्थफलत्वं तस्यैव व्यक्तमिति चैकेनैवानेन वचनेन तत्परिपूर्णता सिध्यति ॥ १ ॥ ७ ॥ श्रीसूतः ॥ ५७ ॥

अथ श्रीनारदस्य—

तत्रान्वहं कृष्णकथाः प्रागायतामनुग्रहेणाशृणवं मनोहराः।
ताः श्रद्धया मेऽनुपदं विशृण्वतः प्रियश्रवस्यङ्ग ममाभवद्रतिः ॥५८॥

येन येनावतारेणेत्येतच्छ्लोकपरीक्षितवचनपद्यद्वयमप्यत्र श्रीयशोदास्तनन्धयत्वे साधकं श्रुतिसामान्यन्यायेन ॥१॥५॥ श्रीनारदः श्रीवेदव्यासम् ॥ ५८ ॥

तच्छब्दस्यैवाभ्यासो दृश्यते—एवं कृष्णमतेरित्यादौ। अन्यत्र च। यूयं नृलोके वत भूरिभागा लोकं पुनाना मुनयोऽभियन्ति। येषां गृहानावसतीति साक्षाद् गूढ़ं परं ब्रह्म मनुष्यलिङ्गम्॥ स वा अयं ब्रह्म महद्विमृग्यं कैवल्यनिर्वाणसुखानुभूतिः। प्रियः सुहृद्वः खलु मातुलेय आत्मार्हणीयो विधिकृद्गुरुश्च ॥ न यस्य साक्षाद्भवपद्मजादिभीरूपं धिया वस्तुतयोपवर्णितम्। मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः ॥५९॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

टीका च—अहो प्रह्लादस्य भाग्यं येन देवो दृष्टः । वयन्तु मन्द-भाग्या इति विषीदन्तं राजानं प्रत्याह—यूयम् इति त्रिभिरित्येषा । मनुष्यस्य दृश्यमानमनुष्यस्येव लिङ्गं करचरणादिसन्निवेशो यस्य तं रूपं श्रीविग्रहः वस्तुतया नोपवर्णितं तद्रूपस्यैव परब्रह्मत्वेन किमिदं वस्त्विति निर्देष्टुमशक्यत्वात् । यथोक्तं सहस्रनामस्तोत्रे—अनिर्देश्यवपुरिति । एषामेव पद्यानां सप्तमान्तेऽपि परमामोदकत्वात् पुनरावृत्तिर्दृश्यते ॥ ७ ॥ १० ॥ स श्रीयुधिष्ठिरम् ॥ ५९ ॥

अत्र च स्पष्टम् । देवदत्तामिमां वीणां स्वरब्रह्मविभूषिताम् । मूर्च्छयित्वा हरिकथां गायमानश्चराम्यहम् ॥ प्रगायतः स्ववीर्य्याणि तीर्थपादः प्रियश्रवाः । आहूत इव मे शीघ्रं दर्शनं याति चेतसि ॥ ६० ॥

देवः श्रीकृष्ण एव । लिङ्गपुराणे उपरिभागे तेनैव स्वयं तस्य वीणाग्रहणं हि प्रसिद्धम् । अत्र यद्रूपेण वीणा ग्राहिता तद्रूपेणैव चेतसि दर्शनं स्वारस्यलब्धं देवदत्तामिति कृतोपकारतायाः स्मर्य्य-माणत्वेन तमनुसन्धायैव तदुक्तेः ॥ १ ॥ ६ ॥ श्रीनारदः श्रीवेद-व्यासम् ॥ ६० ॥

अत एतदेवमेव व्याख्येयम् । त्वमात्मनात्मानमवेह्यमोघदृक् परस्य पुंसः परमात्मनः कलाम् । अजं प्रजातं जगतः शिवाय तन् महानु-भावाभ्युदयोऽधिगण्यताम् ॥६१॥

हे अमोघदृक् त्वमात्मना स्वयम् आत्मानं स्वं परस्य पुंसः कला-मंशभूतमवेहि अनुसन्धेहि पुनश्च जगतः शिवायाधुनैव श्रीकृष्णरूपेण यश्चाजोऽपि प्रजातस्तमवेहि । तदेतद्द्वयं ज्ञात्वा महानुभावस्य सर्वाव-तारावतारिवृन्देभ्योऽपि दर्शितप्रभावस्य तस्य श्रीकृष्णस्यैव अभ्युदयो लीला अधि अधिकं गण्यतां निरूप्यताम् । स्वयमीश्वरोऽपि भवान् निजाज्ञानरूपां मायां न प्रकटयत्विति भावः ॥ १ ॥ ५ ॥ स तम् ॥ ६१ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतएव पुराणप्रादुर्भावाय श्रीव्यासं श्रीनारदेन चतुर्व्यूहात्मक-श्रीकृष्णमन्त्र एवोपदिष्टस्तदुपासकस्य सर्वोत्तमत्वञ्च। यथा नमो भगवत इत्यादि स सम्यग्दर्शनः पुमानित्यन्तम् ॥ ६२ ॥

स्पष्टम् ॥ १ ॥ ५ ॥ स तम् ॥ ६२ ॥

अथ श्रीब्रह्मणः—भूमेः सुरेतरवरूथविमर्दितायाः क्लेशव्ययाय कलया सितकृष्णकेशः। जातः करिष्यति जनानुपलक्ष्यमार्गः कर्माणि चात्ममहिमोपनिबन्धनानि ॥ ६३ ॥

असुरसेनानिपीड़िताया भूमेः क्लेशमपहर्त्तुं परमात्मनोऽपि परत्वाज्जनैरस्माभिरनुपलक्ष्यमार्गोऽपि प्रादुर्भूतः सन् कर्माणि च करिष्यति। कोऽसौ कलया अंशेन सितकृष्णकेशो यः। यत्र सितकृष्णकेशौ देवैर्दृष्टाविति शास्त्रान्तरप्रसिद्धिः। सोऽपि यस्यांशेन स एव भगवान् स्वयमित्यर्थः। तदविनाभावत्वाच्छ्रीबलदेवस्यापि ग्रहणं द्योतितम्। ननु पुरुषादपि परोऽसौ भगवान् कथं भूभारावतारणमात्रार्थं स्वयम् अवतरिष्यतीत्याशङ्क्याह। आत्मनो महिमानः परममाधुरीसम्पद उपनिबध्यन्ते निजभक्तैरधिकं वर्ण्यन्ते येषु तानि कर्माणि च करिष्यति। यद्यपि निजांशेनैव वा निजेच्छाभासेनैव वा भूभारहरणमीषत्करं तथापि निजचरणारविन्दजीवातुवृन्दमानन्दयन्नेव लीलाकादम्बिनीनिजमाधुरीवर्षणाय वितरिष्यमाणोऽवतरिष्यतीत्यर्थः। एतदेव व्यक्तीकृतं तोकेन जीवहरणमित्यादौ। इतरथा स्वमाधुरीसम्पत्प्रकाशनेच्छामन्तरेण मधुरतरं तोकादिभावं दधता तेन पूतनादीनां जीवहरणादिकं कर्म्म न भाव्यं न सम्भावनीयम् तदंशतदिच्छाभासादिमात्रेणैव तत्सिद्धेरिति वाक्यार्थः। तथा च तथायञ्चावतारस्ते इत्यादौ तैरेव व्याख्यातम्। किं भूभारहरणं मदिच्छामात्रेण न भवति तत्राह स्वानामितीति। जयति जननिवास इत्यत्र च इच्छामात्रेण निरसनसमर्थोऽपि क्रीड़ार्थं दोर्भिरधर्म्ममस्यन्निति तदेवमादिभिः श्रीकृष्णस्यैव सर्वाङ्गुततावर्णनाभिनिवेशप्रपञ्च-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ब्रह्मणि स्पष्ट एव। अस्तु तावत् तद्भूरि भाग्यमिह जन्म किमप्यटव्यामित्यादि ॥ २ ॥ ७ ॥ श्रीब्रह्मा श्रीनारदम् ॥ ६३ ॥

एवं चतुःश्लोकीवक्तुः श्रीभगवतोऽपि श्रीकृष्णत्वेनैव दर्शितत्वात्तस्य चाहमेवासमेवाग्रे इत्याद्युक्तेस्तस्मिन्नेव तात्पर्य्यं स्पष्टम्। किं बहुना नानावतारावतारिष्वपि सत्सु महापुराणप्रारम्भ एव श्रीशौनकादीनां श्रीकृष्णे तात्पर्य्यम्। अत्र पूर्वं सामान्यतोऽस्माभिरैकान्तश्रेयस्त्वेन सर्वशास्त्रसारत्वेन आत्मसुप्रसादहेतुत्वेन च यत् पृष्टं तदेतदेवास्माकं भाति यत् श्रीकृष्णस्य लीलावर्णनमित्यभिप्रेत्याहुः।

सूत जानासि भद्रं ते भगवान् सात्वतां पतिः।
देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया ॥ ६४ ॥

भद्रं त इति श्रीकृष्णलीलाप्रश्नसहोदरौत्सुक्येनाशीर्वादः। भगवान् स्वयमेवावतारो। सात्वतां यादवानाम्।

तन्नः शुश्रूषमाणानामर्हस्यङ्गानुवर्णितुम्।
यस्यावतारो भूतानां क्षेमाय च भवाय च ॥ ६५ ॥

अङ्ग हे सूत सामान्यतस्तावद्यस्यावतारमात्रं क्षेमाय पालनाय भवाय समृद्धये च।

तत्प्रभावमनुवर्णयन्तस्तद्यशःश्रवणौत्सुक्यमाविष्कुर्वन्ति।

आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन्।
ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम् ॥ ६६ ॥

विवशोऽपि यस्य श्रीकृष्णस्य नाम तस्यावतारित्वादवतारनाम्नामपि तत्रैव पर्य्यवसानात्। अतएव साक्षात् श्रीकृष्णादपि तत्तन्नामप्रवृत्तिः प्रकारान्तरेण श्रूयते श्रीविष्णुपुराणे। तत्र त्वखिलानामेव भगवन्नाम्नां कारणान्यभवन्निति हि तदीयं गद्यम्। ततः संसृतेः। यद् यतो भयमपि स्वयं बिभेति। किञ्च।

यत्पादसंश्रयाः सूत मुनयः प्रशमायनाः।
सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया ॥ ६७ ॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यस्य श्रीकृष्णस्य पादौ संश्रयो येषाम्, अतएव प्रशमायनाः, ग्रा
भगवन्निष्ठबुद्धिता शमो मन्निष्ठता बुद्धेरिति स्वयं श्रीभगवद्व्याख्या
स एव प्रकृष्टः शमः प्रशमः, साक्षात्पूर्णभगवत्श्रीकृष्णसम्बन्धि
त्वात्, प्रशम एवायनं वर्त्म आश्रयो वा येषां ते श्रीकृष्णलील
रसाकृष्टचित्ता मुनयः श्रीशुकदेवादयः, उपस्पृष्टाः सन्निधिमात्रे
सेविताः, सद्यः पुनन्ति सवासनपापेभ्यः शोधयन्ति। स्वर्धुनी ग
तस्या आपस्तु, योऽसौ निरञ्जनो देवश्चित्स्वरूपी जनार्दनः स
द्रवरूपेण गङ्गाम्भो नात्र संशयः, इति स्वयं तथाविधरूपा अपि, साक्ष
च्छ्रीवामनदेवचरणान्निःसृता अपि, अनुसेवया साक्षात् सेवाभ्यासे
तथा शोधयन्ति, न सन्निधिमात्रेण सेवया। साक्षात् सेवयापि न सद्
इति तस्या अपि श्रीकृष्णाश्रितानामुत्कर्षात्तस्योत्कर्षः। एवमेव तत
स्तद्यशसोऽप्याधिक्यं वर्ण्यते। तीर्थं चक्रे नृपोनं यदजनि यदुषु
स्वःसरित्पादशौचमिति। टीका च—इतः पूर्वं स्वःसरिदेव सर्वतो
ऽधिकं तीर्थमित्यासीत् इदानीं यदुषु यदजनि जातं तीर्थं श्रीकृष्ण
कीर्त्तिरूपम् एतत् स्वःसरिद्रूपं पादशौचं तीर्थम् ऊनम् अल्पत्वं
इत्येषा। एतस्य दशमस्कन्धपद्यस्यैव सम्वादितां व्यनक्ति।

को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्म्मणः।
शुद्धिकामो न शृणुयाद्यशः कलिमलापहम् ॥६८॥

स्पष्टम्। यस्मादेवं तस्मात्।

तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः।
ब्रूहि नः श्रद्दधानानां लीलया दधतः कलाः ॥६९॥

उदाराणि परमानन्ददातॄणि जन्मादीनि स्वयं परिपूर्णस्य लीलया
अन्या अपि कलाः पुरुषादिलक्षणा दधतस्तत्तदंशानप्यादाय तस्य
वतीर्णस्य सत इत्यर्थः।

अथाख्याहि हरेर्धीमन्नवतारकथाः शुभाः।
लीला विदधतः स्वैरमीश्वरस्यात्ममायया ॥ ७० ॥

श्रीकृष्णस्य तावन्मुख्यत्वेन कथय अथ तदनन्तरमानुषङ्गिकतयेत्यर्थः। हरेः श्रीकृष्णस्य प्रकरणबलात्। अवताराः पुरुषस्य गुणावतारा लीलावताराश्च तेषां कथा लीलाः सृष्ट्यादिकर्मरूपाः भूभारहरणादिरूपाश्च। औत्सुक्येन पुनरपि तच्चरितान्येव श्रोतुमिच्छन्तस्तत्रात्मनस्तृष्णस्वभावमावेदयन्ति।

वयन्तु न वितृप्याम उत्तमश्लोकविक्रमे।
यच्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे ॥ ७१ ॥

योगयागादिषु तृप्ताः स्मः भगवद्विक्रममात्रे तु न तृप्याम एव तत्रापि तीर्थं चक्रे नृपोनमित्याद्युक्तलक्षणस्य सर्वतोऽप्युत्तमश्लोकस्य विक्रमे विशेषेण न तृप्यामः अलमिति न मन्यामहे। तत्र हेतुः। यद्विक्रमं शृण्वताम्। यद्वा अन्ये तृप्यन्तु नाम वयन्तु नेति तु शब्दस्यान्वयः।

कृतवान् किल कर्म्माणि सह रामेण केशवः।
अतिमर्त्त्यानि भगवान् गूढ़ः कपटमानुषः ॥ ७२ ॥

टीका च—अतः श्रीकृष्णचरितानि कथयेत्याशयेनाहुः कृतवानिति। अतिमर्त्त्यानि मर्त्त्यानतिक्रान्तानि गोवर्द्धनोद्धरणादीनि मनुष्येष्वसम्भावितानीत्यर्थः इत्येषा। ननु कथं मानुषः सन्नतिमर्त्त्यानि कृतवान्, तत्राह, कपटमानुषः, पार्थिवदेहविशेष एव मानुषशब्दः प्रतीतः, तस्मात् कपटेनैवासौ तथा भातीत्यर्थः, वस्तुतस्तु नराकृतेरेव परब्रह्मत्वेनासत्यपि प्रसिद्धमानुषत्वे नराकृतिनरलीलात्वेन लब्धमप्रसिद्धमानुषत्वमस्त्येव। तत् पुनरैश्वर्य्याव्याघातकत्वान्न प्रत्याख्यायत इति भावः। अतएव स्यमन्तकाहरणे प्राकृतं पुरुषं मत्वेत्यनेन जाम्बवतोऽन्यथाज्ञानव्यञ्जकेन तस्य प्राकृतत्वं निषिध्य पुरुषत्वं स्थाप्यते। एवं मायामनुष्यस्य वदस्व विद्वन्नित्यादिष्वपि ज्ञेयम्। यस्मात् कपटमानुषस्तस्मादेव गूढ़ः स्वतस्तु तद्रूपतयैव भगवानिति १ ॥ १५ ॥ श्रीशौनकः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अथ श्रीसूतस्यापि—इति संप्रश्नसंहृष्ट इत्याद्यनन्तरं नाराय
नमस्कृत्येत्याद्यन्ते पुराणमुपक्रम्यैवाह—

मुनयः साधु पृष्टोऽहं भवद्भिर्लोकमङ्गलम्।
यत् कृतः कृष्णसंप्रश्नो येनात्मा सुप्रसीदति ॥ ७२ ॥

टीका च—तेषां वचः प्रतिपूज्येति यदुक्तं तत् प्रतिपूजनं करोति
हे मुनयः साधु यथा भवति तथाहं पृष्टः, यतो लोकानां मङ्गलमेतत्
यतः कृष्णविषयः संप्रश्नः कृतः, सर्वशास्त्रार्थसारोद्धारप्रश्नस्यापि कृष्णे
पर्य्यवसानादेवमुक्तमित्येषा। अतएवोत्तरेष्वपि पद्येषु अधोक्षजवासुदेव
सात्वतांपतिकृष्णशब्दास्तत्प्राधान्यविवक्षयैव पठिताः। अत्र श्रेयः
प्रश्नस्याप्युत्तरं लोकमङ्गलमित्यनेनैव दत्तं भवति। तथात्मसुप्रसाद
हेतोश्च येनात्मा सुप्रसीदतीत्यनेन ॥ १ ॥ २ ॥ श्रीसूतः ॥ ६४—७२ ॥

तदेवं श्रोतृवक्तॄणामेकमत्येन च तात्पर्य्यं सिद्धम्। किञ्च एतस्या
मष्टादशसाहस्र्यां संहितायां श्रीकृष्णस्यैवाभ्यासबाहुल्यं दृश्यते। तत्र
प्रथमदशमैकादशेष्वतिविस्तरेणैव। द्वितीये श्रीब्रह्मनारदसंवादे।
तृतीये श्रीविदुरोद्धवसंवादे। चतुर्थे ताविमौ वै भगवतो हरेरंशाविह
गतावित्यादौ यच्चान्यदपि कृष्णस्येत्यादौ च। पञ्चमे राजन् पति
र्गुरुरलमित्यादौ। षष्ठे मां केशवो गदया प्रातरव्याद् गोविन्द आस
ङ्गव आत्तवेणुरित्यत्र। सप्तमे नारदयुधिष्ठिरसंवादे। अष्टमे तन्म
हिमविशेषबीजारोपरूपे कालनेमिबधे तादृशश्रीमदजितद्वारापि तस्य
मुक्तिर्नाभवत् किन्तु पुनः कंसत्वे तद्वारैवेति तन्महिमविशेषकथन
प्रथमाङ्गत्वात्। नवमे सर्वान्ते। द्वादशे च श्रीकृष्ण कृष्णसख वृष्ण्यृष
भावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य्येत्यादौ। श्रीभागवतानुक्रमणि
कायाञ्च। तथा च यस्यैवाभ्यासस्तदेव शास्त्रे प्रधानमित्यानन्दमयो
ऽभ्यासादित्यत्रापरैरपि समर्थितत्वादिहापि श्रीकृष्ण एव प्रधानं भव
तीति तस्यैव मूलभगवत्त्वं सिध्यति। यत्प्रतिपादकत्वेनास्य
शास्त्रस्य भागवतमित्याख्या। अपि च न केवलं बहुत्र सूचनमात्र

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मन्त्राभ्यसनम् अपि तद्ग्रन्थादप्यधिको ग्रन्थस्तत्प्रस्तावको दृश्यते। तत्रापि सर्वांश्यर्थ्यतया। तस्मात् साधूक्तम् एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमिति। तदेवमस्य वचनराजस्य सेनासंग्रहो निरूपितः। तथा तस्य प्रतिनिधिरूपाणि वाक्यान्तराणि अपि दृश्यन्ते। यथा—

अष्टमस्तु तयोरासीत् स्वयमेव हरिः किलेति ॥ ७४ ॥

किलशब्देन कृष्णस्त्विति प्रसिद्धिः सूच्यते। ततो हरिरत्र भगवानेव। यथोक्तम्। वसुदेवगृहे साक्षाद्भगवान् पुरुषः पर इति च। ८ ॥ २४ ॥ श्रीशुकः ॥ ७४ ॥

यथा वा—अहो भाग्यमहो भाग्यमित्यादि ॥ ७५ ॥

ब्रह्मत्वेनैव बृहत्तमत्वे लब्धेऽपि पूर्णमित्यधिकं विशेषणमत्रोपजीव्यते ॥ १० ॥ १४ ॥ श्रीब्रह्मा श्रीभगवन्तम् ॥ ७५ ॥

अतएव, स्वयन्त्वसाम्यातिशयस्त्र्यधीशः स्वाराज्यलक्ष्म्याप्तसमस्तकामः। बलिं हरद्भिश्चिरलोकपालैः किरीटकोटीड़ितपादपीठः ॥७६॥

न साम्यातिशयौ यस्य यमपेक्ष्यान्यस्य साम्यमतिशयश्च नास्तीत्यर्थः। तत्र हेतवस्त्र्यधीशस्त्रिषु संकर्षणप्रद्युम्नानिरुद्धेष्वप्यधीशः, सर्वांशित्वादत एव स्वाराज्यलक्ष्म्या सर्वाधिकपरमानन्दस्वरूपसंपत्त्यैव प्राप्तसमस्तभोगः, बलिं तदिच्छानुसरणरूपमर्हणं हरद्भिश्चिरैर्लोकपालैर्भगवदृष्ट्यपेक्षया ब्रह्मादयस्तावदचिरलोकपालाः अनित्यत्वात्, ततश्च चिरकालीनैर्लोकपालैरनन्तब्रह्माण्डान्तर्यामिपुरुषैः किरीटकोटिद्वारा ईड़ितं स्तुतं पादपीठं यस्य सः। अत्यन्ततिरस्कृतवाच्यध्वनिना परमश्रेष्ठ इत्यर्थः। समस्तपाठेऽपि स एवार्थः। श्रीकृष्ण इति प्रकरणलब्धं विशेष्यपदम्। अत्र स्वयम्भुः स्वयमेव तथा तथाविध इति कृष्णस्तु भगवान् स्वयमितिवत् स्वयम्भगवत्तामेव व्यनक्ति ॥३॥२॥ श्रीमदुद्धवो विदुरम् ॥ ७६ ॥

तदेतत् पूर्णत्वं दृष्टान्तद्वारापि दर्शितमस्ति। यथा—

देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः ॥ ७७ ॥

यथा यथावत् स्वस्वरूपेणैवेत्यर्थः ॥ १० ॥ ३ ॥ श्रीशुकः ॥ ७७ ॥

यथा च —

अखण्डमण्डलो व्योम्नि रराजोडुगणैः शशी ।

यथा यदुपतिः कृष्णो वृष्णिचक्रावृतो भुवि ॥ ७८ ॥

स्पष्टम् ॥ १० ॥ २० ॥ श्रीशुकः ॥ ७८ ॥

तथा श्रीकृष्णप्रतिनिधिरूपत्वादस्य महापुराणस्य श्रीकृष्ण एव मुख्योऽभिधेय इत्यप्याह ।

कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह ।

कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः ॥ ७९ ॥

स्पष्टम् ॥ १ ॥ २ ॥ श्रीसूतः ॥ ७९ ॥

तदेवं श्रीकृष्णस्य स्वयं भगवत्त्वं दर्शितम् । तत्तु गतिसाम्येनापि लभ्यते । यथा महाभारते—सर्वे वेदाः सर्वविद्याः सर्वशास्त्राः सर्वे यज्ञाः सर्व इज्यश्च कृष्णः । विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये तेषां राजन् सर्वयज्ञाः समाप्ता इति । अत्र सर्वसमन्वयसिद्धेः पूर्णत्वमेव लभ्यते । एवं श्रीभगवदुपनिषत्सु च—वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् इति ब्रह्मणो हि प्रतिष्ठाहमित्यादि च। ब्रह्मसंहितायाम्—चिन्तामणिप्रकरसद्मसुकल्पवृक्षलक्षावृतेषु सुरभीरभिपालयन्तमित्यादिकमुपक्रम्य यस्यैकनिःश्वसितकालमथावलम्ब्य जीवन्ति लोमविलजा जगदण्डनाथाः । विष्णुर्महान् स इह यस्य कलाविशेषो गोविन्दमादिपुरुषं तमहं भजामीति । ननु पाद्मोत्तरखण्डादौ सर्वावतारी परमव्योमाधिपतिर्नारायण एवेति श्रूयते, पञ्चरात्रादौ तु वासुदेवः । न च स स कृष्ण एवेति वक्तव्यम् । तत्तु स्थानपरिकरनामरूपाणां भेदात् । तर्हि कथं श्रीकृष्णस्यैव सर्वावतारित्वं स्वयम्भगवत्त्वं वा । अत्रोच्यते । श्रीभागवतस्य सर्वशास्त्रचक्रवर्त्तित्वं प्रथमसन्दर्भे प्रघट्टकेनैव दर्शितम् । पूर्णज्ञानप्रादुर्भावानन्तरमेव श्रीवेद

व्यानेन तत् प्रकाशिनमिति च तत्रैव प्रसिद्धम्। स्फुटमेव दृश्यते चास्मिन् प्रशास्त्रोपमर्द्दकत्वम्—इत्यङ्गोपदिशन्त्येके विस्मृत्य प्रागुदाहृतं मुनिनामनिवाने किं घटेतारिष्टदर्शनमित्यादौ एवं वदन्ति राजर्षे इत्यादौ च। अतएव नवमेऽप्युक्तम्—हित्वा स्वशिष्यान् पैलादीन् भगवान् वादरायणः। मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगाविति। तदेवं सर्वशास्त्रोपरिचरत्वं सिद्धम्। तत्र श्रीकृष्णस्यैव स्वयं भगवत्त्वं निरूपितम्। दृश्यते च प्रशंसितृवैशिष्ट्येन प्रशस्यस्यापि वैशिष्ट्यम्। यथा ग्रामाध्यक्षराजसभयोः सर्वोत्तमत्वेन प्रशस्यमानो वस्तुविशेषौ तारतम्यमापद्येते। तदेवं सत्स्वप्यन्येषु तेष्वन्यत्र प्रशस्तेषु श्रीभागवतप्रशस्यमानस्य श्रीकृष्णस्यैव परमाधिक्यं सिद्धति। अतएव कृष्णस्तु भगवान् स्वयमिति सावधारणा श्रुतिर्बाधिकेति युक्तमेव व्याख्यातं पूर्वमपि। ततश्च ते तु परमव्योमाधिपनारायणवासुदेवादयः श्रीकृष्णस्यैव मूर्त्तिविशेषा भवेयुः। स्वयं श्रीकृष्णस्तु नारायणस्त्वमित्याद्युक्तो महानारायणो द्वारकादिप्रसिद्धो महावासुदेवश्च भवेत्। ततश्च नारायणवासुदेवोपनिषदोः स एव व्यक्तः। ब्रह्मण्यो देवकीपुत्र इति, देवकीनन्दनो निखिलमानन्दयादिति च। तदित्थमेव तं वासुदेवमपि विभूतिनिर्विशेषतया स्वयमेव स्पष्टमाह—वासुदेवो भगवतामिति ॥ ८० ॥ ११ ॥ १६ ॥ स्पष्टम् ॥

तथा सात्वतां नवमूर्त्तीनामादिमूर्त्तिरहं परेति ॥ ८१ ॥

टीका च—सात्वतां भागवतानां नवव्यूहार्च्चने वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धनारायणहयग्रीववराहनृसिंहब्रह्माण इति या नवमूर्त्तयस्तासां मध्ये वासुदेवाख्येत्येषा। अतएव दृश्यते चाद्वैतवादिनामपि सन्न्यासिनां व्यासपूजापद्धतौ श्रीकृष्णस्य मध्यसिंहासनस्थत्वं वासुदेवादीनां व्यासादीनाञ्चावरणदेवतात्वमिति। अतएव च क्रमदीपिकायामष्टावरपटले श्रीवासुदेवादयस्तदावरणत्वेन श्रूयन्ते। यत्तु वृष्णीनां वासुदेवोऽस्मि इति भगवदुपनिषदः, तत्र वासुदेवशब्देन वसुदेवा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पत्यार्थेन श्रीबलदेव एवोच्यते। वक्ता हि तत्र श्रीकृष्ण एव। ततश्च स्वविभूतिं कथयति तस्मिन्नपि विभूतित्वारोपो न युज्यते, वक्तुरन्यत्वेन श्रोतृभिस्तत्प्रतीतेः। ततो मुख्यार्थबाधे तथैव व्याख्या समुचिता। तस्मात् साधु व्याख्यातं वासुदेवो भगवतामित्यादि ॥ ११ ॥ १६ ॥ श्रीभगवान् ॥ ८०—८१ ॥

यस्मादेवं सर्वतोऽपि तस्योत्कर्षस्तस्मादेवान्यतस्तदीयनामादीनामपि महिमाधिक्यमिति गतिसामान्यान्तरञ्च लभ्यते। तत्र नाम्नो यथा ब्रह्माण्डपुराणे श्रीकृष्णाष्टोत्तरशतनामामृतस्तोत्रे—सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत् फलम्। एकावृत्त्या तु कृष्णस्य नामैकं तत् प्रयच्छतीति। व्यक्तीक्रियते चाधिकफलत्वं कृष्णनाम्नः पाद्मे पातालखण्डे श्रीमथुरामाहात्म्ये श्रीमहादेवस्यैव वाक्ये—तारकाज्जायते मुक्तिः प्रेमभक्तिस्तु पारकादिति। पूर्वमत्र मोचकत्वप्रेमदत्वाभ्यां तारकपारकसंज्ञे रामकृष्णनाम्नोर्हि विहिते। तत्र च रामनाम्नि मोचकत्वशक्तिरेवाधिका श्रीकृष्णनाम्नि तु मोक्षसुखतिरस्कारिप्रेमानन्ददातृत्वशक्तिः समधिकेति भावः। इत्थमेवोक्तं विष्णुधर्मोत्तरे—यच्छक्ति नाम यत् तस्य तस्मिन्नेव च वस्तुनि साधकं पुरुषव्याघ्र सौम्यक्रूरेषु वस्तुष्विति। किञ्च श्रीकृष्णनाम्नो माहात्म्यं निगदेनैव श्रूयते प्रभासपुराणे श्रीनारदकुशध्वजसंवादे श्रीभगवदुक्तौ—नाम्नां मुख्यतमं नाम कृष्णाख्यं मे परन्तपेति। तदेवं गतिसामान्येन नाममहिमद्वारा तन्महिमातिशयः साधितः। तथा तदीयगुणरूपलीलामथुरादिस्थानानामपि तत्तच्छास्त्रप्रतिपद्यमानैः सर्वाधिकमहिमभिरप्यसावनुसन्धेयः। विस्तरभिया तु नोदाह्रियते। इत्थमेव श्रीकृष्णस्यैवासमोर्द्ध्वमहिमत्वात् स्वयमेव तेनापि सकलभक्तवृन्दवन्दितभगवत्प्रणयं श्रीमदर्जुनं प्रति सर्वशास्त्रार्थसारभूतश्रीगीतोपसंहारवाक्ये निजाखिलप्रादुर्भावान्तरभजनमतिक्रम्य स्वभजनमेव सर्वगुह्यतमत्वेनोपदिष्टम्। यथाह—कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि

तदित्यनन्तरम् ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति, भ्रामयन् सर्वभूतानि यन्त्रारूढ़ाणि मायया। तमेव शरणं गच्छ सर्वभावेन भारत। तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्। इति ते ज्ञानमाख्यातं गुह्याद्‌गुह्यतरं मया। विमृश्यैतदशेषेण यथेच्छसि तथा कुरु। सर्वगुह्यतमं भूयः शृणु मे परमं वचः। इष्टोऽसि मे दृढ़मिति ततो वक्ष्यामि ते हितम्। मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे। सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः। इति॥ एषामर्थः। अशोच्यानन्वशोचस्त्वमित्यादि-ग्रन्थो न युद्धाभिधायकः। यतः कर्त्तुमित्यादि। ततः परमार्थाभि-धायक एवायं तत्रापि गुह्यतरं सर्वगुह्यतमञ्च शृणु इत्याह। ईश्वर इत्यादि। य एकः सर्वान्तर्यामी ईश्वरः स एव सर्वाणि संसारयन्त्रा-रूढ़ाणि भूतानि मायया भ्रामयन् तेषामेव हृद्देशे तिष्ठति सर्वभावेन पुरुष एवेदं सर्वमिति भावनायाः सर्वेन्द्रियप्रवणतया वा परां शान्तिं तदीयां परमां भक्तिं शमो मन्निष्ठताबुद्धेरित्युक्तेः। स्थानं तदीयं धाम, गुह्याद् ब्रह्मज्ञानादपि गुह्यतरं, द्वयोः प्रकर्षे तरप्। अथेद-मपि निजैकान्तभक्तवराय तस्मै न पर्य्याप्तमिति अवधार्य स्वयमेव महाकृपाभरेणोद्घाटितपरमरहस्यः श्रीभगवानन्यामपि प्रद्युम्नसङ्कर्षण-वासुदेवपरमव्योमाधिपलक्षणभजनीयतारतम्यगम्यां भजनक्रमभूमिका-मतिक्रम्यैव सर्वतोऽप्युपादेयमेव सहसोपदिशति। सर्वगुह्यतमं भूय इति। यद्यपि गुह्यतमत्वोक्तेरेव गुह्यगुह्यतराभ्यामपि प्रकृष्टमिदमित्या-याति तथापि सर्वशब्दप्रयोगो गुह्यतममपि परमव्योमाधिपादिभज-नार्थशास्त्रान्तरवाक्यमत्येतीति। तस्य यावदर्थवृत्तिकत्वात्। बहूनां प्रकर्षे तमप्। अतएव परमम्। स्वकृततादृशहितोपदेशश्रवणे हेतुमाह— इष्टोऽसि मे दृढ़मितीति। परमाप्तस्य ममैतादृशं वाक्यं त्वयावश्यं श्रोतव्यमिति भाव इत्यर्थः। स्वस्य च तादृशरहस्यप्रकाशने हेतु-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

माह—तत इति। ततस्तादृशश्रेष्ठत्वादेव हेतोः। तदेवमौत्सुक्य-
मुच्छलय्य किं तदित्यपेक्षायां सप्रणयाश्रुकृताञ्जलिमितं प्रत्याह-
मन्मना इति। मयि त्वन्मित्रतया साक्षादस्मिन् स्थिते श्रीकृष्णे मनो
यस्य तथाविधो भव। एवं मद्भक्तो मदेकतात्पर्यको भवेत्यादि
सर्वत्र मच्छब्दावृत्त्या मद्भजनस्यैव नानाप्रकारतया आवृत्तिः कर्त्तव्या
नत्वीश्वरतत्त्वमात्रभजनस्येति बोध्यते। साधनानुरूपमेव फलमाह-
मामेवैष्यसीति। अनेनैवकारेणाप्यात्मनः सर्वश्रेष्ठत्वं सूचितम्। अन्य
का वार्त्ता मामेवेति। एतदेव फलं श्रीपरीक्षितापि व्यक्तीकारि
कलिं प्रति। यस्त्वं कृष्णे गते दूरं सह गाण्डीवधन्वना। शोच्योऽ
शोच्यान् रहसि प्रहरन् वधमर्हसीति। सत्यं ते इत्यनेनात्मार्थं तु
मेव शपेऽहमिति प्रणयविशेषो दर्शितः। पुनरप्यतिकृपया सर्वगु
तममित्यादिवाक्यार्थानां पुष्ट्यर्थमाह—प्रतिजाने इति। ननु नाना
प्रतिबन्धविक्षिप्तस्य मम कथं त्वन्मनस्त्वादिकमेव सिध्येत्तत्राह-
सर्वेति। सर्वशब्देन नित्यपर्यन्ता धर्मा विवक्षिताः। परित्यज्ये
तेषां स्वरूपतोऽपि त्यागः समर्थितः। पापानि प्रतिबन्धास्तदाश्र
परित्यागे पापानुत्पत्तेः। तदेव व्यतिरेकेण द्रढयति—मा शुच इति।
अत्राशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे। गतासूनगतासूंश्च
नानुशोचन्ति पण्डिता इत्युपक्रमवाक्ये तस्यापण्डितत्वं व्यज्य शोक
परित्यागेन मत्कृतोपदेशमेव गृहाणेति विवक्षितम्। ततश्च ता
तस्य ज्ञानार्थमेव बहुधोपदिश्यापि महोपसंहारवाक्यस्यास्य त्वदो
देशस्य परमत्वं निर्दिश्य शोकपरित्यागेन तमेतमेवोपदेशं ह
गृहाणेति द्वयोर्वाक्ययोरेकार्थप्रवृत्तत्वमपि स्पष्टम्। अतः श्रीकृ
स्यैवाधिक्यं सिद्धम्। अतएवासद्व्यपदेशान्नेति चेन्न धर्मान्तरे
वाक्यशेषादिति न्यायादुपसंहारस्यैवोपक्रमार्थनिर्णायकत्वादुपक्रमो
संहारार्थस्य च सर्वशास्त्रार्थत्वात्तच्चोक्तं विश्वरूपमपि तदधीनमेव
तच्च युक्तम्। तेनैव दर्शितत्वात्। तच्च च—इत्यर्जुनं वासुदे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः । इति नराकारचतुर्भुजरूपस्यैव स्वकत्वनिर्द्देशात् । तद्विश्वरूपं न तस्य साक्षात् स्वरूपमिति स्पष्टम् । अतएव परमभक्तस्यार्जुनस्यापि न तदभीष्टम् । किन्तु तदीयं स्वकं रूपमेवाभीष्टम् । अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे इत्याद्युक्तेः । तद्दर्शनार्थमर्जुनं प्रति दिव्यदृष्टिदानलिङ्गेन तस्यैव माहात्म्यमिति तु बालकोलाहलः । नराकृति परं ब्रह्मेति, तदमितं ब्रह्माद्वयं शिष्यत इति, यन्मित्रं परमानन्दमिति, स एव नित्यात्मसुखानुभूत्या व्युदस्तमाय इति, स त्वं विभो कथमिहाक्षपथप्रतीत इति च, तथा ब्रह्मणो हि प्रतिष्ठाहमिति, नाहं प्रकाशः सर्वस्येति च श्रवणेन प्राकृतदृष्टेस्तत्प्राप्यकरणत्वाङ्गवच्छक्तिविशेषसंवलितदृष्टेरेव तत्र करणत्वात् । ततस्तस्या दृष्टेर्दिव्यत्वं दानञ्च नराकारपरब्रह्मदर्शनहेतुलक्षणायास्तत्स्वाभाविकदृष्टेरन्यासौ देववपुर्दर्शनहेतुरित्यपेक्षयैव । तच्च नराकृतिपरब्रह्म दिव्यदृष्टिभिरपि दुर्दर्शमित्युक्तम् । सुदुर्द्दर्शमिदं रूपं दृष्टवानसि यन्मम । देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिण इत्यादिना । किन्तु भक्त्यैव सुदर्शनमित्यप्युक्तम् । भक्त्या त्वनन्यया शक्य अहमेवम्विधोऽर्जुन । ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तपेत्यादिना । न च सुदुर्द्दर्शमित्यादिकं विश्वरूपपरम् । दृष्ट्वेदं मानुषं रूपमित्यादेरेवाव्यवहितपूर्वाक्तत्वात् विश्वरूपप्रकरणस्य तत्रावधानाच्च । तथा चैकादशे सर्वेषां देवादीनामागमने—व्यचक्षतावितृप्ताक्षाः कृष्णमद्भुतदर्शनमिति । तत्रैवान्यत्र—गोविन्दभुजगुप्तायामित्यादि । सप्तमे—यूयं नृलोके इत्यादि च । अत उपसंहारानुरोधेन स्ववाक्यतात्पर्य्येण चास्यापि प्रकरणस्य श्रीकृष्णपरत्वमेव । तस्मात् श्रीकृष्णगीतासु च श्रीकृष्णस्यैव स्वयं भगवत्त्वं सिद्धम् । तदुक्तम्—एकं शास्त्रं देवकीपुत्रगीतमेको देवो देवकीपुत्र एव । कर्माप्येकं देवकीपुत्रसेवा मन्त्रोऽप्येको देवकीपुत्रनामेति । तथा श्रीगोपालपूर्वतापण्यां श्रुतावपि ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मुनयो ह वै ब्रह्माणमूचुः। कः परमो देव इत्याद्यनन्तरं, तदुहोवाच ब्राह्मणः कृष्णो वै परमं दैवतमित्यादि। उपसंहारे च। तस्मात् कृष्ण एव परो देवस्तं ध्यायेत्तं रसेत् तं यजेदित्यों तत् सदिति। किं बहुना सर्वावतारावतारिविलक्षणा महाभगवत्तामुद्राः साक्षादेव तत्र वर्त्तन्त इति श्रूयते पाद्माध्यायत्रयेण। यथा तदीयाः कियन्तः श्लोकाः। ब्रह्मोवाच। शृणु नारद वक्ष्यामि पादयोश्चिह्नलक्षणम्। भगवत् कृष्णरूपस्य ह्यानन्दैकघनस्य च। अवतारा ह्यसंख्याताः कथिता मे तवानघ। परं सम्यक् प्रवक्ष्यामि कृष्णस्तु भगवान् स्वयम्। देवानां कार्य्यसिद्ध्यर्थमृषीणाञ्च तथैव च। आविर्भूतस्तु भगवान् स्वानां प्रियचिकीर्षया। यैरेव ज्ञायते देवो भगवान् भक्तवत्सलः। तान्यहं वेद नान्योऽस्ति सत्यमेतन्मयोदितम्। षोड़शैव तु चिह्नानि मया दृष्टानि तत्पदे। दक्षिणेनाष्टचिह्नानि इतरे सप्त एव च। ध्वजः पद्मं तथा वज्रमङ्कुशो यव एव च। स्वस्तिकञ्चोर्द्ध्वरेखा च अष्टकोणस्तथैव च। सप्तान्यानि प्रवक्ष्यामि साम्प्रतं वैष्णवोत्तम। इन्द्रचापं त्रिकोणञ्च कलसञ्चार्द्धचन्द्रकम्। अम्बरं मत्स्यचिह्नञ्च गोष्पदं सप्तमं स्मृतम्। अङ्कान्येतानि भो विद्वन् दृश्यन्ते तु यदा कदा। कृष्णाख्यन्तु परं ब्रह्म भुवि जातं न संशयः। द्वयं वाथ त्रयं वाथ चत्वारः पञ्च एव वा। दृश्यन्ते वैष्णवश्रेष्ठ अवतारे कथञ्चन इत्यादि। षोड़शन्तु तथा चिह्नं शृणु देवर्षिसत्तम। जम्बूफलसमाकारं दृश्यते यत्र कुत्रचित्॥ इत्यन्तम्। तस्मादस्यैव स्वयं भगवत्त्वं श्रीकृष्णस्यैव। तदित्थं सर्वमभिप्रेत्य महोपक्रमं श्लोकमेव श्रीविष्णुपुराणीयभगवच्छब्दनिरुक्तिवत् साक्षात् श्रीकृष्णाभिधेयत्वेनापि योजयति। जन्माद्यस्येति॥ ८२॥

नराकृति परं ब्रह्मेति स्मरणात् परं श्रीकृष्णं धीमहि। अस्य स्वरूपलक्षणमाह सत्यमिति। सत्यव्रतं सत्यपरं त्रिसत्यमित्यादौ तथा श्रुतत्वात्। एतेन तदाकारस्याव्यभिचारित्वं दर्शितम्। तटस्थलक्षणमाह—धाम्ना स्वेनेत्यादि। स्वेन स्वस्वरूपेण धाम्ना श्रीमथुराख्येन

सदा निरस्तं कुहकं मायाकार्य्यलक्षणं येन तम् । मध्यते तु जगत् सर्वं ब्रह्मज्ञानेन येन वा । तत्सारभूतं यद्यस्यां मथुरा सा निगद्यत इति श्रीगोपालोत्तरतापनीप्रसिद्धेः । लीलामाह—आद्यस्य नित्यमेव श्रीमदानकदुन्दुभिव्रजेश्वरनन्दनतया श्रीमथुराद्वारकागोकुलेषु विराजमानस्य व तस्य कस्मैचिदर्थाय लोके प्रादुर्भावापेक्षया। यतः श्रीमदानकदुन्दुभिगृहाज्जन्म तस्माद् य इतरतश्च इतरत्र श्रीव्रजेश्वरगृहेऽपि अन्वयात् पुत्रभावतस्तदनुगतत्वेनागच्छत् । उत्तरेणैव य इति पदेनान्वयः । यत इत्यनेन तस्मादिति स्वयमेव लभ्यते । कथमन्वयात् तत्राह—अर्थेषु कंसवञ्चनादिषु तादृशभावविज्ञैः श्रीगोकुलवासिभिरेव सर्वानन्दकदम्बकादम्बिनीरूपा सा सा कापि लीला सिध्यतीति तल्लक्षणेषु वा अर्थेषु अभिज्ञः । ततश्च स्वराट् स्वैः गोकुलवासिभिरेव राजते इति तत्र तेषां प्रेमवश्यतामापन्नस्याप्यव्याहतैश्वर्य्यमाह—तेन इति । य आदिकवये ब्रह्मणे ब्रह्माणं विस्मापयितुं हृदा संकल्पमात्रेणैव ब्रह्मसत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तिमयं वैभवं तेने विस्तारितवान् । यद्यतस्तथाविधलौकिकालौकिकतासमुचितलीलाहेतोः सूरयस्तज्ज्ञा मुह्यन्ति प्रेमातिशयोदयेन वैवश्यमाप्नुवन्ति । यदित्युत्तरेणाप्यन्वयते । यद्यत एव तादृशलीलातस्तेजोवारिमृदामपि यथा यथावद्विनिमयो भवति। तत्र तेजसश्चान्द्रादेर्विनिमयो निस्तेजोवस्तुभिः सह धर्म्मपरिवर्त्तः तत्श्रीमुखादिरुचा चन्द्रादेर्निस्तेजस्त्वविधानात् निकटस्थनिस्तेजोवस्तुनः स्वभासा तेजस्वितापादनाच्च । तथा वारि द्रवश्च कठिनं भवति वेणुवाद्येन मृत्पाषाणादिः द्रवतीति। यतः श्रीकृष्णे त्रिसर्गः श्रीगोकुलमथुराद्वारकावैभवप्रकाशः अमृषा सत्य एवेति ॥१॥१॥ श्रीवेदव्यासः ॥ ८२ ॥

एवं सर्वोपसंहारवाक्यमपि तत्रैव संगच्छते कस्मै येन विभाषित इत्यादि ॥ ८३ ॥

यो ब्रह्माणं विदधाति पूर्वं यो विद्यास्तस्मै गापयति स्म कृष्णः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तं ह देवमात्मप्रकाशं मुमुक्षुर्वै शरणममुं व्रजेदिति श्रीगोपालपूर्वतापनीश्रुतिः। व्याकृतश्च द्वितीयसन्दर्भे तस्यैव चतुःश्लोकीवत्तत्त्वमपि॥ १२॥ १३॥ श्रीसूतः॥ ८३॥

तदेवमभ्यासादीन्यपि तस्मिन् विस्पष्टान्येव पूर्वोदाहृतवाक्येषु। तदेतत् श्रीमद्गीतागोपालतापन्यादिशास्त्रगणसहायस्य निखिलेतरशास्त्रशतप्रणतचरणस्य श्रीभागवतस्याभिप्रायेण श्रीकृष्णस्य स्वयं भगवत्त्वं करतल इव दर्शितम्। श्रीभागवतस्य च स एव प्रतिपाद्य इति पुराणान्तरेणैव च स्वयं व्याख्यातम्। यथा ब्रह्माण्डपुराणे श्रीकृष्णाष्टोत्तरशतनामामृतस्तोत्रे श्रीकृष्णस्य नामविशेष एव शुकवागमृताब्धीन्दुरिति। अथ तस्य महावासुदेवत्वे सिद्धे श्रीबलदेवादीनामपि महासङ्कर्षणादित्वं स्वत एव सिद्धम्। यद्रूपः स्वयं भगवान् तद्रूप एव ते भवितुमर्हन्तीति। अतः श्रीबलरामस्य यत् कश्चिदावेशावतारत्वं मन्यते तदसत्। दृश्यते च श्रीकृष्णरामयोर्युगलतया वर्णनेन समप्रकाशत्वम्। तावङ्घ्रियुग्ममनुकृष्य सरीसृपन्तौ, यद्विश्वेश्वरयोर्याच्ञां, ददर्श रामं कृष्णञ्च, तौ रेजतू रङ्गगतौ महाभुजावित्यादौ। लोकेऽपि हि सूर्य्याचन्द्रमसावेव युगलतया वर्ण्यते। न तु सूर्य्यशुक्रौ। अतएव हरिवंशेऽपि वासुदेवमाहात्म्ये रामकृष्णयोर्दृष्टान्तः सूर्य्याचन्द्रमसाविवेति। तथा ध्वजवज्राङ्कुशाम्भोजैश्चिह्नितैरङ्घ्रिभिर्व्रजम्। शोभयन्तौ महात्मानावित्येवं भगवल्लक्षणान्यपि तत्र श्रूयन्ते नलोपाख्यादिषु। तस्मादेष तन्महिमापि वर्ण्यते।

> नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे।
> ओतं प्रोतमिदं यस्मिंस्तन्तुष्वङ्ग यथा पटः॥ ८४॥

स्पष्टम्॥ १०॥ १५॥ श्रीशुकः॥ ८४॥

> किञ्च, सप्तमो वैष्णवं धाम यमनन्तं प्रचक्षते।
> गर्भो बभूव देवक्या हर्षशोकविवर्द्धनः॥ ८५॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

गर्भो बभूव न तु गर्भे बभूवेति सप्तम्यन्तानुक्त्या साक्षादेवावतारत्वं सूचितम् ॥ १० ॥ २ ॥ स एव ॥ ८५ ॥

अत इदमप्येवमेव व्याख्येयम् ।

वासुदेवकलानन्तः सहस्रवदनः स्वराट् ।
अग्रतो भविता देवो हरेः प्रियचिकीर्षया ॥ ८६ ॥

श्रीवसुदेवनन्दनस्य वासुदेवस्य कला प्रथमोऽंशः श्रीसङ्कर्षणः । तस्य सङ्कर्षणत्वं स्वयमेव न तु सङ्कर्षणावतारत्वेनेत्याह—स्वराट् स्वेनैव राजते इति । अतएवानन्तः कालदेशपरिच्छेदरहितः । अतएव मायया तस्य गर्भसमय आकर्षणञ्च युक्तं पूर्णस्य वास्तवाकर्षणासम्भवादिति केचित् । एतद्विधकार्य्ये च तदकुण्ठेच्छात्मकचिच्छक्त्याविष्टैव सा प्रभवेत् । उक्तञ्च तदानीं तदाविष्टत्वं तस्याः । आदिष्टा प्रभुनांशेन कार्य्यार्थे सम्भविष्यति मिलिष्यतीति तत्र ह्यर्थः । अतएव एकानंशेति तस्या नाम । एकोऽनंशो यत्रेति निरुक्तिरिति केचित् । य एव शेषाख्यः सहस्रवदनोऽपि भवति । यतो देवः नानाकारतया दीव्यतीति । तदुक्तं श्रीयमुनादेव्या । राम राम महाबाहो न जाने तव विक्रमम् । यस्यैकांशेन विधृता जगती जगतः पते ॥ इति । एकांशेन शेषाख्येन इति टीका च । अन्यथा तदेकावयवैकदेशरूपार्थत्वे येनैकांशेनेनि यच्छब्दस्य कर्त्तृत्वनिर्देश एव युक्तः स्यात् । तदंशावतारलक्षणार्था-न्तरप्रतीतिनिरसनाय महाविद्वद्वाक्यत्वात् सम्बन्धनिर्देशेन तु टीका-व्याख्यैव स्फुटतरा । एकांशे मुख्यस्यैव कर्त्तृत्वस्य निर्व्याजप्रतीतिर्न त्वौपचारिकस्येति । एवं श्रीलक्ष्मणस्याप्यन्तिमदशानुकरणस्याप्य-न्तिमदशानुकरणलीलायां श्रूयते स्कान्दीयायोध्यामाहात्म्ये । ततः शेषात्मतां यातं लक्ष्मणं सत्यसङ्गरम् । उवाच मधुरं शक्रः सर्वस्य च स पश्यतः ॥ इन्द्र उवाच । लक्ष्मणोत्तिष्ठ शीघ्रं त्वमारोहस्व पदं स्वकम् । देवकार्य्यं कृतं वीर त्वया रिपुनिसूदन ॥ वैष्णवं परमं स्थानं प्राप्नुहि स्वं सनातनम् । भवन्मूर्त्तिः समायाता शेषोऽपि विलसत्फण

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

इत्यादि। ततश्च, इत्युक्त्वा सुरराजेन्द्रो लक्ष्मणं सुरसङ्गतः। शेषं प्रस्थाप्य पाताले भूभारधरणक्षमम्। लक्ष्मणं यानमारोप्य प्रतस्थे दिवमादरादिति। अतो नारायणवर्मण्यपि। यज्ञश्च लोकादवतात् कृतान्ताद्बलो गणात् क्रोधवशादहीन्द्र इति श्रीबलदेवस्य शेषादन्यत्वं शक्तितिश्चश्च दर्शितः। जनान्तादिति पाठेऽपि जनानां नाशादिति स एवार्थः। अतः शेषाख्यं धाम मामकमित्यत्रापि श्लिष्यते शेषसंज्ञ इतिवद् अव्यभिचार्य्यंश एवोच्यते। शेषस्याख्या ख्यातिर्यस्मादिति वा। श्रीमदानकदुन्दुभिना च श्रीकृष्णसाम्येनैव निर्द्दिष्टम्। युवां न नः सुतौ साक्षात् प्रधानपुरुषेश्वराविति। अत्र साक्षादेवेति त्वधिकमुपजीव्यम्। अथ यदि प्रायो मायास्तु मे भर्त्तुर्नान्या मेऽपि विमोहिनीति तद्वाक्यानुसारेणावेशावतारत्वं मन्तव्यं तदा पूर्वग्रन्थबलात् श्रीबलदेवे स्वांशलमेवेति। किन्तु शेषाख्यतदाविष्टपार्षदविशेषस्य तदन्तःपातात्तदंशेनैव तद्वावहार इत्यपि मन्तव्यम् ॥१०॥१॥ श्रीब्रह्मा देवान् ॥८६॥

अथ श्रीप्रद्युम्नस्यापि शिवनेत्रदग्धः स्मरो जातोऽयमिति यच्छ्रूयते तदप्येकदेशप्रस्तावमात्रम्। तस्य श्रीगोपालतापनीश्रुत्यादौ—यत्रासौ संस्थितः कृष्णस्त्रिभिः शक्त्या समाहितः। रामानिरुद्धप्रद्युम्नैः रुक्मिण्या सहितो विभुरित्यादिना नित्यश्रीकृष्णचतुर्व्यूहान्तःपातितया प्रसिद्धेस्तथा सम्भवाभावात्। तस्य स्मरस्यापि साधारणदेवताविशेषमात्रत्वेन प्रसिद्धत्वे चतुर्व्यूहान्तःपातितायामयोग्यतमत्वात्। तस्माद्वक्ष्यमाणाभिप्रायेणैव तदाह—

> कामस्तु वासुदेवांशो दग्धः प्रागुद्रमन्युना।
> देहोपपत्तये भूयस्तमेव प्रत्यपद्यत ॥ ८७ ॥

अवेदज्ञस्यापि ब्राह्मण्ये सत्येव ब्राह्मणस्तु वेदज्ञ इतिवत् तुशब्दोऽत्र मुख्यतां सूचयति। ततः कामस्तु, वासुदेवांश इत्यस्य वासुदेवांशो यः कामः स एव मुख्य इत्यर्थः। तुशब्दोऽयं भिन्नोपक्रमे वा। ततो वासुदेवांशस्तु, काम इत्यन्वयेऽपि पूर्ववदेवार्थः। तदेवं सति श-

प्रागुद्रस्य मन्युना दग्धो देवताविशेषः कामः स देहोपपत्तये तत्-कोपदग्धतया नित्यमेवानङ्गतां प्राप्तस्य स्वतो देहापत्त्यभावाद्देह-प्राप्त्यर्थं तमेव वासुदेवांशं प्रद्युम्नाख्यं काममेव प्रत्यपद्यत प्रविष्टवान् । भूयः शब्देन प्रद्युम्नादेव पूर्वमप्युद्भूतोऽसाविति बोध्यते । यद्वा यस्तु कामः प्रागुद्रकोपेनादग्धो न दग्धः स भूयः प्रकटलीलायां देहोप-पत्तये स्वमूर्त्तिप्रकाशनार्थं तं वासुदेवमेव प्रविष्टवान् । अदग्धत्वे हेतु-र्वासुदेवांश इति । पूर्वोक्तमेव व्यनक्ति ।

स एव जातो वैदर्भ्यां कृष्णवीर्य्यसमुद्भवः ।

प्रद्युम्न इति विख्यातः सर्वतोऽनवमः पितुः ॥ ८८ ॥

यः कृष्णवीर्य्यसमुद्भवो यश्च प्रद्युम्न इति विख्यातः स एव प्रकट-लीलावसरेऽपि वैदर्भ्यां जात आविर्भूतः नत्वन्यः प्राकृतकाम एव । तत्र हेतुः सर्वतो गुणरूपादिष्वशेषेष्वेव धर्मेषु पितुः श्रीकृष्णादनवमः तुल्य एवेति । अन्यथा तादृशानवमत्वं न कल्पते इति भावः । तस्माद् यथा महाभारते सर्वत्र श्रीमदर्जुनस्य नरत्वप्रसिद्धावपि पञ्चेन्द्रोपाख्यान इन्द्रत्वप्रसिद्धिः इन्द्रस्यापि तत्र प्रवेशविवक्षया घटते तद्वदत्रापि । अतः श्रीनारदेन रत्यै तथोपदेशस्तया तत्प्राप्तिश्च न दोषाय । पूर्वपद्यस्य उत्तरस्मिन्नर्थेऽपि श्रीनारदोपदेशबलेनैव दग्धकामस्य प्रवेशस्तत्र गम्यः । ततः साक्षात् प्रद्युम्नसङ्गमे योग्यता चास्याः स्पर्शमणिवत्तत्सामीप्य-गुणादेव मन्तव्या । श्रीप्रद्युम्नस्य निजशक्तिस्तु श्रीमदनिरुद्धमातैवेति ज्ञेयम् । अतः तापनीश्रुतिलब्धोऽर्थः समञ्जसः ॥ १० ॥ ५५ ॥ श्रीशुकः ॥ ८७ ॥ ८८ ॥

एवमनिरुद्धस्यापि साक्षाच्चतुर्थव्यूहत्वे लिङ्गमाह—

अपि स्विदास्ते भगवान् सुखं वो यः सात्वतां कामदुघोऽनिरुद्धः ।

यमामनन्ति स्म हि शब्दयोनिं मनोमयं सत्वतुरीयतत्त्वम् ॥ ८९ ॥

शब्दयोनिं निश्वासव्यञ्जितवेदच्छन्दसम् । एवं वा अरे अस्य महतो भूतस्य निश्वसितमेतद् यदृग्वेद इत्यादि श्रुतेः । मनोमयं चित्ते



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वासुदेववद्ध्यानमुपास्यं, सत्वं शुद्धसत्वात्मकः श्रीवासुदेवादिरूपं भगवान् तत्र तुरीयं रूपम्। अतो वाणयुद्धादौ बन्धनानुकरणादिक-मात्मेच्छामयी लीलैव श्रीरामचन्द्रादिवत्। अस्य पाञ्चरात्रे सहस्र-नाम्नि माहात्म्यनामानि चैतानि। अनिरुद्धो बृहद्ब्रह्म प्रद्युम्नविनि-मोहनः। चतुरात्मा चतुर्वर्णश्चतुर्युगविधायकः। चतुर्भेदैकविश्वात्मा सर्वोत्कृष्टांशकोटिसूः। आश्रयात्मेति। अतः श्रीकृष्णव्यूहत्वेन महा-निरुद्धत्वादस्यैवाविर्भावविशेषः प्रलयार्णवादिधामा पुरुष इति ज्ञेयम्। अतएवाभेदेन जगृहे पौरुषं रूपं भगवानित्याद्युक्तं मूलसङ्कर्षणाद्य-शेरेव ह्येतरसङ्कर्षणाद्यवस्थात्रयं पुरुषं प्रकाशयतीति। तथैवाभेदे विष्णुधर्मोत्तरेऽपीदम्। तत्र वज्रप्रश्नः—कस्त्वसौ बालरूपेण कल्पान्ते पुनःपुनः। दृष्टो यो न त्वया ज्ञातस्तत्र कौतूहलं मम। श्रीमार्कण्डेयो-त्तरञ्च—भूयोभूयस्त्वसौ दृष्टो मया देवो जगत्पतिः। कल्पक्षये विज्ञातः स मायामोहितेन वै। कल्पक्षये व्यतीते तु तं देवं प्रपित-महात्। अनिरुद्धं विजानामि पितरं ते जगत्पतिमिति। अतएव च पूर्वमपि जगृहे पौरुषं रूपमित्यत्र श्रीकृष्णस्यानिरुद्धावतारान्तः-पातित्वं न व्याख्यातम्॥ ३॥ १॥ विदुरः श्रीमदुद्धवम्॥८८॥

तदेतत्तस्य चतुर्व्यूहात्मकस्यैव पूर्णत्वं व्याख्यातम्। श्रीगोपालोत्तर-तापन्यामपि तथैवायं प्रणवार्थत्वेन दर्शितः। रोहिणीतनयो राम अकारा-क्षरसम्भवः। तैजसात्मकः प्रद्युम्न उकाराक्षरसम्भवः। प्राज्ञात्मको-ऽनिरुद्धो वै मकाराक्षरसम्भवः। अर्द्धमात्रात्मकः कृष्णो यस्मिन् विश्वं प्रतिष्ठितमिति। अथ श्रीकृष्णोऽवतरति तत्तदंशावताराणामपि प्रवेश इति यदुद्दिष्टं तद् यथा अत्र कृष्णस्तु भगवान् स्वयमित्यादि-सिद्धमेव तथा तस्य तद्रूपेणैव श्रीवृन्दावनादौ सर्वदावस्थायित्वं प्रतिपादयिष्यामः। अथच श्रीहरिवंशमते उपेन्द्र एवावततारेति। जय-विजयशापप्रस्तावे च यास्यामि भवनं ब्रह्मन्नेतदन्ते तवानघेत्यत्र पाहि वैकुण्ठकिङ्करानित्यत्र च स्वामिव्याख्यानुसारेण विकुण्ठा-

एवेति क्वचित् क्षीरोदशाय्येवेति क्वचित् पुरुष एवेति क्वचिन्नारायणर्षि-
रेवेति दृश्यतसहस्रनाम्नि लक्ष्मणस्यैव बलरामत्वकथनेन श्रीराघव
एवेति क्वचिन्नारायणकेश एवेत्यादिकं नानाविधत्वं श्रूयते । एवञ्चैकं
सम्भवेत्सतोऽन्यत् प्रत्यवतोऽत्र सत्यञ्च सर्वं वाक्यं तस्माद्विद्वद्भिरेवं
विचार्य्यताम् । स्वयं भगवति तस्मिन् प्रवेशं विना कथं तत्सम्भवे-
दिति । दृश्यते च तस्मात् केषाञ्चिदंशानां पुनराविर्भावः । यथा
प्रद्युम्नादीनाम् । अतएव विकुण्ठासुतस्य प्रवेशाभिप्रायेणैव शिशुपाल-
दन्तवक्रयोः श्रीकृष्णसायुज्यमेव तदानीं जातम् । पुनरवतारलीला-
समाप्तौ श्रीविकुण्ठासुते स्वधामगते पार्षदत्वप्राप्तिः । यथोक्तं श्रीनार-
देन । वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्मताम् । नीतौ पुनर्हरेः
पार्श्वं जग्मतुर्विष्णुपार्षदाविति । तथा हरिवंशे च । क्षीरोदशायिनो
मुकुटे दैत्यापहृते दैत्यमारणाय गरुड़ो यावत् कृतविलम्बस्तावत्
श्रीकृष्णोऽवततार ततश्चासौ मुकुटमाहृत्य तत्र क्षीरलोके क्वापि
भगवन्तमदृष्ट्वा गोमन्यशिरसि श्रीकृष्णायैव समर्पितवानितिप्रसिद्धिः ।
अतो यथा क्रममुक्तिमार्गेऽर्च्चिरादिक्रम एवाङ्गी नाड़ीरश्म्यादि-
विविधक्रमस्तु तदङ्गत्वेनैव प्रस्तूयते तद्वदिहापीति । अर्च्चिरादिना
तत्प्रथितेरित्येष न्यायोऽत्र दृष्टान्तयितव्यः । तदेतदेवाह—

त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः ।
अवतीर्णोऽसि भगवान् स्वेच्छोपात्तपृथग्वपुः ॥ ९० ॥

साक्षाद्भगवानेव त्वमवतीर्णोऽसि । भगवत एव वैभवमाह । ब्रह्म त्वं
परमव्योमाख्यो वैकुण्ठस्त्वं प्रकृतेः परः पुरुषोऽपि त्वमिति । भग-
वानपि कथम्भूतः सन्नवतीर्णः स्वेच्छयोपात्तानि ततस्तत आकृष्टानि
पृथग्वपूंषि निजतत्तदाविर्भावा येन तथाभूतः सन्निति ॥ ११ ॥ ११ ॥
श्रीउद्धवः श्रीभगवन्तम् ॥ ९० ॥

तथा—स्वशान्तरूपेष्वितरैः स्वरूपैरभ्यर्द्द्यमानेष्वनुकम्पितात्मा ।
परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान् यथाग्निः ॥ ९१ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तच्च जन्म निजतत्तदंशान्यादायैवेत्याह—महदंशयुक्तः महद्भिः स्वस्यैवांशैर्युक्तः। महान्तं विभुमात्मानमित्यादिश्रुतिः। महदृशौ न्यायप्रसिद्धेश्च। महान्तो ये पुरुषादयोऽंशास्तैर्युक्त इति वा। लोकनाथ महद्भूतमितिवदात्मत्वाव्यभिचारः। महद्भिरंशिभिरंशैश्च युक्त इति वा॥ ३॥ १॥ विदुरं श्रीमदुद्धवः॥८१॥

तथैवमथाहमंशभागेनेत्यादावप्येवं व्याख्येयम्। अंशानां भागो भजनं प्रवेशो यत्र तेन परिपूर्णरूपेण। अंशानां भजनेन लक्षितो वा प्राप्स्यामीति प्रकटलीलाभिप्रायेण भविष्यन्निर्देशः। अतएव तदवतारसमये युगावतारस्य स एवेत्यभिप्रेत्याह—

आसन् वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः।
शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः॥ ८२॥

अस्य तव पुत्रस्य प्रतियुगं तनूः प्रकटयतो यद्यपि शुक्लादयस्त्रयोऽप्यन्ये वर्णा आसन् तथापि इदानीमस्य प्रादुर्भाववति अस्मिन् द्वापरे तु स शुक्लो युगावतारस्तथा रक्तः पीतोऽपि एतदप्युपलक्षणम् अन्यद्वापरयुगावतारः शुकपक्षवर्णोऽपि कृष्णतामेव गत एतस्मिन्नन्तर्भूत इत्यर्थः। तस्मात् कृष्णीकर्तृत्वात् स्वयं कृष्णत्वात् सर्वाकर्षकत्वात् कृष्ण इत्येकस्य नामेति प्राकरणिकोऽप्यर्थः श्रेयान्। तथाच श्रीकरभाजनेन युगावतारोपासनायामुक्तम्। द्वापरे भगवान् श्यामः पीतवासा निजायुधः। श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः। तं तदा पुरुषं मर्त्या महाराजोपलक्षणम्। यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप। नमस्ते वासुदेवाय नमः सङ्कर्षणाय च। प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः॥ इति॥ अत्र श्रीकृष्णत्वे लिङ्गं महाराजोपलक्षणमिति वासुदेवेत्यादि च श्रीहरिवंशोक्तराजराजाभिषेकात् द्वारकायां चतुर्व्यूहत्वप्रसिद्धेः॥ १०॥ ८॥ गर्गः श्रीनन्दम्॥८२॥

तदेवं श्रीकृष्णस्य स्वयं भगवत्त्वे सुष्ठु निर्द्धारिते नित्यं तद्रूपत्वेनावस्थितिरपि स्वयमेव सिद्धा। तथापि मन्दधियां भ्रान्ति

ज्ञानार्थमिदं विव्रियते। तत्र तावदाराधनावाक्येनैव सा सिध्यति। तच्च आराध्यस्याभावे आराधमानोदनाया विप्रलिप्साजन्यत्वापत्तेः। तच्च परमाप्ते शास्त्रे न सम्भवति। सम्भवे च पुरुषार्थाभावात् शास्त्रानर्थक्यम्। आरोपश्च परिच्छिन्नगुणरूप एव वस्तुनि कल्प्यते नानन्तगुणरूपे। श्रीस्वामिचरणैरपीदमेव पुष्टमिकादशसमाप्तौ धारणाध्यानमङ्गलमित्यत्र धारणाया ध्यानस्य च मङ्गलं शोभनं विषयम् इतरथा तयोर्निर्विषयत्वं दृश्यते चाद्याप्युपासकानां साक्षात्कारस्तत्फलप्राप्तिश्चेति भावः। श्रूयते चैवं पञ्चमे नवसु वर्षेषु तत्तदवतारोपासनादि। यथोक्तम्—नवस्वपि वर्षेषु भगवान्नारायणो महापुरुषः पुरुषाणां तदनुग्रहायात्मतत्त्वव्यूहेनात्मनाद्यापि सन्निधीयते इति। सन्निधानञ्चेदं साक्षाद्रूपेण श्रीप्रद्युम्नादौ गतिविलासादेर्वर्णितत्वात्। तत्र चात्मना स्वयमेवेत्युक्तम्। तथा नित्यत्वे एव शालग्रामशिलादिषु नरसिंहत्वादिभेदश्च संगच्छते। तत्तदवतारसान्निध्यादेव हि तत्तद्भेदः। तथा श्रीकृष्णमधिकृत्यापि गीतं श्रीकृष्णसहस्रनामप्रारम्भे श्रीविष्णुधर्मोत्तरे—तस्य हृष्टाशयः स्तुत्या विष्णुर्गोपाङ्गनावृतः। तापिञ्छश्यामलं रूपं पिञ्छोत्तंसमदर्शयदिति। अग्रे च तद्वाक्यम्—मामवेहि महाभाग कृष्णं कृत्यविदाम्बर। पुरस्कृतोऽस्मि त्वद्भक्त्या पूर्णाः सन्तु मनोरथा इति। तथा पाद्मे निर्माणखण्डे पश्य त्वं दर्शयिष्यामि स्वरूपं वेदगोपितमिति श्रीभगवद्वाक्यानन्तरं, ब्रह्मवाक्यम्—ततोऽपश्यमहं भूप बालं कालाम्बुदप्रभम्। गोपकन्यावृतं गोपं हसन्तं गोपबालकैः। कदम्बमूल आसीनं पीतवाससमद्भुतम्। वनं वृन्दावनं नाम नवपल्लवमण्डितमित्यादि। त्रैलोक्यसम्मोहनतन्त्रे श्रीमदष्टादशाक्षरजपप्रसङ्गे—अहर्निशं जपेद्यस्तु मन्त्री नियतमानसः। स पश्यति न सन्देहो गोपवेशधरं हरिम्। इति। गौतमीये च सदाचारप्रसङ्गे—अहर्निशं जपेन्मन्त्रं मन्त्री नियतमानसः। स पश्यति न सन्देहो गोपवेशधरं हरिमिति। श्रीगोपालतापनी श्रुतिश्चैवम्—तदुहोवाच ब्राह्मणोऽसा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अनवरतं मे ध्यातः स्तुतः परार्द्धान्ते सोऽबुध्यत गोपवेशो मे पुरस्ता-दाविर्ब्बभूवेति। सिद्धनिर्द्देशोऽपि श्रूयते यथा—वन्दे वृन्दावनासीन-मिन्दिरानन्दमन्दिरमिति बृहन्नारदीयारम्भे मङ्गलाचरणम्। द्वार-कायाः समुद्भूतं सान्निध्यं केशवस्य च। रुक्मिणीसहितः कृष्णो नित्यं निवसते गृहे॥ इति स्कान्दे द्वारकामाहात्म्ये बलिं प्रति श्रीप्रह्लाद-वाक्यम्। व्रतिनः कार्त्तिके मासि स्नातस्य विधिवन्मम। गृहाणार्घ्यं मया दत्तं राधया सहितो हरे॥ इति पाद्मकार्त्तिकमाहात्म्ये तत्-प्रातःस्नानार्घ्यमन्त्रः। एवञ्च श्रीमदष्टादशाक्षरादयो मन्त्रास्तत्तत्परि-करादिविशिष्टतयैवाराध्यत्वेन सिद्धनिर्द्देशमेव कुर्व्वन्ति। तदावरणादि-पूजामन्त्राश्च। किं बहुना कर्म्मविपाकप्रायश्चित्तशास्त्रेऽपि तथा श्रूयते। यदाह बौधायनः—होमस्तु पूर्ववत् कार्य्यो गोविन्दप्रीतये ततः। इत्याद्यनन्तरं, गोविन्द गोपीजनवल्लभेश कंसासुरघ्न त्रिदशेन्द्रवन्द्य। गोदानदत्तः कुरु मे दयालो अशेषविनाशं क्षपितारिवर्ग इति। अन्यत्र च यथा—गोविन्द गोपीजनवल्लभेश विध्वस्तकंस त्रिदशेन्द्रवन्द्य। गोवर्द्ध-नाद्रिप्रवरैकहस्तसंरक्षिताशेषगवप्रवीण। गोनेत्रवेणुक्षपण प्रभूत-माध्यं तथोग्रं तिमिरं क्षिपाश्विति। स्पष्टञ्च तथात्वं श्रीगोपालताप-न्याम्—गोविन्दं सच्चिदानन्दविग्रहं वृन्दावनसुरभूरुहतलासीनं सततं समरुद्गणोऽहं तोषयामीति। अतएव पुरस्तात्तोऽस्मि त्वङ्गत्येत्येवोक्त-मिति। अलमेवंविधप्रमाणसंग्रहप्रपञ्चेन। यतश्चिच्छक्त्या कल्पित-तानां तत्परिच्छदादीनामपि तथा नित्यावस्थितित्वेनाविर्भावतिरो-भाववेव द्वितीयसन्दर्भे साधितौ स्तः, सर्व्वथोत्पत्तिनाशौ तु निषिद्धौ, ततस्तदवताराणां किमुत स्वयं भगवतो वा तस्य किमुततरामिति। यथा च व्याख्यातं, जगृहे पौरुषं रूपमित्यत्र तत्त्ववादगुरुभिः; व्यक्त्यपेक्षया जगृहे। तथा हि तन्त्रभागवते—अहेयमनुपादेयं यद्रूपं नित्यमव्ययम्। स एवापेक्ष्यरूपाणां व्यक्तिमेव जनार्द्दनः। अगृह्णाद-व्यजच्चेति रामकृष्णादिकां तनुम्। पठ्यते भगवानीशो मूढ़बुद्धिव्यप-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्षया। तमसा ह्युपगूढस्य यत्तमःपानमोशितुः। एतत् पुरुषरूपस्य ग्रहणं समुदीर्य्यते। श्रृङ्गारामादिरूपाणां लोके व्यक्तिव्यपेक्षयेति। एवमेव प्रथमे द्वादशाध्याये विधूयेत्यादि पद्ये स्वामिभिरपि व्याख्यातम्—यत्र दृष्टस्तत्रैवान्तर्हितः नत्वन्यत्र गतः। यतो विभुः सर्वगत इति। तथा मध्वभाष्यप्रमाणिता श्रुतिश्च—वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्म्मो वराहो नरसिंहो वामनो रामो रामो रामः कृष्णो बुद्धः कल्किरहं शतधाहं सहस्रधाहममितोऽहमनन्तोऽहं नैवैते जायन्ते नैते म्रियन्ते नैषामज्ञानबन्धो न मुक्तिः सर्व एव ह्येते पूर्णा अजरा अमृताः परमाः परमानन्दा इति चतुर्वेदशिखायाम्। तथाच श्रीनृसिंहपुराणे—युगे युगे विष्णुरनादिमूर्त्तिमास्थाय विश्वं परिपाति दुष्टहेति। तथा च नृसिंहतापन्यां तद्भाष्यकृद्भिर्व्याख्यातम्—एतन्नृसिंहविग्रहं नित्यमिति। श्रुतिश्च सेयम्—ऋतं सत्यं परं ब्रह्म पुरुषं नृकेशरिविग्रहमिति। एवञ्च ब्राह्मणपाद्मोत्तरखण्डादावपि श्रीमत्स्यदेवादीनाञ्च पृथक् पृथग् वैकुण्ठादिलोकाः श्रूयन्ते। एवमेव जलेषु मां रक्षतु मत्स्यमूर्त्तिरिति नारायणवर्म्माद्युक्तमपि संगच्छते। तस्मात् स्वयं भगवति श्रीकृष्णेऽप्यन्यथा सम्भावनमनादिपापविक्षेप एव हेतुः। तदेवमभिप्रेत्य तान् दुर्बुद्धीनपि बोधयितुं तस्य स्वोपास्यत्वं प्रतिपादयन्नाह—पतिर्गतिश्चान्धकवृष्णिसात्वतां प्रसीदतां मे भगवान् सतां पतिरिति ॥ ९३ ॥

स्पष्टम् ॥१०॥२६॥ श्रीशुकः ॥ ९३ ॥

तथा। देवे वर्षति यज्ञविप्लवरुषेत्यादौ प्रीयान्न इन्द्रो गवामिति ॥९४॥

स्पष्टम् ॥ ११ ॥ २ ॥ श्रीशुकः ॥ ९४ ॥

तथा। श्रीकृष्णकृष्णसखवृष्ण्यृषभावनीध्रुग्राजन्यवंशदहनानपवर्गवीर्य्य गोविन्द गोद्विजसुरार्त्तिहरावतार योगेश्वराखिलगुरो भगवन्नमस्ते। गोविन्द गोपवनिताव्रजभृत्यगीत तीर्थश्रवः श्रवणमङ्गल पाहि भृत्यान् ॥ ९५ ॥ स्पष्टम् ॥ ११॥ २ ॥ श्रीसूतः ॥ ९५ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अपि च स्वयमेव स्वविग्रहमेव लक्ष्यीकृत्याह । तदा वां परितुष्टोऽहममुना वपुषानघे । तपसा श्रद्धया नित्यं भक्त्या च हृदि भावित:। प्रादुरासं वरदराड् युवयो: कामदित्सया । व्रियतां वर इत्युक्ते माद्दशो वां वृत: सुत इत्युपक्रम्य अद्दष्ट्वान्यतमं लोके शीलौदार्य्यगुणै: समम् । अहं सुतो वामभवं पृश्निगर्भ इति श्रुत: । तयोर्वां पुनरेवाहमदित्यामास कश्यपात् । उपेन्द्र इति विख्यातो वामनत्वाच्च वामन:। तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषाथ वाम् । जातो भूयस्तयोरेव सत्यं मे व्याहृतं सति ॥ ८६ ॥

अमुना श्रीकृष्णस्य मम प्रादुर्भावसमयेऽत्र प्रकाश्यमानेनैतेन श्रीकृष्णाख्येनैव । तृतीय इति तेनैव पूर्वं वरार्थं प्रादुर्भावितेनैव। अतएव पृश्निगर्भादित्वे तेनैव वपुषेत्युक्तत्वान्नतु तदानीमध्रुनेव स्वयमेव वभूव किन्त्वंशेनैवेति गम्यते। पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान् पर इत्यत्राप्येतदेव गौर्देव्या सूचितमस्ति। अतएव तृतीय एव भवे तत्सदृशसुतप्राप्तिलक्षणवरस्य परमपूर्णत्वापेक्षया तत्रैव सत्यं मे व्याहृतमित्युक्तं चतुर्भुजत्वेऽदं रूपं श्रीकृष्ण एव। कृष्णावतारोत्सवेत्यादिभिस्तस्यात्यन्तप्रसिद्धे: ॥ १० ॥ ३ ॥ श्रीभगवान् देवकीदेवीम् ॥ ८६ ॥

एवञ्च देवक्यां देवरूपिण्यामित्यादि ॥ ८७ ॥

अष्टम् ॥ १० ॥ ३ ॥ श्रीशुक: ॥ ८७ ॥

ननु सत्यं तस्य चतुर्भुजाकाररूपस्य तादृशत्वं, किन्तु रूपञ्चेदं पौरुषं ध्यानधिष्ण्यं मा प्रत्यक्षं मांसदृशां भो कृषीष्ठा इति मातृविज्ञापनानुसारेण, एतद्वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे। नान्यथा मद्भवं ज्ञानं मर्त्यलिङ्गेन जायत इति प्रत्युत्तरय्य, इत्युक्त्वासीद्धरिस्तूष्णीं भगवानात्ममायया। पित्रो: संपश्यतो: सद्यो वभूव प्राकृत: शिशुरित्युक्तदिशा, यन्मानुषाकाररूपं स्वीकृतवान्, तत्र सन्दिग्धमिव भाति। अत्र च भवतु वा हरिरपि तत्यज आकृतिं त्र्यधीश इति

त्यजन् देहमिति च तन्त्रभागवतानुसारेणान्तर्द्धापनार्थत्वादसह्यायम् । ययाहरद्भुवो भारं तां तनुं विजहावजः । कण्टकं कण्टकेनेव द्वयं चापीशितुः समम् । यथा मत्स्यादिरूपाणि धत्ते जह्याद् यथा नटः । भूभारः क्षपितो येन जहौ तच्च कलेवरमिति तु परिपोषकम् । एतदेव श्रीवसुदेववचनेनापि लभ्यते—सूतोऽहं नतु जगाद भवानजो नौ संजज्ञ इत्यनुयुगं निजधर्म्मगुप्त्यै । नानातनू गगनवद्विदधज्जहासि को वेद भूम्न उरुगायविभूतिमायामित्यत्र । अत्रोच्यते । तत्तद्वचनमन्यार्थत्वेन दृष्टमिति । एकस्मिन्नेव तस्मिन् श्रीविग्रहे कदाचित् चतुर्भुजत्वस्य कदाचिद्विभुजत्वस्य च प्रकाशश्रवणेनाविशेषापाताद्भूभारक्षपणे द्वयोरपि सामान्यात् सूतोऽहं इत्यादिवाक्यस्य चतुर्भुजविषयत्वाच्च । किञ्च यैर्विद्वदनुभवसेविसशब्दसिद्धैर्नित्यत्वादिभिर्धर्मैः श्रीविग्रहस्य परमतत्त्वाकारत्वं साधितं ते प्रायशो नराकारमधिकृत्यैव ह्युदाह्रियन्ते स्म द्वितीयसन्दर्भे । तथात्रैव चोपासकेषु साक्षात्कारादिलिङ्गेन सिद्धनिर्देशेन च तदाकारस्यापि नित्यसिद्धत्वं दृढ़ीकृतम् । उदाहरिष्यते च नित्यसिद्धमेव । मां केशवो गदया प्रातरव्याद्गोविन्द आसङ्गव आत्तवेणुरिति । संप्रत्यन्यदपि तच्चोदाह्रियते ।

कंसो वताद्याकृत मेऽत्यनुग्रहं द्रक्ष्येऽङ्घ्रिपद्मं प्रहितोऽमुना हरेः । कृतावतारस्य दुरत्ययं तमः पूर्व्वेऽतरन् यन्नखमण्डलत्विषा । यदर्चितं ब्रह्मभवादिभिः सुरैः श्रिया च देव्या मुनिभिः ससात्वतैः । गोचारणायानुचरैश्चरद्वने यद्गोपिकानां कुचकुङ्कुमाङ्कितम् ॥ ९८ ॥

अत्र पूर्व इत्यादिद्योतितं गोचारणायेत्यादिलब्धस्य स्फुटं श्रीनराकारस्यैव नित्यावस्थायित्वं लभ्यते ॥ १० ॥ ३८ ॥ श्रीमदक्रूरः ॥९८॥

तथा—या वै श्रियार्चितमजादिभिराप्तकामैर्योगेश्वरैरपि सदात्मनि रासगोष्ठ्याम् । कृष्णस्य तद्भगवतः प्रपदारविन्दं न्यस्तं स्तनेषु विजहुः परिरभ्य तापम् ॥ ९९ ॥

सदा भूतवर्त्तमानभविष्यत्कालेषु श्र्यादीनां सर्व्वदावस्थायित्वेन



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रसिद्धेः सदेत्यस्य तथैव ह्यर्थप्रतीतिः सङ्कोचवृत्तौ कष्टतापत्तेः श्रीभगवति तादृशत्वसम्भवाभावाच्च। तथा च श्रुतौ—गोविन्दं सच्चिदानन्दविग्रहं वृन्दावनसुरभूरुहतलासीनं सततं समरुद्गणोऽहं तोषयामीति ब्रह्मवाक्यम् ॥ १० ॥ ४७ ॥ श्रीमदुद्धवः ॥ ९९ ॥

एवञ्च। यत्पादपांशुर्बहुजन्मकृच्छ्रतो धृतात्मभिर्योगिभिरप्यलभ्यः। स एव यद्दृग्विषयः स्वयं स्थितः किं वर्ण्यते दिष्टमहो व्रजौकसाम् ॥ १०० ॥

अत्र स्वयमित्यनेन तु वाढमेवान्यथाप्रतीतिर्दुर्धियां निरस्ता। १० ॥ १२ ॥ श्रीशुकः ॥ १०० ॥

अतएव स्वभावसिद्धत्वं पूर्णैश्वर्याद्याश्रयत्वञ्च। गोप्यस्तपः किमचरन् यदमुष्य रूपं लावण्यसारमसमोर्द्ध्वमनन्यसिद्धम्। दृग्भिः पिबन्त्यनुसवाभिनवं दुरापमेकान्तधाम यशसः श्रिय ऐश्वरस्य ॥ १०१ ॥

अनन्यसिद्धम् अन्येन तत् सिद्धमिति न किन्तु स्वाभाविकमेवेत्यर्थः। अन्यत्रासिद्धमिति तु व्याख्या पिष्टपेषणम्। असमोर्द्ध्वमिति हि उक्तमेव। १० ॥ ४४ ॥ मथुरापुरस्त्रियः परस्परम् ॥ १०१ ॥

अथ विभुत्वम्—न चान्तर्न बहिर्यस्येत्यादौ। प्राकृतवस्त्वतिरिक्तत्वम्—त्वक्श्मश्रुरोमनखकेशपिनद्धमित्यादौ स्पष्टम्। स्वप्रकाशलक्षणत्वम्—अस्यापि देव वपुषो मदनुग्रहस्य स्वेच्छामयस्य न तु भूतमयस्य कोऽपि। नेशे महि त्ववसितुं मनसान्तरेण साक्षात्तवैव किमुतात्मसुखानुभूतेः ॥ १०२ ॥

अस्य मौप्रौद्यत इत्यादिना वर्णितलक्षणस्य श्रीमन्नराकारस्य तव सम्प्रति बालवत्सार्थं प्रदर्शितेषु तेषु एकमपि देवरूपं चतुर्भुजाकारं वपुस्तस्यापि। एवञ्च सति साक्षादेतद्रूपस्यांशिनस्तव किमुत। वपुषो विशेषणं मदनुग्रहस्येत्यादि। ममानुग्रहो यस्मात्तस्य तद्दर्शनेनैव भवन्महिमज्ञानात्। कथम्भूतस्य तव, आत्मसुखानुभूतेः, आत्मना स्वेनैव

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मत्वञ्चेन सुखस्यानुभूतिरनुभवो यस्य तस्यानन्यवेद्यानन्दस्येत्यर्थः । १० ॥ १४ ॥ ब्रह्मा श्रीभगवन्तम् ॥ १०२ ॥

कैमुत्येन स्वयंरूपत्वनिर्द्देशश्च—सकृद्यदङ्गप्रतिमान्तराहिता मनोमयी भागवतीं ददौ गतिम् । स एव नित्यात्मसुखानुभूत्या व्युदस्तमायः परमोऽङ्ग किं पुनः ॥ १०३ ॥

स्पष्टम् ॥ १० ॥ १२ ॥ श्रीशुकः ॥ १०३ ॥

अतएव साक्षात् परब्रह्मत्वमेव दर्शितम् । अद्यैव त्वदृतेऽस्येत्यादौ । अहो भाग्यमहो भाग्यमित्यादौ च । अतएवोक्तं गूढ़ं परं ब्रह्म मनुष्यलिङ्गमिति । वैष्णवे च । यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते । यत्रावतीर्णं कृष्णाख्यं परं ब्रह्म नराकृतीति । नराकृति परं ब्रह्मेति बृहत्सहस्रनामस्तोत्रे च । एतेन श्रीकृष्णस्य नराकृतित्वमेवेति । द्विभुजत्व एव श्रीकृष्णत्वं नराकृतिकैवल्यान्मुख्यं, चतुर्भुजत्वे तु श्रीकृष्णत्वं नराकृतिभूयिष्ठत्वात्तदनन्तरमेव । अतएव चतुर्भुजत्वेऽपि मनुष्यरूपत्वं वर्णितं श्रीमदर्जुनेन—तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्त्ते इत्युक्त्वा दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्द्दन । इदानीमस्मि संवृत्त इत्यन्तत्वात् । एवंजातीयकानि बहूनि वाक्यानि सन्ति तानि च द्रष्टव्यानि । अतएव सा नराकारा मूर्त्तिरेव परमकारणं वस्तुतत्त्वमित्याह—नारायणे कारणमर्त्त्यमूर्त्ताविति ॥१०४॥

सर्वकारणं यत्तत्त्वं तदेव मर्त्त्याकारा मूर्त्तिर्यस्य । तदुक्तं, तत्त्वं परं योगिनामिति । तथाच पाद्मनिर्म्माणखण्डे श्रीवेदव्यासवाक्यम्—दृष्ट्वातिहृष्टो ह्यभवं सर्वभूषणभूषणम् । गोपालमबलासङ्गमुदितं वेणुवादितम् । ततो मामाह भगवान् वृन्दावनचरः स्मयन् । यदिदं मे त्वया दृष्टं रूपं दिव्यं सनातनम् । निष्कलं निष्क्रियं शान्तं सच्चिदानन्दविग्रहम् । पूर्णं पद्मपलाशाक्षं नातः परतरं मम । इदमेव वदन्त्येते वेदाः कारणकारणमित्यादि ॥ १० ॥ ४७ ॥ उद्धवः श्रीव्रजेश्वरम् ॥ १०४ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतएव बहु चतुर्भुजान् दृष्टवानपि श्रीनराकारस्यैव विशेषतस्तु त्यत्वं प्रतिजानाति। नौमीड्य तेऽभ्रवपुषे तड़िदम्बरायेत्यादि॥ १०५॥

इदमेव तव परमं तत्त्वमित्यज्ञात्वा पूर्वमहं भ्रान्तवान्। अधुना तु अद्यैव त्वदृतेऽस्य किमित्यादिदर्शितया भवतः कृपया ज्ञातवानित्यतः तत्र तदाकारमेव त्वां लब्धुं स्तौमीति तात्पर्य्यम्॥ १०॥ १४॥ ब्रह्मा श्रीभगवन्तम्॥ १०५॥

तदेवं साधूक्तं तत्तद्वचनमन्यार्थत्वेन दृश्यमिति। तथा हि पूर्वरीत्या चतुर्भुजत्वद्विभुजत्वयोर्द्वयोरपि ध्यानधिष्ण्यत्वे सति यत् पूर्वस्य जनन्या निगूहनप्रार्थनं तत्तु तस्य प्रसिद्धतया सर्व एव ज्ञास्यतीति। जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन इत्याद्युक्तलक्षण कंसभिया। विश्वं यदेतत् स्वतनौ निशान्ते इत्याद्युक्तलक्षण मांसदृक्शब्दोक्तभगवत्स्वरूपशक्तिविलासतज्जन्मादिलीलातत्त्वानभि प्राकृतदृग्भ्यो लज्जया च न पुनरवरस्य गूढ़ं परं ब्रह्म मनुष्यलि मित्यादौ गूढ़त्वेन कथितस्य ध्यानधिष्ण्यत्वाभावविवक्षया। श्रीगो पालतापनीश्रुतावप्युभयोरपि ध्यानधिष्ण्यत्वं श्रूयते। मथुरायां विशे षेण मां ध्यायन् मोक्षमश्नुते। अष्टपत्रं विकसितं हृत्पद्मं तत्र संस्थित मित्यादिषु मध्ये चतुर्भुजं शङ्खचक्रेत्यादिकमुक्त्वा सर्वान्ते शृङ्गवेणुध तु वेत्यप्युक्तम्। एवमागमेऽपि द्विभुजध्यानं श्रूयते। तस्मा न्निगूढ़त्वविवक्षैव समीचीना। तथैव तद्विवक्षया नान्यथा मह ज्ञानं मर्त्यलिङ्गेन जायत इति श्रीभगवतोक्तम्। तथाच पाद्मनिर्माण खण्डे श्रीभगवद्वाक्यव्यासवाक्ये। पश्य त्वं दर्शयिष्यामि स्वरूपं वेद गोपितम्। ततोऽपश्यमहं भूप बालं कालाम्बुदप्रभम्। गोपकन्या वृतं गोपं हसन्तं गोपबालकैरिति। एवमित्युक्त्वासीद्वरिस्तू मित्यादौ च व्याख्येयम्। आत्ममायया स्वेच्छया आत्ममाया तदिच्छ स्यादिति महासंहितोक्तेः। प्रकृत्या स्वरूपेणैव व्यक्तः प्राकृतः। त्वोपाधिकतया शेषिकोऽण। तत्र हि भगवद्विग्रहे श्रियुक्ता

विचित्रा एव धर्म्माः स्वाभाविकाः सन्तीति को वेत्ति भूमन् इत्यस्य व्याख्याने द्वितीयसन्दर्भे दर्शितमेव। अत्र श्रीरामानुजाचार्य्यसम्मतिरपि। श्रीगीतासु प्रकृतिं स्वामवष्टभ्य सम्भवाम्यात्ममाययेत्यत्र स्वमेव स्वभावमास्थाय आत्ममायया स्वसङ्कल्परूपेण ज्ञानेनेत्यर्थः। मायावयुनं ज्ञानमिति नैर्घण्टुकाः। महाभारते च अवताररूपस्याप्यप्राकृतत्वमुच्यते। न भूतसङ्घसंस्थानो देहोऽस्य परमात्मन इति। अथ वृहद्वैष्णवेऽपि। यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः। स सर्वस्माद्बहिः कार्य्यः श्रौतस्मार्त्तविधानतः। मुखं तस्यावलोक्यापि सचेलः स्नानमाचरेत्। पश्येत् सूर्य्यं स्पृशेद् गाञ्च घृतं प्राश्य विशुद्ध्यतीति। अथ ययाहरद्भुवो भारमित्यादौ चैवं मन्तव्यम्। तनुरूपकलेवरशब्दैरत्र श्रीभगवतो भूभारजिहीर्षालक्षणो देवादिपिपालयिषालक्षणश्च भाव एवोच्यते। यथा तृतीये विंशतितमे तत्तच्छब्दैर्ब्रह्मणो भाव एवोक्तः। यदि तत्रैव तथा व्याख्येयं तदा सुतरामेव श्रीभगवतीति। ततश्च तस्य भावस्य भगवति तदाभासरूपत्वात् कण्टकदृष्टान्तः सुसङ्गत एव। तथा इयमेवेश्वितुः साम्यमपि। तत्तु तृतीये सन्दर्भे एव विवृतम्। मत्स्यादिरूपाणि मत्स्याद्यवतारेषु तत्तद्भावान्। अथ नटदृष्टान्तेऽपि नटः श्राव्यरूपकाभिनेता। व्याख्यातञ्च टीकाकृद्भिः प्रथमस्यैकादशे नटा नवरसाभिनयचतुरा इति। ततो यथा श्राव्यरूपकाभिनेता नटः स्वरूपेण स्ववेशेन च स्थित एव पूर्ववृत्तमभिनयेन गायन् नायकनायिकादिभावं धत्ते जहाति च तथेति। अतएव तृतीये—प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम्। आदायान्तरधाद्यस्तु स्वविम्बं लोकलोचनमिति। अत्रापि लोकलोचनरूपं स्वविम्बं निजमूर्त्तिं प्रदर्श्य पुनरादायैव च अन्तरधात् न तु त्यक्त्वेत्युक्तम्। श्रीमदुद्धवेन—यथा मत्स्यादिरूपाणीत्यनन्तरमपि तथोक्तम्। यदा मुकुन्दो भगवानिमां महीं जहौ स्वतन्वेति। त्यागोऽत्र स्वतनुकरणक इति न तु स्वतन्वा सहेति व्याख्येयम्। अध्याहार्य्यापेक्षा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

गौरवात् उपपदविभक्तेः कारकविभक्तिर्बलीयसीतिन्यायाच्च। अथ सूतोऽहह इत्यस्यार्थः। एतत्प्राक्तनवाक्येषु श्रीभगवन्महिमज्ञान-भक्तिप्रधानोऽसौ विशुद्धसत्वप्रादुर्भावस्याप्यात्मनो मनुष्यलीलामेव दैन्यातिशयतः प्राकृतमानुषत्वेन स्थापयित्वा श्रीभगवत्यपत्यबुद्धि-माक्षिप्तवान्। ततश्च ननु तर्हि कथमपत्यबुद्धिं कुरुषे इति श्रीभग-वत्प्रश्नमाशङ्क्य तत्र तद्वाक्यगौरवमेव मम प्रमाणं न तूपपत्तिरित्याह, सूतोऽहह इति। नौ आवयोरनुयुगं अज एव भवान् संजज्ञे अव-तीर्णवानिति सूतोऽहहे भगवाननुजगाद। मया तदपि भवदादि-तनुप्रवेशनिर्गमापेक्षयैव जज्ञे इत्युक्तम्। न तु मम प्रवेशनिर्गम-लिङ्गेनैव जन्म वाच्यं जीवसखेन व्यष्टेः समष्टेर्वान्तर्यामिरूपेण। तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणमित्यादौ, तत्-सृष्ट्वा तदेवानुप्राविशदित्यादौ च तत्तदनुप्रवेशादिदर्शनसामान्यात्। ततस्तद्वदिदमुपचरितमेवेति मन्यताम्। तत्राह नानेति। स्वकृत-विचित्रयोनिषु विशन्निव हेतुतयेत्यादिश्रवणात् गगनवदसङ्ग एव त्वं यज्जीवानां नानातनू विदधत् प्रविशन् जहासि मुहुः प्रविशसि जहासि चेत्यर्थः, तद्भूम्नस्तव विशेषरूपां मायां को वेद बहु मन्यते न कोऽपीत्यर्थः। इदन्त्वावाभ्यां जन्म सर्वैरेव स्तूयते इति भावः। ततो विद्वदादरोऽप्यत्रास्तु प्रमाणं मम तु तत् सर्वथा न बुद्धिगोचर इति व्यञ्जितम्। अत्र विदधातेः प्रवेशार्थो नानुपपन्नः। यथोक्तं सहस्र-नामभाष्ये—शिष्टान् करोति पालयतीत्ति सामान्यवचनो धातुर्विशेष-वचने दृष्टः कुरु काष्ठानीत्याहरणे यथा तद्वदिति। तदेवं श्रीकृष्णस्य स्वयं भगवत्त्वं तद्रूपेणावस्थायित्वञ्च दर्शितम्। तथा प्रथमे पृथि-व्यापि सत्यं शौचं दया क्षान्तिरित्यादिना तदीयानां कान्तिसह-ओजोवलानां स्वाभाविकत्वमव्यभिचारित्वञ्च दर्शितम्। अतएव ब्रह्माण्डे चाष्टोत्तरशतनामस्तोत्रे नराकृतित्वं प्रकृत्यैवोक्तम्— नन्दव्रजजनानन्दी सच्चिदानन्दविग्रहः। नवनीतविलिप्ताङ्गो नवनीत-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नटोऽनघ इति। श्रीगोपालपूर्वतापन्यामपि तथैव। नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। तं पीठगं ये नु यजन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषामिति। तमेकं गोविन्दं सच्चिदानन्दविग्रहमित्यादि च। तस्माच्चतुर्भुजत्वे द्विभुजत्वे च श्रीकृष्णत्वस्याभिचारित्वमेवेति सिद्धम्। अथ कृतसच्चत्पदं यत्रासौ विहरति तत्रोच्यते। या यथा भुवि वर्त्तन्ते पुर्य्यो भगवतः प्रियाः। तास्तथा सन्ति वैकुण्ठे तत्तल्लीलार्थमादृता इति। स्कान्दवचनानुसारेण वैकुण्ठे यद् यत् स्थानं वर्त्तते तत्तदेवेति मन्तव्यम्। तच्चाखिलवैकुण्ठोपरिभाग एव। यतः पाद्मोत्तरखण्डे दशावतारगणने श्रीकृष्णमेव नवमत्वेन वर्णयित्वा क्रमेण पूर्वादिषु तद्दशावतारस्थानानां परमव्योमाभिधवैकुण्ठस्यावरणत्वेन गणनया श्रीकृष्णलोकस्य ब्रह्मादिशि प्राप्ते सर्वोपरिस्थायित्वमेव पर्य्यवसितम्। आगमादौ हि दिक्क्रमस्तथैव दृश्यते। तत्रास्माभिस्तु तत्तत्श्रवणात् श्रीकृष्णलोकस्य स्वतन्त्रैव स्थितिः किन्तु परमव्योमपक्षपातित्वेनैव पाद्मोत्तरखण्डेन तदावरणेषु प्रवेशितोऽसाविति मन्तव्यम्। पाद्मोत्तरखण्डप्रतिपाद्यस्य गौणत्वन्तु श्रीभागवतप्रतिपाद्यापेक्षया वर्णितमेव। स्वायम्भुवागमे च स्वतन्त्रतयैव सर्वोपरि तत्स्थानमुक्तम्। यथा ईश्वरदेवीसंवादे चतुर्दशाक्षरध्यानप्रसङ्गे पञ्चाशीतितमे पटले। ध्यायेत्तत्र विशुद्धात्मा इदं सर्वं क्रमेण तु। नानाकल्पलताकीर्णं वैकुण्ठं व्यापकं स्मरेत्। अधःसाम्यं गुणानाञ्च प्रकृतिं सर्वकारणम्। प्रकृतेः कारणान्येव गुणांश्च क्रमशः पृथक्। ततस्तु ब्रह्मणो लोकं ब्रह्मचिह्नं स्मरेत् सुधीः। ऊर्द्ध्वे तु सीम्नि विरजां निःसीमां वरवर्णिनि। वेदाङ्गस्वेदजनिततोयैः प्रस्राविता शुभाम्। इमाश्च देवता ध्येया विरजायां यथाक्रममित्याद्यनन्तरं, ततो निर्वाणपदवीं मुनीनामूर्द्ध्वरेतसाम्। स्मरेत्तु परमव्योम यत्र देवाः सनातनाः। ततोऽनिरुद्धलोकञ्च प्रद्युम्नस्य यथाक्रमम्। सङ्कर्षणस्य च तथा वासुदेवस्य च स्मरेत्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

लोकाधिपान् स्मरेदित्याद्यनन्तरञ्च, पीयूषलतिकाकीर्णां नानासत्त्व-
निषेविताम्। सर्वर्त्तुसुखदां स्वच्छां सर्वजन्तुसुखावहाम्। नीलो-
त्पलदलश्यामां वायुना चालितां मृदु। वृन्दावनपरागैस्तु वासितां
कृष्णवल्लभाम्। सौम्नि कुञ्जतटां योषित्क्रीड़ामण्डपमध्यमाम्।
कालिन्दीं संस्मरेद्धामान् सुवर्णतटपङ्कजाम्। नित्यनूतनपुष्पादिरचितं
सुखसङ्कुलम्। स्वात्मानन्दसुखोत्कर्षशब्दादिविषयात्मकम्। नाना-
चित्रविहङ्गादिध्वनिभिः परिरञ्जितम्। नानारत्नलताशोभिमत्तालि-
ध्वनिमण्डितम्। चिन्तामणिपरिच्छन्नं ज्योत्स्नाजालसमाकुलम्।
सर्वर्त्तुफलपुष्पाढ्यं प्रवालैः शोभितं परि। कालिन्दीजलसंसर्गि-
वायुना कम्पितं मुहुः। वृन्दावनं कुसुमितं नानावृक्षविहङ्गमैः।
संस्मरेत् साधको धीमान् विलासैकनिकेतनम्। एकीभावो द्वयोर्यत्र
वृक्षयोर्मध्यदेशतः। तदधश्चिन्तयेद्देवि मणिमण्डपमुत्तमम्। त्रिलोकी-
सुखसर्वस्वं सुयन्त्रं केलिवल्लभम्। तत्र सिंहासने रम्ये नानारत्नमये
सुखे। सुमनोऽधिकमाधुर्य्यकोमले सुखसंस्तरे। धर्म्मार्थकाममोक्षाख्य-
चतुष्पादैर्विराजिते। ब्रह्मविष्णुमहेशानां शिरोभूषणभूषिते। तत्र
प्रेमभराक्रान्तं किशोरं पीतवाससम्। कलायकुसुमश्यामं लावण्यैक-
निकेतनम्। लीलारससुखाम्भोधिसंमग्नं सुखसागरम्। नवीन-
नीरदाभासं चन्द्रिकाञ्चितकुन्तलमित्यादि। तस्माद् या यथा भुवि
वर्त्तन्त इति न्यायाच्च स्वतन्त्र एव द्वारकामथुरागोकुलात्मकः श्रीकृष्ण-
लोकः स्वयं भगवतो विहारास्पदत्वेन भवति सर्वोपरीति सिद्धम्।
अतएव वृन्दावनं गोकुलमेव सर्वोपरिविराजमानं गोलोकत्वेन प्रसिद्धम्।
ब्रह्मसंहितायाम्। ईश्वरः परमः कृष्ण इत्युपक्रम्य, सहस्रपत्रं कमलं
गोकुलाख्यं महत्पदम्। तत्कर्णिकारं तद्धाम तदनन्तांशसम्भवम्।
कर्णिकारं महद्यन्त्रं षट्कोणं वज्रकीलकम्। षड़ङ्गषट्पदीस्थानं
प्रकृत्या पुरुषेण च। प्रेमानन्दमहानन्दरसेनावस्थितन्तु यत्। ज्योतिः-
रूपेण मनुना कामबीजेन सङ्गतम्। तत्किञ्जल्कं तदंशानां तत्-

पत्राणि श्रियामपि । चतुरस्रं तत्परितः श्वेतद्वीपाख्यमद्भुतम् । चतुरस्रं चतुर्मूर्त्तेश्चतुर्द्धाम चतुष्कृतम् । चतुर्भिः पुरुषार्थैश्च चतुर्भिर्हेतुभिर्वृतम् । शूलैर्दशभिरानन्दमूर्द्धाधो दिग्विदिक्षु च । अष्टाभिर्निधिभिर्जुष्टमष्टभिः सिद्धिभिस्तथा । मनुरूपैश्च दशभिर्दिक्पालैः परितो वृतम् । श्यामैर्गौरैश्च रक्तैश्च शुक्लैश्च पार्षदर्षभैः । शोभितं शक्तिभिस्ताभिरद्भुताभिः समन्तत इति । तत्राग्रे ब्रह्मस्तवे—चिन्तामणि-प्रकरसद्मसु कल्पवृक्षलक्षावृतेषु सुरभीरभिपालयन्तम् । लक्ष्मीसहस्र-मित्युपक्रम्य गोलोकनाम्नि निजधाम्नि तले च तस्य देवीमहेशहरि-धामसु तेषु तेषु । ते ते प्रभावनिचया विहिताश्च येन गोविन्दमादि-पुरुषं तमहं भजामीति । सहस्राणि पत्राणि यत्र तत् कमलं चिन्ता-मणिमयं पद्मं तद्रूपं तच्च महत् सर्वोत्कृष्टं पदं महतो महाभगवतो वा पदं श्रीमहावैकुण्ठमित्यर्थः । तत्तु नानाप्रकारमित्याशङ्क्य प्रकार-विशेषेण निश्चिनोति गोकुलाख्यमिति । गोकुलमित्याख्या प्रसिद्धि-र्यस्य तत् गोगोपावासरूपमित्यर्थः । रूढिर्योगमपहरतीति न्यायेन तस्यैव प्रतीतेः । तत एतदनुगुणत्वेनैवोत्तरग्रन्थोऽपि व्याख्येयः । तस्य श्रीकृष्णस्य धाम नन्दयशोदादिभिः सह वासयोग्यं महान्तःपुरम् । तस्य स्वरूपमाह तदिति । अनन्तस्य श्रीबलदेवस्यांशात् सम्भवो नित्याविर्भावो यस्य तत् । तथा तन्त्रेण तदपि बोध्यते । अनन्तो-ऽंशो यस्य तस्य श्रीबलदेवस्यापि सम्भवो निवासो यत्र तदिति । सर्व-मन्त्रगणसेवितस्य श्रीमदष्टादशाक्षरमहामन्त्रराजस्य बहुपीठस्य मुख्यं पीठमित्याह कर्णिकारमिति द्वयेन । महद् यन्त्रमिति । यत् प्रति-कृतिरिव सर्वत्र यन्त्रत्वेन पूजार्थं लिख्यते इत्यर्थः । यन्त्रत्वमेव दर्श-यति । षट्कोण अभ्यन्तरे यस्य तद्वज्रकीलकं हीरककीलकशोभितम् । षट्कोणत्वे प्रयोजनमाह । षट् अङ्गानि यस्याः सा या षट्पदी श्रीमदष्टा-दशाक्षरी तस्याः स्थानं प्रकृतिर्मन्त्रस्य स्वरूपं स्वयमेव श्रीकृष्णः कारण-रूपत्वात् । पुरुषश्च स एव तद्देवतारूपः । ताभ्यामवस्थितमधिष्ठितम् ।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

द्वयोरपि विशेषणं प्रेमेति। प्रेमरूपा ये आनन्दमहानन्दरसास्तत्परिपाकभेदास्तदात्मकेन तथा ज्योतीरूपेण स्वप्रकाशेन मनुना मन्त्ररूपेण च कामवीजेन अवस्थितमिति मूलमन्त्रान्तर्गतत्वेऽपि पृथगुक्तिः कुत्रचिद्वैशिष्ट्यापेक्षया। तदेवं तद्धामोक्त्वा तदावरणान्याह। तदिति तस्य कर्णिकारस्य किञ्जल्कं किञ्जल्कास्तल्लग्नाभ्यन्तरवलय इत्यर्थः। तदंशानां तस्मिन्नंशो दायो विद्यते येषां तेषां सजातीयानां धामेत्यर्थः गोकुलाख्यमित्युक्तेरेव। तेषां तज्जातीयत्वं श्रीशुकदेवेन च उक्तम् एवं ककुद्मिनं हत्वा स्तूयमानं सजातिभिः। विवेश गोष्ठं सबलो गोपीनां नयनोत्सव इति। तस्य कमलस्य पत्राणि श्रि तत्प्रेयसीनां श्रीराधादीनामुपवनरूपाणि धामानीत्यर्थः। पत्राणामुच्छ्रितप्रान्तानां मूलसन्धिषु वर्त्मानि अग्रिमसन्धिषु गोष्ठानि ज्ञेयानि। अखण्डकमलस्य गोकुलाख्यत्वात् तथैव समावेशात्। अथ गोकुलावरणान्याह। 'चतुरस्रमिति। तद्बहिश्चतुरस्रं तत् गोकुलस्य वहिः सर्वतश्चतुरस्रं चतुष्कोणात्मकं स्थलं श्वेतद्वीपाख्यमिति तदंशे गोकुलमिति नामविशेषाभावात्। किन्तु चतुरस्राभ्यन्तर मण्डलं वृन्दावनाख्यं वहिर्मण्डलं केवलं श्वेतद्वीपाख्यं ज्ञेयं गोलोक इति यत्पर्य्यायः। तदिदं क्रोड़ीकृतगोकुलं वृन्दावनाख्यया प्रसिद्धमिति न निर्द्दिष्टम्। क्रोड़ीकृततत्सर्वमस्य तु वहिर्मण्डलं गोलोकश्वेतद्वीपाख्यं ज्ञेयम्। चतुर्मूर्त्तेश्चतुर्व्यूहस्य श्रीवासुदेवादिचतुष्टयस्य चतुष्कृतं चतुर्द्धा विभक्तं चतुर्धाम। किन्तु देवलीलत्वात्तदुपरि व्योमयानस्था एव ते ज्ञेयाः। हेतुभिः पुरुषार्थसाधनैः मनुरूपैः स्वस्वमन्त्रात्मकैरिन्द्रादिभिः। श्यामैरित्यादिभिः चतुर्भिर्वेदैरित्यर्थः। कृष्णश्च तत्र छन्दोभिः स्तूयमानं सुविस्मित इति श्रीदशमोक्तेः। शक्तिभिरिति श्रीविमलादिभिरित्यर्थः। वृहद्वामनपुराणप्रसिद्धिः। यथा श्रीभगवति स्तुतिप्रार्थनापूर्वकाणि पद्यानि—आनन्दरूपमिति यद्विदन्ति हि पुराविदः। तद्रूपं दर्श

स्वाकं यदि देयो वरो हि नः। श्रुत्वैतद्दर्शयामास स्वलोकं प्रकृतेः परम्। केवलानुभवानन्दमात्रमक्षरमव्ययम्। यत्र वृन्दावनं नाम वनं कामदुघैर्द्रुमैः। मनोरमनिकुञ्जाढ्यं सर्वर्त्तुसुखसंयुतम्। यत्र गोवर्द्धनो नाम सुनिर्झरदरीयुतः। रत्नधातुमयः श्रीमान् सुपक्षिगणसङ्कुलः। यत्र निर्म्मलपानीया कालिन्दी सरितां वरा। रत्नबद्धोभयतटा हंसपद्मादिसङ्कुला। शश्वद्रासरसोन्मत्तं यत्र गोपीकदम्बकम्। तत्कदम्बकमध्यस्थः किशोराकृतिरच्युत इति। एतदनुसारेण श्रीहरिवंशवचनमप्येवं व्याख्येयम्। तद् यदाह शक्रः। स्वर्गादूर्द्ध्वं ब्रह्मलोको ब्रह्मर्षिगणसंवृतः। तत्र सोमगतिश्चैव ज्योतिषाञ्च महात्मनाम्। तस्योपरि गवां लोकः साध्यास्तं पालयन्ति हि। स हि सर्वगतः कृष्ण महाकाशगतो महान्। उपर्य्युपरि तत्रापि गतिस्तव तपोमयी। यां न विद्मो वयं सर्वे पृच्छन्तोऽपि पितामहम्। गतिः शमदमाढ्यानां स्वर्गः सुकृतकर्म्मणाम्। ब्राह्मे तपसि युक्तानां ब्रह्मलोकः परा गतिः। गवामेव तु यो लोको दुरारोहा हि सा गतिः। स तु लोकस्त्वया कृष्ण सीदमानः कृतात्मना। धृतो धृतिमता वीर निघ्नतोपद्रवान् गवामिति। अस्यार्थः। स्वर्गशब्देन भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः। स्वर्लोकः कल्पितो मूर्ध्ना इति वा लोककल्पना इति द्वितीयोक्तानुसारेण स्वर्लोकमारभ्य सत्यलोकपर्य्यन्तं लोकपञ्चकमुच्यते। तस्मादूर्द्ध्वमुपरि ब्रह्मलोकः ब्रह्मात्मको वैकुण्ठाख्यः सच्चिदानन्दरूपत्वात् ब्रह्मणो भगवतो लोक इति वा। दर्शयन् ब्रह्मलोकं ते यत्राक्रूरोऽध्यगात् पुरेति दशमात्। एवं द्वितीये मूर्द्धभिः सत्यलोकस्तु ब्रह्मलोकः सनातन इति। टीका च—ब्रह्मलोको वैकुण्ठाख्यः। सनातनो नित्यः। न तु सृज्यान्तर्वर्त्तीत्यर्थ इत्येषा। ब्रह्माणि मूर्त्तिमन्तो वेदाः। ऋषयश्च श्रीनारदादयः। गणाश्च श्रीगरुड़विष्वक्सेनादयः। तैर्निषेवितः। एवं नित्याश्रितानुक्त्वा तद्गमनाधिकारिण आह। तत्र ब्रह्मलोके उमया सह वर्त्तत इति। सोमः श्रीशिवस्तस्य गतिः। सोमेति सुपां

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सुलुगित्यादिना षष्ठ्या लुक् छान्दसः। तत उत्तरत्रापि गतिपदान्व
ज्योतिर्ब्रह्मतदैकात्म्यभाजां मुक्तानामित्यर्थः। न तु तादृशानां
सर्वेषामेवेत्याह। महात्मनां महाशयानां मोक्षनिरादरतया भक्त
श्रीसनकादितुल्यानामित्यर्थः। मुक्तानामपि सिद्धानां नारायणप
यणः। सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने इत्यादौ। योगिन
मपि सर्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे यु
क्तमो मत इत्यादावपि तेष्वेव महत्त्वपर्य्यवसानात्। तस्य च ब्र
लोकस्योपरि सर्वोर्द्ध्वप्रदेशे गवां लोकः श्रीगोलोक इत्यर्थः। त
श्रीगोलोकं साध्या अस्माकं प्रापञ्चिकदेवानां प्रसादनीया मू
रूपा नित्यतदीयदेवगणाः पालयन्ति। तत्र दिक्पालत्वेनाव
रूपा वर्त्तन्ते। ते ह नाकं महिमानः सचन्तः यत्र पूर्वे साध्याः सन्ति
देवा इति श्रुतेः। तत्र पूर्वे ये च साध्या विश्वे देवाः सनातना
ते ह नाकं महिमानः सचन्तः शुभदर्शना इति पाद्मोत्तरखण्डाच्च। त
तद्भूरि भाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेऽपीत्याद्युक्तानुसा
तद्विधपरमभक्तानामपि साध्यास्तादृशसिद्धिप्राप्तये प्रसादनीयाः श्रीन
गोपीप्रभृतयः। तं पालयन्ति अधिकृत्य भजन्ति हि प्रसिद्धौ स गोलो
सर्वगतः श्रीकृष्णवत् सर्वप्रापञ्चिकाप्रापञ्चिकवस्तुव्यापकः। अत
महान् भगवद्रूप एव। महान्तं विभुमात्मानम् इति श्रुतेः। तत्र हि
महाकाशः परमव्योमाख्यः, ब्रह्मविशेषणलाभादाकाशस्तल्लिङ्गादि
न्यायप्रसिद्धेश्च, तद्गतः, ब्रह्माकारोदयानन्तरमेव वैकुण्ठप्राप्तेः। य
गोपानां वैकुण्ठदर्शने तैरेव व्याख्यातम्। यथा वा श्रीमदजामिल
वैकुण्ठगमनम्। यद्वा महाकाशः परमव्योमाख्यो महावैकुण्ठस्त
स्तदूर्द्ध्वभागस्थितः। एवमुपर्य्युपरि सर्वोपर्य्यपि विराजमाने
श्रीगोलोकेऽपि तव गतिः। नानारूपेण वैकुण्ठादौ क्रीड़तस्तव तत्र
श्रीगोविन्दरूपेण क्रीड़ा विद्यत इत्यर्थः। अतएव सा च गतिः सा
रणी न भवति किन्तु तपोमयी अनवच्छिन्नैश्वर्य्यमयी। परमं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

महत्तर इत्यत्र सहस्रनामभाष्येऽपि तपःशब्देन तथैव व्याख्यातम्। अतएव ब्रह्मादिदुर्वितर्क्यत्वमप्याह। यामिति। अधुना तस्य श्रीगोलोकेत्याख्यावीजमभिव्यञ्जयति गतिरिति। ब्राह्मेर ब्रह्मणो लोकप्राप्तेः तपसि विष्णुविषयकमनःप्रणिधाने युक्तानां रतचित्तानां प्रेमभक्तानामित्यर्थः। ब्रह्मलोको वैकुण्ठलोकः। परा प्रकृत्यतीता। गवां, मोचयन् व्रजगवां दिनतापमित्युक्त्यनुसारेण अत्रैव निघ्नतोपद्रवान् गतामित्युक्त्या च गोलोकवासिमात्राणां स्वतस्तद्भावभावितानाञ्च साधनवशेनेत्यर्थः। अतएव तद्भावस्यासुलभत्वाद्दुरारोहा। तदेवं गोलोकं वर्णयित्वा तस्य गोकुलेन सहाभेदमाह। स त्विति। स तु स एव लोको धृतो रचितः। श्रीगोवर्द्धनोद्धरणेनेति। यथाह मृत्युञ्जयतन्त्रे। एकदा सान्तरीचाच्च वैकुण्ठं स्वेच्छया भुवि। गोकुलत्वेन संस्थाप्य गोप्रीमयमहोत्सवा। भक्तिरूपा सतां भक्तिमुत्पादितवती भृशमिति। अत्र शब्दसाम्यभ्रमप्रतीतार्थान्तरे स्वर्गादूर्द्धं ब्रह्मलोक इत्ययुक्तम्। लोकत्रयमतिक्रम्योक्तेः। तथा सोमगतिरित्यादिकं न सम्भवति। यतो ध्रुवलोकादधस्तादेव चन्द्रसूर्य्यादीनां गतिर्महर्लोकेऽपि न वर्त्तते। तथावरसाध्यगणानां तुच्छत्वात् सत्यलोकस्यापि पालनं न युज्यते कुतस्तदुपरिलोकस्य श्रीगोलोकाख्यस्य। तथा सर्वगतत्वञ्चासम्भाव्यं स्यात्। अतएव तत्रापि तव गतिरित्यपि शब्दो विस्मये प्रयुक्तः। यां न विद्म इत्यादिकञ्च। अन्यथा तथोक्तिर्न सम्भवति स्वेषां ब्रह्मणश्च तदज्ञानज्ञापनात्। तस्मात् प्राकृतगोलोकादन्य एवासौ सनातनो गोलोको ब्रह्मसंहितावत् श्रीहरिवंशेऽपि परोक्षवादेन निरूपितः। एवञ्च नारदपञ्चरात्रे विजयाख्याने—तत्सर्वोपरि गोलोके श्रीगोविन्दः सदा स्वयम्। विहरेत् परमानन्दी गोपीगोकुलनायक इति। एवञ्चोक्तं मोक्षधर्मे नारायणीये स्कान्दे च—एवं बहुविधैरूपैश्चरामीह वसुन्धराम्। ब्रह्मलोकञ्च कौन्तेय गोलोकञ्च सनातनमिति। तदेवं सर्वोपरि श्रीकृष्णलोकोऽस्तीति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सिद्धम्। स च लोकस्तत्तल्लीलापरिकरभेदेनांशभेदात् द्वारकामथुरा-गोकुलाख्यस्थानत्रयात्मक इति निर्णीतम्। अन्यत्र तु भुवि प्रसिद्धा-न्येव तत्तदाख्यानि स्थानानि तद्रूपत्वेन श्रूयन्ते तेषामपि वैकुण्ठान्तर-वत् प्रपञ्चातीतत्वनित्यत्वालौकिकरूपत्वभगवन्नित्यास्पदत्वकथनात्। तत्र द्वारकायास्तत्तत् स्कान्दप्रह्लादसंहितादावन्वेष्टव्यम्। इयञ्च श्रुति-रुदाहरणीया। अन्तःसमुद्रे मनसा चरन्तं ब्रह्मान्वविन्दन्दशहोतो-रमर्णे समुद्रेऽन्तः कवयो विचक्षते मरीचीनां पदमन्विच्छन्ति वेधस इत्याद्या। श्रीमथुरायाः प्रपञ्चातीतत्वं यथा वाराहे—अन्यैव काचित् सा सृष्टिर्विधातुर्व्यतिरेकिणीति। नित्यत्वमपि यथा पाद्मे पाताल-खण्डे—ऋषिर्माथुरनामात्र तपः कुर्वति शाश्वत इति। अत्र मथुरा-मण्डले शाश्वते नित्ये कुर्वति करोति। अलौकिकरूपत्वं यथा आदि-वाराहे—भूर्भुवःस्वस्तलेनापि न पातालतले मलम्। नोर्द्ध्वलोके मया दृष्टं तादृक् क्षेत्रं वसुन्धरे। इति। श्रीभगवन्नित्यास्पदत्वं यथा—अहोऽतिधन्या मथुरा यत्र सन्निहितो हरिरिति। न च वक्तव्यमुपा-सनास्थानमेवेदम्। यतो मथुरायाः परं क्षेत्रं त्रैलोक्ये न हि विद्यते। तस्यां वसाम्यहं देवि मथुरायान्तु सर्वदा इति। तत्र वासस्यैव कण्ठोक्तिः। अत्रेदृशं श्रीवराहदेववाक्यम् अंशांशिनोरैक्यविवक्षयैव न तु तस्यैवासौ निवासः श्रीकृष्णक्षेत्रत्वेनैव प्रसिद्धेः। तथैव पाताल-खण्डे—अहो मधुपुरी धन्या यत्र तिष्ठति कंसहेति। वायुपुराणे तु स्वयं साक्षादेवेत्युक्तम्—चत्वारिंशद् योजनानां ततस्तु मथुरा स्मृता। यत्र देवो हरिः साक्षात् स्वयं तिष्ठति कंसहेति। अत्र साक्षाच्छब्देन सूक्ष्मरूपता स्वयंशब्देन श्रीमत्प्रतिमारूपता च निषिद्धा। तत इति पूर्वोक्तात् पुष्कराख्यतीर्थात् इत्यर्थः। मथुरायाः परं क्षेत्रमित्य-नेन वराहदेववचनेन पृथ्व्यामेव तिष्ठतीति निरस्तम्। अत्र श्रीगोपाल-तापनीश्रुतिश्च—सहोवाच तं हि नारायणो देवः सकाम्या मेरोः शृङ्गे यथा सप्त पूर्य्यो भवन्ति तथा सकाम्या निष्काम्याश्च भूगोलचक्रे सप्त

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पूर्य्यो भवन्ति तासां मध्ये साक्षाद्ब्रह्म गोपालपुरी हीति । सकाम्या निष्काम्या देवानां सर्वेषां भूतानां भवन्ति यथा हि वै सरसि पद्मं तिष्ठति तथा भूम्यां तिष्ठतीति चक्रेण रक्षिता हि वै मथुरा तस्माद्गोपालपुरी हि भवति बृहत् बृहद्वनं मधोर्मधुवनमित्यादिका । पुनश्च एतैरावृता पुरी भवति तत्र तेष्वेवमित्यादिका तथा द्वे वने स्तः कृष्णवनं भद्रवनं तयोरन्तर्द्वादश वनानि पुण्यानि पुण्यतमानि तेष्वेव देवास्तिष्ठन्ति सिद्धाः सिद्धिं प्राप्तास्तत्र रामस्य राममूर्त्तिरित्यादिका। तदप्येते श्लोकाः—प्राप्य मथुरां पुरीं रम्यां सदा ब्रह्मादिसेविताम् । शङ्खचक्रगदाशार्ङ्गरक्षितां मूषलादिभिः । यत्रासौ संस्थितः कृष्णस्त्रिभिः शक्त्या समाहितः । रामानिरुद्धप्रद्युम्नै रुक्मिण्या सहितो विभुरिति । किं तस्य स्थानमिति श्रीगान्धर्व्याः प्रश्नस्योत्तरमिदम् । एवमेव श्रीरघुनाथस्याप्ययोध्यायां श्रूयते, यथा स्कान्दायोध्यामाहात्म्ये स्वर्गद्वारमुद्दिश्य—चतुर्द्धा च तनुं कृत्वा देवदेवो हरिः स्वयम् । अत्रैव रमते नित्यं भ्रातृभिः सह राघव इति । अतएव—यत्र यत्र हरेः स्थानं वैकुण्ठं तद्विदुर्बुधा इत्यनुसारेण महाभगवतः स्थानत्वात् महावैकुण्ठ एवासौ यतो वैकुण्ठात्तस्य गरीयस्त्वं श्रूयते । यथा पातालखण्डे—एवं सप्तपुरीणान्तु सर्वोत्कृष्टन्तु माथुरम् । श्रूयतां महिमा देवि वैकुण्ठो भुवनोत्तम इति । अतएव तत्रैव—अहो मधुपुरी धन्या वैकुण्ठाच्च गरीयसीति । अथ श्रीवृन्दावनस्य तत्त्वादिकं मथुरामण्डलस्यैव तत्त्वेन सिद्धम् । यथा च गोविन्दवृन्दावनाख्यवृहद्गौतमीये नारदप्रश्नानन्तरं श्रीकृष्णस्योत्तरम् । तत्र प्रश्नः—किमिदं द्वादशाभिख्यं वृन्दारण्यं विशाम्पते । श्रोतुमिच्छामि भगवन् यदि योग्योऽस्मि मे वद । अथोत्तरम्—इदं वृन्दावनं रम्यं मम धामैव केवलम् । अत्र ये पशवः पक्षिवृक्षाः कीटा नरामराः । ये वसन्ति ममाधिष्ण्ये मृता यान्ति ममालयम् । अत्र या गोपकन्याश्च निवसन्ति ममालये । योगिन्यस्ता मया नित्यं मम सेवापरायणाः । पञ्चयोजनमेवास्ति वनं मे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

देहरूपकम्। कालिन्दीयं सुषुम्नाख्या परमामृतवाहिनी। अत्र देवाः
भूतानि वर्त्तन्ते सूक्ष्मरूपतः। सर्वदेवमयश्चाहं न त्यजामि वनं
क्वचित्। आविर्भावस्तिरोभावो भवेदत्र युगे युगे। तेजोमयमिदं
रम्यमदृश्यं चर्म्मचक्षुषेति। विशेषतस्तादृगलौकिकरूपत्वभगवद्विल-
धामत्वे तु दिव्यकदम्बाशोकादिवृक्षादयोऽप्यद्यापि महाभागवतैः
साक्षात्क्रियन्त इति प्रसिद्धावगतेः। यथा वाराहे कालीयह्रदमाहात्म्ये-
अत्रापि महदाश्चर्य्यं पश्यन्ति पण्डिता नराः। कालीयह्रदपूर्वेण कदम्बो
महितो द्रुमः। शतशाखं विशालाक्षि पुण्यं सुरभिगन्धि च। स च
द्वादशमासानि मनोज्ञः शुभशीतलः। पुष्पायति विशालाक्षि प्रभा-
सन्तो दिशो दशेति। शतानां शाखानां समाहारः शतशाखं यद्
यत्र प्रवर्त्तत इत्यर्थः। प्रभासन्तः प्रभासयन्नित्यर्थः। तत्रैव तदीय-
ब्रह्मकुण्डमाहात्म्ये—तत्राश्चर्य्यं प्रवक्ष्यामि तच्छृणु त्वं वसुन्धरे। लभन्ते
मनुजाः सिद्धिं मम कर्म्मपरायणाः। तस्य तत्रोत्तरे पार्श्वेऽशोकवृक्षः
सितप्रभः। वैशाखस्य तु मासस्य शुक्लपक्षस्य द्वादशी। स पुष्पति च
मध्याह्ने मम भक्तसुखावहः। न कश्चिदपि जानाति विना भागवतं
शुचिमित्यादि। द्वादशीति द्वादश्यां सुपां सुलुगित्यादिनैव पूर्वस-
वर्णः। शुचित्वमत्र तदनन्यवृत्तित्वम्। अनेन पृथिव्यापि तस्य तत्
तादृशरूपं न ज्ञायते इत्यायातम्। अतएव तदीयतीर्थान्तरमुद्दिश्य
यथा चादिवाराहे—कृष्णक्रीड़ासेतुबन्धं महापातकनाशनम्। वलभीं
तत्र क्रीड़ार्थं कृत्वा देवो गदाधरः। गोपकैः सहितस्तत्र क्षणमेकं दिने
दिने। तत्रैव रमणार्थं हि नित्यकालं स गच्छति। इति। एवं
स्कान्दे—ततो वृन्दावनं पुण्यं वृन्दादेवीसमाश्रितम्। हरिणाधिष्ठितं
तच्च ब्रह्मरुद्रादिसेवितमिति। श्रुतिश्च दर्शिता—गोविन्दं सच्चिदानन्द-
विग्रहं वृन्दावनसुरभूरुहतलासीनं सततं समरुद्गणोऽहं परितोषया-
मीति। एवं पातालखण्डे—यमुनाजलकल्लोले सदा क्रीड़ति माधवः
इति। यमुनाया जलकल्लोलो यत्र एवंभूते वृन्दावने इति प्रकरणा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्वम् । तत्राजहल्लक्षणया तीरकृदावेव ग्टह्योते । तीरञ्च वृन्दावन-लक्षण तत्र प्रस्तुतम् । अत एवास्य श्रीवृन्दावनस्य वैकुण्ठत्वमेव कण्ठोक्त्या कृष्णतापन्यां श्रुतौ दर्शितम्—गोकुलं वनवैकुण्ठमिति । तस्मात् नित्यधामत्वश्रवणात् श्रीमथुरादीनां तत्स्वरूपविभूतित्व-मेव । स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नीति श्रुतेः । अतएव तापनीश्रुतिः—साक्षाद्ब्रह्म गोपालपुरी हीति । वृहद्गौतमीय-तन्त्रे च—तेजोमयमिदं रम्यमदृश्यं चर्मचक्षुषेति । तदीदृशरूपता काशीमुद्दिश्य ब्रह्मवैवर्त्ते विश्वं समाधीयते । यथा, तत्र श्रीविष्णुं प्रति मुनीनां प्रश्नः—छत्राकारन्तु किं ज्योतिर्जलादूर्द्धं प्रकाशते । निम-ग्नायां धरायान्तु न वै मज्जति तत् कथम् । किमेतच्छाश्वतं ब्रह्म वेदान्तशतरूपितम् । तापत्रयार्त्तिदग्धानां जीवनं छत्रतां गतम् । दर्शनादेव चास्याथ कृतार्थाः स्मो जगद्गुरो । वारं वारं तवाप्यत्र दृष्टिर्लग्ना जनार्द्दन । परमाश्चर्य्यरूपोऽपि साश्चर्य्य इव पश्यसि । अथ श्रीविष्णूत्तरम्—छत्राकारं परं ज्योतिर्द्दृश्यते गगनेचरम् । तत्परं परमं ज्योतिः काशीति प्रथितं क्षितौ ॥ रत्नं सुवर्णे खचितं यथा भवेत्तथा पृथिव्यां खचिता हि काशिका । न काशिका भूमि-मयी कदाचित्ततो न मज्जेन्मम सन्नतिर्यतः ॥ जड़ेषु सर्व्वेष्वपि मज्ज-मानेष्वियं चिदानन्दमयी न मज्जेदित्यादि । तथाग्रे च—चेतना-जड़योरैक्यं यद्वन्नैकस्ययोरपि । तथा काशी ब्रह्मरूपा जड़ा पृथ्वी च सङ्गता । निर्म्माणन्तु जड़स्यात्र क्रियते न परात्मनः । उद्धरिष्यामि च महीं वाराहं रूपमास्थितः । तदा पुनः पृथिव्यां हि काशी स्थास्यति मत्प्रियेति । चेतनाशब्देनाचान्तर्यामी उपलक्ष्यते ; जड़शब्देन तु देहः ; परमात्मन इत्युक्तत्वात् । ततश्च, केचित् स्वदेहान्तर्हृद-यावकाशे प्रादेशमात्रं पुरुषं वसन्तमित्यादिना चतुर्भुजत्वेन वर्णितो-ऽन्तर्यामी देहे स्थितोऽपि यथा देहवेदनादिना न स्पृश्यते तद्वदिति ज्ञेयम् । तदेवं तद्धाम्नामुपर्य्यधःप्रकाशमात्रत्वेनोभयविधत्वं प्रस-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्तम्। वस्तुतस्तु श्रीभगवन्नित्याधिष्ठानत्वेन तच्छ्रीविग्रहवद्युः प्रकाशविरोधात् समानगुणनामरूपत्वेनाम्नातत्वात्तावद्वाच्यं कविः मेव मन्तव्यम्। एकस्यैव श्रीविग्रहस्य बहुत्र प्रकाशश्च द्वितीयस्य दर्शितः—चित्रं बतैतदेकेन वपुषा युगपत् पृथक्। गृहेषु द्व्य सहस्रं स्त्रिय एक उदावहत् इत्यादिना। एवंविधत्वं च तस्याचिन्त्य शक्तिस्वीकारेण सम्भावितमेव। स्वीकृतश्चाचिन्त्यशक्तित्वम्—श्रुतेस्तु शब्दमूलत्वादित्यादौ। तदेवमुभयाभेदाभिप्रायेणैव श्रीहरिवंशे गोलोकमुद्दिश्य—स हि सर्वगतो महानित्युक्तम्। भेदे तु ब्रह्मसंहितायामपि—गोलोक एव निवसत्यखिलात्मभूत इत्येवकारोऽत्र स्वं नित्यविहारप्रतिपादकवाराहादिवचनैर्विरुध्येत। अविरोधस्तूभयं मेक्येनैव भवतीति तं न्यायसिद्धमिवार्थं ब्रह्मसंहिता तु गृह्णाति। एव श्रीहरिवंशेऽपि शक्रेण—स तु लोकस्त्वया कृष्ण सीदमानः कृतात्मना। धृतो धृतिमता वीर निघ्नतोपद्रवान् गवामिति, गोलोकगोकुलयोरभेदेनैवाक्तम्। तस्मादभेदेन च भेदेन चोपक्रान्तत्वात् द्विधान्येव श्रीमथुरादीनि प्रकाशभेदेनैव तूभयविधत्वेनाम्नातानि स्थितम्। दर्शयिष्यते चाग्रे। क्षौणिप्रकाशमान एव श्रीहरेः श्रीगोलोकदर्शनम्। ततोऽस्यैवापरिच्छिन्नस्य गोलोकाख्यवृन्दावन प्रकाशविशेषस्य वैकुण्ठोपर्य्यपि स्थितिर्माहात्म्यावलम्बनेन भा स्फुरतीति ज्ञेयम्। अयमेव मथुराद्वारकागोकुलप्रकाशविशेषः श्रीकृष्णलोकस्तद्विरहिणा श्रीमदुद्धवेनापि समाधावनुभूत इत्याह शनकैर्भगवल्लोकान्नृलोकं पुनरागतः। विमृज्य नेत्रे विदुरं प्रत्याह इव उत्स्मयन्॥ १०६॥

स्पष्टम्॥ ३॥ २॥ श्रीशुकः॥ १०६॥

इममेव लोकं द्युशब्देनाप्याह—विष्णोर्भगवतो भानुः कृष्णाख्योऽसौ दिवं गतः। तदाविशत् कलियुगं पापे यद्रमते जनः। यावत् स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः। तावत् कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत्॥ १०७॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यदा गुणावतारस्य भगवतो विष्णोस्तदंशत्वाद्रश्मिस्थानीयस्य कृष्णाख्य: भानुः सूर्य्यमण्डलस्थानीयो दिवं प्रापञ्चिकलोकागोचरं मथुरादीनामिव प्रकाशविशेषरूपं वैकुण्ठलोकं गतः तदा कलिसं कमाविशत्। एवं स च प्रकाशः पृथिवीस्थोऽप्यन्तर्द्धानशक्त्या तामस्पृशन्नेव विराजते। अतस्तया न स्पृश्यते पृथिव्यादिभूतमयैरस्माभिर्बाराहोक्तमहाकदम्बादिरिव। यस्तु प्रापञ्चिकलोकगोचरो मथुरादिप्रकाशः सोऽयं कृपया पृथिवीं स्पृशन्नेवावतीर्णः। अतस्तया च स्पृश्यते तादृशैरस्माभिर्दृश्यमानकदम्बादिरिव। अस्मिंश्च प्रकाशे यदावतीर्णो भगवांस्तदा तत्स्पर्शेनापि तत्स्पर्शोक्तां स्पृशन्नेवास्ते स्म। संप्रति तदस्पृष्टप्रकाशे विहरमाणः पुनरस्पृशन्नेव भवति। तदेतदभिप्रेत्याह—यावदिति। पराक्रान्तुमित्यनेन ततपूर्वमपि कञ्चित् कालं प्राप्य प्रविष्टोऽसाविति ज्ञापितम्॥ १२ ॥ २ ॥ श्रीशुकः॥ १०७॥

तेन धीरा अपि यन्ति ब्रह्मविद उत्क्रम्य स्वर्गलोकमितो विमुक्ता इति श्रुत्यनुसारेण स्वर्गशब्देनाप्याह—

यातुधान्यपि सा स्वर्गमवाप जननीगतिमिति॥ १०८॥

अत्र जननीगतिमिति विशेषणेन लोकान्तरं निरस्तम्। तत्प्रकरण एव तदादीनां बहुशो गत्यन्तरनिषेधात्। सद्वेषादिव पूतनापि सकुला त्वामेव देवापितेऽत्यत्र साक्षात्तत्प्राप्तिनिर्द्धारणाच्च। तथाच केनोपनिषदि दृश्यते—केनेषितं मनः पतति प्राणस्य प्राणमुत चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्तीत्युपक्रम्य तदेव ब्रह्म त्वं विद्धीति मध्ये प्रोच्य अमृतत्वं हि विन्दते सत्यमायतनं यो वा एतामुपनिषदं वेदापहत्य पाप्मानम् अनन्ते स्वर्गे लोके प्रतिष्ठतीति उपसंहृतम्। ततः को वा स्वर्गः किं तद् ब्रह्मेत्यपेक्षायां पुरुषो ह वै नारायण इत्युपक्रम्य पुनश्चाभ्यासेन नित्यो देव एको नारायण इत्युक्त्वा नारायणोपासकस्य च स्तुतिं कृत्वा तद् ब्रह्म नारायण एवेति व्यज्य स्वर्गं प्रतिपादयितुं वैकुण्ठवनलोकं गमिष्यति तदिदं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पुरमिदं पुण्डरीकं विज्ञानघनं तस्मात्तदिहावभासमिति वनलोक कारस्य वैकुण्ठस्यानन्दात्मकत्वं प्रतिपाद्य स च तदधिष्ठाता ना यण: कृष्ण एवेत्युपसंहरति ब्रह्मण्यो देवकीपुत्त्र इति ॥ १०॥ श्रीशुक:॥ १०८ ॥

काष्ठाशब्देनापि तमेवोद्दिशति। ब्रूहि योगेश्वरे कृष्णे ब्रह्म धर्म्मवर्म्मणि। स्वां काष्ठामधुनोपेते धर्म्म: कं शरणं गत: ॥ १०९।

स्वां काष्ठां दिशम्। यत्र स्वयं नित्यं तिष्ठति तत्रैव प्रापञ्चि लोकसम्बन्धं त्यक्त्वा गते सतीत्यर्थ: ॥१॥१॥ श्रीशौनक:॥ १०९ ॥

तदेवमभिप्रेत्य द्वारकायास्तावन्नित्यश्रीकृष्णधामत्वमाह—रा भयादिगुणेभ्य उरुक्रमान्त: शेते समुद्र उपलक्षणमात्र आत्मा। नि कदिन्द्रियगणै: कृतविग्रहस्त्वं त्वत्सेवकैर्नृपपदं विधुतं तम न्यम् ॥ ११० ॥

अयमर्थ:। पूर्वं श्रीकृष्णदेवेन श्रीरुक्मिणीदेव्यै—राज बिभ्यत: सुभ्रु समुद्रं शरणं गतान्। बलवद्भि: कृतद्वेषान् प्रा यस्त्यक्तनृपासनान्। कस्मान्नो वव्रुष इति परिहसितम्। अत्रोत्तरमा सत्यमिति। अत्रात्मा त्वमित्येतयो: पदयोर्युगपच्छेत इति क्रि न्वयायोगात् विशेषणविशेष्यभाव: प्रतिहन्येत। वाक्यभेदे कष्टतापतेत्। ततश्चोपमानोपमेयभावेनैव ते उपतिष्ठत:। इयञ्च लु पमा। तथा च आत्मा साक्षी यथा गुणेभ्य: सत्वादिविकारे स्तदस्पर्शाल्लिङ्गाद्भयादिव समुद्रे तद्वदगाधे विषयाकारैरपरिच्छि उपलक्षनमात्रे ज्ञानमात्रस्वरूपत्वाकारेऽन्तर्हृदये नित्यं शेते अह तथा प्रकाशते हे उरुक्रम तथा त्वमपि तेभ्य: सम्प्रति तद्वि मयेभ्यो राजभ्यो भयादिव उपलक्षनमात्रे वैकुण्ठान्तरवत् चि विलासे अन्त:समुद्रे द्वारकाख्ये धाम्नि नित्यमेव शेषे स्वरूपान विलासैर्गूढं विहरसि। अर्थवशाद्विभक्तिविपरिणाम: प्रसिद्ध एव। उ हरिष्यते च नित्यस्थायित्वं—नित्यं सन्निहितस्तत्र भगवान् मधु

इति । अतो वस्तुतस्तस्य त्वदाश्रयकस्य जीवचैतन्यस्य यदि तेभ्यो भयं नास्ति किन्तूभयत्रापि स्वधामैक्यविलासित्वात्तत्रौदासिन्यमेव भयत्वेनोत्प्रेक्ष्यत इति भावः । एवं तस्य तव च समञ्जसता । तेषान्तु दौरात्म्यमेवेत्याह । तथाप्यात्मा कुत्सितानामिन्द्रियाणां गणैस्तदीय-नानावृत्तिरूपैः कृतो विग्रहो यत्र तथाविधस्तमपि कुत्सित इन्द्रिय-गणो येषां तथाभूतै राजभिः कृतविग्रहः । अत्र विग्रह उभयत्राप्या-वरणवाच्यम् । यद्येवम्भूतस्त्वं तर्हि का तव नृपासनपरित्यागे हानिः । तत्तु त्वत्सेवकैः प्राथमिकत्वज्जनोऽस्युखैरेव विधुतं त्यक्तम् । तच्चोक्तं तयैव—यद्वाञ्छया नृपशिखामणय इत्यादिना । यतोऽन्धं तम एव तत् प्राकृतसुखमयत्वात् । अतः श्रीद्वारकाया नित्यत्वमपि ध्वनितम् ॥१०॥६०॥ श्रीरुक्मिणी श्रीभगवन्तम् ॥ ११० ॥

अथ श्रीमथुरायाः । मथुरा भगवान् यत्र नित्यं सन्निहितो हरिः ॥१११॥

अर्थात्तत्रत्यानाम् ॥१०॥१॥ श्रीशुकः ॥१११॥

तत्तात गच्छ भद्रं ते यमुनायास्तटं शुचि ।
पुण्यं मधुवनं यत्र सान्निध्यं नित्यदा हरेः ॥११२॥

स्पष्टम् ॥४॥८॥ श्रीनारदो ध्रुवम् ॥११२॥

तस्य हरेः श्रीकृष्णत्वमेव व्यनक्ति ।

इत्युक्तस्तं परिक्रम्य प्रणम्य च नृपार्भकः ।
ययौ मधुवनं पुण्यं हरेश्चरणचर्च्चितम् ॥११३॥

प्रतिकल्पमाविर्भावात्तस्यैव नित्यसान्निध्यत्वं गम्यते । अतएव द्वादशाक्षरविद्यादैवतस्य श्रीध्रुवाराध्यस्य त्वन्यत एव तत्रागमनमभि-हितमिति ॥४॥८॥ श्रीमैत्रेयः ॥ ११३ ॥

अथ श्रीवृन्दावनस्य ।

पुण्या वत व्रजभुवो यदयं नृलिङ्गगूढः पुराणपुरुषो वनचित्र-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मास्य:। गा: पालयन् सहबल: क्वणयंश्च वेणुं विक्रीड़याञ्चति गिरि रमार्च्चिताङ्घ्रि: ॥११४॥

अत्र पूर्वादाहृतश्रुत्याद्यवष्टम्भेन तिष्ठन्ति पर्वता इति वदता सदैव विहरतीति मथुरास्त्रीणां श्रीभगवत्प्रसादजा यथावज्ज्ञानि:स्तुतिरियमिति व्याख्येयम् ॥१०॥४४॥ पुरस्त्रिय: परस्परम् ॥११

अथवा त्रिष्वप्येतदेवोदाहरणीयम्।

जयति जननिवासो देवकीजन्मवादो यदुवरपरिषत्स्वैर्दोर्भिरस्यन् धर्म्मम्। स्थिरचरवृजिनघ्न: सुस्मितश्रीमुखेन व्रजपुरवनितानां वर्धयन् कामदेवम् ॥ ११५ ॥

यदुवरा: परिषत् सभ्यरूपो यस्य स:। देवकीजन्मवादस्तज्जन्मलब्धख्यातिर्देवक्यां जन्मेति वादस्तत्त्वबुभुत्सुकथा यस्य स इति। श्रीकृष्णो जयति परमोत्कर्षेण सदैव विराजते। लोहितोष्णीषा ऋत्विज: प्रचरन्तीतिवत् यदुवरसभ्यविशिष्टतयैव जयाभिधानम्। अत्र यदुवरशब्दे श्रीव्रजेश्वरतद्भ्रातरोऽपि गृह्यन्ते तेषामपि यदुवंशोत्पन्नत्वेन प्रसिद्धत्वात्। तथा च भारततात्पर्य्ये श्रीमध्वाचार्य्यैरेवं ब्रह्मवाक्यं लिखितम्—तस्मै वर: समया सन्निसृष्ट: स चास नन्दाख्य उत भार्य्या। नाम्ना यशोदा स च शूरतातसुतस्य वैश्याप्रभवस्य इति। शूरतातसुतस्य शूरसपत्नीमातृजस्य वैश्यायां तृतीयवर्णायां जातस्य सकाशात् आस बभूव इत्यर्थ:। अतएव श्रीमदानकदुन्दुभिना तस्मिन् भ्रातरिति मुहु: सम्बोधनमश्लिष्टार्थं भवति। भ्रातर्नन्दमागतमिति श्रीमन्मुनीन्द्रवचनञ्च। तदेतदप्युपलक्षणं भ्रातृणाम्। यथा च यादवमध्यपातित्वेनैव तेषु निर्द्धारणं श्रीरामवचनं श्रीहरिवंशे—यादवेष्वपि सर्वेषु भवन्तो मम बान्धवा इति। सप्तम्या ह्यस्य जाताविव निर्द्धारणमुच्यते पुरुषेषु क्षत्रिय: शूर इतिवत्। विजातीयत्वे तु श्रीघ्नेभ्यो माथुरा ह्याढ्यतमा इतिवत् यादवेभ्योऽपि सर्वेभ्यो इत्येवोच्येतेति ज्ञेयम्। अत्र जयति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्तोऽर्थत्वं न संगच्छते सदैवोत्कर्षानन्त्यमिति तस्मिन्नाशीर्वादानव-
काशात्तदवकाशे वा आशीर्वादविषयस्य तदानीमाशीर्वादकृतानु-
वादविशेषविशिष्टतयैव स्थितेरवगमात् प्रतिपिपादयिषितं तादृशत्वे-
नैव तात्कालिकत्वमागच्छत्येव। यथा धार्म्मिकसभ्योऽयं राजा वर्द्धता-
मिति। तदेवं पतिर्गतिश्चान्धकवृष्णिसात्वतामित्यत्राप्यनुसन्धेयम्।
अनेन यदुवराणामपि तथैव जयो विवक्षितः। नन्वेवं तथाविहरण-
शीलश्चेत् पुनः कथमिव देवकीजन्मवादोऽभूत्तत्राह स्वैर्दोर्भिर्दोर्भ्यां
चतुर्भिश्चतुर्भुजैरधर्म्मं तद्बहुलमसुरराजवृन्दम् अस्यन् निहन्तुं तदर्थ-
मेव लोकेऽपि तथा प्रकटीभूत इत्यर्थः। किं वा किं कुर्वन् जयति
स्वैः कालत्रयगतैरपि भक्तैरेव दोर्भिस्तद्द्वारा अधर्म्मं जगद्गतपाप्मा-
नम् अस्यन्नाशयन्नेव। तदुक्तम्—मद्भक्तियुक्तो भुवनं पुनातीति।
पुनः किमर्थं देवकीजन्मवादस्तत्राह स्थिरचरवृजिनघ्नः निजाभि-
व्यक्त्या निखिलजीवानां संसारहन्ता तदर्थमेवेत्यर्थः। तदुक्तम्—
यत एतद्विमुच्यत इति। किं वा कथम्भूतो जयति यदुव्रजपुर-
वासिनां स्थावरजङ्गमानां निजचरणवियोगदुःखहन्ता सन्। नित्य-
विहारे प्रमाणमाह—जननिवासः। जनशब्दोऽत्र स्वजनवाचकः।
सालोक्येत्यादिपद्ये जना इतिवत्। स्वजनहृदयतत्तद्विहारत्वेन
सर्व्वदेवावभासमान इत्यर्थः। सर्व्वप्रमाणचयचूड़ामणिभूतो विद्व-
दनुभव एवात्र प्रमाणमिति भावः। स्वयन्तु किं कुर्व्वन् जयति
व्रजवनितानां मथुराद्वारकापुरवनितानाञ्च कामलक्षणो यो देवः
स्वयमेव तद्रूपस्तं वर्द्धयन् सदैवोद्दीपयन्। अत्र तदीयहृदयस्थकाम-
तदधिदेवयोरभेदविवक्षा तादृशतद्भावस्य तद्देव परमार्थताबोधनाय
श्रीकृष्णस्फूर्त्तिमयस्य तादृशभावस्याप्राकृतत्वात् परमानन्दपराकाष्ठा-
रूपत्वाच्च। श्रीकृष्णस्य कामरूपोपासना चागमे व्यक्तास्ति। वनिता
जनितात्यर्थानुरागायाञ्च योषितीति नामलिङ्गानुशासनम्। व्रजेति
श्रेष्ठेन पूर्व्वनिपातः। अतएव पूर्व्वं मेरुदेव्यां सुदेवीति संज्ञावत्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

देवकीशब्देन श्रीयशोदा च व्याख्येया। द्वे नाम्नी नन्दभार्याया
यशोदा देवकीति च। अतः सख्यमभूत्तस्या देवक्या शौरिजायया इति
पुराणान्तरवचनात्। तदेवं त्रिष्वपि नित्यविहारत्वं सिद्धम्॥१०॥
श्रीशुकः॥११५॥

अथ यदुक्तं श्रीवृन्दावनस्यैव प्रकाशविशेषे गोलोकत्वं तत्र प्रा
पञ्चिकलोकाप्रकटलीलावकाशत्वेनावभासमानप्रकाशो गोलोक इति
समर्थनीयम्। प्रकटलीलायां तस्मिंस्तच्छब्दप्रयोगादर्शनात् भेदा
श्रवणाच्च। प्रकटाप्रकटतया लीलाभेदस्त्वाग्रे दर्शयितव्यः। तत्र
वृन्दावन एव तस्य गोलोकाख्यप्रकाशस्य दर्शनेनाभिव्यनक्ति— नन्द
स्त्वतीन्द्रियं दृष्ट्वा लोकपालमहोदयम्। कृष्णे च सन्नतिं तेषां
ज्ञातिभ्यो विस्मितोऽब्रवीत्। तच्चौत्सुक्यधियो राजन् मत्वा गोपा
स्तमीश्वरम्। अपि नः स्वगतिं सूक्ष्मामुपाधास्यदधीश्वरः। इति
स्वानां स भगवान् विज्ञायाखिलदृक् स्वयम्। सङ्कल्पसिद्धये तेषां
कृपयैतदचिन्तयत्। जनो वै लोक एतस्मिन्नविद्याकामकर्मभिः।
उच्चावचासु गतिषु न वेद स्वां गतिं भ्रमन्। इति संचिन्त्य भगवान्
महाकारुणिको विभुः। दर्शयामास लोकं स्वं गोपानां तमसः परम्।
सत्यं ज्ञानमनन्तं यत् ब्रह्मज्योतिः सनातनम्। यद्धि पश्यन्ति
मुनयो गुणापाये समाहिताः। ते तु ब्रह्मह्रदं नीता मग्नाः कृष्णेन
चोद्धृताः। ददृशुर्ब्रह्मणो लोकं यत्राक्रूरोऽध्यागात् पुरा। नन्दा
दयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः। कृष्णञ्च तत्र छन्दोभिः स्तू
यमानं सुविस्मिताः॥११६॥

अतीन्द्रियमदृष्टपूर्वम्। लोकपालो वरुणः। स्वगतिं स्वधाम। सूक्ष्मां
दुर्ज्ञेयाम्। उपाधास्यत् नोऽस्मान् प्रति प्रापयिष्यतीति सङ्कल्पितवान्
इत्यर्थः। जन इति। जनोऽसौ व्रजवासी मम स्वजनः। एतस्मिन् प्राप
ञ्चिकलोके। अविद्यादिभिः कृता या उच्चावचा गतयो देवतिर्यगादय
तासु स्वां गतिं भ्रमन् ताभ्यो निर्विशेषतया जानन् तामेव स्वां गतिं

वेदेत्यर्थः । ततोऽयं भ्रमो यद्यपि तत्तल्लीलापोषायैव मदीयलीलाशक्त्या कल्पितस्तथापि तदिच्छानुसारेण क्षणकतिपयं तदीयां सर्वविलक्षणां स्वां गतिं दर्शयन् तमपनेष्यामीति भावः। वैलक्षण्यञ्चाग्रे व्यञ्जनीयम्। गोपानां स्वं लोकं श्रीगोलोकम्। यः खलु, चिन्तामणिप्रकरसद्मेत्यादिभिर्बहुवर्णितव्यक्तवैभवातिक्रान्तप्रपञ्चलोकमहोदयस्तम्। तमसः प्रकृतेः परं प्रपञ्चानभिव्यक्तत्वेन तदीयेनाप्यसङ्करम्। अतएव सच्चिदानन्दरूप एवासौ लोक इत्याह, सत्यमिति। सत्यादिरूपं यद् ब्रह्म यच्च गुणात्यये पश्यन्ति तदेव स्वरूपशक्तिवृत्तिविशेषप्रकाश्यत्वेन सत्यादिरूपाव्यभिचारिणं गोलोकं सन्तं दर्शयामासेति पूर्वेणान्वयः। यथान्यत्रापि वैकुण्ठे भगवत्सन्दर्भोदाहृतं पाद्मादिवचनं ब्रह्माभिन्नतावाचित्वेन दर्शितं तद्वत्। अथ श्रीवृन्दावने च तादृशदर्शनं कतमदेशस्थितानां तेषां जातमित्यपेक्षायामाह, ब्रह्मह्रदम् अक्रूरतीर्थं कृष्णेन नीताः पुनश्च तदाज्ञयैव मग्नाः पुनश्च तस्मात्तीर्थात् श्रीकृष्णेनैवोद्धृताः सन्तो नराकृतिपरब्रह्मणः श्रीकृष्णस्य लोकं गोलोकाख्यं ददृशुः। यत्र च ब्रह्मह्रदेऽध्यगात् अस्तौत् अधिगतवान् इति वा। सर्वत्रैव श्रीवृन्दावने यद्यपि तत्प्रकाशविशेषोऽसौ गोलोकः दर्शयितुं शक्यः स्यात्तथापि तत्तीर्थमाहात्म्यज्ञापनार्थमेव वा विनोदार्थमेव वा तस्मिन् मज्जनमिति ज्ञेयम्। अत्र स्वां गतिमिति तदीयतानिर्देशो गोपानां स्वं लोकमिति षष्ठीस्वशब्दयोर्निर्देशः कृष्णमिति साक्षात् तन्निर्देशश्च वैकुण्ठान्तरं व्यवच्छिद्य श्रीगोलोकमेव प्रतिपादयति। अतएव तेषां तद्दर्शनात् परमानन्दनिर्वृतत्वं सुविस्मितत्वमपि युक्तमुक्तम्। तस्यैव पूर्णत्वात्। तथापि पुत्रादिरूपेणैवोदयाच्च। तथा तत्र कृष्णं यथा ददृशुस्तथा तत्परिकराणामन्येषां दर्शनानुक्तेस्त एव तत्र परिकरा इत्यभिव्यज्यते। ततश्च लीलाद्वये कृष्णवत्तेषामेव प्रकाशभेदः। यदा च प्रकाशभेदो भवति तदा तत्तल्लीलारस-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पोषाय तेषु तत्तल्लीलाशक्तिरेवाभिमानभेदं परस्परमननुसन्धानं प्रायः सम्पादयतीति गम्यते। उदाहरिष्यते चाग्रे। अतएवो... वेद स्वां गतिं भ्रमन्निति। तथा च सतीदानीं श्रीव्रजवासिनां स्विज्जातया तादृशेच्छया तेभ्यस्तेषामिव तादृशं प्रकाशविशेषं दर्शितमिति गम्यते। न च प्रकाशान्तरमसम्भावनीयम्। पर... त्वेन तत्श्रीविग्रहपरिकरधामलीलादीनां युगपदेकत्राप्यनन्त वैभवप्रकाशशीलत्वात्। तदेवमुक्तोऽर्थः समञ्जस एव ॥ १०॥ श्रीशुकः ॥ ११६ ॥

एवं द्वारकादीनां तस्य नित्यधामत्वं सिद्धम्। अथ तत्र के दस्य परिकराः?—उच्यते। पूर्व्वोर्यादवादयो वने श्रीगोपादयश्च द्वारकादिनित्यधामत्वेन तेषां स्वतःसिद्धेः। तद्रूपत्वे परिकरान्तर मयुक्तत्वादश्रवणत्वाच्च। तत्परिकरत्वेनैवाराधनादिवाक्यानि तानि दर्शयितव्यानि च। अतएवोक्तं पाद्मे कार्त्तिकमा... श्रीकृष्णसत्यासंवादे—एते हि यादवाः सर्वे मद्गणा एव भा... सर्वदा मत्प्रिया देवि मत्तुल्यगुणशालिन इति। एवकाराच्च देवा... श्रीहरिवंशेऽप्यनिरुद्धान्वेषणे तादृशत्वमेवोक्तमक्रूरेण—देवानां ... र्थाय वयं याता मनुष्यतामिति। श्रीमथुरायान्त्ववतारावसरे व्यक्ता अपि निगूढ़तया केचित्तस्यामेव वर्त्तमानाः श्रूयन्ते। श्रीगोपालोत्तरतापन्याम्—यत्रासौ संस्थितः कृष्णस्त्रिभिः शक्त्या... हितः। रामानिरुद्धप्रद्युम्नै रुक्मिण्या सहितो विभुः॥ इति। श्री... वने तैः सदा विहारश्च। यथा पाद्मपातालखण्डे श्रीयमुनास्तुति... अहो अभाग्यं लोकस्य न पीतं यमुनाजलम्। गोवृन्दगोपिकासङ्गे... क्रीड़ति कंसहेति। स्कान्दे तु—वत्सैर्वत्सतरीभिश्च सदा क्री... माधवः। वृन्दावनान्तरगतः सरासो बालकैर्वृ त इति। न तु ... लीलागतेभ्य एते भिन्नाः, एते हि यादवाः सर्व इत्यनुसारात्। ... पाद्मनिर्वाणखण्डे च श्रीभगवद्वाक्यम्। नित्यां मे मथुरां विद्धि वृन्दावनं तथा। यमुनां गोपकन्याश्च तथा गोपालबालकान्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तारो नित्योऽयमत्र मा संशयं कृथा इति। अतस्तानेवोद्दिश्य श्रुतौ च तत्र ऋचु—तां वां वास्तून्युश्मसि गमध्ये यत्र गावो भूरिशृङ्गा अयासः अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरीति। व्याख्यातञ्च—तां तानि वां युवयोः कृष्णरामयोर्वास्तूनि लीलास्थानानि गमध्ये गन्तुं प्राप्तुम् उश्मसि कामयामहे। तानि किं विशिष्टानि यत्र येषु भूरिशृङ्गा महाशृङ्ग्यो गावो वसन्ति। यथोपनिषदि भूमवाक्ये धर्मिपरेण भूम-शब्देन महिष्ठमेवोच्यते न तु बहुतरमिति। यूथश्रेष्ठैव वरा भूरिशृङ्गा बहुशृङ्ग्यः बहुशुभलक्षणा इति वा। अयासः शुभाः। अत्र भूमौ तल्लोकवेदप्रसिद्धं श्रीगोलोकाख्यं उरुगायस्य स्वयं भगवतो वृष्णः सर्व-कामदुघचरणारविन्दस्य परमं प्रपञ्चातीतं पदं स्थानं भूरि बहुधा अव-भातीत्याह वेद इति। यजुःसु माध्यन्दिनीयास्तु या ते धाम-न्युश्मसीत्यादौ (याति धामन्युश्मसीत्यादौ इति वा पाठः) विष्णोः परमं पदमवभाति भूरीति पठन्ति। पाद्मोत्तरखण्डे तु यत्त्वियं श्रुतिः परमव्योमप्रस्ताव उदाहृता तत् परमव्योमगोलोकयोरेकता-पत्त्यपेक्षयेति मन्तव्यम्। गोशब्दस्य साक्षादिमत्येव प्रचुरप्रयोगेण झटित्यर्थप्रतीतेः। श्रीगोलोकस्य ब्रह्मसंहिताहरिवंशमोक्षधर्मादिषु प्रसिद्धत्वाच्च। अथर्वणि च श्रीगोपालतापन्याम्—जन्मजराभ्यां भिन्नः स्थाणुरयमच्छेद्योऽयं योऽसौ सौर्य्ये तिष्ठति योऽसौ गोषु तिष्ठति योऽसौ गोपान् पालयति योऽसौ गोपेषु तिष्ठति इत्यादि। तदेवमुभयेषामपि नित्यपार्षदत्वे सिद्धे, यत्तु शस्त्राघातक्षतविषपान-मूर्च्छातत्त्वबुभुत्सासंसारनिस्तारोपदेशास्पदत्वादिकं श्रूयते, तद्भग-वत इव नरलीलौपयिकतया प्रपञ्चितमिति मन्तव्यम्। यथा, तवेयं विषमा बुद्धिरित्यादिकं, साक्षात् श्रीरुक्मिणीं प्रति श्रीबलदेववाक्ये, यच्च श्रीमदुद्धवमुद्दिश्य, स कथं सेवया तस्य कालेन जरसं गत इत्युक्तं, तदपि चिरकालसेवातात्पर्य्यकमेव। तत्र प्रवयसोऽप्यासन् युवानोऽति-बलौजस इति विरोधात्। क्वचिच्च प्रकटलीलायाः प्रापञ्चिकलोक-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मिश्रत्वात् यथार्थमेव तदादिकम्। यथा शतधन्वबधादौ। अ-
रङ्गानां भगवत्साधारण्यन्तु यादवानुद्दिश्योक्तम्—मनुष्यगुणशालि
इति। गोपानुद्दिश्य च—गोपैः समानगुणशीलवयोविलासवेशैश्चे
पाद्मनिर्माणखण्डे च—गोपाला मुनयः सर्वे वैकुण्ठानन्दमूर्त्तय
यतो यो वैकुण्ठः श्रीभगवान् स इवानन्दमूर्त्तयस्ते ततस्तत्पा
भक्तत्वादेव मुनय इत्युच्यते। न तु मुन्यवतारत्वादिति ज्ञेयम्।
सुरेशा ऋषयो नवैत इत्यादिकं श्रीबलदेववाक्यञ्च भगवदाविर्भा
लक्षणगोपादीनां केयं वा कुत आयाता दैवी वा नार्य्युतासुरी
प्रासमन्यत्वमेव निषेधति न तु पूर्वेषाञ्च तद्विदधाति कल्पनागौ
दिति ज्ञेयम्। युक्तञ्चैषां तत्सादृश्यं, तस्यात्मतन्त्रस्य हरेरधी
परस्य मायाधिपतेः सहात्मनः। प्रायेण दूता इह वै मनोहराश्च
तद्रूपगुणस्वभावाः॥ इति श्रीयमवाक्याद्यनुगतत्वात्। दृष्टञ्च प्रथ
प्राविशत् पुरमित्यारभ्य, मधुभोजदशार्हार्हकुकुरान्धकवृष्णिभिः। आ
तुल्यबलैर्गुप्तामित्यादि। अतएव, गोपजातिप्रतिच्छन्ना देवा गोप
रूपिणम्। ईडिरे कृष्णं रामञ्च नटा इव नटं नृपेत्यत्र साम्यमेव
तम्। अर्थश्च—देवाः श्रीकृष्णावरणे मङ्गलपूजाध्यधिकेति न्यायेन
देवोपास्या अपि श्रीदामादयो गोपजात्या प्रतिच्छन्ना अन्यगोपसा
भावेन प्रायस्तादृशतया लक्षयितुमशक्याः। तत्र कृष्णं रामञ्च गोप
रूपिणमिति दृष्टान्तगर्भम्। यथा तादृशावपि तौ तद्रूपिणौ
तेऽपीत्यर्थः। अत्र देवा इत्यनेन महत्त्वसाम्यं गोपालरूपिणमि
प्रकृतिविशेषलीलासाम्यं नटा इव नटमित्यनेन गुणसाम्यञ्चाभिप्रेतमि
तत्र यादवादीनां तत्पार्षदत्वं योजयति—अहं यूयमसावार्य्य
द्वारकौकसः सर्वेऽप्येवं यदुश्रेष्ठ विमृग्याः सचराचरम्। यूयं
दानकदुन्दुभ्यादयो विमृग्याः परमार्थरूपत्वादन्वेषणीयाः। तत्
दपि द्वारकौको जङ्गमस्थावरसहितं यत्किञ्चित्तदन्वेष्यम्।
श्रीकृष्ण इति दृष्टान्तत्वेनोपन्यस्तम्। ततश्च नराकारब्रह्मत्वे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ष्विव तन्नित्यपरिकरे सर्वत्रैव परमपुरुषार्थत्वमिति भावः । तस्मात् यथा पूर्वं सत्त्वं रजस्तम इत्यादिना सत्त्वादिगुणानां तद्वृत्तीनाञ्च ब्रह्मणि त्रैकालिकस्पर्शासम्भवान्माययैव तदध्यासो भवता वर्णितस्तथा दृष्टिरत्र तु न कार्य्येति तात्पर्य्यम् । लौकिकाध्यात्मगोष्ठी त्वेवमेवेत्याह द्वयेन । यथा—आत्मा ह्येकः स्वयं ज्योतिर्नित्योऽन्यो निर्गुणो गुणैः । आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते ॥ ११७ ॥

अत्रानुगतार्थान्तरं च दृश्यते द्वारकायामिति प्रकरणे न लभ्यते हि यस्मादेक एवात्मा भगवत्तत्त्वमात्मसृष्टैः स्वरूपादेवोल्लसितैर्गुणैः स्वरूपशक्तिवृत्तिविशेषैः कर्त्तृभिस्तत्कृतेषु तस्मिन् स्वरूप एव प्रादुर्भावितेषु भूतेषु परमार्थसत्येषु द्वारकान्तर्वर्त्तिवस्तुषु बहुधा तत्तद्रूपेण ईयते प्रकाशते । सहस्रनामभाष्ये लोकनाथं महद्भूतमित्यत्र च भूतं परमार्थसत्यमिति व्याख्यातम् । तथा तया च प्रकाशः स्वरूपगुणापरित्यागेनैवेत्याह—स्वयं ज्योतिः स्वप्रकाश एव सन् नित्य एव सन् अन्यः प्रपञ्चेऽभिव्यक्तोऽपि तद्विलक्षण एव सन् निर्गुणः प्राकृतगुणरहित एव च सन्निति । अत्र चार्थान्तरं यथा ; तर्हि कथं भवत आत्यन्तिकं सममेवात्र सर्वमित्याशङ्क्य तथापि मय्यस्ति वैशिष्ट्यमित्याह—खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम् । आविस्तिरोऽल्पभूर्य्येका नानात्वं यात्यसावपि ॥ ११८ ॥

सत्कार्य्यवादाभ्युपगमात्तस्य कारणानन्यत्वाभ्युपगमाच्च यथा खादीनि भूतानि तत्कृतेषु तत्स्वरूपेणैव विकाशितेषु वाय्वादिघटान्तेषु यथाशयं वाय्वाद्याविर्भावाद्यनुरूपमेवाविर्भावादिकं यान्ति न तु तेष्वधिकम् । अत्र यावान् वायुर्गृह्यते तावान् एव तत्राकाशधर्म्मः शब्दोऽपि गृह्यते, यावज्ज्योतिस्तावानेव वायुधर्म्मः स्पर्शोऽपीत्यादिकं ज्ञेयम् । तथा स्वरूपेणैव विकसितेषु द्वारकावस्तुषु असौ भगवदाख्य आत्मापि । तस्मादहन्तु तत्सर्वमयः सर्वस्मात् पृथक् परिपूर्णश्चेत्यस्ति वैशिष्ट्यमिति भावः । अनेन दृष्टान्तेन मत्त एवोल्लसिता मद्धर्म्मा एव

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ते भवितुमर्हन्ति नत्वाकाशे धूसरत्वादिवन्मयि केवलमध्यस्ता इति व्यञ्जापितम्। अत्र यथा तथेति व्याख्यानमपिशब्देन द्योतते॥१०।८५॥ श्रीभगवान् श्रीवसुदेवम्॥ ११९॥

अतएवाह—तद्दर्शनस्पर्शनानुपथप्रजल्पशय्यासनाशनसयौनसपिण्ड-बन्धः। येषां गृहेऽनिरयवर्त्मनि वर्त्ततां वः स्वर्गापवर्गविरमः स्वय-मास विष्णुः॥ १२०॥

येषां वो युष्माकं वृष्णीनां गृहे विष्णुः श्रीकृष्णाख्यो भगवान् स्वयमात्मना स्वभावत एव आस निवासं चक्रे नत्वन्येन हेतुनेत्यर्थः। कथम्भूतेऽनिरयवर्त्मनि निरयः संसारस्तद्वर्त्म प्रपञ्चः ततोऽन्यस्मिन् प्रपञ्चातीत इत्यर्थः। कीदृशानां वस्तस्मिन्नेव वर्त्तमानानाम्। स्वयं कथम्भूतः स्वर्गापवर्गविरमः स्वर्गस्यापवर्गस्य च विरमो येन। यो निज-भक्तेभ्यस्तद्वहिर्मुखताकरं स्वर्गं न ददाति तद्भक्त्युदासीनं केवलं मोक्षञ्च न ददाति किन्तु तान् स्वचरणारविन्दतल एव रक्षतीत्यर्थः। येषां युष्माकन्तु गृहे स एवम्भूत एवासेत्याह तद्दर्शनेति। तस्य युष्मत्-कर्तृकं दर्शनञ्च अनुपथोऽनुगतिश्च प्रजल्पो गोष्ठी च तथा युष्मत्संव-लिता शय्या शयनञ्च आसनञ्च अशनं भोजनञ्च तैर्विशिष्टश्चासौ सयौ-नसपिण्डबन्धश्चेति शाकपार्थिवादिवन्मध्यलोपी कर्म्मधारयः। तत्र वृष्णिभिः सह यौनबन्धो विवाहसम्बन्धः सपिण्डबन्धो दैहिक-सम्बन्धस्ताभ्यां सह वर्त्तमानोऽसाविति बहुव्रीहिगर्भता॥१०।८२॥ राजानं श्रीमदुग्रसेनम्॥ १२०॥

किञ्च—संख्यानं यादवानां कः करिष्यति महात्मनाम्। यत्रा-युतानामयुतलक्षेणास्ते सदाहुकः॥ १२१॥

आहुकः उग्रसेनः। अत्रास्ते इति वर्त्तमानप्रयोगेन तत्रापि सदेति नित्यतावाचकाव्ययेन तेषां नित्यपार्षदत्वं सुव्यक्तम्॥१०।८०। श्रीशुकः॥ १२१॥

अतस्तेषां श्रीभगवत्पार्षदत्वे योग्यतामव्यभिचारित्वमपि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दृष्टान्तेन स्पष्टयति। तत्रोपविष्टः परमासने विभुर्बभौ स्वभासा ककुभोऽवभासयन्। वृतो नृसिंहै र्यदुभिर्यदूत्तमो यथोडुराजो दिवि तारकागणैः ॥ १२२ ॥

स्पष्टम्। एवमेव दुर्य्योधनं प्रति स्वयं विश्वरूपं दर्शयता श्रीभगवता तेषां यादवादीनां निजावरणरूपत्वं दर्शितमित्युद्यमपर्वणि प्रसिद्धिः ॥ १० ॥ ७० ॥ श्रीशुकः ॥ १२२ ॥

यत्त्वेषामैकादशस्कन्धान्ते तदन्यथाभावः श्रूयते, स तु श्रीमदर्ज्जुनपराजयविमोहपर्य्यन्तो मायिक एव। तथावचनञ्च ब्रह्मशापानिवर्त्त्यताख्यापनायैव गोब्राह्मणहितावतारिणा भगवता विहितमिति ज्ञेयम्। दृश्यते च वृहदग्निपुराणादौ रावणहृतायाः सीताया मायिकत्वं यथा तद्वत्। तथा हि तदानीमेवाह—त्वन्तु मद्धर्म्ममास्थाय ज्ञाननिष्ठ उपेक्षकः मन्मायारचितामेतां विज्ञायोपशमं व्रज ॥ १२३ ॥

त्वन्तु दारुको ज्ञाननिष्ठो मदीयलीलातत्त्वज्ञः मद्धर्म्मं मम स्वभक्तप्रतिपालयितृत्वरूपं स्वतुल्यपरिकरसङ्गित्वरूपञ्च स्वभावम् आस्थाय विश्रभ्य एताम् अधुना प्रकाशितां सर्व्वामेव मौषलादिलीलां मम इन्द्रजालवद्रचितां विज्ञाय उपेक्षको वहिर्दृष्ट्या जातं शोकमुपेक्षमाण उपशमं चित्तक्षोभात् निवृत्तिं व्रज प्राप्नुहि। तुशब्देनान्ये तावन्मुह्यन्तु तव तु तथा मोहो न युक्त एवेति ध्वनितम्। अत्र श्रीदारुकस्य स्वयं वैकुण्ठावतीर्णत्वेन सिद्धत्वादेतामित्यत्रातिसन्निहितार्थलाभाच्चान्यथा व्याख्यानमेव प्रथमप्रतीत्यविषय इति विवेक्तव्यम् ॥ ११ ॥ ३० ॥ श्रीभगवान् दारुकम् ॥ १२३ ॥

तथाच पद्यत्रयम्। राजन् परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्य। सृष्ट्वात्मनेदमनुविश्य विहृत्य चान्ते संहृत्य चात्ममहिमोपरतः स आस्ते ॥ १२४ ॥

परस्य श्रीकृष्णस्य ये तनुभृतः प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुमिति श्रीनारदोक्त्यनुसारेण तदीयान्तनुमेव धारयन्तस्तत्-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पार्षदा यादवादयस्तेषां जननाप्ययरूपा ईहाश्चेष्टाः केवलं परमे
मायया अनुकरणम् अवेहि यथा इन्द्रजालवित्ता नटः कश्चिज्जीवत
मारयित्वेव दग्ध्वेव पुनश्च तद्देहं जनयित्वेव दर्शयति तस्येव। विश्व
सर्गादिहेत्वचिन्त्यशक्तेस्तस्य तादृशशक्तित्वं न च चित्रमित्याह-
स्रष्टेति। एवं सति श्रीसङ्कर्षणादौ मुग्धानामन्यथाभानहेतूदाहरण
भासः सुतरामेव मायिकलीलावर्णने प्रवेशितो भवति। स्वार्थ
श्रीलक्ष्मणस्याप्यन्यादृशत्वं न संप्रतिपन्नम्। नारायणवर्मणि च शेषा
हिलक्षणशक्तित्वेन नित्यमेवोपासकपालकत्वेन तथैवानुमतमिति दर्शि
तम्। अतएव जरासन्धवाक्ये तव राम यदि श्रद्धेत्यत्र श्रीस्वामिभि
रपीत्थं वास्तवार्थो व्यञ्जितः। अच्छेद्यदेहोऽसाविति स्वयमेव मत
अपरितोषात् पक्षान्तरमाह—यद्वा मां जहीहीति। तदेवञ्चानेन
व्याख्यानेन लोकाभिरामामित्यादिपद्येषु योगिजनशक्तिविलक्षणभा
वव्यक्तिव्यञ्जकश्रीस्वामिचरणानामदग्ध्वेत्यादिपदच्छेदादिमयव्याख्या
सौष्ठवं कैमुत्यातिशयेन सुष्ठेव स्थापितम्। यत एव दृश्यते चाद्या
प्युपासकानामित्यादिकं च तदुक्तं सुसङ्गतं भवति। तत्तत्परिकरैः
सार्द्धं तेषु तत्साक्षात्कार इति। अप्राकृतदेहानां तेषां तन्न सम्भवती
त्यास्ताम्। श्रीकृष्णपाल्यत्वेनैव न सम्भवतीत्याह—मर्त्त्येन यो गुरुसुतं
यमलोकनीतं त्वाञ्चानयच्छरणदः परमास्त्रदग्धम्। जिग्येऽन्तकान्त
कमपीशमथावनीशः किं स्वावने स्वरनयन्मृगयुं सदेहम्॥ १२५॥

यः श्रीकृष्णः यमलोकं गतमपि गुरुसुतं गुरोर्जातेन पञ्चजन
भक्षितेन तेन मर्त्त्येन देहेनैवानयत्। न च ब्रह्मतेजसो बलवत्त्वं मन्त
व्यम्। त्वाञ्च ब्रह्मास्त्रदग्धं यस्तस्माद्ब्रह्मास्त्रादानयद्रक्षितवानित्यर्थः।
किमन्यद्वक्तव्यं यश्चान्तकानामन्तकमीशं श्रीरुद्रमपि वाणसंग्रामे जित
वान्। अहो यश्च तं जराख्यं मृगयुमपि स्ववैकुण्ठविशेषं सशरीरमेव
प्रापितवान्। स कथं स्वानां यदूनामवने ईशो न भवति। तस्मात्तेषा
न्यथादर्शनं न तात्त्विकलीलानुगतम्। सशरीरन्तु तेषां स्वलो

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

गमनमतीव युक्तमित्यर्थः । ननु गच्छन्तु ते सशरीरा एव स्वं धाम तत्रापि स्वयं भगवान् विराजत एवेति न तेषां तद्विरहदुःखमपि । श्रीभगवांस्तु तथासामर्थ्यश्चेत्तर्हि कथमन्यांस्तादृशानाविर्भाव्य तैः सह सर्वलोकानुग्रहार्थमपरमपि कियन्तं कालं मर्त्यलोकेऽपि प्रकटो नासीदित्यत्र सिद्धान्तयन् तेषां श्रीभगवतश्च सौहार्दभरेणापि परस्परसव्यभिचारित्वमाह—तथाप्यशेष-स्थिति-सम्भवाप्ययेष्वनन्यहेतु-र्यदशेषशक्तिधृक् । नैच्छत् प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्वस्थ-गतिं प्रदर्शयन् ॥ १२६ ॥

यद्यप्युक्तप्रकारेण अशेषस्थितिसम्भवाप्ययेषु अनन्यहेतुर्यत् यस्मात् तदूर्द्ध्वमप्यनन्ततादृशशक्तिधृक्, तथापि यादवानन्तर्धाप्य निजं वपु-रत्र शेषितं प्रणेतुं किञ्चित्कालं स्थापयितुं नैच्छत्, किन्तु स्वमेव लोकमनयत् । तत्र हेतुः । तान् विना मर्त्येन किं मम प्रयोजन-मिति स्वस्थानां तद्धामगतानां तेषां गतिमेव स्वस्याभिमतत्वेन प्रकृष्टां दर्शयन्निति ॥ ११ ॥ ३१ ॥ श्रीशुकः ॥ १२६ ॥

अतस्तेषां श्रीभगवद्वदन्तर्द्धानमेव नत्वन्यदस्तीति श्रीभगवदभि-प्रायकथनेनाप्याह—मिथो यदैषां भविता विवादो मध्वासवाताम्र-विलोचनानाम् । नैषां बधोपाय इयानतोऽन्यो मय्युद्यतेऽन्तर्दधते स्वयं स्म ॥ १२७ ॥

एषां यदूनां यदा मिथो विवादस्तदाप्येषां पृथिवीपरित्याजने बध-रूप उपायो न विद्यते किमुतान्येन विवादे स न स्यात् इति । तर्हि तेषां ममाभिलषिते पृथिवीपरित्याजने कतम उपायो भवेत् । तत्र पुनः परामृशति । अतो बधादन्य एव इयान् एतावानेव उपायो वर्त्तते । कोऽसौ, मयि उद्यते मदिच्छया एते स्वयमन्तर्दधत इति यः । स्मेति निश्चये । यद्वा बधस्योपायो न विद्यत इत्येव व्याख्याय अतो बधोपायादन्य इयान् बधोपायतुल्य उपायो विद्यते इति व्याख्येयम् । अन्यत् समानम् ॥ ३ ॥ ३ ॥ श्रीमदुद्धवो विदुरम् ॥ १२७ ॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतएवान्तर्हिते भगवति श्रीमदुद्धवस्य विदुरिति वर्त्तमानप्रयोग-
निर्देशवाक्येन तदानीमन्तर्हितस्यापि तद्वर्गस्य श्रीभगवतैव सह संवासो
व्यज्यते यथा—दुर्भगो वत लोकोऽयं यदवो नितरामपि।
संवसन्तो न विदुर्हरिं मीना इवोड़ुपम् ॥ १२८ ॥

अयं मम हृदये स्फुरन् द्वारकावासी लोकः। यं संवसन्तः स-
वसन्तोऽपि न विदुर्न जानन्ति। अहं तु संवासभाग्यहीनो न जाना-
मीति नाश्चर्य्यमिति भावः। अत्र तदानीं यदि संवासो नाभविष्यत्
नावेदिषुरित्येवावक्ष्यदिति ज्ञेयम् ॥

नन्वधुनापि न जानन्तीति कथं जानासीत्याशङ्क्य हेतुं प्राचीन-
निजानुभवमाह—इङ्गितज्ञाः पुरुप्रौढ़ा एकारामाश्च सात्वताः।
सात्वतामृषभं सर्वे भूतावासममंसत ॥ १२९ ॥

सात्वतां स्वेषामेव ऋषभं नित्यकुलपतित्वेन वर्त्तमानं स्व-
भगवन्तमपि भूतावासं तदंशरूपं भूतान्तर्यामिणमेवामंसतेति। स्व-
भूताधिवास इत्यन्तर्यामिश्रुतेः। उक्तञ्च वृष्णीनां परदैवतेति ॥ ३।२ ॥
श्रीमदुद्धवः श्रीविदुरम् ॥ १२८ ॥ १२९ ॥

यमेव संवासं पूर्वमपि प्रार्थयामास—नाहं तदङ्घ्रिकमलं क्षणार्द्ध-
मपि केशव। त्यक्तुं समुत्सहे नाथ स्वधाम नय मामपि ॥ १३० ॥

स्वधाम द्वारकाया एव प्रापञ्चिकाप्रकटप्रकाशविशेषमपीति। यथा
यादवानन्यान् नयसि तथा मामपि नयेत्यर्थः। अर्थान्तरे त्वपिशब्द-
वैयर्थ्यं स्यात् ॥ ११ ॥ ६ ॥ श्रीमानुद्धवः॥ १३० ॥

पाद्मोत्तरखण्डे च यादवानां तादृशत्वम्—यथा सौमित्रिभरतौ
यथा सङ्कर्षणादयः। तथा तेनैव जायन्ते निजलोकाद् यदृच्छया।
पुनस्तेनैव गच्छन्ति तत्पदं शाश्वतं परम्। न कर्म्मबन्धनं जन्म
वैष्णवानाञ्च विद्यत इति। अत्र निजलोकादिति तत्पदमिति च वा-
क्याद्वैकुण्ठं पाद्मोत्तरखण्डमतम्। मत्स्याद्यवतारानां पृथक्
पृथक् वैकुण्ठावस्थितेस्तत्र साक्षादुक्तत्वात्। तादृशानां भगवत्

भगवदिच्छयैव जन्मादिकारणं चोक्तं श्रीविदुरेण—अजस्य जन्मोत्पथ-नाशनाय कर्म्माण्यकर्त्तुर्ग्रहणाय पुंसाम् । नन्वन्यथा कोऽर्हति देह-योगं परो गुणानामुत कर्म्मतन्त्रमिति । को वान्योऽपीति टीका च । तदेवं तेषां श्रीकृष्णनित्यपरिकरत्वे सिद्धे साधिते श्रीवसुदेवादीनां प्रागजन्मनि साधकत्वादिकथनञ्च भगवत इव भगवदिच्छयैव लोक-संग्रहाद्यर्थमंशेनैवावतारात् क्वचिज्जीवान्तराविशात् सम्भवति । पुनश्च स्वयमवतरत्सु तेषु तदंशप्रवेशः कथारीत्यात्मैकत्वेन कथनमिति ज्ञेयम् । यथा प्रद्युम्नस्य व्याख्यातम् । एवं तृतीये वेदाहमित्यादि भगवद्वाक्ये उद्धवं प्रति वस्वंशत्वापेक्षयैव वसो इति सम्बोधनं तादृशांशपर्य्यवसा-नास्पदांशिरूपत्वेन चरमजन्मतोक्तिश्च ज्ञेया । अतएवाह—त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायम्भुवे सति । तदायं सुतपानाम प्रजापतिरक-ल्मषः ॥ १३१ ॥

त्वं श्रीदेवकीदेव्येव पृश्निरभूः न तु पृश्निस्त्वमभूदिति । एवं तदायमपीति ॥ १० ॥ ४ ॥ श्रीभगवान् ॥ १३१ ॥

एवमेवाह वसुदेवं हरेः स्थानं वदन्त्यानकदुन्दुभिमिति ॥ १३२ ॥

सत्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः । इत्यादौ प्रसिद्धं वसुदेवाख्यं हरेः स्थानमत्रानकदुन्दुभिं वदन्ति मुनय इति ॥ ९ ॥ २४ ॥ श्रीशुकः ॥ १३२ ॥

तथात्राप्येवं व्याख्येयं देवक्यां देवरूपिण्यामिति ॥ १३३ ॥

देवो वसुदेवस्तद्रूपिण्यां शुद्धसत्ववृत्तिरूपायामेवेति । अत-एव विष्णुपुराणे तां प्रति देवस्तुतौ—त्वं परा प्रकृतिः सूक्ष्मेत्यादि बहुतरम् ॥ १० ॥ २ ॥ श्रीशुकः ॥ १३३ ॥

अतएवाहमिव नित्यमेव मत्पितृरूपेणाप्रकटलीलायां वर्त्तमानौ युवाम् अधुना प्रकटलीलामनुगतौ पुनरप्रकटलीलाप्रवेशं यदृच्छयैवा-प्स्यथ इत्याह—युवां मां पुत्रभावेन ब्रह्मभावेन वासकृत् ।

चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं पराम् ॥ १३४ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तत्स्वभावेन नराकृतिपरब्रह्मतुल्या। परां प्रकटलीलातोऽन्यां सा
लीलाम् ॥

युवयोः प्रागंशेनाविर्भूतयोरपि सदैकनिष्ठासीदित्याह—युवां
मात्स्यविषयावनपत्यौ च दम्पती। न वव्राथेऽपवर्गं मे मोहितौ
मायया ॥ १३५ ॥

मम मायया मद्विषयस्नेहमय्या शक्त्येत्यर्थः। वैष्णवीं व्यतनोन्मा
पुत्रस्नेहमयीं विभुरिति व्रजराज्ञीं प्रति च दर्शनात्। तादृशस्नेह
जनिकया मम कृपयेति वा। माया दम्भे कृपायाञ्चेति। तत्प्रेम्
ह्यपवर्गस्य तिरस्कारः सर्वत्र श्रूयते यद्यपि, मोक्षवरणे हेतुरस्तीत्याह—
प्रजुष्टेति। विषयावेशाभावाद्वैराग्योत्पत्तेरितिभावः ॥ १० ॥
श्रीभगवान् पितरौ ॥ १३४ ॥ १३५ ॥

अथ श्रीगोपादीनामपि तन्नित्यपरिकरत्वं जयति जननि
इत्यादावेव व्यक्तम्। अतएवाह—तस्मान्मच्छरणं गोष्ठं मन्नाथं म
परिग्रहम्। गोपाये स्वात्मयोगेन सोऽयं मे व्रत आहितः ॥ १३
स्पष्टम् ॥ १० ॥ २६ ॥ श्रीभगवान् ॥ १३६ ॥

तथा—तत आरभ्य नन्दस्य व्रजः सर्वसमृद्धिमान् हरेर्निवासा
गुणै रमाक्रीड़मभूनृप ॥ १३७ ॥

हरेर्निवासभूतो य आत्मा तस्य ये गुणास्तैरेव सर्वसमृद्धिमा
नित्ययोगे मत्वर्थीयेन नित्यमेव सर्वसमृद्धियुक्तः, श्रीनन्दस्य व्रज
ततस्तं श्रीकृष्णप्रादुर्भावमारभ्य तु रमाक्रीड़ं, चिन्तामणिप्रकर
सद्मसुकल्पवृक्षवलयावृतेषु सुरभीरभिपालयन्तम्। लक्ष्मीसहस्रशत
संभ्रमसेव्यमानमित्यत्र प्रसिद्धा, रमाणां महालक्ष्मीणां श्रीव्रजदेवीना
मपि साक्षाद्विहारास्पदं बभूव। हरिनिवासात्मनि तत्र श्रीकृष्णो या
न्निगूढ़तया विहरति स्म तावत्ता अपि तथैव विहरन्ति स्म। व्यक्त
तया तु ता अपि व्यक्ततयेत्यर्थः ॥१०॥५॥ श्रीशुकः ॥ १३७ ॥

एतदेव प्रपञ्चयति षड्भिः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम्।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्॥ १३८॥

भाग्यमनिर्वचनीया कापि श्रीकृष्णस्य कृपा तस्य पुनरुक्त्यादरेण सर्वथैवापरिच्छेद्यत्वमुक्तम्। पूर्णपरमानन्दब्रह्मत्वेनैव सनातनत्वे सिद्धे यत् पुनस्तदुपादानं तन्मित्रपदस्यैव विशेषणत्वेन लभ्यम्। अथवा विधेयस्य विशेषप्रतिपत्त्यर्थमनूद्य विशिष्यति। यथा मनोरमं सुवर्णमिदं कुण्डलं जातमिति कुण्डलस्यैव मनोरमत्वं साध्यम्। तस्मादत्राप्यनूद्यस्य श्रीकृष्णाख्यस्य परब्रह्मणः परमानन्दपूर्णत्वलक्षणं विशेषणद्वयं विधेयाया मित्रताया एव तत्तद्भावं साधयतीति तदेकार्थप्रवृत्तं सनातनत्वं तस्यास्तद्भावं साधयेत्। किञ्चात्र मित्रमिति कालविशेषयोगनिर्देशाभावात् कालसामान्यमेव भजते। ततश्च तस्य मित्रतालक्षणस्य विधेयस्य कालत्रयावस्थायित्वमेव स्पष्टम्। कालान्तरासंजत्वन्तु कष्टम्। अत्र चोत्तरयोरर्थयोः श्रीकृष्णस्य सनातनत्वे शब्दलब्धे सति तदीयमैत्रीमतां परिकराणामपि सनातनत्वं नासम्भवमपि श्रीरुक्मिणीप्रभृतीनां तथा दर्शनात्। अहो अस्तु तावदेषां नित्यमेव श्रीकृष्णमैत्रीपरमानन्दमनुभवतां भाग्यं सम्प्रति अस्माकमपि तत् किमपि जातमित्याह—एषान्तु भाग्यमहिताच्युत तावदास्तामित्यादि॥ १३९॥

एका अखण्डिता नित्येति यावत्। सा भाग्यमहिता भाग्यमाहात्म्यमेषां तावदास्तां सम्प्रति शर्वादयो दशदिक्पालदेवा एव वयं भूरिभागाः। परमभक्तत्वात् तेषु मुख्यत्वाच्च शर्वादय इत्युक्तम्। भूरिभागत्वमेव दर्शयति। हृषीकचषकैश्चक्षुरादिलक्षणपानपात्रैः कृत्वा वयमप्येतत् साक्षादेव यथा स्यात्तथा ते तव अङ्घ्र्युदजमध्वमृतासवमसकृत् पुनः पुनरिहागत्य पिबाम इति। चरणसौन्दर्य्यादिकमेवातिमनोहरत्वात् मध्वादितया त्रिधापि रूपितं समाहारद्वन्द्वेन। एतदिति चास्यैव वा विशेषणम्। अत्र तुष्यतु न्यायेन, श्रीव्रजवासिनां

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्राकृतदेहित्वमतेऽपि, तेषां करणदेवताकर्तृकभोगो न युज्यते, तद्यु नित्यत्वादित्यत्र श्रीशङ्कराचार्य्येण च करणपक्षस्यैव हि देवता: भोक्तृपक्षस्येत्यात्मन एव भोक्तृत्वनिर्द्धारणात्। अत: पूर्वमपि, तदस्तु मे नाथ स भूरिभाग इत्यादिना यत् प्रार्थितं, तदेतदेवेत्याह—तद्भूरि भाग्यमित्यादि ॥ १४० ॥

अनेन श्रीगोकुलजन्मलाभादेव तव पादनिषेवालक्षणो यादृशो भूरिभाग: सदैव सेत्स्यतीति सूचितम्। तस्मात्तेषां भागधेयं किं वर्णनीयम्, अहो येषां भक्त्या भवानपि नित्यस्त्रणितामापन्नो येषु ... एवास्त इत्याह—एषां घोषनिवासिनामित्यादि ॥ १४१ ॥

सतां शुद्धचित्तानां धात्र्यादिजनानामिव वेशात्। तस्मादनादि कल्पपरम्परागतत्वादवतारत एवैवं प्राप्तत्वेन तैरेकैरेव भक्तिरुक्त सनातनं मित्रमित्येवं साधूक्तम्। ततश्च तद्भूरि भाग्यमित्यादिका साध्वेव प्रार्थितमिति भाव:। नन्वेषां मनुष्यान्तरवत् रागादि दृश्यते, कथं तर्हि स्वयं भगवतो नित्यपरिकरत्वं, तत्र कैमुत्येनाह— तावद्रागादय इत्यादि ॥ १४२ ॥

स्तेना: पुरुषसारहरा:। अन्येषां प्राकृतजनानामपि तावदेव रागादयश्चौरादयो भवन्ति, यावत्ते जनास्ते तव न भवन्ति सर्वतो भावेन त्वय्यात्मानं न समर्पयन्ति। समर्पिते चात्मनि तेषां रागादयो ऽपि त्वन्निष्ठा एवेति रागादीनां प्राकृतत्वाभावान्न चौरादित्वं प्रत्युत परमानन्दरूपत्वमेवेत्यर्थ:। तथैव प्रार्थितं श्रीप्रह्लादेन—या प्रीतिर विवेकानां विषयेष्वनपायिनी। त्वामनुस्मरत: सा मे हृदयान्मापसर्पतु इति। अतो यदि साधकानामेवं वार्त्ता तदा किं वक्तव्यं, नित्यमे तादृशप्रियत्वेन सतां श्रीगोकुलवासिनामेवमिति। इत्थमेवोक्तम्—श्री नन्दादयो गोपा: कृष्णरामकथां मुदा। कुर्वन्तो रममाणाश्च नाविन्दन् भववेदनामिति। भवन्त्यस्मिन्निति भव: प्रपञ्च:। यद्यपि प्रपञ्चगतजनाना मभिव्यक्तास्ते तथापि तत्सम्बन्धिनी या वेदना विषयसुखादिज्ञानं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नाविन्दन्नित्यर्थः । वेदना ज्ञानपीड़योरिति कोषज्ञाः । तर्हि कथं गोकुले प्रपञ्चवज्ज्ञानं लोकानां भवति तत्राह—प्रपञ्चं निष्प्रपञ्चोऽपि विड़म्बयसि भूतले । प्रपन्नजनतानन्दसन्दोहं प्रथितुं प्रभो ॥१४३॥

प्रपञ्चादतीतोऽपि त्वं भूतले स्थितं प्रपञ्चं विड़म्बयसि स्वयमनेन प्रस्तुतेन गोकुलरूपेणानुकरोषि । वस्तुतस्तु श्रीगोकुलरूपमिदं तव स्वरूपं प्रपञ्चवदेव भाति न तु प्रपञ्चरूपमेवेति तात्पर्य्यम् । तदृच्च भानं किमर्थं तत्राह—प्रपन्नेति । एतादृशलौकिकाकारलीलयैव हि प्रपन्न-जनवृन्दस्य परमानन्दो भवतीत्येतदर्थम् । तस्मात् साधूक्तमहो भाग्य-मित्यादि ॥ १० ॥ १४ ॥ ब्रह्मा श्रीभगवन्तम् ॥ १३८—१४३ ॥

अतएवाह—तासामविरतं कृष्णे कुर्वतीनां सुतेक्षणम् । न पुनः कल्पते राजन् संसारोऽज्ञानसम्भवः ॥ १४४ ॥

तासां श्रीगोपपुरस्त्रीणां संसारः संसारित्वं प्रापञ्चिकत्वं न पुनः कल्पते न तु घटते किन्त्वप्रापञ्चिकत्वमेव घटत इत्यर्थः । यतोऽसाव-ज्ञानसम्भवः । तासान्तु कथम्भूतानाम् अज्ञानतमःसूर्य्यस्य ज्ञानस्योपरि-विराजमानो यः प्रेमा तस्याप्युपरि वर्त्तमानं यत् सुतेक्षणं पुत्रभावो वात्सल्याभिधः प्रेमा तदेव तत्राप्यविरतं नित्यमनादित एव श्रीकृष्णे कुर्वतीनामिति ॥ १० ॥ ६ ॥ श्रीशुकः ॥ १४४ ॥

यस्मादेव श्रीगोपानां तदीयनित्यपरिकरत्वं तस्मादेतत् प्रकरणन्तु सिद्धदेहानां साधकचरीणां कासाञ्चिदपेक्षया । यद्वा एतदभिप्रायं, तच्च, अन्तर्गृहगता इत्यादिकं न चैवं विस्मयः कार्य्य इत्याद्य-न्तम् ॥ १४५ ॥

अत्र अन्तरिति स्फुटमेव । अशुभं श्रीकृष्णप्राप्तावन्तराय रूपं गुरुभयादिकम् । मङ्गलं श्रीकृष्णप्राप्तौ साधनं सख्यादिसाहाय्यचिन्त-नम् । न कर्म्मबन्धनं जन्म वैष्णवानाञ्च विद्यत इति ह्युक्तमेव । दृश्यते चान्यत्रापि तदसम्भवस्थले तत्शब्दप्रयोगः वत्स्यत्युरसि मे भूति र्भवत्पादहतांहस इत्यादौ । तत्र यथा श्रीभगवद्वाक्यया-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

द्यार्थ्यायार्थान्तरमनुसन्धेयं तद्वदिहापीति। परमात्मानमिति ब्र
स्तवान्तनिर्दिष्टसिद्धान्तरीत्या श्रीकृष्णस्य स्वभावत एव परमब्रह्म
त्वं दर्शितम्। जार इति या बुद्धिस्तयापि तन्मात्रेणापि सङ्गता
तु साचादेव जाररूपेण प्राप्येति तन्मात्रपुरस्कारेण भजनस्य प्राश
व्यञ्जितम्। जारशब्देन निर्देशात् लोकधर्म्ममर्य्यादातिक्रमं दर्शय
तथाविधभावस्यातिनिरर्गलत्वं दर्शितम्। बन्धनं श्रीकृष्णप्राप्ति
रोधिगुरुजनमध्यवासादिरूपम्। तत्र गुणमयं देहं जहुरित्यत्र
सन्देहः कृष्णं विदुरिति। हे मुने ताः श्रीकृष्णं परं केवलं क
निगूढ़वल्लवं विदुर्न तु ब्रह्मेति। तर्हि कथं तासां गुणप्रवाहस्योप
सम्भवति। यस्य ब्रह्मभावना स्यात्तच्च तस्य निर्गुणस्यैवोदयात्
प्राचीनमायिकगुणप्रवाहोपरमः। तासु तु कान्ततयैव भावयत्
प्राकृतगुणातीतगुणकस्यैव तस्योदयात् प्राकृतगुणाभावेऽपि तद्गुण
बन्धगुणत्वात् परमपुरुषार्थानुगतानां तेषां कथमुपरम इत्यर्थः। त
तासां गुणप्रवाहः कथमुपरमः पारमार्थिको न भवति, येन त्
मुक्तिं कथयसीति भावः। ब्रह्मतया वेदनाद्दे लक्षणं प्रतिपाद
गुणधियां, ब्रह्मनिष्ठाया अपि त्याजके तस्य परमसौन्दर्यादि
धीर्यतो यासाम्। तत्रोत्तरमुक्तमिति। पुरञ्जनेतिहासादिवद्दुरू
त्वात् स्वयमुक्तस्य व्याख्यानमिदम्। एवं हि दृष्टान्तबलेन लभ्यं
यथा चैद्यशब्देनात्र कारूषो गृहीतः, तौ च जयविजयौ, तयो
देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्। देहसम्बन्धसम्बन्धं
दाख्यातुमर्हसीति श्रीयुधिष्ठिरप्रश्नदृशा त्वप्राकृतविग्रहत्वे नानश्वरं
हयोरेव सतोः। भगवाननुगावाह यातं मा भैष्टमस्तु शम्। ब्रह्म
समर्थोऽपि हन्तुं नेच्छे मतन्तु मे इति भगवदुक्त्यनुसारेण।
जयविजयौ सनकादिशापव्याजेन केवलं भगवतो लीलार्थं संसृतौ
तीर्थ्येति पाद्मोत्तरखण्डगद्यानुसारेण च स्वभक्तचित्ताकर्षविनोद
युद्धादिक्रीड़ाभिमसितया तस्य दुर्घटघटनाकारिण्येच्छया एव वार

स्त्रीयस्य अणिमादिसिद्धिमयपरमज्योतिर्देहस्य गुणमयपार्थिवदेहान्तरप्रवेशः। अतएव सप्तमे कृष्णचक्रहतांहसाविलत्र टीका च—कृष्णचक्रेण हतमंहो ययोस्तौ। तयोः पापमेव हतं न तु तावित्येषा। तथा तदर्थमेव श्रीकृष्णेच्छयैवात्रापि तासामप्राकृतविग्रहाणामेव तदभिसारप्रतिरोधसमये, नासूयन् खलु कृष्णाय मोहितास्तस्य मायया। मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः॥ इतिवत्, तात्कालिककल्पितो यो गुणमयो देहस्तत्र प्रवेशः। इममेवापेक्ष्य दार्ष्टान्तिकेऽप्युक्तं, जहुर्गुणमयं देहमिति, विशेषणवैयर्थ्यान्न तु स्वमित्यर्थः। तत्र च यथा तयोः सह द्वेषाभासस्तस्याप्यनुस्मरणस्य (सद्वेषस्याप्यनुस्मरणस्य) प्रभावेन तादृशोपाधिपरित्यागात्ततोऽन्तर्धाय भगवत्प्राप्तिस्तथा सुतरामेव सप्रीतिस्तस्य प्रभावेन तत्प्राप्तिः। अत्र च भक्तचित्ताकर्षणमेवं सम्भवति, अहो तादृशोऽसौ श्रीकृष्णे मधुरिमा येन ताः स्वसाक्षात्काराय प्राणानपि त्याज्यन्ते स्मेति। नृणामिति सामान्यतो जीवानामेव निःश्रेयसाय व्यक्तौ सत्यां भक्तानान्तु सुतरामेवेत्यायातम्। अन्यथा तस्य व्यक्तिरेव न सम्भवेदित्याह। अव्ययस्येति। निर्गुणस्य प्राकृतगुणरहितस्य गुणात्मनः। तत्र ये चैश्वर्यादयो गुणास्ते आत्मानः स्वरूपाण्येव यस्य तस्य। तर्हि तादृशलीलया कथं नृणां निःश्रेयसं भवति। उच्यते। एतद्बोधनेन भवतीत्याह। काममिति। अत्र तन्मयताशब्देन तत्प्रचुरतोच्यते। तत्र कामस्नेहादिषु तदुपरक्तात्मतेति पर्य्यवसानं स्त्रीमयो जाल्म इतिवत्। क्रोधभयैक्येषु तु प्रायस्तत्प्रलीनतेति दुग्धमयं जलमितिवत्। एकस्यैव शब्दस्य विशेषणवशादर्थभेदश्च युज्यते। स्याच्चैकस्य शब्दवदिति न्यायेन। क्रोधभययोरत्र पठनसम्बन्धेषु कैमुत्यापादनायैव न तु तदुपदेशविवक्षया। न च श्रीगोपिकादीनां ये कामादयो भावास्तदनुसरणेनान्ये कृतार्था भवन्तीति चित्रमित्याह। न चेति। किं वक्तव्यमेकेषां विमुक्तिर्जगतोऽपि सम्भवतीत्याह। यत इति ॥ १० ॥ २९ ॥ श्रीशुकः ॥ १४५ ॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अथ पूर्ववदिहापि श्रीव्रजेश्वरादीनां प्राचीनजन्मादिकं ज्ञा-
यम्। तथाहि, त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैः। उप-
मानमाहात्म्यं हरिं सामन्यतात्मजम्॥ इत्येतत्, नेमं विरिञ्चो
भव इति वच्यमाणानुसारिमहामाहात्म्यं श्रुत्वा, विस्मिता-
श्रीराजोवाच—नन्दः किमकरोद् ब्रह्मन् श्रेय एवं महोदयम्। यं
वा महाभागा पपौ यस्यास्तनं हरिः॥ पितरौ नान्वविन्देतां
दारार्भकेहितम्। गायन्त्यद्यापि कवयो यल्लोकशमलापहम्॥
ययोः प्रसन्नोऽवतीर्णस्तौ पितरावपि। तदेवं प्रश्नमवधार्य श्री
उवाच—

द्रोणो वसूनां प्रवरो धरया सह भार्य्यया।

करिष्यमाण आदेशान् ब्रह्मणस्तमुवाच ह॥१४७॥

आदेशान् गोपालनादिलक्षणान्। किमुवाच तदाह—

जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ।

भक्तिः स्यात् परमा लोके ययाञ्जो दुर्गतिं तरेत्॥१४८

ततश्च, अस्त्वित्युक्तः स एवेह व्रजे द्रोणो महायशाः। नन्द
इति ख्यातो यशोदा सा धराभवत्। ततो भक्तिर्भगवति पुत्री
जनार्दने। दम्पत्योर्नितरामासीद्गोपगोपीषु भारत॥१४९॥

अन्येषां यः पुत्रो नासीत् तस्मिंस्तु तयोः पुत्रतां प्राप्त इति
प्रत्ययार्थः। भक्तिविशेषमात्रेणैवोदयविशेषनियमात्। तादृश्या
प्रेमविशेषेणैव श्रीकृष्णः पुत्रतयोदेति, न तु स्वदेहादाविर्भाव, हिर-
कशिपुसभास्तम्भे श्रीनृसिंहस्य ब्रह्मणि श्रीवराहस्य च दिव्या-
गात्। न च गर्भप्रवेशेन, परीक्षिद्रक्षणार्थं तत्प्रविष्टस्यापि
तरामात्मत्वाश्रवणात्। तादृशप्रेमा तु शुद्धः समुद्रिक्तश्च श्रीव्रजेश्वर-
रेव। अतएव गर्भप्रवेशादिकं विनापि तयोः पुत्रतया तस्य प्रसि-
यथा नन्दस्त्वात्मज उत्पन्न इत्यादौ। तथोपासना च। यथा सकल-
मङ्गलो नन्दगोपतनय इत्यादौ। न त्वेवं स्तम्भादेः। किञ्च श्रीमद्

दुन्दुभिप्रभृतिष्वाविर्भावोऽपि न प्राकृतवत्तदीयचरमधात्वादौ प्रवेशः। किं तर्हि, सच्चिदानन्दविग्रहस्य तस्य तन्मनस्यावेश एव। तदुक्तम्— ततो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी। दधार सर्वात्मक-मात्मभूतं काष्ठा यथानन्दकरं मनस्त इति। ततः श्रीनारदप्रह्लाद-ध्रुवादिषु दर्शनात् सर्वसम्मतत्वात् तादृशप्रेमविषयत्वेन साक्षात् श्रीभगवदाविर्भावाव्यवहितपूर्वप्रचुरकालं व्याप्य सन्ततस्तदावेशः श्रीव्रजेश्वरयोरप्यवश्यमेव कल्प्यते। ब्रह्मवरप्रार्थनयापि तदेव लभ्यत इति समान एव पन्थाः। वात्सल्यं त्वत्राधिकं, येन विना तस्य पुत्र-भावो न सम्भवतीत्यत्रैव पुत्रतां मन्यासह इति पुत्रीभूत इत्यस्य भावः। इदं प्रकटायामेव लीलायां समाहितम् अप्रकटायान्तु तयो-र्नित्यसिद्धत्व एव पुरतोऽवधारयिष्यमाणे लक्ष्मीविष्णोरनादित आदि-रससिद्धदम्पतित्ववत् श्रीव्रजेश्वरयोस्तस्य चानादितो वत्सलरससिद्ध-पितृपुत्रभावो विद्यत एव। अतः पुत्रभूत इति च क्वचित् पाठः। अतएव, न ह्यस्यास्ति प्रियः कश्चिदित्यादिप्रकरणे, युवयोरेव नैवाय-मात्मजो भगवान् हरिः। सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वरः॥ इत्येतत् श्रीव्रजेश्वरौ प्रति श्रीमदुद्धववाक्यं, तदौदासीन्यप्रकटने-नापातसान्त्वनमात्रतात्पर्य्यकवाह्यार्थमपि वास्तवमर्थं त्वेवं वहति; पूर्वोक्तप्रकारेणायं प्रियाप्रियादिमातापित्रादिरहितोऽपि भगवान् हरिः यः सोऽयं कृष्णरूपत्वेन विशेषाकारः सन् युवयोरेवात्मजो नैव सर्वेषां, स एवेश्वररूपत्वेन सामान्याकारस्तु सर्वेषामात्मजादिसर्वरूपः स्यात्। किन्तु परत्र मायामयत्वात् नास्माकमादरः, पूर्वत्रन्तु मुमुक्षु-मुक्तभक्तश्लाघ्यप्रेममयत्वादत्यादर इति भावः। तथोक्तं प्राक्, तयो-रित्थं भगवति कृष्णे नन्दयशोदयोः। वीक्ष्यानुरागं परमं नन्द-माहोद्धवो मुदा॥ युवां श्लाघ्यतमौ नूनं देहिनामिह मानद। नारा-यणेऽखिलगुरौ यत् कृता मतिरीदृशीति। तथा, स पिता सा च जननी यौ पुष्णीतां स्वपुत्रवत्। शिशून् बन्धुभिरुत्सृष्टानकल्पैः पोष-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

रक्षणे ॥ इति श्रीव्रजेश्वरं प्रति श्रीकृष्णरामाभ्यां सान्त्वनञ्च । श्रीरा
स्यैव परपुत्रमपेक्ष्येति ज्ञेयम् । यथोक्तं तत्रैव तेन—यात यूयं
व्रजं तात वयञ्च स्नेहदुःखितान् । ज्ञातीन् वो द्रष्टुमेष्यामो विधा
सुहृदां सुखम् इति । द्रष्टुमेष्यामः पश्यन्त एव स्थास्याम इत्यर्थः । तस्मा
दनयोरेव मुख्यं पुत्रत्वं श्रीकृष्णे विराजत इति सिद्धम् । प्रकृत
मनुसरामः । गोपगोपीनामपि तस्मिन् प्रेमासीदेव दम्पत्योस्तयोः
तास्वपि नितरामासीदिति । उपसंहरति—कृष्णो ब्रह्मण आदेशं
सत्यं कर्त्तुं व्रजे विभुः । सहरामो वसंश्चक्रे तेषां प्रीतिं
स्वलीलया ॥ १५० ॥

स्वेषु भक्तजनविशेषेषु या लीला तद्भक्तिविशेषवशलीलाविशे
स्तयैव तेषां सर्वेषामपि प्रीतिं चक्रे । द्वावपि तौ प्रति तेन वरदा
दिति भावः । यद्यप्येवं तथापि ब्रह्मण आदेशं सत्यं कर्त्तुं सा
दाशीरन्यथा न स्यादिति दर्शयितुमपीत्यर्थः । यद्वा लीलया तेषां
प्रीतिं कर्त्तुं व्रजे वसन् ब्रह्मण आदेशं सत्यं चक्रे तदनुषङ्गतः स्व
माहात्म्य सर्वत्राव्यभिचारिणं चकारेति ॥ १० ॥ ८ ॥ श्रीशुकः ॥ १५० ॥

तदेतत् कारणं तदाभासमेव मन्यमानस्तयोर्व्रजादिष्वपि
सौभाग्यातिशयस्य ख्यापनार्थमनन्तरमेव एकदा गृहदासीष्वित्या
ध्यायमारब्धवान् तत्रैव च साक्षाच्छ्रीभगवद्बन्धनरूपमहावशीकर
कारणवात्सल्यमहिमविदितं तेन ब्रह्मणापि शिवलक्ष्मीभ्यामपि दुर्ल
भगवत्प्रसादभरमाह—नेमं विरिञ्चो न भवो न श्रीरप्यङ्गसंश्रया
प्रसादं लेभिरे गोपी यत्तत् प्राप विमुक्तिदात् ॥ १५१ ॥

स आदिदेवो भजतां परो गुरुरित्युक्तः विरिञ्चिस्तावद्भक्तादिगुरुः
च भवस्तु वैष्णवानां यथा शम्भुरित्यादिदर्शनात् ततोऽप्युत्कर्षवान्
च श्रीस्तु तयोरपि भगवद्भक्तिशिक्षानिदर्शनप्रथमरूपत्वात् परमोत्कर्ष
वती । तदेवमुत्तरोत्तरविन्यासेन यथोत्तरमहिमानं सूचयित्वा श्रीः
न केवलं भक्तिमात्रेण तादृश्येव किं तर्हि परमसख्येन ततोऽप्यधि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वंचनोवजाहाम्नेत्याह । अङ्गसंश्रयेति । एवंभूतापि सा च प्रसादं लेभिर एव । कस्माद्विमुक्तिदात् । अस्त्वेवमङ्ग भजतां भगवान् मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम् । इत्युक्तरीत्या प्रायो विमुक्तिमेव ददाति न तु तथाभूतं प्रसादं तस्मात् श्रीभगवत एव किन्तु गोपी श्रीगोपेश्वरी यत् तदनिर्वचनीयं प्रसादशब्देनापि शङ्कनीयं तस्मात् प्राप तद्रूपप्रसादं विरिञ्चिश्च भवश्च श्रीश्च न लेभिरे न लेभिरे न लेभिरे इत्यर्थः । लेभिरे इत्यस्य प्रत्येकं नञ्त्रयेणान्वयः । नञ्त्रिरावृत्तिश्च निषेधस्यातिशयार्था । पूर्वोत्तराध्यायद्वये श्रीवादरायणेर्विवक्षितमिदम् । द्रोणधरयोस्तावत् साधारणदेवतात्वं चेत्तर्हि तयोः श्रीशिवादिदुर्लभचरणारविन्दस्फूर्त्तिलेशस्य श्रीकृष्णस्य तथा प्राप्तौ स्वतः सम्भावना नास्ति । न च तयोस्तादृशगाढ़भजनादिकं क्वचिद्वर्ण्यते । अन्यथा तदेवाहमाख्यास्यम् । न च ताभ्यां यदीदृशं फलं लब्धं तद् ब्रह्मणि पूर्वं प्रार्थितं, किन्तु दुर्गतितरणहेतुत्वेनोत्तमभक्तिमात्रम् । न च ब्रह्मापि श्रीकृष्णस्य महाभक्तैरपि दुर्लभपुत्रत्वादिकं विशिष्य ताभ्यां वरं दत्तवान् । न च नेमं विरिञ्च इत्यादिनोच्यमानतादृशप्रसादाप्तिराहित्यस्य ब्रह्मणो वरस्तादृशफलदाने भवति समर्थः । वक्ष्यते च तस्य तत्प्रसादाप्तिराहित्यातिशयः, तद्भूरि भाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेऽपि कतमाङ्घ्रिरजोभिषेकमित्यादिना । तस्मात्तयोस्तादृशमहोदये कारणं नास्ति किन्तु निष्कारणत्वेन तयोर्नित्यामेव तादृशीं स्थितिं विज्ञाय मया श्रीभगवल्लीलयैव द्रोणधरारूपेणांशेनैवावतीर्णयोरैक्यविवक्षया यथाकथञ्चित् कारणाभास एवोपन्यस्त इति । किञ्च श्रीमद्भागवतेऽस्मिन् श्रीभगवत्प्रेमैव सर्वपुरुषार्थशिरोमणित्वेनोद्घुष्यते । तस्य च परमाश्रयरूपं श्रीगोकुलमेव । तत्रापि श्रीव्रजेश्वरौ । ततस्तत्परमाश्रयनित्यत्वे सिद्ध एव तादृशग्रन्थप्रयत्नः सफलः स्यात् । यत एव श्रीब्रह्मादिभिस्तत्र यत्किञ्चिज्जन्म प्रार्थ्यत इति । तस्मात् स्वाभाविक्येव तयोस्तादृशी स्थितिरिति प्रतिपादयंस्तत्सम्बन्धे-

नैव भजतां सुखापो नान्येषामित्याह—नायं सुखापो भगवान् देहि-
गोपिकासुतः। ज्ञानिनाञ्चात्मभूतानां यथा भक्तिमतामिह ॥ १५२॥
सुखेनाप्यत इति सुखापः। अयं श्रीगोपिकासुतो भगवान् देहि-
देहाभिमानिनां तपआदिना न सुखापः न सुलभः किन्तु तैरपि
विरेणैव तेन शुद्धेऽन्तःकरणे कथञ्चिद्भक्तावलोकनलेशेन जातसद्बुद्धि-
भिस्तदेव तपआदिकं तस्मिन्नर्पयद्भिः कथञ्चिदेवासौ लभ्यते। तथा
आत्मभूतानां आविर्भूताद्वैतात्मवृत्तीनां निवृत्तदेहाभिमानानां ज्ञानि-
नामपि तादृशेन ज्ञानेन न सुखापः किन्तु पूर्वेणैव कारणेन जात-
तदासक्तिभिस्तेन ज्ञानेन यद्ब्रह्म स्फुरति तदेवायमिति चिन्तयद्भिरे-
कथञ्चिदेवासौ लभ्यते। ततश्च द्वयोरपि तयोः साधनयोर्हीनलाभः
लाभश्च न साक्षात् किन्तु केनचिदंशेनैवेति व्यञ्जितम्। ते प्राप्नुवन्ति
मामेव सर्वभूतहिते रताः। क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसामिति
श्रीभगवदुक्तेः। शान्ते परे ब्रह्मणि धर्मतो व्रतैः स्नातस्य मे न्यूनमला-
विच क्ष्वेति श्रीव्यासप्रश्नान्तरात्। भवतानुदितप्रायं यशो भगवतो-
ऽमलम्। येनैवासौ न तुष्येत मन्ये तद्दर्शनं खिलम्। इति श्रीनारद-
प्रतिवचनाच्च। सुखापस्तु केषामित्यपेक्षायां निदर्शनमाह—यथा
श्रीगोपिकासुते भक्तिमतां यथा सुखाप इति श्रीगोपिकायास्तु सुखाप
इत्येवं किं वक्तव्यम्। तस्याः सुत एवायं भगवानित्यतो गोपिकासुत
इति विशेषणं दत्तम्। सुखमापयतीति वा सुखापः। यतो गोपिका-
सुतस्तत्सुतत्वलीलायाः स्वसाधारणदृष्ट्यानादरात्। तथा ज्ञानिना-
मपि न सुखापः यतो गोपिकासुतः सर्वात्मैक्यवृत्त्युदयेन भगवत्-
स्वरूपानन्दवैचित्रीसारोपरिचरतल्लीलातत्त्वाननुभवात्। यथेह गोपिका-
सुते भक्तिमतामिति निदर्शनम्। सुखेनाप्यते ज्ञायते इति वा सुखापः
सुखबोधः। ततश्चायं देहाभिमानिभिरपि तत्तदलौकिककर्मलिङ्गा-
कात् तर्कात् ज्ञानिभिरप्यनावृतब्रह्मत्वावगमात् सुबोध एव सत्यं
तथापि यथेह श्रीगोपिकासुते भक्तिमद्भिः सुबोधस्तथा न।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

हि श्रीकृष्णभक्ताः, स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽप्यजितरुचिरलीलाकृष्टसार इत्यादिदर्शनात्तादृशलीलानुभवस्यैव परमपुरुषार्थत्वमवगच्छन्तीति भावः। अत्रार्थद्वयेऽपीहपदेन श्रीपरव्योमनाथादिभक्तिमन्तोऽपि व्यावृत्ताः। गोपिकासुत इति विशेषणेन च त्रैकालिकतद्भक्तानां तत्सम्बन्धिसुखापत्वं प्रति तत्सुतत्वायोगतदन्यत्वयोगौ व्यवच्छिद्येते। इत्यतो विद्वदनुभवयाथार्थ्येन नित्य एव तत्सम्बन्धो विवक्षितः। अतएवायं गोपिकासुत इति साक्षादङ्गुल्या निर्दिश्यते। तस्मादपि साधूक्तं नित्य एव श्रीव्रजेश्वरयोस्तत्सम्बन्धः इति। अत्र, एकदा गृहदासीष्वित्यादिकं, नेमं विरिञ्च इत्यादिपद्यद्वयात्मकमिदमुत्तरवाक्यं, द्रोणो वसूनां प्रवर इत्यादिकस्य पूर्ववाक्यस्य बाधकत्वेनैवोक्तं, पूर्वविरोधिधर्मान्तरप्रतिपादनादयुक्तत्वाच्च पूर्वस्यासद्वरपरत्वादिति चेन्न धर्मान्तरेण वाक्यशेषादितिवत्। तत्र च यथैवासच्छब्दस्य गत्यन्तरं चिन्त्यते तथात्रापि। तच्च पूर्वमेव दर्शितम् ॥ १० ॥ ८ ॥ श्रीशुकः ॥ १५१ ॥

तदेवं श्रुतिपुराणादिनिगदोक्त्यनुसारेण श्रीकृष्णस्य नित्याभिव्यक्तित्वं द्वारकादिषु नित्यविहारित्वं नित्ययादवादिपरिकरत्वञ्च दर्शितम्। इत्थमेव च कृष्णस्तु भगवान् स्वयमिति सुसिद्धम्। अथाशङ्क्यते। यदि नित्यमेव तथाविधः श्रीकृष्णाख्यः स्वयं भगवान् तत्र तत्र एते निजपरिकरैः सार्द्धं विहरति तर्हि कथं ब्रह्मादिप्रार्थनया श्रीनारायण एवावततारेति श्रूयते। तस्य यदि श्रीकृष्णे प्रवेशः तर्हि च कथं नित्यमेव द्वारकादिषु विराजमानं स्वयं भगवन्तं परित्यज्य ते तस्मै निवेदयितुं गताः। कथं वा जन्मादिलीलया क्रमेण मथुरां गोकुलं पुनर्मथुरां द्वारकाञ्च त्यक्त्वा वैकुण्ठमारूढ़वानिति। तत्रेदमुच्यते। यो द्वारकादौ नित्यं विहरति श्रीकृष्णाख्यः स्वयं भगवान् परात्परो ब्रह्मादिष्वप्रकट एव प्रायशः। यस्तु क्षीरोदादिलीलाधामा नारायणादिनामा पुरुषः स एव विष्णुरूपः साक्षाद्वा निजांशेन वा तेषु

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रकटः सन् ब्रह्मादिपालनकर्त्तेत्युक्तमेव। तत्र ब्रह्माण्डाधिकारि ब्रह्मादयोऽपि ब्रह्माण्डकार्य्यं तस्मा एव निवेदयितुमर्हन्ति। ततस्तदा तस्मा एव पृथिवीभारावताराय निवेदितवन्तः। अनन्तरं सोऽ पुरुषस्तान् प्रति केशदर्शनेन, स यावदुर्व्या भरमीश्वरेश्वरः इत्यादि वाक्येन च स्वयं भगवत एवावतारसमयोऽयमिति सूचयित्वा स्वयम वतितीर्षां चकार। सा चावतितीर्षा पूर्वयुक्त्या प्रकटीभवति स्व भगवति प्रवेशायैव। तदेवं वैकुण्ठाद्यारोहणमपि तदंशेनैव। स्वयं तत्र तत्रैव पुनर्निगूढं लीलायते। अत्रोदाहृतं तत्तद्भागवतादिवा वाराहादिवाक्यञ्चानुसन्धेयम्। उदाहरिष्यते च, नित्यं सन्निहि स्तत्र भगवान् मधुसूदन इत्यादिकम्। एष चाभिसन्धिर्न सर्वैः बुध्यतेति। यथा सर्वदृष्टमेव मुनिभिस्तादृग् वर्ण्यते। यथा सु तीरस्थदृष्ट्यैव अङ्गो वा एष प्रातरुदेत्यपः सायं प्रविशतीति श्रु प्रवर्त्तते न तु वस्तुत इति प्राहुः। यदि तत्र सुमेरुपरिक्रमणादि वाक्येनान्यथा गतिः क्रियते, तदात्रापि स्वयं भगवत्तानित्यविहारादि प्रतिपादकवाक्येन कथं नाम न क्रियताम्। तथा मथुरादिपरित्याग युक्तिरवतारे प्रापञ्चिकजनप्रकटलीलापेक्षयैव। तदप्रकटा तु लीला नित्यमेव विद्यत एव। तस्मान्नित्यत्वेन जन्मादिमयत्वेन च लीलाप्रति पादकानां वाक्यानां समन्वयस्वारस्यादिदं लभ्यते। यथा, य ए श्रीकृष्णस्तत्र तत्र नित्यमप्रकटो विहरति स एव स्वयं जन्मादिलीलया प्रकटो भवति। तत्र नारायणादयोऽपि प्रविशन्तीति सर्वं शास्त्र तदेवं तत्र श्रीकृष्णलीला द्विविधा, अप्रकटरूपा प्रकटरूपा च। प्रा ञ्चिकलोकाप्रकटत्वात् तत्प्रकटत्वाच्च। तत्राप्रकटा, यत्रासौ संस्थि कृष्णस्त्रिभिः शक्त्या समाहितः। रामानिरुद्धप्रद्युम्नै रुक्मिण्या सहितो विभुरिति मथुरातत्त्वप्रतिपादकश्रीगोपालतापन्यादौ, दिव्यामं प्रकरसञ्चस्तकल्पवृक्षेत्यादिवृन्दावनतत्त्वप्रतिपादकब्रह्मसंहितादौ प्रकटलीलातः किञ्चिद् विलक्षणत्वेन दृष्टा, प्रापञ्चिकलोकैः सुदृश्य

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्वाभिन्ना, कालवदादिमध्यावसानपरिच्छेदरहितस्वप्रवाहा, यादवेन्द्रत्व-व्रजयुवराजत्वाद्युचिताहरहर्महासभोपवेशगोचारणविनोदादिलक्षणा। प्रकटरूपा तु श्रीविग्रहवत् कालादिभिरपरिच्छेद्यैव सती भगवदिच्छात्मकस्वरूपशक्त्यैव लब्धारम्भसमापना प्रापञ्चिकाप्रापञ्चिकलोकवस्तुसंवलिता तदीयजन्मादिलक्षणा। तत्राप्रकटा द्विविधा। मन्त्रोपासनामयी स्वारसिकी च। प्रथमा यथा, तत्तदेकतरस्थानादिनियतस्थितिका तत्तन्मन्त्रध्यानमयी। यथा, वृहद्ध्यानरत्नाभिषेकादिप्रस्तावः क्रमदीपिकायाम्। यथा वा, अथ ध्यानं प्रवक्ष्यामि सर्वपापप्रणाशनम्। पीताम्बरधरं कृष्णं पुण्डरीकनिभेक्षणमित्यादि श्रीगौतमीयतन्त्रे। यथा वा, वेणुं क्वणन्तमरविन्ददलायताक्षं वर्हावतंसमसिताम्बुदसुन्दराङ्गम्। कन्दर्पकोटिकमनीयविशेषशोभं गोविन्दमादिपुरुषं तमहं भजामि। आलोलचन्द्रकलसद्वनमाल्यवंशीरत्नाङ्गदं प्रणयकेलिकलाविलासम्। श्यामं त्रिभङ्गललितं नियतप्रकाशं गोविन्दमादिपुरुषं तमहं भजामीति ब्रह्मसंहितायाम्। होमस्तु पूर्ववत् कार्य्यो गोविन्दप्रीतये तत इत्याद्यनन्तरं गोविन्दं मनसा ध्यायेद्गवां मध्ये स्थितं शुभम्। वर्हापीड़कसंयुक्तं वेणुवादनतत्परम्। गोपीजनैः परिवृतं वन्यपुष्पावतंसकमिति बौधायनकर्म्मविपाकप्रायश्चित्तस्मृतौ। तदुहोवाच हैरण्यो गोपवेशमभ्राभं तरुणं कल्पद्रुमाश्रितम्। तदिह श्लोका भवन्ति। सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम्। द्विभुजं मौनमुद्राढ्यं वनमालिनमीश्वरम्। गोपगोपीगवावीतं सुरद्रुमतलाश्रयम्। दिव्यालङ्करणोपेतं रत्नमण्डपमध्यगम्। कालिन्दीजलकल्लोलसङ्गिमारुतसेवितम्। चिन्तयंश्चेतसा विष्णुं मुक्तो भवति संसृतेरिति श्रीगोपालतापन्याम्। गोविन्दं गोकुलानन्दं सच्चिदानन्दविग्रहमित्यादि च। या तु तत्तत्कामनात्मकप्रयोगमयी पूतनावधादिरूपा, यद् यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहायेत्युक्तानुसारेणाद्यापि साधकहृदि कदाचित् साम्प्रतीव



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्फुरति, सा खलु मन्त्रोपासनामयीत्वेऽपि स्वारसिक्यामेव पर्यवस् अतीतत्वेन सर्वत्र निर्दिष्टत्वात्। अथ स्वारसिकी च यथोदाहृतं वत्सैर्वत्सतरीभिश्च सदा क्रीड़ति माधवः। वृन्दावनान्तरगतः स बालकैर्वृत इत्यादि। अत्र चकारात् श्रीगोपेन्द्रादयो गृह्यन्ते। शब्देन रोहिण्यपि। तथा तेनैव क्रीड़तिनाऽसौ व्रजागमनशयन लीलापि। क्रीड़ाशब्दस्य विहारार्थत्वाद्विहारस्य नानास्थानानुग रूपत्वादेकस्थाननिष्ठाया मन्त्रोपासनमय्या भिद्यते। यथावसरवि स्वेच्छामयी स्वारसिकी। एवं ब्रह्मसंहितायाम्—चिन्तामणि सद्मसुकल्पवृक्षलक्षावृतेषु सुरभीरभिपालयन्तम्। लक्ष्मीसहस्र संभ्रमसेव्यमानं गोविन्दमादिपुरुषं तमहं भजामि। इति। कथा गानं नाट्यं गमनमपि वंशीत्यत्रानुसन्धेयम्। तत्र लीलाप्रवाहरूपतया स्वारसिकी गङ्गेव। एकैकलीलात्मतया मन्त्रो सनामयी तु लब्धतत्सम्भवकुदश्रेणिरिवाज्ञेया। किञ्च मन्त्रोप मय्यामपि व्रजराजादिसम्बन्धः श्रूयते, किमुत स्वारसिक्यामिति कुत्रापि तद्रहितता कल्पनीया। तदेतत् सर्वं मूलप्रमाणेऽपि तत्र प्रकटरूपा विस्पष्टैव। अथाप्रकटायां मन्त्रोपासनामयी मां केशवो गदया प्रातरव्याद् गोविन्द आसङ्गवमात्तवेणुरिति॥

आत्तवेणुरिति विशेषणेन गोविन्दः श्रीवृन्दावनदेव एव। तद् पाठात् केशवोऽपि श्रीमथुरानाथ एव। तौ हि श्रीवृन्दावनमथुरा महायोगपीठयोस्तत्राम्नैव सहितौ प्रसिद्धौ। तौ च तत्र तत्र प्रापञ्चि दृष्टयां श्रीमत्प्रतिमाकारेणाभातः स्वजनदृष्टयां साक्षाद्रूपेणैव तत्रोत्तररूपं ब्रह्मसंहितागोविन्दस्तवादौ प्रसिद्धम्। अतएव साक्षाद्रूपवृन्दप्रकरण एव एतौ पठितौ। ततश्च नारायणवर्म मन्त्रोपास्यदेवतात्वेन श्रीगोपालतापन्यादिप्रसिद्धस्तन्मन्त्रा पास्यदेवतात्वेन च मन्त्रोपासनामय्यामिदमुदाहृतम्॥ ६॥ ८॥

रूप वृन्दम्॥ १५३॥

वक्ष्यमाणभगवदभिप्रायानुसारेणास्पष्टार्थत्वेन च वस्तुतः स्वारसिकीमाह—माखिद्यतं महाभागौ द्रक्ष्यथः कृष्णमन्तिके । अन्तर्हृदि स भूतानामास्ते ज्योतिरिवैधसि ॥ १५४ ॥

हे महाभागौ श्रीव्रजेश्वरौ, माखिद्यतं यतः कृष्णं द्रक्ष्यथः । कथं यतः सोऽन्तिक एवास्ते । तस्यान्तिकस्थितेरव्यभिचारे दृष्टान्तः, भूतानामन्तर्हृदि परमात्मलक्षणं ज्योतिरिव एधसि चाग्निलक्षणं ज्योतिरिवेति । अत्र निरन्तरतत्स्फूर्त्तिरेव भवतां प्रमाणमिति भावः । अर्थान्तरे तूत्तरार्द्धस्य हेतुत्वास्पष्टत्वात् परमात्मरूपेणान्तर्हृदिस्थितस्यापि दर्शनानियमात् ॥ १० ॥ ४६ ॥ उद्धवः श्रीव्रजेश्वरौ ॥

एवं श्रीभगवानुवाच । भवतीनां वियोगो मे न हि सर्वात्मना क्वचित् ॥ १५५ ॥

मे मया सह भवतीनां योऽयं वियोगः स सर्वात्मना सर्वेणापि प्रकाशेन न विद्यते । किन्त्वेकेन प्रकटलीलायां विराजमानेन प्रकाशेन वियोगः, अप्रकटलीलायान्त्वन्येन संयोग एवेत्यर्थः । अत्रैतदुक्तं भवति । न चान्तर्न वहिर्यस्येत्यादि दामोदरलीलाप्रघट्टकदृष्ट्या स्वञ्चणलीलादौ व्रजेश्वर्य्यादीनां तथानुभूत्या च श्रीविग्रहस्य मध्यमत्व एव विभुत्वं दृश्यते । तच्च परस्परविरोधिधर्म्मद्वयमेकत्राचिन्त्यशक्तिमति तस्मिन्नासम्भवं, श्रुतेस्तु शब्दमूलत्वादित्येतन्न्यायेन, इत्येवं भगवत्सन्दर्भे प्रघट्टकेन विवृतमस्ति । तदेवं विभुत्वे सति युगपदनेकस्थानाद्यधिष्ठानार्थं रूपान्तरसृष्टिः पिष्टपेषिता । किन्तु युगपन्मध्यमत्वविभुत्वप्रकाशिकया तयैवाचिन्त्यशक्त्या तदिच्छानुसारेणैक एव श्रीविग्रहोऽनेकधा प्रकाशते विम्ब इव स्वच्छोपाधिभिः । किन्तु तत्रोपाधिमात्रजीवनत्वेन साक्षात् स्पर्शाद्यभावेन वैपरीत्योदयनियमेन विम्बस्य परिच्छिन्नत्वेन च प्रतिविम्बत्वम् । अत्र तु स्वाभाविकशक्तिस्फुरितत्वेन साक्षात् स्पर्शादिभावेन यथेच्छमुदयेन श्रीविग्रहस्य विभुत्वेन च विम्बत्वमेवेति विशेषः । एवमेव सर्वेषामपि प्रकाशानां पूर्णत्व-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

माह श्रुतिः—पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते। पूर्ण
पूर्णमादाय पूर्णमेवावशिष्यते। इति। तत्र च तेषां प्रकाशानां
वाचिन्त्यशक्त्या पृथक् पृथगेव क्रियादीनि भवन्ति। अतएव
पदाविर्भूतानां प्रकाशभेदावलम्बिनीनां निमेषोन्मेषणादिक्रिया
मविरोधः। अतएव किशोरेऽपि परस्परविरुद्धक्रियागणाश्रयस्यापि
क्रियाकर्तृत्वं यथार्थमेव। तदयथार्थत्वेन बहुशः श्रीभागवतादिवर्णि
विदुषां तु तदुद्भवसुखं नोपपद्यत इति तदन्यथानुपपत्तिश्चात्र
णम्। इत्थमेवाभिप्रेत्य श्रीनारदेन—चित्रं बतैतदेकेन वपुषा
पत् पृथगित्यादौ वपुष एकत्वेऽपि पृथक् प्रकाशत्वं तेषु पृथक्
क्रियाधिष्ठानादित्वं तादृशशक्तिस्त्वन्यत्र मुनिजनादौ न सम्भवे
स्वयं चित्रत्वञ्चोक्तम्। एष एव प्रकाशः क्वचिदात्मशब्देनोच्यते
द्रूपादिशब्देन च। यथा तत्रैव न हि सर्वात्मना क्वचिदिति,
कृत्वा तावन्तमात्मानमिति, तावद्रूपधरोऽव्यय इति, कृष्णेनेच्छा
णीति च। तत्र नानाक्रियाद्यधिष्ठानत्वादेव लीलारसपोषाय तेषु
ष्वभिमानभेदं परस्परमननुसन्धानञ्च प्रायः स्वेच्छयोरीकरो
गम्यते। एवं तच्छक्तिमयत्वात्तत्परिकरेष्वपि ज्ञेयम्। तत्र
प्रकाशभेदो यथा, कन्याषोड़शसहस्रविवाहे श्रीदेवक्यादिषु।
हि टीकाकृद्भिः—अनेन देवक्यादिबन्धुजनसमागमोऽपि प्रति
यौगपद्येन सूचित इति। तेषु श्रीकृष्णे च प्रकाशभेदादभि
क्रियाभेदो यथा श्रीनारददृष्टयोगमायावैभवे श्लोकत्र—दीव्यन्
स्तत्रापि प्रियया चोद्धवेन च। पूजितः परया भक्त्या प्रत्युत्थाना
दिभिरिति। तत्रान्यत्र—मन्त्रयन्तञ्च कस्मिंश्चिन्मन्त्रिभिश्चोद्धवादि
इति भावभेदादभिमानभेदो लक्ष्यते, अयमेतदवस्थोऽहमत्रास्मि
एवं षोड़शसहस्रविवाहे कुत्रचित् श्रीकृष्णसमक्षं माङ्गल्यं
कुर्वत्या देवक्यास्तद्दर्शनसुखं भवति, तत्परोक्षन्तु तद्दर्शनोत्कण्ठा
तथा योगमायावैभवदर्शन एव क्वचिदुद्धवेन संयोगः क्वचिद्वियोग

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विचित्रता। तदेवं तत्र प्रकाशभेदे सति तत्तदभिमानक्रियाभेदे च स्थिते तदानीं वृन्दावनप्रकाशविशेषे स्थितेन श्रीकृष्णस्याप्रकटप्रकाशेन तासामप्रकटप्रकाशात्मिकानां संयोगस्तत्प्रकाशविशेषे प्राक् स्थितेन सम्प्रति मथुरां गतेन तत्प्रकटप्रकाशेन प्रकटप्रकाशात्मिकानां तासां वियोग इति व्यवतिष्ठते। एतेन तदानीं प्रकाशद्वयेनैव स्वीकृतेन स्थानत्रयेऽपि सपरिकरश्रीकृष्णनित्यावस्थायितावाक्यमनुपहतं स्यात्। प्रकटलीलायामन्यत्र सपरिकरस्य तस्य कदाचिद्गमनेऽपि प्रकाशान्तरेणावस्थानादिति। तस्मात् साधूक्तं भवतीनां वियोगो मे इत्यादि। सेयञ्च नित्यसंयोगिता परमरहस्येति ब्रह्मज्ञानसादृश्यभङ्ग्या समाच्छाद्यैवोपदिष्टा। दृश्यते चान्यत्रापि रहस्योपदेशेऽर्थान्तरसमाच्छन्नोक्तिः। यथा महाभारते जतुगृहं गच्छतः पाण्डवान् प्रति विदुरस्य। यथा वा षष्ठे हर्य्यश्वादीन् प्रति नारदस्य। तदेवं पुनरपि तथैवोपदिशति—यथा भूतानि भूतेषु खं वायुग्निर्जलं मही। तथाहञ्च मनःप्राणबुद्धीन्द्रियगुणाश्रयः ॥ १५६ ॥

यथा खादीनि कारणरूपाणि भूतानि वाय्वादिषु स्वस्वकार्य्यरूपेषु भूतेष्ववस्थितानि, तत्राकाशस्य स्थितिर्वायौ वायोरग्नावित्यादि, तथा भवतीष्वहं वहिरनुपलभ्यमाणोऽपि नित्यं तिष्ठाम्येवेत्यर्थः। कथम्भूतोऽहं भवतीनां मदेकजीवातूनां मनआद्याश्रयः। अन्यथा निमेषमपि मद्वियोगेन तान्यपि न तिष्ठेयुरिति भावः। यद्वा किंरूपस्तिष्ठसीत्याकाङ्क्षायामाह, भवतीनां मनआद्याश्रयभूतो यो द्विभुजश्यामसुन्दरवेणुविनोदिरूपस्तद्रूप एवेति। नन्वित्थं प्रकाशवैचित्री कथं स्याद् यया विरहसंयोगयोर्युगपदेव स्थितिरित्याशङ्क्याह—

आत्मन्येवात्मनात्मानं सृजे हन्म्यनुपालये।
आत्ममायानुभावेन भूतेन्द्रियगुणात्मना ॥ १५७ ॥

आत्मनि अनन्तप्रकाशमये श्रीविग्रहलक्षणे स्वस्मिन् आत्मना स्वयम् आत्मानं प्रकाशविशेषं सृजे अभिव्यञ्जयामि। केन निमित्त-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भूतेन आत्ममायानुभावेन अचिन्त्यायाः स्वरूपशक्तेः प्रभावेन। स्वरू-
भूतया नित्यशक्त्या मायाख्यया युतवति। मध्वभाष्यधृतचतुर्वे-
शिखातः। कोऽष्टशेन भूतेन्द्रियगुणात्मना भूतानि परमार्थरूपा-
यानि ममेन्द्रियाणि ये च गुणा रूपरसादयस्तेषामात्मना प्रकाशकं-
त्यर्थः। बुद्धीन्द्रियेति पाठे आत्मनेत्यस्य विशेषणम्। बुद्धयोऽन्तः-
करणानि इन्द्रियाणि बहिःकरणानि गुणा रूपादयः तानि स्व-
रूपि आत्मा स्वरूपं यत्र तेनेति। तदेवमाविर्भूय अनु पश्चात् कदा-
हन्मि ततोऽन्यत्र गच्छामि हन हिंसागत्योः कदाप्यनु पश्चात् पु-
पालये स्वयमागत्य पालयामि निजविरहदूनानिति शेषः। एत-
कारणन्तु यस्त्वहं भवतीनां वा इत्यादौ वक्ष्यते। हन्तेरर्थान्तरे व्याप-
मेककर्म्मकत्वेऽपि तमात्मानं प्रकाशं कदाचित्तिरोधापयामि तस्मा-
प्रकाशमात्मनश्च प्रकाशवैविध्यमेकीकरोमीत्यर्थः। एवमेव दशमस्कन्धे-
तमाध्याये स्वामिभिरपि व्याख्यातम्—एवं सर्वगृहेभ्यः पृथक् पृथ-
निर्गत्यानन्तरमेक एव सुधर्म्मां प्राविशदिति। तथाच माध्वभाष्य-
स्वामिवचनम्—स देवो बहुधा भूत्वा निर्गुणः पुरुषोत्तमः। एकी-
भूय पुनः शेते निर्दोषो हरिरादिकृदिति। श्रुतिश्च शाङ्करभाष्यधृता-
स एकधा भवति त्रिधा भवतीत्याद्या। तदनन्तरं पुनरपि तम-
त्मानं पालये पुनरभिव्यज्य निजप्रेष्ठजनैः सह क्रीड़या सम्भूतानन्दं
करोमीत्यर्थः। एवं हन्मि अश्लीलोऽपि स्ववियोगिजनविषयकारु-
ण्यकृतभावान्तरेण स्वयमेव प्रयुक्त इति न दोष आशङ्क्यः। छिन्द्याः
स्वबाहुमपि वः प्रतिकूलशीलमितिवत्। ननु प्रकटमेव मथुरायां
विक्रीड़सि तर्हि त्वाप्यधुना विक्रीड़सीत्यत्रास्माकं सम्भावना क-
जायतामित्याशङ्क्य तासामेवानुभवं प्रमाणयति—

आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तो गुणान्वयः।
सुषुप्तस्वप्नजाग्रद्भिर्मनोवृत्तिभिरीयते॥ १५८॥

यद्वा आस्तां तावदप्रकटलीलायां मद्वियोगाभाववार्त्ता प्र-

लीलायामपि तथानुसन्धीयतामित्याह, आत्मा ज्ञानमय इत्यादि । अयं-आयम्, आत्मशब्दोऽस्मिन्नस्मच्छब्दार्थपरस्ततश्च आत्माहं श्रीकृष्णलक्षणो भवतीनां सुषुप्तादिलक्षणाभिर्मनोवृत्तिभिरीयते अनुभूयत एव। कीदृशः ज्ञानमयो नानाविद्याविदग्धः, शुद्धो दोषरहितः, विगतोऽतिरिक्तो यस्मादिति वा विशेषेणातिरिक्त इति वा व्यतिरिक्तः सर्वोत्तमो, गुणान्वयः सर्वगुणशाली । अतएव स च स्फूर्त्तिरूपोऽयमनुभवः कदाचित् साक्षात्कारत्वायापि कल्पते इति चिरकालविरहेऽपि तासां सन्धुक्षण-कारणं ज्ञेयम् । अत्र सुषुप्तेऽपि तत्स्फूर्त्तिनिर्द्देशः सर्वदैव स्फुरा-मीतिमात्रतात्पर्य्यकः । यद्वा तत्र तासां स्वप्नजाग्रतोरनन्यवृत्तित्वं सिद्धमेव। वृत्त्यन्तरासम्भवात्तु श्रीकृष्णसमाधिलक्षणे सुषुप्तेऽपि तस्मिन्नेव स्वप्नजाग्रद्गतानां वृत्तिवैचित्रीणां तदनुभावितामात्रावशेषतया प्रवेशो भवति । तदुत्तरकाले प्राकृतैः सुखमहमस्वाप्समितिवत्ताभिः स एवानुसन्धीयते इति तथोक्तम् । तथाहि गारुड़े—जाग्रत्स्वप्नसुषुप्तेषु योगस्थस्य च योगिनः। या काचिन्मनसो वृत्तिः सा भवेदच्युताश्रयेति । ननु तथाप्यस्माकं विरह एव सर्वोपमर्द्दकः स्फुरति, किं कुर्म्म इत्याशङ्क्य, हन्त यदि मद्वियोगिताभिमानिमनोवृत्तिं कथमपि रोद्धुं शक्नुथ तदा स्वत एव नित्यसंयोगित्वमुदेष्यतीत्येवमुपदेशेन वक्तुं, योगशास्त्र-प्रक्रियामाह, द्वाभ्याम्—येनेन्द्रियार्थान् ध्यायेत मृषा स्वप्नवदुत्थितः । तन्निरुन्ध्यादिन्द्रियाणि विनिद्रः प्रत्यपद्यत ॥ १५८ ॥

उत्थितः पुमान् यथा मिथ्याभूतमेव स्वप्नं ध्यायति एवं बाधिता-नपि इन्द्रियार्थान् शब्दादीन् येन मनसा ध्यायेत चिन्तयेत् ध्यायंश्च येनेन्द्रियाणि प्रत्यपद्यत प्राप तन्मनो विनिद्रोऽनलसः सन् निरुन्ध्यान्नियच्छेदिति । यद्यपि स्वप्नादिवत्तद्विरहस्तासु नाज्ञाना-ध्यस्तः प्रकटलीलायां तस्याप्राप्तेस्तासामेवानुभवसिद्धत्वात्तथाप्यप्रकट-लीलायां नित्यसंयोगमनुसन्धापयितुं तस्य तादृशत्वेनैवोपदेशो भग-वता योग्य इति तथोक्तम् । एकांशेऽपि संयोगी वियोगो मास्त्वेवेति वा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथोक्तम्। मनोनिरोधमेव स्तौति—एतदन्तः समाम्नायो योगः सां
मनोषिणाम्। त्यागस्तपो दमः सत्यं समुद्रान्ता इवापगाः॥ १६०॥

एष मनोनिरोधः अन्तः समाप्तिः फलं यस्य सः, समाम्नायो वे
स तत्र पर्य्यवस्यतीत्यर्थः। मार्गभेदेऽप्येकत्र पर्य्यवसाने दृष्टान्तः, स
द्रान्ता आपगा नद्य इव इति। यस्मात् सर्वैरेव वेदविद्भिः प्राप्य
मनोनिरोधस्तस्माद् यूयमपि मद्वियोगाभिमानिमनोवृत्तिं नियच्छत
पद्यद्वयेन ध्वनितम्। ननु, अहो यदि त्वद्विरहेण वयमतिदुःखि
इत्यतः कृपालुचित्तस्त्वमस्मभ्यं निजप्राप्तिसाधनमुपदिशसि, तर्हि, स
किमु प्रकटमेव नायासि, तस्मात् कैतवमेवेदं तव कृपालुत्वमित्य
शङ्क्याह—यत्त्वहं भवतीनां वै दूरे वर्त्ते प्रियो दृशाम्। मनसः सं
कर्षार्थं मदनुध्यानकाम्यया॥ १६१॥

भवतीनां दृशां प्रियोऽप्यहं यद्दूरे वर्त्ते तद्भवतीनां मदनुध्यानेच्छ
यो मनसः सन्निकर्षस्तदर्थं, मम भवन्निकटे स्थितौ मदर्थं भवती
दृश्येवावेशः स्याद्दूरे तु मनस्येवेति तत्र मम सन्निकर्षः स्यादिति
मर्थमित्यर्थः। तदेव निदर्शयति—यथा दूरचरे प्रेष्ठे मन आवि
वर्त्तते। स्त्रीणाञ्च न तथा चेतः सन्निकृष्टेऽक्षिगोचरे॥ १६२॥

चकारात् स्त्रीषु प्रेष्ठस्य च। मनःसन्निकर्षे किं स्यात्तत्राह—मय्या
वेश्य मनः कृष्णे विमुक्ताशेषवृत्ति यत्। अनुस्मरन्त्यो मां नित्य
मचिरान्मामुपैष्यथ॥ १६३॥

विमुक्ता अशेषा विरहतत्कारणभावनारूपा वृत्तयो येन तत्
मयि कृष्णरूप एवावेश्य मां कृष्णरूपमेवानुस्मरन्त्यो मां कृष्णरू
मेवाचिरादेव समीप एवैष्यथ अनन्यवेद्यतया प्राप्स्यथ। तर्हि क
प्रकटं नागच्छसि तत्राह—या मया क्रीड़िता रात्र्यां वनेऽस्मि
व्रज आस्थिताः। अलब्धरासाः कल्याण्यो मापुर्मद्वीर्य्यचिन्तया॥१६४॥

तद्वद्भिर्विघ्नवञ्चनार्थमित्यर्थः। ता हि तद्रात्रिप्रकटरासमा
मलब्धवत्योऽप्यस्मिन् वृन्दावन एव सर्वविघ्नास्पृष्टा प्रकटविचित्रक्रीड़ा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

निधानं माम् आपुरेवेति। तथाच वासनाभाष्यधृतं मार्कण्डेयवचनम्—तदानीमेव ताः प्राप्ताः श्रीमन्तं भक्तवत्सलम्। ध्यानतः परमानन्दं कृष्णं गोपालनायिका इति। तत्रापि कल्पाख्यः सर्वविघ्नरहिताः। अर्थान्तरे सशरीरा एव च। तासां शरीरपरित्यागादिकन्तु मायिकमेवेति भावः। तस्मात्तासां व्रजे प्राकट्येनानुपलम्भात्तथा मयि भक्तिर्हि भूतानामित्यादिवक्ष्यमाणानुसारेण मार्कण्डेयवचनानुसारेण च तदीयाभीप्सितरूपविलासस्यैव मम प्राप्तेः सिद्धत्वाच्च विद्यत एव प्रकटाया अस्या लीलायाः पृथक् तस्मिन्नन्या लीला, तस्याञ्च ममेव युष्माकमपि स्थितिरध्यवसीयतां, यामेव लीलां मदीयव्रजागमनासक्तत्प्रतिज्ञानुसारेण शीघ्रमेव यदुपुर्य्याः सकाशाद्भवत्प्रेमयन्त्रिततया समागत्याहं सर्वेभ्य एव व्रजवासिभ्यः सन्ततं दर्शयिष्यामीति भावः। अस्मिन्निति निर्देशात्तदानीमपि स्वस्य वृन्दावनस्थत्वं सूचयति। प्रकरणेऽस्मिन्निदमुक्तं भवति। न ह्यत्र तासामध्यात्मविद्या श्रेयस्करी भवति। तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः। न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहेति श्रीभगवता, ज्ञाने प्रयासमुदपास्य नमन्त एव जीवन्तीति ब्रह्मणा च साधारणभक्तानामप्यनुपादेयत्वेनोक्तत्वात्। न च तच्छ्रवणेन तासां विरहज्वाला शाम्यति। तं श्यामं मनोहरं विना साधारणभक्तानामपि स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन इत्युक्तदिशा नात्यन्तिकं विगणयन्त्यपि ते प्रसादमित्याद्युक्तदिशा वा हेयरूपत्वेनानुभवात्। तासान्तु स्वरसस्य परमविरोध्येव तत्। पूर्वञ्च, श्रूयतां प्रियसन्देशो भवतीनां सुखावह इत्येवोक्तम्। अत उक्तं तासामेवाभिप्रायकथने श्रीस्वामिभिरपि—ननु किमन्यानिवास्मानात्मविद्यया लोभयसि वयन्तु सर्वसुन्दरसर्वालङ्करणेन त्वया विरहं नैव सहामह इति। तस्माद्विदुरस्येव कूटोक्तिरियमित्युक्त एवार्थो भवत्यन्तरङ्गः। स च श्रीयुधिष्ठिरस्येव तासामेव गम्य इति॥ १०॥ ४३॥ श्रीभगवान् श्रीव्रजदेवीः॥ १५५—१६४॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पूर्वव्याख्यानुसारेणैवाह—

एवं प्रियतमादिष्टमाकर्ण्य व्रजयोषितः।
ता ऊचुरुद्धवं प्रीतास्तत्सन्देशागतस्मृतीः॥ १६५॥

तत्सन्देशेनागता स्मृतिर्नित्यसंयोगानुसन्धानरूपा यासां तादृश्य अतएव प्रीताः। इतः परं कदाचिदप्रकटलीलानुभवे सति त संतोषः प्रकटलीलादर्शनतस्तु विरह एवेति भावद्वैतं लक्ष्यते। सन्तोषमाह—

ततस्ताः कृष्णसन्देशैर्व्यपेतविरहज्वराः।
उद्धवं पूजयाञ्चक्रुर्ज्ञात्वात्मानमधोक्षजम्॥ १६६॥

यथा तेन सन्दिष्टं तथैवात्मानमनुभूयाधोक्षजत्वानुभूयेत्यर्थः १०॥ ४७॥ श्रीशुकः॥ १६५॥ १६६॥

स्वविरहं व्यञ्जयन्ति—

अप्येष्यतीह दाशार्हस्तप्ताः स्वकृतया शुचा।
संजीवयंस्तु नो गात्रैर्यथेन्द्रो वनमम्बुदैः॥ १६७॥

स्पष्टम्॥ १०॥ ४७॥ श्रीगोप्य उद्धवम्॥ १६७॥

एवं यथा श्रीमदुद्धवद्वारोपदिष्टं तथा कुरुक्षेत्रे साक्षादपि ह मुपदिष्टम्। मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते। दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापन इत्यत्र तादृशीनां साक्षादेव त प्राप्तिः फलं नान्येषामिवामृतत्वमात्रमित्येतत्तासामाश्वासनरूपम् वद्वचनानन्तरं, ननु त्वं द्वारकायामेव सदा क्रीडसि वयन्तु वृन्द वनवासिन्यः कथं प्राप्स्याम इत्याशङ्क्य युष्माभिर्नित्यसंयुक्त एवा मस्मीति तथाविधमात्मानमुपदिशति द्वाभ्याम्—अहं हि सर्वभूतान मादिरन्तोऽन्तरं बहिः। भौतिकानां यथा खं वार्भूर्वायुर्ज्योतिरङ्गना एवं ह्येतानि भूतानि भूतेष्वात्मात्मना ततः। उभयं मय्यथ पश्यताभातमक्षरे॥ १६८॥

यथाहमहङ्कारो भूतादिः सर्वेषां भूतानां खादीनामाद्यन्तादि

रूपः । अहङ्कारान्तर्गतान्येव खादीनीत्यर्थः । यथा च खादीनि भूतानि भौतिकानां शरावसैन्धवादीनामाद्यन्तादिरूपाणि । खादीनामन्तर्गतान्येव तानीत्यर्थः । एवमेतानि प्रकटलीलायामनुभूयमानानि युष्माकं ममतास्पदानि भूतानि परमार्थसत्यवस्तूनि श्रीवृन्दावनादीनि भूतेष्वप्रकटलीलागतेषु परमार्थसत्यवस्तुषु तेषु वर्त्तन्ते । युष्माकं प्रकटलीलाभिमान्यहन्तास्पदमात्मा चाप्रकटलीलाभिमान्यहन्तास्पदेनात्मना ततो व्याप्तः । एवमिदन्ताहन्तास्पदं यदुभयं तच्च पुनः परे प्रकटमत्र दृश्यमानेऽपि तस्यां वृन्दाटव्यां विहरमाणेऽक्षरे नित्यमेव युष्मत्सङ्गिनि मय्याश्रयरूपे आभातं विराजमानं पश्यतेति । तस्मात् प्रकाशभेदादेव तत्तद्वस्त्वादिभेदव्यपदेशविरहसंयोगव्यवस्था चेतीदमत्रापि व्यक्तम् । श्रीभगवच्छिक्षानुरूपमेव श्रीऋषिरुवाच—

अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः ।
तदनुस्मरणध्वस्तजीवकोषास्तमध्यगन् ॥ १६९ ॥

अध्यात्मशिक्षया तदुपदेशेन आत्मानं श्रीकृष्णमधिकृत्य या शिक्षा तया वा यथाविधं यदुपदिष्टं तदनुस्मरणेन नित्यसिद्धाप्रकटलीलायाः पुनरनुसन्धानेन ध्वस्तस्त्यक्तप्रायो जीवकोषः प्रपञ्चस्तत्र प्राकट्याभिनिवेशो याभिस्ताः । तं स्वयमुपदिष्टं नित्यसंयुक्तरूपं श्रीकृष्णं अध्यगन् प्रणिहितवत्यः । तत्रापि पूर्वदर्शितश्रुतिपुराणादिगतनित्यतावाक्यं मयि भक्तिर्हीति फलभेदवाक्यञ्च न ज्ञानं न च वैराग्यमित्याद्ययुक्ततान्यञ्जिवाक्यञ्चानुसन्धाय परोक्षवादार्थप्रयुक्तमर्थान्तरं न प्रमेयम् । अथ ज्ञानरूपं प्रकटार्थमस्वीकुर्वाणा नित्यलीलारूपं रहस्यार्थं स्वीकुर्वाणा अपि पूर्ववत् पुनश्च प्रकटलीलाभिनिवेशेन विरहभीताः परमदैन्योक्तरमेवं प्रार्थयामासुरित्याह—आहुश्च ते नलिननाभ पदारविन्दं योगेश्वरैः हृदि विचिन्त्यमगाधबोधैः । संसारकूपपतितोत्तरणावलम्बं गेहं जुषामपि मनस्युदियात् सदा नः ॥ १७० ॥

आस्तां तावद्दुर्विधिहतानामस्माकं त्वद्दर्शनगन्धवार्त्तापि । हे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नलिननाभ, तव पदारविन्दं त्वदुपदेशानुसारेणास्माकं मनसुदि...
ननु किमिवात्रासम्भाव्यं तत्राहुः। योगेश्वरैरेव हृदि विचिन्त्यं न...
भिस्तत्स्मरणारम्भ एव मूर्च्छागामिनीभिः। तदुक्तमुद्धवं प्रति
भगवता—मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः। स्मरन्त्यो
विमुह्यन्ति विरहौत्कण्ठ्यविह्वला इति। तदेवोपपादयन्ति, अ...
बोधैः साक्षाद्दर्शनेऽप्यक्षुभितबुद्धिभिः, न त्वस्माभिरिव तद्दर्शने
क्षुभितबुद्धिभिः। चरणस्यारविन्दतारूपकञ्च तत्स्पर्शेनैव दाहशान्ति
र्भवति न तु तथा तत्स्मरणेनेति ज्ञापनाय। ननु तथा निदिध्या...
मेव योगेश्वराणां संसारदुःखमिव भवतीनां विरहदुःखं दूरी...
तदुदयं करिष्यतीति आशङ्क्याह, संसारकूपपतितानामेवोत्तरणाव...
नत्वस्माकं विरहसिन्धुनिमग्नानां, तच्चिन्तनारम्भे दुःखहृदैरेवा...
मानत्वादितिभावः। नन्वधुनैवागत्य मुहुर्मां साक्षादेवानुभवत, त...
गेहं जुषां परगृहिणीनामस्वाधीनानामित्यर्थः। यद्वा गेहं ...
मिति तव सङ्गतिश्च त्वत्पूर्वसङ्गमविलासधाम्नि तत्तदस्मत्का...
स्वाभाविकास्मत्प्रीतिनिलये निजगेहे गोकुल एव भवतु न तु ...
दाविति स्वमनोरथविशेषेण तस्मिन्नेव प्रीतिमतीनामित्यर्थः।
कौमारहरः स एव हि वर इत्यादिवत्। तस्मादस्माकं मनसि ...
रणचिन्तनाभावात् स्वयमागमनस्यासामर्थ्यादनभिरुचेर्वा ...
श्रीवृन्दावन एव यद्यागच्छसि तदैव निस्तार इति भावः ॥१०॥
श्रीशुकः ॥ १७० ॥

तदेवं स्वारसिक्यप्रकटलीला दर्शिता। अथाप्रकटप्रकटलीलं
अप्यर्थविशेषेणाह—गोपीनां तत्पतीनाञ्च सर्वेषामपि देहिनाम्।
योऽन्तश्चरति सोऽध्यक्ष एष क्रीड़नदेहभाक् ॥ १७१ ॥

अन्तरन्तःस्थितमप्रकटं यथा स्यात्तथा गोपीनां तत्पतीनाञ्च
पतिम्मन्यानां क्रीड़नदेहभाक् सन् तेषामेव गोकुलयुवराज
अध्यक्षश्च सन् यश्चरति क्रीड़ति स एष प्रकटलीलागतोऽपि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सर्वेषां विश्ववर्त्तिनां देहिनाम् अपि क्रीड़नदेहभाक् सन् तेषां पालकत्वेनाध्यक्षोऽपि सन् चरति तस्मादनादित एव ताभिः क्रीड़ाशालित्वेन स्वीकृतत्वात् तच्छक्तिरूपाणां तासां सङ्गमे वस्तुत एव परदारतादोषोऽपि नास्ति। ततस्तेषां तत्पतित्वं च, नासूयन् खलु कृष्णायेत्यादिवच्यमाणदिशा, तेषां तासाञ्च प्रातीतिकमात्रं, न तु दैहिकम्। तादृशप्रतीतिसम्पादनञ्च तासामुत्कण्ठापोषार्थमिति तत्प्रकरणसिद्धान्तस्य पराकाष्ठा दर्शिता ॥ १० ॥ ३३ ॥ श्रीशुकः ॥१७१॥

एवं तत्तल्लीलाभेदेनैकस्यापि तत्तत्स्थानस्य प्रकाशभेदः श्रीविग्रहवत्। तदुक्तम्—वृष्णः परमं पदमवभाति भूरीति श्रुत्या। तत्र त्वितरलीलान्तःपातिभिः प्रायश इतरलीलावकाशविशेषो नोपलभ्यते। दृश्यते च प्रकटलीलायामप्यसङ्करीभावेनैव विचित्रावकाशत्वम्। यथा द्वादशयोजनमात्रप्रमितायामेव द्वारकान्तःपुर्य्यां क्रोशद्वयप्रमितगृहकोटिप्रभृतिवस्तूनि। यथा स्वल्पे गोवर्द्धनगर्त्ते तदसंख्यगोकुलप्रवेशः। यथा ब्रह्मणा दृष्टा वृन्दावनस्य सवत्सवत्सपच्चाद्यवकाशता ब्रह्माण्डाद्यनन्तवस्त्ववकाशता च। यथा च श्रीनारददृष्टयोगमायावैभवे समकालमेव द्वारकायां प्रातस्त्रमाध्याह्निकसायन्तनलीला इत्यादि। तदेवं वृन्दावनस्य तावत् प्रकाशभेदा उदाह्रियन्ते। तत्राप्रकटलीलानुगतो यथा यामले रुद्रगौरीसम्वादे—वीथ्यां वीथ्यां निवासोऽधरमधुस्रुवचस्तत्र सन्तानकानामेके राकेन्दुकोट्यातपविशदकरास्तेषु चैके कमन्ते। रामे रात्रेर्विरामे समुदिततपनद्योतिसिन्धूपमेया रत्नाङ्गानां सुवर्णाचितमुकुररुचस्तेभ्य एके द्रुमेन्द्राः। यत्कुसुमं यदा मृग्यं यत् फलञ्च वरानने। तत्तदैव प्रसूयन्ते वृन्दावनसुरद्रुमाः। अर्थश्च, हे अधरमधुस्रुवचः अधरमधुतुल्यानि सुवचांसि यस्याः तथाभूते, हे गौरि, तत्र श्रीवृन्दावने रत्नाङ्गानां सन्तानकानां मध्ये एके द्रुमेन्द्रा राकेन्दुकोट्यातपविशदकराः। हे रामे, तेषु सन्तानकेषु च एके रात्रेर्विरामे समुदिततपनद्योतिसिन्धूपमेयाः कमन्ते विराजन्ते। तेभ्य

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्तानप्यतिक्रम्य एकै क्रमन्ते। कथम्भूताः सुवर्णाचितमुकुरवच्च तत्र च यदा यत् कुसुमं मृग्यं भवति, यदा च यत् फलं मृग्यं भवे तदैव तद्वृन्दावनसुरद्रुमाः प्रसूयन्त इति। एवं ब्रह्मसंहितायाम् आदिपुरुषगोविन्दस्तोत्र एव—श्रियः कान्ताः कान्तः परमपुरुषः कल्पतरवो द्रुमा भूमिश्चिन्तामणिगणमयी तोयममृतम्। कथा गानं नाट्यं गमनमपि वंशी प्रियसखी चिदानन्दं ज्योतिः परमपि तदास्वाद्यमपि च। स यत्र क्षीराब्धिः सरति सुरभीभ्यश्च सुमहान् निमेषार्द्धाख्यो वा व्रजति न हि यत्रापि समयः। भजे श्वेतद्वीपं तमहमिह गोलोकमिति यं विदन्तस्ते सन्तः क्षितिविरलचाराः कतिपये इति। ज्योतिर्लौकिकलीलामाधुर्य्याय महाप्रलयेऽप्यनश्वरं सूर्य्यादिरूपं यत्तत्र वर्त्तते तथा तेषामास्वाद्यमपि यत्किञ्चित्तत् सर्वं चिदानन्दरूपं परमपि परमतत्त्वमेव न तु प्राकृतम्। चन्द्रार्कयोः स्थितिश्च विलक्षणत्वेनैव गौतमीयतन्त्रे कथिता। समानोदितचन्द्रार्कमिति वृन्दावनविशेषणम्। समानत्वञ्च रात्रौ रात्रौ राकाचन्द्रमयत्वादिना अपि चेति परिणाम्वयः। रसाविशेन तदज्ञानादेव समयो न व्रजतीत्युक्तम्। अन्यथा पौर्वापर्य्याभावे सति चेष्टात्मिकाया लीलायाः स्वरूपहानिः स्यात्। श्वेतं शुभ्रं, दोषरहितमित्यर्थः। द्वीपं तदिवान्यासङ्गरहितं सर्वतः-परमित्यर्थः। तदुक्तं श्रुत्या—यथा हि सरसि पद्मं तिष्ठति तथा भूम्यां तिष्ठतीति। किञ्च ब्रह्मसंहितायामेव तत्स्तवादौ—चिन्तामणिप्रकरपद्मसुकल्पवृक्षलक्षावृतेष्वित्यादि। एवं नारदपञ्चरात्रे च श्रुतिविद्यासंवादे,—ततः श्वेतमहाद्वीपश्चतुर्दिक्षु विदिक्षु च। अधश्चोर्द्ध्वञ्च वियद्गामिनाथास्तोयं क्षीरामृतार्णवः। महावृन्दावनं तत्र केलिवृन्दावनानि च। वृक्षाः कल्पद्रुमाश्चैव चिन्तामणिमयी स्थली। क्रीड़ाविहङ्गलक्षञ्च भोणामनेकशः। नानाचित्रविचित्रश्रीरासमण्डलभूमयः। कुञ्जनिकुञ्जानि नानासौख्यस्थलानि च। प्राचीरच्छत्ररत्नानि ... घोषस्य भान्त्यहो। यच्छिरोरत्नवृन्दानामतुलद्युतिवैभवः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

राजते तत्र रूपं को वक्तुमर्हतीति। इत्थं श्रीवृन्दावनस्य प्रकटलीलानुगतप्रकाश एव गोलोक इति व्याख्यातम्। तत्र प्रकटलीलाया द्वैविध्ये मन्त्रोपासनामय्यां किञ्चिद्विलक्षणः। स च तत्तन्मन्त्रेषु यथादर्शित-प्रतिनियतलीलास्थानसन्निवेशः। यथा पूर्वतापन्याम्। यथा च स्कान्दे श्रीनारदवाक्यम्—यस्मिन् वृन्दावने पुण्यं गोविन्दस्य निकेतनम्। तत्सेवकसमाकीर्णं तत्रैव स्थीयते मया। भुवि गोविन्दवैकुण्ठं तस्मिन् वृन्दावने नृप। यत्र वृन्दादयो भृत्याः सन्ति गोविन्दलालसा इति। अथ प्रकटलीलानुगतप्रकाशः श्रीविष्णुपुराणहरिवंशादौ प्रसिद्धः। स एष एव प्रकाशस्तदानीं प्राकृतैरपि कैश्चित् भाग्यविशेषोदयवद्भिर्दृष्टः संप्रत्यस्माभिरपि तदंशो दृश्यते। अत्र तु यत् प्राकृतप्रदेश इव रीतयोऽवलोक्यन्ते तत्तु श्रीभगवतीव स्वेच्छया लौकिकलीलाविशेषाङ्गीकार-निबन्धनमिति ज्ञेयम्। श्रीभगवद्धाम्नां तेषां सर्वथा प्रपञ्चातीतत्वादि-गुणैः श्रुतिस्मृतिभ्यां कृतप्रमाणत्वात्। अतएवोक्तमादिवाराहे। वसन्ति ये मथुरायां विष्णुरूपा हि ते खलु। अज्ञानास्तान्न पश्यन्ति पश्यन्ति ज्ञानचक्षुष इति। तदेतन्मूलप्रमाणेऽप्यप्रकटलीलानुगतः प्रकाशः श्रीवृन्दावनस्य—ते चौत्सुक्यधियो राजन् मत्वा गोपास्तमीश्वरमित्यादौ दर्शित एव। प्रकटलीलानुगतो यथा। अहो अमी देववरामरार्चितं पादाम्बुजं ते सुमनःफलार्हणम्। नमन्त्युपादाय शिखाभिरात्मन-स्तमोपहत्यै तरुजन्म यत्कृतमित्यादि ॥ १७२ ॥

आत्मनः सुमनःफलरूपमर्हणमुपादायात्मन एव शिखाभिर्नमन्ति। इयद्वा ये। शृण्वतां पश्यताञ्च संसारिणां तमोऽपहत्यै तरुजन्म तत्कृत-मिति। यत्कृतमिति तृतीयातत्पुरुषो वा ॥ १ ॥ १५ ॥ श्रीभगवान् श्रीबलदेवम् ॥ १७२ ॥

यथा च, सपद्येवाभितः पश्यन् दिशोऽपश्यत् पुरः पुनः। वृन्दावनं जनाजीव्यद्रुमाकीर्णं समाप्रियम्। यत्र नैसर्गदुर्वैराः सहासन्नृमृगादयः। मित्राणीवाजितावासद्रुतरुट्तर्षादिक इत्यादि ॥ १७३ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

समानामात्मारामाणाम् अपि समस्य सच्चरस्य श्रीभगवं वा आ सर्वतोभावेन सर्वांशेनैव प्रियमिति। तत्रातदंशत्वं सर्वतोऽप्यानन्दातिशयप्रदत्वं प्रदर्शितम् ॥१०॥१३॥ श्रीशुकः ॥

तदेवं श्रीकृष्णलीलास्पदत्वेन तान्येव स्थानानि दर्शि तच्चावधारणं श्रीकृष्णस्य विभुत्वे सति व्यभिचारि स्यात्तत्र समा तेषां स्थानानां नित्यतल्लीलास्पदत्वेन श्रूयमाणत्वात् तदाधार लक्षणस्वरूपविभूतित्वमवगम्यते। स भगवः कस्मिन् प्रतिष्ठित स्वे महिम्नीति श्रुतेः। साक्षाद्ब्रह्म गोपालपुरीत्यादेश्च। ततस्तं व्यवधानेन तस्य लीला। अन्येषां प्राकृतत्वात् न साक्षात्तत्स्थं सम्भवति धारणशक्तिस्तु नतराम्। यत्र क्वचिद्वाप्रकटलीलायां नादिकं श्रूयते, तदपि तेषामाधारशक्तिरूपाणां स्थानानामावे मन्तव्यम्। वैकुण्ठान्तरस्य त्वप्राकृतत्वेऽपि श्रीकृष्णविलासाधा करनिजयोग्यताविशेषाभावान्न तादृशत्वमिति ज्ञेयम्। अथाप्र प्रकटलीलयोः समन्वयस्त्वेवं विवेचनीयः। तत्र यद्यपि तस्याप्र लीलायां बाल्यादिकमपि वर्त्तते, तथापि किशोराकारस्यैव मुख्य तमाश्रित्यैव सर्वं प्रवर्त्तते इति प्रकटलीलापि तमाश्रित्यैव वर्त यथा द्वारकायामपि मथुरायामपि वृन्दावनेऽपि युगपदेक एव कि राकृतिः श्रीकृष्णाख्यो भगवान् श्रीमदानकदुन्दुभिव्रजराजनन्दन प्रापञ्चिकलोकाप्रकटं नित्यमेव लीलायमान आस्ते। अथ कदा भक्तियोगविधानार्थं कथं पश्येम हि स्त्रिय इत्याद्युक्तदिशा सत्यम षङ्गिके भूभारहरणादिके कार्ये स्वेषामानन्दचमत्कारपोषायैव ऽस्मिंस्तद्रीतिसहयोगचमत्कृतनिजजन्मबाल्यपौगण्डकैशोरादिक किकलीलाः प्रकटयन् तदर्थ प्रथमत एवावतारितश्रीमदानकदुन्दुभि तद्विधयदुवृन्दसंवलिते स्वयमेव बालरूपेण प्रकटीभवति। तत्र तत्र स्थाने वचनजातमिदिन्निजनित्यावस्थितकैशोरादिवि सम्पादनाय तैरेव प्रकाशान्तरेणाप्रकटमपि स्थितैः परिकरैः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

निजप्रकाशान्तरेणाप्रकटमपि विहरत्येव। अथ श्रीमदानकदुन्दुभि-गृहेऽवतीर्य्य च तद्वदेव प्रकाशान्तरेणाप्रकटमपि स्थित्वैव स्वयं प्रकटी-भूतस्य सव्रजश्रीव्रजराजस्य गृहेऽपि तदीयामनादित एव सिद्धां स्ववात्सल्यमाधुरीं जातोऽयं नन्दयति बालोऽयं रिङ्गति पौगण्डोऽयं विक्रीड़तीत्यादिस्वविलासविशेषैः पुनः पुनर्नवीकर्त्तुं समायाति। तत्र च सकलमाधुरीशिरोमणिमञ्जरीमाकैशोरबाल्यकेलिलक्ष्मीमुल्लास्य गोकुलजनान्नितरामात्मवशीकृतान्तर्वहिरिन्द्रियानापाद्य पुनरपि तेषां समधिकामपि प्रेमर्द्धिं सम्बर्द्धयन् श्रीमदानकदुन्दुभिप्रभृतीनपि नन्दयन् भूभारराजन्यसंघमपि संहरन् मथुरायां प्रयाति। ततश्च द्वारकाख्यं स्वधामविशेषं प्रकाशयितुं समुद्रं गत्वा तत्तल्लीलामाधुरीं परिवेशयति। अथ सिद्धासु निजापेक्षितासु तत्तल्लीलासु च तत्र तत्र नित्यसिद्धमप्रकटत्वमेवोरीकृत्य तावप्रकटलीलाप्रकाशौ प्रकटलीला-प्रकाशाभ्यामेकीकृत्य तथाविधतत्तन्निजवृन्दमप्रत्यूहमेवानन्दयतीति। अत्र पूर्णकैशोरव्यापिन्येव व्रजे प्रकटलीला ज्ञेया। क्वचातिसुकु-माराङ्गी किशोरी नाप्तयौवनी इति। नास्मत्तो युवयोस्तात नित्योत्-कण्ठितयोरपि। वाल्यपौगण्डकैशोराः पुत्राभ्यामभवन् क्वचिदिति। मनांसि तासामरविन्दलोचनः प्रगल्भलीलाहसितावलोकनैः। जहार मत्तद्विरदेन्द्रविक्रमो दृशां ददच्छ्रीरमणात्मनोत्सवमित्यपि हि श्रूयते। अतएव एकादशसमास्तत्र गूढ़ार्च्चिः सवलोऽवसदित्यत्रैकादशसमा व्याप्य गूढ़ार्च्चिरित्येष एवार्थः। अथवा एकादशभिः एव समाभिस्तस्य पूर्ण-कैशोरत्वं ज्ञेयम्। कालेनाल्पेन राजर्षे रामः कृष्णश्च गोकुले। अघृष्टजानुभिः पद्भिर्विचक्रमतुरोजसेत्यादेः। तदेवं स्थिते लीलाद्वये-समन्वये त्वप्रकटलीलैकीभावसमयश्चैवमनुसन्धेयः। प्रथमं श्रीवृन्दा-वने ततो द्वारकामथुरयोरिति सर्वप्रकटलीलापर्य्यवसाने युगपदेव हि द्वारकामथुरयोः। लीलाद्वयैक्यं मथुराप्रकटलीलाया एव द्वारकायामनु-गमनात्। अतएव रुक्मिणीप्रभृतीनां मथुरायामप्यप्रकटप्रकाशः श्रूयते।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वृन्दावने त्वियं प्रक्रिया विशिष्य लिख्यते। तत्र प्रथमं श्रीवृन्दावनवासि
तस्य प्राणकोटिनिर्मञ्छनीयदर्शनलेशस्य विरहस्ततः श्रीमदुद्धव
सान्त्वनं पुनश्च पूर्ववदेव तेषां महाव्याकुलतायामुदितर्यां श्रीबल
द्वारापि तथैव समाधानम्। अथ पुनरपि परमोत्कण्ठाकोटिविह
हृदयानां सूर्य्योपरागव्रज्याव्याजया तदवलोकनकाम्यया कुरु
गतानां तेषां घर्म्मान्ते चातकानामिव निजाङ्गनवघनसंघाव
दानेन साट्टश्संलापमन्द्रगर्जितेन च पुनर्जीवनसञ्चारणम्।
दिनकतिपयसहवासादिना च तानतिक्षीणतरानन्नेन दुर्भिक्ष
तानिव संतर्प्य तैः सह निजविहारविशेषाणामेकमेव रम्यम
श्रीवृन्दावनं प्रत्येव पूर्ववत् सम्भावितया निजागमनाश्वासवचनर
प्रस्थापनम्। सूर्य्योपरागयात्रा त्वियं दूरतः प्रस्तुतापि कंसवधाव
सम्वत्सरान्तरा शिशुपालशाल्वदन्तवक्त्रवधात् प्रागिव ज्ञेया। श्रीबल
तीर्थयात्रा हि दुर्य्योधनवधैककालीना। तस्मिन् तस्यां कुरुक्षेत्र
खलु दुर्य्योधनवधः। सा च सूर्य्योपरागयात्रायाः पूर्वं प्रठिता। सूर्य्योप
यात्रा च श्रीभीष्मद्रोणदुर्य्योधनाद्यागमनमयीति। तत्रायं
प्रथमं सूर्य्योपरागयात्रा, ततः श्रीयुधिष्ठिरसभा, तस्यां शिशुपाल
ततः कुरुपाण्डवद्यूतं, तदैव शाल्ववधो वनपर्वणि प्रसिद्धः, दन्तवक्त्र
ततः, ततः पाण्डवानां वनगमनं, ततः श्रीबलदेवस्य तीर्थयात्रा,
दुर्य्योधनवध इति। तस्मादुपरागयात्रा कंसवधान्नातिकालविलम्ब
भवदिति लभ्यते। यत्तु तस्यामेव, आस्तेऽनिरुद्धो रक्षायां कृतवर्मा
यूथप इति, तदपि श्रीप्रद्युम्नानिरुद्धयोरल्पकालादेव यौवनप्राप्त्या
वति। यथोक्तम्—नातिदीर्घेण कालेन स कार्ष्णी रूढयौवन
अथवानिरुद्धनामा कश्चित् कृष्णनन्दन एव यो दशमान्तेऽष्टादशमहा
रथमध्ये गणितः। तथैव च व्याख्यातं, तत्र तैरिति। अतः कुरु
यात्रायामेव श्रीमदानकदुन्दुभिना श्रीकुन्तीदेवीं प्रत्युक्तम्—
प्रतापिताः सर्वे वयं याता दिशो दश। एतच्चैव पुनः स्यामं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सादिताः स्वसरिति । अतः प्रथमदर्शनादेव द्रौपदीश्रीकृष्णमहिषीणां परस्परविवाहप्रश्नोऽपि संगच्छते । अत्र, आगमिष्यत्यदीर्घेण कालेन व्रजमच्युत इत्यादिकमपि पद्यं सहायं भवेत् । प्रकृतमनुसरामः । अथ वृन्दावनं प्रस्थापितानामपि तेषां पुनरपि निजादर्शनेन महा-सन्तापवह्निमतीवोत्कण्ठाभिः श्रीगोविन्दः सस्मार, यामेव साक्षाद्-दृष्टवान् परमोत्कण्ठः श्रीमदुद्धवः । तमवसरं लब्ध्वा प्रस्तावान्तरे, गायन्ति ते विशदकर्म्म गृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मवि-मोक्षणञ्च । गोप्यश्च कुञ्जरपतेर्जनकात्मजायाः पित्रोश्च लब्धशरणा मुनयो वयञ्चेति व्यञ्जयामास । ततश्च राजसूयसमाप्त्यनन्तरं शाल्व-दन्तवक्त्रवधान्ते झटिति स्वयं गोकुलमेव जगाम । तथाच पाद्मो-त्तरखण्डे गद्यपद्यानि । अथ शिशुपालं निहतं श्रुत्वा दन्तवक्त्रः कृष्णेन योद्धुं मथुरामाजगाम । कृष्णस्तु तच्छ्रुत्वा रथमारुह्य तेन योद्धुं मथुरायामाययौ । तयोर्दन्तवक्त्रवासुदेवयोरहोरात्रं मथुराद्वारे संग्रामः समवर्त्तत । कृष्णस्तु गदया तं जघान । स तु चूर्णितसर्वाङ्गो वज्रनिर्भिन्नो महीधर इव गतासुरवनीतले पपात । सोऽपि हरेः सारू-प्येण योगिगम्यं नित्यानन्दसुखदं शाश्वतं परमं पदमवाप । इत्थं जयविजयौ सनकादिशापव्याजेन केवलं भगवतो लीलार्थं संसृतावव-तीर्य्य जन्मत्रयेऽपि तेनैव निहतौ जन्मत्रयावसाने मुक्तिमवाप्तौ । कृष्णोऽपि तं हत्वा यमुनामुत्तीर्य्य नन्दव्रजं गत्वा सोत्कण्ठौ पितरा-वभिवाद्याश्वास्य ताभ्यां साश्रुकण्ठमालिङ्गितः सकलगोपवृन्दान् प्रण-म्याश्वास्य बहुवस्त्राभरणादिभिस्तत्रस्थान् सर्वान् सन्तर्पयामास । कालिन्द्याः पुलिने रम्ये पुण्यवृक्षसमाचिते । गोपनारीभिरनिशं क्रीड़यामास केशवः । रम्यकेलिसुखेनैव गोपवेशधरः प्रभुः । बहु-प्रेमरसेनात्र मासद्वयमुवास हेति । अत्रेदं ज्ञेयम् । दन्तवक्त्रस्य मथुरायामागमनं राजसूयानन्तरमिन्द्रप्रस्थे श्रीकृष्णावस्थानं ज्ञात्वा जरासन्धवधार्थं श्रीमदुद्धवयुक्तिच्छायामवलम्ब्य गदाकुशलम्मन्यत्वेन-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

काकिनं द्वन्द्वयुद्धाय तमाह्वयितुं तदर्थमेव तद्राष्ट्रं तदुपद्रावयि
पुनश्च द्वारकागतं तं श्रुत्वा प्रस्थितस्य तस्य मथुराद्वारगतेन
यत् स्थानमद्यापि द्वारकादिग्गतं दतिहेति प्रसिद्धं वर्त्तते। सर्वं
श्रीनारदस्य श्रीभगवद्रथस्य च मनोमयत्वात् सम्भवति। अतः श्री
वतेनापि विरोधो नास्तीति अलं कल्पभेदकल्पनया। यत एव भो
तस्य शाल्ववधश्रवणमपि तत्रोक्तं सम्पद्यते। तथा श्रीकृष्णस्य गो
गमनञ्च श्रीभागवतसम्मतमेव। तास्तथा तप्यतीर्वीक्ष्य स्वा
यदूत्तमः। सान्त्वयामास सप्रेमैरायास्य इति दौत्यकैरिति।
यूयं व्रजं तात वयञ्च स्नेहदुःखितान्। ज्ञातीन् वो द्रष्टुमेष्य
विधाय सुहृदां सुखमिति। हत्वा कंसं रङ्गमध्ये प्रतीपं सर्व
ताम्। यदाह वः समागत्य कृष्णः सत्यं करोति तदिति। आ
ष्यत्यदीर्घेण कालेन व्रजमुच्युतः। प्रियं विधास्यते पित्रोर्भ
सात्वतां पतिरिति च। तस्य श्रीमुखेन भक्तमुखेन च बहुशः सं
नामन्यथानुपपत्तेः, सत्यसंकल्प इति हि श्रुतिः। ईश्वराणां वचः
मिति स्वयं श्रीभागवतञ्च। न केवलमेतावदेव कारणं, तस्य
गमनमपि स्फुटमेवेत्याहुः—यर्ह्यम्बुजाक्षापससार भो भवान् कु
मधून् वाथ सुहृद्दिदृक्षया इति॥ १७४॥

अत्र मधून् मथुरां वेति व्याख्याय तदानीं तन्मण्डले
व्रजस्था एव प्रकटा इति तैरप्यभिमतम्। तत्र योगप्रभावेन
सर्वं जनं हरिरित्यत्र सर्वशब्दात्॥ १॥ ११॥ द्वारकावासिनः श्री
वन्तम्॥ १७४॥

तदेतदागमनं दन्तवक्रबधानन्तरमेव श्रीभागवतसम्मतम्।
ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखमिति। कंसव
अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया। गतांश्चिरा
च्छत्रुपक्षक्षपणचेतसः॥ इति कुरुक्षेत्रयात्रायाञ्च, श्रीभगव
तदनागमने दन्तवक्रबधात्तच्छत्रुपक्षक्षपणसुखदानमेवापे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सीत् । तदेवं मासद्वयं प्रकटं क्रीड़ित्वा श्रीकृष्णोऽपि तानात्म-विरहार्त्तिभयपीड़ितानवधाय पुनरेवं माभूदिति भूभारहरणादिप्रयोजनरूपेण निजप्रियजनसङ्गमान्तरायेण संवलितप्रायां प्रकटलीलां तल्लीलावहिरङ्गेणापरेण जनेन दुर्वेदतया तदन्तरायसम्भावनालेशरहितया तया निजसन्तताप्रकटलीलयैकीकृत्य पूर्वोक्ताप्रकटलीलावकाशरूपं श्रीवृन्दावनस्यैव प्रकाशविशेषं, तेभ्यः, कृष्णञ्च तत्र छन्दोभिः स्तूयमानमित्याद्युक्तदिशा, स्वेन नाथेन सनाथं श्रीगोकुलाख्यं पदमाविर्भावयामास । एकेन प्रकाशेन च द्वारवतीञ्च जगामेति । तथा पाद्मोत्तरखण्ड एव तदनन्तरं गद्यम् । अथ तत्रस्था नन्दादयः सर्वे जनाः पुत्रदारसहिताः पशुपक्षिमृगादयश्च वासुदेवप्रसादेन दिव्यरूपधरा विमानमारूढ़ाः परमवैकुण्ठलोकमवापुरिति । कृष्णस्तु नन्दगोपव्रजौकसां सर्वेषां परमं निरामयं स्वपदं दत्त्वा दिवि देवगणैः संस्तूयमाणो द्वारावतीं विवेशेति च । तत्र नन्दादयः पुत्रदारसहिता इत्यनेन, पुत्राः श्रीकृष्णादयः, दाराः श्रीयशोदादय इति लब्धे, पुत्रादिरूपैरेव श्रीकृष्णादिभिः सह तत्प्राप्तेः कथनात्, प्रकाशान्तरेण तत्र तेषां स्थितिः तैरपि नावगतेति लभ्यते । वासुदेवप्रसादेनाकस्मात् आगमनरूपेण परमप्रसादेन दिव्यरूपधरास्तदानन्दोत्फुल्लतया पूर्वतोऽप्याश्चर्य्यरूपाविर्भावं गता इत्यर्थः । विमानमारूढ़ा इति गोलोकस्य सर्वोपरिस्थितिदृष्ट्यपेक्षया । वस्तुतस्त्वयमभिसन्धिः । कृष्णोऽपि तं हत्वा यमुनामुत्तीर्य्येति गद्यानुसारेण यमुनाया उत्तरपार एव व्रजवासस्तदानीमित्यवगम्यते । स च तेषां वृन्दावनदर्शनाक्षमतया एव तत्परित्यागेन तत्र गतत्वात् । ततश्च विमानशिरोमणिना स्वेनैव रथेन पारप्रापणपूर्वकं श्रीमद्गोपेभ्यः श्रीवृन्दावन एव पूर्वं गोलोकतया दर्शिते तत्प्रकाशविशेष एव निगूढ़ं निवेशनं वैकुण्ठावाप्तिरिति । अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेदिति न्यायेन । समीपार्थोऽप्ययमर्कशब्दः । न वेद स्वां गतिं भ्रमन्निति वदता

श्रीभगवता तेषां गतित्वेनापि विभावितोऽसौ लोकः। तस्माद् श्री
वने निगूढ़प्रवेश एव समञ्जसः। अत्र वृन्दावननित्यलीलावाक्ये
ष्वाधिकमप्यस्ति प्रमाणम्। अथ गद्यान्ते द्वारावतीं विवे
शाल्ववधार्थं निर्गतैः श्रीभगवत्प्रत्यागमनं प्रतीक्षमाणैर्यादवैः
वेति श्रीभागवतवदेव लभ्यते। तं विना स्वयं गृहप्रवेशानौचित्या
क्षणार्द्धं मेनिरेऽर्भका इतिवदल्पकालभावनेन वा। तदेवं
श्रीगोकुलागमनाभिप्रायेणैव श्रीवृन्दावननाथोपासनामन्त्रे नित्यत
त्वेन तद्विशेषणं दत्तम्। यथा बौधायनोक्ते—गोविन्दं म
ध्यायेद्गवां मध्ये स्थितं शुभमिति ध्यानानन्तरं, गोविन्द गोपीजन
भेश कंसासुरघ्न त्रिदशेन्द्रवन्द्य इत्यादि। अन्यत्र च—गोविन्द गो
जनवल्लभेश विध्वस्तकंसेत्यादि। इत्थमेव पुनः प्राप्त्यभिप्रायेणोक्त
अनुस्मरन्त्यो मां नित्यमचिरान्मामुपैष्यथेति। दिष्ट्या यदासी
स्नेहो भवतीनां मदापन इति। गोपीनां स गुरुर्गतिरिति च। तं
केवलेन हि भावेनेत्यादिपद्यद्वयकृतेन साधकचरीणां गोपीनां
तत्प्राप्तिप्रस्तावेन नित्यप्रेयसीनामपि तन्मह्यावियोगानन्तरप्राप्तिं
वियोगस्यातीतत्वनिर्देशाद्द्रढ़यति द्वाभ्याम्—रामेण सार्द्धं म
प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः। विगाढ़भावेन न मे वियो
तीव्राधयोऽन्यं ददृशुः सुखाय। तास्ताः क्षपाः प्रेष्ठतमेन नीता
वृन्दावनगोचरेण। क्षणार्द्धवत्ताः पुनरङ्ग तासां हीना मया कल्प
बभूवुः ॥ १७५ ॥

अत्र विगाढ़भावेन वियोगतीव्राधयः सत्यो मत्तोऽन्यं निजस
दिकमपि न सुखाय ददृशुः। ततश्चाधुना तु सुखाय पश्यन्तीति वियो
नास्तीत्यर्थः। एवं तास्ताः क्षपाः मया हीनाः सत्यः कल्पसमा
रधुना तु तादृश्यो न भवन्तीति नास्त्येव वियोग इत्यर्थः। ततश्च प्रक
प्रकटलीलयोः पृथक्त्वाप्रतिपत्त्यैवाप्रकटभावमापद्य स्वनामरूपयोरैक्य
स्थिता इत्याह—ता नाविदन् मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्

त्वम् । यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नाम-रूपे ॥ १७६ ॥

तास्तथाभूतविरहौत्कण्ठातिशयेनाभिव्यक्तदुर्द्धरमहाभावाः सत्यः अथ कदाचित्तासां दर्शनार्थं गते मयि लब्धो योऽनुषङ्गो महामोहन-भावाभिव्यक्तिकारी पुनः संयोगस्तेन बद्धा धीर्यासां तथाभूताः सत्यः स्वं ममतास्पदम् आत्मानमहङ्कारास्पदञ्च अदः अप्रकटलीलानुगतत्वे-नाभिमतं वा तथा इदं प्रकटलीलानुगतत्वेनाभिमतं वा यथास्यात्तथा नाविदन् । किन्तु द्वयोरैक्यं नैवाविदुरित्यर्थः । प्रकटाप्रकटतया भिन्नं प्रकाशद्वयमभिमानद्वयं लीलाद्वयञ्चाभेदेनैवाजानन्निति विवक्षितम् । ततश्च नाम च रूपञ्च तस्मिन् तत्तन्नामरूपात्मनि अप्रकटप्रकाश-विशेषे प्रविष्टा इव न तु प्रविष्टा वस्त्वभेदादित्यर्थः । नामरूप इति समाहारः । तत्र प्रकटाप्रकटलीलागतयोर्नामरूपयोरभेदे दृष्टान्तः, यथा समाधौ मुनय इति । समाधिरत्र शुद्धजीवस्येति गम्यम् । तयोर्लीलयो-र्भेदावेदने दृष्टान्तः, यथाब्धितोये नद्य इति । यथा नद्यः पृथिवीगता-मब्धितोयगताञ्च स्वस्थितिं भेदेन न विन्दन्ति, किन्तूभयस्यामपि स्थितौ समुद्रतोयानुगतावेवाविशन्ति, तथा, मदनुषङ्गे सति प्रकटामप्रकटाञ्च लीलास्थितिं ताश्च भेदेन न विदुः, किन्तु मय्येवाविशुरित्यर्थः । दृष्टान्तस्त्वयं लीलाभेदावेदनांश एव, न तु सर्वावेदनांशे, लोकवत्तु लीलाकैवल्यमितिवत् । तदेवं प्रकटाप्रकटलीलयोर्द्वयोरपि तासां स्वप्राप्तौ भाव एव कारणं दर्शितम् । ततश्चाप्रकटलीलायां प्रविष्टा अपि यादृशं तस्य स्वरूपं प्रापुस्तादृशंयन्नन्यदप्यनुवदति—मत्कामा रमणं जारं मत्स्वरूपविदोऽबलाः । ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः इति ॥ १७७ ॥

एवं पूर्वोक्तरीत्या ता अबला ब्रह्म प्रापुस्तच्च परमं भगवद्रूपं प्रापुः ब्रह्मणो हि प्रतिष्ठाहमित्यादेः । तदेवं स्थिते तासां मदंशभूतानां नित्यप्रियाणां सङ्गादन्या अपि तदानीमेव गोकुलभाजः शतसहस्रशः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रापुः । सङ्गस्य तत्प्रापकत्वञ्च झटिति समानभावजनकत्वात् । यो
मेतत् पूर्वमेव—केवलेन हि भावेन गोप्यो गाव इत्यादि । एवं
ष्वपि द्विविधत्वं गम्यम् । किमाख्यं प्रापुस्तत्राह, मां कृष्णा
नराकृति परं ब्रह्मेति पुराणवर्गात्, योऽवताराणां मध्ये श्रेष्ठो
को भविता कथमस्यावतारस्य ब्रह्मता भवतीति तापनीश्रुतेश्च । को
सम्बन्धं त्वां प्रापुस्तत्राह, रमणं जारमिति । रमणः पतिर्नन्दन
यौगिकत्वबाधात् । यथा मित्रापुत्रो मित्रानन्दन एवोच्यते,
मित्रापतिः । मित्रापतिरपि मित्रारमण एवोच्यते, न तु मित्रा
इति । ततश्चायमर्थः । यथा भीष्मसुदायदर्शनीयं कटं करोतीत्यत्र
खलु विशेष्यस्य कृतिं प्रत्याययन्ती विशेषणानामपि प्रत्याययति,
करोति तच्च भीष्ममित्यादिरीत्या, तथात्रापि प्राप्तं ब्रह्म प्रापुस्तच्च
भगवद्रूपं तच्च मां श्रीकृष्णाख्यं स्वयं भगवद्रूपमित्यादिरीत्या ।
जारमित्यत्रैव रमणविशेषत्वे लब्धे, रमणपदमधिकं स्यादिति
धिक्येनार्थाधिक्यमिति न्यायादधिकार्थमेव बोधयति । तत्र च
पदस्यैवार्थः पर्य्यवस्यतीति प्रयत्नेनोपादानाज्जारत्वञ्च प्रातीति
त्वम् । गोपीनां तत्पतीनाञ्चेत्यादेः । किन्तु साधारण्येऽप्यपि
सर्वांशित्वात् सर्वपातृत्वाच्च पतित्वमेव । तथोक्तं पिङ्गलया,
रमणेन वै इति, रमेऽनेन यथा रमेति । लक्ष्मीदेव्या च, स वै
स्यादकुतोभयः स्वयं समन्ततः पाति भयातुरं जनमिति । तस्माद्
यं जारत्वेन प्रतीतं प्रापुः, पश्चान्निजरूपमेव तं प्रापुरिति । तथा
मित्येवोक्ते पर्य्यवसितं न सिद्ध्येदिति रमणमित्युच्यते । रमणमि
भगवत्त्वं श्रीकृष्णरूपत्वञ्च न सिद्ध्यति, मामित्येवोक्ते ब्रह्मत्वं
त्वञ्च प्रमाणान्तरसाकाङ्क्षं भवति, इति साक्षादेव तत्तदुच्यते । पूर्व
त्वाद्रमणपदेनापि जारत्वमेव प्रतीयेतेति तन्निरासार्थं तत्तदनुवाद
वश्यं कार्य्यः । ब्रह्म मां परममित्येषु पदेषु पाठक्रमस्याविवक्षित
ज्जारभावस्य च पूर्वत्वादार्थिक एव क्रमो लभ्यते । एष एव च

बलीयान् । ततो न विपर्य्ययेणार्थश्च कार्य्यः । किञ्च अप्राप्ते हि शास्त्रमर्थवदिति न्यायेन, दध्ना जुहोतीत्यादिवदप्राप्ते रमणपद एव तात्पर्य्यं, न तु पूर्वपूर्वप्राप्ते व्रजादिजारपर्य्यन्ते । नन्दगोपसुतं देवि पतिं मे कुरु ते नमः । इति कृतजपानां कुमारीणान्तु पतिभावनापूर्त्तेति चेत्तर्हि तासामनवद्यभावानां सङ्कल्पसिद्धिरेव श्रीभगवता सुतरां कार्य्या । तत्रैव च स्वयमङ्गीकृतं याताबला इत्यादौ सिद्धा इति सयेनि च । सर्वत्र पर्य्यवसाननिरुपद्रवेष्टप्राप्तिरेव खलु सिद्धान्तरसशास्त्रयोः सम्मता । प्राचीनैराधुनिकैश्च लौकिकालौकिकवर्णकैः कविभिस्तथैवोपाख्यायते । श्रीमदस्मदुपजीव्यचरणैरपि ललितमाधवे तथैव समापितम् । श्रीभगवता च, यत्त्वहं भवतीनां वै इत्यादिना या मया क्रीड़िता रात्रयामित्याद्यन्तेन तथैवाभिप्रेतम् । जारभावमयः सङ्गमश्च सदैव सोपद्रवस्तस्मादसौ पर्य्यवसानपुरुषार्थत्वे तत्तच्छास्त्रसम्मतो न स्यात् । तथा परकोटिसंख्यानां निजपदाब्जदलैरित्यादियुगले कुजगतिं गमिता न विदामः कश्मलेन कवरं वसनं वेति चेत्यादिरीतीनामुत्कटमहाभावानां तासां व्रजे भावसगोपनं पूर्वमपि दुष्करमासीत् । महाविरहे तु जाते, निवारयामः समुपेत्य माधवं किन्नोऽकरिष्यन् कुलवृद्धबान्धवा इति, विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविन्द दामोदर माधवेति चेति, ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिका इति, कृष्णदूते व्रजायाते उद्धवे त्यक्तलौकिका इति,गतह्रिय इति,काचिन्मधुकरं दृष्ट्वेति,या दुस्त्यजं स्वजनमार्य्यपथञ्च हित्वेति, गोप्यो हसन्त्यः पप्रच्छू रामसन्दर्शनादृता इति, मातरं पितरं भ्रातॄन् पतीन् पुत्रान् स्वसॄरपि यदर्थे जहिम दाशार्ह दुस्त्यजान् स्वजनान् प्रभो इति च श्रूयते । अत्र निवारयाम इत्यादिकं यथा संक्लृप्तं तथैव विसृज्य लज्जामित्यादिनाचरितम् । तासां लज्जात्यागः खलु भावव्यक्त्यैव स्यात्, सर्वेषां गोकुलवासिनां रोदनादिसाम्यात् । ततस्तद्व्यक्तिपूर्वकरोदनद्वारेण ताभिर्निवारणमपि योग्यमिति । एवं त्यक्तलौकिका इत्यादिषु च स्पष्टैव भावव्यक्ति-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

गंस्यते। किं बहुना मातरमित्यादौ मावादीन् जहिम इत्युक्तं। पूर्वरागवत् पतिसुतान्वयभ्रातृबान्धवानतिविलङ्घ्य रतिमात्रमुक्तम्। ते हसन्त्य इति तून्मादलक्षणं, तदानीं ह्यासायोग्यत्वात्, यथैव काचित् करं दृष्ट्वेत्यादावुन्माद एव दृश्यते। तदेवं तदानीन्तु दुर्धरमहाप्रेमोन्मत्तचेष्टानां निरपत्रपव्यञ्जितभावानां त्यक्तमात्रादीनां तासां सख्यानां भावस्य संगोपनं नोपपद्यत एव। किन्तु ज्ञातोऽप्यसौ विरहपीड़या सर्वैरज्ञात इव आसीत्। अनन्तरं त्वनुसन्ध एव। भावसंगोपनयैव कालकतिपयं स्वस्य रसतामावहति। व्यक्तं स्वस्य परेषामपि सर्व एव स्तुतो धर्म्ममयत्वप्रतीतौ जातायामेवेति विदां मतम्। अधर्म्ममयत्वप्रतीतौ त्वश्लीलतया व्याहन्यत एव। अधर्म्ममयत्वञ्च द्विधा; परकीयात्वेन परस्पर्शेन च। तस्माद् यथैव ज्ञानमय्यां श्रीपरीक्षित्सभायाम् ऐश्वर्य्यज्ञानरीत्यैव तत् परिहृत्य वहत्वं समाहितम्। तथा लोकवल्लीलाकैवल्यावलम्बने प्रेममय्यां श्रीगोकुलसभायां लोकरीत्यैव समाधेयम्। तथाहि—नासूयन् कृष्णाय मोहितास्तस्य मायया। मन्यमानाः स्वपार्श्वस्थान् स्वान् दारान् व्रजौकसः। इति यत् श्रूयते तस्याप्ययमर्थः। मायामोहिताः सन्तो नासूयन्, तस्य स्वनित्यप्रेयसीस्वीकारलक्षणे कायवंश्मग्रामार्थसुहृत्प्रियात्मतनयप्राणाश्रयजीवातुतमः परदारस्वीकारमङ्गलमङ्गीकरोतीति दोषारोपं नाकुर्वन्नित्यर्थः। मायामोहितत्वे हेतुमाह, मन्येति। स्वरूपसिद्धानां भगवद्दाराणां अपरकर्त्तृकबलात् परिहारार्थं तत्तदाकारतया मायाकल्पिता ये स्वे स्वे दारास्तान् स्वपार्श्वस्थान् मन्यमानाः स्वमत्या निश्चिन्वाना इत्यर्थः। परमार्थीयास्तस्या मायाया निजप्रभुप्रेयसीनां तदेकानुरागस्वभावमर्य्यादारक्षणार्थं परिणयमारभ्य सदैव सावधानतायां योग्यत्वाच्चासौ सुपलक्षणमेवेति। तदेवञ्च तत्पतिंमन्यादिष्वेव विवाहादिप्रयत्नसमयेष्वेव च स्वरूपसिद्धा आवव्रिरे। अन्येषु चान्यदा च कृ

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एवेति गम्यते। तावदेव च युक्तं, तासु मर्य्यादारक्षणोत्कण्ठावर्द्धनैकप्रयोजनत्वात्तस्याः। यथैव हि, तव सुतः सति यदाधरबिम्बे दत्ता वेणुरित्यादौ, शुश्रूषन्त्यः पतीन् काश्चिदित्यादौ, ता वार्य्यमाणा पतिभिरित्यादौ च स्वरूपसिद्धानामेव दर्शनं तत्र तत्रावगतम्। एवमन्यत्राप्यवगम्यम्। तासामन्यकृतध्वंसाभावस्य कारणं प्रभावश्च संभाव्यते, य एतस्मिन्महाभागे प्रीतिं कुर्वन्ति मानवाः। नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुरा इति कैमुत्यप्राप्तेः। अथ तासामपत्यश्रवणञ्च यात्वप्रभृतीनामपत्ये तद्व्यवहारात्। स्वापत्यत्वे सति विभाववैगुण्येन रसाभासत्वमापद्येत। ततश्च भजते तादृशीः क्रीड़ा याः श्रुत्वा तत्परो भवेदिति, सिषेवेत्यादौ सर्वाः शरत्काव्यकथारसाश्रया इति च विरुध्येत। परपुत्रत्वप्रतिपादनायैव हि पाययन्त्यः शिशून् पय इत्येवोक्तं, न तु सुतान् स्तनमिति। अतएव मातरः पितरः पुत्रा भ्रातरः पतयश्च व इति परिहासत्वेनैव श्रीभगवद्वाक्यं रसाय सम्पद्यते; वास्तवत्वेन तु वैरस्यायैव स्यात्, तासामङ्गीकरिष्यमाणत्वात्। क्वचित्ताभिरेव तेषु यत् पतिशब्दः प्रयुक्तस्तद्बहिर्लोकव्यवहारत एव नान्तर्दृष्टितः, यत् पत्यपत्यसुहृदामित्यादिना तदङ्गीकारात्, मामेव दयितं प्रेष्ठमात्मानं मनसा गता इति भगवता तासामन्तःकरणप्रकाशनात्। गोप्यः किमाचरदयमित्यादौ दामोदराधरसुधामपि गोपिकानां स्वमित्यनेन ताभिः स्वयमुक्तेश्च। तत एतदुक्तं भवति, रासपञ्चाध्याय्यां, नासूयन् खलु कृष्णायेत्युक्तदिशा, स वो हि स्वामीति ताः प्रति तापनीस्थितदुर्वाससो वाक्यवत्, कृष्णवध्व इत्युक्तरीत्या च, याः खलु योगमायामुपाश्रित इति श्रवणात्तत्तदर्थंभगवन्नियुक्तयोगमायाकल्पिताकल्पिततया योगमायैकविदिताः, स्वतः परतश्च प्रच्छन्नविविधायमाना आसन्, तास्तु पश्चाद् योगमाययैव देव्या प्रापिताभ्यां मर्य्यादोत्कलिताभ्यां स्वपालितस्य रसपोषतरोः पर्य्यवसाननिरुपद्रवमहासुखप्राप्तिरूपाय फलाय मृन्याकाशादिवाण्यादिकं द्वारीकृत्य वा स्वयमेव प्रकटीभूय एव वा श्रीगो-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कुलवासिनः प्रति तथैव व्यक्तीकृताः, स्वरूपेण मामेव रमणं
नासूयन् खलु कृष्णायेत्याद्युक्तासूयापरिहारस्य सम्यक्त्वाय तास्
तास्तु स्वस्वपतिमित्येव श्रीभगवन्मतम्। दृश्यते च, संज्ञाग्रह
वत् कल्पनाया व्यक्तत्वमेव परिणामः सर्वत्र। तदित्थमेव मातादी
दीनामभीष्टं सिध्यति ॥ ११ ॥ १२ ॥ श्रीभगवान् ॥ १७७ ॥

पूर्वोक्त एवाप्रकटलीलाप्रवेशप्रकटलीलाविष्कारूपोऽर्थस्तद
प्रश्नोत्तराभ्यामप्यभिप्रेतोऽस्ति। प्रश्नस्तावत् श्रीउद्धव उवाच।

संशयः शृण्वतो वाचं तव योगेश्वरेश्वर।
न निवर्त्तत आत्मस्थो येन भ्राम्यति मे मनः ॥ १७८ ॥

तव वाचं शृण्वतोऽवधारयतोऽपि ममात्मस्थः संशयो मयि
व्यवहित इत्यादिकाध्यायत्रयगतमहावाक्यार्थपर्य्यालोचनासाम
निवर्त्तते। कुतः, येन यत एव, रामेण सार्द्धं मथुरां प्रणीते इ
लक्षणात्तव वाक्यान्मम मनो भ्राम्यति। हन्त तासामनेन स
कुत्र कथं विद्यते इति चिन्तया न स्वस्थं वर्त्तत इत्यर्थः। अथो
तत्र तस्य संशयमपनेतुं द्वाभ्यां तावत्तच्चित्तं स्वस्थयन् श्रीभगवानु

स एव जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः। मनो
सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥ १७९ ॥

स एष मल्लक्षणो जीवो जगतो जीवनहेतुः विशेषतो
जीवनहेतुर्वा परमेश्वरः प्राणेन मत्प्राणतुल्येन घोषेण व्रजे
विवरप्रसूतिर्विवरादप्रकटलीलातः प्रसूतिः प्रकटलीलायामभिव्यक्ति
तथाभूतः सन् पुनर्गुहां अप्रकटलीलामेव प्रविष्टः। कीदृशः स
सत्वा, मात्राः मम चक्षुरादीनि स्वरो गानादिः वर्णो रू
इत्थं स्थविष्ठः स्वपरिजनानां प्रकट एव सन् अन्येषां सूक्ष्ममदृश्यं
रङ्गभक्तानाञ्च मनोमयं कथञ्चिन्मनस्येव गम्यं यद्रूपं प्रकाशस्तदुपे
प्रकटलीलाविष्कारस्य सदृष्टान्तं स्पष्टयति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यथानलः खेऽनिलबन्धुरुष्मा बलेन दारुण्यधिमथ्यमानः । अणुः प्रजातो हविषा समिध्यते तथैव मे व्यक्तिरियं हि वाणी ॥ १८० ॥

दृष्टान्तोऽयं गर्भादिक्रमेणाविर्भावमात्रांशे । तृतीयेऽपि । तदुक्तं श्रीमदुद्धवेनैव । अजोऽपि जातो भगवान् यथाग्निरिति । व्यक्तिराविर्भावः । हि यस्मादियं स्वरहस्यैकविज्ञस्य ममैव वाणी नात्रासम्भावना विधेयेत्यर्थः । ततश्चानन्तरं वक्ष्यमाण एवं गदिरित्यादिग्रन्थस्तु संशयापनोदने व्याख्येयः । एवं पूर्वोक्तवाक्यस्यैवार्थभेदेन गदिर्लौकिकभाषणमिति ज्ञेयं, तस्याप्युत्पत्तिर्ज्ञेयेत्यर्थः । स च सतात्पर्य्यकोऽर्थभेदष्टीकायामेव दृश्यते इति ॥ ११ ॥ १२ ॥ श्रीशुकः ॥ १७८-१८० ॥

तदेवं श्रीमद्भागवते पुनर्व्रजागमनादिरूपोऽयमर्थो बहुधा लब्धोऽपि पाद्मोत्तरखण्डवद् यन्न स्पष्टतया वर्णितस्तत् खलु निजेष्टदेवत्वस्य वहिर्मुखान् प्रत्याच्छादनेच्छया अन्तर्मुखान् प्रत्युत्कण्ठावर्द्धनेच्छयेति गम्यते । अतएवोक्तम्—परोक्षवादा ऋषयः परोक्षञ्च मम प्रियमिति । यदेतत्तु मया क्षुद्रतरेण तरलायितं क्षमतां तत् क्षमाशीलः श्रीमान् गोकुलवल्लभः । तदेतत् श्रीलवृन्दावने लीलाद्वयस्य मिलनं सावसरमेव प्रस्तुतम् । द्वारकायान्तु प्रसिद्धमेव । तत्र मौषलादिलीला मायिक्येवेति पूर्वमेव दर्शितम् । वस्तुतस्तु द्वारकायामेव सपरिकरस्य श्रीभगवतो निगूढ़तया स्थितिर्यादवानां च नित्यपरिकरत्वात्तत्त्यागेन स्वयं भगवत एवान्तर्द्धाने तैरतिक्षोभेणोन्मत्तचेष्टैरुपमर्द्दिता पृथिव्येव नश्येदिति प्रथमं तेषामन्तर्द्धापनम् । अतएवोक्तम्—भूभारराजपृतना यदुभिर्निरस्य गुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः । मन्येऽवनेर्ननु गतोऽप्यगतं हि भारं यद् यादवं कुलमहो अविषह्यमास्ते इति । अत्र तेषामधार्म्मिकतया तु पृथिवीभारत्वं न मन्तव्यम् । ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् । विप्रशापः कथमभूत् वृष्णीनां कृष्णचेतसामित्यादौ शय्यासनाटनालापक्रीड़ास्नानाशनादिषु न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतस इत्यादौ च परमसाधुत्वप्रसिद्धेः । पृथ्वीभारस्य

व्यक्तिग्राह्यत्वमात्रेण नेष्यते पर्वतसमुद्रादीनामनन्तानां वि-
त्वात्। तथा न वस्तव्यमित्यादिभगवद्वाक्यस्य तात्पर्य्यमिदं, मा-
यदूनां तादृशत्वदर्शनं ममानन्दवैभवधाम्नि मदीयजनसुख-
लासैकनिधौ द्वारकायां नोचितं, प्रभासे तु तत्तद्योगाद्दुचितं
अथच जिजीविषुभिरित्युक्ता वृजिनानि तरिष्याम इति चोक्ता
तेषां तादृशत्वं न भविष्यतीत्येवोक्तम्। तत्र चास्माभिरिति क-
चोक्ता स्वैनैक्यसूचनया स्वात्मवदन्यथाभावत्वमेकगतित्वञ्च द-
मिति। तदेवं स्थिते तैः साकं श्रीभगवतो द्वारकायामेव
स्थितिमाह—द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत् क्षणात्। व-
महाराज श्रीमद्भगवदालयम्। नित्यं सन्निहितस्तत्र भगवान्
सूदनः। स्मृत्याशेषाशुभहरं सर्वमङ्गलमङ्गलम्॥ १८१॥

लोकदृष्ट्यैव हरिणा त्यक्तां अत्यक्तामिति वा, नित्यं सन्निहित
वक्ष्यमाणत्वात्। ततश्चोभयथाप्याप्लावनं परितो जलेन परिख-
वरणं तज्जलमज्जनञ्च समुद्रे यैव श्रीभगवदाज्ञयात्यक्तभूमिक
हस्तिनापुरप्रस्थापितवहिर्जनगृहाद्यधिष्ठानवहिरावरणस्यैव।
रचनं विश्वकर्म्मणा तस्यैव प्रकटलीलायाः प्रापञ्चिकमिश्रत्वात्
सुधर्म्मादीनां स्वर्गादागमनञ्च युज्यते। अप्रकटलीलायां ततोऽपि
तरं सभान्तरादिकमपि स्यात्। श्रीमान् यादवादिगृहवृन्द
शोभोपशोभावान् यो भगवदालयस्तं वर्जयित्वा। तदेवमद्यापि
मध्ये कदाचिदसौ दूरतः किञ्चिद्दृश्यते इति तत्रत्यानां महती प्र-
अत्र महाराजेति सम्बोधनं दृष्टान्तगर्भं, यद्वा महान्तो राजानो
लक्षणा यत्र तथाभूतं तदालयं श्रीकृष्णनित्यधामरूपं द्वारकापुर
केवलं पुरमात्रास्तित्वं, तत्र च श्रीमति भगवदालये मधु
श्रीकृष्णो नित्यमेव सन्निहितः, अर्थात्तत्रत्यानां, किं वा न तत्र
हितः, भगवान् यादवादिलक्षणाखिलनिजैश्वर्य्यवानेव। तद
मेव विशिनष्टि, स्मृत्येति। साक्षादधुना व्यक्ततद्दर्शनाभावात्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्तम् । यः स्वयमेवम्भूतस्तस्य त्वन्यथा संभावितत्वमपि नास्तीति भावः । एवमेव विष्णुपुराणे—प्लावयामास तां शून्यां द्वारकाञ्च महोदधिः । यदुदेवगृहन्त्वेकं नाप्लावयत सागरः । नात्याक्रामत्ततो ब्रह्म स्तदद्यापि महोदधिः । नित्यं सन्निहितस्तत्र भगवान् केशवो यतः । तदतीव महापुण्यं सर्वपापप्रणाशनम् । विष्णुक्रीड़ान्वितं स्थानं दृष्ट्वा पापात् प्रमुच्यते ॥ ११ ॥ ३१ ॥ श्रीशुकः ॥ १८१ ॥

तदेवमप्रकटप्रकटलीलयोः समन्वयो दर्शितः । एते एव पाद्मोत्तर-खण्डे भोगलीलाशब्दाभ्यामुच्येते—भोगो नित्यस्थितिस्तस्य लीलां संहरते कदेत्यादिना । यां कदाचित् संहरते सा लीलेत्यर्थः । तत्र प्रकटलीलागतभावस्य विरहसंयोगादिलीलावैचित्रीभरवाहित्वेन बल-वत्तरत्वात् उभयलीलैकीभावानन्तरमपि तन्मयस्तेषामभिमानोऽनु-वर्त्तत एव । तत्रैश्वर्य्यज्ञानसम्वलितभावानां श्रीयादवानां स तावन्नून-मेवं सम्भवति, अहो सर्वदैवानन्यजीवातूनामस्माकमीशिता श्रीकृष्णाख्यो भगवानयं नानालीलामृतनिर्झरैः सान्द्रानन्दचमत्कारमासादयितुं यादवशिखामणेर्नित्यमेव पितृभावसमृद्धस्य श्रीमदानकदुन्दुभेर्गृहे स्मान् स्वानलञ्चकार । ततश्च साधितास्मदानन्दसत्रप्रधानविविध-कार्य्यः परमबान्धवोऽसौ परमेश्वरस्तत्तद्रूपानिवास्मान् पुनर्ब्रह्माद्यैरपि दुरधिगमे मथुरानाम्नि द्वारकानाम्नि वा परमधाम्नि नानामाधुरी-धुरीणाभिरामलीलाभिरनुशीलित एव विभ्राजते इति । सोऽयमभि-मानः श्रीवृन्दावने तु निजनिजसम्बन्धसन्धायकप्रेमैकानुसारिणां श्रीव्रजवासिनां नूनमेवं समुज्जृम्भते, अहो योऽसौ गोकुलकुलभाग-धेयपुञ्जमञ्जुलप्रकाशो मादृशां दृशां जीवनसञ्चयनिर्म्मञ्छनीयपादला-ञ्छनलेशो वाञ्छातीतसुखसन्ततिसन्तानको महावनव्रजमहाखनिज-निनीलमणिराविरासीत् । योऽसौ दुष्टभोजराजविसृष्टैः पूतनादिग्रह-समूहैरुपरक्तोऽपि मुहुरनुकूलेन विधिना तेषां स्वयमेव विनाशपूर्वकं चकोरेभ्यः चन्द्रमा इवास्मभ्यं वितीर्ण एवासीत् । योऽसौ तादृशतदीय-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मद्वागुणगणादेव परितुष्यद्भिर्मुनिदेवैरिव दत्तेन केनापि प्रभावेण स्वयमपि विपद्गणादात्मक्लेशमगणयन्नेव नः परित्रातवान्। योऽसौ श्रीलीलालावण्यरूपगुणविलासकेलिविनिगूढ़सौहृद्यप्रकटनचातुरीमाधुरीभिरस्मान् सुष्ठु पुष्टांश्चकार। योऽसौ लघुनापि गुणाभासेनास्माकमानन्दसन्दोहमभिविन्दमानो यद् यदपि माहृशामभिलषितं तत्तद् वा तत्तदपि प्रतिक्षणमप्याश्चर्यभूतं निजमाधुर्य्यवर्य्यमुल्लासितवान्। योऽसौ सकलसाधुजनावनाय विख्यापितयादवसम्बन्धस्तद्द्वारा मपि च राजन्यासुरसङ्घसंहरणाय यदुपुरीं प्रस्थितवान्। कार्य्यानुरोधेन तत्रैव चिराय तिष्ठत आत्मनो विप्रयोगेन सकलानुद्भवादिभिरस्मान् सकृदाश्वासयामास। योऽसौ पुनरुत्कण्ठया समाकृष्टमूर्त्तिभिस्तीर्थव्रज्याव्याजेन कुरुक्षेत्रगतैरस्माभिः चाकस्मिष्टैरिवामृतवारिधिरुपलब्धो बभूव। योऽसौ तथाविधान्नात्मसन्निधौ मासकतिपयं सम्वास्य परमस्वजनतया सुधैव मानिभ्यो यादवेभ्यो निगूढ़ां कामपि स्नेहमुद्रामस्मासु भवतामेवाहमिति व्यञ्जनया मुहुरेवास्मानभितः सन्धुक्षितवान्। श्रीवृन्दावनमेवास्माकमात्मनोऽपि परममभीष्टमिति निष्टङ्क्य निजझटित्यागमने विस्रभ्य साग्रहमस्मानत्रैव प्रस्थापितवान्। महो अक्लापरकर्त्तव्यशेष एवास्मान् निजागमनं विना समारब्ध कोटिमोचनव्यवसायानाघ्राय झटिति स्वयमेव गोकुलं साम्प्रतम् निजविरहकालव्यालमुखान्निष्कास्य च स्वावलोकनामृतपूरेण नैवास्ते। तत्र च प्रतिक्षणमपि नवनवीकृतेनानन्यसाधारणेन स्नेहसन्दोहमयेन केवलेन निजस्वभावविशेषेण, तत्रापि निजसौन्दर्य्यामृतपूरप्रपाचयचयनेन, तत्रापि विविधपुष्पादिभूषणपरभागभोगेन, तत्रापि विलासमाधुरीधुराविशेषाधानेन, तत्रापि विचित्रगणोल्लासचमत्कारविद्याविनोदेन, तत्रापि गोपालनगवाकारण क्रीड़नमोहनमन्त्रायितमुरलीवादनादिविभ्रमेण, तत्रापि गोकुल

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मनप्रवेशादिलीलाचातुरीमाधुर्य्याड़म्बरेण, तत्रापि सुहृदां यथायथ-मनुसन्तर्पण-केलिकलाविशेषप्रकाशितस्नेहातिशयेनास्मानुपलालयन्नेवास्ते । येन वयमद्यो समयसमनागमनमपि सम्भालयितुं न पारयाम इति। एतदनुसारेण द्वारकातः समागते श्रीकृष्णे केषाञ्चिद् व्रजवासिनामेव तदानीन्तनमुक्तासवचनं जयति जननिवास इत्यादिकं श्रीशुकमुखादाविर्भूतमिति व्रजैकान्तभक्ता व्याचक्षते। अत्रांशेनैवार्थ-विशेषस्फूर्त्तेः, सम्भवति च श्रीभागवतस्य विचित्रार्थत्वं, विद्वत्काम-धेनुरूपत्वात्। तथाहि जयति इत्यादि॥ १८२ ॥

कोऽपि सोऽयमस्माकं जीवनकोटिप्रियतमो विश्वकप्रचारेण श्रीवृन्दावनस्यैव विशेषतः स्थावराणां जङ्गमानाञ्च तद्विरहाद् यद्दुःखं तन्निष्कृत्य जयति सर्वोत्कर्षेण वर्त्तते। अर्थाच्छ्रीवृन्दावन एव। श्रीवृन्दा-वनस्य स्थावराणामपि भावो वर्णित एव। केन विशिष्टः, सुस्मितेन श्रीमुखेन। एतेन सदातनमानन्दैकरसत्वं स्वेषु सदैव सुप्रसन्नत्वं च तस्य प्रकाशितम्। किं कुर्वन्, व्रजरूपं यत् पुरं तत्सम्बन्धिन्यो या वनिता जनितानुरागाः कुलवध्वस्तासां कामदेवं सर्वप्रेमानन्दोपरि-विराजमानत्वात्तासां कामस्तु देवः परमदिव्यरूपस्तं वर्द्धयन्। ननु श्रीदेवक्याः पुत्रोऽयमित्येवं वदन्ति, तत् कथं युष्माकमत्रास्मदीयत्वेना-भिमानस्तत्राह, देवक्यां जन्मेति वादो मिथ्यैव लोकख्यातिर्यस्य सः। तर्हि कथं वासुदेव इति नामेत्याशङ्क्याह, जननिवासो जनानां स्वजना-नामस्माकं निवासत्वादाश्रयत्वादेव तथाभिधीयते इत्यर्थः। स्वजनेष्व-स्मासु कृतवासत्वादेव वा। ततश्चाधिकरणे कर्त्तरि वौणादिको वासुः। स च दीव्यति क्रीड़तीति देवश्च स इति विग्रहः। प्रागयं वसुदेवस्येत्या-दिका श्रीगर्गोक्तिरपि नास्मभ्यं भातीति भावः। किमर्थमसौ देवकी-जन्मवादोऽभूदित्याकाङ्क्षायामाह, यदुवराः परिषत् सहायरूपा यत्र तादृशं यथा स्यात्तथा स्वैर्दोर्भिर्भुजप्रायैरर्जुनादिभिरधर्म्मं तत्प्रचुरं दुष्टकुलम् अस्यन्निघ्नन्तुं, लक्षणहेत्वोः क्रियायाः शतृप्रत्ययस्मरणात्।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तस्यामात्मजन्मनि ख्यापिते ते ते सहाया भविष्यन्तीत्येवमनुसन्धाय
तथोक्तं कंसवधानन्तरं श्रीकृष्णेन श्रीव्रजेश्वरं प्रति, ज्ञातीन् वो
मेष्यामो विधाय सुहृदां सुखमिति । अत्र विशेषणेनैव श्रीव्रज
विशेष्यपदमुपस्थाप्यते, अयमुदयति मुद्राभञ्जनः पद्मिनीनां
वत् ॥ १० ॥ ९० ॥ श्रीशुकः ॥ १८२ ॥

अथ तेषां तेन परमानन्देन समयाननुसन्धानमप्युक्तं, अ
हि यत्रापि समय इति । अतस्तेषां श्रीकृष्णागमनपरमानन्द
अद्यैवायमागत इतीव सदा हृदि वर्त्तते । तदेवं प्रकटलीलाग
विशेषस्याप्रकटलीलायां प्रवेशाद्वहिरन्तर्द्धानलीलाद्वितयरूपं
तम् । तत्र यद्यपि पूर्वपूर्वमपि तादृशभावस्तेषामनादित एव
तथापि तमेव नवनवीकृत्य समुद्दीपयितुं पुनःपुनरवतार इति
तदेवं श्रीकृष्णस्य स्वयं भगवत्त्वं दर्शितम् । तत्रापि श्रीगोकुले त
शातिशयो दृश्यते । स चैश्वर्य्यगतस्तावत् सत्यज्ञानानन्तानन्दरस
मूर्त्ति ब्रह्माण्डकोटीश्वरदर्शनादौ । कारुण्यगतश्च पुतनाया अपि
आत्मगतिदाने । माधुर्य्यगतश्च, व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द
वीरुधः । गावश्चारयतो गोपाः पादस्पर्शं महात्मन इति श्रीपद्म
प्रार्थनादौ । अत्र स्थितेऽपि सर्वतोऽपि प्रेमवरीयसीनां तासां
पादस्पर्शसौभाग्ये तन्माधुर्य्यप्रकाशातिशयवैशिष्ट्याभिप्रायेणैव त
सङ्गच्छते । तथैव चोक्तम्—त्रैलोक्यसौभगमिदञ्च निरीक्ष्य रूपं
द्विजद्रुममृगाः पुलकान्यविभ्रन्नित्यादिषु । अतो लीलागतश्चासौ
पितरौ नान्वविन्देतां कृष्णोदारार्भकेहितमित्यादिषु । अतस्तदी
मप्युत्कर्ष उक्तः, वृन्दावनं गोवर्द्धनं यमुनापुलिनानि च । वी
मोदित्यादौ । ततः परिकराणान्तु अहो भाग्यमहो भाग्यमित्यादौ
सतामित्यादौ नन्दः किमकरोदित्यादौ एताः परमित्यादौ गोप
किमचरन्नित्यादौ । तत्रापि तत्रातिशुशुभे ताभिरित्यादौ च तासु
शातिशयसीमा दर्शिता । ततः सर्वास्वपि तासु अनयाराधितो नूनं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भगवान् हरिरीश्वर इत्यादिभिः प्रेमवरीयस्त्वेन प्रसिद्धायां श्रीराधिकायान्तु किमुतेति ज्ञेयम्। अत्र चेदन्तत्त्वम्। द्वितीये सन्दर्भे खलु परमत्वेन श्रीभगवत्त्वं निरूप्य तस्य शक्तिद्वयी निरूपिता। तत्र प्रथमा श्रीवैष्णवानां श्रीभगवद्वदुपास्या तदीयस्वरूपभूता, यन्मय्येव खलु तस्य सा भगवत्ता। द्वितीया चाथ तेषां जगद्वदुपेक्षणीया मायालक्षणा, यन्मय्येव खलु तस्य जगत्ता। तत्र पूर्वस्यां शक्तौ शक्तिमति भगवच्छब्दवल्लक्ष्मीशब्दः प्रयुज्यत इत्यपि द्वितीय एव दर्शितम्। ततोऽस्मिन् सन्दर्भे तु स च भगवान् श्रीकृष्णाख्य एवेति निर्द्धारिते तदीया स्वरूपशक्तिस्तु किमाख्येति निर्द्धार्य्या। तत्र द्वयोरपि पुर्य्योः श्रीमहिष्याख्या ज्ञेया। मथुरायामप्यप्रकटलीलायां श्रुतौ रुक्मिण्याः प्रसिद्धेरन्यासामुपलक्षणात्। श्रीमहिषीणां तदीयस्वरूपशक्तित्वं स्कान्दप्रभासखण्डे श्रीशिवगौरीसम्वादे गोप्यादित्यमाहात्म्ये दृष्टम्। "पुरा कृष्णो महातेजा यदा प्रभासमागतः। सहितो यादवैः सर्वैः षट्पञ्चाशत्प्रकोटिभिः। षोड़शैव सहस्राणि गोप्यस्तत्र समागताः।। लक्षमेकं तथा षष्टिरेते कृष्णसुना प्रिये। इत्युपक्रम्य, ततो गोप्यो महादेवि विद्यायाः षोड़श स्मृता। तासां नामानि ते वच्मि तानि ह्येकमनाः शृणु। लम्बिनी चन्द्रिका कान्ता क्रूरा शान्ता महोदया। भीषणी नन्दिनी शोका सुपूर्वविमला क्षया। शुभदा शोभना पुण्या हंसशीता कला क्रमात्। हंस एव मतः कृष्णः परमात्मा जनार्द्दनः। तस्यैताः शक्तयो देवि षोड़शैव प्रकीर्त्तिताः। चन्द्ररूपी मतः कृष्णः कलारूपास्तु ताः स्मृताः। सम्पूर्णमण्डला तासां मालिनी षोड़शी कला। प्रतिपत्तिथिमारभ्य सञ्चरत्याशु चन्द्रमाः। षोड़शैव कला यास्तु गोपीरूपा वरानने। एकैकशस्ताः संभिन्नाः सहस्रेण पृथक् पृथक्। एवं ते कथितं देवि रहस्यं ज्ञानसम्भवम्। य एवं वेद पुरुषः स ज्ञेयो वैष्णवो बुधैरिति। अत्र गोप्यो राज्ञ इत्यर्थः। गोपी भूपेऽपीति नामलिङ्गानुशासनात्। लम्बिनी अवतारशक्तिः। सुपूर्वविमला सुविमला। हंसशीतेत्यत्र प्राप्तस्य

हंसशब्दस्य वाच्यमाह, हंस एवेति। स च चन्द्ररूपी चन्द्रदृष्टान्तेन
इत्यर्थः। कलारूपा इति तास्व शक्तयश्चन्द्रस्यामृतत्यादिकलावत्
नोद्देश्या इत्यर्थः। अनुक्तामन्तिमां महाशक्तिमाह, सम्पूर्णेति।
कलासमष्टिरूपा ज्ञेया। दृष्टान्तोपपादनाय चन्द्रस्य तादृशत्वं
प्रतिपदिति। आसु एतत्तुल्यासु कलासु। विवक्षितमाह षोड़शेति।
षोड़शानामेव विद्यारूपत्वात् एतदुपदेशस्य ज्ञानसम्बरहस्य
तज्ज्ञानस्य वैष्णवतानुमापकलिङ्गत्वाच्च। क्रूराभीषणीशोकानां
भगवत्स्वरूपभूतानामेव सतीनां मल्लानामशनिरितिवत् शौचं
कठिनत्वप्रत्यायकत्वात् मृत्युर्भोजपतेरितिवद्दुर्ज्जनकृतासव
असतां शास्तेतिवत्तदीयशोकहेतुत्वादेव च तत्तन्निरूपणम्।
यथा प्रकाशैकरूपाया एव सूर्य्यकान्तेरुलूकेषु तमआदिव्यञ्जकत्वं।
अतश्चन्द्ररूपी मतः कृष्णः कलारूपास्तु ताः स्मृता इति स्व
स्वरूपभूतत्वं दर्शितम्। तदेवं तासां स्वरूपशक्तित्वे लक्ष्मीत्वं सि
त्येव। तदेवमभिप्रेत्य लक्ष्मीत्वमाह—गृहेषु तासामनपाय्यतर्क्य
निरस्तसाम्यातिशयेष्ववस्थितः। रेमे रमाभिर्निजकामसंप्लुतो यथे
गार्हमेधिकांश्चरन्॥ १८३॥

टीका च—रमाभिर्लक्ष्म्या अंशभूताभिरित्येषा। स्वरूपशक्ति
रेम इत्युक्तम्। अतएव निजः स्वकीयः परमानन्दशक्तिवृत्तिविशे
दयरूपप्रेमविशेषस्वरूपो यः कामस्तेन संप्लुतो व्याप्त इति॥१०
श्रीशुकः॥ १८३॥

इत्थमष्टानां श्रीपट्टमहिषीणान्तु तत्स्वरूपशक्तित्वं कैमुत्य
सिध्यति। तत्र श्रीसत्यभामाया भूशक्तिरूपत्वं पाद्मोत्तरख
प्रसिद्धम्। श्रीयमुनायाः कृपाशक्तिरूपत्वं स्कान्दयमुनामाहात्म्या
दित्याद्यन्वेषणीयम्। किन्तु श्रीहरिवंशादौ सत्यभामायाः सौ
भाग्यातिशयस्य विख्यातत्वात् प्रेमशक्तिप्रचुरभूशक्तित्वं ज्ञेयम्।
लक्ष्मीस्तु श्रीरुक्मिणी। द्वारकायामभूद्राजन् महामोदः पुरौकसाम्

रुक्मिण्यां रमयोपेतं दृष्ट्वा कृष्णं श्रियः पतिमित्यादिषु तस्यामेव भूरिशः प्रसिद्धेः । अतः स्वयं लक्ष्मीत्वेनैव परस्परयोग्यतामाह—अस्यैव भार्य्या भवितुं रुक्मिण्यर्हति नापरा । असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः ॥ १८४ ॥

स्पष्टम् ॥ १० ॥ ५३ ॥ विदर्भपुरवासिनः परस्परम् ॥ १८५ ॥

तथा—तां रूपिणीं श्रियमित्यादौ या लीलया धृततनोरनुरूपरूपेति ॥ १८५ ॥

स्पष्टम् । अतः स्वयं भगवतोऽनुरूपत्वेन स्वयं लक्ष्मीत्वं सिद्धमेव । अतएव, वैदर्भीं भीष्मकसुतां श्रियो मात्रां स्वयंवरे इत्यत्र, मात्रा अन्तर्भवत्यस्यामिति मात्रापदं बाहुल्यादधिकरण एवौणादिकं ज्ञेयम् । मात्रन्त्र अवधारणे मात्रमितिवत् । ततश्च वैकुण्ठप्रसिद्धाया लक्ष्म्या अन्तर्भावास्पदत्वादेषैव लक्ष्मीः सर्वतः परिपूर्णेत्यर्थः । यत्तु, नन्वेवमेतदरविन्दविलोचनाह यद्वै भवान् भगवतोऽसदृशी विभूम्नः । क्व स्वे महिम्न्यभिरतो भगवांस्त्र्यधीशः । क्वाहं गुणप्रकृतिरज्ञगृहीतपादा इति तस्या एवोक्तिस्तत्र निजांशाभासम् एव दैन्येन स्वं मत्वोक्तमिति मन्तव्यम् । यद्वा गुणा गौणी प्रकृतिः स्वभावो यस्याः सा अपकृष्टरूपेत्यर्थः । यथा तत्रैव, स्यान्मे तवाङ्घ्रिवरणं सृतिभिर्भ्रमन्त्या इति मनुष्यावतारताभिनिवेशात्तस्या एव दैन्योक्तिः । अत्र दैवप्रेरितो वास्तवोऽर्थस्त्वेवं, हेऽरविन्दलोचन, भगवतस्तवासदृश्यहमित्येतद् यद्भवानाह ननु निश्चितं तत्त्वेवं वक्ष्यमाणप्रकारकं नत्वन्यप्रकारकम् । तथैवाह, स्वे स्वरूपभूते महिम्नि ऐश्वर्य्यादावभिरतो भगवान् क्व कुत्रान्यत्र, तथाहं वा ते गुणा ऐश्वर्य्यादय एव प्रकृतिः स्वरूपं यस्यास्तथाभूता क्व कुत्रान्यत्र, किन्तु न कुत्रचिदन्यत्रेति द्वयोरेकत्र एव स्वरूपे स्थितिरित्यर्थः । अतएवाज्ञेरस्य श्रीविष्णोस्तवातत्त्वज्ञैर्गृहीतौ सेवितौ] पादौ यस्यास्तथाभूताहं तस्माच्छक्तिशक्तिमतोरत्यन्तभेदाभावादेवोपमानोपमेयत्वाभावेन सादृ-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्याभाव इति भावः। एवं स्रुतिभिर्भ्रमन्त्या इत्यत्रापि हि लोके पदवीभिरित्येव वास्तवोऽर्थः। तदुक्तम्—देवत्वे देवदेहेयं मनुष्यत्वे च मानुषीति। एवमेव, अस्त्वम्बुजाक्ष मम ते चरणानुराग आत्मन् रतस्य मयि चानतिरिक्तदृष्टेः। यर्ह्यस्य वृद्धय उपात्तरजोऽतिमात्रो मामीक्षसे तदु ह नः परमानुकम्पेत्यत्रापि तस्याः प्रकृतित्वं देवनाम्नाभेदोपचारेणैव व्याख्येयम्। यद्वा अस्य गार्हस्थ्यस्य उपात्ता स्वीकृता रजोऽतिमात्रा सर्वभूतानुरञ्जनातिशयो येन सः। वास्तवार्थस्त्वेवम्। यदुक्तमुदासीना वयमित्यादि श्रीभगवता तत्राह, अस्त्विति। अम्बुजाक्ष, आत्मन् आत्मनि मयि च रतस्य ते चरणानुरागो मम, मयि रतत्वञ्चोक्तं, तथाहमपि तच्चित्तो निद्राञ्च न लभे निशि स्वयमेवेति भावः। नन्वात्मरतस्य मम कथं त्वयि रतिस्तत्राह मय्यनतिरिक्तदृष्टेः। शक्तिमत्यात्मनि शक्तौ च मय्यनतिरिक्ता पृथग्भावरहिता दृष्टिर्यस्य। शक्तिशक्तिमतोरपृथग्वस्तुत्वाद्द्वयोरपि मिथो विशिष्टतयैवागमाद्वा युज्यत एव मय्यपि रतिरिति भावः। तदेवं सत्यामपि स्वाभाविक्यां रतौ विशेषतस्तु, यर्हि अस्य रत्याख्यस्य भावस्य वृद्धये उपात्तरजोऽतिमात्रा रागातिशयो येन तथाभूतस्त्वं मामीक्षसे सभावमालोकयसि, तदासौ नोऽस्मान् प्रति परमैवानुकम्पेति। एवमुदासीनत्वं साक्षान्मत्सम्बन्धादन्यत्रैवेति मम सुदृढ़ एव विश्वास इति भावः। तस्मात् साधूक्तं या लीलया धृततनोरित्यादिना श्रीरुक्मिणीदेव्याः स्वलक्ष्मीत्वम्॥ १०॥ ६०॥ श्रीशुकः॥ १८५॥

अथ वृन्दावने तदीयस्वरूपशक्तिप्रादुर्भावाश्च श्रीव्रजदेव्यः। यथा ब्रह्मसंहितायाम्—आनन्दचिन्मयरसप्रतिभाविताभिस्ताभिर्य एव निजरूपतया कलाभिः। गोलोक एव निवसत्यखिलात्मभूतो गोविन्दमादिपुरुषं तमहं भजामि इति। ताभिः श्रीगोपीभिर्मन्त्रे तच्छ्रवणप्रसङ्गात्। कलाभिः शक्तिभिः। निजरूपतया स्वस्वरूपतया। शक्तित्वञ्च तासां पूर्वोक्तोत्कर्षेण परमपूर्णप्रादुर्भावानां सर्वासामपि लक्ष्मीत्वमेव। अतः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तत्रैव, लक्ष्मीसहस्रशतसंभ्रमसेव्यमानमिति, श्रियः कान्ताः कान्तः परमपुरुष इति। एतदभिप्रेत्यैव स्वायम्भुवागमेऽपि श्रीभूलीला-शब्दैस्तत्प्रेयसीविशेषत्रयमुपदिष्टम्। तस्माल्लक्ष्मीतोऽप्युत्कर्षवर्णन-मासां परमव्योमादिस्थिताभ्यस्तन्नाम्नैव प्रसिद्धाभ्यो लक्ष्मीभ्य आधिक्य-विवक्षयेति मन्तव्यम्। श्रीवृन्दावनलक्ष्म्यस्त्वेता एवेति। एवमेव पादन्यासैर्भुजविधुतिभिरित्यादौ कृष्णवध्व इत्युक्तम्। अतएव गोपी-जनाविद्याकलाप्रेरक इत्यत्र तापनीवाक्ये श्रीमदष्टाक्षरस्थनामनि-रुक्तौ ये गोपीजनास्तेषां आ सम्यग् या विद्या परमप्रेमरूपा तस्याः कला वृत्तिरूपा इति व्याख्येयम्। राजविद्या राजगुह्यमित्यादि-श्रीगीताप्रकरणात्, व्याख्यान्तरे भगवत्यविद्यासंश्लेषाभावात्। तदुक्तम्—ह्लादिन्या सम्विदाश्लिष्टः सच्चिदानन्द ईश्वरः। स्वाविद्यासंवृतो जीवः संक्लेशनिकराकर इति स्वामिसूक्तौ, तथा ह्लादिनी सन्धिनी संवित्त्वय्येका सर्वसंश्रये। ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जित इति विष्णु-पुराणे च। ततस्तासां प्रेरकस्तत्तत्क्रीड़ायां प्रवर्त्तक इति वल्लभशब्दे-नैकार्थमेव। स वो हि स्वामीति तस्यामेव श्रुतौ ताः प्रति दुर्वाससो वाक्यात्। यच्च तासां क्वचित् पूर्वजन्मनि साधकत्वमिव श्रूयते, तत्तु पूर्वांशमेव व्याख्येयम्। तास्तु नित्यसिद्धा एव। अत इदमित्थमेव व्याख्येयम्। ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः। व्यरोचता-धिकं तात पुरुषः शक्तिभिर्यथा ॥ १८६ ॥

यथा यथावत्, अतएवाधिकं व्यरोचत इत्युक्तमुपपद्यते, स्वशक्त्येक-प्रकाशत्वात् श्रीभगवतः। गोप्यो लब्ध्वाच्युतं कान्तं श्रिय एकान्त-वल्लभम्। गृहीतकण्ठ्यस्तद्दोर्भ्यां गायन्त्यस्तं विजह्रिरे ॥१८७॥

गोप्य एव श्रियः कान्तं मनोहरम् एकान्तवल्लभं रहोरमणम् ॥ १० ॥ ३२ ॥ श्रीशुकः ॥ १८६ ॥ १८७ ॥

आसां महत्त्वन्तु ह्लादिनीसारवृत्तिविशेषप्रेमरससारविशेषप्राधा-न्यात्। तदुक्तम्—आनन्दचिन्मयरसप्रतिभाविताभिरिति। आनन्द-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

चिन्मयरसेन प्रेमरसविशेषेण प्रतिभावितामिरित्यर्थः। अतएव तत्-प्राचुर्य्यप्रकाशेन श्रीभगवतोऽपि तासु परमोल्लासप्रकाशो भवति, येन ताभीरमणेच्छा जायते। तत्रैवाह—भगवानपि ता रात्रीः शारदोत्फुल्लमल्लिकाः। वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः ॥१८८॥

योगमायां दुर्घटसम्पादिकां स्वरूपशक्तिं तत्तल्लीलासौष्ठवघटमायोपाश्रित इति तस्यै तां प्रवर्त्त्येत्यर्थः ॥१०॥२९॥ श्रीशुकः ॥ १८८।

अथ तासां नामानि श्रूयन्ते भविष्योत्तरे मल्लद्वादशीप्रसङ्गे श्रीकृष्णयुधिष्ठिरसंवादे—गोपीनामानि राजेन्द्र प्राधान्येन निबोध मे। गोपाली पालिका धन्या विशाखा ध्याननिष्ठिका। राधानुराधा सोमाभा तारका दशमी तथेति। दशम्यपि तारकानाम्नीत्यर्थः। स्कान्दे प्रह्लादसंहितायाम् द्वारकामाहात्म्ये माघावसरप्रस्तावे श्रीललितोवाचेत्यादिना। ललिता श्यामला धन्या विशाखा राधा शैब्या पद्मा भद्रेत्येतान्यष्टैव गृहीतानि। अथ वनिताशतकोटिभिरित्यागमप्रसिद्धेरन्यान्यपि लोकशास्त्रयोरवगन्तव्यानि। अत्र शतकोटित्वान्यथानुपपत्त्यापि तन्महाशक्तित्वमेवावगम्यते। तदेवं परममधुरप्रेमवृत्तिमयीषु तास्वपि तत्सारांशोद्रेकमयी श्रीराधिका तस्यामेव प्रेमोत्कर्षपराकाष्ठाया दर्शितत्वात् प्रीतिसन्दर्भे दर्शयिष्यमाणत्वाच्च। यत्र च तत्प्रेमवैशिष्ट्यं तत्रैव, यस्यास्ति भक्तिर्भगवत्यकिञ्चनेत्यादिवत् सर्वा अप्यैश्वर्यादिरूपा अन्याः शक्तयो नात्याहृता अप्यनुगच्छन्तीति श्रीवृन्दावने श्रीराधिकायामेव स्वयं लक्ष्मीत्वम्। अतएव सखीष्वन्यास्वपि मुख्याभिः प्रायेणैव तस्या एव वृन्दावनाधिपत्येन नामग्रहणम्। यथा पाद्मे कार्त्तिकमाहात्म्ये शौनकनारदसंवादे—वृन्दावनाधिपत्यञ्च दत्तं तस्यै प्रत्युष्यता। कृष्णेनान्यत्र देवी तु राधा वृन्दावने वने इत्यनेन। अन्यत्र साधारणे देशे देव्येवाधिकारिणी श्रीवृन्दावनाख्ये वने तु श्रीराधिकैवेत्यर्थः। एवं स्कान्दे—वाराणस्यां विशालाक्षी विमला पुरुषोत्तमे। रुक्मिणी द्वारवत्याञ्च राधा वृन्दावने वने।

इति । तथा मात्स्येऽपि । शक्तित्वमात्रसाधारण्येनैव लक्ष्मीसीता-
रुक्मिणीराधानामपि देव्या सह गणनम् । वैशिष्ट्यन्तु लक्ष्मीवत् सीतादि-
ष्वपि ज्ञेयम् । तस्मान्न देव्या सह लक्ष्म्यादीनामैक्यम् । श्रीरामतापनी-
श्रीगोपालतापन्यादौ तासां स्वरूपभूतत्वेन कथनात् । श्रीराधिकायाश्च
यामले पूर्वोदाहृतपद्यत्रयानन्तरं, भुजद्वययुतः कृष्णो न कदाचि-
च्चतुर्भुजः । गोप्यैकया युतस्तत्र परिक्रीड़ति सर्वदेति । अत्र वृन्दा-
वनविषयकतत्सहितसर्वदाक्रीड़ित्वलिङ्गावगतेन परस्पराव्यभिचारिण
स्वरूपशक्तित्वम् । सतीष्वप्यन्यासु एकया इत्यनेन तत्रापि परममुख्या-
त्वमभिहितम् । तथाच वृहद्गौतमीये श्रीबलदेवं प्रति श्रीकृष्ण-
वाक्यम्—सत्त्वं तत्त्वं परत्वञ्च तत्त्वत्रयमहं किल । त्रितत्त्व-
रूपिणी सापि राधिका मम वल्लभा । प्रकृतेः पर एवाहं सापि
मच्छक्तिरूपिणी । सात्त्विकं रूपमास्थाय पूर्णोऽहं ब्रह्म चित्परः ।
ब्रह्मणा प्रार्थितः सम्यक् सम्भवामि युगे युगे । तया सार्द्धं त्वया सार्द्धं
नाशाय देवताद्रुहामित्यादि । सत्त्वं कार्य्यत्वं तत्त्वं कारणत्वं ततोऽपि
परत्वञ्चेति यत्तत्त्वत्रयं तदहमित्यर्थः । अतएव श्रीराधाप्रसङ्गे तत्-
पुरतोऽपि—सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा इति । ऋक्-
परिशिष्टश्रुतिश्च तथैवाह—राधया माधवो देवो माधवेनैव राधिका ।
विभ्राजन्ते जनेष्वा । विभ्राजन्ते विभ्राजते,आ सर्वत इति श्रुतिपदार्थः ।
एतत् सर्वमभिप्रेत्य मूर्द्धण्यश्लोके तादृशोऽप्यर्थः सन्दधे । तत्र तयोर्महा-
महैश्वर्य्यप्रतिपादकोऽर्थः पूर्ववत् स्वयमनुसन्धेयः । परममाधुरीप्रति-
पादकोऽर्थस्तु यथा, जन्माद्यस्येति ॥ १८९ ॥

यतोऽन्वयादनुगच्छति सदा निजपरमानन्दशक्तिरूपायां तस्यां
श्रीराधायामासक्तो भवतीत्यन्वयः श्रीकृष्णस्तस्माद् यस्मात्तथा इतरत
इतरस्याश्च तस्य सदा द्वितीयायाः श्रीराधाया एव यतो यस्या आद्य
स्यादिरसस्य जन्म प्रादुर्भावः, यावैवादिरसविद्यायाः परमनिधान-
मित्यर्थः । अतएव तयोरत्यद्भुतविलासमाधुरीधुरीणतामुद्दिशति, यः



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अर्थेषु तत्तद्विलासकलापेषु अभिज्ञो विदग्धः या च स्वेन तथाविध
त्मना राजते विलासतीति स्वराट्। अतएव सर्वतोऽप्याश्चर्य्यरूपयोस्त
र्वर्णने मम तत्कृपैव सामग्रीत्याह, आदिकवये प्रथमं तल्लीलाव
मारभमाणाय मह्यं श्रीवेदव्यासाय हृदा अन्तःकरणद्वारैव ब्रह्म नि
लीलाप्रतिपादकं शब्दब्रह्म यस्तेने आरम्भसमकालमेव युगपत् सर्वा
पुराणं मम हृदि प्रकाशितवान् इत्यर्थः। एतच्च प्रथमस्य सप्तम
व्यक्तम्। यद् यस्याश्च सूरयः शेषादयोऽपि मुह्यन्ति स्वरूपसौन्दर्य्यगु
दिभिः अत्यद्भुता केयमिति निर्वक्तुमारब्धा निश्चेतुं न शक्नुवन्ति।
भूता सा यदि कृपां नाकरिष्यत् तदा लब्धमाधवताद्दृशकृपस्यापि
तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्यग्रतोऽवलाः। बध्वाः पदैः सुपृक्त
विलोक्यार्त्ताः समब्रुवन्नित्यादिना तस्या लीलावर्णनलेशोऽपि सा
सिद्धिरसौ नाभविष्यदेवेति भावः। तयोराश्चर्य्यरूपत्वमेव व्यनक्ति ते
वारिमृदामचैतन्यानामपि यथा येन प्रकारेण विनिमयः पर
स्वभावविपर्य्ययो भवति तथा यो विभ्राजत इति शेषः। वाक्यशे
भावाभिभूतत्वेन न वक्तुं शक्तवानिति गम्यते। तत्र तेजसश्चन्द्रादेस्त
नखकान्तिविस्फारतादिना वारिमृद्वन्निस्तेजस्त्वधर्म्मावाप्तिः। वारि
नद्यादेश्च तत्संसर्गवंशीवाद्यादिना वह्न्यादितेजोवदुच्छूनताप्रा
पाषाणादिमृद्वच्च स्तम्भप्राप्तिः। मृदश्च पाषाणादेस्तत्कान्तिकन्द
कृरितत्वेन तेजोवदुज्ज्वलताप्राप्तिर्वंशीवाद्यादिना वारिवच्च द्रव
प्राप्तिरिति। तदेतत् सर्वं तस्य लीलावर्णने प्रसिद्धमेव।
यस्याश्च विद्यमानायां त्रिधासर्गः श्रीभूलीलेतिशक्तित्रयीप्रादुर्भा
वा द्वारकामथुरावृन्दावनानीतिस्थानत्रयगतशक्तिवर्गत्रयप्रादुर्भावो
वृन्दावन एव रसव्यवहारेण सुहृदुदासीनप्रतिपक्षनायिकारूपत्रिभेद
सर्वासामपि व्रजदेवीनामेव प्रादुर्भावो वा मृषा मिथ्यैव। यस्याः सौ
र्य्यादिगुणसम्पदा तास्ताः कृष्णस्य न किञ्चिदिव प्रयोजनमर्ह
त्यर्थः। तद्धीमहि इति यच्छब्दलब्धेन तच्छब्देनान्वयः। पर

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

शक्तिमत्त्वेनातिशयितमहाभावरसेन वा परस्परमभिन्नतां गतयोरैक्ये-
नैव विवक्षितं तदिति । अतएव सामान्यतया परामर्शान्नपुंसकत्वञ्च ।
कथम्भूतं स्वेन धाम्ना स्वप्रभावेण सदा निरस्तं स्वलीलाप्रतिबन्धकानां
जरतीप्रभृतीनां प्रतिपक्षनायिकानाञ्च कुहकं माया येन तत् । तथा
सत्यं तादृशत्वेन नित्यसिद्धम् । यद्वा परस्परं विलासादिभिरनवरतमा-
नन्दसन्दोहदाने कृतसत्यमिव जातम् । तत्र निश्चलमित्यर्थः । अतएव
परमन्यत्र कुत्राप्यदृष्टगुणलीलादिभिर्विश्वविस्मापकत्वात् सर्वतोऽप्युत्-
कृष्टम् । अत्रैकोऽपि धर्मो भिन्नवाचकतया वाक्ययोर्निर्दिष्ट इत्युभयसा-
दृश्यावगमात् प्रतिवस्तूपमानामालङ्कारोऽयम् । इयञ्च मुहुरुपमितमिति
मालाप्रतिवस्तूपमा । तेन तैस्तैर्गुणैर्मिथो योग्यतया निबद्धत्वात् सम-
नामापि । एतदलङ्कारेण च अहो परस्परं परस्मात् परमपि तन्मिथुनभूतं
किमपि तत्त्वं मिथो गुणगणमाधुरीभिः समतामेव समवाप्त-
मिति सकलजीवजीवातुतमरसपीयूषधाराधाराधरतासम्पदा कस्मै वा
निजचरणकमलविलासं न रोचयतीति स्वतः सम्भवि वस्तु व्यज्यते ।
तदाहुः । प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः । एकोऽपि
धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति । इयं मालयापि दृश्यत
इति । एवं समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुन इति । तथा,
वस्तु वालङ्कृतिर्वापि द्विधार्थः सम्भवी स्वतः । कवेः प्रौढोक्तिसिद्धो वा
तन्निबद्धस्य वेति षट् । षड्भिस्तैर्व्यंज्यमानस्तु वस्त्वलङ्काररूपकः ।
अर्थशक्त्युद्भवो व्यङ्गो याति द्वादशभेदतामिति । अतः सर्वतोऽपि
सान्द्रानन्दचमत्कारकरश्रीकृष्णप्रकाशे श्रीवृन्दावनेऽपि परमाद्भुत-
प्रकाशः श्रीराधया युगलितस्तु श्रीकृष्ण इति । तदुक्तमादिपुराणे
वेदान्तिनोऽपि इति पद्यानन्तरम्—अहमेव परं रूपं नान्यो
जानाति कश्चन । जानाति राधिका पार्थ अंशानर्च्चन्ति देवता इति ।
तयोर्नित्यविलासस्त्वित्थं, यथा वर्णितमस्मदुपजीव्यचरणाम्बुजैः; वाचा
सूचितशर्वरीरतिकलाप्रागल्भ्यया राधिकां व्रीड़ाकुञ्चितलोचनां विर-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

चयनग्रे सखीनामसौ। तद्वचोरुहचित्रकेलिमकरीपाण्डित्यपारं ग
कैशोरं सफलीकरोति कलयन् कुञ्जे विहारं हरिरिति। तं
सन्दर्भचतुष्टयेन सम्बन्धो व्याख्यातः। तस्मिन्नपि सम्बन्धे श्रीरा
माश्रवरूपेणैव प्रादुर्भावस्तस्य सम्बन्धिनः परमः प्रकर्षः। तदुक्तं शु
राधया माधवो देव इति। एतदर्थमेव व्रतानिषमिमाः सर्वा श्री
परिपाटीरीति पूर्णः सम्बन्धः। गौरश्यामरुचोज्ज्वलाभिरमलैरन्
विलासोत्सवैर्नृत्यन्तीभिरशेषमादनकलावैदग्ध्यदिग्धात्मभिः। अन्यो
प्रियतासुधापरिमलस्तोमोन्मदाभिः सदा राधामाधवमाधुरीभिर
श्चित्तं ममाक्रम्यताम् ॥ १ ॥ ४ ॥ १८९ ॥

इति कलियुगपावनस्वभजनविभजनप्रयोजनावतार-
श्रीश्रीभगवत्कृष्णचैतन्यदेवचरणानुचरविश्व-
वैष्णवराजसभासभाजनभाजनश्रीरूप-
सनातनानुशासनभारतीगर्भे
श्रीभागवतसन्दर्भे श्रीकृष्ण-
सन्दर्भो नाम चतुर्थः
सन्दर्भः।

श्रीभागवतसन्दर्भे सर्वसन्दर्भगर्भगे।
श्रीकृष्णसन्दर्भनामा सन्दर्भोऽभूच्चतुर्थकः॥

चतुर्थसन्दर्भः समाप्तः।

—(०)—

CC.0- Jangamwadi Math Collection. Digitized by eGangotri



षट्सन्दर्भनामक-

# श्रीभागवतसन्दर्भे

पञ्चमः

## भक्तिसन्दर्भः।

—०—

तौ सन्तोषयता सन्तौ श्रीलरूपसनातनौ।
दाक्षिणात्येन भट्टेन पुनरेतद्विविच्यते॥
तस्याद्यं ग्रन्थनालेखं क्रान्तव्युत्क्रान्तखण्डितम्।
पर्यालोच्याथ पर्यायं कृत्वा लिखति जीवकः॥

अत्र पूर्वं सन्दर्भचतुष्टयेन सम्बन्धो व्याख्यातः। तत्र पूर्णसनातन-परमानन्दलक्षणपरतत्त्वरूपं सम्बन्धि च ब्रह्म परमात्मा भगवानिति त्रिधाविर्भावतया शब्दितमिति निरूपितम्। तत्र च भगवत्त्वेनैवा-विर्भावस्य परमोत्कर्षः प्रतिपादितः। प्रसङ्गेन विष्णुाद्याश्चतुःसनाद्याश्च तदवतारा दर्शिताः। स च भगवान् स्वयं श्रीकृष्ण एवेति निर्द्धारि-तम्। परमात्मवैभवगनने च तत्तटस्थशक्तिरूपाणां चिदेकरसानामपि अनादिपरतत्त्वज्ञानसंसर्गाभावमयतद्वैमुख्यलब्धच्छिद्रया तन्मायायावृत-स्वरूपज्ञानानां तयैव सत्त्वरजस्तमोमये जड़े प्रधाने रचितात्मभावानां जीवानां संसारदुःखञ्च ज्ञापितम्। यथोक्तमेकादशे श्रीभगवता—आत्म-परिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदात्मनिष्ठः। व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकादिति। ततस्तदर्थं परम-कारुणिकं शास्त्रमुपदिशति। तत्र च ते जीवा ये केचिद् जन्मान्तरा-वृत्ततदर्थानुभवसंस्कारवन्तो ये च तदैव वा लब्धमहत्कृपातिशय-दृष्टिप्रभृतयः। तेषां तादृशपरतत्त्वलक्षणवस्तुपदेशश्रवणारम्भमात्रेणैव



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तत्कालमेव युगपदेव तत्साम्मुख्यं तदनुभवोऽपि जायते। यथोक्तम्—
किम्वा परैरीश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणा-
दिति। ततस्तेषां नोपदेशान्तरापेक्षा। यादृच्छिकमुपदेशान्तरश्रव-
तु तत्तल्लीलाश्रवणवत्तदीयरसस्यैवोद्दीपकम्। यथा श्रीप्रह्लादादीनाम्।
अथान्येषां तत्श्रवणमात्रेण तादृशत्वं वीजायमानमपि कालादिवैगुण्ये-
तदिव दोषेण प्रतिहतं तिष्ठति। नैतन्मनस्तव कथासु विकुण्ठनाथ
संप्रीयते दुरितदुष्टमसाधुतीव्रम्। कामातुरं हर्षशोकभयैषणार्त्तं
तस्मिन् कथं तव गतिं विमृशामि दीनः॥ इति दीनम्मन्यश्रीमत्प्रह्लाद-
वचनानुसारेणान्येषामिव तत्प्राप्तेः। एवमेवोक्तं ब्रह्मवैवर्त्ते—याव-
पापैस्तु मलिनं हृदयं तावदेव हि। न शास्त्रे सत्यबुद्धिः स्यात् सद्बुद्धिः
सद्गुरौ तथा। अनेकजन्मजनितपुण्यराशिफलं महत्। सत्सङ्गशास्त्र-
श्रवणादेव प्रेमादि जायत इति। ततो मुख्येन तात्पर्य्येण परतत्त्वे
पर्य्यवसितेऽपि तेषां परतत्त्वाद्युपदेशस्य किमभिधेयं प्रयोजनञ्चेत्य-
पेक्षायां तदवान्तरतात्पर्य्येण तद्द्वयमुपदेष्टव्यम्। तत्राभिधेयं तद्-
मुख्यविरोधित्वात्तत्साम्मुख्यमेव। तच्च तदुपासनलक्षणं, यत एव तद्-
ज्ञानमाविर्भवति। प्रयोजनञ्च तदनुभवः। स चान्तर्वहिःसाक्षात्कार-
लक्षणः, यत एव स्वयं कृत्स्नदुःखनिवृत्तिर्भवति। तदेतद्द्वयं यथा-
पूर्वत्र सिद्धोपदेश एव अभिप्रेतमस्ति, तथा, तव गृहे निधिरस्तीति
श्रुत्वा कश्चिद्दरिद्रस्तदर्थं प्रयतते लभते च तमिति, तद्वत्, तथापि
तच्छैथिल्यनिरासाय पुनस्तदुपदेशः। तदेवं तान् प्रत्यनादिसिद्धतत्-
ज्ञानसंसर्गाभावमयतद्वैमुख्यादिकं दुःखहेतुं वदद्व्याधिनिदानवैपरीत्य-
मयचिकित्सानिभं तत्साम्मुख्यादिकमुपदिशति—भयं द्वितीयाभि-
निवेशतः स्यादीशादपेतस्य विपर्य्ययोऽस्मृतिः। तन्मायायातो बुध
आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा॥ १॥

टीका च—यतो भयं तन्मायया भवेत्ततो बुद्धिमान् तमेव भजेदुपा-
सीत। ननु भयं द्वितीयाभिनिवेशतो भवति, स च देहाद्यहङ्कार-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स च स्वरूपास्फुरणात्, किमत्र तस्य माया करोति, अत आह, ईशा-दपेतस्येति । ईशविमुखस्य तन्मायया अस्मृतिः स्वरूपास्फूर्त्तिर्भवति । ततो विपर्य्ययो देहोऽस्मीति । ततो द्वितीयाभिनिवेशाद्भयं भवति । एवं हि प्रसिद्धं लौकिकेष्वपि मायासु । उक्तञ्च भगवता—दैवी ह्येषा गुण-मयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इति । एकया अव्यभिचारिण्या भजेत् । किञ्च गुरुदेवतात्मा गुरुरेव देवता ईश्वर आत्मा प्रेष्ठश्च यस्य तथादृष्टिः सन्नित्यर्थः, इत्येषा ॥ ११ ॥ २॥ कविर्विदेहम् ॥ १ ॥

किञ्च, एवं स्वचित्ते स्वत एव सिद्ध आत्मा प्रियोऽर्थो भगवाननन्तः । तं निर्वृतो नियतार्थो भजेत संसारहेतूपरमश्च यत्र ॥ २ ॥

टीका च—तदानेन किं कर्त्तव्यं, हरिस्तु सेव्य इत्याह, एवं विरक्तः सन् तं भजेत । भजनीयत्वे हेतवः,स्वचित्ते स्वत एव सिद्धः । यत आत्मा, अतएव प्रियः । प्रियस्य च सेवा सुखरूपैव । अर्थः सत्यः, न त्वनात्मव-न्मिथ्या । भगवान् भजनीयगुणश्च । अनन्तश्च नित्यः । य एवम्भूतस्तं भजेत । नियतार्थश्च निश्चलस्वरूपः । भगवदनुभवानन्देन निर्वृतः सन्निति स्वतः सुखात्मकत्वं दर्शितम् । किञ्च यत्र यस्मिन् भजने सति संसारहेतोरविद्याया उपरमो नाशो भवतीत्येषा । अत्र चकारात्तत्-प्राप्तिर्ज्ञेया ॥ २ ॥ ६ ॥ श्रीशुकः ॥ २ ॥

तत्र यद्यपि श्रवणमननादिकं ज्ञानसाधनमपि तत्साम्मुख्यमेव, ब्रह्माकारस्यानुभवहेतुत्वात्, अत एव तत्परम्परोपयोगित्वात् सांख्या-ष्टाङ्गयोगकर्म्माण्यपि तत्साम्मुख्यान्येव, तथा तेषां कथञ्चिद्भक्तित्वमपि जायते ; कर्म्मणस्तदाज्ञापालनरूपत्वेन तदर्पितत्वादिना च करणात्, ज्ञानादीनाञ्चान्यत्रानासक्तिहेतुत्वादिद्वारा भक्तिसचिवतया विधानात् ; तथापि पूर्वं भक्त्या भजेतेत्यनेन कर्म्मज्ञानादिकं नादृतं, किन्तु साक्षाद्भक्त्या श्रवणकीर्त्तनादिलक्षणयैव भजेतेत्युक्तम् । तथैव सहेतुकं श्रीसूतोपदेशोपक्रमत एव दृश्यते । यथाह द्वाविंशत्या, स वै इत्यादिना

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतो वै कवय इत्यन्तेन ग्रन्थेन—स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे। अहैतुक्यप्रतिहता ययात्मा सुप्रसीदति ॥ ३ ॥

यत् खलु महापुराणारम्भे पृष्टं सर्वशास्त्रसारमैकान्तिकं श्रेयो ब्रूहीति तत्रोत्तरं स वै इत्यादि। यतो धर्म्मादधोक्षजे भक्तिस्तत्कथाश्रवणादिषु रुचिर्भवति; धर्म्मः स्वनुष्ठित इत्यादौ व्यतिरेकेण दर्शयिष्यमाणत्वात्। स वै स एव। स्वनुष्ठितस्य धर्म्मस्य संसिद्धिर्हरितोषणमिति वक्ष्यमाणरीत्या तत्सन्तोषार्थमेव कृतो धर्म्मः परः सर्वतः श्रेष्ठः, न निवृत्तिमात्रलक्षणोऽपि, वैमुख्याविशेषात्। तथाच श्रीनारदवाक्यम्—नैष्कर्म्म्यमप्यच्युतभाववर्जितमित्यादौ कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म्म यदप्यकारणम् इति। अतो वक्ष्यते अतः पुंभिरित्यादि। ततः स एवैकान्तिकं श्रेय इत्यर्थः। अनेन भक्तेस्तादृशधर्म्मतोऽप्यतिरिक्तत्वमुक्तम्। तस्या भक्तेः स्वरूपगुणमाह, स्वत एव सुखरूपत्वादहैतुकी फलान्तरानुसन्धानरहिता। अप्रतिहता तदुपरिसुखदुःखदपदार्थान्तराभावात् केनापि व्यवधातुमशक्या च। जातायां तस्यां रुचिलक्षणायां भक्त्यां तयैव श्रवणादिलक्षणो भक्तियोगः प्रवर्त्तितः स्यात्। ततश्च यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुरा इत्यनुसारेण भगवत्स्वरूपादिज्ञानं ततोऽन्यत्र वैराग्यञ्च तदनुगाम्येव स्यादित्याह—वासुदेवे भगवति भक्तियोगः प्रयोजितः। जनयत्याशु वैराग्यं ज्ञानञ्च यदहैतुकम् ॥ ४ ॥

अहैतुकं शुष्कतर्काद्यगोचरम् औपनिषदं ज्ञानमाशु ईषत् श्रवणमात्रेण जनयतीत्यर्थः। व्यतिरेकेणाह—धर्म्मः स्वनुष्ठितः पुंसां वासुदेव कथासु यः। नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥ ५ ॥

वासुदेवालम्बनाभावेन यदि तत्कथासु तल्लीलावर्णनेषु रतिं रुचिं नोत्पादयेत् तदा श्रमः स्यान्न तु फलं कथारुचेः सर्वत्रैवाबलात् श्रेष्ठत्वाच्च सैवोक्ता। तदुपलक्षणत्वेन भजनान्तररुचिरप्युपदिष्टा। एवशब्देन प्रवृत्तिलक्षणकर्म्मफलस्य सर्गादेः क्षयिष्णुत्वं, हिशब्देन तत्रै-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

च, तद्यथेह कर्म्मजितो लोकः चीयते, इति सोपपत्तिकश्रुतिप्रमाणत्वं, केवलशब्देन निवृत्तिमात्रलक्षणधर्म्मफलस्य साध्यत्वं, सिद्धस्यापि नश्वरत्वं, तत्रापि तेनैव हिशब्देन यस्य देवे परा भक्तिरित्यादिश्रुतिप्रमाणत्वं, नैष्कर्म्म्यमप्यच्युतभाववर्ज्जितम् इत्यादि श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये इत्यादि आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधो नादृतयुष्मदङ्घ्रय इत्यादि वचनप्रमाणञ्च सूचितम् । श्लोकद्वयेन भक्तिर्निरपेक्षा ज्ञानवैराग्ये तु तत्सापेक्षे इति लभ्यते । तदेवं भक्तिफलत्वेनैव धर्म्मस्य साफल्यमुक्तम् । तत्र यदन्ये मन्यन्ते, धर्म्मस्यार्थः फलं तस्य कामस्तस्य चेन्द्रियप्रीतिस्तत्प्रीतेश्च पुनरपि धर्म्मादिपरम्परेति, तच्चान्यथैवेत्याह, द्वाभ्याम्—धर्म्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते । नार्थस्य धर्म्मैकान्तस्य कामो लाभाय हि स्मृतः । कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता । जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्म्मभिः ॥ ६ ॥

आपवर्ग्यस्य, यथा वर्णविधानमपवर्गश्च भवति योऽसौ भगवति सर्वात्मन्यनात्म्येऽनिरुक्तेऽनिलयने परमात्मनि वासुदेवेऽनन्यनिमित्तभक्तियोगलक्षणो नानागतिनिमित्ताविद्याग्रन्थिबन्धनद्वारेण यदा हि महापुरुषपुरुषप्रसङ्ग इति पञ्चमस्कन्धगद्यानुसारेण अपवर्गो भक्तिः; तथाच स्कान्दे रेवाखण्डे—निश्चला त्वयि भक्तिर्या सैव मुक्तिर्जनार्द्दन । मुक्ता एव हि भक्तास्ते तव विष्णो यतो हरे ॥ इति । ततः उक्तरीत्या भक्तिसम्पादकस्येत्यर्थः । अर्थाय फलत्वाय । तथार्थस्याप्येवम्भूतधर्म्माव्यभिचारिणः कामो लाभाय फलत्वाय न हि स्मृतस्तत्त्वविद्भिः । कामस्य विषयभोगस्येन्द्रियप्रीतिर्लाभः फलं न भवति किन्तु यावता जीवेत तावानेव कामस्य लाभः तादृशजीवनपर्य्याप्त एव कामः सेव्य इत्यर्थः । जीवस्य जीवनस्य च पुनर्धर्म्मानुष्ठानद्वारा कर्म्मभिर्य इह प्रसिद्धः स्वर्गादिः सोऽर्थो न भवति किन्तु तत्त्वजिज्ञासैवेति । तदेवं तत्त्वज्ञानं यस्या भक्तेरवान्तरफलमुक्तं सैव परमं फलमितिभावः । किन्तत्तत्त्व-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मित्यपेक्षायां पद्यमेकं तूदाहृतम्—वदन्ति तत्तत्त्वविदस्तत्त्वं यज्-
ज्ञानमद्वयम्। ब्रह्मेति परमात्मेति भगवानिति शब्द्यते॥ इति
अद्वयमिति तस्याखण्डत्वं निर्दिश्यान्यस्य तदनन्यत्वविवक्षया तच्छक्ति-
त्वमेवाङ्गीकरोति। तत्र शक्तिवर्गलक्षणतद्धर्मातिरिक्तं केवलं ज्ञानं
ब्रह्मेति शब्द्यते अन्तर्यामित्वमयमायाशक्तिप्रचुरचिच्छक्त्यंशविशिष्टं
परमात्मेति परिपूर्णसर्वशक्तिविशिष्टं भगवानिति। विवृतञ्चैतत्
प्राक्तनसन्दर्भत्रयेण। तच्च त्रिधाविर्भावयुक्तमेव तत्त्वं भक्त्यैव साक्षा-
दपि क्रियत इत्याह—तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया। पश्य-
न्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया॥ ७॥

भक्त्या तत्कथारुचेरेव परावस्थारूपया प्रेमलक्षणया। तत् पूर्व-
मेवोक्तं तत्त्वम्। आत्मनि शुद्धे चेतसि पश्यन्ति च। ज्ञानमात्रस्य
वार्त्ता साक्षादपि कुर्वन्तीत्यर्थः। कीदृशं तदात्मानं स्वरूपाख्यं
वाख्यमायाख्यशक्तीनामाश्रयम्। ज्ञानवैराग्ययुक्तया स्वात्मजाभ्यां ताभ्यां
सेवितया। अतएव ते मुनयः पृथक् च विशिष्टञ्च स्वेच्छया पश्यन्तीत्य-
याति। नदेवं श्रुतगृहीतया मुनयः श्रद्दधाना इति पदत्रयेण तस्या
एव भक्तेर्दौर्लभ्यं दर्शितम्। सद्गुरोः सकाशाद्वेदान्ताद्यखिलशास्त्र-
विचारश्रवणद्वारा यदि स्वावश्यकपरमकर्त्तव्यत्वेन ज्ञायते, पुनश्च, भग-
वान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया। तदध्यवस्यत् कूटस्थो रति-
रात्मन् यतो भवेदितिवद् यदि विपरीतभावनात्याजकौ मननयोग्य-
मननाभिनिवेशौ स्यातां, ततः श्रद्दधानैः सा भक्तिरुपासनाद्वारा लभ्यते
इति। अतः श्रुतिरपि तदर्थमागृह्णाति—आत्मा वारे द्रष्टव्यः श्रोतव्यो
मन्तव्यो निदिध्यासितव्य इति। अत्र निदिध्यासनमुपासनं दर्शनं
साक्षात्कार उच्यते। सा चैवं दुर्लभा भक्तिः हरितोषणे प्रयुक्तात् स्वा-
विकधर्मादपि लभ्यते। तस्माद्धरितोषणमेव तस्य परमफलम् इत्याह—
अतः पुंभिर्द्विजश्रेष्ठा वर्णाश्रमविभागशः। स्वनुष्ठितस्य धर्मस्य
संसिद्धिर्हरितोषणम्॥ ८॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्वनुष्ठितस्य बहुप्रयत्नेनाच्छिद्रमुपार्जितस्य इति तुच्छे स्वर्गादिफले तत्प्रयोगोऽतीवायुक्त इति भावः। यद्येवं श्रीहरिसन्तोषकस्यापि धर्म्मस्य फलं श्रवणादिरुचिलक्षणा भक्तिरेव तत्प्रवर्त्तिताया भक्तेश्चानुगता ज्ञानवैराग्यादिगुणा इत्यायातं,तदा साक्षात् श्रवणादिरूपा भक्तिरेव कर्त्तव्या, किन्तत्तदाग्रहेणेत्याह—तस्मादेकेन मनसा भगवान् सात्वतां पतिः। श्रोतव्यः कीर्त्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥ ९ ॥

एकेन कर्म्माद्याग्रहशून्येन। श्रवणमत्र नामगुणादीनां, तथा कीर्त्तनञ्च। तत्रैवान्तिमभूमिकापर्य्यन्तां सुगमां शैलीं वक्तुं धर्म्मादिकष्टनिरपेक्षेण युक्तिमात्रेण तत्प्रथमभूमिकां श्रीहरिकथारुचिमुत्पादयन् तस्य गुणं स्मारयति—यदनुध्यासिना युक्ताः कर्म्मग्रन्थिनिबन्धनम्। छिन्दन्ति कोविदास्तस्य को न कुर्य्यात् कथारतिम् ॥ १० ॥

कोविदा विवेकिनः युक्ताः संयतचित्ता यस्य हरेः अनुध्या अनुध्यानं चिन्तनमात्रमेवासिस्तेन खड्गेन ग्रन्थिं नानादेहेष्वहङ्कारं निबध्नाति यत्तत् कर्म्म च्छिन्दन्ति। तस्यैवंभूतस्य परमदुःखादुद्धर्त्तुः कथायां रतिं को न कुर्य्यात्। नन्वेवमपि तस्य कथारुचिर्मन्दभाग्यानां न जायत इत्याशङ्क्य तत्रोपायं वदन् तामारभ्य नैष्ठिकीपर्य्यन्तां भक्तिमुपदिशति पञ्चभिः—शुश्रूषोः श्रद्दधानस्य वासुदेवकथारुचिः। स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात् ॥ ११ ॥

भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदा इत्याद्यनुसारेण प्रायस्तत्र महत्सङ्गो भवतीति तदीयटीकानुमत्या च पुण्यतीर्थनिषेवणाद्धेतोर्लब्धा यदृच्छया या महत्सेवा तया वासुदेवकथारुचिः स्यात्। कार्य्यान्तरेणापि तीर्थे भ्रमतो महतां प्रायस्तत्र भ्रमतां तिष्ठतां वा दर्शनस्पर्शनसम्भाषणादिलक्षणा सेवा स्वत एव सम्पद्यते; तत्प्रभावेण तदीयाचरणे श्रद्धा भवति; तदीयस्वाभाविकपरस्परभगवत्कथायां किमेते संकथयन्ति तत् शृणोमीति तदिच्छा जायते; तच्छ्रवणेन च तस्यां रुचिर्जायत इति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथा च मद्द्वारा एव श्रुता झटिति कार्य्यकरीति भावः। तथाच कपिलदेववाक्यम्—सतां प्रसङ्गान्मम वीर्य्यसंविदो भवन्ति हृत्कर्णरसायनाः कथा इत्यादि। ततश्च शृण्वतां स्वकथाः कृष्णः पुण्यश्रवणकीर्त्तनः। हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत् सताम् ॥ १२ ॥

कथाद्वारा अन्तःस्थो भावनापदवीं गतः सन् हरिरभद्राणि वासनाः। ततश्च, नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया। भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥ १३ ॥

नष्टप्रायेषु न तु ज्ञानमिव सम्यङ्नष्टेषु इति भक्तेर्निरर्गलस्वभावत्वमुक्तम्। भागवतानां भागवतशास्त्रस्य वा सेवया भक्तिरनुष्ठानरूपा नैष्ठिकी सन्तता एव भवति। यदैव त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतीत्याद्युक्तरीत्या सर्ववासनानाशात् चित्तं शुद्धसत्त्वमग्नं सत् भगवत्तत्त्वसाक्षात्कारयोग्यं भवतीत्याह—तदा रजस्तमोभावाः कामलोभादयश्च ये। चेत एतैरनाविद्धं स्थितं सत्त्वे प्रसीदति ॥ १४ ॥

रजश्च तमश्च ये च तत्प्रभवा भावाः कामादय एतैरित्यन्वयः। एवं प्रसन्नमनसो भगवद्भक्तियोगतः। भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते ॥ १५ ॥

एवं पूर्वोक्तप्रकारेण प्रसन्नमनसः ततो मुक्तसङ्गस्य त्यक्तकामादिवासनस्य भक्तियोगतः पुनरपि क्रियमाणात्तस्माद्विज्ञानं साक्षात्कारो मनसि वहिर्भावानां विनैवानुभवो यः स जायते। तस्य च परमानन्दैकरूपत्वेन सतः फलरूपस्य साक्षात्कारस्य आनुषङ्गिकं फलमाह—भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्म्माणि दृष्ट एवात्मनीश्वरे ॥ १६ ॥

हृदयग्रन्थिरूपोऽहङ्कारः। सर्वसंशयाश्छिद्यते इति श्रवणमननादिसाधनानामपि तस्मिन् दृष्ट एव सर्वे संशयाः समाप्यन्त इत्यर्थः। तत्र श्रवणेन तावज्ज्ञेयगतासम्भावनाश्छिद्यन्त इति मननेन तद्गतविपरीतभावना साक्षात्कारेण त्वात्मयोग्यतागतासम्भावनाविपरीतभावने इति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ञ्चयम्। चीयन्ते तदिच्छामात्रेणैव न किञ्चिदेव तेष्ववशिष्यत इत्यर्थः। अत्र प्रकारणार्थे सदाचारं दर्शयन्नुपसंहरति—अतो वै कवयो नित्यं भक्तिं परमया मुदा। वासुदेवे भगवति कुर्वन्त्यात्मप्रसादनीम् ॥ १७ ॥

आत्मप्रसादनीं मनसः शोधनीम्। न केवलमेतावन्तु णत्वं तस्याः किञ्च परमया मुदेति कर्म्मानुष्ठानवन्न साधनकाले साध्यकाले वा भक्त्यनुष्ठानं दुःखरूपं प्रत्युत सुखरूपमेवेत्यर्थः। अतएव नित्यं साधकदशायां सिद्धदशायाञ्च तावत् कुर्वन्तीत्युक्तम्॥१॥२॥ श्रीसूतः॥३—१७॥

तदेवं कर्म्मज्ञानवैराग्ययत्नपरित्यागेन भगवद्भक्तिरेव कर्त्तव्येति मतम्। कर्म्मविशेषरूपं देवतान्तरभजनमपि न कर्त्तव्यमित्याह सप्तभिः। तत्रान्येषां का वार्त्ता, सत्यपि श्रीभगवत एव गुणावतारत्वे श्रीविष्णुवत् साक्षात् परब्रह्मत्वाभावात् सत्त्वमात्रोपकारकत्वाभावाच्च प्रत्युत रजस्तमोपबृंहणत्वाच्च ब्रह्मशिवावपि श्रेयोऽर्थिभिर्नोपास्यावित्यत्र द्वौ श्लोकौ परमात्मसन्दर्भ एवोदाहृतौ। सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते। स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥ पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयोमयः। तमसस्तु रजस्तस्मात् सत्त्वं यद्ब्रह्मदर्शनमिति। सत्त्वतनोः सत्त्वशक्तेः। त्रयीमयस्त्रय्युक्तकर्मप्रचुरः। दारुस्थानीयं तमः। धूमस्थानीयं रजः। अग्निस्थानीयं सत्त्वम्। त्रय्युक्तकर्मस्थानीयं ब्रह्म। त्रय्युक्तकर्म्म यथाग्नावेव साक्षात् प्रवर्त्तते नान्ययोस्तद्वत् परब्रह्मभूतो भगवानपि सत्त्व एवेत्यर्थः। देवतान्तरपरित्यागेनापि भगवद्भक्तौ सदाचारं प्रमाणयति—भेजिरे मुनयोऽथाग्रे भगवन्तमधोक्षजम्। सत्त्वं विशुद्धं क्षेमाय कल्पन्ते येऽनु तानिह ॥ १८ ॥

अथ अतो हेतोः। अग्रे पुरा। सत्त्वं विशुद्धं विशुद्धसत्त्वात्मकमूर्त्तिं भगवन्तम्। प्राकृतसत्त्वातीतत्वञ्च तस्य विवृतं भगवत्सन्दर्भे। अतो ये



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ताननुवर्त्तन्ते ते इह संसारे क्षेमाय कल्पन्ते। नन्वन्यान् भैरवादी-
न्देवानपि केचिद्भजन्तो दृश्यन्ते सत्यं यतस्ते सकामाः। किन्तु मुमु-
क्षवोऽप्यन्यान्न भजन्ते किमुत तद्भक्त्येकपुरुषार्था इत्याह—मुमुक्ष
घोररूपान् हित्वा भूतपतीनथ। नारायणकलाः शान्ता भजन्ति ह्य-
सूयवः॥ १९॥

भूतपतीनिति पितृप्रजेशादीनामुपलक्षणम्। अनसूयवो देवतान्तर-
निन्दकाः। ननु कामलाभोऽपि लक्ष्मीपतिभजने भवत्येव तर्हि क-
मन्यांस्ते भजन्ते तत्राह—रजस्तमःप्रकृतयः समशीला भजन्ति वै
पितृभूतप्रजेशादीन् श्रियैश्वर्य्यप्रजेप्सवः॥ २०॥

रजस्तमःप्रकृतित्वेनैव पित्रादिभिः समं शीलं येषाम्। समशील-
त्वादेव तद्भजने प्रवृत्तिरित्यर्थः। ततो वासुदेव एव भजनीय इत्युक्त्वा
सर्वशास्त्रतात्पर्य्यञ्च तत्रैवेत्याह द्वाभ्याम्—वासुदेवपरा वेदा वासुदेव-
परा मखाः। वासुदेवपरो योगो वासुदेवपराः क्रियाः। वासुदेव-
ज्ञानं वासुदेवपरं तपः। वासुदेवपरो धर्मो वासुदेवपरा गतिः॥२१

टीका च—वासुदेवः परस्तात्पर्य्यगोचरो येषां ते। ननु वे-
मखपरा दृश्यन्ते इत्याशङ्क्य तेऽपि तदाराधनार्थत्वात्तत्परा ए-
त्युक्तम्। योगा योगशास्त्राणि। तेषामप्यासनप्राणायामादिक्रि-
परत्वमाशङ्क्य तासामपि तत्प्राप्त्युपायत्वात्तत्परत्वमुक्तम्। ज्ञा-
ज्ञानशास्त्रम्। ननु तज्ज्ञानपरमेवेत्याशङ्क्य ज्ञानस्यापि तत्पर-
मुक्तम्। तपोऽत्र ज्ञानम्। धर्मो धर्म्मशास्त्रं दानव्रतादिविषयम्।
तत् स्वर्गादिपरमित्याशङ्क्य गम्यते इति गतिः स्वर्गादिफलं त-
तदानन्दांशरूपत्वात्तत्परैवेत्युक्तम्। यद्वा वेदा इत्यनेनैव तत्प्र-
त्वात् सर्वाणि अपि वासुदेवपराणीत्युक्तम्। ननु तेषां मखयोगा-
यादिनानार्थपरत्वान्न तदेकपरत्वमित्याशङ्क्य मखादीनामपि तत्पर-
मुक्तमिति द्रष्टव्यमित्येषा। अत्र योगादीनां कथञ्चिद्भक्तिसचिवत्वे-
तत्परत्वं मुख्यं द्रष्टव्यम्। तदेवं द्वाविंशत्या तद्भजनस्यैवाभिधे-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दर्शयित्वा पूर्वोक्तं सर्वशास्त्रसमन्वयमेव स्थापयति—स एवेदं ससर्जाग्रे भगवानात्ममायया। सदसद्रूपया चासौ गुणमय्यागुणो विभुरित्यादि ॥ २२ ॥

टीका च—जगत्सर्गप्रवेशनियमनादिलीलायुक्ते वस्तुनि सर्वशास्त्रसमन्वयो दृश्यते कथं वासुदेवपरत्वं सर्वस्य तत्राह स एवेति चतुर्भिरित्येषा। इदं महदादिविरिञ्चिपर्य्यन्तम्। एवं प्रवेशादिकापि उत्तरश्लोकेषु द्रष्टव्या ॥ १ ॥ २ ॥ श्रीसूतः श्रीशौनकम् ॥१८—२२॥

श्रीभागवताविर्भावकारणे श्रीनारदव्याससंवादेऽपि—नैष्कर्म्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्। कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म्म यदप्यकारणम् ॥ इत्युदाहृतम्। टीका च—निष्कर्म ब्रह्म तदेकाकारत्वान्निष्कर्मतारूपम् अज्यते अनेनेत्यञ्जनमुपाधिस्तन्निवर्त्तकं निरञ्जनमिवम्भूतमपि ज्ञानम् अच्युते भावो भक्तिस्तद्वर्जितं चेदलमत्यर्थं न शोभते सम्यगपरोक्षाय न कल्पते इत्यर्थः। तदा शश्वत् साधनकाले फलकाले च अभद्रं दुःखरूपं यत् काम्यं कर्म यदप्यकारणमकाम्यं तच्चेति चकारस्यान्वयः। तदपि कर्म ईश्वरे नार्पितञ्चेत् कुतः पुनः शोभते वहिर्मुखत्वेन सत्त्वशोधकत्वाभावादित्येषा। तदेवं ज्ञानस्य भक्तिसंसर्गं विना कर्मणश्च तदुपपादकत्वं विना व्यर्थत्वं व्यक्तम्। किञ्च, जुगुप्सितं धर्मकृतेऽनुशासतः स्वभावरक्तस्य महान् व्यतिक्रमः। इत्यादिकमुक्त्वाह—त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदि यत्र क्व वाभद्रमभूदमुष्य किं को वार्थ आप्तोऽभजतां स्वधर्म्मतः ॥ २३ ॥

टीका च—इदादीन्तु नित्यनैमित्तिकस्वधर्मनिष्ठामप्यनादृत्य केवलं हरिभक्तिरेवोपदेष्टव्या इत्याशयेनाह त्यक्त्वेति। ननु स्वधर्मत्यागेन भजन् भक्तिपरिपाकेन यदि कृतार्थो भवेत्तदा न काचिच्चिन्ता। यदि पुनरपक्व एव म्रियेत भ्रश्येद्वा तदा तु स्वधर्मत्यागनिमित्तोऽनर्थः स्यादित्याशङ्क्याह, ततो भजनात् पतेत् कथञ्चिद्भ्रश्येन्म्रियेत वा यदि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदापि भक्तिरसिकस्य कर्म्मानधिकारान्नानर्थशङ्का। अङ्गीकृत्याप्याह अ-
शब्दः कटाक्षे, यत्र क्व वा नीचयोनावपि अमुष्य भक्तिरसिकस्य अभ-
मभूत् किं नाभूदेवेत्यर्थः भक्तिवासनासद्भावादितिभावः। अभजताम्
केवलस्वधर्म्मतः को वार्थ आप्तः। अभजतामिति षष्ठी सम्बन्धमात्र-
विवक्षया इत्येषा ॥ १ ॥ ५ ॥ श्रीनारदः श्रीव्यासम् ॥ २३ ॥

तदेवं भक्तिरेवाभिधेयं वस्त्वित्युक्तम्। तथैव श्रीशुकपरीक्षित्-
संवादोपक्रमेऽपि—श्रोतव्यादीनि राजेन्द्र नृणां सन्ति सहस्रशः। अ-
श्यतामात्मतत्त्वं गृहेषु गृहसेविनाम् इत्यादि ॥ २४ ॥

गृहेष्वित्यादिकमुपलक्षणं बहिर्मुखानाम्। आत्मतत्त्वं भगवत्तत्त्व
तथा निगमयिष्यमाणत्वात्। निगमयति—तस्माद् भारत सर्वात्मा भग-
वान् हरिरीश्वरः। श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताभयम् ॥२५॥

टीका च—सर्वात्मेति प्रेष्ठत्वमाह भगवानिति सौन्दर्य्यं ईश्व
इत्यावश्यकत्वं हरिरिति बन्धहारित्वम् अभयं मोक्षमिच्छता इत्येषा
मोक्षस्तु सर्व्वक्लेशशान्तिपूर्व्वकभगवत्प्राप्तिरेवेति ज्ञेयम्। एतदनन्त
विराड्धारणामुक्त्वा तदपवादेनापि भक्तिं तामाह—स सर्वधीवृत्त्य-
भूतसर्व आत्मा यथा स्वप्नजनेक्षितैकः। तं सत्यमानन्दनिधिं भजे-
नान्यत्र सज्जेद् यत आत्मपातः ॥ २६ ॥

टीका च—सर्वेषां धीवृत्तिभिरनुभूतं सर्वं येन स एक एव सर्वा-
न्तरात्मा। तमेव सत्यं भजेत। अन्यत्रोपलक्षणे न सज्जेत। यत आ-
ङ्गादात्मनः पातः संसारो भवति। एकस्य तत्तदिन्द्रियैः सर्वानुभूते
दृष्टान्तः स्वप्नजनानामीक्षिता यथेति। स्वप्नेऽपि कदाचिद्बहून् देहा
प्रकल्प्य जीवस्तत्तदिन्द्रियैः सर्वं पश्यति तद्वदीश्वरस्य तु विद्याशक्तित्वा
बन्ध इत्येषा। अत्र स्वधीवृत्तिभिः पश्यन्नेव सर्वेषां धीवृत्तिभि
सर्वं पश्यतीत्येव तथोक्तम्। स ऐक्षतेत्यत्र सर्वधीवृत्तिसृष्टेः पूर्वम
तच्छ्रवणात्। तथा स्वप्नदेहानामीश्वरकर्त्तृकत्वेऽपि जीवकर्त्तृकत्व-
त्वनकथनं तत्सङ्कल्पद्वारैवेश्वरः करोतीत्यपेक्षायामुक्तम्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सर्वधीत्यनुक्तत्वात् । सत्यं भजेतेति योजयितव्यस्य कर्त्तुर्विद्यमानत्वा-द्यमेवार्थः । स तथाभूतविराड्धारणासिद्धो योगी विराड्गतसर्वाभि-र्धीवृत्तिभिर्ज्ञानेन्द्रियैरनुभूतं सर्वं विराड्गतं येन तथाभूतोऽपि सन् तं सत्यमानन्दनिधिं विराडन्तर्यामिणं श्रीनारायणमेव भजेत अन्यत्र विराड्गते कुत्रापि न सज्जेत यतः सज्जनादात्मपातः संसार एव स्यात् । तस्य सर्वानुभूतौ दृष्टान्तः, आत्मा स्वप्नद्रष्टा जीवो यथा स्वप्नगतानां सर्वेषां जनानां तदुपलक्षितानां वस्तूनाञ्च य एक एव ईक्षिता भवतीति तद्वत् । अत्र तमित्यनेन स ऐक्षतेति स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतिप्रसिद्धपूर्णानपेक्षज्ञानादिसिद्धेस्तथा सान्ध्ये सृष्टिराह हि मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति न्यायप्राप्तेन स्वप्नस्यापि कर्त्तृत्वेन जाग्रदादिमयजगत्कर्त्तृत्वस्य पूर्णत्व-प्राप्तेर्वैलक्षण्यं दर्शितम् । सत्यादिद्वयेन परमपुरुषार्थत्वञ्चेति ज्ञेयम् ॥ २ ॥ १ ॥ श्रीशुकः ॥२४—२६॥

एतदनन्तराध्यायेऽपि तथैवाह—यावन्न जायेत परावरेऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः । तावत् स्थवीयः पुरुषस्य रूपं क्रियाव-साने प्रयतः स्मरेत ॥ २७ ॥

परे ब्रह्मादयोऽवरे यस्मात् । विश्वेश्वरे द्रष्टरि न तु दृश्ये चैतन्य-घनत्वात् । भक्तियोगः, केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् । चतुर्भुजमित्यादिनोक्तसाधनलक्षणाभिनिवेशः । क्रियावसाने आवश्यककर्मानुष्ठानानन्तरम् । अनेन कर्मापि भक्ति-योगपर्य्यन्तम् इत्युक्तम् । अनन्तरञ्च, स्थिरं सुखञ्चासनमास्थितो यति-र्यदा जिहासुरित्यादिना, यदि प्रयास्यन्नृप पारमेष्ठ्यं वैहाय सानासुत यद्विहारमित्यादिना च, क्रमेण सद्योमुक्तिक्रमसुक्त्युपायौ ज्ञानयोगा-वुक्त्वा ततोऽपि श्रेष्ठत्वं भक्तियोगहेतुभगवदर्पितकर्म्मण एवोक्त्वा साक्षाद् भक्तियोगस्य कैमुत्यमेवानीतम् । यथा—न ह्यतोऽन्यः शिवः पन्था विशतः संसृताविह । वासुदेवे भगवति भक्तियोगो यतो भवेत् ॥२८॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

टीका च—सन्ति संसरतः पुंसो बहवो मोक्षमार्गास्तपोयोगादयः। समीचीनस्त्वयमेवेत्याह नहीति। यतोऽनुष्ठिताद्भक्तियोगो भवेत् अतोऽन्यः शिवः सुखरूपो निर्विघ्नश्च नास्त्येवेत्येषा। यच्छब्देनात्र भगवद्सन्तोषार्थकं कर्मोच्यते। स वै पुंसां परो धर्म इत्युक्तेः। स च भक्तियोगः सर्ववेदसिद्ध इत्याह—भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया। तदध्यवस्यत् कूटस्थो रतिरात्मन् यतो भवेत्॥ २९॥

भगवान् ब्रह्मा। कूटस्थः निर्विकार एकाग्रचित्तः सन्नित्यर्थः, त्रिस्त्रीन् वारान्, कार्त्स्न्येन साकल्येन, ब्रह्म वेदमन्वीक्ष्य विचार्य्य, यत आत्मनि हरौ रतिर्भवेत्तदेव भक्तियोगाख्यं वस्तु मनीषया अध्यवस्यत् निश्चितवान्। अत्राप्युपसंहारानुरोधेन आत्मशब्दस्य हरिवाचकता। निरुक्तञ्च आततत्वाच्च मातृत्वादात्मा हि परमो हरिरिति। अथवा भगवान् स्वप्रकाशसार्वज्ञ्यादिगुणः परमेश्वरोऽपि सर्ववेदाभिधेयसारार्थपर्य्यालोचनलीलार्थमन्वीक्ष्य तत्र शास्त्रविदन्तराणामीक्षणमनुकृत्य। अनन्तवैकुण्ठवैभवादिमयानामनन्तविरिञ्चिपाठ्यभेदानां वेदानां तथेक्षणञ्च तेनैव सम्भवतीत्याह, कूटस्थ एकरूपतयैव कालव्यापीति। अतएवोक्तं स्वयमेव—किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत्। इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चनेति। तथैव यच्छ्रोतव्य इत्यादि प्रश्नस्योत्तरत्वेनोपसंहरति—तस्मात् सर्वात्मना राजन् हरिः सर्वत्र सर्वदा। श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यो भगवान् नृणाम्॥३०॥

चकारात् पादसेवादयोऽपि गृह्यन्ते। अनन्तरञ्च श्रवणादिफलं यद्दर्शितं तत्तु दाहृतम्—पिबन्ति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु संभृतम्। पुनन्ति ते विषयविदूषिताशयं व्रजन्ति तच्चरणसरोरुहान्तिकमिति। अत्र पुनन्तीत्यनेन पूर्वोक्तः स्थूलधारणामार्गः परिहृतः। भक्तियोगस्यैव स्वतः पावनत्वादलं तत्प्रयासेनेति॥ २॥ २॥ श्रीशुकः॥२७—३०॥

एवं प्राक्तनाध्यायाभ्यां कर्मयोगज्ञानेभ्यः श्रेष्ठत्वमुक्त्वा तदुक्त

ध्यायेऽपि सर्वदेवतोपासनेभ्यः श्रेष्ठत्वप्रवचनेन भगवद्भक्तियोगस्यैवाभिधेयत्वमाह—ब्रह्मवर्च्चसकामस्तु यजेत ब्रह्मणः पतिमित्याद्यनन्तरम्, अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ ३१ ॥

टीका च—अकामः एकान्तभक्तः। उक्तानुक्तसर्वकामो वा। पुरुषं पूर्णं निरुपाधिमित्येषा। तीव्रेण दृढ़ेन स्वभावत एवानुपघात्येन इति विद्वानवकाशतोक्ता। कामना तु याद्दच्छिकेनापि स्यात्। यथोक्तं भारते—भक्तक्षणः क्षणो विष्णोः स्मृतिः सेवा स्ववेश्मनि। स्वभोग्यस्यार्पणं दानं फलमिन्द्रादिदुर्लभम्। तदुक्तं श्रीकर्द्दमं प्रति—न वै जातु मृषैव स्यात् प्रजाध्यक्ष मदर्हणमिति। यथा वा—यत्तत्कामस्तीव्रेण यजेत। ततश्च शुद्धभक्तिसम्पादनायैवान्ते पर्य्यवसिष्यत्यसावित्यभिप्रायेण सविशेषणमुपदिष्टम्। तदनेनैकान्तभक्तेषु मुमुक्षौ वा तद्भक्तियोगस्यैवाभिधेयत्वं किं वक्तव्यमपि तु सर्वकामिष्वपीति तदेव सर्वथापि निर्णीतम्। किञ्च, एतावानेव यजतामिह निःश्रेयसोदयः। भगवत्यचलो भावो यद्भागवतसङ्गतः ॥ ३२ ॥

टीका च—पूर्वोक्तनानादेवतायजनस्यापि संयोगपृथक्त्वेन भक्तियोगफलत्वमाह एतावानिति। इन्द्रादीनपि यजतामिह तत्तद्यजने भागवतानां सङ्गतो भगवत्यचलो भावो भक्तिर्भवतीति यदेतावानेव निःश्रेयसस्य परमपुरुषार्थस्य उदयो लाभः। अन्यत्तु सर्वं तुच्छमित्यर्थ इत्येषा। अत्र इन्द्रमिन्द्रियकामस्तु इत्याद्युक्तम् इन्द्रियपाटवादिकं पृथक्त्वेन फलम्। भागवतेन संयोगे तु भावः फलम्। खादिरयूपसंयोगे यागस्य फलवैशिष्ट्यवदिति ज्ञेयम् ॥ २ ॥ ३ ॥ श्रीशुकः ॥ ३१—३२ ॥

अनन्तरं श्रीशौनकेनापि व्यतिरेकोक्त्या तस्यैवाभिधेयत्वं दृढ़ीकृतं यथाह—आयुर्हरति वै पुंसामुद्यन्नस्तञ्च यन्नसौ। तस्यर्त्ते यत्क्षणो नीत उत्तमःश्लोकवार्त्तया ॥ ३३ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

असौ सूर्य्य उद्यन्नुद्गच्छन् अस्तञ्च यन् गच्छन् हरति वृथागामि-त्वात् बलादाच्छिनत्तीव यद्येन क्षणोऽपि नीत उत्तमःश्लोकवार्त्तया तस्यायुर्ऋते वर्जयित्वा। तावतैव सर्वसाफल्यादिति भावः। ननु जीवना-दिकमेव तेषामायुषः फलमस्तु तत्राह—तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत। न खादन्ति न मेहन्ति किं ग्रामे पशवोऽपरे ॥३४॥

न मेहन्ति न मैथुनं कुर्वन्ति। तमपि नराकारं पशुं मत्वाह अपर इति। तदेवाह—श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः। न यत्कर्णपथोपेतो जातु नाम गदाग्रजः ॥ ३५ ॥

श्वादितुल्यैस्तत्परिकरैः सम्यक्स्तुतोऽप्यसौ पुरुषः पशुस्तेषामेव मध्ये श्रेष्ठश्चेत्तर्हि महापशुरेवेत्यर्थः। तस्याङ्गानि निष्फलानीत्याह पञ्चभिः। बिले बतोरुक्रमविक्रमान् ये न शृण्वतः कर्णपुटे नरस्य जिह्वासती दार्दुरिकेव सूत न योपगायत्युरुगायगाथाः ॥ ३६ ॥

न शृण्वतोऽशृण्वतो नरस्य ये कर्णपुटे ते बिले वृथारन्ध्रे इत्यर्थः। असती दुष्टा। भारः परं पट्टकिरीटजुष्टमप्युत्तमाङ्गं न नमेन्मुकुन्दम्। शावौ करौ नो कुरुतः सपर्य्यां हरेर्लसत्काञ्चनकङ्कणौ वा ॥ ३७ ॥

पट्टवस्त्रोष्णीषेण किरीटेन वा जुष्टमपि। अप्यर्थे वा शब्दः। बर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न निरीक्षतो ये। पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरेर्यौ ॥ ३८ ॥

द्रुमवज्जन्म भजेते इति तथा वृक्षमूलतुल्यावित्यर्थः। जीवञ्छवो भागवताङ्घ्रिरेणुं न जातु मर्त्त्योऽभिलभेत यस्तु। श्रीविष्णुपद्या मनुजस्तुलस्याः श्वसञ्छवो यस्तु न वेद गन्धम् ॥ ३९ ॥

श्रीविष्णुपद्यास्तत्पदलग्नायाः। तदश्मसारं हृदयं बतेदं यद्गृह्यमाणैर्हरिनामधेयैः। न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः ॥ ४० ॥

अश्मवत् सारो बलं काठिन्यं यस्य। विक्रियालक्षणमप्येतदिति यदा तद्विकारो भवेत्तदा नेत्रादौ जलादिकं भवतीत्यर्थः। इदमेतत्

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥ ८३ ॥

टीका च—तदेवं व्यवस्थयाधिकारित्रयमुक्तम्। तत्र भक्तेरन्यनिरपेक्षत्वादन्यस्य च तत्सापेक्षत्वाद्भक्तियोग एव श्रेष्ठ इत्युपसंहरति तस्मादिति त्रिभिः। मदात्मनो मयि आत्मा चित्तं यस्य तस्य। श्रेयः श्रेयःसाधनमित्येषा। अत्र प्रायोग्रहणस्यायं भावः, भजतां ज्ञानवैराग्याभ्यासेन प्रयोजनं नास्त्येव। तत्र यथा स्थितेऽपि सद्योमुक्तिमार्गे केषाञ्चित् क्रममुक्तिमार्गे प्रवृत्तिर्जायते, तथा ब्रह्मभूतः प्रसन्नात्मेत्यादिश्रीगीतानुसारेण यदि क्रमभक्तिमार्गे प्रवृत्तिः स्यात्तदा भवत्विति। तदेवं भक्तेः प्रेमलक्षणे सर्वफलराजे स्वफले नास्त्येव ज्ञानाद्यपेक्षा। पृथक् पृथक् ज्ञानादिफलेऽपि साध्ये नास्तीत्याह—यत् कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्। योगेन दानधर्मेण श्रेयोभिरितरैरपि। सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा। स्वर्गापवर्गं मद्धाम कथञ्चिद् यदि वाञ्छति ॥ ८४ ॥

इतरैस्तीर्थयात्राव्रतादिभिरपि यद्भाव्यं तत् सर्वं मद्भक्तियोगेन मद्भक्तो लभते। तत्राप्यञ्जसा अनायासेनैव। किन्तत् सर्वं तदाह, स्वर्गापवर्गमिति। स्वर्गः प्रापञ्चिकसुखं सत्वशुद्ध्यादिक्रमेणापवर्गो मोक्षसुखञ्च। तदतिक्रमिसुखञ्च भवतीत्याह, मद्धाम वैकुण्ठञ्चेति। कथञ्चिद्भक्त्युपकरणत्वेनैव यदि वाञ्छति कश्चित्। तत्र श्रीचित्रकेत्वादिवत् स्वर्गवाञ्छा। तस्य भक्त्युपकरणत्वञ्चोक्तम्। स लक्षं वर्षलक्षाणामव्याहतबलक्रियः। रेमे विद्याधरस्त्रीभिर्गापयन् हरिमीश्वरम् ॥ इति। श्रीशुकादिवदपवर्गवाञ्छा। तत्प्रार्थनया श्रीकृष्णेन दूरीकृतायां मायायां मातृगर्भाद् वहिर्बभूवेति हि ब्रह्मवैवर्त्ते कथा। तत्र च भक्त्युपकरणत्वं ब्रह्मभूतः प्रसन्नात्मेत्यादिगीतावचनात्। तथा प्राप्तभगवत्पार्षदपदतदीयवृन्दविशेषवद्वैकुण्ठेच्छा। ते हि प्रेम्णा साक्षात् श्रीभगवच्चरणारविन्दसेवेच्छयैव तत्प्रार्थ्यं प्राप्तवन्तः। यच्च व्रजन्त्य-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

टीका च—सन्ति संसरतः पुंसो बहवो मोक्षमार्गास्तपोयोगादयः। समीचीनस्त्वयमेवेत्याह नह्यीति। यतोऽनुष्ठिताद्भक्तियोगो भवेत् अतोऽन्यः शिवः सुखरूपो निर्विघ्नश्च नास्त्येवेत्येषा। यच्छब्देनात्र भगवत्सन्तोषार्थकं कर्मोच्यते। स वै पुंसां परो धर्म इत्युक्तेः। स च भक्तियोगः सर्ववेदसिद्ध इत्याह—भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया। तदध्यवस्यत् कूटस्थो रतिरात्मन् यतो भवेत् ॥ २९ ॥

भगवान् ब्रह्मा। कूटस्थः निर्विकार एकाग्रचित्तः सन्नित्यर्थः, त्रिस्त्रीन् वारान्, कार्त्स्न्येन साकल्येन, ब्रह्म वेदमन्वीक्ष्य विचार्य्य, यत आत्मनि हरौ रतिर्भवेत्तदेव भक्तियोगाख्यं वस्तु मनीषया अध्यवस्यत् निश्चितवान्। अत्राप्युपसंहारानुरोधेन आत्मशब्दस्य हरिवाचकता। निरुक्तञ्च आततत्वाच्च मातृत्वादात्मा हि परमो हरिरिति। अथवा भगवान् स्वप्रकाशसार्वज्ञ्यादिगुणः परमेश्वरोऽपि सर्ववेदाभिधेयसाराकर्षणलीलार्थमन्वीक्ष्य तत्र शास्त्रविदन्तराणामीक्षणमनुकृत्य। अनन्तवैकुण्ठवैभवादिमयानामनन्तविरिञ्चिपाठ्यभेदानां वेदानां तथेक्षणञ्च तेनैव सम्भवतीत्याह, कूटस्थ एकरूपतयैव कालव्यापीति। अतएवोक्तं स्वयमेव—किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत्। इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चनेति। तथैव यच्छ्रोतव्य इत्यादिना प्रश्नस्योत्तरत्वेनोपसंहरति—तस्मात् सर्वात्मना राजन् हरिः सर्वत्र सर्वदा। श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यो भगवान् नृणाम् ॥३०॥

चकारात् पादसेवादयोऽपि गृह्यन्ते। अनन्तरञ्च श्रवणादिफलं यद्दर्शितं तत्तु दाहृतम्—पिबन्ति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु संभृतम्। पुनन्ति ते विषयविदूषिताशयं व्रजन्ति तच्चरणसरोरुहान्तिकमिति। अत्र पुनन्तीत्यनेन पूर्वोक्तः स्थूलधारणामार्गः परिहृतः। भक्तियोगस्यैव स्वतः पावनत्वादलं तत्प्रयासेनेति ॥ २ ॥ २ ॥ श्रीशुकः ॥२७—३०॥

एवं प्राक्तनाध्यायाभ्यां कर्मयोगज्ञानेभ्यः श्रेष्ठत्वमुक्त्वा तदन्तरं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ध्यायेऽपि सर्वदेवतोपासनेभ्यः श्रेष्ठत्वप्रवचनेन भगवद्भक्तियोगस्यैवाभिधेयत्वमाह—ब्रह्मवर्च्चसकामस्तु यजेत ब्रह्मणः पतिमित्याद्यनन्तरम्, अकामः सर्वकामो वा मोक्षकाम उदारधीः । तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ २१ ॥

टीका च—अकामःएकान्तभक्तः । उक्तानुक्तसर्वकामो वा । पुरुषं पूर्णं निरुपाधिमित्येषा । तीव्रेण दृढ़ेण स्वभावत एवानुपद्यात्वेन इति विघ्नानवकाशतोक्ता । कामना तु याद्दच्छिकेनापि स्यात् । यथोक्तं भारते—भक्तक्षणः क्षणो विष्णोः स्मृतिः सेवा स्ववेश्मनि । स्वभोग्यस्यापर्णं दानं फलमिन्द्रादिदुर्लभम् । तदुक्तं श्रीकद्दंमं प्रति—न वै जातु मृषैव स्यात् प्रजाध्यक्ष मदर्हणमिति । यथा वा—यत्तत्कामस्तीव्रेण यजेत । ततश्च शुद्धभक्तिसम्पादनायैवान्ते पर्य्यवसिष्यत्यसावित्यभिप्रायेण सविशेषणमुपदिष्टम् । तदनेनैकान्तभक्तेषु मुमुक्षौ वा तद्भक्तियोगस्यैवाभिधेयत्वं किं वक्तव्यमपि तु सर्वकामिष्वपीति तदेव सर्वथापि निर्णीतम् । किञ्च, एतावानेव यजतामिह निःश्रेयसोदयः । भगवत्यचलो भावो यद्भागवतसङ्गतः ॥ २२ ॥

टीका च—पूर्वोक्तनानादेवतायजनस्यापि संयोगपृथक्त्वेन भक्तियोगफलत्वमाह एतावानिति । इन्द्रादीनपि यजतामिह तत्तद्यजने भागवतानां सङ्गतो भगवत्यचलो भावो भक्तिर्भवतीति यदेतावानेव निःश्रेयसस्य परमपुरुषार्थस्य उदयो लाभः । अन्यत्तु सर्वं तुच्छमित्यर्थ इत्येषा । अत्र इन्द्रमिन्द्रियकामस्तु इत्याद्युक्तम् इन्द्रियपाटवादिकं पृथक्त्वेन फलम् । भागवतेन संयोगे तु भावः फलम् । खादिरयूपसंयोगे यागस्य फलवैशिष्ट्यवदिति ज्ञेयम् ॥ २ ॥ ३ ॥ श्रीशुकः ॥ २१—२२ ॥

अनन्तरं श्रीशौनकेनापि व्यतिरेकोक्त्या तस्यैवाभिधेयत्वं दृढ़ीकृतं यथाह—आयुर्हरति वै पुंसामुद्यन्नस्तञ्च यन्नसौ । तस्यर्त्ते यत्क्षणो नीत उत्तमःश्लोकवार्त्तया ॥ २३ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

असौ सूर्य्य उद्यन्नुद्गच्छन् अस्तञ्च यन् गच्छन् हरति वृथागामित्वात् वलादाच्छिनत्तीव यद्येन क्षणोऽपि नीत उत्तमःश्लोकवार्त्तया तस्यायुरृते वर्जयित्वा। तावतैव सर्वसाफल्यादिति भावः। ननु जीवनादिकमेव तेषामायुषः फलमस्तु तत्राह—तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत। न खादन्ति न मेहन्ति किं ग्रामे पशवोऽपरे॥३४॥

न मेहन्ति न मैथुनं कुर्वन्ति। तमपि नराकारं पशुं मत्वाह अपर इति। तदेवाह—श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः। न यत्कर्णपथोपेतो जातु नाम गदाग्रजः॥ ३५॥

श्वादितुल्यैस्तत्परिकरैः सम्यक्स्तुतोऽप्यसौ पुरुषः पशुस्तेषामेव मध्ये श्रेष्ठश्चेत्तर्हि महापशुरेवेत्यर्थः। तस्याङ्गानि निष्फलानीत्याह पञ्चभिः। विले वतोरुक्रमविक्रमान् ये न शृण्वतः कर्णपुटे नरस्य। जिह्वासती दार्दुरिकेव सूत न योपगायत्युरुगायगाथाः॥ ३६॥

न शृण्वतोऽशृण्वतो नरस्य ये कर्णपुटे ते विले वृथारन्ध्रे इत्यर्थः। असती दुष्टा। भारः परं पट्टकिरीटजुष्टमप्युत्तमाङ्गं न नमेन्मुकुन्दम्। शावौ करौ नो कुरुतः सपर्य्यां हरेर्लसत्काञ्चनकङ्कणौ वा॥ ३७॥

पट्टवस्त्रोष्णीषेण किरीटेन वा जुष्टमपि। अप्यर्थे वा शब्दः। वर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न निरीक्षतो ये। पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरेर्यौ॥ ३८॥

द्रुमवज्जन्म भजेते इति तथा वृक्षमूलतुल्यावित्यर्थः। जीवञ्छवो भागवताङ्घ्रिरेणुं न जातु मर्त्त्योऽभिलभेत यस्तु। श्रीविष्णुपद्या मनुजस्तुलस्याः श्वसञ्छवो यस्तु न वेद गन्धम्॥ ३९॥

श्रीविष्णुपद्यास्तत्पदलग्नायाः। तदश्मसारं हृदयं वतेदं यद्गृह्यमाणैर्हरिर्नामधेयैः। न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः॥ ४०॥

अश्मवत् सारो बलं काठिन्यं यस्य। विक्रियालक्षणमप्येतदित्याह यदा तद्विकारो भवेत्तदा नेत्रादौ जलादिकं भवतीत्यर्थः। इदमेवानुवर्

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥ ८३ ॥

टीका च—तदेवं व्यवस्थयाधिकारित्रयमुक्तम् । तत्र भक्तेरन्य-निरपेक्षत्वादन्यस्य च तत्सापेक्षत्वाद्भक्तियोग एव श्रेष्ठ इत्युपसंहरति तस्मादिति त्रिभिः । मदात्मनो मयि आत्मा चित्तं यस्य तस्य । श्रेयः श्रेयःसाधनमित्येषा । अत्र प्रायोग्रहणस्यायं भावः, भजतां ज्ञानवैराग्याभ्यासेन प्रयोजनं नास्त्येव। तत्र यथा स्थितेऽपि सद्योमुक्ति-मार्गे केषाञ्चित् क्रममुक्तिमार्गे प्रवृत्तिर्जायते, तथा ब्रह्मभूतः प्रसन्ना-त्मेत्यादिश्रीगीतानुसारेण यदि क्रमभक्तिमार्गे प्रवृत्तिः स्यात्तदा भव-त्विति । तदेवं भक्तेः प्रेमलक्षणे सर्वफलराजे स्वफले नास्त्येव ज्ञानाद्यपेक्षा । पृथक् पृथक् ज्ञानादिफलेऽपि साध्ये नास्तीत्याह—यत् कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् । योगेन दानधर्मेण श्रेयो-भिरितरैरपि । सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा । स्वर्गाप-वर्गं मद्धाम कथञ्चिद् यदि वाञ्छति ॥ ८४ ॥

इतरैस्तीर्थयात्राव्रतादिभिरपि यद्भाव्यं तत् सर्वं मद्भक्तियोगेन मद्भक्तो लभते । तत्राप्यञ्जसा अनायासेनैव । किन्तत् सर्वं तदाह, स्वर्गापवर्ग-मिति । स्वर्गः प्रापञ्चिकसुखं सत्वशुद्ध्यादिक्रमेणापवर्गो मोक्षसुखञ्च । तदतिक्रमिसुखञ्च भवतीत्याह, मद्धाम वैकुण्ठञ्चेति । कथञ्चिद्भक्त्युप-करणत्वेनैव यदि वाञ्छति कश्चित् । तत्र श्रीचित्रकेत्वादिवत् स्वर्ग-वाञ्छा । तस्य भक्त्युपकरणत्वञ्चोक्तम् । स लक्षं वर्षलक्षाणामव्या-हतबलेन्द्रियः । रेमे विद्याधरस्त्रीभिर्गापयन् हरिमीश्वरम् ॥ इति । श्रीशुकादिवदपवर्गवाञ्छा । तत्प्रार्थनया श्रीकृष्णेन दूरीकृतायां मायायां मातृगर्भाद् वहिर्बभूवेति हि ब्रह्मवैवर्त्ते कथा । तत्र च भक्त्यु-पकरणत्वं ब्रह्मभूतः प्रसन्नात्मेत्यादिगीतावचनात् । तथा प्राप्तभगवत्-पार्षदपदतदीयवृन्दविशेषवद्वैकुण्ठेच्छा । ते हि प्रेम्णा साक्षात् श्रीभगवच्चरणारविन्दसेवेच्छयैव तत्प्रार्थ्यं प्राप्तवन्तः । यच्च व्रजन्त्य-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

निमिषामृषभानुवृत्त्या इत्यादिवत् ॥११॥२०॥ श्रीभगवान् ॥८१—८
अन्ते च—एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम्। य
सत्यमनृतेनेह मर्त्येनाप्नोति माऽमृतम् ॥ ८५ ॥

टीका च—अतो मद्भजनमेव बुद्धेर्विवेकस्य मनीषायाश्चातुर्य
च फलमित्याह, एषेति। तामेव दर्शयति, सत्यममृतञ्च मा मा
अनृतेनासत्येन मर्त्येन विनाशिना मनुष्यदेहेन इह अस्मिन्नेव जन्म
प्राप्नोतीति यत् सैव बुद्धिर्मनीषा चेति। बुद्धिर्विवेकः, मनीषा चातुर्य
मित्येषा। हरिश्चन्द्रो रन्तिदेव उञ्छवृत्तिः शिविर्बलिः। व्याध
कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥ पूर्वं भक्तिप्रकरणगतत्वादत
हैतूपन्यासः कृतः ॥ ११ ॥ २९ ॥ सः ॥८५॥

श्रीशुकोपदेशोपसंहारे च श्रवणमुपलक्ष्य—संसारसिन्धुमतिदुस्त
मुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य। लीलाकथारस
निषेवणमन्तरेण पुंसो भवेद्विविधदुःखदवार्द्दितस्य ॥ ८६ ॥

टीका च—अन्यः प्लव उत्तरणसाधनं न भवेत् उपायान्तरा
सम्भवादित्येषा। अन्यासामपि भक्तीनां तत्पूर्वकत्वेनैव प्रवृत्तेरु
यान्तरासम्भवत्वं युक्तम्। एतदनन्तराध्यायश्च तादृशोपक्रमोपसंहार
मय एव। अत्रानुगीयतेऽभीक्ष्णं भगवान् हरिरीश्वरः। यस्य प्रसादजो
ब्रह्मा रुद्रः क्रोधसमुद्भवः॥ इत्युपक्रम्य, एतत्ते कथितं तात यदा
पृष्टवान्नृप। हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि॥ इत्युपसंहारे
ऽपि, तादृशमहिमत्वेन पूर्वोक्तलीलाकथाश्रवणस्यैव प्राधान्यात्, त
उपक्रमोपसंहारनिर्दिष्टत्वात्, श्रवणोपलक्षितभक्तेरेवात्रापि प्राधान्यम्
यस्तु तन्मध्ये, त्वन्तु राजन् मरिष्यसीत्यादिना ज्ञानोपदेशः, स च त
या प्रागवगता भक्तिनिष्ठा तस्याः संप्रत्यपि स्थैर्य्यप्रकटनार्थ एव
एकान्तिभक्तेषु भगवता मोक्षवरच्छन्दनवत्। पूर्वमपि तन्निष्ठया स्
एव मरणभयपरित्यागात् अनन्तरञ्च श्रुत्वापि तं ज्ञानोपदेशं स्
भक्तिनिष्ठाया एव स्वयं दर्शयिष्यमाणत्वात्। तत्र प्राचीना तन्निष्ठा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रथमे, कृष्णाङ्घ्रिसेवामधिमन्यमान इति। दध्यौ मुकुन्दाङ्घ्रिमनन्य-भाव इत्यादि तन्निष्ठतैव। तद्भयपरित्यागो यथा तद्वाक्ये, द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथा इति। तज्ज्ञानोप-देशश्रवणानन्तरमपि तादृशस्वनिष्ठायाः स्थैर्यदर्शनं यथा, तत्र तावत् पद्यत्रयेण ज्ञानोपदेशमबहु मत्वा श्रवणलक्षणया भक्त्यैव स्वकृतार्थत्व-मुक्तम्—सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना। श्रावितो यच्च मे साक्षादनादिनिधनो हरिः। नात्यद्भुतमहं मन्ये महता-मच्युतात्मनाम्। अज्ञेषु तापतप्तेषु भूतेषु यदनुग्रहः। पुराणसं-हितामेतामश्रौष्म भवतो वयम्। यस्यां खलूत्तमःश्लोको भगवा-ननुवर्ण्यते इति। पुनश्चैकेन पद्येन तद्वाक्यगौरवमात्रेणाङ्गी-कृतस्य ब्रह्मज्ञानस्य तक्षकादिभयनिवृत्तिहेतुत्वमुक्त्वाप्यन्येन तदूर्द्ध्व-मधोक्षज एव वाक्चेतसोस्तन्नामकीर्त्तनध्यानावेशानुज्ञा प्रार्थिता। भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम्। प्रविष्टो ब्रह्मनिर्वाणमभयं दर्शितं त्वया। अनुजानीहि मां ब्रह्मन् वाचं यच्छाम्यधोक्षजे। मुक्तकामाशयं चेतः प्रवेश्य विसृजाम्यसूनिति। अथ पुनरन्येन पद्ये-नाज्ञाननिरासकज्ञानविज्ञानसिद्धिश्च भगवत्पदारविन्ददर्शनसुखान्त-र्भूतैव मम स्फुरतीति विज्ञापितम्। यथा—अज्ञानञ्च निरस्तं मे ज्ञानविज्ञाननिष्ठया। भवता दर्शितं क्षेमं परं भगवतः पदमिति। अत्र पदशब्दस्य चरणारविन्दविधायकत्वे ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलमित्येवास्ति प्रथमे साधकम्। तदेतत्प्रकर-णार्थस्तत्र श्रीसूतेनैव स्पष्टीकृतः। ब्रह्मकोपोत्थिताद्यस्तु तक्षकात् प्राण-विप्लवात्। न संमुमोहोरुभयात् भगवत्यर्पिताशयः। नोत्तमःश्लोक-वार्त्तानां जुषतां तत्कथामृतम्। स्यात् संभ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुजमिति। तथा पूर्वं द्वादशस्यैव तृतीये प्रथमस्कन्धान्तःस्थस्य, अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम्। पुरुषस्येह यत्कार्य्यं म्रियमाणस्य सर्वथेत्यस्य राजप्रश्नस्योत्तरत्वेन भगवद्ध्यानकीर्त्तने एव

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्वयं श्रीशुकदेवेनाप्युपदिष्टे। तस्मात् सर्वात्मना राजन् हृदिस्थं कुरु केशवम्। म्रियमाणो ह्यवहितस्ततो याति परां गतिम्। म्रियमाणैरभिध्येयो भगवान् परमेश्वरः। आत्मभावं नयत्यङ्ग सर्वात्मा सर्वसम्भवः॥ कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः। कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत्। इत्यादिना। ततस्तत्र केशवे अवहितः कृतावधानः। आत्मभावमात्मनो भक्तिम्। अस्तु तावदायाससाध्यं ध्यानं, हि यस्मात् अनायाससाध्यात् कीर्त्तनादेवेत्यर्थः। द्वितीयस्कन्धेऽपि न ह्यतोऽन्यः शिवः पन्था इत्यादिना एवमेतन्निगदितमित्यन्तेन ग्रन्थेन नानाङ्गवान् शुद्धभक्तियोग एव तत्रोत्तरत्वेन पर्य्यवसितः। तत्रापि पिबन्ति ये भगवत इत्यादिना लीलाकथाश्रवण एव परम-पर्य्यवसानं दृश्यते। तस्मात् साधूक्तं त्वन्तु राजन् मरिष्यतीत्यादि तद्भक्तिनिष्ठाप्रकटनार्थमेवेति। यतो भक्ताविव तदुपदेशस्य तात्पर्य्यम्। अतएव द्वितीयस्याष्टमे राजप्रार्थना च नान्यथा स्यात्। कृष्णे निवेश्य निःसङ्गं मनस्त्यक्ष्ये कलेवरमिति। तदेवं पिबन्तीत्याद्युपक्रमवाक्यसंवादेनापि साध्वेव स्थापितं संसारसिन्धुमतिदुस्तरमित्यादि॥ १२॥ ४॥ श्रीशुकः॥ ८५॥ ८६॥

सूतोपदेशान्तेऽपि पञ्चभिः। नैष्कर्म्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्। कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म्म यदप्यकारणम्॥ ८७॥

टीका च—इदानीं ज्ञानकर्म्मादरादपि भगवत्कीर्त्तनादिष्वेवादरः कर्त्तव्य इत्याह, नैष्कर्म्म्यं तत्प्रकाशकं यज्ज्ञानं यतो निरञ्जनमुपाधिनिवर्त्तकं तदप्यच्युतभक्तिवर्जितं चेत् न शोभते नापरोक्षपर्य्यन्तं भवतीत्यर्थः, इत्यादिका। तथा, यशःश्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुतादिषु। अविस्मृतिः श्रीधरपादपद्मयोर्गुणानुवादश्रवणादिभिर्हरेः॥ ८८॥

टीका च—किञ्च वर्णाश्रमाचारादिषु यः परो महान् परिश्रमः

यशोयुक्तायां श्रियामेव कीर्त्तौ सम्पदि वा केवलं, न परमपुरुषार्थः । गुणानुवादादिभिस्तु श्रीधरपादपद्मयोरविस्मृतिर्भवतीत्येषा । तथा, अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यद्राणि च शं तनोति । सत्वस्य शुद्धिं परमात्म भक्तिं ज्ञानञ्च विज्ञानविरागयुक्तम् ॥ ८९ ॥

स्पष्टम् । तथा—यूयं द्विजाग्र्या वत भूरिभागा यत् शश्वदात्मन्यखिलात्मभूतम् । नारायणं देवमदेवमीशमजस्रभावा भजताविविश्य ॥ ९० ॥

टीका च—तदेवं श्रोतॄनात्मानञ्चाभिनन्दन्नाह । तथा हे द्विजाग्र्या यद् यस्मादात्मन्यन्तःकरणे श्रीनारायणमाविविश्य शश्वत् भजत, सम्भावनायां लोट्, अतो भूरिभागा बहुपुण्याः, कथम्भूतमखिलात्मभूतं सर्वान्तर्यामिणम् । अतएव देवं सर्वोपास्यम्, अदेवं न देवोऽन्यो यस्य तम् । कुत ईशम् । यद्वा यस्माद् यूयं भूरिभागास्तपआदिना सम्पन्नास्ततो नारायणं भजतेति विधिरित्येषा । अत्र तपआदिसम्पत्तेः सार्थकत्वं नारायणभजनेन भवतीति स्वाम्यभिप्रायः । तथा—अहञ्च संस्मारित आत्मतत्त्वं श्रुतं पुरा मे परमर्षिवक्त्रात् । प्रायोपवेशे नृपतेः परीक्षितः सदस्यृषीणां महताञ्च शृण्वताम् ॥ ९१ ॥

एतत्प्रसङ्गेनाहञ्चात्मतत्त्वम् अखिलात्मभूतं श्रीनारायणं स्मारितः तं प्रति परमोत्कण्ठितीकृतोऽस्मीत्यर्थः । यदात्मतत्त्वं मे मया महर्षिमुखात् श्रुतम् ॥ १२ ॥ १२ ॥ श्रीसूतः ॥ ८७—९१ ॥

तदेवमस्मिन् श्रीमति महापुराणे गुरुशिष्यभावेन प्रवृत्तानामुपदेशशिक्षावाक्येषु भक्तेरेवाभिधेयत्वं साधितम् । तथा, तत् कथ्यतां महाभाग यदि विष्णुकथाश्रयम् । अथवास्य पदाम्भोजमकरन्दलिहां सताम् ॥ इत्यनुसारेण सर्वेषामितिहासानामपि तन्मात्रतात्पर्य्यत्वं ज्ञेयम् । विस्तरभिया तु न विव्रियते । अन्यत्र च तदेव दृश्यते । तत्रान्वयेन यथा—एतावानेव लोकेऽस्मिन् पुंसां धर्म्मः परः स्मृतः । भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥ ९२ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पुंसां जीवमात्राणां परः धर्मः सार्वभौमो धर्म एतावान् स्मृतः नेत-दधिकः। एतावत्त्वमेवाह, तन्नामग्रहणादिभिर्यो भक्तियोगः साक्षाद्भक्ति-रिति। एवकारेणान्यव्यावृत्तत्वं स्पष्टयति, भगवतीति। नामग्रहणा-दीन्यपि यदि कर्म्मादौ तत्साद्गुण्याद्यर्थं प्रयुज्यन्ते तदा तस्य परत्वं नास्ति तुच्छफलार्थं प्रयुक्तत्वेन तदपराधादित्यर्थः। तथैव क्षयिष्णु-फलदातृत्वञ्च भवतीतिभावः ॥ ६ ॥ ३ ॥ श्रीयमः स्वभटान् ॥ ९२ ॥

तथा—सध्रीचीनो ह्ययं लोके पन्थाः क्षेमोऽकुतोभयः। सुशीलाः साधवो यत्र नारायणपरायणाः ॥ ९३ ॥

अयं पन्थाः श्रीनारायणभक्तिमार्गः ॥ ६ ॥ १ ॥ श्रीशुकः ॥ ९३ ॥

तत्रैवान्वयेन सर्वशास्त्रफलत्वं सकैमुत्यमाह—श्रुतस्य पुंसां सुचिर-श्रमस्य नन्वञ्जसा सूरिभिरीड़ितोऽर्थः। तत्तद्गुणानुश्रवणं मुकुन्द-पादारविन्दं हृदयेषु येषाम् ॥ ९४ ॥

पुंसां श्रुतस्य वेदार्थावगतेरयमेवार्थ ईड़ितः श्लाघितः। कोऽसौ मुकुन्दस्य पादारविन्दं येषां हृदयेषु वर्त्तते तेषां तत्तद्गुणानां भग-वद्भक्तात्मकानामनुश्रवणं यत् सोऽयमिति। ततः सुतरामेव श्रीमुकुन्द-स्येत्यर्थः। एवमेवोक्तं वासुदेवपरा वेदा इत्यादि, भगवान् ब्रह्म कार्त्स्न्येन इत्यादि। तथाच पाद्मबृहत्सहस्रनाम्नि—स्मर्त्तव्यः सततं विष्णु-र्विस्मर्त्तव्यो न जातुचित्। सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः॥ इति। तथाच स्कान्दे प्रभासखण्डे लिङ्गपुराणे च—आलोड्य सर्व-शास्त्राणि विचार्य्य च पुनः पुनः। इदमेव सुनिष्पन्नं ध्येयो नारायणः सदेति। अतएव वेदार्पणमन्त्रः—इति विद्यातपोयोनिरयोनि-र्विष्णुरीड़ितः। ब्रह्मन्नस्तपते देवः प्रीयतां मे जनार्द्दनः ॥ ३ ॥ १६ ॥ श्रीविदुरः ॥ ९४ ॥

यतो यस्य शास्त्रे वर्णाश्रमाचारो विधीयते तस्याप्यनुपमचरित फलं भक्तिरेव। यथा—दानव्रततपोहोमजपस्वाध्यायसंयमैः। श्रेयोभि-र्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥ ९५ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दानादिभिः श्रीकृष्णार्पितैरिति ज्ञेयम् । तज्जन्म तानि कर्म्माणि तदायुस्तन्मन इत्यादि । बृहन्नारदीये—जन्मकोटिसहस्रेषु पुण्यं यैः समुपार्जितम् । तेषां भक्तिर्भवेच्छुद्धा देवदेवे जनार्द्दन इति । अगस्त्य-संहितायाम्—व्रतोपवासनियमैर्जन्मकोट्याप्यनुष्ठितैः । यज्ञैश्च विविधैः सम्यग्भक्तिर्भवति माधवे ॥ इति । एतदेव व्यतिरेकेणोक्तम्—धर्म्मः स्वनुष्ठितः पुंसामित्यादौ यशःश्रियामिवेत्यादौ च ॥१०॥४७॥ उद्धवः श्रीव्रजदेवीः ॥ ८५ ॥

यच्च तत्र ज्ञानमभिधीयते तदपि भक्त्यन्तर्भूततयैव लभ्यम् । यथा—पुरेऽह भूमन् बहवोऽपि योगिनस्त्वदर्पितेहा निजकर्म्म-लब्धया । विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम् ॥८६॥

हे भूमन् इह लोके पूर्वं योगिनोऽपि सन्तः योगैर्ज्ञानमप्राप्य पश्चा-त्त्वयि अर्पिता लौकिक्यपि चेष्टा तथार्पितानि यानि निजानि कर्माणि तैर्लब्धया कथारुचिरूपया पुनश्च कथोपनीतया कथया त्वत्समीपं प्रापितया कथनीयरुचिरूपया भक्त्यैव अञ्जः सुखेन विबुध्य आत्म-तत्त्वमारभ्य श्रीभगवत्तत्त्वपर्य्यन्तमनुभूय तव परमान्तरङ्गां गतिं प्राप्ताः । श्रीगीतोपनिषत्सु च, अहं सर्वस्य प्रभव इत्यादिभिः शुद्धां भक्तिम् उपदिश्याह—तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशया-म्यात्मभावस्थो ज्ञानदीपेन भास्वतेति ॥ १० ॥ १४ ॥ ब्रह्मा श्रीभग-वन्तम् ॥ ८६ ॥

यान्यन्यानि सर्वाणि तत्र पुरुषार्थसाधनान्युच्यन्ते तान्यपि तथैव भक्तिमूलान्येव । यथा—स्वर्गापवर्गयोः पुंसां रसायां भुवि सम्पदाम् । सर्वासामपि सिद्धीनां मूलं तच्चरणार्च्चनम् ॥ ८७ ॥

मन्त्रतस्तन्त्रतश्छिद्रमित्यादिन्यायेन मुखबाहूरुपादेभ्य इत्याद्युक्त-नित्यत्वेन च सर्वथा तद्बहिर्मुखानां तु तत्तदलाभ एव स्यादित्यर्थः । यथा स्कान्दे—विष्णुभक्तिविहीनानां श्रौताः स्मार्त्ताश्च याः क्रियाः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कायक्लेशः फलं तासां स्वैरिणीव्यभिचारवदिति। तदुक्तं श्रीयुधिष्ठिरेण—त्वत्पादुके अविरतं परि ये चरन्ति ध्यायन्त्यभद्रनशने शुचयो गृणन्ति। विन्दन्ति ते कमलनाभ भवापवर्गमाशासते यदि तु आशिष ईश नान्ये॥ इति। अत उक्तं वृहन्नारदीये—यथा समस्तलोकानां जीवनं सलिलं स्मृतम्। तथा समस्तसिद्धीनां जीवनं भक्तिरिष्यते॥ १०॥ ८१॥ श्रीदामविप्रः॥ ९७॥

तदेवं तानि साधनानि भक्तिजीवनान्येवेति भक्तेरेव सर्वाभिधेयत्वम्। तानि विनापि च भक्तेरेव तत्र साधकत्वमपि दर्शितम् अकामः सर्वकामो वेत्यादौ। यथा श्रीविष्णुपुराणे पुलहवाक्यम्—यो यज्ञपुरुषो यज्ञे योगे यः परमः पुमान्। तस्मिंस्तुष्टे यदप्राप्यं किन्तदस्ति जनार्दने॥ अतएव मोक्षधर्मे—या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये। तया विना तदाप्नोति नरो नारायणाश्रय इति। तस्मात् साधूक्तं सर्वशास्त्रश्रवणफलत्वेन तदभिधेयत्वम्। अतएव प्रथमं स्वयं भगवता सैव प्रवर्त्तितेत्युक्तम्—कालेन नष्टा प्रलये वाणीयमित्यादिना। तदेवं सति ये तु नातिकोविदास्ते तत्तदर्थं कामाद्यङ्गत्वेनैव श्रीविष्णूपासनां कुर्वते। ततस्तदपराधेन निजकाममात्रफलप्रदत्वं तच्चानियतत्वञ्च तस्यास्तदर्थमपि स्वतन्त्रत्वेन क्रियमाणाया भक्तेस्त्ववश्यं तत्तत्फलप्रदत्वम्। न च तत्तन्मात्रदानेन पर्याप्तिः किन्तु पर्य्यवसाने परमफलप्रदत्वमेवेति। ततस्तस्या एव परमहितत्वेनाभिधेयत्वमाह—सत्यं दिशत्यर्थितमर्थितो नृणां नैवार्थदो यत् पुनरर्थिता यतः। स्वयं विधत्ते भजतामनिच्छतामिच्छापिधानं निजपादपल्लवम्॥ ९८॥

अर्थितः प्रार्थितः सन् नृणामर्थितं सत्यमेव ददाति। न तत्र कदाचिद्व्यभिचार इत्यर्थः। किन्तु तथापि तन्मात्रेणार्थदो न भवति तद्दत्वा निवृत्तो न भवति इत्यर्थः। यत उपासकस्तत्रापूर्णत्वात् भोगक्षये सति तदेव पुनरर्थितो भवति, न जातु कामः कामानामित्यादि

तदेवमभिप्रेत्य परमकारुणिकस्तत्पादपल्लवमाधुर्य्याज्ञानेन तदनिच्छतामपि भजतामिच्छापिधानं सर्वकामसमापकं निजपादपल्लवमेव विधत्ते तेभ्यो ददातीत्यर्थः। यथा माता चर्व्यमाणां मृत्तिकां बालकमुखादपसार्य्य तत्र खण्डं ददाति तद्वदिति भावः। एवमप्युक्तम्, अकामः सर्वकामो वेत्यादौ तीव्रत्वं भक्तेः। तथोक्तं गारुड़े—यद्दुर्लभं यदप्राप्यं मनसो यन्न गोचरम्। तदप्यप्रार्थितं ध्यातो ददाति मधुसूदन इति। एवं श्रीसनकादीनामपि ब्रह्मज्ञानिनां भक्त्यनुवृत्या तत्पादपल्लवप्राप्तिर्ज्ञेया ॥ ५ ॥ १९ ॥ देवाः परस्परम् ॥ ९८ ॥

अथ व्यतिरेके कर्मानादरेणाह। तत्र कर्मणः फलप्राप्तावनिश्चयवत्त्वं दुःखरूपत्वञ्च भक्तेस्तु तस्यामावश्यकत्वं साधकदशायामपि सुखरूपत्वञ्चेत्याह—कर्मण्यस्मिन्ननाश्वासे धूमधूम्रात्मनां भवान्। आपाययति गोविन्दपादपद्मासवं मधु ॥ ९९ ॥

अस्मिन् कर्मणि सत्रे अनाश्वासे अविश्वसनीये वैगुण्यबाहुल्येन क्वचित् फलनिश्चयाभावात्। अनेन भक्तेर्विश्वसनीयत्वं ध्वनितम्। धूमेन धूम्रौ विरञ्जितौ आत्मानौ शरीरचित्ते येषां, कर्मणि षष्ठी, तानस्मान् इत्यर्थः। पादपद्मस्य यशोरूपमासवं मकरन्दं मधु मधुरम्। अत्र सत्रवत् कर्मान्तरं यशःश्रवणवद्भक्त्यन्तरञ्चेति ज्ञेयम्। तदेवं भक्तिं विना भूतानां कर्मादिभिरस्माकं दुःखमेवासीदिति व्यतिरेकत्वमत्र गम्यते। तदुक्तम्—यशः श्रियामेव परिश्रमः पर इत्यादि। अतो वै कवयो नित्यमित्यादि च। ब्रह्मवैवर्ते च शिवं प्रति विष्णुवाक्यम्—यदि मां प्राप्तुमिच्छन्ति प्राप्नुवन्त्येव नान्यथा। कलौ कलुषचित्तानां वृथायुःप्रभृतीनि च। भवन्ति वर्णाश्रमिणां न तु मच्छरणार्थिनामिति ॥ १ ॥ १८ ॥ श्रीऋषयः सूतम् ॥ ९९ ॥

तथा त्यक्त्वा स्वधर्ममित्यादिकमनुसन्धेयम्। एवं महावित्तमहायाससाध्येन कर्मादिना तुच्छं स्वर्गादिफलं स्वल्पायासस्वल्पवित्तादिसाध्यया भक्त्या तदाभासेन च परममहत्फलं तत्र तत्रानुसन्धाय



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भक्तावेव शास्त्रतात्पर्य्यं पर्य्यालोचनीयम्। तस्मात् तत्तच्छास्त्राण्यपि भक्तिविधेयकतत्तदनुवादेन प्रवृत्तत्वान्न वैफल्यमित्यपि ज्ञेयम्। किञ्च, विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखात् श्वपचं वरिष्ठम्। मन्ये तदर्पितमनोवचनेहितार्थप्राणं पुनाति स कुलं न तु भूरिमान इति ॥ १०० ॥

टीका च—भक्त्यैव केवलया हरिस्तोषः संभवतीत्युक्तम्। इदानीं भक्तिं विना नान्यत् किञ्चित्तोषहेतुरित्याह विप्रादिति। मन्ये धनाभिजन-रूप-तपः-श्रुतौजस्तेजः-प्रभाव-बल-पौरुष-बुद्धियोगा इत्यादि पूर्वोक्ता ये धनादयो द्विषट् द्वादश गुणास्तैर्युक्ताद्विप्रादपि श्वपचं वरिष्ठं मन्ये। यद्वा सनत्सुजातोक्ता द्वादश धर्मादयो गुणाः द्रष्टव्याः;—धर्मश्च सत्यञ्च दमस्तपश्च अमात्सर्य्यं ह्रीस्तितिक्षानसूया। यज्ञश्च दानञ्च धृतिः श्रुतञ्च व्रतानि वै द्वादश ब्राह्मणस्य॥ इति। कथम्भूताद्विप्राद् अरविन्दनाभपादारविन्दविमुखात्। कथम्भूतं श्वपचं तस्मिन्नरविन्दनाभे अर्पिता मन आदयो येन तम्। ईहितं कर्म। वरिष्ठत्वे हेतुः, स एवम्भूतः श्वपचः सर्वं कुलं पुनाति। भूरि मानो गर्व्वो यस्य स तु विप्र आत्मानमपि न पुनाति कुतः कुलम्। यतो भक्तिहीनस्यैते गुणाः गर्वाय भवन्ति न तु शुद्धये। अतो हीन इति भाव इत्येषा। मुक्ताफलटीकायाञ्च—द्विषट् द्वादश गुणाः धनाभिजनादयः। यद्वा शमो दमस्तपः शौचं क्षान्त्यार्जवविरक्तयः। ज्ञानविज्ञानसन्तोषाः सत्यास्तिक्यं द्विषड्गुणा इत्यत्रोक्ता इत्येषा। स्कान्दे श्रीनारदवाक्यम्—कुलाचारविहीनोऽपि दृढभक्तिर्जितेन्द्रियः। प्रशस्तः सर्वलोकानां न त्वष्टादशविद्यकः। भक्तिहीनो द्विजः शान्तः सज्जातिर्धार्मिकस्तथा॥ काशीखण्डे च—ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यदि वेतरः। विष्णुभक्तिसमायुक्तो ज्ञेयः सर्वोत्तमोत्तमः॥ बृहन्नारदीये—विष्णुभक्तिविहीना ये चण्डालाः परिकीर्त्तिताः। चाण्डाला अपि ते श्रेष्ठा हरिभक्तिपरायणाः॥ नारदीये च—श्वपचोऽपि महीपाल विष्णोर्भक्तो द्विजाधिकः। विष्णुभ

विहीनो यो द्विजातिः श्वपचाधिकः ॥ इति । अत्र मूलपद्ये कुलं पुनातीत्युक्ते स्वं पुनातीति सुतरामेव सिद्धम् । यथोक्तम्—किरात-हूणान्ध्रपुलिन्दपुक्कशा आभीरकङ्का यवनाः खसादयः । येऽन्ये च पापा यदपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नम इति ॥ ७ ॥ ९ ॥ प्रह्लादः श्रीनृसिंहम् ॥ १०० ॥

अतएवाहुः—धिग् जन्म नस्त्रिवृद्यत्तद्धिग् व्रतं धिग् बहुज्ञताम् । धिक् कुलं धिक् क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे ॥ १०१ ॥

टीका च—त्रिवृत् शौक्रं सावित्रं दैक्ष्यमिति त्रिगुणितं जन्म । व्रतं ब्रह्मचर्य्यम् । क्रियाः कर्म्माणि दाक्ष्यं दक्षत्वादिका । तथोक्तम्—किं जन्मभिस्त्रिभिरित्यादि ॥ १० ॥ २३ ॥ याज्ञिकविप्राः ॥ १०१ ॥

श्रीभगवत्समर्पितकर्म्मणोऽप्यनादरेण तु दर्शितम्—तस्मादेकेन मनसेत्यादि । गीतोपनिषत्सु च भक्त्यसामर्थ्य एव तद्विहितम्—मय्येव मन आधत्स्व मयि बुद्धिं निवेशय । निवसिष्यसि मय्येव अत ऊर्द्ध्वं न संशयः । अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् । अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय । अभ्यासेऽप्यसमर्थोऽसि मत्कर्म्मपरमो भव । मदर्थमपि कर्म्माणि कुर्वन् सिद्धिमवाप्स्यसि । अथैतदप्यशक्तोऽसि कर्त्तुं मद्योगमाश्रितः । सर्वकर्म्मफलत्यागं ततः कुरु यतात्मवान् ॥ इति । अत्र पाद्मकार्त्तिकमाहात्म्येतिहासोऽनु-सन्धेयः । चोलदेशराजस्य कस्यचिद्विष्णुदासनाम्ना विप्रेण शुद्धमर्चन-मेव कुर्वता सह कस्य पूर्वं भगवत्प्राप्तिः स्यादिति स्पर्द्धया बहून् यज्ञान् भगवदर्पितानपि सुष्ठु विदधतो न भगवत्प्राप्तिरभूत् । किन्तु विप्रस्य भगवत्प्राप्तौ दृष्टायां तान् परित्यज्य यत्स्पर्द्धया मया चैतद्यज्ञ-दानादिकं कृतं, स विष्णुरूपधृग् विप्रो याति वैकुण्ठमन्दिरम् । तस्माद्-यज्ञैश्च दानैश्च नैव विष्णुः प्रसीदति । भक्तिरेव परं तस्य निदानं तोषणे मतम् ॥ इति सुदृढं प्रत्युक्त्वा, विष्णौ भक्तिं स्थिरां देहि मनो-वाक्कायकर्म्मणा । निरुद्धेर्व्यांजहारासौ होमकुण्डाग्रतः स्थितः ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

इत्युक्त्वा, शुद्धभक्तिशरणतामेव मुहुर्दैन्येनाङ्गीकृत्य होमकुण्डे देहं त्यजतः पश्चादेव तत्प्राप्तिरिति। योगानादरेणाह—युञ्जानाना-मभक्तानां प्राणायामादिभिर्मनः। अक्षीणवासनं राजन् दृश्यते क्वचिदुत्थितम् ॥ १०२ ॥

उत्थितं विषयाभिमुखम् ॥ १० ॥ ५१ ॥ श्रीभगवान् मुचु-कुन्दम् ॥ १०२ ॥

तथा, यमादिभिर्योगपथैः कामलोभहतो मुहुः। मुकुन्दसेवया यद्वत्तथाद्धात्मा न शाम्यति ॥ १०३ ॥

ततः सुतरामेव न साधयति मां योग इत्यादिकमिति भाव ॥ १ ॥ ६ ॥ श्रीनारदो व्यासम् ॥ १०३ ॥

अथ ज्ञानानादरेणाभ्युदाह्रियते। तत्र तस्य कृच्छ्रसाध्यत्वेनाना-दरो दर्शित एव, पानेन ते देव कथासुधाया इत्यादिभ्याम्। तथोक्तं श्रीकुमारोपदेशे, कृच्छ्रो महानित्यादि। श्रीगीतासु च—अर्जुन उवाच। एवं सततयुक्ता ये भक्तास्त्वां पर्य्युपासते। ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः॥ श्रीभगवान् उवाच। मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते। श्रद्धया परयोपेतास्ते मे युक्ततमा मताः॥ ये त्वक्षरमनिर्द्देश्यमव्यक्तं पर्य्युपासते। सर्वत्रगमचिन्त्यञ्च कूटस्थमचलं ध्रुवम्। संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः। ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः। क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्। अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते॥ इति। भक्तिमार्गे तु न स्यात्। तदश्लोकारितारूपं फलञ्चापूर्वमित्याह—ज्ञाने प्रयासमुदपास्य नमन्त एव जीवन्ति सन्मुखरितां भवदीयवार्त्ताम्। स्थानस्थिताः श्रुतिगतां तनुवाङ्मनोभिर्ये प्रायशोऽजित जितोऽप्यसि तैस्त्रिलोक्याम् ॥ १० ॥ १४ ॥

उदपास्य ईषदप्यकृत्वा। स्थाने सतां निवास एव स्थिताः। सद्भि-र्मुखरितां स्वत एव नित्यं प्रकटितां भवदीयवार्त्तां तत्सन्निधिमात्रेण

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्वन एव श्रुतिगतां श्रवणं प्राप्तां प्रायसो बाहुल्येन तनुवाङ्मनो-भिर्नमन्तः सत्कुर्वन्तो ये जीवन्ति केवलं यद्यपि नान्यत् कुर्वन्ति तैः प्रायशस्त्रिलोक्यामन्यैरजितोऽपि त्वं जितोऽसि वशीकृतोऽसि। अतएवोक्तं श्रीनृसिंहपुराणे—पत्रेषु पुष्पेषु फलेषु तोयेष्वक्रीतलभ्येषु सदैव सत्सु। भक्त्यैकलभ्ये पुरुषे पुराणे मुक्तौ किमर्थं क्रियते प्रयत्न इति। वस्तुतस्तु, श्रेयःस्रुतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये। तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूल-तुषावघातिनाम् ॥ १०५ ॥

टीका च—भक्तिं विना च ज्ञानं न सिध्यतीत्याह श्रेय इति। श्रेयसामभ्युदयापवर्गलक्षणानां स्रुतिः सरणं यस्याः सरस इव निर्झ-राणां तां ते तव भक्तिमुदस्य त्यक्त्वा तेषां क्लेशल एव शिष्यते। अयं भावः। यथा अल्पप्रमाणं धान्यं परित्यज्य अन्तः कणहीनान् स्थूल-धान्याभासान् येऽवघ्नन्ति तेषां न किञ्चित् फलम्, एवं भक्तिं तुच्छी-कृत्य ये केवलबोधाय प्रयतन्ते तेषामपीत्येषा। श्रीगीतासु च, अमा-नित्वमदम्भित्वमित्यादिकं ज्ञानयोगमार्गमुपक्रम्य मध्ये मयि चानन्य-योगेन भक्तिरव्यभिचारिणीत्यप्युक्त्वा प्रान्ते तत्त्वज्ञानार्थदर्शनमिति समाप्याह, एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा इति। ततो भक्तियोगं विना ज्ञानं न भवतीत्यर्थः। अन्तेऽप्युक्तम्—मद्भक्त एतद्-विज्ञाय मद्भावायोपपद्यत इति। तत्रान्यत्र च—अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप। अप्राप्य मां निवर्त्तन्ते मृत्युसंसारवर्त्मनीति। अस्य सततं कीर्त्तयन्तो मां यतन्तश्च दृढ़व्रता इत्यादिपूर्वोक्तलक्षणस्य इत्यर्थः। अतएवास्फुटभक्तीनां मुद्गलादीनामपि क्वातचरी साधन-भक्तिरनुसन्धेया ॥ १० ॥ १४ ॥ ब्रह्मा श्रीभगवन्तम् ॥१०४—१०५॥

आश्रयान्तरस्यातन्त्रतानादरेणाह—अविस्मितं तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशान्तम्। विनोपसर्पत्यपरं हि बालिशः श्वलाङ्गुलेनातितितर्त्ति सिन्धुम् ॥ १०६ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अविस्मितं ततोऽन्यस्यापूर्ववस्तुनोऽसद्भावाद्विस्मयरहितम्। अतः स्वेनैव स्वीयेनैव स्वस्यैव कर्मभूतस्य क्रियाभूतेन लाभेन परिपूर्णकामं नान्यस्येत्यर्थः। तथोक्तं, रजस्तमःप्रकृतय इत्यादि। स्कान्दे श्रीब्रह्मनारदसंवादे—वासुदेवं परित्यज्य योऽन्यदेवमुपासते। स्वमातरं परित्यज्य श्वपचीं वन्दते हि सः॥ तत्रैवान्यत्र च—वासुदेवं परित्यज्य योऽन्यदेवमुपासते। त्यक्त्वामृतं स मूढात्मा भुङ्क्ते हालाहलं विषम्॥ महाभारते—यस्तु विष्णुं परित्यज्य मोहादन्यमुपासते। स हेमराशिमुत्सृज्य पांशुराशिं जिघृक्षतीति॥ अतएवोक्तं श्रीसत्यव्रतेन—न यत्प्रसादायुतभागलेशमन्ये न देवा गुरवो जनाः स्वयम्। कर्त्तुं समेताः प्रभवन्ति पुंसस्तमीश्वरं वै शरणं प्रपद्ये इति। श्रीब्रह्मशिवावपि वैष्णवत्वेनैव भजेत; स आदिदेवो भजतां परो गुरुः, वैष्णवानां यथा शम्भुरित्याद्यङ्गीकारात्। अतएव द्वादशे श्रीशिवं प्रति श्रीमार्कण्डेयवचनम्—वरमेकं वृणेऽथापि पूर्णात् कामाभिवर्षणात्। भगवत्यच्युतां भक्तिं तत्परेषु तथा त्वयीति त्वय्यपि तत्पर इत्यर्थः। अतएवाष्टमे प्रजापतिकृतशिवस्तुतौ, त्वमात्मारामगुरुभिर्हृदि चिन्तिताङ्घ्रिद्वन्द्वमिति। चतुर्थे श्रीमदष्टभुजं प्रति प्रचेतोभिरपि—वयन्तु साक्षाद्भगवन् भवस्य प्रियस्य सख्युः क्षणसङ्गमेनेति। वैष्णवस्य सतः समदर्शिनस्तु न भक्तिलाभः प्रत्यवायश्च। यथा वैष्णवतन्त्रे—न लभेयुः पुनर्भक्तिं हरेरैकान्तिकीं जड़ाः। एकाग्रमनसश्चापि विष्णुसामान्यदर्शिनः। यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः। समत्वेनैव वीक्षेत स पाषण्डी भवेद्ध्रुवम्। अतएवाभेददृष्टिवचनं शमभक्त्याज्ञान्यादिपरमेव। यथा श्रीमार्कण्डेयोपाख्याने द्वादश एव श्रीशिववाक्यम्—ब्राह्मणाः साधवः शान्ता निःसङ्गा भूतवत्सलाः। एकान्तभक्ता अस्मासु निर्वैराः समदर्शिनः सलोका लोकपालास्तान् वन्दन्त्यर्च्चन्त्युपासते। अहञ्च भगवान् ब्रह्मा स्वयञ्च हरिरीश्वरः। न ते मय्यच्युते ये च भिदामस्वपि चक्षते

नात्मनश्च परस्यापि तद्युष्मान् वयमीमहीति । तत्ततोऽपि तानति-
क्रम्य युष्मान् मार्कण्डेयादीन् शुद्धवैष्णवान् वयमीमहि भजेमेत्यर्थः ।
यदुक्तं श्रीशिवेनैव प्रचेतसं प्रति—अथ भागवता यूयं प्रियाः स्थ भग-
वान् यथा । न मद्भागवतानाञ्च प्रेयानन्योऽस्ति कर्हिचित । अन्यत्र—
प्रीते हरौ भगवति प्रीयेऽहं सचराचर इति च । तस्य शुद्धवैष्णवत्व-
श्चोक्तमेतत्पूर्वम्—नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत । भक्तिं
परां भगवति लब्धवान् पुरुषेऽव्यय इति मार्कण्डेयमुद्दिश्य श्रीशिवेन ।
तथा श्रीशिवस्य तच्चेतस्याविर्भावात् समाधिविरामेण च तदेव व्यञ्जि-
तम् । यथा—किमिदं कुत एवेति समाधेर्विरतो मुनिरिति । किञ्च
ब्राह्मणाः साधव इत्यादावभेददृष्टिवचनेऽपि स्वयञ्च हरिरीश्वर इत्य-
नेन तस्यैव प्राधान्यमुक्तम् । तस्यैव स्वयमीश्वरत्वञ्चोक्तम्—पार्थिवा-
द्दारुण इत्यादिना । ब्रह्मपुराणे श्रीशिववाक्यमपि तथैव—यो हि
मां द्रष्टुमिच्छेत ब्रह्माणं वा पितामहम् । द्रष्टव्यस्तेन भगवान्
वासुदेवः प्रतापवानिति । तद्विज्ञानेन सर्वविज्ञानादिति भावः ।
तदेवं वैष्णवत्वेनैव शिवभजनं युक्तम् । केचित्तु वैष्णवास्तत्-
पूजनमावश्यकत्वेनोपस्थितं चेत्तर्हि तस्मिन्नधिष्ठाने श्रीभगवन्तमपि
पूजयन्ति । यथा श्रीविष्णुधर्मोत्तरान्तिमोऽयमितिहासः । विश्वक्-
सेननामा कश्चिद्विप्र एकान्तभागवतः पृथिवीं विचरन्नासीत् । स कदा-
चिदेक एव वनान्त एव उपविष्टस्तत्राथ ग्रामाध्यक्षसुतः कश्चिदागत-
स्तमुवाच कोऽसीति । ततः कृतस्वाख्यानं पुनस्तमुवाच मम शिरः-
पीड़ाद्य जातेति निजेष्टं देवं शिवं पूजयितुं न शक्नोमीति ततो मम
प्रतिनिधित्वेन त्वमेव तं पूजयेति । एतदनन्तरञ्च तत्रत्यं सार्द्धं पद्यम्—
एतदुक्तः प्रत्युवाच वयमेकान्तिनः स्मृताः । चतुरात्मा हरिः पूज्यः
प्रादुर्भावगतोऽथवा । पूजयामश्च नैवान्यं तस्मात्त्वं गच्छ माचिरमिति ।
ततस्तस्मिंस्तदनङ्गीकृतवति स खड्गमुन्नमितवान् शिरश्छेत्तुम् । तत-
श्चासौ विप्रस्तद्धस्तेन मृत्युमनभीप्सन् विचार्य्योक्तवान् भद्रं तत्र

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

गच्छाम इति। गत्वा चेदं मनसि चिन्तितम् अयं रुद्रः प्रलयहेतुतया तमोवर्द्धनत्वात्तमोभावः। श्रीनृसिंहदेवश्च तामसदैत्यगणविदारकतया तमोभञ्जनकर्त्तृत्वात्तद्भञ्जनार्थमेव तत्रोदयेत सूर्य्य इव तमोराशेः। अतो रुद्राकाराधिष्ठानेऽपि तदुपासकानामेषां तद्भञ्जनकृते श्रीनृसिंह पूजामेवास्मिन् करिष्यामीति। अथ श्रीनृसिंहाय नम इति गृहीत पुष्पाञ्जलौ तस्मिन् पुनः क्रोधाविष्टेन ग्रामाध्यक्षपुत्रेण खड्गः समुद्यमितः। ततश्चाकस्मात्तदेव लिङ्गं स्फोटयित्वा श्रीनृसिंहदेवः स्वयमाविर्भूय तं ग्रामाध्यक्षपुत्रं सपरिकरं जघान। दक्षिणस्यां दिश्यतिप्रसिद्धं लिङ्गस्फोटनाम्ना स्वयं तत्र स्थितवानिति। अतोऽनन्यभक्ताः श्रीशिवमपि वैष्णवत्वेनैव मानयन्ति। केचित् कदाचित्तदधिष्ठानत्वेनैव च। अतएवोक्तमादिवाराहे—जन्मान्तरसहस्रेषु समाराध्य वृषध्वजम्। वैष्णवत्वं लभेद्धीमान् सर्वपापक्षये सतीति। अतएव श्रीनृसिंहशिवभक्तयोरन्तरं बृहदेव श्रीनृसिंहतापन्यां श्रुतौ—अनुपनीतशतमेकमेकेनोपनीतेन तत्सम्म् उपनीतशतमेकमेकेन गृहस्थेन तत्समं गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समं वानप्रस्थशतमेकमेकेन यतिना तत्समं यतीनान्तु शतं पूर्णमेकेन रुद्रजापकेन शतमेकमथर्वाङ्गीरसशाखाध्यापकेन तत्सममथर्वाङ्गीरसशाखाध्यापकशतमेकमेकेन मन्त्रराजाध्यापकेन तत्सममिति। मन्त्रराजश्च तत्र श्रीनृसिंहमन्त्र एवोक्तः। स्वतन्त्रत्वेन भजने तु भृगुशापो दुरत्ययः। यथा चतुर्थे—भृगुः ससृजच्छापं ब्रह्मदण्डं दुरत्ययम्। भवव्रतधरा ये च ये च तान् समनुव्रताः। पाषण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिन इत्यादि। वेदविहितमेवात्र भवव्रतमनूद्यते। अन्यविहितत्वे पाषण्डित्वविधेरयोगः स्यात्, पूर्वत एव पाषण्डित्वसिद्धेः। तस्मात् स्वतन्त्रत्वेनैवोपासनायामयं दोषः। यतश्च तत्रैव तेन श्रीजनार्द्दनस्यैव वेदमूलत्वमुक्तम्—एष एव हि लोकानां शिवः पन्थाः सनातनः। यं पूर्वे चानुसंतस्थुर्यत्प्रमाणं जनार्द्दन इति। एष वेदलक्षणो यत्प्रमाणं यत्र मूलमित्

अतएवान्वयेनापि श्रीविष्णुभक्तिर्दृढोक्ता सत्त्वं रजस्तम इत्यादिना । तथा श्रीहरिवंशे शिववाक्यमेव—हरिरेव सदा ध्येयो भवद्भिः सत्त्व-संस्थितैः । विष्णुमन्त्रं सदा विप्राः पठध्वं ध्यातकेशवमिति । तस्माच्छ्रीशिवज्ञानेरप्येतन्मते स्थिते परायणामपि देवतानां वैष्णवा-गमादौ तत्तद्विरक्ताभरणसेवकत्वेनाग्राह्यतामात्रमेव पूजाविधानं श्रीभगवल्लोकसंपद्भूतानां लक्ष्मीसौपर्णविष्वक्सेनपार्षदानां वा भग-वत्प्रीणनयज्ञादौ तु श्रीयुधिष्ठिरराजसूयवत् अन्यासामपि तद्विभूति-त्वेनैवेति ज्ञेयम् । यथानुष्ठितं श्रीप्रह्लादेन—ततः संपूज्य शिरसा ववन्दे परमेष्ठिनम् । भवं प्रजापतीन् देवान् प्रह्लादो भगवत्कला इति । तदुक्तं श्रीयुधिष्ठिरेणैव—क्रतुराजेन गोविन्द राजसूयेन पावनीः । यक्ष्ये विभूतीर्भवतस्तत् सम्पादय नः प्रभो इति । पाद्मे कार्त्तिकमाहात्म्ये श्रीसत्यभामां प्रति श्रीभगवता—सौराश्च शैवा गाणेशा वैष्णवाः शक्तिपूजकाः । मामेव प्राप्नुवन्तीह वर्षापः सागरं यथा । एकोऽहं पञ्चधा जातः क्रीड़या नामभिः किल । देवदत्तो यथा कश्चित् पुत्राद्याह्वाननामभिरिति । वस्तुतस्तु सर्व्वापेक्षया श्रीवैष्णवा एव श्रेष्ठाः । तदुक्तं स्कान्दे ब्रह्मनारदसंवादे तत्रैवान्यत्र प्रह्लाद-संहितायामेकादशीजागरणप्रसङ्गे च—न सौरो न च शैवो वा न ब्राह्मो न च शाक्तिकः । न चान्यदेवताभक्तो भवेद्भागवतोपम इति । तादृशसौरादीनां तत्प्राप्तिश्च न केवलं तद्धेतुकैव किन्तु भगवत्-प्रीत्यर्थंकृततज्जातशुद्धभक्तिद्वारा वा श्रीविष्णुक्षेत्रमरणादिप्रभावेण वा यथा तत्रैव वर्णितयोर्देवशर्म्मचन्द्रशर्म्मनाम्नोः सूर्य्यमाराधयतोः । तदुक्तं श्रीभगवता—तत्क्षेत्रस्य प्रभावेण धर्म्मशीलतया पुनः । वैकुण्ठभवनं नीतौ मत्परौ मत्समीपगैः । यावज्जीवन्तु यत्ताभ्यां सूर्य्यपूजादिकं कृतम् । तेनाहं कर्म्मणा ताभ्यां सुप्रीतो ह्यभवं किलेति । तत्क्षेत्रं मायापुरी । तौ च कृष्णावतारे सत्राजिदक्रूराख्यौ जाताविति च तत्र प्रसिद्धिः । एवं पुण्डरीकस्य पितृसेवया तत्-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्राप्तिश्च योजनीया।' स्वतन्त्रोपासनायां तत्प्राप्तिः श्रीगीतोपनिषत्स्वेव निषिद्धा। येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः। तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्। अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च। न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते। यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः। भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि मामिति। तस्मात् तदीयत्वेनोपासनायां क्वचिद्गुणोऽपि भवति। अवज्ञादौ तु दोषः, श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हीतिवत्। यथा पाद्मे—हरिरेव सदाराध्यः सर्वदेवेश्वरेश्वरः। इतरे ब्रह्मरुद्राद्या नावज्ञेया कदाचनेति। गौतमीये च—गोपालं पूजयेद् यस्तु निन्दयेदन्यदेवताम्। अस्ति तावत् परो धर्मः पूर्वधर्मोऽपि नश्यतीति। अतएव, ह्यर्यमां पथि देवहेलनादिति श्रीनारायणवर्मणि तदागःप्रायश्चित्तम्। विष्णुधर्मे चायमितिहासः—पूर्वं श्रीमदम्बरीषो बहुदिनं भगवदाराधनं तपोऽनुष्ठितवान्। तदन्ते च भगवानेवेन्द्ररूपेणैरावतोक्तं गरुडमारुह्य तं वरेण च्छन्दयामास। स चेन्द्ररूपं दृष्ट्वा तं नमस्कारादिनाऽऽदृत्यापि तस्माद्वरं नेष्टवान् उक्तवांश्च ममाराध्याकारो यः स एव मे वरदाता भवेन्नान्य इति। अथ तद्देयं वरमहमेव दास्यामीति पुनरुक्तवत्यपीन्द्रे तं नेष्टवन्तं तं प्रति स वज्रं समुद्यतवान्। तदापि तं नाङ्गीकृतवति तस्मिन् सुप्रसन्नो भूत्वा तद्रूपसन्तर्द्धाप्य स्वरूपमाविष्कुर्वन्ननुजग्राहेति। तत्र च शिवावज्ञादौ महान् एव दोषः। यथा दक्ष एव नन्दीश्वरशापः—संसरन्त्विह ये चामुमनु सर्वावमानिनमिति। इदमपि यत्किञ्चिदेव, श्रीशिवस्य महाभागवतत्वेन दोषस्य सुप्रसिद्धत्वात्। हेलनं गिरिशभ्रातुर्धनदस्य त्वया कृतमिति श्रीध्रुवोक्तरीत्या नूनं यत्सख्यमनुस्मृत्यैव कुवेरादपि श्रीध्रुवेण ... स्वभावकृतसर्वविषयकविनयपुनःपुनर्भक्त्यभिलाषाभ्यां युक्तं कृतं भगवद्भक्तिवरप्रार्थनमिति चतुर्थाभिप्रायः। अत एवोक्तं

यो मां समर्चयेन्नित्यमेकान्तं भावमाश्रितः । विनिन्दन् देवमीशानं स याति नरकं ध्रुवमिति । दृष्टञ्च तथा चित्रकेतुचरिते । श्रीकपिलदेवेन साधारणानामपि प्राणिनामवमानादिकं निन्दितं, किमुत तद्विधानाम् । तथाहि—अहं सर्वेषु भूतेषु भूतात्मावस्थितः सदा । तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविड़म्बनम् । भूतेषु वक्ष्यमाणरीत्या अप्राणसृज्जीवमारभ्य भगवदर्पितात्मजीवपर्य्यन्तेषु । भूतात्मा तदन्तर्य्यामी । तं मामवज्ञाय । तेषामवज्ञया तदधिष्ठानकस्य ममैवावज्ञां कृत्वेत्यर्थः । ततस्तां कृत्वा योऽर्चां मत्प्रतिमां कुरुते स तद्विड़म्बनं तस्या अवज्ञामेव कुरुत इत्यर्थः । यतः, यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् । हित्वार्चां भजते मौढ्याद्भस्मन्येव जुहोति सः । मौढ्यात् शैली दारुमयी वा काचित् प्रतिमेयमिति मूढ़बुद्धित्वात् यः सर्वेषु भूतेषु वर्त्तमानं परमात्मानमीश्वरं मां हित्वा तया मयैक्यमविभाव्य अर्चां मदीयां प्रतिमां भजते केवललोकरीतिदृष्ट्या तस्यै जलादिकमर्पयति । यथाग्निपुराणे दशरथमारितपुत्रस्य तपस्विनो विलापे—शिलाबुद्धिः कृता किम्बा प्रतिमायां हरेर्मया । किं मया पथि दृष्टस्य विष्णुभक्तस्य कर्हिचित् । तन्मुद्राङ्कितदेहस्य चेतसा नादरः कृतः । येन कर्मविपाकेन पुत्रशोको ममेदृश इति । यथा चोक्तम्—अर्च्चे विष्णौ शिलाधीर्गुरुषु नरमतिर्वैष्णवे जातिबुद्धिर्विष्णोर्वा वैष्णवानां कलिमलमथने पादतीर्थेऽम्बुबुद्धिः । शुद्धे तन्नाम्नि मन्त्रे सकलकलुषहे शब्दसामान्यबुद्धिर्विष्णौ सर्वेश्वरेशे तदितरसमधीर्यस्य वै नारकी सः इति । तस्य च मूढ़स्य सद्दृष्ट्यभावात् सर्वभूतावज्ञापि भवति । ततस्तद्दोषेण भस्मनि यथा जुहोति कश्चित्, तथा तस्याश्रद्दधानस्य फलाभाव इत्यर्थः । ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः । इत्याद्युक्तरीत्या लोकपरम्परामात्रजातयत्किञ्चिच्छ्रद्धासद्भावे तु कनिष्ठभागवतत्वमेव । अर्च्चायामेव हरये पूजां यः श्रद्धयेऽहते । न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृत इत्युक्तेः । यद्यपि यथाकथञ्चिद्भजनस्यैवावश्यं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

फलावसानतास्त्येव तथापि झटिति न भवतीत्येव। तथोक्तं वक्ष्यते च साफल्यम्—अर्च्चादावर्च्चयेत्तावदित्यादिना। अवज्ञामात्रस्य तादृशत्वे सुतरान्तु—द्विषतः परकाये मां मानिनो भिन्नदर्शिनः। भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति। भिन्नदर्शिनः सर्वत्रान्तर्यामिण्येकदृष्टिरहितस्य अत एव मानिनः अत एव बद्धवैरस्य च। तथा च महाभारते— पितेव पुत्रं करुणो नोद्वेजयति यो जनम्। विशुद्धस्य हृषीकेशस्तूर्णं प्रसीदतीति। किञ्च—अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयानघे नैव तुष्येऽर्च्चितोऽर्च्चायां भूतग्रामावमानिनः। अवमानिनो निन्दाकर्त्तुः निन्दापि द्वेषसमा। किम्वा, न तथा तप्यते विद्धः पुमान् वाणैः मर्म्मगैः। यथा तुदन्ति मर्म्मस्था असतां परुषेषवः। इत्यत्रोक्तरीत्या ततोऽधिकेति नायं व्युत्क्रमः इत्यभिप्रेत्य न द्वेषात् पूर्वमसौ पठिता। तदेवमीश्वरज्ञानाभावात् भक्तावश्रद्दधानस्य दोष उक्तः। अथ तच्छ्रद्धा-हेतुतज्ज्ञानस्य स्वधर्म्मसंयुक्तं तदर्च्चनमेव कारणमुपदिशन् तादृशार्च्चनस्याप्यन्यथंतामङ्गीकरोति। अर्च्चादावर्च्चयेत्तावदीश्वरं मां स्वकर्म्मकृत्। यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम्॥ तावदेव स्वकर्म्मकृत् सन् अर्च्चादावर्च्चयेत् यावत् सर्वभूतेष्ववस्थितम् ईश्वरं मां न वेद जानाति। अत्र स्वकर्म्मसहायत्वमजातश्रद्धस्य शुद्धभक्तावनधिकारात् ततः प्रतिपादयिष्यते—जातश्रद्धो मत्कथास्वित्यादिना। अतो भगवज्ज्ञानादूर्द्ध्वं जातश्रद्धस्तु स्वकर्म्मकृत् सन् न अर्च्चयेत् किन्तु शुद्धमर्च्चादिकमेव कुर्व्वीतेत्यायातम्। तच्च प्रतिपादयिष्यते—मदर्थे कर्म्माणि कुर्व्वीतेत्यादिना। नत्वर्च्चां परित्यजेदित्यर्थः। प्रतिष्ठिता न त्याज्या यावज्जीवं समर्च्चयेत्। वरं प्राणपरित्यागः शिरसो वा कर्त्तनमिति हयशीर्षपञ्चरात्रविरोधात्। अथ स्वधर्म्मपूर्वकमर्च्चनं कुर्वंश्च भूतदयां विना न सिध्यतीत्याह—आत्मनश्च परस्यापि यः करोत्यन्तरोदरम्। तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्वणम्॥ अन्तरोदरम् उदरभेदेन भेदं करोति नतु मदधिष्ठानत्वेना-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पश्यति। ततश्च क्षुधितादिकमपि दृष्ट्वा स्वोदरादिकमेव केवलं विभर्त्तीत्यर्थः। तस्य भिन्नदृशो मृत्युरूपोऽहमुल्बणं भयं संसारम्। निगमयति—अथ मां सर्वभूतेषु भूतात्मानं कृतालयम्। अर्च्चयेद्दान-मानाभ्यां मैत्र्याऽभिन्नेन चक्षुषा॥ अथ अतो हेतोः। यथायुक्तं यथाशक्ति दानेन तदभावे मानेन च। अभिन्नेन चक्षुषा इति पूर्ववत्। तथोक्तं सनकादीन् प्रति वैकुण्ठदेवेन—ये मे तनूर्द्विजवरान् दुहती-र्मदीया भूतान्यलब्धशरणानि च भेदबुद्ध्या इत्यादि। यद्वा भिन्नेन चक्षुषान्यत्र या दृष्टिस्ततोऽतिविलक्षणया दृष्ट्या सर्वोत्कृष्टदृष्ट्ये-त्यर्थः। तत्र सर्वेषां साधारण्येनैवार्हणे प्राप्ते विशेषयति—जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे। ततः सचित्ताः प्रवरास्ततश्चेन्द्रियवृत्तयः। तत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः। तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः। रूपभेदविद-स्तत्र ततश्चोभयतो दतः। तेषां बहुपदः श्रेष्ठाश्चतुष्पादस्ततो द्विपात्। ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः। ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः। अर्थज्ञात् संशयच्छेत्ता ततः श्रेयान् स्वधर्मकृत्। मुक्तसङ्गस्ततो भूयानदोग्धा धर्ममात्मनः। तस्मान्मय्य-र्पिताशेषक्रियार्थात्मा निरन्तरः। मय्यर्पितात्मनः पुंसो मयि संन्यस्त-कर्म्मणः। न पश्यामि परं भूतमकर्त्तुः समदर्शनात्। पूर्वस्मादुत्तरोत्तर-स्मिन्नेकैकगुणाधिक्येनाधिक्यम्। धर्ममदोग्धा निष्कामकर्म्मा। निर-न्तरो ज्ञानाद्यव्यवहितभक्तिः। अकर्त्तुरर्पितात्मत्वेन स्वभरणादिकर्म्मा-नपेक्षमानात्। यद्भगवति भक्तिः क्रियते तत्रापि स्वस्य भगवदधीनत्वं ज्ञात्वा तदभिमानशून्याच्च। समदर्शनात् भगवदधिष्ठानतासाम्येनात्म-वत् परेष्वपि हितमाशंसमानात्। जीवाः श्रेष्ठा ह्यजीवानामित्यादिना भेदो हि विवक्षितः। ततो मद्भक्तेष्वेवादरबाहुल्यादिकं कर्त्तव्यम्। अन्यत्र तु यथाप्राप्तं यथाशक्ति चेति भावः। तथैवोक्तम्—मनसैतानि भूतानि प्रणमेद्बहुमानयन्। ईश्वरो जीवकलया प्रविष्टो भगवानि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तीति। जीवकृतया तत्तत्कलनया तदन्तर्यामितयेत्यर्थः। तदेवं
प्रथमोपासकानां सर्वभूतादरो विहितः। सम्बद्धसाधकानान्तु भग-
वद्वैभवसार्वत्रिकतास्फूर्त्त्या भवत्येवासौ। यथोक्तं स्कान्दे—एते
ह्यद्भुता व्याध तवाहिंसादयो गुणाः। हरिभक्तौ प्रवृत्ता ये
ते स्युः परतापिनः॥ इति वक्ष्यमाणरीत्या सुहृद्बन्धुत्वादिभावसा-
धकानामपि बन्धुभावमिश्रश्रीगोकुलवास्यादिशीलानुसरणेन ताद्रू-
भगवद्गुणानुसरणेन चासौ जायते। जातभावानां त्वहिंसा चोप-
मश्च स्वीय एव स्वभावः। यथा—यत्रानुरक्ताः सहसैव धीरा
व्यपोह्य देहादिषु सङ्गमूढ़म्। व्रजन्ति तत् पारमहंस्यमन्त्यं यस्मि-
न्नहिंसोपरमः स्वधर्मः॥ इत्यनुसारेण, परमसिद्धानाञ्च, सर्वभूते-
यः पश्येद्भगवद्भावमात्मनः इत्याद्यनुसारेण सिद्ध एव सः। तत्र भक्त-
कानां यत्तु, यथा तरोर्मूलनिषेचनेन इत्यादौ, तदन्योपासना-
पुनरुक्तत्वमुपलभ्यते, तत् पुनः केवलस्वतन्त्रतत्तद्दृष्ट्योपासनानामेव
अत्र तु तत्तदधिष्ठानकभगवदुपासनमेव विधीयते। तदादरावश्यकत्व-
तत्सम्बन्धेनैव सम्पद्यते। तच्चान्यत्र झटिति रागद्वेषनिवृत्त्यर्थमि-
ज्ञेयम्। अत एव केवलभूतानुकम्पया श्रीभगवदर्च्चनं त्यक्तवतो भर-
स्यान्तरायः। तस्माद्भूतदयैव भगवद्भक्तिमुख्या नार्च्चनमिति निरस्त-
तथैव तदव्यवहितपूर्वं निर्गुणभक्त्युपायत्वेन क्रियायोगेन श्रद्ध-
नातिहिंस्रेण नित्यश इत्यत्रातिशब्देन पाञ्चरात्रिकार्च्चनलक्षणक्रि-
योगार्थां पत्रपुष्पावचयादिलक्षणा किञ्चिद्धिंसापि विहिता। तथा
न्योपासनादरो न कर्त्तव्यस्तत्सम्बन्धेनादरादिकञ्च कर्त्तव्यम्। स्व-
त्वाेणोपासनन्तु धिक्कृतमिति साध्वेवोक्तम्—अविस्मितं तमित्या-
६॥९॥ देवाः श्रीमदादिपुरुषम्॥१०६॥

तथा—कः पण्डितस्त्वदपरं शरणं समीयाद्भक्तप्रियादृतगिरः सु-
कृतज्ञात्। सर्वान् ददाति सुहृदो भजतोऽभिकामानात्मानमप्युप-
पचयौ न यस्य॥१०७॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सुहृदो हितकारिस्वभावात्तत्रापि कृतज्ञात्दुपकाराभासेऽपि बहुमन्वा-नात् यो भजतो भजमानाय सर्वान् कामानभीष्टानभि सर्वतोभावेन ददाति। तत्र सुहृदः सुहृदे सम्प्रीतये त्वात्मानमपि ददाति। न च सर्वतोभावेन दाने तादृशेभ्यो बहुभ्यो दाने वा समावेशाभावः स्यादि-त्याह, उपचयेति ॥१०॥४८॥ अक्रूरः श्रीभगवन्तम् ॥ १०७ ॥

तद्भक्तमात्रानादरेणाह—येऽभ्यर्थितामपि च नो नृगतिं प्रपन्ना ज्ञानञ्च तत्त्वविषयं सहधर्म्म यत्र। नाराधनं भगवतो वितरन्त्यमुष्य सम्मोहिता विततया वत मायया ते ॥१०८॥

यत्र यस्यां भगवद्धर्मपर्य्यन्तो धर्म्मो भवति भगवत्पर्य्यन्तस्य तत्त्वस्य ज्ञानञ्च भवतीत्यर्थः। तां प्राप्ता अपि सर्वेषां धर्म्माणां ज्ञानानाञ्च मूलं ये भगवत आराधनं न वितरन्ति न कुर्वन्ति। तदुक्तम्—विले वतोरु-क्रमविक्रमान् ये इत्यादि। तथा च ब्रह्मवैवर्त्ते—प्राप्यापि दुर्ल्लभतरं मानुष्यं विबुधेप्सितम्। यैराश्रितो न गोविन्दस्तैरात्मा वञ्चितश्चिरम्। अशीतिश्चतुरश्चैव लक्षांस्तान् जीवजातिषु। भ्रमद्भिः पुरुषैः प्राप्यं मानुष्यं जन्म पर्य्ययात्। तदप्यफलतां जातं तेषामात्माभिमानिनाम्। वरा-काणामनाश्रित्य गोविन्दचरणद्वयमिति ॥३॥१५॥ श्रीब्रह्मा देवान्॥१०८॥

तथा—यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः। हरावभक्तस्य कुतो महद्गुणा मनोरथेनासति धावतो बहिः ॥१०९॥

अकिञ्चना निष्कामा गुणैः ज्ञानवैराग्यादिभिः सह सर्वे शिवब्रह्मा-दयो देवाः सम्यगासते ॥५॥१८॥ भद्रश्रवसः श्रीहयशीर्षम् ॥१०९॥

अत एव तन्मार्गसिद्धमुनीनामप्यनादरः—अह्न्याप्तार्त्तकरणा निशि निःशयाना नानामनोरथधिया क्षणभग्ननिद्राः। दैवाहतार्थ-रचना मुनयोऽपि देव युष्मत्प्रसङ्गविमुखा इह संसरन्ति ॥११०॥

अह्नि आप्तेत्यादिस्वभावा युष्मद्भजनविमुखाः चेत् संसारिणो भवन्ति। किं बहुना तत्तन्मार्गसिद्धा मुनयोऽपि युष्मत्प्रसङ्गविमुखाश्चेत् इह जगति तदैव संसरन्ति। अथवा मनयोऽपि तद्विमुखाश्चेत्तर्हि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

संसरन्त्येव। कथम्भूताः सन्तः संसरन्तीत्यत्राह, अङ्गाप्रतेत्यादि। आरुह्य कृच्छ्रेण परं पदमित्यादेः। अत उक्तं श्रीधर्म्मेण—धर्मं तु साक्षात् भगवत्प्रणीतं न वै विदुरृषयो नापि देवाः। न सिद्धमुख्या असुरा मनुष्याः कुतो नु विद्याधरचारणादयः। स्वयम्भुर्नारदः शम्भुः कुमारः कपिलो मनुः। प्रह्लादो जनको भीष्मो वलिर्वैयासकिर्वयम्। द्वादशैते विजानीमो धर्मं भागवतं भटाः। गुह्यं विशुद्धं दुर्बोधं यज्ज्ञात्वामृतमश्नुते। एतावानेव लोकेऽस्मिन् पुंसां धर्म्मः परः स्मृत इत्यादि। एते धर्म्मप्रवर्त्तका विजानीम एव तु स्वस्मृत्यादिषु प्रायेणोपदिशाम इत्यर्थः। यतः गुह्यमप्रकाश्यं दुर्बोधमन्यैस्तथा ग्रहीतुमशक्यञ्च। गुह्यत्वे हेतुः यज्ज्ञात्वेति। अतः वक्ष्यते—प्रायेण वेद तदिदं न महाजनोऽयम् इत्यादि। महाजनो द्वादशभ्य स्तदनुगृहीतसंप्रदायिभ्यश्चान्यो महागुणयुक्तोऽपीत्यर्थः। तस्मात् साधूक्तमङ्गाप्रतात्तेत्यादि॥ ३॥ ८॥ ब्रह्मा श्रीगर्भोदशायिनम्॥ ११०॥

तदेवं श्रीभगवद्भक्तेरेव सर्वोर्द्धमभिधेयत्वं स्थितम्। तथा गीतासु—तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः। कर्म्मिभ्यश्चाधिको योगो तस्माद्योगी भवार्ज्जुन। योगिनामपि सर्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मत इति। सर्व्वशब्दोऽत्र दैवमेवापरे यज्ञं योगिनः पर्युपासते इत्यादिना पूर्व्वपूर्व्वोक्तान् सर्व्वानप्युपायिनो गृह्णातीति ज्ञेयम्। तदेवमभक्तनिन्दाश्रवणात् श्रीमद्भगवद्भक्तेः सर्व्वेषु नित्यत्वमपि सिद्धम्। उक्तञ्च श्रीभगवता उद्धवं प्रति—भिक्षोर्धर्म्मः शमोऽहिंसा तप ईक्षा वनौकसामित्यादौ सर्व्वेषां मदुपासनमिति। तथा श्रीनारदेन च सार्व्ववर्णिकस्वधर्म्मकथने श्रवणं कीर्त्तनञ्चास्येत्यादि। अकरणे दोषश्रवणञ्चान्यत्र मुखबाहूरुपादेभ्य इत्यादि। तथाच महाभारते—भगवत् परिरचन्तं सृष्टिसंहारकारकम्। यो नार्च्चयति देवेशं तं विद्यात्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ब्रह्मघातकमित्यादि । श्रीगीतोपनिषत्सु—न मां दुष्कृतिनो मूढ़ाः प्रपद्यन्ते नराधमाः । माययापहृतज्ञाना आसुरं भावमाश्रिता इति । आग्नेये विष्णुधर्म्मे च—द्विविधो भूतसर्गोऽयं दैव आसुर एव च । विष्णुभक्तिपरो दैव आसुरस्तद्विपर्य्ययः । अन्यदप्युदाहृतम्—विप्राद्‌द्विषड्‌गुणयुतादरविन्दनाभपादारविन्दविमुखादिति श्वपचोऽपि मह्नीपालेत्यादि च । तथा गारुड़े—अन्तं गतोऽपि वेदानां सर्वशास्त्रार्थवेद्यपि । यो न सर्व्वेश्वरे भक्तस्तं विद्यात् पुरुषाधमम् । बृहन्नारदीये—हरिपूजाविहीनाश्च वेदविद्वेषिणस्तथा । द्विजगोद्वेषिणश्चापि राक्षसाः परिकीर्त्तिता इति । अपरश्चाह—येन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः । आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधो नादृतयुष्मदङ्‌घ्रयः इति ॥ १११ ॥

प्रथमतस्तावत् त्वय्यस्तभावादविशुद्धबुद्धयः, धर्म्मः सत्यदयोपेतो विद्या वा तपसान्विता, मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हीत्याद्युक्तेः, तथा, ज्ञानमार्गमाश्रित्य विमुक्तमानिनः देहद्वयातिरिक्तत्वेनात्मानं भावयन्तः, ततः क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसामित्याद्युक्तेः, कृच्छ्रेण जीवन्मुक्तिरूपामारुह्य प्राप्यापि ततोऽधः पतन्ति भ्रश्यन्ति । कदेत्यपेक्षायामाह, नादृतेति । यदीति शेषः । तेषां भक्तिप्रभावस्याननुवृत्तेरबुद्धिपूर्वकस्य त्वदनादरस्य निवर्त्तकाभावात्, तथापि दग्धानामपि पापकर्म्मणां महाशक्तिश्रीभगवत्पादपद्मावज्ञया पुनर्विरोहात् । तथाच वासनाभाष्योत्थापितं भगवत्परिशिष्टवचनम्—जीवन्मुक्ता अपि पुनर्बन्धनं यान्ति कर्म्मभिः । यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिनः ॥ अतएव तत्रैव—जीवन्मुक्ताः प्रपद्यन्ते क्वचित् संसारवासनाम् । योगिनो वै न लिप्यन्ते कर्म्मभिर्भगवत्परा इति । तथा रथयात्राप्रसङ्गे विष्णुभक्तिचन्द्रोदयादिधृतं पुराणान्तरवचनम्—नानुव्रजति यो मोहात् व्रजन्तं परमेश्वरम् । ज्ञानाग्निदग्धकर्म्मापि स भवेद्ब्रह्मराक्षस



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

इति। एवमेवोक्तम्—यो नाद्दतो नरकभाग्भिरसत्प्रसङ्गैरि
अतएवोपदिष्टम्—तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्ध
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावित इति। तस्मात् मुक्त
मेव सर्व्वेषां श्रीहरिभक्तिर्नित्येत्यायातम् ॥ १२ ॥ २॥ देवाः श्रीभ
वन्तम् ॥ १११ ॥

प्रेमहृतकर्म्माशयनिर्धूननानन्तरमपि भक्तिः श्रूयते—यथाग्निना
मलं जहाति ध्मातं पुनः स्वं भजते च रूपम्। आत्मा च कर्म्मानु
विधूय मद्भक्तियोगेन भजत्यथो माम् ॥ ११२ ॥

तथैवात्मा जीवो मत्प्रेम्ना कर्म्माशयं विधूय ततः शुद्धस्वर
प्राप्य मां भजतीत्यर्थः। तदुक्तम्—मुक्ता अपि लीलया विग्रहं क
भगवन्तं भजन्ते इति ॥ ११ ॥ १८॥ श्रीभगवान् ॥ ११२ ॥

एवमप्युक्तं स्कान्दे रेवाखण्डे—इन्द्रो महेश्वरो ब्रह्मा परं ब
तदैवहि। श्वपचोऽपि भवत्येव यदा तुष्टोऽसि केशव। श्वपचाः
हृष्टत्वं ब्रह्मेशानादयः सुराः। तदैवाच्युत यान्तीरते यदैव त्वं प्र
सुख इति॥ तथैवाह—यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थे
मूर्द्धन्यधिकृतेन शिवः शिवोऽभूत् इति ॥ ११३ ॥

स्पष्टम्। तस्मात् भक्तेर्महानित्यत्वेनाप्यभिधेयत्वमायातम्।
स्वकृतपुरेष्वित्यादौ जीवानां स्वभावसिद्धा सेवेति व्याख्येयम्।
२८ ॥ श्रीकपिलदेवः ॥ ११३ ॥

तदेवमवान्तरतात्पर्य्येण भक्तेरेवाभिधेयत्वं षड्विधैरपि लिङ्गै
गम्यते। तत्रोपक्रमोपसंहारयोरेकत्वेन यथा, जन्माद्यस्य
इत्यादावुपक्रमपद्ये सत्यं परं धीमहीति। अत्र श्रीगीतासु
सततयुक्ता ये भक्तास्त्वां पर्य्युपासत इत्यादौ श्रीभगवत्येव ध्यान
कष्टाद्यत्वेन तद्ध्यानिनो युक्ततमत्वेन चोक्तत्वात्। ब्रह्मणो हि प्रतिष्ठा
मित्यादौ परत्वस्य श्रीभगवद्रूप एव पर्य्यवसानात्, तस्यैव सर्वं
सर्वशक्तित्वाभ्यां जगज्जन्मादिहेतुत्वात्तत्र श्रीभगवत्येव ध्यानमभिधी

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथैव हि तत् पद्यं परमात्मसन्दर्भे विवृतमस्ति। कस्मै येन विभाषितो-ऽयमतुलो ज्ञानप्रदीपः पुरेत्यादावुपसंहारपद्येऽपि सत्यं परं धीमहीति। अतएव स्पष्टमेवास्य श्रीभगवत्त्वं श्रीभागवतवक्तृत्वात्। पूर्वञ्च तेने ब्रह्म हृदा य आदिकवय इत्युक्तम्। अभ्यासेनोदाहरणं पूर्वं दर्शित-मदर्शितं चानेकविधमेव। अपूर्वतया फलेन च दर्शितं श्रीव्यास-समाधौ—अनर्थोपशमं साक्षादित्यादि। प्रशंसालक्षणेनार्थवादेन चाभ्यासवद्बहुविधमेव तत्रास्ति। उपपत्त्या च—भयं द्वितीयाभि-निवेशतः स्यादित्यादि अनेकमिति। अत्र गतिसामान्ये च—इदं हि पुंसस्तपसः श्रुतस्य वेत्यादि। तथाह—मुनिर्विवक्षुर्भगवद्गुणानां सखापि ते भारतमाह कृष्ण इत्यादि ॥ ११४ ॥

स्पष्टम् ॥ ३ ॥ ५ ॥ श्रीविदुरः ॥ ११४ ॥

इयमेव भक्तिः, धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतामित्यत्रोक्ता। अत्र सर्गो विसर्गश्चेत्यादौ दशलक्षणस्यामपि सद्धर्म इत्येकलक्षणत्वेनोक्ता। तस्या अभिधेयत्वं श्रीभागवतबीजरूपायां चतुःश्लोक्यामप्युदाहृतम्—एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः। अन्वयव्यतिरेकाभ्यां यत् स्यात् सर्वत्र सर्वदेत्यादि। पूर्वं हि ज्ञान-विज्ञानरहस्यतदङ्गानि वक्तव्यत्वेन चत्वार्य्येव प्रतिज्ञातानि। तत्र चतुः-श्लोक्यां प्राक्तनात्रयोऽर्था अपि क्रमेणैव प्राक्तनश्लोकत्रये व्याख्याताः। रहस्यशब्देन तत्र प्रेमभक्तिः तदङ्गशब्देन साधनभक्तिरुच्यते। टीका च—रहस्यं भक्तिस्तदङ्गं साधनम् इत्येषा। ततः क्रम-प्राप्तत्वेन, कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता। मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः॥ इति भगवद्वाक्यानुसारेण च चतुर्थेऽस्मिन् पद्ये साधनभक्तिरेव व्याख्याता। अत्र च पुनर्व्याख्या विवरणायोत्थाप्यते। तथाहि, आत्मनः मम भगवतः तत्त्वजिज्ञासुना प्रेमरूपं रहस्यमनुभवितुमिच्छुना एतावन्मात्रं जिज्ञासितव्यं श्रीचर-णेभ्यः शिक्षणीयम्। किन्तत्, यदेकमेव अन्वयेन विधिमुखेन व्यति-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

रेकेण निषेधमुखेन च स्यादुपपद्यते। तत्रान्वयेन यथा, एतावान्
लोकेऽस्मिन्नित्यादि, मन्मना भव मद्भक्त इत्यादि च। व्यतिरेकेण यथा
मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह। चत्वारो जज्ञिरे वर्णा गुणै
र्विप्रादयः पृथक्। य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम्
न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः। न मां दुष्कृतिनो मू
इत्यादि। यावज्जनो भजति नो भुवि विष्णुभक्तिवार्त्तासुधारसम
रसैकसारम्। तावज्जरामरणजन्मशताभिघातदुःखानि तानि ल
बहुदेहजानीति पद्मपुराणे च क्वत्र कुत्रोपपद्यते। सर्वत्र शास्त्रक
देशकारणद्रव्यक्रियाकार्य्यफलेषु समस्तेष्वेव। तत्र समस्तशास्त्रेषु
स्कान्दे ब्रह्मनारदसंवादे—संसारेऽस्मिन् महाघोरे जन्ममृत्यु
कुले। पूजनं वासुदेवस्य तारकं वादिभिः स्मृतम्॥ तत्रान्व
येन यथा—भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषयेत्यादि।
स्कान्दे—आलोड्य सर्वशास्त्राणि विचार्य्य च पुनः पुनः। इदं
सुनिष्पन्नं ध्येयो नारायणः सदेति। व्यतिरेकेण यथा—पारं गतो
वेदानामित्यादिकं सर्वमवगन्तव्यम्। तच्चान्ते दर्शयिष्यते।
कर्त्तृषु यथा—ते वै विदन्त्यतितरन्ति च देवमायाम्। स्त्रीशूद्र
शवरा अपि पापजीवाः। यद्यद्भुतक्रमपरायणशीलशिक्षास्तिर्य्यग्
अपि किमु श्रुतधारणा ये॥ इति। गारुड़े—कीटपक्षिमृगाणां
हरौ सन्न्यस्तचेतसाम्। ऊर्द्ध्वामेव गतिं मन्ये किं पुनर्ज्ञानिनां नृणाम्
इति। अत्रैव साचारे दुराचारे ज्ञानिन्यज्ञानिनि विरक्ते रागि
मुमुक्षौ मुक्ते भक्त्यसिद्धे भक्तिसिद्धे तस्मिन् भगवत्पार्षदतां
तस्मिन्नित्यपार्षदे च सामान्येन दर्शनादपि सार्वत्रिकता।
साचारे दुराचारे यथा—अपि चेत् सुदुराचारो भजते मामनन्यभा
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः॥ इति। सदा
किं वक्तव्य इत्यपेरर्थः। ज्ञानिन्यज्ञानिनि च—ज्ञात्वाज्ञात्वाथ
मामित्यादि। हरिर्हरति पापानि दुष्टचित्तैरपि स्मृत इत्य

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विरक्ते रागिनि च—बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः । प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते । अबाध्यमानस्तु सुतरां नाभिभूयत इत्यपेरर्थः । मुमुक्षौ मुक्ते च—मुमुक्षवो घोररूपान् इत्यादि । आत्मारामाश्च मुनय इत्यादि । भक्त्यसिद्धे भक्तिसिद्धे च—केचित् केवलया भक्त्या वासुदेवपरायणाः । अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्कर इति । न चलति भगवत्पदारविन्दाल्लवनिमिषार्द्धमपि स वैष्णवाग्र्य इति । भगवत्पार्षदतां प्राप्ते—मत्सेवया प्रतीतं ते सालोक्यादिचतुष्टयम् । नेच्छन्ति सेवया पूर्णाः किमन्यत् कालविप्लुतम् ॥ इति । नित्यपार्षदे—वापीषु विद्रुमतटास्वमलामृताप्सु प्रेष्यान्विता निजवने तुलसीभिरीशम् । अभ्यर्चती स्वलकमुन्नसमीक्ष्य वक्त्रमुच्छेषितं भगवतेत्यमताङ्गयच्छ्रीरिति । सर्वेषु वर्षेषु भुवनेषु ब्रह्माण्डेषु तेषां वहिश्च तैस्तैः श्रीभगवदुपासनायाः क्रियमाणायाः श्रीभागवतादिषु प्रसिद्धिः सिद्धैवेति सर्वदेशोदाहरणं ज्ञेयम् । सर्वेषु करणेषु यथा । मानसेनोपचारेण परिचर्य्य हरिं मुदा । परेऽवाङ्मनसागम्यं तं साक्षात् प्रतिपेदिर इत्यादि । एवम्भूतवचने हि अस्तु तावद्बहिरिन्द्रियेण मनसा वचसापि तत्सिद्धिप्रसिद्धिः । सर्वद्रव्येषु यथा—पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मन इति । सर्वक्रियासु यथा—श्रुतोऽनुपठितो ध्यात आदृतो वानुमोदितः । सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोऽपि हीति । यत् करोषि यदश्नासि यज्जुहोसि ददासि यत् । यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणमिति । एवं भक्त्याभासेषु भक्त्याभासापराधेष्वपि अजामिलमूषिकादयो दृष्टान्ता गम्याः । सर्वेषु कार्य्येषु यथा—यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । नूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतमिति । सर्वफलेषु यथा—अकामः सर्वकामो वा मोक्षकाम उदारधीरित्यादि । यथा तरोर्मूलनिषेचनेनेत्यादिवाक्येन हरिपरिचर्य्यायां क्रियमाणायां

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सर्वेषामन्येषामपि देवादीनामुपासना स्वत एव सिध्यतीत्यतोऽपि सार्वत्रिकता। यथोक्तं स्कान्दे ब्रह्मनारदसंवादे—अर्च्चिते देवदेवेशे शङ्खचक्रगदाधरे। अर्च्चिताः सर्वे देवाः स्युर्यतः सर्वगतो हरिरिति। एवं यो भक्तिं करोति यद्रवादिकं भगवति दीयते येन द्वारभूतेन भक्तिः क्रियते यस्मै श्रीभगवत्प्रीणनार्थं दीयते यस्माद्रवादिकात् पय-आदिकमादाय भगवति निवेद्यते यस्मिन् देशादौ कुले वा कश्चिद्भक्ति-मनुतिष्ठति तेषामपि कृतार्थत्वं पुराणेषु दृश्यते इति कारकगतापि। एवं सार्वत्रिकत्वं साधितम्। सदातनत्वमाह सर्वदेति। तत्र सर्गादौ यथा—कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता इत्यादि। सर्गमध्ये बहुत्रैव। चतुर्विधप्रलयेष्वपि—तत्रेमं क उपासीरन् क उ स्विदनुशेरते इति विदुरप्रश्ने। सर्वेषु युगेषु—कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः। द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनादिति। किं बहुना, सा हानिस्तन्महच्छिद्रं स मोहः स च विभ्रमः। यन्मुहूर्त्तं क्षणं वापि वासुदेवो न चिन्त्यत इति वैष्णवे। सर्वावस्थास्वपि गर्भे श्रीनारदकारितश्रवणेन प्रह्लादे प्रसिद्धम्। बाल्ये श्रीध्रुवादिषु। यौवने श्रीमदम्बरीषादिषु। वार्द्धक्ये धृतराष्ट्रादिषु। मरणेऽजामिलादिषु। स्वर्गितायां श्रीचित्रकेत्वादिषु। नारकितायामपि, यथा यथा हरेर्नाम कीर्त्तयन्ति स्म नारकाः। तथा तथा हरौ भक्तिमुद्वहन्तो दिवं ययुरिति श्रीनृसिंहपुराणात्। अतएवोक्तं दुर्वाससा—मुच्यते यन्नाम्न्युदिते नारकोऽपीति। तथा, एतन्निर्विद्यमानानामिच्छतामकुतोभयम्। योगिनां नृप निर्णीतं हरेर्नामानुकीर्त्तनमित्यत्रापि। तत्र तत्र व्यतिरेकोदाहरणानि च क्रियन्ति दर्श्यन्ते—किं वेदैः किमु शास्त्रैर्वा किम्वा तीर्थनिषेवनैः। विष्णुभक्तिविहीनानां किन्तपोभिः किमध्वरैः इति। किन्तस्य बहुभिः शास्त्रैः किन्तपोभिः किमध्वरैः। वाजपेयसहस्रैर्वा भक्तिर्यस्य जनार्द्दने॥ इति बृहन्नारदीयपाद्मवचनादौ। तथा—तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नमः ॥ न यत्र वैकुण्ठकथासुधापगा न साधवो भागवतास्तदाश्रयाः । न यत्र यज्ञेशमखा महोत्सवाः सुरेशलोकोऽपि न वै स सेव्यताम् ॥ यथा च यानस्य किरीटकोटिभिः पादौ स्पृशन्नच्युतमर्थसाधनम् । सिद्धार्थ एतेन विगृह्यते महानहो सुराणाञ्च तमोऽधिगाव्यताम् । सालोक्य-सार्ष्टिसारूप्येत्यादि । न दानं न तपो नेज्येत्यादि । नैष्कर्म्यमप्यच्युतभाववर्जितमित्यादि । नात्यन्तिकं विगणयन्त्यपि ते इत्यादि च । अथ सदा सर्वत्र यदुपपद्यते इत्यादियोजनिकार्थो युगपद्यथा—तस्मात् सर्वात्मना राजन् हरिः सर्वत्र सर्वदेत्यादि । अन्वयव्यतिरेकाभ्यां सदा यदुपपद्यत इत्यत्र यथा—स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्यो न जातुचित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्करा इति । अन्वयव्यतिरेकाभ्यां सदा सर्वत्र यदुपपद्यत इति साकल्येन यथा—न ह्यतोऽन्यः शिवः पन्था इत्युपक्रमस्य तदुपसंहारे, तस्मात् सर्वात्मना राजन् हरिः सर्वत्र सर्वदा । श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यो भगवान्नृनामिति । नृणां जीवानामिति नृगतिं विविच्य कवय इतिवत । एतदुक्तं भवति । यत् कर्म्म तत् सन्न्यासभोगशरीरप्राप्त्यवधि योगः सिद्ध्यवधिः सांख्यमात्मज्ञानावधि ज्ञानं मोक्षावधि । तथा तथा तत्तद्योग्यतादिकानि च सर्वाणि । एवं तेषु कर्म्मादिषु शास्त्रादिव्यभिचारिता ज्ञेया । हरिभक्तेस्तु अन्वयव्यतिरेकाभ्यां सदा सर्वं च तत्तन्महिमभिरुपपन्नत्वात् तथाभूतस्य रहस्यस्याङ्गत्वं युक्तम् । अतो रहस्याङ्गत्वेन च ज्ञानरूपार्थान्तराच्छन्नतयैवेदमुक्तमिति । तदेवं श्रीभागवतं संक्षेपेणोपदेश्यान्तं श्रीनारदं श्रीब्रह्मापि तथैव सङ्कल्पं कारितवान् । यथा हरौ भगवति नृणां भक्तिर्भविष्यति । सर्वात्मन्यखिलाधार इति सङ्कल्प्य वर्णय ॥ ११५ ॥

सङ्कल्प्य नियमेनाङ्गीकृत्य ॥ २ ॥ ७ ॥ श्रीब्रह्मा नारदम् ॥ ११५ ॥

श्रीनारदेनापि तन्महापुराणाविर्भावार्थं यथैवोपदिष्टम्—अथो

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

महाभाग भवानमोघदृक् शुचिश्रवाः सत्यरतो धृतव्रतः। उरुक्रमस्याखिलबन्धमुक्तये समाधिनानुस्मर तद्विचेष्टितम् ॥ ११६ ॥

अथो अतः। नैष्कर्म्यमप्यच्युतभाववर्जितमित्याद्युक्तेः कारणात्। अत्र विचेष्टितानुस्मरणेनाखण्डैव भक्तिर्लक्ष्यते। अन्ते च—त्वमप्यदभ्रश्रुतविश्रुतं विभोः समाप्यते येन विदां बुभुत्सितम्। प्रख्याहि दुःखैर्मुहुरर्दितात्मनां संक्लेशनिर्वाणमुशन्ति नान्यथा ॥ ११७ ॥

विदां विदुषाम् ॥ १ ॥ ५ ॥ श्रीनारदः श्रीव्यासम् ॥११६॥११७॥

श्रीव्यासोऽपि तन्महापुराणप्रचारणारम्भे भक्तिमेव परमश्रेयःप्रदत्वेन समाधावनुभूतवानिति प्रथमसन्दर्भे दर्शितं, भक्तियोगेन मनसीत्यादिप्रकरणे। तथैव, को लाभ इति प्रश्नानन्तरं श्रीभगवतैव सदृतम्—भगो म इत्यादौ लाभो मद्भक्तिरुत्तम इति ॥ ११८ ॥

स्पष्टम् ॥ ११ ॥ १९ ॥ श्रीभगवान् ॥ ११८ ॥

स्वगतं विचारयति स्म—किम्वा भागवता धर्मा न प्रायेण निरूपिताः। प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः ॥ ११९ ॥

स्पष्टम् ॥ १ ॥ ४ ॥ श्रीव्यासः ॥ ११९ ॥

अशेषोपदेष्टुरपि तदुपदेशेनैव भगवतः परम उत्कर्ष उच्यते। यथा—जितमजित तदा भगवन् यदाह भागवतं धर्ममनवद्यम् ॥ १२० ॥

जितमित्यत्र भवतेति ज्ञेयम्। आहेत्यत्र तु भवानिति ॥६॥१६॥ चित्रकेतुः श्रीसङ्कर्षणम् ॥ १२० ॥

तदेवं भक्तेरेवाभिधेयत्वं स्थितम्। तत्र यद्बहुत्र कर्मादिमिश्रत्वेन तद्धर्म उपदिश्यते, तत्तु तत्तन्मार्गनिष्ठान् भक्तिसम्बन्धं क्रतार्थयितुं तानेव कांश्चिद्भक्त्यास्वादनेन शुद्धायामेव भक्तौ प्रवर्तयितुं चेति ज्ञेयम्। पुनश्च सर्वत्र तस्या एवाभिधेयत्वं तदीयमहिमा पूर्वत्र व्याख्यातोऽपि क्रमेण व्याख्यायते। सर्वैरेव विषतः भक्तेरन्यत्तु न कर्त्तव्यमित्यभिप्रायेण। तत्र तस्याः परमधर्म

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सर्वकामप्रदत्वं च एतावानेव लोकेऽस्मिन्नित्यादौ अकामः सर्वकामो वा इत्यादौ सर्वासामपि सिद्धीनामित्यादौ च दर्शितमेव। स्कान्दे च सनत्कुमारमार्कण्डेयसंवादे—विशिष्टः सर्वधर्माणां धर्मो विष्णुर्चनं नृणाम्। सर्वयज्ञतपोहोमतीर्थस्नानैश्च यत् फलम् ॥ तत् फलं कोटि-गुणितं विष्णुं संपूज्य चाप्नुयात्। तस्मात् सर्वप्रयत्नेन नारायण-मिहार्चयेत् ॥ ब्रह्मनारदसंवादे च—अश्वमेधसहस्राणां सहस्रं यः करोति वै। न तत् फलमवाप्नोति मद्भक्तैर्यदवाप्यत इति ॥ अशुभघ्न-त्वमपि सध्रीचिनो ह्ययं लोके पन्था इत्यादौ दर्शितम्। टीका च—अतो न ज्ञानमार्ग इवासहायतानिमित्तं भयं नापि कर्ममार्ग-वन्मत्सरादियुक्तेभ्यो भयमिति भाव इत्येषा। तथाच स्कान्दे द्वारका-माहात्म्ये परमेश्वरवाक्यम्—मद्भक्तिं वहतां पुंसाम् इह लोके परेऽपि वा। नाशुभं विद्यते लोके कुलकोटिं नयेद्दिवमिति। श्रीविष्णुपुराणे—स्मृते सकलकल्याणभाजनं यत्र जायते। पुरुषन्तमजं नित्यं व्रजामि शरणं हरिमिति। सर्वान्तरायनिवारकत्वमाहुः—तथा न ते माधव तावकाः क्वचिद्भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः। त्वयाभिगुप्ता विच-रन्ति निर्भया विनायकानीकपमूर्द्धसु प्रभो ॥ १२१ ॥

पूर्वं येऽन्येरविन्दाक्ष इत्यादिना मुक्तानामपि भगवदनादरेण पर-मार्थभ्रंश उक्तः। भक्तानां स नास्ति इत्याह, तथेति। यथा पूर्वे आरूढ़परमपदत्वावस्थातोऽपि भ्रश्यन्ति तथा तावका मार्गात् साधना-वस्थातोऽपि न भ्रश्यन्तीत्यर्थः। श्रीवृत्रगजेन्द्रभरतादीनां सज्जन्मतो भ्रंशेऽपि भक्तिवासनानुगतिदर्शनात्। मुक्ता अपि प्रपद्यन्ते पुनः संसार-वासनाम्। यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिनः ॥ इति तेषां तु पुनः संसारवासनानुगतेः। यतस्त्वयि बद्धसौहृदाः सौहृदमत्र श्रद्धामार्गा-दिति साधकत्वप्रतीतेरेव। त्वद्बद्धसौहृदत्वादेव त्वयेत्यादि। तथोक्तम्—त्वां सेवतां सुरकृता इत्यादौ धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदि-त्यादौ च ॥ १० ॥ २ ॥ ब्रह्मादयो भगवन्तम् ॥ १२१ ॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथा—न वै जातु मृषैव स्यात् प्रजाध्यक्ष मदर्हणम्। भवद्वि- ष्वतितरां मयि संगृभितात्मनाम् ॥ १२२ ॥

मयि संगृभितः संगृहीतो बद्धः आत्मा येषाम्। तथा बाध्य- मानोऽपीत्यादिकमप्यत्रोदाहरणीयम्। अत्र प्रायो बाध्यमानत्वं कार- चित्तद्ध्यानादित आकृष्यमाणत्वमवगम्यते। तथाप्यनभिभूतत्वं, दु:खात्मकान् कामान् परित्यागेऽप्यनीश्वर इत्यादिन्यायेन। तत्र भगवन्तं प्रति निजदैन्यादिनिवेदनादिना भक्तेरेवानुवृत्तिरिति ज्ञेयम् ३ ॥ २१ ॥ श्रीशुकः कर्दमम् ॥ १२२ ॥

दुष्टजीवादिभयनिवारकत्वमाह—दिग्गजैर्दन्दशूकेन्द्रैरभिचाराव- पातनैः। मायाभिः सन्निरोधैश्च गरदानैरभोजनैः। हिमवाय्वग्निसलिलैः पर्वताक्रमणैरपि। न शशाक यदा हन्तुमपापमसुरः सुतम्। चिन्तां दीर्घतमां प्राप्तस्तत् कर्त्तुं नाभ्यपद्यत ॥ १२३ ॥

अत्र दन्ता गजानां कुलिशाग्रनिष्ठुरा इत्यादिकं वैष्णववचनजात- मनुसन्धेयम्। न यत्र श्रवणादीनि इत्यादिकञ्च। यथा बृहन्नार- दीये—यत्र पूजापरो विष्णोस्तत्र विघ्नो न बाधते। राजा च तस्करश्- चापि व्याधयश्च न सन्ति हि। प्रेताः पिशाचाः कुष्माण्डा ग्रहा बाल- ग्रहास्तथा ॥ डाकिन्यो राक्षसाश्चैव न बाधन्तेऽच्युतार्चकमिति। श्रीनारदः श्रीयुधिष्ठिरम् ॥ १२३ ॥

तथा—शारीरा मानसा दिव्या वैयासे ये च मानुषाः। भौतिकाः कथं क्लेशा बाधेरन् हरिसंश्रयम् ॥ १२४ ॥

एवमप्युक्तं गारुड़े—न च दुर्वाससः शापो वज्रञ्चापि शचीपतेः। हन्तुं समर्थं पुरुषं हृदिस्थे मधुसूदन इति ॥ ३ ॥ २२ ॥ श्रीमैत्रेयो विदुरम् ॥ १२४ ॥

अथ पापघ्नत्वे तावदप्रारब्धपापघ्नत्वमाह—यथाग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात्। तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥

टीका च—पाकाद्यर्थमपि प्रज्वालितोऽग्निर्यथा काष्ठानि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

करोति तथा वागादिनापि कथञ्चिन्मद्विषया भक्तिः समस्तपापानीति भगवानपि स्वभक्तिमहिमाश्चर्य्येण सम्बोधयति, अहो उद्धव, विस्मयं शृण्वित्येषा। पाद्मपातालखण्डस्थ वैशाखमाहात्म्ये च—यथाग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात्। पापानि भगवद्भक्तिस्तथा दहति तत्क्षणादिति। यद्यपि हरिरित्यवशेनापि पुमान्नार्हति यातनामित्यादौ लिङादिप्रत्ययविरहेऽपि पूषाप्रविष्टभागो यदाग्नेयाष्टाकपालो भवतीत्यादिवद्विधित्वमस्ति, तस्माद् भारत सर्वात्मा भगवान् हरिरीश्वरः। श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताभयमित्यादौ साक्षाद्विधिश्रवणमप्यस्ति, तस्मादिति हेतुनिर्देशश्चाकरणे दोषं क्रोडीकरोति, तथापि विधिसापेक्षेयं न भवतीति, तथाभूतस्वभावाग्निलक्षणवस्तुदृष्टान्तेन सूचितम्। अतएव यानास्थाय नरो राजन्नित्यादिकमपि दृश्यते। सुसमिद्धार्चिरित्यनेन साधनान्तरसापेक्षत्वमशक्यसाध्यत्वं विलम्बितत्वञ्च निराकृतम्। तदेवं व्यक्तं पाद्मातत्क्षणादिति ॥ ११ ॥ १४ ॥ श्रीभगवान् ॥१२५॥

तथा च—केचित् केवलया भक्त्या वासुदेवपरायणाः। अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥ १२६ ॥

टीका च—केचिदित्यनेनैवंभूता भक्तिप्रधाना विरला इति दर्शयति। केवलया तपआदिनिरपेक्षया। वासुदेवपरायणा इति नाधिकारिविशेषणमेतत्, किन्तु अन्येषामश्रद्धया तत्राप्रवृत्तेरर्थात्तेष्वेव पर्य्यवसानादनुवादमात्रमित्येषा। अत्र भास्करो हि केवलेन स्वरश्मिना स्वभावत एव नीहारं निःशेषं धुनोति न तदर्थं प्रयत्नतस्तथा वासुदेवपरायणा अपि भक्त्येति ज्ञेयम्। किञ्च—न तथा ह्यघवान्राजन् पूयेत तपआदिभिः। यथा कृष्णार्पितप्राणस्तत्पुरुषनिषेवया ॥ १२७ ॥

टीका च—एतच्च ज्ञानमार्गादपि श्रेष्ठमित्याह। न तथा पूयेत शुध्येत तत्पुरुषनिषेवया कृष्णे अर्पिताः प्राणा येनेत्येषा। अत्र प्रायश्चित्तं विमर्षणमिति ज्ञानस्यापि प्रायश्चित्तत्वं पूर्वमुक्तम्। तत एव

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

टीकोक्तमेतच्चेत्यादि। तदा कृतभरध्याननिवारिताघ इत्याद्युक्त्या भगवद्ध्याननिवारितवृत्रहत्यापापस्येन्द्रस्य तच्चेत्यादौ पुनरश्वमेधविधानं साधारणलोके पापप्रसिद्धेरेव निवारणार्थमिति ज्ञेयम्। ननु कथं तदानीमप्याविर्भूतभगवत्प्रेमत्वात् परमभागवतस्य वृत्रस्य हत्या भगवदाराधनेनापि गच्छतु। महदपराधोऽपि भोगैकनाश्यस्तत्प्रसादनाश्यो वेति मतम्। उच्यते—तथापि भगवत्प्रेरणया तत्र प्रवृत्तस्येन्द्रस्य न तादृशो दोष इति तदाराधनमेव तत्र प्रायश्चित्तं विहितम्। श्रीभगवतापि तदासुरभावनिवारणायैव तथोपदिष्टमित्यनवद्यम्। ६॥ १॥ श्रीशुकः॥ १२६॥ १२७॥

क्वचित् प्रारब्धपापपरिहारित्वमप्याह द्वाभ्याम्—यन्नामधेयश्रवणानुकीर्त्तनाद्यत्प्रह्वणाद्यत्स्मरणादपि क्वचित्। श्वादोऽपि सद्यः सवनाय कल्पते कुतः पुनस्ते भगवन्नु दर्शनात्। अहो वत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे वर्त्तते नाम तुभ्यम्। तेपुस्तपस्ते जुहुवुः सस्नुरार्य्या ब्रह्मानूचुर्नाम गृणन्ति ये ते॥ १२८॥

टीका च—यन्नामधेयस्य श्रवणमनुकीर्त्तनञ्च तस्मात् क्वचित् कदाचिदपि श्वानमत्ति इति श्वादः श्वपचः सोऽपि सवनाय कल्पते योग्यो भवति। तदुपपादयति अहो वत इत्याश्चर्य्ये यस्य जिह्वाग्रे तव नाम वर्त्तते स श्वपचोऽपि। अतो अस्मादेव हेतोर्गरीयान् यद्यस्मात् वर्त्तते इति वा। कुत इत्यत आह, त एव तपस्तेपुरित्यादि। त्वन्नामकीर्त्तने तपआद्यन्तर्भूतमतस्ते पुण्यतमा इत्यर्थं इत्यन्ता। उद्धवं प्रति श्रीभगवता चोक्तम्—भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सम्भवादिति। अत्र जातिदोषहरत्वेन प्रारब्धहारित्वं स्पष्टम्। एवं प्रारब्धपापहेतुव्याध्यादिहरत्वञ्च स्कान्दे—आधयो व्याधयो यस्य स्मरणान्नामकीर्त्तनात्। तदैव विलयं यान्ति तमनन्तं नमाम्यहमिति। उक्तञ्च नामकौमुद्यां प्रारब्धपापहरत्वं क्वचिदुपासकेच्छावशादिति॥३॥३३॥ श्रीदेवहूतिः॥१२८॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तद्वासनाहारित्वमाह—तैस्तान्यघानि पूयन्ते तपोदानव्रतादिभिः । नाधर्म्मजं तद्धृदयं तदपीशाङ्घ्रिसेवया ॥ १२९ ॥

अधर्म्माज्जातं तेषामघानां हृदयं संस्काराख्यं न शुध्यति तदपीशाङ्घ्रिसेवया शुध्यतीत्यर्थः । पाद्मे च—अप्रारब्धफलं पापं कूटं वीजं फलोन्मुखम् । क्रमेणैव विलीयन्ते विष्णुभक्तिरतात्मनाम् ॥ इति । अप्रारब्धफलं वक्ष्यमाणेभ्योऽन्यत् । वीजत्वोन्मुखं कूटं, वीजं प्रारब्धत्वोन्मुखं फलोन्मुखं प्रारब्धमित्यर्थः ॥ ६ ॥ २ ॥ श्रीविष्णुदूता यमदूतान् ॥ १२९ ॥

अविद्याहरत्वमाह—त्वं प्रत्यगात्मनि तदा भगवत्यनन्त आनन्दमात्र उपपन्नसमस्तशक्तौ । भक्तिं विधाय परमां शनकैरविद्याग्रन्थिं विभेत्स्यसि ममाहमिति प्ररूढ़म् ॥ १३० ॥

तथा च पाद्मे—कृतानुयात्रा विद्याभिर्हरिभक्तिरनुत्तमा । अविद्यां निर्दहत्याशु दावज्वालेव पन्नगीमिति ॥ ४ ॥ ११ ॥ श्रीमनुर्ध्रुवम् ॥ १३० ॥

सर्वप्रीणनहेतुत्वमुक्तं यथा तरोर्मूलनिषेचनेन इत्यादि । तथाह—सुरुचिस्तं समुत्थाप्य पादावनतमर्भकम् । परिष्वज्याह जीवेति वाष्पगद्गदया गिरा । यस्य प्रसन्नो भगवान् गुणैर्मैत्र्यादिभिर्हरिः । तस्मै नमन्ति भूतानि निम्नमाप इव स्वयम् ॥ १३१ ॥

सुरुचिर्निजविद्वेषिणो मातुः स्वपत्न्यपि । तं भगवदाराधनतः आगतं श्रीध्रुवम् । यथा पाद्मे—येनार्च्चितो हरिस्तेन तर्पितानि जगन्त्यपि रज्यन्ति जन्तवस्तत्र जङ्गमाः स्थावरा अपीति ॥ ४ ॥ ९ ॥ श्रीमैत्रेयः ॥ १३१ ॥

ज्ञानवैराग्यादिसर्वसद्गुणहेतुत्वमुक्तम् । यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः । हरावभक्तस्य कुतो महद्गुणाः इत्यादिना । स्वर्गापवर्गभगवद्धामादिसर्वानन्दहेतुत्वमप्युक्तम् । यत् कर्म्मभिर्यत्तपसा इत्यादिना । स्वतः परमसुखदानेन कर्म्मादिज्ञानात्त-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

साधनसाध्यवस्तूनां हेयत्वकारितामाह—न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम्। न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत्॥ १३२॥

रसाधिपत्यं पातालादिस्वामित्वम्। अपुनर्भवं ब्रह्मकैवल्यरूपं मोक्षम्। किं बहुना यत्किञ्चिदन्यदपि साध्यजातं तत् सर्वं नेच्छतीत्यर्थः किन्तु मत् मां विना तादृशभक्तिसाध्यं मामेव सर्वपुरुषार्थाधिकमिच्छतीत्यर्थः। मय्यर्पितात्मा कृतात्मनिवेदनः॥ ११॥ १४॥ श्रीभगवान्॥ १३२॥

अथ साक्षाद्भक्तेर्निर्गुणत्वं वक्तुं भगदर्पितकर्मारभ्य सर्वेषां तावत् सगुणत्वमाह एकेन—मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तत्। राजसं फलसङ्कल्पं हिंसाप्रायादि तामसम्॥ १३३॥

मयि अर्पणं यस्य मदर्पितमित्यर्थः। निष्फलं निष्कामम्। फलं सङ्कल्प्यते यस्मिन् तत्। आदिशब्दाद्दम्भमात्सर्य्यादिभिः कृतम्। अथानुष्ठानान्तराणां त्रिगुणान्तर्गतत्वं वदन् चतुर्थकक्षायां साक्षाद्भक्तेर्निर्गुणत्वमाह चतुर्षु। कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं च यत्। प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम्॥ १३४॥

प्राकृतं बालमूकादिज्ञानतुल्यम्। वैकल्पिकं देहादिविषयं यत्तद्ज्ञानं राजसम्। केवलस्य निर्विशेषस्य ब्रह्मणः शुद्धजीवाभेदेन ज्ञानं कैवल्यम्। त्वम्पदार्थमात्रज्ञानस्य कैवल्यत्वानुपपत्तिः, तत्पदार्थज्ञानसापेक्षत्वात्। सत्वयुक्ते हि चित्ते प्रथमतः शुद्धं सूक्ष्मं जीवचैतन्यं प्रकाशते। ततश्चिदेकाकारत्वाभेदेन तस्मिन् शुद्धं पूर्णं ब्रह्मचैतन्यमनुभूयते। ततः सत्त्वगुणस्यैव तत्र कारणताप्राचुर्य्यात् सात्त्विकत्वम्। तथाच गीतोपनिषदः—सत्त्वात् संजायते ज्ञानमित्यादि। भगवज्ज्ञानस्य तु, देवानां शुद्धसत्त्वानामृषीनाममलात्मनाम्। भक्तिर्मुकुन्दचरणे न प्रायेणोपजायते। मुक्तानामपि सिद्धानां नारायणपरायणः सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने॥ इत्युक्त्वा, सत्त्वादिसङ्गं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ऽप्यभावात्, रजस्तमःस्वभावस्य ब्रह्मन् वृत्रस्य पाप्मनः। नारायणे भगवति कथमासीद्दृढ़ा मतिरित्युक्त्या, तदभावेऽपि सद्भावात्, न तत्कारणत्वं, किन्तु तदुत्तरत्वेन तस्य पूर्वजन्मनि श्रीनारदादिसङ्गवर्णनया, नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदर्थः। महीयसां पादरजोऽभिषेकं निष्किञ्चनानां न वृणीत यावत्॥ इत्युक्त्या च, भगवत्कृपापरिमलपात्रभूतस्य श्रीमतो महतः सङ्ग एव कारणम्। तत्सङ्गस्य—तुलयाम लवेनापि न स्वर्गं नापुनर्भवम्। भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः। इत्युक्त्या, निर्गुणावस्थातोऽप्यधिकत्वात्, परमनिर्गुण एव। सप्तमस्य प्रथमे च, समः प्रियः सुहृद्ब्रह्मन्नित्यादौ, सगुणे देवादौ तस्य कृपा वास्तवी न भवति, किन्तु श्रीमत्प्रह्लादादिष्वेवेति प्रतिपादनान्महतां निर्गुणत्वाभिव्यक्त्या तत्सङ्गस्यापि निर्गुणत्वं व्यक्तम्। तथा भक्तेरपि गुणसङ्गनिर्धूननानन्तरञ्चानुवृत्तिः श्रूयते। यदुक्तमुद्धवं प्रति श्रीभगवता—तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसम्भवम्। गुणसङ्गं विनिर्धूय मां भजन्तु विचक्षणाः॥ इति परमेश्वरज्ञानस्य नैर्गुण्यहेतुत्वेन निर्गुणत्वोक्तिस्तु लक्षणामयकष्टकल्पना। तथा कैवल्यज्ञानस्यापि नैर्गुण्यहेतुत्वादवैशिष्ट्येनोदाहरणभेदाप्रवृत्तिश्च स्यात्। तस्मात् स्वत एव निर्गुणं भगवज्ज्ञानम्। अतएव सात्त्विकं सुखमात्मोत्थं विषयोत्थन्तु राजसम्। तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयमित्यत्र तत्सुखस्यापि निर्गुणत्वं वक्ष्यते। एवं श्रवणादिलक्षणक्रियारूपाया अपि भक्तेः, शुश्रूषोः श्रद्दधानस्य वासुदेवकथारुचिः। स्यान्महत्सेवया विप्रा इत्युक्त्या, तदेकनिदानत्वेन निर्गुणत्वमेव। ननु मदीयं महिमानञ्च परं ब्रह्मेति शब्दितम्। वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदीति श्रीमत्स्यदेवस्य वचनेन ब्रह्मज्ञानमपि श्रीभगवत्प्रसादोत्थं श्रूयते, तत् कथं तस्य सगुणत्वम्, उच्यते। ब्रह्मज्ञानं द्विविधानां जायते। तत्र भगवदुपासकानामानुषङ्गिकत्वेन ब्रह्मोपासकानां स्वतन्त्रत्वेन। भगवदुपासकैस्तु भगवच्छक्तिरूपया भक्त्या किञ्चिद्भेदेनैव गृह्यते।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तच्च, ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। इत्यादि श्रीगीतो-क्त्यनुसारेण, आत्मारामाश्च मुनय इत्याद्यनुसारेण च भगवतः परा-भक्तिपरिकरो भवतीति। ब्रह्मोपासकैस्तु पूर्ववदभेदेनैव गृह्यते। तत्-फलस्य, नात्यन्तिकं विगणयन्त्यपि ते प्रसादमित्युक्तदिशा, परैका-न्तिकत्वेन मतस्यापि, परमविद्वद्भिरनादृतत्वात्। तथा भक्तिविरुद्धत्वे-स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन इत्युक्त्या, नरकवदपवर्गस्यापि हे-त्वात्, प्रसादाभास एवासौ। स्वमत्यनुसारेण प्रसादतया गृह्यमाण-त्मतिकल्पितत्वात् सगुण एव। ततः कैवल्यज्ञानमपि तथा। विशेष-स्तस्य गुणसम्बन्धेन जन्माङ्गीकृतमिति। ननु अन्तर्बहिश्च कार्य-पुरुषस्य गुणमयमेव। तदुद्भवयोः ज्ञानक्रिययोः कथं निर्गुणत्वम् उच्यते। ज्ञानशक्तिः क्रियाशक्तिर्वा न तावज्जड़स्य त्रैगुण्यस्य धर्मः घटस्येव। न च चिद्रूपस्यापि जीवस्य ईश्वराधीनशक्तित्वे नामुख्यत्वं देवताविष्टपुरुषस्येव। ततः परमात्मचैतन्यस्यैवेत्यायाति। तथा देहेन्द्रियप्राणमनोधियोऽमी यदंशविद्धा प्रचरन्ति कर्मस्विति। तथा श्रुतिः—प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो म-इनि न ऋते तत् क्रियते किञ्चनारे इत्यादिका। तदेवं सति त्रैगुण्य-कार्य्यप्राधान्येन भवन्तौ ते गुणमयत्वेनोच्येते। परमेश्वरप्राधान्ये स्वतो गुणातीते एव। तदुक्तं देवामृतपानाध्याये श्रीशुकेन—यद्युज्य-ऽसुवसुकर्म्ममनोवचोभिर्देहात्मजादिषु नृभिस्तदसत् पृथक्त्वात्। तैरेव सद्भवति यत् क्रियतेऽपृथक्त्वात् सर्वस्य तद्भवति मूलनिषेचनं यदि-पृथक्त्वात् परमात्मेतराश्रयत्वात्। अपृथक्त्वात्तदेकाश्रयत्वादित्य-अतो युक्तमेव ज्ञानक्रियात्मिकाया हरिभक्तेर्निर्गुणत्वम्। विशेषतश्च गुणसम्बन्धेन जन्माभावश्चाङ्गीकृतः ; न तु ब्रह्मज्ञानस्येव गुणसम्बन्धे जन्मभाव इति। अतोऽसौ भक्तिस्तस्यापि प्रीणनत्वादिगुणैर्दर्श-यते। यत्तु श्रीकपिलदेवेन भक्तेरपि निर्गुणसगुणावस्थाः कथिताः पुनः पुरुषान्तःकरणगुणा एव तस्यामुपचर्य्यन्त इति स्थितम्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सर्वकामप्रदत्वं च एतावानेव लोकेऽस्मिन्नित्यादौ अकामः सर्वकामो वा इत्यादौ सर्वासामपि सिद्धीनामित्यादौ च दर्शितमेव। स्कान्दे च सनत्कुमारमार्कण्डेयसंवादे—विशिष्टः सर्वधर्माणां धर्मो विष्णार्चनं नृणाम्। सर्वयज्ञतपोहोमतीर्थस्नानैश्च यत् फलम्॥ तत् फलं कोटिगुणितं विष्णुं संपूज्य चाप्नुयात्। तस्मात् सर्वप्रयत्नेन नारायणमिहार्चयेत्॥ ब्रह्मनारदसंवादे च—अश्वमेधसहस्राणां सहस्रं यः करोति वै। न तत् फलमवाप्नोति मद्भक्तैर्यदवाप्यत इति॥ अशुभघ्नत्वमपि सध्रीचिनो ह्ययं लोके पन्था इत्यादौ दर्शितम्। टीका च—अतो न ज्ञानमार्ग इवासहायतानिमित्तं भयं नापि कर्ममार्गवन्मत्सरादियुक्तेभ्यो भयमिति भाव इत्येषा। तथाच स्कान्दे द्वारकामाहात्म्ये परमेश्वरवाक्यम्—मद्भक्तिं वहतां पुंसाम् इह लोके परेऽपि वा। नाशुभं विद्यते लोके कुलकोटिं नयेद्दिवमिति। श्रीविष्णुपुराणे—स्मृते सकलकल्याणभाजनं यत्र जायते। पुरुषन्तमजं नित्यं व्रजामि शरणं हरिमिति। सर्वान्तरायनिवारकत्वमाह:—तथा न ते माधव तावकाः क्वचिद्भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः। त्वयाभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्द्धसु प्रभो॥ १२१॥

पूर्वं येऽन्येरविन्दाक्ष इत्यादिना मुक्तानामपि भगवदनादरेण परमार्थभ्रंश उक्तः। भक्तानां स नास्ति इत्याह, तथेति। यथा पूर्वे आरूढ़परमपदत्वावस्थातोऽपि भ्रश्यन्ति तथा तावका मार्गात् साधनावस्थातोऽपि न भ्रश्यन्तीत्यर्थः। श्रीवृत्रगजेन्द्रभरतादीनां सज्जन्मतो भ्रंशेऽपि भक्तिवासनानुगतिदर्शनात्। मुक्ता अपि प्रपद्यन्ते पुनः संसारवासनाम्। यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिनः॥ इति तेषां तु पुनः संसारवासनानुगतेः। यतस्त्वयि बद्धसौहृदाः सौहृदमत्र श्रद्धामार्गादिति साधकत्वप्रतीतेरेव। त्वद्बद्धसौहृदत्वादेव त्वयेत्यादि। तथोक्तम् त्वां सेवतां सुरकृता इत्यादौ धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदित्यादौ च॥ १०॥ २॥ ब्रह्मादयो भगवन्तम्॥ १२१॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथा—न वै जातु मृषैव स्यात् प्रजाध्यक्ष मदर्हणम्। भवद्वि-ध्वतितरां मयि संग्टभितात्मनाम् ॥ १२२ ॥

मयि संग्टभित: संग्टहीतो बद्ध: आत्मा येषाम्। तथा वा-मानोऽपीत्यादिकमप्यत्रोदाहरणीयम्। अत्र प्रायो बाध्यमानत्वं का-चित्तद्ग्रानादित आलभ्यमानत्वमवगम्यते। तथाप्यनभिभूतत्वं, दु:खात्मकान् कामान् परित्यागेऽप्यनोश्वर इत्यादिन्यायेन। तत्र भगवन्तं प्रति निजदैन्यादिनिवेदनादिना भक्तेरेवानुवृत्तिरिति ३ ॥ २१ ॥ श्रीशुक: कर्दमम् ॥ १२२ ॥

दुष्टजीवादिभयनिवारकत्वमाह—दिग्गजैर्दन्दशूकेन्द्रैरभिचार-पातनै:। मायाभि: सन्निरोधैश्च गरदानैरभोजनै:। हिमवाय्वग्निसलि-पर्वताक्रमणैरपि। न शशाक यदा हन्तुमपापमसुर: सुतम्। चि-दीर्घतमां प्राप्तस्तत् कर्त्तुं नाभ्यपद्यत ॥ १२३ ॥

अत्र दन्ता गजानां कुलिशाग्रनिष्ठुरा इत्यादिकं वैष्णववचन-मनुसन्धेयम्। न यत्र श्रवणादीनि इत्यादिकञ्च। यथा बृह-दीये—यत्र पूजापरो विष्णोस्तत्र विघ्नो न बाधते। राजा च त-श्चापि व्याधयश्च न सन्ति हि। प्रेता: पिशाचा: कुष्माण्डा ग्रहा-ग्रहास्तथा॥ डाकिन्यो राक्षसाश्चैव न बाधन्तेऽच्युतार्च्चकमिति॥ श्रीनारद: श्रीयुधिष्ठिरम् ॥ १२३ ॥

तथा—शारीरा मानसा दिव्या वैयासे ये च मानुषा:। भौति-कथं क्लेशा बाधेरन् हरिसंश्रयम् ॥ १२४ ॥

एवमप्युक्तं गारुड़े—न च दुर्वाससः शापो वज्रञ्चापि शचीप-हन्तुं समर्थं पुरुषं हृदिस्थे मधुसूदन इति ॥ ३ ॥ २२ ॥ श्रीमै-विदुरम् ॥ १२४ ॥

अथ पापघ्नत्वे तावदप्रारब्धपापघ्नत्वमाह—यथाग्नि: सुसमि-धांसि भस्मसात्। तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नश:॥

टीका च—पाकाद्यर्थमपि प्रज्वालितोऽग्निर्यथा काष्ठानि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

करोति तथा वागादिनापि कथञ्चिन्मद्विषया भक्तिः समस्तपापानीति भगवानपि स्वभक्तिमहिमाश्चर्य्येण सम्बोधयति, अहो उद्धव, विस्मयं शृणित्वेषा। पाद्मपातालखण्डस्थ वैशाखमाहात्म्ये च—यथाग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात्। पापानि भगवद्भक्तिस्तथा दहति तत्क्षणादिति। यद्यपि हरिरित्यवशेनापि पुमान्नार्हति यातना-मित्यादौ लिङादिप्रत्ययविरहेऽपि पूषाप्रविष्टभागो यदाग्नेयाष्टा-कपालो भवतीत्यादिवद्विधित्वमस्ति, तस्माद् भारत सर्वात्मा भगवान् हरिरीश्वरः। श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताभयमित्यादौ साक्षाद्विधिश्रवणमप्यस्ति, तस्मादिति हेतुनिर्देशस्याकरणे दोषं क्रोड़ीकरोति, तथापि विधिसापेक्षेयं न भवतीति, तथाभूतस्वभा-वाग्निलक्षणवस्तुदृष्टान्तेन सूचितम्। अतएव यानास्थाय नरो राजन्नित्यादिकमपि दृश्यते। सुसमिद्धार्चिरित्यनेन साधनान्तरसापे-क्षत्वमशक्यसाध्यत्वं विलम्बितत्वञ्च निराकृतम्। तदेवं व्यक्तं पाद्मा-त्तत्क्षणादिति ॥ ११ ॥ १४ ॥ श्रीभगवान् ॥१२५॥

तथा च—केचित् केवलया भक्त्या वासुदेवपरायणाः। अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥ १२६ ॥

टीका च—केचिदित्यनेनैवंभूता भक्तिप्रधाना विरला इति दर्श-यति। केवलया तपआदिनिरपेक्षया। वासुदेवपरायणा इति नाधि-कारिविशेषणमेतत्, किन्तु अन्येषामश्रद्धया तत्राप्रवृत्तेरर्थात्तेष्वेव पर्य्यवसानादनुवादमात्रमित्येषा। अत्र भास्करो हि केवलेन स्वरश्मिना स्वभावत एव नीहारं निःशेषं धुनोति न तदर्थं प्रयत्नतस्तथा वासुदेव-परायणा अपि भक्त्येति ज्ञेयम्। किञ्च—न तथा ह्यघवान्राजन् पूयेत तपआदिभिः। यथा कृष्णार्पितप्राणस्तत्पुरुषनिषेवया ॥ १२७ ॥

टीका च—एतच्च ज्ञानमार्गादपि श्रेष्ठमित्याह। न तथा [illegible]त शुध्येत तत्पुरुषनिषेवया कृष्णे अर्पिताः प्राणा येनेत्येषा। अत्र प्राय-श्चित्तं विमर्षणमिति ज्ञानस्यापि प्रायश्चित्तत्वं पूर्वमुक्तम्। तत एव

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

टीकोक्तमेतच्चेत्यादि। तदा ऋतम्भरध्याननिवारिताघ इत्यादावुक्त भगवद्ध्याननिवारितवृत्रहत्यापापस्येन्द्रस्य तच्चेत्यादौ पुनरश्वमेधविध साधारणलोके पापप्रसिद्धेरेव निवारणार्थमिति ज्ञेयम्। क कथं तदानीमप्याविर्भूतभगवत्प्रेमत्वात् परमभागवतस्य वृत्रस्य हत भगवदाराधनेनापि गच्छतु। महदपराधोऽपि भोगैकनाश्यस्तत्प्र दनाश्यो वेति मतम्। उच्यते—तथापि भगवत्प्रेरणया तत्र प्रवृ स्येन्द्रस्य न तादृशो दोष इति तदाराधनमेव तत्र प्रायश्चित्तं विहित श्रीभगवतापि तदासुरभावनिवारणायैव तथोपदिष्टमित्यनवद्य ६ ॥ १ ॥ श्रीशुकः ॥ १२६ ॥ १२७ ॥

क्वचित् प्रारब्धपापपरिहारित्वमप्याह द्वाभ्याम्—यन्नामधेयश्र णानुकीर्त्तनाद्यत्प्रह्वणाद्यत्स्मरणादपि क्वचित्। श्वादोऽपि स सवनाय कल्पते कुतः पुनस्ते भगवन्नु दर्शनात्। अहो बत श्वपचोऽ गरीयान् यज्जिह्वाग्रे वर्त्तते नाम तुभ्यम्। तेपुस्तपस्ते जुहुवुः स रार्य्या ब्रह्मानूचुर्नाम गृणन्ति ये ते॥ १२८ ॥

टीका च—यन्नामधेयस्य श्रवणमनुकीर्त्तनञ्च तस्मात् क कदाचिदपि श्वानमत्ति इति श्वादः श्वपचः सोऽपि सवनाय क योग्यो भवति। तदुपपादयति अहो बत इत्याश्चर्य्ये यस्य जिह्वाग्रे नाम वर्त्तते स श्वपचोऽपि। अतो अस्मादेव हेतोर्गरीयान् यद्य वर्त्तते इति वा। कुत इत्यत आह, त एव तपस्तेपुरित्यादि त्वन्नामकीर्त्तने तपआद्यन्तर्भूतमतस्ते पुण्यतमा इत्यर्थ इत्य उद्धवं प्रति श्रीभगवता चोक्तम्—भक्तिः पुनाति मन्निष्ठा श्वपा नपि सम्भवादिति। अत्र जातिदोषहरत्वेन प्रारब्धहारित्वं स एवं प्रारब्धपापहेतुव्याध्यादिहरत्वञ्च स्कान्दे—आधयो व्याधयो जन्तूनां नामकीर्त्तनात्। तदैव विलयं यान्ति तमनन्तं स्यहे। ति। उक्तञ्च नामकौमुद्यां प्रारब्धपापहरत्वं क्वचिदुपासक वशादिति ॥३॥३३ ॥ श्रीदेवहूतिः ॥१२८॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तद्वासनाहारित्वमाह—तैस्तान्यघानि पूयन्ते तपोदानव्रतादिभिः । नाधर्म्मजं तद्धृदयं तदपीशाङ्घ्रिसेवया ॥ १२९ ॥

अधर्म्माज्जातं तेषामघानां हृदयं संस्काराख्यं न शुध्यति तदपीशाङ्घ्रिसेवया शुध्यतीत्यर्थः । पाद्मे च—अप्रारब्धफलं पापं कूटं वीजं फलोन्मुखम् । क्रमेणैव विलीयन्ते विष्णुभक्तिरतात्मनाम् ॥ इति । अप्रारब्धफलं वक्ष्यमाणेभ्योऽन्यत् । वीजत्वोन्मुखं कूटं, वीजं प्रारब्धत्वोन्मुखं फलोन्मुखं प्रारब्धमित्यर्थः ॥ ६ ॥ २ ॥ श्रीविष्णुदूता यमदूतान् ॥ १२९ ॥

अविद्याहरत्वमाह—त्वं प्रत्यगात्मनि तदा भगवत्यनन्त आनन्दमात्र उपपन्नसमस्तशक्तौ । भक्तिं विधाय परमां शनकैरविद्याग्रन्थिं विभेत्स्यसि ममाहमिति प्ररूढ़म् ॥ १३० ॥

तथा च पाद्मे—कृतानुयात्रा विद्याभिर्हरिभक्तिरनुत्तमा । अविद्यां निर्दहत्याशु दावज्वालेव पन्नगीमिति ॥ ४ ॥ ११ ॥ श्रीमनुर्ध्रुवम् ॥ १३० ॥

सर्वप्रीणनहेतुत्वमुक्तं यथा तरोर्मूलनिषेचनेन इत्यादि । तथाह—सुरुचिस्तं समुत्थाप्य पादावनतमर्भकम् । परिष्वज्याह जीवेति वाष्पगद्‌गदया गिरा । यस्य प्रसन्नो भगवान् गुणैर्मैत्रादिभिर्हरिः । तस्मै नमन्ति भूतानि निम्नमाप इव स्वयम् ॥ १३१ ॥

सुरुचिर्निजविद्वेषिणो मातुः स्वपत्न्यपि । तं भगवदाराधनतः आगतं श्रीध्रुवम् । यथा पाद्मे—येनार्च्चितो हरिस्तेन तर्पितानि जगन्त्यपि रज्यन्ति जन्तवस्तत्र जङ्गमाः स्थावरा अपीति ॥ ४ ॥ ९ ॥ श्रीमैत्रेयः ॥ १३१ ॥

ज्ञानवैराग्यादिसर्वसद्‌गुणहेतुत्वमुक्तम् । यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः । हरावभक्तस्य कुतो महद्‌गुणा इत्यादिना । स्वर्गापवर्गभगवद्धामादिसर्वानन्दहेतुत्वमप्युक्तम् । यत् कर्म्मभिर्यत्तपसा इत्यादिना । स्वतः परमसुखदानेन कर्म्मादिज्ञानान्त-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

साधनसाध्यवस्तूनां हेयत्वकारितामाह—न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम्। न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मे-च्छति मद्विनान्यत् ॥ १३२ ॥

रसाधिपत्यं पातालादिस्वामित्वम्। अपुनर्भवं ब्रह्मकैवल्यरूपं मोक्षम्। किं बहुना यत्किञ्चिदन्यदपि साध्यजातं तत् सर्वं नेच्छति, किन्तु मत् मां विना तादृशभक्तिसाध्यं मामेव सर्वपुरुषार्थाधिक-मिच्छतीत्यर्थः। मय्यर्पितात्मा कृतात्मनिवेदनः ॥ ११ ॥ १४ ॥ श्रीभग-वान् ॥ १३२ ॥

अथ साक्षाद्भक्तेर्निर्गुणत्वं वक्तुं भगवदर्पितकर्मारभ्य सर्वेषां तावत् सगुणत्वमाह एकेन—मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तत्। राजसं फलसङ्कल्पं हिंसाप्रायादि तामसम् ॥ १३३ ॥

मयि अर्पणं यस्य मदर्पितमित्यर्थः। निष्फलं निष्कामम्। फलं सङ्कल्प्यते यस्मिन् तत्। आदिशब्दाद्दम्भमात्सर्य्यादिभिः कृतम्। अथा-नुष्ठानान्तराणां त्रिगुणान्तर्गतत्वं वदन् चतुर्थकक्षायां साक्षाद्भक्ते-र्निर्गुणत्वमाह चतुर्षु। कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकञ्च यत्। प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥ १३४ ॥

प्राकृतं बालमूकादिज्ञानतुल्यम्। वैकल्पिकं देहादिविषयं यत्तद्र-राजसम्। केवलस्य निर्विशेषस्य ब्रह्मणः शुद्धजीवाभेदेन ज्ञानं कैव-ल्यम्। त्वम्पदार्थमात्रज्ञानस्य कैवल्यत्वानुपपत्तिः, तत्पदार्थज्ञान-सापेक्षत्वात्। सत्वयुक्ते हि चित्ते प्रथमतः शुद्धं सूक्ष्मं जीवचैतन्यं प्रकाशते। ततस्तदेकाकारत्वाभेदेन तस्मिन् शुद्धं पूर्णं ब्रह्मचैतन्यमनु-भूयते। ततः सत्त्वगुणस्यैव तत्र कारणताप्राचुर्य्यात् सात्त्विकत्वम्। तथाच गीतोपनिषदः—सत्त्वात् संजायते ज्ञानमित्यादि। भगव-[illegible] जन्म तु, देवानां शुद्धसत्त्वानामृषीनाममलात्मनाम्। भक्तिर्मुकुन्द-चरणे, प्रायेणोपजायते। मुक्तानामपि सिद्धानां नारायणपरायणः सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥ इत्युक्त्वा, सत्त्वादिस[illegible]

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ऽप्यभावात्, रजस्तमःस्वभावस्य ब्रह्मन् वृत्रस्य पाप्मनः । नारायणे भगवति कथमासीद्दृढ़ा मतिरित्युक्त्या, तदभावेऽपि सद्भावात्, न तत्कारणत्वं, किन्तु तदुत्तरत्वेन तस्य पूर्वजन्मनि श्रीनारदादिसङ्गवर्णनया, नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदर्थः । महीयसां पादरजोऽभिषेकं निष्किञ्चनानां न वृणीत यावत् ॥ इत्युक्त्या च, भगवत्कृपापरिमलपात्रभूतस्य श्रीमतो महतः सङ्ग एव कारणम् । तत्सङ्गस्य— तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् । भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः । इत्युक्त्या, निर्गुणावस्थातोऽप्यधिकत्वात्, परमनिर्गुण एव । सप्तमस्य प्रथमे च, समः प्रियः सुहृद्ब्रह्मन्नित्यादौ, सगुणे देवादौ तस्य कृपा वास्तवी न भवति, किन्तु श्रीमत्प्रह्लादादिष्वेवेति प्रतिपादनान्महतां निर्गुणत्वाभिव्यक्त्या तत्सङ्गस्यापि निर्गुणत्वं व्यक्तम् । तथा भक्तेरपि गुणसङ्गनिर्धूननानन्तरञ्चानुवृत्तिः श्रूयते । यदुक्तमुद्धवं प्रति श्रीभगवता—तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसम्भवम् । गुणसङ्गं विनिर्धूय मां भजन्तु विचक्षणाः ॥ इति परमेश्वरज्ञानस्य नैर्गुण्यहेतुत्वेन निर्गुणत्वोक्तिस्तु लक्षणामयकष्टकल्पना । तथा कैवल्यज्ञानस्यापि नैर्गुण्यहेतुत्वादवैशिष्ट्येनोदाहरणभेदाप्रवृत्तिश्च स्यात् । तस्मात् स्वत एव निर्गुणं भगवज्ज्ञानम् । अतएव सात्त्विकं सुखमात्मोत्थं विषयोत्थन्तु राजसम् । तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयमित्यत्र तत्सुखस्यापि निर्गुणत्वं वक्ष्यते । एवं श्रवणादिलक्षणक्रियारूपाया अपि भक्तेः, शुश्रूषोः श्रद्दधानस्य वासुदेवकथारुचिः । स्यान्महत्सेवया विप्रा इत्युक्त्या, तदेकनिदानत्वेन निर्गुणत्वमेव । ननु मदीयं महिमानञ्च परं ब्रह्मेति शब्दितम् । वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदीति श्रीमत्स्यदेवस्य वचनेन ब्रह्मज्ञानमपि श्रीभगवत्प्रसादोत्थं श्रूयते, तत् कथं तस्य सगुणत्वम्, उच्यते । ब्रह्मज्ञानं द्विविधानां ज[illegible] तत्र भगवदुपासकानामानुषङ्गिकत्वेन ब्रह्मोपासकानां स्वतन्त्रत्वेन । भगवदुपासकैस्तु भगवच्छक्तिरूपया भक्त्या किञ्चिद्भेदेनैव गृह्यते ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तच्च, ब्रह्मभूत: प्रसन्नात्मा न शोचति न काङ्क्षति। इत्यादि श्रीगीतो-क्तानुसारेण, आत्मारामाश्च मुनय इत्याद्यनुसारेण च भगवत: पराख्य-भक्तिपरिकरो भवतीति। ब्रह्मोपासकैस्तु पूर्ववदभेदेनैव गृह्यते। तत्-फलस्य, नात्यन्तिकं विगणयनन्त्यपि ते प्रसादमित्युक्तदिशा, परैरात्य-न्तिकत्वेन मतस्यापि, परमविहङ्गिरनादृतत्वात्। तथा भक्तिविरुद्धत्वेन स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन इत्युक्त्या, नरकवदपवर्गस्यापि हेय-त्वात्, प्रसादाभास एवासौ। स्वमत्यनुसारेण प्रसादतया गृह्यमाणत्वे-नातिकल्पितत्वात् सगुण एव। तत: कैवल्यज्ञानमपि तथा। विशेषत-स्तस्य गुणसम्बन्धेन जन्माङ्गीकृतमिति। ननु अन्तर्वहिश्च करणं पुरुषस्य गुणमयमेव। तदुद्भवयो: ज्ञानक्रिययो: कथं निर्गुणत्वम्। उच्यते। ज्ञानशक्ति: क्रियाशक्तिर्वा न तावज्जड़स्य त्रैगुण्यस्य धर्मो, घटस्येव। न च चिद्रूपस्यापि जीवस्य ईश्वराधीनशक्तित्वे नामुख्यत्वात्, देवताविष्टपुरुषस्येव। तत: परमात्मचैतन्यस्यैवेत्यायाति। तथोक्तं, देहेन्द्रियप्राणमनोधियोऽमी यदंशविद्धा प्रचरन्ति कर्मस्विति। तथा श्रुति:—प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो म इति न ऋते तत् क्रियते किञ्चनारे इत्यादिका। तदेवं सति त्रैगुण्य कार्य्यप्राधान्येन भवन्त्यौ ते गुणमयत्वे नोच्यते। परमेश्वरप्राधान्येन स्वतो गुणातीते एव। तदुक्तं देवामृतपानाध्याये श्रीशुकेन—यद्युज्यते ऽसुवसुकर्ममनोवचोभिर्देहात्मजादिषु नृभिस्तदसत् पृथक्त्वात्। तैरेव सद्भवति यत् क्रियतेऽपृथक्त्वात् सर्वस्य तद्भवति मूलनिषेचनं यदिति पृथक्त्वात् परमात्मेतराश्रयत्वात्। अपृथक्त्वात्तदेकाश्रयत्वादित्यर्थ:। अतो युक्तमेव ज्ञानक्रियात्मिकाया हरिभक्तेर्निर्गुणत्वम्। विशेषतस्तस्य गुणसम्बन्धेन जन्माभावश्चाङ्गीकृत: ; न तु ब्रह्मज्ञानस्येव गुणसम्बन्धे जन्मेव इति। अतोऽसौ भक्तिस्तस्यापि प्रीणनत्वादिगुणैरदा- [illegible] ष्यते। [illegible] तु श्रीकपिलदेवेन भक्तेरपि निर्गुणसगुणावस्था: कथिता: पुन: पुरुषान्त:करणगुणा एव तस्यामुपचर्य्यन्त इति स्थितम्। [illegible]

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मभिप्रेत्य ज्ञानरूपायाः भक्तेर्निर्गुणत्वमुक्ता क्रियारूपायाः व्याचष्टे । तत्राप्यस्तु तावत् श्रवणकीर्त्तनरूपायाः, भगवत्सम्बन्धेन वासमात्र-रूपाया आह—वनन्तु सात्त्विको वासो ग्राम्यो राजस उच्यते । तामसं द्यूतसदनं मन्निकेतन्तु निर्गुणम् ॥ १२५ ॥

वनं वास इति तत्सम्बन्धिनी वसनक्रियेत्यर्थः । वानप्रस्थानामिति ज्ञेयम् । एवं ग्राम्य इति गृहस्थानाम् । तामसमिति दुराचाराणाम् । द्यूत-सदनमित्युपलक्षणम् । मन्निकेतमिति भगवत्सेवापराणाम् । वनादीनां वासेन सहायुर्घृतमितिवदैकाधिकरणत्वम् । वनस्य वृक्षषण्डरूपस्य रजस्तमःप्राधान्यात् । अतएव विविक्तत्वलक्षणतदीयसात्त्विकगुणस्यापि तद्युगलमिश्रत्वेन गौणत्वम् । वासक्रियायास्तु सत्त्वोत्पन्नत्वात्तद्वर्द्धन-त्वाच्च सात्त्विकत्वे मुख्यत्वमिति तस्या एवाभिधेयत्वमुचितम् । अतएव ग्राम्य इति तद्धितान्त एव पठितः । एवं द्यूतसदनमित्यत्र च वास-क्रियैव विवक्षिता । मन्निकेतमित्यत्रापि । किन्तु भगवत्सम्बन्धमाहा-त्म्येन निकेतस्यापि निर्गुणत्वं भवेत् स्पर्शमणिन्यायेन । तादृशत्वन्तु तादृशभक्तिचक्षुर्भिरेवोपलभ्यं, दिविष्ठास्तत्र पश्यन्ति सर्वानेव चतु-र्भुजानितिवत् । एवमेव टीका च—भगवन्निकेतन्तु साक्षात्तदावि-र्भावान्निर्गुणं स्थानमित्येषा । एवं वासमात्रस्य तादृशत्वमुक्ता सर्वासा-मेव तत्क्रियाणामाह—सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः । तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥ १२६ ॥

अत्र च क्रियायामेव तात्पर्य्यं न तदाश्रये द्रव्ये । सात्त्विककारकस्य शरीरादिकं हि गुणत्रयपरिणतमेव । तदेवं क्रियामात्रस्य तादृशत्व-मुक्ता तत्प्रवृत्तिहेतुभूतायाः श्रद्धाया अप्याह—सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी । तामस्यधर्मे या श्रद्धा मत्सेवायान्तु निर्गुणा ॥ १२७ ॥

अधर्मः अपरधर्मः । अन्यत् पूर्ववत् ॥ ११ ॥ २५ ॥ श्रीभगवान् ॥ १२६ ॥ १२७ ॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अत आह—धर्मं भागवतं शुद्धं त्रैविद्यञ्च गुणाश्रयमिति ॥१३८॥
शुद्धं निर्गुणं त्रैविद्यं वेदत्रयप्रतिपाद्यं गुणाश्रयमिति टीका च।
वेदशब्देनात्र कर्म्मकाण्डमेवोच्यते एवं त्रयीधर्म्ममित्यादेः ॥ ६ ॥ २ ॥
श्रीशुकः ॥ १३८ ॥

अतएव भक्तेः श्रीभगवत्स्वरूपशक्तिबोधकं स्वयंप्रकाशत्वमाह-
यज्ञाय धर्मपतये विधिनैपुणाय योगाय सांख्यशिरसे प्रकृतीश्वराय।
नारायणाय हरये नम इत्युदारं हास्यन्मृगत्वमपि यः समुदाजहार।
१३९ ॥

यः आर्षभेयो भरतः । मरणसमये तत्रापि मृगशरीरे तद्वचनजन्मा-
त्यन्तासम्भवात् स्वप्रकाशत्वमेव तस्याः कीर्त्तनलक्षणायाः भक्तेः
सिध्यति । एवं गजेन्द्रेऽपि ज्ञेयम् ॥ ५ ॥ १४ ॥ श्रीशुकः ॥ १३९ ॥

परमसुखरूपत्वञ्च दृश्यते । तत्र साधनदशायाम् अतो वै कवयं
नित्यमित्यादौ । कर्म्मस्वस्मिन्ननाश्वासे इत्यादौ च तद्रूपत्वाभिव्यक्तिः
दर्शितैव । सिद्धदशायान्तु सुतरां तत् प्रकटीभवति । यथा—मत्
सेवया प्रतीतन्ते सालोक्यादिचतुष्टयम् । नेच्छन्ति सेवया पूर्णाः कुतो
ऽन्यत् कालविप्लुतम् ॥ १४० ॥

अत्रान्यस्य कालविप्लुतत्वमिति सेवायास्तदभावप्राप्तेः निर्गुणत्व-
सिद्धम् । अकालविप्लुतसालोक्यादिभ्योऽतिशये तु किमुतेति ॥९॥
श्रीविष्णुर्दुर्वाससम् ॥ १४० ॥

श्रीभगवद्विषयकरतिप्रदत्वमुक्तम्, एवं निर्जितषड्वर्गैः क्रियते
भक्तिरीश्वरे इत्यादिना । यत्तु, अस्त्वेवमङ्ग भजतां भगवान् मुकुन्दो
मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्, इत्युक्त्यापि तद्रति-
प्राप्यते इति शङ्क्यते, तत् खल्वविवेकादेव, कर्हिचिदिति
योगाख्यतद्रतिपुरुषार्थतायां शैथिल्ये सत्येवेत्यर्थलाभात्,
चिदपीत्यनुक्तत्वात्, असाकल्ये तु चिच्चनौ इत्यमरकोषाच्च।
विषयकभगवत्प्रीत्यैकहेतुत्वमप्युदाहृतम्, नालं द्विजत्वं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मित्यादि। तथाचाह—मन्ये धनाभिजनरूपतपःश्रुतौजस्तेजःप्रभाव-बलपौरुषबुद्धियोगाः। नाराधनाय हि भवन्ति परस्य पुंसो भक्त्या तुतोष भगवान् गजयूथपाय ॥ १४१ ॥

अभिजनः सत्कुलजन्म। बुद्धिर्ज्ञानयोगः। योगोऽष्टाङ्गः ॥७।९॥ प्रह्लादः श्रीनृसिंहम् ॥ १४१ ॥

ननु निरतिशयनित्यानन्दरूपस्य भगवतः कथं तया सुखमुत्पद्येत निरतिशयत्वनित्यत्वयोर्विरोधात्। उच्यते। शास्त्रे खलु निरति-शयानन्दत्वं नित्यत्वञ्च भगवतः श्रूयते, भक्तेरपि तथा तत्प्रीति-हेतुत्वं श्रूयते। तत एवं गम्यते। तस्य परमानन्दैकरूपस्य स्वपरा-नन्दनी स्वरूपशक्तिर्या ह्लादिनीनाम्नी वर्त्तते, प्रकाशवस्तुनः स्वपरप्रका-शनशक्तिवत् तत्परमवृत्तिरूपैवैषा। ताञ्च भगवान् स्ववृन्दे निक्षिप-न्नेव नित्यं वर्त्तते। तत्सम्बन्धेन च स्वयमतितरां प्रीणातीति। अतएव तस्य प्रीतिरूपस्यापि भक्तिप्रीणनीयत्वमाह—यत्प्रीणनाद् बर्हिषि देवतिर्यङ्मनुष्यवीरुत्तृणमाविरिञ्चात्। प्रीयेत सद्यः स ह विश्ववीजः प्रीतिः स्वयं प्रीतिमगाद् गयस्य ॥ १४२ ॥

विश्ववीजः सर्वजीवनहेतुः। देवादीनां द्वन्द्वैक्यम्। प्रीतिः सुख-रूपोऽपि ॥ ५ ॥ १५ ॥ श्रीशुकः ॥ १४२ ॥

अतएव तथाभूतत्वेनात्मारामस्य पूर्णकामस्यापि तस्य क्षुद्रगुण-वस्त्वपि परितोषाय कल्पते इति दृष्टान्तेनाह—तत्रोपनीतबलयो रवेर्दीपमिवादृताः। आत्मारामं पूर्णकामं निजलाभेन नित्यदा। प्रीत्युत्-फुल्लमुखाः प्रोचुर्हर्षगद्गदया गिरा। पितरं सर्वसुहृदमवितारमिवा-र्भकाः ॥ १४३ ॥

तत्र श्रीद्वारकायाम्। रवेरुपहाररूपं दीपमादृतवन्तो जना इवेत्यर्थः। एवं स्तुत्यादिकमपि तत्प्रीणनतामर्हतीत्याह प्रीत्येति। पितरमर्भका इवेति दृष्टान्तः। तस्य प्रीतावसाधारणं गुणविशेषम-प्याह सर्वसुहृदमिति। सर्वसुहृत्त्वे लिङ्गम् अवितारमिति। तथा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

आत्मारामपूर्णकामत्वेऽपि तादृशस्य स्वसम्बन्धाभिमानिप्रीतिमत्पुत्रा-
दिषु प्रीतिविशेषोदयो यथा दृश्यते तथा तेषु तं प्रीतिमन्तमित्यर्थः।
एवं कल्पतरुदृष्टान्तेऽपि भगवतो भक्तिविषयिका कृपा यथार्थमेवोप-
पद्यते, ये खलु सहजतत्प्रीतिमेवात्मनि प्रार्थयमाना भजन्ते तेषु तस्य
ज्ञानयाथार्थ्यस्यावश्यकत्वात्। तस्मादस्येवानन्दरूपस्यापि भक्ता-
नन्दोल्लास इति ॥१॥११॥ श्रीसूतः ॥ १४७ ॥

एवं भक्तिरूपायास्तच्छक्तेर्जीवेऽभिव्यक्तौ भगवानेव कारणम्
तत्तदिन्द्रियादिप्रवृत्तौ च स एवेति तस्मिंस्तया जीवस्योपकारका-
भासत्वमेव। तथापि भक्तानुरञ्ज्यदात्मत्वे भगवतः स्वकृपाप्रावल्ये
कारणम् इति वदन् पूर्वार्थमेव साधयति—किं वर्णये तव विभो यदुदी-
रितोऽसुः संस्पन्दते तमनु वाङ्मन इन्द्रियाणि। स्पन्दन्ति वै तनु-
भृतामजशर्वयोश्च स्वस्याप्यथापि भजतामसि भावबन्धुः ॥ १४४॥

हे विभो तव किमहं वर्णये त्वत्कृपालुतायाः कियन्तमंशं वर्णये-
दित्यर्थः। यतो येन त्वयैव उदीरितः प्रेरितोऽसुः प्राणः संस्पन्दते प्रव-
र्त्तते, तमसुमनु च वागादयः स्पन्दते। तत्र हेतुः, वै, अन्वयव्यतिरेका-
भ्यां श्रोत्रस्य श्रोत्रमित्यादिश्रुतिभिश्च तत्प्रसिद्धमित्यर्थः। न केवलं प्राकृ-
तानां तनुभृतां किन्तु अजशर्वयोश्च। अतः स्वस्य ममापि तथैव।
यद्यपि न क्वचिदपि कस्यापि स्वातन्त्र्यं तथापि दारुयन्त्रवत् त्वदर्पि-
तैस्तैरपि वागादिभिर्भजतां पुंसां भावेन स्वदत्तयैव भक्त्या बन्धु-
रसीति ॥१२॥८॥ मार्कण्डेयः श्रीनरनारायणौ ॥१४४॥

भगवदनुभवकर्त्तृत्वेऽनन्यहेतुत्वमाह—शृण्वन्ति गायन्ति गृणन्त्य-
भीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः। त एव पश्यन्त्यचिरेण
तावकं भवप्रवाहोपरमं पदाम्बुजम् ॥ १८५ ॥

स्पष्टम् ॥ १ ॥ ८ ॥ कुन्ती श्रीभगवन्तम् ॥१४५॥

श्रीभगवत्प्रापकत्वमाह—भक्त्योद्धवानपायिन्या सर्वलोकमहे-
श्वरम्। सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥ १४६ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

टीका च—महेश्वरत्वे हेतुः, सर्वोत्पत्त्यप्ययं सर्वस्योत्पत्त्यप्ययौ यस्मात् अतएव तत्कारणं मा मां ब्रह्मस्वरूपं वैकुण्ठनिवासिनम् । यद्वा ब्रह्मणः वेदस्य कारणं मामुपयाति सामीप्येन प्राप्नोतीत्येषा । श्रीगीतासु—पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्ययेति ॥११॥१८॥ श्रीभगवान् ॥१४६॥

तथा मनसोऽप्यगोचरफलदाने श्रीध्रुवचरितं प्रमाणं, परमभक्तिसम्वलितस्वलोकदानात् । तद्वशीकारित्वं तूदाहृतं, न साधयति मां योग इत्यादौ । तथा—तत्प्रघ्यान्ते, भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सतामिति ॥ १४७ ॥

अत्रैवं विवेचनीयम् । यद्यप्यस्य वाक्यस्य एकादशचतुर्दशाध्यायप्रकरणे साध्यसाधनभक्त्योरविविक्ततयैव महिमनिरूपणमिति साधनपरत्वं दुर्निर्णयं, तथापि फलभक्तिमहिमद्वारापि साधनमहिमपरत्वमेव । यत्रेदृशमपि फलं भवतीति । वदन्ति कृष्ण श्रेयांसीत्यादिप्रश्नमारभ्य साधनस्यैवोपक्रान्तत्वात्, यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः इत्यादिना तस्यैवोपसंहृतत्वाच्च । विशेषतस्तु तत्र बाध्यमानोऽपि मद्भक्त इत्यादिकं धर्मः सत्यदयोपेत इत्याद्यन्तं तदीयमन्तःप्रकरणं प्रायः साधनमहिमपरमेव । तत्र बाध्यमानोऽपीति पद्यं, साध्यभक्तौ जातायां बाध्यमानत्वायोगात्, दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान् इत्युक्तेर्विषयाविष्टचित्तानां विष्णावेशः सुदूरतः । वारुणीदिग्गतं वस्तु व्रजन्नैन्द्रीं किमाप्नुयादिति विष्णुपुराणाच्च तन्महिमपरत्वेन गम्यते । अत्रैव तावदुच्यते, कथं विना रोमहर्षं द्रवता चेतसा विना । विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाशयः ॥ इत्यनेन, मद्भक्तियुक्तो भुवनं पुनातीति कैमुत्यवाक्येन च साध्यभक्तेः संस्कारहारित्वं, ततो विषया एव बाध्यमाना भवन्तीति । अथ यथाग्निः सुसमिद्धार्चिरिति पद्यं नामाभासादेः सर्वपापक्षयकारित्वप्रसिद्धेस्तत्परम् । अथ न साधयति मां योग इत्येतत्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

साद्वैपद्यं योगादीनां साधनरूपानां प्रतियोगित्वेन निर्दिष्टत्वा
श्रद्धासहायत्वेन विधानाच्च तत्परम्। साध्यायां श्रद्धोल्लेखः पुनश्च
इति। यद्यपि फलभक्तिद्वारैव तद्वशीकारित्वं तस्यास्तथाप्यत्र साधन
रूपाया मुख्यत्वेन प्राप्तत्वात् तत्रैवोदाहृतम्। किम्वा, अस्त्वेवमद्धा
भजतां भगवान् मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगमिति
न्यायेन, नावशः सन् प्रेमाणं ददाति इति तस्या एव साक्षात् तद्वशक
ज्ञेयम्। अथ धर्मः सत्यदयोपेत इति पद्यञ्च धर्मादिसाधनप्रतियोगि
त्वेन निर्देशात् साधनभक्तेरेवान्यत्रापि तत्फलतयोदाहृतत्वा
तत्परम्। यत् कथं विनेत्यादिकं तच्च साधनभक्तिफलस्य शोधकत्वाति
शयप्रतिपादनेन तत्परमिति। तस्मात् साध्वेव बाध्यमानोऽपीत्यादि
पद्यानि तत्तत्प्रसङ्गे दर्शितानि ॥ ११ ॥ १४ ॥ श्रीभगवान् ॥१४७॥

तत्रास्तु तावत्तस्याः साक्षाद्भक्तेः परधर्मत्वादिकं भगवदर्पणादि
तदनुगतिकस्यालौकिककर्मणोऽपि परधर्मत्वमुदाहरिष्यते, यो वै
मयि परे धर्म इत्यादौ। तथा पापघ्नत्वादिकं तस्याः श्रवणादिना
भवति इत्यप्युक्तं, श्रुतोऽनुपठितो ध्यात इत्यादौ। पाद्मे माघ
माहात्म्ये देवदूतवाक्यञ्च—प्राह्णास्नान् यमुनाभ्राता सादरं हि पु
पुनः। भवद्भिर्वैष्णवस्त्याज्यो विष्णुश्चेद्भजते नरः। वैष्णवो यद्गृहे
भुङ्क्ते येषां वैष्णवसङ्गतिः। तेऽपि वः परिहार्य्याः स्युस्तत्सङ्ग
किल्विषाः॥ इति। बृहन्नारदीये यज्ञमाल्युपाख्यानान्ते—हरि
भक्तिपराणान्तु सङ्गिनां सङ्गमाश्रितः। मुच्यते सर्वपापेभ्यो महापात
वानपि॥ इति। ततः सुतरामेवेदमादिदेश—जिह्वा न वक्ति भगव
गुणनामधेयं चेतश्च न स्मरति तच्चरणारविन्दम्। कृष्णाय नो नम
यच्छिर एकदापि तानानयध्वमसतोऽकृतविष्णुकृत्यान्॥१४८॥

आस्तां तावत् तानानयध्वमित्यादिकेनैतत्पूर्वद्वितीयपद्येनोक्त
मुकुन्दपादारविन्दरसविमुखानामानयनवार्त्ता, तथा देवसिद्धेत्यादि
नैतत्पूर्वतृतीयपद्येनोक्तानां देवसिद्धपरिगीतपवित्रगाथानां सा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

समदृशां भगवत्पराणां निकटगमननिषेधवार्त्तापि । यद्यस्य जिह्वापि श्रीभगवतो गुणञ्च नामधेयञ्च वा एकदा जन्ममध्ये यदा कदापि न वक्ति जिह्वाया अभावे चेतश्च तच्चरणारविन्दमेकदापि न स्मरति चेतसो विच्छिन्नत्वे शिरश्च कृष्णाय कृष्णं लक्ष्यीकृत्य नो नमति, शाठ्येनापि नमस्कारं कुर्वतः शार्ङ्गधन्विने । शतजन्मार्जितं पापं तत्क्षणादेव नश्यतीति स्कान्दोक्तमहिमानं नमस्कारं न करोति, तानानयध्वम् । तत्र हेतुः, असतः । असत्त्वे हेतुरकृतविष्णुकृत्यान् । यथा च स्कान्दे वेराखण्डे श्रीब्रह्मोक्तौ—स कर्त्ता सर्वधर्म्माणां भक्तो यस्तव केशव । स कर्त्ता सर्वपापानां यो न भक्तस्तवाच्युत । पापं भवति धर्मोऽपि तवाभक्तैः कृतो हरे । निःशेषधर्म्मकर्त्ता वाप्यभक्तो नरके हरे । सदा तिष्ठति भक्तस्ते ब्रह्महापि विमुच्यते ॥ पाद्मे—मन्निमित्तं कृतं पापमपि धर्माय कल्पते । मामनादृत्य धर्मोऽपि पापं स्यान्मत्प्रभावतः ॥ इति । युक्तञ्चैतत् । श्रवणं कीर्त्तनञ्चास्येत्यादिना मुखबाहूरुपादेभ्य इत्यादिना सर्वेषां मदुपासनमित्यादिना "सर्वे विधिनिषेधाः स्युरित्यादिना च परमनित्यत्वादिप्रतिपादनात् । एषां कीर्त्तनादीनां त्रयाणामपि सुकराणामभावे परेषां सुतरामेवाभावो भवेदिति सामान्येनैव विष्णुकृत्यरहितत्वमुक्तम् । जिह्वादीनां करणभूतानामपि कर्तृत्वेन निर्देशः पुरुषानिच्छयापि यथा कथञ्चित् कीर्त्तनादिकमादत्ते । चरणारविन्दमिति विशेषाङ्गनिर्देशः श्रीयमस्य भक्तिख्यापक एव, न तु तन्मात्रस्मरणनियामकः । अत्राभक्तानामानयनेन भक्तानामनानयनमेव विधीयते आनयनस्योत्सर्गसिद्धत्वात्, वैवस्वतं संयमनं प्रजानामिति श्रुतेः । सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह । न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः ॥ इत्यत्र तद्गुणरागीति विशेषणं तु तेषां तद्दृष्टिपथगमनसामर्थ्यस्यापि यद्घातकं तादृशतत्स्मरणस्य प्रभावविशेषमेव बोधयतीति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ज्ञेयम्। यथैव नारसिंहे—अहममरगणार्चितेन धात्रा यम इति लोकहिताहिते नियुक्तः। हरिगुरुविमुखान् प्रशास्मि मर्त्यान् हरिचरणप्रणतान् नमस्करोमि॥ इति। तथैवामृतसारोद्धारे स्कान्दवचनम्—न ब्रह्मा न शिवाग्नीन्द्रा नाहं नान्ये दिवौकसः। शक्ता निग्रहं कर्त्तुं वैष्णवानां महात्मनाम्॥ इति॥ ६॥ ३॥ श्रीयमस्वदूतान्॥ १४८॥

तथा सकृज्जननैव सर्वमप्यायुः सफलमित्युदाहृतमेव श्रीशौनकवाक्येन, आयुर्हरति वै पुंसामुद्यन्नस्तञ्च यन्नसौ इत्यादिग्रन्थेन एवं भक्त्याभासेनाप्यजामिलादौ पापघ्नत्वं दृश्यते। तथा सर्वकर्माणि विध्वंसपूर्वकपरमगतिप्राप्तावपि स्वल्पायासेनैव भक्तेः कारणत्वं मूलं लघुभागवते—वर्त्तमानञ्च यत्पापं यद्भूतं यद्भविष्यति। तत्सर्वं निर्दहत्याशु गोविन्दानलकीर्त्तनादिति। तथैव च तत्र यथा कथञ्चित् तद्भक्तिसम्बन्धस्य कारणत्वं दृश्यते ब्रह्मवैवर्त्ते—स समाराधितो देवो मुक्तिकृत्स्यराद् यथा तथा। अनिच्छयापि हुतभुक् संस्पृष्टो दहति द्विजाः। स्कान्दे उमामहेश्वरसम्वादे—दा[illegible]मात्रेण क्षणास्य मोक्षं लभन्ति वै। किं पुनर्ये सदा भक्त्या पूजयन्त्यच्युतं नराः॥ बृहन्नारदीये—अकामादपि ये विष्णोः सकृत् पूजां प्रकुर्वते। न तेषां भवबन्धस्तु कदाचिदपि जायते॥ पाद्मे देवद्युतिस्तुतौ—सकृदुच्चारयेद् यस्तु नारायणमतन्द्रितः। शुद्धान्तःकरणो भूत्वा निर्वाणमधिगच्छति॥ तत्रान्यत्र—सम्पर्काद् यद्दि वा मोहाद्यस्तु पूजयते हरिम्। सर्वपाप-विनिर्मुक्तः प्रयाति परमं पदम्॥ इतिहाससमुच्चये श्रीनारदपुण्डरीक-सम्वादे—ये नृशंसा दुराचाराः पापाचाररताः सदा। ते यान्ति परमं धाम नारायणपदाश्रयाः॥ लिप्यन्ते न च पापेन वैष्णवा वीतकल्मषाः। पुनन्ति सकलान् लोकान् सहस्रांशुरिवोदितः॥ जन्मान्तर-सहस्रेषु यस्य स्यान्मतिरीदृशी। दासोऽहं वासुदेवस्य सर्वान् लोकान् समुद्धरेत्॥ स याति विष्णुसालोक्यं पुरुषो नात्र संशयः। किं

मभिप्रेत्य ज्ञानरूपायाः भक्तेर्निर्गुणत्वमुक्त्वा क्रियारूपायाः व्याचष्टे । तत्राप्यस्तु तावत् श्रवणकीर्त्तनरूपायाः, भगवत्सम्बन्धेन वासमात्र-रूपाया आह—वनन्तु साात्त्विको वासो ग्राम्यो राजस उच्यते । तामसं द्यूतसदनं मन्निकेतन्तु निर्गुणम् ॥ १२५ ॥

वनं वास इति तत्सम्बन्धिनी वसनक्रियेत्यर्थः । वानप्रस्थानामिति ज्ञेयम् । एवं ग्राम्य इति गृहस्थानाम् । तामसमिति दुराचाराणाम् । द्यूत-सदनमित्युपलक्षणम् । मन्निकेतमिति भगवत्सेवापराणाम् । वनादीनां वासेन सहायुर्घृतमितिवदेकाधिकरणत्वम् । वनस्य वृक्षषण्डरूपस्य रजस्तमःप्राधान्यात् । अतएव विविक्तत्वलक्षणतदीयसात्त्विकगुणस्यापि तद्युगलमिश्रत्वेन गौणत्वम् । वासक्रियायास्तु सत्त्वोत्पन्नत्वात्तद्वर्द्धन-त्वाच्च सात्त्विकत्वे मुख्यत्वमिति तस्या एवाभिधेयत्वमुचितम् । अतएव ग्राम्य इति तद्धितान्त एव पठितः । एवं द्यूतसदनमित्यत्र च वास-क्रियैव विवक्षिता । मन्निकेतमित्यत्रापि । किन्तु भगवत्सम्बन्धमाहा-त्म्येन निकेतस्यापि निर्गुणत्वं भवेत् स्पर्शमणिन्यायेन । तादृशत्वन्तु तादृशभक्तिचक्षुर्भिरेवोपलब्धव्यं, दिविष्ठास्तत्र पश्यन्ति सर्वानेव चतु-र्भुजानितिवत् । एवमेव टीका च—भगवन्निकेतन्तु साक्षात्तदावि-र्भावान्निर्गुणं स्थानमित्येषा । एवं वासमात्रस्य तादृशत्वमुक्त्वा सर्वासा-मेव तत्क्रियाणामाह—सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः । तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥ १२६ ॥

अत्र च क्रियायामेव तात्पर्य्यं न तदाश्रये द्रव्ये । सात्त्विककारकस्य शरीरादिकं हि गुणत्रयपरिणतमेव । तदेवं क्रियामात्रस्य तादृशत्व-मुक्त्वा तत्प्रवृत्तिहेतुभूतायाः श्रद्धाया अप्याह—सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी । तामस्यधर्मे या श्रद्धा मत्सेवायान्तु निर्गुणा ॥ १२७ ॥

अधर्मः अपरधर्मः । अन्यत् पूर्ववत् ॥ ११ ॥ २५ ॥ श्रीभगवान् ॥ १२६ ॥ १२७ ॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अत आह—धर्मं भागवतं शुद्धं त्रैविद्यञ्च गुणाश्रयमिति ॥१३८॥
शुद्धं निर्गुणं त्रैविद्यं वेदत्रयप्रतिपाद्यं गुणाश्रयमिति टीका च।
वेदशब्देनात्र कर्म्मकाण्डमेवोच्यते एवं त्रयीधर्म्ममित्यादेः ॥ ६ ॥ २।
श्रीशुकः ॥ १३८ ॥

अतएव भक्तेः श्रीभगवत्स्वरूपशक्तिबोधकं स्वयंप्रकाशत्वमाह-
यज्ञाय धर्मपतये विधिनैपुणाय योगाय सांख्यशिरसे प्रकृतीश्वराय।
नारायणाय हरये नम इत्युदारं हास्यन्मृगत्वमपि यः समुदाजहार।
१३९ ॥

यः आर्षभेयो भरतः। मरणसमये तत्रापि मृगशरीरे तद्वचनज-
त्यन्तासम्भवात् स्वप्रकाशत्वमेव तस्याः कीर्त्तनलक्षणायाः भ-
सिध्यति। एवं गजेन्द्रेऽपि ज्ञेयम् ॥ ५ ॥ १४ ॥ श्रीशुकः ॥ १३९।

परमसुखरूपत्वञ्च दृश्यते। तत्र साधनदशायाम् अतो वै क-
नित्यमित्यादौ। कर्म्मण्यस्मिन्ननाश्वासे इत्यादौ च तद्रूपत्वाभि-
दर्शितैव। सिद्धदशायान्तु सुतरां तत् प्रकटीभवति। यथा—म-
सेवया प्रतीतन्ते सालोक्यादिचतुष्टयम्। नेच्छन्ति सेवया पूर्णाः कु-
ऽन्यत् कालविप्लुतम् ॥ १४० ॥

अत्रान्यस्य कालविप्लुतत्वमिति सेवायास्तदभावप्राप्तेः निः-
सिद्धम्। अकालविप्लुतसालोक्यादिभ्योऽतिशये तु किमुतेति।
श्रीविष्णुर्दुर्वाससम् ॥ १४० ॥

श्रीभगवद्विषयकरतिप्रदत्वमुक्तम्, एवं निर्जितषड्वर्गैः क्रि-
भक्तिरीश्वरे इत्यादिना। यत्तु, अस्त्वेवमङ्ग भजतां भगवान् मुकु-
मुक्तिं ददाति कर्हिंचित् स्म न भक्तियोगम्, इत्युक्त्यापि त-
प्राप्यते इति शङ्क्यते, तत् खल्वविवेकादेव, कर्हिचिदिति
लुप्तख्यतद्रतिपुरुषार्थतायां शैथिल्ये सत्येवेत्यर्थलाभात्,
चिदर्थे ग्रनुक्तत्वात्, असाकल्ये तु चिच्चनी इत्यमरकोषाच्च।
विषयकभगवत्प्रीत्यैकहेतुत्वमप्युदाहृतम्, नालं द्विजत्वं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मित्यादि । तथाचाह—मन्ये धनाभिजनरूपतपःश्रुतौजस्तेजःप्रभाव-बलपौरुषबुद्धियोगाः । नाराधनाय हि भवन्ति परस्य पुंसो भक्त्या तुतोष भगवान् गजयूथपाय ॥ १४१ ॥

अभिजनः सत्कुलजन्म । बुद्धिर्ज्ञानयोगः । योगोऽष्टाङ्गः ॥७।९॥ प्रह्लादः श्रीनृसिंहम् ॥ १४१ ॥

ननु निरतिशयनित्यानन्दरूपस्य भगवतः कथं तया सुखमुत्पद्येत निरतिशयत्वनित्यत्वयोर्विरोधात् । उच्यते । शास्त्रे खलु निरतिशयानन्दत्वं नित्यत्वञ्च भगवतः श्रूयते, भक्तेरपि तथा तत्प्रीतिहेतुत्वं श्रूयते । तत एवं गम्यते । तस्य परमानन्दैकरूपस्य स्वपरानन्दनी स्वरूपशक्तिर्या ह्लादिनीनाम्नी वर्त्तते, प्रकाशवस्तुनः स्वपरप्रकाशनशक्तिवत् तत्परमवृत्तिरूपैवैषा । ताञ्च भगवान् स्ववृन्दे निक्षिपन्नेव नित्यं वर्त्तते । तत्सम्बन्धेन च स्वयमतितरां प्रीणातीति । अतएव तस्य प्रीतिरूपस्यापि भक्तिप्रीणनीयत्वमाह—यत्प्रीणनाद् वर्हिषि देवतिर्य्यङ्मनुष्यवीरुत्तृणमाविरिञ्चात् । प्रीयेत सद्यः स ह विश्ववीजः प्रीतिः स्वयं प्रीतिमगाद् गयस्य ॥ १४२ ॥

विश्ववीजः सर्वजीवनहेतुः । देवादीनां द्वन्द्वैक्यम् । प्रीतिः सुखरूपोऽपि ॥ ५ ॥ १५ ॥ श्रीशुकः ॥ १४२ ॥

अतएव तथाभूतत्वेनात्मारामस्य पूर्णकामस्यापि तस्य क्षुद्रगुणवस्त्वपि परितोषाय कल्पते इति दृष्टान्तेनाह—तत्रोपनीतवलयो रवेर्दीपमिवादृताः । आत्मारामं पूर्णकामं निजलाभेन नित्यदा । प्रीत्युत्फुल्लमुखाः प्रोचुर्हर्षगद्गदया गिरा । पितरं सर्वसुहृदमवितारमिवार्भकाः ॥ १४३ ॥

तत्र श्रीद्वारकायाम् । रवेरुपहाररूपं दीपमादृतवन्तो जना इवेत्यर्थः । एवं स्तुत्यादिकमपि तत्प्रीणनतामर्हतीत्याह प्रोचुरिति—पितरमर्भका इवेति दृष्टान्तः । तस्य प्रीतावसाधारणं गुणं .ञ्चम-प्याह सर्वसुहृदमिति । सर्वसुहृत्त्वे लिङ्गम् अवितारमिति । तथा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

आत्मारामपूर्णकामत्वेऽपि तादृशस्य स्वसम्बन्धाभिमानिप्रीतिमत्पुत्रा-
दिषु प्रीतिविशेषोदयो यथा दृश्यते तथा तेषु तं प्रीतिमन्तमित्यर्थः।
एवं कल्पतरुदृष्टान्तेऽपि भगवतो भक्तिविषयिका कृपा यथार्थमेवो-
पद्यते, ये खलु सहजतत्प्रीतिमेवात्मनि प्रार्थयमाना भजन्ते तेष्व-
ज्ञानयाथार्थ्यस्यावश्यकत्वात्। तस्मादस्येवानन्दरूपस्यापि भक्ता-
नन्दोल्लास इति ॥१॥११॥ श्रीसूतः ॥ १४७ ॥

एवं भक्तिरूपायास्तच्छक्तेर्जीवेऽभिव्यक्तौ भगवानेव कारणम्,
तत्तदिन्द्रियादिप्रवृत्तौ च स एवेति तस्मिंस्तया जीवस्योपकारका-
भासत्वमेव। तथापि भक्तानुरञ्ज्यदात्मत्वे भगवतः स्वकृपाप्रावल्यं
कारणम् इति वदन् पूर्वार्थमेव साधयति—किं वर्णये तव विभो यदुदी-
रितोऽसुः संस्पन्दते तमनु वाङ्मन इन्द्रियाणि। स्पन्दन्ति वै तनु-
भृतामजशर्वयोश्च स्वस्याप्यथापि भजतामसि भावबन्धुः ॥ १४४॥

हे विभो तव किमहं वर्णये त्वत्कृपालुतायाः कियन्तमंशं वर्णये-
मित्यर्थः। यतो येन त्वयैव उदीरितः प्रेरितोऽसुः प्राणः संस्पन्दते प्र-
वर्त्तते, तमसुमनु च वागादयः स्पन्दते। तत्र हेतुः, वै, अन्वयव्यतिरेका-
श्रोत्रस्य श्रोत्रमित्यादिश्रुतिभिश्च तत्प्रसिद्धमित्यर्थः। न केवलं प्रा-
तानां तनुभृतां किन्तु अजशर्वयोश्च। अतः स्वस्य ममापि तथैव।
यद्यपि न क्वचिदपि कस्यापि स्वातन्त्र्यं तथापि दारुयन्त्रवत् त्वद-
र्त्तितैरपि वागादिभिर्भजतां पुंसां भावेन स्वदत्तयैव भक्त्या बन्धु-
सीति ॥१२॥८॥ मार्कण्डेयः श्रीनरनारायणौ ॥१४४॥

भगवदनुभवकर्तृत्वेऽनन्यहेतुत्वमाह—शृण्वन्ति गायन्ति गृणन्-
भीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः। त एव पश्यन्त्यचिरे-
तावकं भवप्रवाहोपरमं पदाम्बुजम् ॥ १८५ ॥

त्यपि पष्टम् ॥ १ ॥ ८ ॥ कुन्ती श्रीभगवन्तम् ॥१४५॥

तेषु भगवत्प्रापकत्वमाह—भक्त्योद्धवानपायिन्या सर्वलोकमहे-
रम्। सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥ १४६ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

टीका च—महेश्वरत्वे हेतुः, सर्वोत्पत्त्यप्ययं सर्वस्योत्पत्त्यप्ययौ यस्मात् अतएव तत्कारणं मा मां ब्रह्मस्वरूपं वैकुण्ठनिवासिनम् । यद्वा ब्रह्मणः वेदस्य कारणं मामुपयाति सामीप्येन प्राप्नोतीत्येषा । श्रीगीतासु—पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्ययेति ॥११॥१८॥ श्रीभगवान् ॥१४६॥

तथा मनसोऽप्यगोचरफलदाने श्रीध्रुवचरितं प्रमाणं, परमभक्तिसम्बलितस्वलोकदानात् । तद्वशीकारित्वं तूदाहृतं, न साधयति मां योग इत्यादौ । तथा—तत्प्रद्यान्ते, भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सतामिति ॥ १४७ ॥

अत्रैवं विवेचनीयम् । यद्यप्यस्य वाक्यस्य एकादशचतुर्दशाध्यायप्रकरणे साध्यसाधनभक्त्योरविविक्ततयैव महिमनिरूपणमिति साधनपरत्वं दुर्निर्णयं, तथापि फलभक्तिमहिमद्वारापि साधनमहिमपरत्वमेव । यत्रेदृशमपि फलं भवतीति । वदन्ति कृष्ण श्रेयांसीत्यादिप्रश्नमारभ्य साधनस्यैवोपक्रान्तत्वात्, यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः इत्यादिना तस्यैवोपसंहृतत्वाच्च । विशेषतस्तु तत्र बाध्यमानोऽपि मद्भक्त इत्यादिकं धर्मः सत्यदयोपेत इत्याद्यन्तं तदीयमन्तःप्रकरणं प्रायः साधनमहिमपरमेव । तत्र बाध्यमानोऽपीति पद्यं, साध्यभक्तौ जातायां बाध्यमानत्वायोगात्, दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान् इत्युक्तेर्विषयाविष्टचित्तानां विष्ण्वावेशः सुदूरतः । वारुणीदिग्गतं वस्तु व्रजन्नैन्द्रीं किमाप्नुयादिति विष्णुपुराणाच्च तन्महिमपरत्वेन गम्यते । अत्रैव तावदुच्यते, कथं विना रोमहर्षं द्रवता चेतसा विना । विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाशयः ॥ इत्यनेन, मद्भक्तियुक्तो भुवनं पुनातीति कैमुत्यवाक्येन च साध्यभक्तेः संस्कारहारित्वं, ततो विषया एव बाध्यरूप्य भवन्तीति । अथ यथाग्निः सुसमिद्धार्चिरिति पद्यं नामाभासादि. सर्वपापक्षयकारित्वप्रसिद्धेस्तत्परम् । अथ न साधयति मां योग इत्येतत्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सार्द्धपद्यं योगादीनां साधनरूपानां प्रतियोगित्वेन निर्दिष्टत्वात् श्रद्धासहायत्वेन विधानाच्च तत्परम्। साध्यायां श्रद्धोत्सेखः पुनरु इति। यद्यपि फलभक्तिद्वारैव तद्वशीकारित्वं तस्यास्तथाप्यत्र साधन रूपाया मुख्यत्वेन प्राप्तत्वात् तत्रैवोदाहृतम्। किम्बा, अस्त्वेवम् भजतां भगवान् मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगमि न्यायेन, नावशः सन् प्रेमाणं ददाति इति तस्या एव साक्षात् तद्गुणत्वं ज्ञेयम्। अथ धर्मः सत्यदयोपेत इति पद्यञ्च धर्मादिसाधनप्रतियोगित्वेन निर्देशात् साधनभक्तेरेवान्यत्रापि तत्फलतयोदाहृतत्वात् तत्परम्। यत् कथं विनेत्यादिकं तच्च साधनभक्तिफलस्य शोधकत्वातिशयप्रतिपादनेन तत्परमिति। तस्मात् साध्वेव बाध्यमानोऽपीत्यादि पद्यानि तत्तत्प्रसङ्गे दर्शितानि ॥ ११ ॥ १४ ॥ श्रीभगवान् ॥१४७॥

तत्रास्तु तावत्तस्याः साक्षाद्भक्तेः परधर्मत्वादिकं भगवदर्पणादि तदनुगतिकस्यालौकिककर्मणोऽपि परधर्मत्वमुदाहरिष्यते, यो वै मयि परे धर्म इत्यादौ। तथा पापघ्नत्वादिकं तस्याः श्रवणादिना भवति इत्यप्युक्तं, श्रुतोऽनुपठितो ध्यात इत्यादौ। पाद्मे माघ माहात्म्ये देवदूतवाक्यञ्च—प्राहास्मान् यमुनाभ्राता सादरं हि पुनः पुनः। भवद्भिर्वैष्णवस्त्याज्यो विष्णुश्चेद्भजती नरः। वैष्णवो यद्गृहे भुङ्क्ते येषां वैष्णवसङ्गतिः। तेऽपि वः परिहार्य्याः स्युस्तत्सङ्गहत किल्विषाः॥ इति। बृहन्नारदीये यज्ञमाल्युपाख्यानान्ते—हरि भक्तिपराणान्तु सङ्गिनां सङ्गमाश्रितः। मुच्यते सर्वपापेभ्यो महापातकवानपि॥ इति। ततः सुतरामेवेदमादिदेश—जिह्वा न वक्ति भगवद् गुणनामधेयं चेतश्च न स्मरति तच्चरणारविन्दम्। कृष्णाय नो नमति यच्छिर एकदापि तानानयध्वमसतोऽकृतविष्णुकृत्यान्॥१४८॥

—स्पष्ट। आस्तां तावत् तानानयध्वमित्यादिकेनैतत्पूर्वद्वितीयपद्येनोक्ता मुकुन्दपादारविन्दरसविमुखानामानयनवार्त्ता, तथा देवसिद्धत्यादि नैतत्पूर्वतृतीयपद्येनोक्तानां देवसिद्धपरिगीतपवित्रगाथानां

समदृशां भगवत्पराणां निकटगमननिषेधवार्त्तापि। यद्यस्य जिह्वापि श्रीभगवतो गुणञ्च नामधेयञ्च वा एकदा जन्ममध्ये यदा कदापि न वक्ति जिह्वाया अभावे चेतश्च तच्चरणारविन्द-मेकदापि न स्मरति चेतसो विच्छिन्नत्वे शिरश्च कृष्णाय कृष्णं लक्ष्यीकृत्य नो नमति, शाठ्येनापि नमस्कारं कुर्वतः शार्ङ्गधन्विने। शतजन्मार्जितं पापं तत्क्षणादेव नश्यतीति स्कान्दोक्तमहिमानं नमस्कारं न करोति, तानानयध्वम्। तत्र हेतुः, असतः। असत्त्वे हेतुरकृतविष्णुकृत्यान्। यथा च स्कान्दे वेरखण्डे श्रीब्रह्मोक्तौ—स कर्त्ता सर्वधर्म्माणां भक्तो यस्तव केशव। स कर्त्ता सर्वपापानां यो न भक्तस्तवाच्युत। पापं भवति धर्मोऽपि तवाभक्तैः कृतो हरे। निःशेषधर्म्मकर्त्ता वाप्यभक्तो नरके हरे। सदा तिष्ठति भक्तस्ते ब्रह्म-हापि विमुच्यते॥ पाद्मे—मन्निमित्तं कृतं पापमपि धर्माय कल्पते। मामनादृत्य धर्मोऽपि पापं स्यान्मत्प्रभावतः॥ इति। युक्तञ्चैतत्। श्रवणं कीर्त्तनञ्चास्येत्यादिना मुखबाहूरुपादेभ्य इत्यादिना सर्वेषां मदुपासनमित्यादिना सर्वे विधिनिषेधाः स्युरित्यादिना च परम-नित्यत्वादिप्रतिपादनात्। एषां कीर्त्तनादीनां त्रयाणामपि सुकराणा-मभावे परेषां सुतरामिवाभावो भवेदिति सामान्येनैव विष्णुकृत्यरहित-त्वमुक्तम्। जिह्वादीनां करणभूतानामपि कर्तृत्वेन निर्देशः पुरुषा-निच्छयापि यथा कथञ्चित् कोर्त्तनादिकमादत्ते। चरणारविन्दमिति विशेषाङ्गनिर्देशः श्रीयमस्य भक्तिव्यापक एव, न तु तन्मात्रस्मरण-नियामकः। अत्राभक्तानामानयनेन भक्तानामनानयनमेव विधीयते आनयनस्योत्सर्गसिद्धत्वात्, वैवस्वतं संयमनं प्रजानामिति श्रुतेः। सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह। न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः॥ इत्यत्र तद्गुणरागीति विशेषणं तु तेषां तद्दृष्टिपथगमनसामर्थ्य-स्यापि यद्घातकं तादृशतत्स्मरणस्य प्रभावविशेषमेव बोधयतीति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ज्ञेयम्। यथैव नारसिंहे—अहममरगणार्चितेन धात्रा यम इति लोकहिताहिते नियुक्तः। हरिगुरुविमुखान् प्रशास्मि मर्त्यान् हरिचरणप्रणतान् नमस्करोमि॥ इति। तथैवामृतसारोद्धारे स्कान्द-वचनम्—न ब्रह्मा न शिवाग्नीन्द्रा नाहं नान्ये दिवौकसः। शक्ता निग्रहं कर्त्तुं वैष्णवानां महात्मनाम्॥ इति॥६॥३॥ श्रीयम स्वदूतान्॥१४८॥

तथा सकृज्जनेनैव सर्वमप्यायुः सफलमित्युदाहृतमेव श्रीशौनक-वाक्येन, आयुर्हरति वै पुंसामुद्यन्नस्तञ्च यन्नसौ इत्यादिग्रन्थेन। एवं भक्त्याभासेनाप्यजामिलादौ पापघ्नत्वं दृश्यते। तथा सर्वकर्मादि-विध्वंसपूर्वकपरमगतिप्राप्तावपि स्वल्पायासेनैव भक्तेः कारणत्वं श्रूयं लघुभागवते—वर्त्तमानञ्च यत्पापं यद्भूतं यद्भविष्यति। तत्सर्वं निर्-दहत्याशु गोविन्दानलकीर्त्तनादिति। तथैव च तत्र यथा कथञ्चि-तद्भक्तिसम्बन्धस्य कारणत्वं दृश्यते ब्रह्मवैवर्त्ते—स समाराधितो देवो मुक्तिकृत्स्यराद् यथा तथा। अनिच्छयापि हुतभुक् संस्पृष्टो दहति द्विजाः। स्कान्दे उमामहेश्वरसम्वादे—दीक्षामात्रेण कृष्णस्य नराः मोक्षं लभन्ति वै। किं पुनर्ये सदा भक्त्या पूजयन्त्यच्युतं नराः॥ बृहन्ना-रदीये—अकामादपि ये विष्णोः सकृत् पूजां प्रकुर्वते। न तेषां भव-बन्धस्तु कदाचिदपि जायते॥ पाद्मे देवद्युतिस्तुतौ—सकृदुच्चारयेद् यस्तु नारायणमतन्द्रितः। शुद्धान्तःकरणो भूत्वा निर्वाणमधिगच्छति॥ तत्रान्यत्र—सम्पर्काद् यदि वा मोहाद्यस्तु पूजयते हरिम्। सर्वपाप-विनिर्मुक्तः प्रयाति परमं पदम्॥ इतिहाससमुच्चये श्रीनारदपुण्डरीक-सम्वादे—ये नृशंसा दुराचाराः पापाचाररताः सदा। ते यान्ति परमं धाम नारायणपदाश्रयाः॥ लिप्यन्ते न च पापेन वैष्णवा वीत-कल्मषाः। पुनन्ति सकलान् लोकान् सहस्रांशुरिवोदितः॥ जन्मान्तर-सहस्रेषु यस्य स्यान्मतिरीदृशी। दासोऽहं वासुदेवस्य सर्वान् लोकान् समुद्धरेत्॥ स याति विष्णुसालोक्यं पुरुषो नात्र संशयः। किं

स्तद्गतप्राणाः पुरुषाः संयतेन्द्रियाः ॥ अत एव, सकृदेव प्रपन्नो यस्तवा-स्मीति च याचते। अभयं सर्वथा तस्मै ददाम्येतद्व्रतं मम ॥ इति रामायणे श्रीरामचन्द्रवाक्यञ्च। सकृदेव प्रपन्नो यस्तवास्मीति च याचते। अभयं सर्वथा तस्मै ददात्येतद्व्रतं हरिरिति च गरुड़पुराणम्। तथाचाह—आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन्। ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम् ॥ इति ॥ १४९ ॥

स्पष्टम् ॥ १ ॥ १ ॥ श्रीशौनकः ॥ १४९ ॥

तथा—न हि भगवन्न घटितमिदं त्वद्दर्शनान्नृणामखिलपापक्षयः। यन्नामसकृत्श्रवणात् पुक्कशोऽपि विमुच्यते साक्षात् ॥१५०॥

स्पष्टम् ६॥१६॥ चित्रकेतुः श्रीसङ्कर्षणम् ॥ १५० ॥

अत एवोक्तं श्रीविष्णुधर्म्मोत्तरे—जीवितं विष्णुभक्तस्य वरं पञ्चदिनानि वै। न तु कल्पसहस्राणि भक्तिहीनस्य केशवे ॥ इति। अत्र यत् तृतीये गर्भस्थस्य जीवस्य भगवतः स्तुतिः श्रूयते, तस्यैव च संसारोऽपि वर्ण्यते, तत्रोच्यते, जात्येकत्वेनैवैक-वद्वर्णनमिति। वस्तुतस्तु कश्चिदेव जीवो भाग्यवान् भगवन्तं स्तौति। स च निस्तरत्यपि। न तु सर्वस्यापि भगवज्ज्ञानं भवति। तथा च नैरुक्ताः पठन्ति—नवमे सर्वाङ्गसम्पूर्णो भवतीति पठित्वा, मृत-श्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः, इत्यादि तद्भावनापाठानन्तरम्, अवाङ्मुखः पीड्यमानो जन्तुभिश्च समन्वितः। सांख्ययोगं समभ्यसेत् पुरुषं वा पञ्चविंशकम्। ततश्च दशमे मासि प्रजायत इत्यादि। अत्र पुरुषं वेति वाशब्दात् कस्यचिदेव भगवज्ज्ञानमिति गम्यते। सर्वास्व-प्यवस्थासु भक्तेः समर्थत्वन्तु वर्णितम्। भेदेऽप्येकवद्वर्णनमन्यत्रापि दृश्यते। तृतीये यथा पाद्मकल्पसृष्टिकथनेऽपि श्रीसनकादीनां सृष्टिः कथ्यत इति। टीकायाञ्च ब्रह्मकृतसृष्टिमात्रकथनसाम्ये-नैकीकृत्योक्तिरियमिति योजितम्। श्रीवराहावतारवच्च। तत्र प्रथममन्वन्तरस्यादौ पृथिवीमज्जने ब्रह्मनासिकातोऽवतीर्णः श्रीवराह-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्तामुद्धरन् हिरण्याक्षेण संग्रामं कृतवानिति वर्ण्यते। हिरण्याक्ष
षष्ठमन्वन्तरस्यावसानजातप्राचेतसदक्षकन्याया दितेर्जातः। तस्मात्त
वर्णनं तदवतारमात्रत्वपृथिवीमज्जनमात्रत्वैक्यविवक्षयैव घटते। त
दत्रापीति। कश्चिदेवान्यो जन्यो जीवः स्तौत्यन्यः संसरतीत्येव मन्तव्यम्
अत्र पूर्ववत् परमगतिप्राप्तौ भक्तेः परम्पराकारणत्वञ्च दृश्यते। बृहन्ना
रदीये ध्वजारोपणमाहात्म्ये—यतीनां विष्णुभक्तानां परिचर्यापरायणैः
ईक्षिता अपि गच्छन्ति पापिनोऽपि पराङ्गतिम् ॥ इति। एवं विष्णु
धर्मे कुलानां शतमागामि समतीतं तथा शतम्। कारयन् भगवद्
नयत्यच्युतलोकताम्। ये भविष्यन्ति येऽतीता आकल्पात् पुरुषाः कुले
तांस्तारयति संस्थाप्य देवस्य प्रतिमां हरेरिति। दूतान् प्रति यमा
चैयम्—येनार्चा भगवद्भक्त्या वासुदेवस्य कारिता। नवायुतं तत्कुल
भवतां शासनातिगमिति। यथाह—त्रिःसप्तभिः पिता पूतः पितृभिः
सह तेऽनघ। यत् साधोऽस्य गृहे जातो भवान् वै कुलपावनः ॥१५

त्रिःसप्तभिः प्राचीनकल्पगततदीयपूर्वपूर्वजन्मसम्बन्धिभिः पितृभिः
सह अस्मिन् जन्मनि हिरण्यकशिपुकश्यपमरीचिब्रह्माण एव त
पितर इति ॥ ७ ॥ १० ॥ श्रीनृसिंहः प्रह्लादम् ॥ १५१ ॥

तथा भक्त्याभासस्यापि सर्वपापक्षयपूर्वकश्रीविष्णुपदप्रापक
यथा बृहन्नारदीये—कोकिलमानिनोर्मदिरोन्मत्तयो धूर्तचौरख
दण्डयोर्जीर्णभगवन्मन्दिरे नृत्यतोः ध्वजारोपणफलप्राप्त्या ता
जातम्। तथा व्याधहतस्य पक्षिणः कुक्कुरमुखगतस्य तत्पलायन
भगवन्मन्दिरपरिक्रमणफलप्राप्त्या तादृशत्वप्राप्तिरिति। क्वचित्त
भक्तिप्राप्तिश्च। यथा बृहन्नारसिंहपुराणे श्रीप्रह्लादस्य तस्य
जन्मनि वेश्यया सह विवादेन श्रीनृसिंहचतुर्दश्यां दैवादुपवासः
जागरणञ्चेति। तथाचाह—यस्यावतारगुणकर्मविडम्बनानि नाम
येऽसुविगमे विवशा गृणन्ति। तेऽनेकजन्मशमलं सहसैव हि
संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥ १५२ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

असुविगमेऽपीति तदानीन्तनमात्रत्वमशुक्लवर्णत्वञ्च व्यञ्जितम् । विवशा इति तदिच्छां विना केनचित् कारणान्तरेणापीत्यर्थः । वश कान्तावित्यमरः । तादृशशक्तित्वे हेतुमाह अवतारेति । अवतारादि-सदृशानि तत्तत्तुल्यशक्तीनीत्यर्थः । तत्रावतारविड़म्बनानि नृसिंहेत्या-दीनि गुणविड़म्बनानि भक्तवात्सल्येत्यादीनि । कर्म्मविड़म्बनानि गोवर्द्धनधारणादीनि च ॥ ३ ॥९॥ ब्रह्मा श्रीगर्भोदकशायिनम् ॥१५२॥

अस्तु तावत् शुद्धभक्त्याभासवार्त्ता । अपराधत्वेन दृश्यमानोऽप्यसौ महाप्रभावो दृश्यते । यथा विष्णुधर्मे भगवन्मन्त्रेण कृतनिजरक्षं विप्रं प्रति राक्षसवाक्यम्—त्वामत्तुमागतः क्षिप्तो रक्षया कृतया त्वया । तत्-संसर्गाच्च मे ब्रह्मन् साध्वेतन्मनसि स्थितम् । का सा रक्षा न तां वेद्मि वेद्मि नास्याः परायणम् । किन्त्वस्याः सङ्गमासाद्य निर्वेदं प्रापितः पर-मिति । यथा वा विष्णुधर्म्माद्युदाहृतायाः श्रीभगवद्गृहदीपतैलं पिबन्त्याः कस्याश्चिन्मूषिकायाः दैवतो मुखोद्धृतवर्त्तौ दीपे समुज्ज्वलिते सति मुख-दाहेन मरणात् राज्ञीत्वं प्राप्य दीपदानादिलक्षणभक्तिनिष्ठाप्राप्तिरन्ते परमपदप्राप्तिश्च । यथा ब्रह्माण्डपुराणे जन्माष्टमीमाहात्म्ये कृतजन्मा-ष्टमीकायाः दास्याः दुःसङ्गेनापि कस्यचित् तत्फलप्राप्तिः । तथाच बृहन्नारदीये—तादृशदुष्टकार्य्यार्थमपि भगवन्मन्दिरं मार्जयित्वा कश्चि-दुत्तमां गतिमवाप । नत्वीदृशत्वं ब्रह्मज्ञानस्यापि । यथोक्तं ब्रह्म-वैवर्त्ते—विषयस्नेहसंयुक्तो ब्रह्माहमिति यो वदेत् । गर्भवाससहस्रेषु पच्यते पापकृन्नर इति । अथ श्रीभगवद्वशीकारितायामपि सकृदल्प-प्रयासात्मिकाया अपि भक्तेः कारणता दृश्यते । यथा ब्रह्मपुराणे शिव-वाक्यम्—दृष्टः पश्येदहरहः संश्रितः प्रतिसंश्रयेत् । अर्चितश्चार्चये-न्नित्यं स देवो द्विजपुङ्गवा इति । यथा च विष्णुधर्मे—तुलसीदलमात्रेण जलस्य चुलुकेन च । विक्रीणीते स्वमात्मानं भक्तेभ्यो भक्तवत्सल इति । तदीदृशं माहात्म्यवृन्दं न प्रशंसामात्रमजामिलादौ प्रसिद्धत्वात् । दर्शिताश्च न्यायाः श्रीभगन्नामकौमुद्यादौ । तथैव नाम्न्यर्थवादकल्पनायां

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दोषोऽपि श्रूयते, तथार्थवादो हरिनाम्नीति हि पाद्मे नामापरा-
गणने। अर्थवादं हरेर्नाम्नि सम्भावयति यो नरः। स पापिष्ठो मनुष्या-
निरये पतति स्फुटम् इति कात्यायनसंहितायाम्। मन्नामकीर्त्तनफ-
विविधं निशम्य न श्रद्दधाति मनुते यदुतार्थवादम्। यो मानुषस्त-
दुःखचये क्षिपामि संसारघोरविविधार्त्तिनिपीड़िताङ्गम्॥ इ-
ब्रह्मसंहितायां बौधायनं प्रति श्रीपरमेश्वरोक्तौ। ततोऽन्त्यभू-
नामानुसन्धानेष्वन्येषु तद्भजनेषु च सुतरामेवार्थवादे दोषोऽवगन्त-
तदेवं यथार्थ एव तन्माहात्म्ये सत्यपि यत्र सम्प्रति तद्भजनफलोद-
न दृश्यते, कुत्रचिच्छास्त्रे च पुरातनानामप्यन्यथा श्रूयते, तत्र नामा-
वादकल्पना वैष्णवानादरादयो दुरन्ता अपराधा एव प्रतिबन्धका-
वक्तव्यम्। अतएवोक्तं श्रीशौनकेन—तदश्मसारं हृदयं बते-
यद्गृह्यमाणैर्हरिनामधेयैः। न विक्रियेताथ यदा विकारो नेत्रे ज-
गात्ररुहेषु हर्ष इति। यथा प्रायेण आधुनिकानाम्। यथा वा, ब्र-
ण्यस्य वदान्यस्य तव दासस्य केशव। स्मृतिर्नाद्यापि विध्वस्ता भव-
सन्दर्शनार्थिन इति। तदुक्तरीत्याध्यवसितभक्तेरपि नृगस्य जि-
न वक्तीत्यादियमवाक्यविरुद्धं यमलोकगमनं प्राप्तवतः कि-
चार्थवादकल्पनामयं भावं श्रुतशास्त्रस्यापि तस्य सत्यां तादृशमा-
त्मायां भक्तौ श्रीमदम्बरीषादिवत् सेवाग्रहं परित्यज्य दानकर्मा-
न स्यात्। तादृशापराधे भक्तिस्तम्भश्च श्रूयते। यथा पाद्मे नाम-
राधभञ्जनस्तोत्रे—नामैकं यस्य वाचि स्मरणपथगतं श्रोत्रमूलं गतं
शुद्धं वाशुद्धवर्णं व्यवहितरहितं तारयत्येव सत्यम्। तच्चेद्देहद्र-
जनतालोभपाषण्डमध्ये निक्षिप्तं स्यान्न फलजनकं शीघ्रमे-
विप्रेति। देहादिलोभार्थं ये पाषण्डा गुर्ववज्ञादिदशापराध-
स्तन्मध्ये इत्यर्थः। स्कान्दे प्रह्लादसंहितायां द्वारकामाहात्म्ये—पूजि-
भगवान् विष्णुर्जन्मान्तरशतैरपि। प्रसीदति न विश्वात्मा
चावमानिते। स्कान्द एवान्यत्र मार्कण्डेयभगीरथसंवादे—दृष्ट्वा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वतं दूरात् सम्मुखे नोपयाति हि । न गृह्णाति हरिस्तस्य पूजां द्वादशवार्षिकीम् । दृष्ट्वा भागवतं विप्रं नमस्कारेण नार्च्चयेत् । देहिनस्तस्य पापस्य न च वै क्षमते हरिः ॥ इति । एवं बहून्येवापराधान्तराण्यपि दृश्यन्ते । एवमेव श्रीविष्णुपुराणे शतधनुर्नाम्नो राज्ञो भगवदाराधनतत्परस्यापि वेदवैष्णवनिन्दकाल्पसम्भाषयैव कुक्कुरादियोनिप्राप्तिरुक्ता । अतः, शुश्रूषोः श्रद्दधानस्य इत्यादौ आवृत्तिरसकृदुपदेशादित्यादौ च पुरुषाणां प्रायः सापराधत्वाभिप्रायेणैवावृत्तिविधानम् । सापराधानामावृत्त्यपेक्षा चोक्ता पाद्मे नामापराधभञ्जनस्तोत्रे नामोपलक्ष्य—नामापराधयुक्तानां नामान्येव हरन्त्यघम् । अविश्रान्तिप्रयुक्तानि तान्येवार्थकराणि चेति । एतदपेक्षयैव त्रैलोक्यसम्मोहनतन्त्रादावष्टादशाक्षरादेरावृत्तिविधानम् । यथा—इदानीं शृणु देवि त्वं केवलस्य मनोर्विधिम् । दशकृत्वो जपेन्मन्त्रमापत्कल्पेन मुच्यते । सहस्रजप्तेन तथा मुच्यते महतैनसा । अयुतस्य जपेनैव महापातकनाशनम् ॥ इत्यादि । तथा ब्रह्मवैवर्त्ते नामोपलक्ष्य—हनन् ब्राह्मणमत्यन्तं कामतो वा सुरां पिवन् । कृष्ण कृष्णेत्यहोरात्रं सङ्कीर्त्त्य शुचितामियादित्यादि । अत्रापराधालम्बनत्वेनैव वर्त्तमानानां पापवासनानां सहैवापराधेन नाश इति तात्पर्य्यम् । एतादृशप्रतिबन्धापेक्षयैवोक्तं विष्णुधर्म्मे—रागादिदूषितं चित्तं नास्पदं मधुसूदने । बध्नाति न रतिं हंसः कदाचित् कर्द्दमाम्बुनि । न योग्या केशवं स्तोतुं वाग्दुष्टा चानृतादिना । तमसो नाशनायालं नेन्दोर्लेखा घनावृतेति । सिद्धानामावृत्तिस्तु प्रतिपदमेव सुखविशेषोदयार्था । असिद्धानामावृत्तिनियमः फलपर्य्याप्तिपर्य्यन्तः । तदन्तरायेऽपराधावस्थितिवितर्कात् । यतः कौटिल्यम् अश्रद्धा भगन्निष्ठाचरावकवस्त्वन्तराभिनिवेशो भक्तिशैथिल्यं स्वभक्त्यादिकृतमानित्वमित्येवमादीनि महत्सङ्गादिलक्षणभक्त्यापि निवर्त्तयितुं दुष्कराणि चेत्तर्हि तस्यापराधस्यैव कार्य्याणि तान्येव च प्राचीनस्य तस्य लिङ्गानि । अतएव कुटिलात्म-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नामुत्तममपि नानोपचारादिकं नाङ्गीकरोति भगवान् यथा दूत्यगते दुर्य्योधनस्य। आधुनिकानाञ्च श्रुतशास्त्रानामप्यपराधदोषेण श्रीभगवति श्रीगुरौ तद्भक्तादिषु चान्तरानादरादावपि सति वहिस्तदर्च्चनाद्या-रम्भः कौटिल्यम्। अत एवाकुटिलमूढ़ानां भजनाभासादिनापि कृतार्थत्वमुक्तम्। कुटिलानान्तु भक्त्यनुवृत्तिरपि न भवतीति स्कान्दे श्रीपराशरवाक्ये दृश्यते—नह्यपुण्यवतां लोके मूढ़ानां कुटिलात्मनाम्। भक्तिर्भवति गोविन्दे कीर्त्तनं स्मरणं तथेति। एतदपेक्षयोक्तं विष्णुधर्म्मे—सत्यं शतेन विघ्नानां सहस्रेण तथा तपः। विघ्नायुतेन गोविन्दे नृनां भक्तिर्निवार्य्यत इति। अत एवाह—तं सुखाराध्यमृजुभिरनन्यशरणैर्नृभिः। कृतज्ञः को न सेवेत दुराराध्यमसाधुभिः॥ १५३॥

स्पष्टम्॥३॥१९॥ श्रीसूतः॥१५३॥

यथैव भगवद्भक्ता अप्यकुटिलात्मनोऽज्ञाननुगृह्णन्ति नतु कुटिलात्मनो विज्ञानिति दृश्यते। यथा—दूरे हरिकथाः केचित् दूरे चाच्युतकीर्त्तनाः। स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम्। विप्रो राजन्यवैश्यो वा हरेः प्राप्ताः पदान्तिकम्। श्रौतेन जन्मनाथापि मुह्यन्त्याम्नायवादिनः॥१५४॥

टीका च—तत्र येऽज्ञास्ते भवद्विधानामनुग्राह्या इत्याह दूरे इति। ज्ञानबलदुर्विदग्धास्त्वचिकित्स्यत्वादुपेक्ष्या इत्याशयेनाह विप्र इतीत्येषा॥११॥५॥ श्रीचमसो निमिम्॥ १५४॥

अथाश्रद्धा दृष्टे श्रुतेऽपि तन्महिमादौ विपरीतभावनादिना विश्वासाभावः। यथा दुर्य्योधनस्यैव विश्वरूपदर्शनादावपि। अतएव यथा—आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन्, इत्यादि श्रीशौनकस्य दन्ता गजानां कुलिशाग्रनिष्ठुराः इति श्रीप्रह्लादस्य अनुभवसिद्धं तथा सर्वेषाम्। ईदृशमानुषङ्गिकं फलन्तु शुद्धभक्तैर्भगवन्महिमज्ञानेच्छा यदि स्यात् तदैवेष्यते। न तु स्वरक्षणाय स्वमहिमदर्शन

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वा। यथैवोक्तं, दन्ता गजानां कुलिशाग्रनिष्ठुराः शीर्णा यदेते न बलं ममैतत् । महाविपत्पातविनाशनोऽयं जनार्द्दनानुस्मरणानुभावः ॥ इति। श्रीपरीक्षित्प्रभृतिभिस्तु तदपि नेष्टम् । यथा—द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथा इति ॥१५५॥

स्पष्टम् ॥१॥१९॥ राजा ॥ १५५ ॥

अत एवाधुनिकेषु महानुभावलक्षणवत्सु तद्दर्शनेऽपि नाविश्वासः कर्त्तव्यः। कुत्रचिद्भगवदुपासनाविशेषेणैव तादृशमानुषङ्गिकं फलमुदयते। यथा—यदैकपादेन स पार्थिवात्मजः तस्थौ तदङ्गुष्ठनिपीड़िता मही। ननाम तत्रार्द्धमिभेन्द्रधिष्ठिता तरीव सव्येतरतः पदे पदे ॥१५६॥

अत्र सर्वात्मकतयैव विष्णुसमाधिना तादृक् फलमुदितम् । एतादृश्युपासना चास्य भाविज्योतिर्मण्डलात्मकविश्वचालनपदोपयोगितयोदितेति ज्ञेयम् ॥ ४ ॥ ८ ॥ श्रीमैत्रेयः ॥ १५६ ॥

अथ भगवन्निष्ठाच्यावकवस्त्वन्तराभिनिवेशो यथा—एवमघटमानमनोरथाकुलहृदयो मृगदारकाभासेन स्वारब्धकर्म्मणा योगारम्भनतो विभ्रंशितः स योगतापसो भगवदाराधनलक्षणाच्चेति ॥ १५७ ॥

सः श्रीभरतः। अत्रैवं चिन्त्यम् । भगवद्भक्त्यन्तरायकं सामान्यमारब्धकर्म्म न भवितुमर्हति दुर्बलत्वात् । ततः प्राचीनापराधात्मकमेव तल्लभ्यते इन्द्रद्युम्नादीनामिवेति ॥ ५ ॥ ८ ॥ श्रीशुकः ॥ १५७ ॥

केचित्तु साधारणस्यैव प्रारब्धस्य तादृशेषु भक्तेषु प्राबल्यं तदुत्कण्ठावर्द्धनार्थं स्वयं भगवतैव क्रियत इति मन्यन्ते। सा च वर्णिता मृगदेहं प्राप्तस्य तस्य। यथैव श्रीनारदस्य पूर्वजन्मनि जातरतेरपि कषायरक्षणमाह—हन्तास्मिन् जन्मनि भवान् मा मां द्रष्टुमिहार्हति। अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम् ॥ १५८ ॥

स्पष्टम् ॥ १ ॥ ६ ॥ श्रीभगवान् ॥१५८॥

तदेवमपराधहेतुकतदभिनिवेशोदाहरणं गजेन्द्रादीनां विषया-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वस्थायां कार्य्यम्। अथ भक्तिशैथिल्यम्। येनाध्यात्मिकादिसुखदुःख-
निष्ठैवोल्लसति। भक्तितत्पराणान्तु तत्रानादरो भवति। यथा सहस्र-
नामस्तोत्रे—न वासुदेवभक्तानामशुभं विद्यते क्वचित्। जन्ममृत्यु-
जराव्याधिभयञ्चाप्युपजायते॥ इति। या तु सत्साधकस्य मनुष्यदेहे
रिरक्षिषा जायते साप्युपासनावृद्धिलोभेन न तु देहमात्ररिरक्षिषयेति
न तथा च भक्तितात्पर्य्यहानिः। तदेवं विवेकसामर्थ्ययुक्तस्यापि
भक्तितात्पर्य्यव्यतिरेकगम्यं तच्छैथिल्यं मध्ये मध्ये रच्यमानया भक्त्या
यन्न दूरीक्रियते तदपराधालम्बनमेवेति गम्यते। अतएवापराधा-
मानाप्रवृत्तेर्मूढ़े चासमर्थे चाल्पेन सिद्धिः समर्थैव। तत्र दीनदयार्द्र-
श्रीभगवतः कृपा चाधिका प्रवर्त्तते। किन्तु विवेकसामर्थ्ययुक्ते स-
त्यपि योऽपराधापातो भवति सोऽत्यन्तदौरात्म्यादेव। तद्विपरीतेन
नातिदौरात्म्यादिति विदुषः समर्थस्य शतधनुषोऽन्तरायोऽनन्तरविहित-
भगवदुपासनस्यापि युक्त एव। मूढ़ानान्तु मूषिकादीनामपराधे
सिद्धिस्तथैव युक्ता; दौरात्म्याभावेन भजनस्वरूपप्रभावस्यापराधा-
क्रम्योदयात्। अथ भक्त्यादिकृताभिमानत्वञ्चापराधकृतमेव वैष्णवा-
मानादिलक्षणापराधान्तरजनकत्वात्। यथा दक्षस्य प्राक्तनश्रीशिवा-
राधेन प्राचेतसत्वावस्थायां श्रीनारदापराधजन्मापि दृश्यते। तदेवं
सकृद्भजनादिनैव फलोदय उक्तस्तद्यथावदेव, यदि प्राचीनोऽर्वाचीन-
वापराधो न स्यात्। मरणे तु सर्वथा सकृदेव यथाकथञ्चिदपि भजनं
च्यते। तत्र हि तस्यैव सकृदपि भगवन्नामग्रहणादिकं जायते,
पूर्वत्र वात्र वा जन्मनि सिद्धेन भगवदाराधनादिना तदानीं स्वीय-
प्रकटयतानन्तरमेव भगवत्साक्षात्कारो भाव्यते। यं यं वापि स्मरन्
भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः॥
श्रीगीतोपनिषद्भ्यः। ततोऽपराधाभावात् तत्क्षयार्थं न तत्रावृत्ति-
यथाजामिलस्य। न तथा कृततन्नामश्रवणादिनामपि यमदूतादि-
यथाह—अथापि मे दुर्भगस्य विबुधोत्तमदर्शने। भवितव्यं म-
येनात्मा मे प्रसीदति॥ १५९॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्तद्गतप्राणाः पुरुषाः संयतेन्द्रियाः ॥ अत एव, सकृदेव प्रपन्नो यस्तवास्मीति च याचते। अभयं सर्वथा तस्मै ददाम्येतद्‌व्रतं मम ॥ इति रामायणे श्रीरामचन्द्रवाक्यञ्च। सकृदेव प्रपन्नो यस्तवास्मीति च याचते। अभयं सर्वथा तस्मै ददात्येतद्‌व्रतं हरेरिति च गरुड़पुराणम्। तथाचाह—आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन्। ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम् ॥ इति ॥ १४९ ॥

स्पष्टम् ॥ १ ॥ १ ॥ श्रीशौनकः ॥ १४९ ॥

तथा—न हि भगवन्न घटितमिदं त्वद्दर्शनान्नृनामखिलपापक्षयः। यन्नामसकृत्श्रवणात् पुक्कशोऽपि विमुच्यते साक्षात् ॥१५०॥

स्पष्टम् ६॥१६॥ चित्रकेतुः श्रीसङ्कर्षणम् ॥ १५० ॥

अत एवोक्तं श्रीविष्णुधर्म्मोत्तरे—जीवितं विष्णुभक्तस्य वरं पञ्चदिनानि वै। न तु कल्पसहस्राणि भक्तिहीनस्य केशवे ॥ इति। अत्र यत् तृतीये गर्भस्थस्य जीवस्य भगवतः स्तुतिः श्रूयते, तस्यैव च संसारोऽपि वर्ण्यते, तत्रोच्यते, जात्येकवत्त्वेनैवैकवद्वर्णनमिति। वस्तुतस्तु कश्चिदेव जीवो भाग्यवान् भगवन्तं स्तौति। स च निस्तरत्यपि। न तु सर्वस्यापि भगवज्ज्ञानं भवति। तथा च नैरुक्ताः पठन्ति—नवमे सर्वाङ्गसम्पूर्णो भवतीति पठित्वा, मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः, इत्यादि तद्भावनापाठानन्तरम्, अवाङ्मुखः पीड्यमानो जन्तुभिश्च समन्वितः। सांख्ययोगं समभ्यसेत् पुरुषं वा पञ्चविंशकम्। ततश्च दशमे मासि प्रजायत इत्यादि। अत्र पुरुषं वेति वाशब्दात् कस्यचिदेव भगवज्ज्ञानमिति गम्यते। सर्वास्वप्यवस्थासु भक्तेः समर्थत्वन्तु वर्णितम्। भेदेऽप्येकवद्वर्णनमन्यत्रापि दृश्यते। तृतीये यथा पाद्मकल्पसृष्टिकथनेऽपि श्रीसनकादीनां सृष्टिः कथ्यत इति। टीकायाञ्च ब्रह्मकृतसृष्टिमात्रकथनसाम्येनैकीकृत्योक्तिरियमिति योजितम्। श्रीवराहावतारवर्णने तत्र प्रथममन्वन्तरस्यादौ पृथिवीमज्जने ब्रह्मनासिकातोऽवतीर्णः श्रीवराह-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्तामुद्धरन् हिरण्याक्षेण संग्रामं कृतवानिति वर्ण्यते। हिरण्याक्ष
षष्ठमन्वन्तरस्यावसानजातप्राचेतसदक्षकन्याया दितेर्जातः। तस्मात्
वर्णनं तदवतारस्याचलत्वपृथिवीमज्जनमात्रत्वे क्वचिद्विवक्षयैव घटते। त
दत्रापीति। कश्चिदेवान्यो जन्यो जीवः स्तौत्यन्यः संसरतीत्येव मन्तव्य
अत्र पूर्ववत् परमगतिप्राप्तौ भक्तेः परम्पराकारणत्वञ्च दृश्यते। बृहन्ना
रदीये ध्वजारोपणमाहात्म्ये—यतीनां विष्णुभक्तानां परिचर्य्यापराय
ईक्षिता अपि गच्छन्ति पापिनोऽपि पराङ्गतिम्॥ इति। एवं विष्णु
धर्म्मे कुलानां शतमागामि समतीतं तथा शतम्। कारयन् भगवद्
नयत्यच्युतलोकताम्। ये भविष्यन्ति येऽतीता आकल्यात् पुरुषाः कुले
तांस्तारयति संस्थाप्य देवस्य प्रतिमां हरेरिति। दूतान् प्रति यमा
चेयम्—येनार्च्चा भगवद्भक्त्या वासुदेवस्य कारिता। नवायुतं तत्कुल
भवतां शासनातिगमिति। यथाह—त्रिःसप्तभिः पिता पूतः पितृभि
सह तेऽनघ। यत् साधोऽस्य गृहे जातो भवान् वै कुलपावनः॥१४॥

त्रिःसप्तभिः प्राचीनकल्पगततदीयपूर्वपूर्वजन्मसम्बन्धिभिः पितृभि
सह अस्मिन् जन्मनि हिरण्यकशिपुकश्यपमरीचिब्रह्माण एव त
पितर इति॥ ७॥ १०॥ श्रीनृसिंहः प्रह्लादम्॥ १५१॥

तथा भक्त्याभासस्यापि सर्वपापक्षयपूर्वकश्रीविष्णुपदप्रापक
यथा बृहन्नारदीये—कोकिलमानिनोर्मदिरोन्मत्तयो र्धूर्तचौरख
दण्डयोर्जीर्णभगवन्मन्दिरे नृत्यतोः ध्वजारोपणफलप्राप्त्या तादृ
जातम्। तथा व्याधहतस्य पक्षिणः कुक्कुरमुखगतस्य तत्पलायन
भगवन्मन्दिरपरिक्रमणफलप्राप्त्या तादृशत्वप्राप्तिरिति। क्वचित्तत्र भ
भक्तिप्राप्तिश्च। यथा बृहन्नारसिंहपुराणे श्रीप्रह्लादस्य तस्य प्रा
जन्मनि वेश्यया सह विवादेन श्रीनृसिंहचतुर्दश्यां दैवादुपवासः स
जागरणञ्चेति। तथाचाह—यस्यावतारगुणकर्म्मविडम्बनानि नामानि
येऽसुविगमे विवशा गृणन्ति। तेऽनेकजन्मशमलं सहसैव हि
संयान्त्यपावृतमृतं तमजं प्रपद्ये॥ १५२॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

असुविगमेऽपीति तदानीन्तनमात्रत्वमशुक्लवर्णत्वञ्च व्यञ्जितम् । विवशा इति तदिच्छां विना केनचित् कारणान्तरेणापीत्यर्थः । वश कान्तावित्यमरः । तादृशशक्तित्वे हेतुमाह अवतारेति । अवतारादि-सदृशानि तत्तत्तुल्यशक्तीनीत्यर्थः । तत्रावतारविड़म्बनानि नृसिंहेत्या-दीनि गुणविड़म्बनानि भक्तवात्सल्येत्यादीनि । कर्म्मविड़म्बनानि गोवर्द्धनधारणादीनि च ॥ ३ ॥९॥ ब्रह्मा श्रीगर्भोदकशायिनम् ॥१५२॥

अस्तु तावत् शुद्धभक्त्याभासवार्त्ता । अपराधत्वेन दृश्यमानोऽप्यसौ महाप्रभावो दृश्यते । यथा विष्णुधर्मे भगवन्मन्त्रेण कृतमिजरक्षं विप्रं प्रति राक्षसवाक्यम्—त्वामत्तुमागतः क्षिप्तो रक्षया कृतया त्वया । तत्-संसर्गाच्च मे ब्रह्मन् साध्वेतन्मनसि स्थितम् । का सा रक्षा न तां वेद्मि वेद्मि नास्याः परायणम् । किन्त्वस्याः सङ्गमासाद्य निर्वेदं प्रापितः पर-मिति । यथा वा विष्णुधर्म्माद्युदाहृतायाः श्रीभगवद्गृहदीपतैलं पिबन्त्याः कस्याश्चिन्मूषिकायाः दैवतो मुखोद्धृतवर्त्तौ दीपे समुज्ज्वलिते सति मुख-दाहेन मरणात् राज्ञीत्वं प्राप्य दीपदानादिलक्षणभक्तिनिष्ठाप्राप्तिरन्ते परमपदप्राप्तिश्च । यथा ब्रह्माण्डपुराणे जन्माष्टमीमाहात्म्ये कृतजन्मा-ष्टमीकायाः दास्याः दुःसङ्गेनापि कस्यचित् तत्फलप्राप्तिः । तथाच बृहन्नारदीये—तादृशदुष्टकार्य्यार्थमपि भगवन्मन्दिरं मार्जयित्वा कश्चि-दुत्तमां गतिमवाप । नत्वीदृशत्वं ब्रह्मज्ञानस्यापि । यथोक्तं ब्रह्म-वैवर्त्ते—विषयस्नेहसंयुक्तो ब्रह्माहमिति यो वदेत् । गर्भवाससहस्रेषु पच्यते पापकृन्नर इति । अथ श्रीभगवद्दशीकारितायामपि सकृदल्प-प्रयासात्मिकाया अपि भक्तेः कारणता दृश्यते । यथा ब्रह्मपुराणे शिव-वाक्यम्—दृष्टः पश्येदहरहः संश्रितः प्रतिसंश्रयेत् । अर्चितश्चार्चये-न्नित्यं स देवो द्विजपुङ्गवा इति । यथा च विष्णुधर्मे—तुलसीदलमात्रेण जलस्य चुलुकेन च । विक्रीणीते स्वमात्मानं भक्तेभ्यो भक्तवत्सल इति । तदीदृशं माहात्म्यवृन्दं न प्रशंसामात्रमजामिलादौ प्रसिद्धत्वात् । दर्शिताश्च न्यायाः श्रीभगवन्नामकौमुद्यादौ । तथैव नाम्नोऽर्थवादकल्पनायां

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दोषोऽपि श्रूयते, तथार्थवादो हरिनाम्नीति हि पाद्मे नामापराध-
गणने। अर्थवादं हरेर्नाम्नि सम्भावयति यो नरः। स पापिष्ठो मनुष्याणां
निरये पतति स्फुटम् इति कात्यायनसंहितायाम्। मन्नामकीर्त्तनफलं
विविधं निशम्य न श्रद्दधाति मनुते यदुतार्थवादम्। यो मानुषस्तमिह
दुःखचये क्षिपामि संसारघोरविविधार्त्तिनिपीड़िताङ्गम्॥ इति
ब्रह्मसंहितायां बौधायनं प्रति श्रीपरमेश्वरोक्तौ। ततोऽन्तर्मुख-
नामानुसन्धानेष्वन्येषु तद्भजनेषु च सुतरामेवार्थवादे दोषोऽवगम्यते।
तदेवं यथार्थ एव तन्माहात्म्ये सत्यपि यत्र सम्प्रति तद्भजनफलोदयो
न दृश्यते, कुत्रचिच्छास्त्रे च पुरातनानामप्यन्यथा श्रूयते, तत्र नामार्थ-
वादकल्पना वैगुण्यानादरादयो दुरन्ता अपराधा एव प्रतिबन्धकारण-
वक्तव्यम्। अतएवोक्तं श्रीशौनकेन—तदश्मसारं हृदयं बतेदं
यद्गृह्यमाणैर्हरिनामधेयैः। न विक्रियेताथ यदा विकारो नेत्रे जलं
गात्ररुहेषु हर्ष इति। यथा प्रायेण आधुनिकानाम्। यथा वा, ब्रह्म-
ण्यस्य वदान्यस्य तव दासस्य केशव। स्मृतिर्नाद्यापि विध्वस्ता भवत्-
सन्दर्शनार्थिन इति। तदुक्तरीत्याध्यवसितभक्तेरपि नृगस्य जिह्व-
न वक्तीत्यादियमवाक्यविरुद्धं यमलोकगमनं प्राप्तवतः विप्र-
चार्थवादकल्पनामयं भावं श्रुतशास्त्रस्यापि तस्य सत्यां तादृशमाहा-
त्म्यायां भक्तौ श्रीमदम्बरीषादिवत् सेवाग्रहं परित्यज्य दानकर्माग्रहं
न स्यात्। तादृशापराधे भक्तिस्तम्भश्च श्रूयते। यथा पाद्मे नामाप-
राधभञ्जनस्तोत्रे—नामैकं यस्य वाचि स्मरणपथगतं श्रोत्रमूलं गतं वा
शुद्धं वाशुद्धवर्णं व्यवहितरहितं तारयत्येव सत्यम्। तच्चेद्देहद्रविण-
जनतालोभपाषण्डमध्ये निक्षिप्तं स्यान्न फलजनकं शीघ्रमेवात्र
विप्रेति। देहादिलोभार्थं ये पाषण्डा गुर्ववज्ञादिदशापराधयुक्ता-
स्तन्मध्ये इत्यर्थः। स्कान्दे प्रह्लादसंहितायां द्वारकामाहात्म्ये—पूजितो
भगवान् विष्णुर्जन्मान्तरशतैरपि। प्रसीदति न विश्वात्मा वैष्णवे
चावमानिते। स्कान्द एवान्यत्र मार्कण्डेयभगीरथसंवादे—दृष्ट्वा भाग-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वतं दूरात् सम्मुखे नोपयाति हि । न गृह्णाति हरिस्तस्य पूजां द्वादश-वार्षिकीम् । दृष्ट्वा भागवतं विप्रं नमस्कारेण नार्च्चयेत् । देहिन-स्तस्य पापस्य न च वै क्षमते हरिः ॥ इति । एवं बहून्येवापराधान्त-राण्यपि दृश्यन्ते । एवमेव श्रीविष्णुपुराणे शतधनुर्नाम्नो राज्ञो भगवदाराधनतत्परस्यापि वेदवैष्णवनिन्दकाल्पसम्भाषयैव कुक्कुरादि-योनिप्राप्तिरुक्ता । अतः, शुश्रूषोः श्रद्दधानस्य इत्यादौ आवृत्तिरसकृदुप-देशादित्यादौ च पुरुषाणां प्रायः सापराधत्वाभिप्रायेणैवावृत्तिविधानम् । सापराधानामावृत्त्यपेक्षा चोक्ता पाद्मे नामापराधभञ्जनस्तोत्रे नामो-पलक्ष्य—नामापराधयुक्तानां नामान्येव हरन्त्यघम् । अविश्रान्ति-प्रयुक्तानि तान्येवार्थकराणि चेति । एतदपेक्षयैव त्रैलोक्यसम्मोहन-तन्त्रादावष्टादशाक्षरादेरावृत्तिविधानम् । यथा—इदानीं शृणु देवि त्वं केवलस्य मनोर्विधिम् । दशकृत्वो जपेन्मन्त्रमापत्कल्पेन मुच्यते । सहस्र-जप्तेन तथा मुच्यते महतैनसा । अयुतस्य जपेनैव महापातकना-शनम् ॥ इत्यादि । तथा ब्रह्मवैवर्त्ते नामोपलक्ष्य—हनन् ब्राह्मण-मत्यन्तं कामतो वा सुरां पिवन् । कृष्ण कृष्णेत्यहोरात्रं सङ्कीर्त्त्य शुचि-तामियादित्यादि । अत्रापराधालम्बनत्वेनैव वर्त्तमानानां पापवासनानां सहैवापराधेन नाश इति तात्पर्य्यम् । एतादृशप्रतिबन्धापेक्षयै-वोक्तं विष्णुधर्म्मे—रागादिदूषितं चित्तं नास्पदं मधुसूदने । बध्नाति न रतिं हंसः कदाचित् कर्द्दमाम्बुनि । न योग्या केशवं स्तोतुं वाग्-दुष्टा चानृतादिना । तमसो नाशनायालं नेन्दोर्लेखा घनावृतेति । सिद्धानामावृत्तिस्तु प्रतिपदमेव सुखविशेषोदयार्था । असिद्धानामा-वृत्तिनियमः फलपर्य्याप्तिपर्य्यन्तः । तदन्तरायेऽपराधावस्थितिवित-र्कात् । यतः कौटिल्यम् अश्रद्धा भगन्निष्ठाचरावकवस्त्वन्तराभिनिवेशो भक्तिशैथिल्यं स्वभक्त्यादिकृतमानित्वमित्येवमादीनि महत्सङ्गादि-लक्षणभक्त्यापि निवर्त्तयितुं दुष्कराणि चेत्तर्हि तस्यापराधस्यैव कार्य्याणि तान्येव च प्राचीनस्य तस्य लिङ्गानि । अतएव कुटिलात्म-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नासुत्तममपि नानोपचारादिकं नाङ्गीकरोति भगवान् यथा दूत्यगते दुर्य्योधनस्य। आधुनिकानाञ्च स्रुतशास्त्रानामप्यपराधदोषेण श्रीभगवति श्रीगुरौ तद्भक्तादिषु चान्तरानादरादावपि सति वहिस्तदर्चनाद्यारम्भः कौटिल्यम्। अत एवाकुटिलमूढ़ानां भजनाभासादिनापि कृतार्थत्वमुक्तम्। कुटिलानान्तु भक्त्यनुवृत्तिरपि न भवतीति स्कान्दे श्रीपराशरवाक्ये दृश्यते—नह्यपुण्यवतां लोके मूढ़ानां कुटिलात्मनाम्। भक्तिर्भवति गोविन्दे कीर्त्तनं स्मरणं तथेति। एतदपेक्षयोक्तं विष्णुधर्म्मे—सत्यं शतेन विघ्नानां सहस्रेण तथा तपः। विघ्नायुतेन गोविन्दे नृणां भक्तिर्निवार्य्यत इति। अत एवाह—तं सुखाराध्यमृजुभिरनन्यशरणैर्नृभिः। कृतज्ञः को न सेवेत दुराराध्यमसाधुभिः १५३ ॥

स्पष्टम् ॥३॥१९॥ श्रीसूतः ॥१५३॥

यथैव भगवद्भक्ता अप्यकुटिलात्मनोऽज्ञाननुगृह्णन्ति नतु कुटिलात्मनो विज्ञानिति दृश्यते। यथा—दूरे हरिकथाः केचित् दूरे चाच्युतकीर्त्तनाः। स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम्। विप्रो राजन्यवैश्यो वा हरेः प्राप्ताः पदान्तिकम्। श्रौतेन जन्मनाथापि मुह्यन्त्याम्नायवादिनः ॥१५४॥

टीका च—तत्र येऽज्ञास्ते भवद्विधानामनुग्राह्या इत्याह द्वि इति। ज्ञानवलदुर्विदग्धास्त्वचिकित्स्यत्वादुपेक्ष्या इत्याशयेनाह विप्र इतीत्येषा ॥११॥५॥ श्रीचमसो निमिम् ॥ १५४ ॥

अथाश्रद्धा दृष्टे श्रुतेऽपि तन्महिमादौ विपरीतभावनादिना विश्वासाभावः। यथा दुर्य्योधनस्यैव विश्वरूपदर्शनादावपि। अतएव यथा आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन्, इत्यादि श्रीशौनकवाक्ये गजानां कुलिशाग्रनिष्ठुराः इति श्रीप्रह्लादस्य अनुभवसिद्धेऽपि तथा सर्व्वेषाम्। ईदृशमानुषङ्गिकं फलन्तु शुद्धभक्तैर्भगवन्महिमज्ञापनेच्छा यदि स्यात् तदैवेष्यते। न तु स्वरक्षणाय स्वमहिमदर्शनाय

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वा। यथैवोक्तं, दन्ता गजानां कुलिशाग्रनिष्ठुराः शीर्णा यदेते न बलं ममैतत्। महाविपत्पातविनाशनोऽयं जनार्द्दनानुस्मरणानुभावः॥ इति। श्रीपरीक्षित्प्रभृतिभिस्तु तदपि नेष्टम्। यथा—द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथा इति॥१५५॥

स्पष्टम्॥१॥१९॥ राजा॥ १५५॥

अत एवाधुनिकेषु महानुभावलक्षणवत्सु तद्दर्शनेऽपि नाविश्वासः कर्त्तव्यः। कुत्रचिद्भगवदुपासनाविशेषेणैव तादृशमानुषङ्गिकं फलमुदयते। यथा—यदैकपादेन स पार्थिवात्मजः तस्थौ तदङ्गुष्ठनिपीड़िता मही। ननाम तत्रार्द्धमिभेन्द्रधिष्ठिता तरीव सव्येतरतः पदे पदे॥१५६॥

अत्र सर्वात्मकतयैव विष्णुसमाधिना तादृक् फलमुदितम्। एतादृश्युपासना चास्य भाविज्योतिर्मण्डलात्मकविश्वचालनपदोपयोगितयोदितेति ज्ञेयम्॥ ४॥ ८॥ श्रीमैत्रेयः॥ १५६॥

अथ भगवन्निष्ठाच्यावकवस्त्वन्तराभिनिवेशो यथा—एवमघटमानमनोरथाकुलहृदयो मृगदारकाभासेन स्वारब्धकर्म्मणा योगारम्भनतो विभ्रंशितः स योगतापसो भगवदाराधनलक्षणाच्चेति॥ १५७॥

स श्रीभरतः। अत्रैवं चिन्त्यम्। भगवद्भक्त्यन्तरायकं सामान्यमारब्धकर्म्म न भवितुमर्हति दुर्बलत्वात्। ततः प्राचीनापराधात्मकमेव तल्लभ्यते इन्द्रद्युम्नादीनामिवेति॥ ५॥ ८॥ श्रीशुकः॥ १५७॥

केचित्तु साधारणस्यैव प्रारब्धस्य तादृशेषु भक्तेषु प्राबल्यं तदुत्कण्ठावर्द्धनार्थं स्वयं भगवतैव क्रियत इति मन्यन्ते। सा च वर्णिता मृगदेहं प्राप्तस्य तस्य। यथैव श्रीनारदस्य पूर्वजन्मनि जातरतेरपि कषायरक्षणमाह—हन्तास्मिन् जन्मनि भवान् मा मां द्रष्टुमिहार्हति। अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम्॥ १५८॥

स्पष्टम्॥ १॥ ६॥ श्रीभगवान्॥१५८॥

तदेवमपराधहेतुकतदभिनिवेशोदाहरणं गजेन्द्रादीनां विषया-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वस्थायां कार्य्यम्। अथ भक्तिशैथिल्यम्। येनाध्यात्मिकादिसुखदुःख
निष्ठैवोल्लसति। भक्तितत्पराणान्तु तत्रानादरो भवति। यथा सहस्र
नामस्तोत्रे—न वासुदेवभक्तानामशुभं विद्यते क्वचित्। जन्मम
जराव्याधिभयञ्चाप्युपजायते॥ इति। या तु सत्साधकस्य मनुष्यदे
रिरंसिषा जायते साप्युपासनावृद्धिलोभेन न तु देहमात्ररिरंसिषयेति
न तथा च भक्तितात्पर्य्यहानिः। तदेवं विवेकसामर्थ्ययुक्तस्य
भक्तितात्पर्य्यव्यतिरेकगम्यं तच्छैथिल्यं मध्ये मध्ये रच्यमानया म
यन्न दूरीक्रियते तदपराधालम्बनमेवेति गम्यते। अतएवापराध
मानाप्रवृत्ते मूढ़े चासमर्थे चाल्पेन सिद्धिः समर्थैव। तत्र दीनदयां
श्रीभगवतः कृपा चाधिका प्रवर्त्तते। किन्तु विवेकसामर्थ्ययुक्ते स
त्यपि योऽपराधापातो भवति सोऽत्यन्तदौरात्म्यादेव। तद्विपरी
नातिदौरात्म्यादिति विदुषः समर्थस्य शतधनुषोऽन्तरायोऽनन्तरवि
भगवदुपासनस्यापि युक्त एव। मूढ़ानान्तु मूषिकादीनामपरा
सिद्धिस्तथैव युक्ता; दौरात्म्याभावेन भजनस्वरूपप्रभावस्यापराध
कस्योदयात्। अथ भक्त्यादिकृताभिमानत्वञ्चापराधकृतमेव वैष्ण
मानादिलक्षणापराधान्तरजनकत्वात्। यथा दक्षस्य प्राक्तनश्रीशि
राधेन प्राचेतसत्वावस्थायां श्रीनारदापराधजन्मापि दृश्यते। तदेवं
सकृद्भजनादिनैव फलोदय उक्तस्तद्यथावदेव, यदि प्राचीनोऽर्वा
वापराधो न स्यात्। मरणे तु सर्वथा सकृदेव यथाकथञ्चिदपि भज
च्यते। तत्र हि तस्यैव सकृदपि भगवन्नामग्रहणादिकं जायते,
पूर्वत्र वात्र वा जन्मनि सिद्धेन भगवदाराधनादिना तदानीं स्वी
प्रकटयतानन्तरमेव भगवत्साक्षात्कारो भाव्यते। यं यं वापि
भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावित
गीतोपनिषद्भ्यः। ततोऽपराधाभावात् तत्क्षयार्थं न तत्रापेक्ष
यथाजामिलस्य। न तथा कृततन्नामश्रवणादिनामपि यमदूत
यथाह—अथापि मे दुर्भगस्य विबुधोत्तमदर्शने। भवितव्यं म
येनात्मा मे प्रसीदति॥ १५८॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पूर्वेण मङ्गलेन महता पुण्येन इति टीका च। व्यतिरेकेणाह—अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः। वैकुण्ठनामग्रहणं जिह्वा वक्तुमिहार्हति ॥ १६० ॥

स्पष्टम् ॥ ६ ॥ २ ॥ श्रीमानजामिलः ॥ १६० ॥

यत्तु श्रीभरतस्य मृगशरीरं त्यजतो नामानि गृह्णोऽपि शरीरान्तरप्राप्तिस्तत्रापि साक्षाद्भगवत्प्राप्तिरेव ; तादृशानां हृदि सदाविर्भावात्। एवमजामिलस्य पूर्वशरीरावस्थितावपि ज्ञेयम्। ततो मरणसमये मङ्गलजनस्यानन्तरमेव कृतार्थत्वप्रापणे व्यभिचारो न स्यात्। अतएवाह—एतावान् सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया जन्मलाभः परः पुंसामन्ते नारायणस्मृतिः ॥ १६१ ॥

टीका च—एतावानेव जन्मनो लाभः फलम्। तमाह, नारायणस्मृतिरिति। सांख्यादिभिः साध्य इति तेषां स्वातन्त्र्येण लाभत्वं वारयति। अन्ते तु स्मृतिः परो लाभः। न तन्महिमा वक्तुं शक्यत इत्यर्थः इत्येषा। नामकौमुदीकारैश्चान्तिमप्रत्ययोऽभ्यर्हित इत्युक्तम् ॥ २ ॥ १ ॥ श्रीशुकः ॥ १६१ ॥

अतएवाजामिलस्यान्यदापि पुत्रोपचारितं [illegible] नाम गृह्णतः प्रयाणे चाप्रयाणे च, यन्नामस्मरणान्नृणाम्। सद्यो नश्यति पापौघो नमस्तस्मै चिदात्मने। इति पाद्मे देवद्युतिस्तुत्यनुसारेण, जरामरणदशायामपि सकलकल्मषजनिरसनानि तव गुणकृतनामधेयानीति पञ्चमोक्तगद्यस्थितापिशब्देन प्रथमनामग्रहणादेव क्षीणसर्वपापस्यापि मरणे यन्नामग्रहणं तत्प्रशंसैव श्रूयते। तत्राप्यावृत्त्या—अथैनं मापनयत कृताशेषाघनिष्कृतिम्। यदसौ भगवन्नाम म्रियमाणः समग्रहीदित्यादि ॥ १६२ ॥

अशेषशब्दोऽत्र वासनापर्य्यन्तः। अघशब्दश्चापराधपर्य्यन्त इति। अत्र मरणे सर्वेषां दैन्योदयोऽपि श्रीभगवत्कृपातिशयद्वारमिति द्रष्टव्यम् ॥ ६ ॥ २ ॥ श्रीविष्णुदूताः यमदूतान् ॥ १६२ ॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदेवमधिकारिविशेषं प्राप्यैव तत्तत्फलोदयो दृष्टः। यथैव पू मुदाहृतम्। यथा च जातरुचिं प्राप्य—तव विक्रीड़ितं कृष्ण परममङ्गलम्। कर्णपीयूषमासाद्य त्यजन्त्यन्यस्पृहां जनाः॥ १६१॥

अतएवोक्तम्—न क्रोधो न च मात्सर्य्यं न लोभो न शुभा मतिः भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तम इति॥ ११॥ ६॥ श्री उद्धवः॥ १६२॥

जातप्रेमाणं प्राप्य—नैषातिदुःसहा क्षुन्मां त्यक्तोदमपि वा पिबन्तं त्वन्मुखाम्भोजच्युतं हरिकथामृतम्॥ १६४॥

स्पष्टम्॥ १०॥ १॥ श्रीराजा॥ १६४॥

व्याख्याते यथाकथञ्चिद्भजनसम्यग्भजनावृत्ती। तदेवं भगवद्‌ धर्म्मादिसाध्यत्वात् तां विनान्येषामकिञ्चित्करत्वात्तस्याः स्वतः समर्थत्वात् स्वलेशेन स्वभासादिनापि परमार्थपर्य्यन्तप्रापकत्वात् वर्णानां नित्यत्वाच्च साक्षात् भक्तिरूपं तत्साम्मुख्यमेवाव नार्थ स्थितम्। इयमेव केवलत्वात् अनन्यताख्या। अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते। तेषां नित्याभियुक्तानां योगं

अमलया नि नाभक्त्या यजन्ते श्रद्धयान्विताः। स्यापि भक्तेर्नटनमात्रत्वं स्वार्थसाधन॰ इत्यव्यवहितवाक्य मात्रत्वात्। यथा परेषामपि नटानां क्वचित् तदनुकरण तत्र सकामत्वमैहिकं पारलौकिकञ्चेति द्विविधम्। तत् सर्वं निषिध्यते श्रीनागपत्नीवचनादौ—न पारमेष्ठ्यं न महेन्द्रधिष्ण्यमि दिना। तस्माद्वैवस्वतमनुपुत्रस्य पृषध्रस्य तु मुमुक्षोरप्येकान्ति व्यपदेशो गौण एव बोद्धव्यः। मा मां प्रलोभयोत्पत्त्यासक्तं तैर्वरैः। तत्सङ्गभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रित इत्यत्र श्रीप्र वाक्ये मुमुक्षा तु कामत्यागेच्छैव। यदि रासीश मे कामान् वरां वरदर्षभ। कामानां हृद्यसंरोहं भवतस्तु वृणे वरमिति वक्ष्यमा भक्तियोगस्य तत् सर्वमन्तरायतयार्भक इति श्रीनारदेन

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्वञ्च संज्ञापितम् । मत्तोऽप्यनन्तात् परतः परस्मात् स्वर्गापवर्गाधिपतेर्न किञ्चित् । येषां किमु स्यादितरेण तेषामकिञ्चनानां मयि भक्तिभाजामिति श्रीऋषभदेववाक्यात् । अकामः सर्वकामो वा इत्यादेश्च । तथा इयमेवैकान्तितेत्यप्युच्यते । एकान्तिनो यस्य न कञ्चनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्ना इति गजेन्द्रवाक्यात् । एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः । एकान्तित्वात् भगवति नैच्छत्तानसुरोत्तम इति नारदवाक्याच्च । अतएवोक्तं गारुड़े—एकान्तेन सदा विष्णौ यस्मादेव परायणाः । तस्मादेकान्तिनः प्रोक्तास्तद्भागवतचेतस इति । एषा एवोपदिष्टा श्रीगीतोपनिषत्सु—भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप । मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेति पाण्डवेति । मत्कर्म श्रवणकीर्त्तनादि । अहमेव परमः साधनत्वेन साध्यत्वेन च यस्य । अतएव साधनसाध्यान्तरसङ्गविवर्जित इति व्याख्येयम् । इमामेव भक्तिमाह—तस्मादर्थाश्च कामाश्च [illegible]म् । यदपाश्रयाः । भजतानीहयात्मानमनीहं हरिमीश्वरम् [illegible] भगवत्येवं

यदपाश्रया यदधीना तं हरिमित्यन्वयः ।

त्यागेन । अनीहं तथैव कामनानाम् । स्मरणञ्च । पादसेवनं परिचर्य्या । अर्च्चनं विष्णुतत्पूजा । वन्दनं नमस्कारः । दास्यं तद्दासोऽस्मीत्यभिमानम् । सख्यं बन्धुभावेन तदीयहिताशंसनम् । आत्मनिवेदनं गवाश्वादिस्थानीयस्य स्वदेहादिसंघातस्य तदेकभजनार्थं विक्रयस्थानीयतस्मिन्नर्पणम् । यत्र तद्भरणपालनचिन्तापि स्वयं न क्रियते । उदाहृतानि चैतानि प्राचीनैः—श्रीविष्णोः श्रवणे परीक्षिदभवद्वैयासकिः कीर्त्तने प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने । अक्रूरस्त्वभिवन्दने कपिपतिर्दास्येऽथ सख्येऽर्जुनः सर्वस्वात्मनिवेदने बलिरभूत् कृष्णाप्तिरेषां परमिति । इति नवलक्षणानि यस्याः सा भगवति तद्विषयिका श्रद्धा साक्षाद्रूपा न तु कर्माद्यर्पणरूपा पारम्परिकी भक्तिरियं तत्रापि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अयं प्रभुरात्मनो मानं पूजां जनान्निजभक्तान्न वृणोति नेच्छति। हे
हेतुर्निजस्य भक्तस्यैव लाभेन पूर्णः परमसन्तुष्टः। हेत्वन्तरं, का
पूजार्थं तत्प्रयासाद्दावसहिष्णुः। कथम्भूताज्जनाद्विदुषः, पितु
बालकवत् तस्याग्रे न किञ्चिदपि जानतः। एषा स्वस्य जनैकवर्ग
दैन्योक्तिः। यद्वा तदावेशेनान्यत् किञ्चिदपि न जानत इत्यर्थः। अ
यत्र पक्षेऽपि तच्च तस्य कारुण्यहेतुरिति भावः। तर्हि किं जन
मानं न कुरुत एवेत्याशङ्क्याह यदिति। स च जनः यं यं मानं
वते विदधीत सम्पादयति स सर्वोऽप्यात्मार्थमेव। तत्सम्मानमात्रे
स्वसम्माननाभिमननात् सुखं मन्यमानस्तन्मानं करोत्येवेत्यर्थः। त
सम्मानमात्रेण स्वसम्मानश्च तदेकजीवनस्य तज्जनस्य युक्त एवं
दृष्टान्तमाह, यथा मुखे या शोभा क्रियते तन्मात्रमेव प्रतिमु
शोभायैव भवति नान्यदिति ॥ ७ ॥ ८ ॥ प्रह्लादः श्रीनृसिंहम् ॥१

अतएवाह—नालं द्विजत्वं देवत्वमृषित्वं वासुरात्मजाः। प्री
नाय मुकुन्दस्य न वृत्तिं न बहुज्ञता। न दानं न तपो नेज्या
शौचं न व्रतानि च। प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम् ॥१
अमलया निष्कामया। विडम्बनं नटनमात्रम्। अतः सकामभ
स्यापि भक्तेर्नटनमात्रत्वं स्वार्थसाधनमात्रतात्पर्येण भक्तानुक
मात्रत्वात्। यथा परेषामपि नटानां क्वचित् तदनुकरणन्तर्थ
तत्र सकामत्वमैहिकं पारलौकिकञ्चेति द्विविधम्। तत् स
निषिध्यते श्रीनागपत्नीवचनादौ—न पारमेष्ठ्यं न महेन्द्रधिष्ण्यमि
दिना। तस्माद्वैवस्वतमनुपुत्रस्य पृषध्रस्य तु मुमुक्षोरप्येकान्ति
व्यपदेशो गौण एव बोद्धव्यः। मा मां प्रलोभयोत्पत्त्यासक्तं
तैर्वरैः। तत्सङ्गभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रित इत्यत्र श्रीप्र
वाक्ये मुमुक्षा तु कामत्यागेच्छैव। यदि रासीश मे कामान्
वरदर्षभ। कामानां हृद्यसंरोहं भवतस्तु वृणे वरमिति वक्ष्यमा
भक्तियोगस्य तत् सर्वमन्तरायतयार्भक इति श्रीनारदेन

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्वाच्च । एवं श्रीमदम्बरीषस्य यज्ञविधानमपि लोकसंग्रहार्थमेव ज्ञेयम् । तमुद्दिश्याप्येकान्तभक्तिभावेनेत्युक्तमस्ति । तत्र चैहिकं निष्कामत्वं भक्त्या जीविकाप्रतिष्ठाद्युपार्जनं यत्तदभावमयमपि बोद्धव्यम् । विष्णुं यो नोपजीवतीति गारुड़े शुद्धभक्तिलक्षणात् । मौनव्रतश्रुततपोऽध्ययनस्वधर्म्मव्याख्यारहोजपसमाधय आपवर्ग्याः । प्रायः परं पुरुष ते त्वजितेन्द्रियाणां वार्त्ता भवन्त्युत न वा वत दाम्भिकानामिति श्रीप्रह्लादवाक्यवत् । मौनादय एवाजितेन्द्रियाणां वार्त्ता जीवनोपाया भवन्ति । दाम्भिकानान्तु वार्त्ता अपि भवन्ति न वा दम्भस्यानियतफलत्वादित्यर्थः । अतएवोक्तम्—आराधनं भगवत ईहमाना निराशिषः । ये तु नेच्छन्त्यपि परं ते स्वार्थकुशलाः स्मृता इति । परं मोक्षमपीति टीका च । तस्मात् साधूक्तं नालं द्विजत्वमित्यादि ॥७॥६॥ प्रह्लादोऽसुरबालकान् ॥ १६८ ॥

ततोऽस्या एव भक्तेः सर्वशास्त्रसारत्वमाह—श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् । अर्च्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् । इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा । क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ १६९ ॥

श्रवणकीर्त्तने तदीयनामादीनाम् । स्मरणञ्च । पादसेवनं परिचर्य्या । अर्च्चनं विध्युक्तपूजा । वन्दनं नमस्कारः । दास्यं तद्दासोऽस्मीत्यभिमानम् । सख्यं बन्धुभावेन तदीयहिताशंसनम् । आत्मनिवेदनं गवाश्वादिस्थानीयस्य स्वदेहादिसङ्घातस्य तदेकभजनार्थं विक्रयस्थानीयतस्मिन्नर्पणम् । यत्र तद्भरणपालनचिन्तापि स्वयं न क्रियते । उदाहृतानि चैतानि प्राचीनैः—श्रीविष्णोः श्रवणे परीक्षिदभवद्वैयासकिः कीर्त्तने प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने । अक्रूरस्त्वभिवन्दने कपिपतिर्दास्येऽथ सख्येऽर्जुनः सर्वस्वात्मनिवेदने वलिरभूत् कृष्णाप्तिरेषां परमिति । इति नवलक्षणानि यस्याः सा भगवति तद्विषयिका अद्धा साक्षाद्रूपा न तु कर्मार्द्यर्पणरूपा पारम्परिकी भक्तिरियं तत्रापि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीविष्णोरेवार्पिता तदर्थमेवेदमिति भाविता न तु धर्मार्थादिष्वर्पि
एवम्भूता चेत् क्रियते तदा तेन कर्त्रा यदधीतं तदुत्तमं मन्य इत्यर्थः
तथाच श्रीगोपालतापनीश्रुतिः—भक्तिरस्य भजनं तदिहामुत्रोपाधि
नैरास्येनामुष्मिन् मनःकल्पनमेतदेव नैष्कर्म्यमिति। अत्र नवलक्षणा
इति समुच्चयो नावश्यकः। एकेनैवाङ्गेन साध्याव्यभिचारश्रवणात्
क्वचिदन्याङ्गमिश्रणन्तु तथापि भिन्नश्रद्धारुचित्वात्। ततो नवलक्षण
शब्देन भक्तिसामान्योक्त्या तन्मात्रानुष्ठानं विधीयते इति ज्ञेयम्
नवलक्षणत्वञ्चास्या अन्येषामप्यङ्गानां तदन्तर्भावादुक्तम्॥७॥
श्रीप्रह्लादः स्वपितरम्॥ १६९॥

अथास्या अकिञ्चनाख्याया भक्तेः सर्वोपरिभूमिकावस्थितिर्म
कारिविशेषनिष्ठत्वञ्च दर्शयितुं प्रक्रियान्तरम्। तत्र परतत्त्वस्य वैमुख
परिहाराय यथाकथञ्चित् साम्मुख्यमात्रं कर्त्तव्यत्वेन लभ्यते। त
त्रिधा। निर्विशेषरूपस्य तदीयब्रह्माख्याविर्भावस्य ज्ञान
सविशेषरूपस्य च तदीयभगवदाद्याख्याविर्भावस्य भक्तिरूपमि
द्वयम्। तृतीयञ्च तस्य द्वयस्यैव द्वारं कर्मार्पणरूपमिति। तदेतत्
पुरुषयोग्यताभेदेन व्यवस्थापयितुं लोकसामान्यतो ज्ञानकर्मभक्ती
मेवोपायत्वं नान्येषामित्यनुवदति—योगास्त्रयो मया प्रोक्ता नृणां श्रे
विधित्सया। ज्ञानं कर्म्म च भक्तिश्च नोपायोऽन्योऽस्ति कु
चित्॥ १७०॥

योगा उपायाः। मया शास्त्रयोनिना श्रेयांसि मुक्तित्रिवर्गप्रे
अनेन भक्तेः कर्म्मत्वञ्च व्यावृत्तम्। तेष्वधिकारिहेतूनाह द्वाभ्यां
निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्म्मसु। तेष्वनिर्विण्णचि
कर्म्मयोगश्च कामिनाम्। यदृच्छया मत्कथादौ जातश्रद्ध
पुमान्। न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः॥ १७
इह एषां मध्ये निर्विण्णानामैहिकपारलौकिकविषयप्र
सुखेषु विरक्तचित्तानाम् अतएव तत्साधनभूतेषु लौकिकवैदिक

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न्यासिनां तानि त्यक्तवतामित्यर्थः । पदद्वयेन दृढ़जातमुमुक्षूणामित्यभिप्रेतम् । तेषां ज्ञानयोगः सिद्धिदः इत्युत्तरेणान्वयः । कामिनां तत्तत्सुखेषु रागिनाम् अतएव तेषु साधनभूतेषु कर्म्मसु अनिर्विण्णचित्तानां तानि त्यक्तुमसमर्थानां कर्मयोगः सिद्धिदः तत्संकल्पानुरूपफलदः । अथ ते वै विदन्त्यतितरन्ति च देवमायामित्यादौ तिर्य्यग्जना अपीत्यनेन भक्त्यधिकारे कर्म्मादिवज्जात्यादिकृतनियमातिक्रमात् श्रद्धामात्रं हेतुरित्याह यदृच्छयेति । यदृच्छया केनापि परमस्वतन्त्रभगवद्भक्तसङ्गतत्कृपाजातमङ्गलोदयेन । यदुक्तं, शुश्रूषोः श्रद्दधानस्येत्यादि । तदेतत् पद्यं स्वयमेव अग्रे व्याख्यास्यते द्वाभ्याम्—जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु । वेद दुःखात्मकान् कामान् परित्यागेऽप्यनीश्वरः । ततो भजेत मां प्रीतः श्रद्धालुर्दृढ़निश्चयः । जुषमानश्च तान् कामान् दुःखोदर्कांश्च गर्हयन् ॥ १७२ ॥

कथेत्युपलक्षणं मत्कथादिषु । एतदेव केवलं परमं श्रेय इति जातविश्वासः । अतएवान्येषु कर्मसु उद्विग्नः । किन्तु व[र्त्त]मानेषु प्राचीनकर्मफलभोगेषु एवम्भूत इत्याह, वेदेति । तत[स्त]त वदेत्यादिव्याख्यातां न निर्विण्णो नातिसक्त इत्येवंलक्षणामवस्थामारभ्यैवेत्यर्थः । मां भजेत मदीयानन्यताख्यभक्तावधिकारी स्यान्न तु ज्ञानवज्जातसम्यग्वैराग्य एव । तस्याः स्वतः सर्वशक्तिमत्त्वे नान्यनिरपेक्षत्वादित्यर्थः । अनन्तरञ्च वक्ष्यते—तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह । यत् कर्मभिर्यत्तपसा इत्यादि । न च कर्मनिर्वेदसापेक्षत्वमापतितम् । स तु भक्तेः सर्वोत्तमत्वविश्वासेन स्वत एव प्रवर्त्तते । अतो निर्व्विण्ण इत्यनुवादमात्रम् । अतएव यद्यपि ज्ञानकर्मणोरपि श्रद्धापेक्षास्त्येव तां विना वहिरन्तः सम्यक्प्रवृत्त्यनुपपत्तेस्तथाप्यत्र श्रद्धामात्रस्य कारणत्वेन विशेषतस्तदङ्गीकारः । अत्रापि च तदपेक्षा पूर्ववत् सम्यक्प्रवृत्त्यर्थैव । तां विनानन्यताख्या भक्तिस्तथा न प्रवर्त्तते । कदाचित् किञ्चित् प्रवृत्ता च

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नश्यतीति। अतएव न निर्विण्णो नातिसक्त इत्यस्यानन्तरमपि म
कथाश्रवणादौ वेत्यत्र श्रद्धायां जातायामेव कर्मपरित्यागो विहित
भक्तिमात्रन्तु तां विना सिध्यति। सकृदपि परिगीतं श्रद्धया हेलया
वा भृगुवर नरमात्रं तारयेत् कृष्णनामेत्यादौ। सतां प्रसङ्गान्मम वीर्य
संविदो भवन्ति हृत्कर्णरसायणाः कथाः तज्जोषणादाश्वपवर्गवर्त्मनि
श्रद्धा रतिर्भक्तिरनुक्रमिष्यतीत्यादौ च। तत्पूर्वतोऽपि तस्याः फलदातृत्व
श्रवणात्। म्रियमाणो हरेर्नाम गृणन् पुत्रोपचारितम्। अजामिलो
ऽप्यगाद्धाम किमुत श्रद्धया गृणन्। इत्यादौ तया फलदातृत्वसौष्ठ
श्रवणाच्च। सा च श्रद्धा शास्त्राभिधेयावधारणस्यैवाङ्गं तद्विश्वासरू
त्वात्। ततो नानुष्ठानाङ्गत्वे प्रविशति। भक्तिश्च फलोत्पादने विश्वि
पेक्षापि न स्यात्। दाहादिकर्मणि वह्न्यादिवत्। भगवच्छ्रवणकीर्त
दीनां स्वरूपस्थतादृशशक्तित्वात्। ततस्तस्याः श्रद्धाद्यपेक्षा
स्यात्। अतः श्रद्धां विना क्वचिन्मूढादौ अपि सिद्धिर्दृश्यते श्र
हेलया वा इत्यादौ। हेला त्वपराधरूपाप्यबुद्धिपूर्वकत्वात चेद्दौरात्म्य
भावे न भक्तिं बाध्यत इत्युक्तमेव। ज्ञानबलदुर्विदग्धादौ तु त
रीत्येन बाध्यते। यथा मत्सरेण नामादि गृह्णाति वेणे क्वचित्तस्य
र्बाधिता दृश्यते। आर्द्रेन्धनादौ वह्निशक्तिरिव। श्रद्धयोपहृतं
भक्तेन मम वार्य्यपि। भूर्य्यप्यभक्तोपहृतं न मे तोषाय कल्
इत्यत्र श्रद्धाभक्तिशब्दाभ्यामादर एवोच्यते। स तु भगवत्तो
लक्षणफलविशेषस्योत्पत्तावनादरलक्षणतद्विघातकापराधस्य
सनपरः। तस्मात् श्रद्धा न भक्त्यङ्गं किन्तु कर्मस्वधिक
विद्वत्तावदनन्यताख्यायां भक्तावधिकारिविशेषणमेवेत्यत एव
शेषणत्वेनैवोक्तं, यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमा
जातश्रद्धो मत्कथास्विति च। अत्र तामारभ्येत्यर्थेन ल्यब्लोपे
म्यन्तेन तत इति पदेनानवधिकनिर्देशेनात्मारामतावस्थायामपि
केषाञ्चित् प्रवर्त्तत इति तस्याः साम्राज्यमभिप्रेतम्। 

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पूर्वेण मङ्गलेन महता पुण्येन इति टीका च। व्यतिरेकेणाह—अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः। वैकुण्ठनामग्रहणं जिह्वा वक्तुमिहार्हति ॥ १६० ॥

स्पष्टम् ॥ ६ ॥ २ ॥ श्रीमानजामिलः ॥ १६० ॥

यत्तु श्रीभरतस्य मृगशरीरं त्यजतो नामानि गृह्णोऽपि शरीरान्तरप्राप्तिस्तत्रापि साक्षाद्भगवत्प्राप्तिरेव; तादृशानां हृदि सदाविर्भावात्। एवमजामिलस्य पूर्वशरीरावस्थितावपि ज्ञेयम्। ततो मरणसमये सद्भक्तजनस्थानन्तरमेव कृतार्थत्वप्रापणे व्यभिचारो न स्यात्। अतएवाह—एतावान् सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया जन्मलाभः परः पुंसामन्ते नारायणस्मृतिः ॥ १६१ ॥

टीका च—एतावानेव जन्मनो लाभः फलम्। तमाह, नारायणस्मृतिरिति। सांख्यादिभिः साध्य इति तेषां स्वातन्त्र्येण लाभत्वं वारयति। अन्ते तु स्मृतिः परो लाभः। न तन्महिमा वक्तुं शक्यत इत्यर्थः इत्येषा। नामकौमुदीकारैश्चान्तिमप्रत्ययोऽभ्यर्हित इत्युक्तम् ॥ २ ॥ १ ॥ श्रीशुकः ॥ १६१ ॥

अतएवाजामिलस्यान्यदापि पुत्रोपचारितं नारायणनाम गृह्णतः प्रयाणे चाप्रयाणे च, यन्नामस्मरणान्नृणाम्। सद्यो नश्यति पापौघो नमस्तस्मै चिदात्मने। इति पाद्मे देवद्युतिस्तुत्यनुसारेण, जरामरणदशायामपि सकलकश्मलनिरसनानि तव गुणकृतनामधेयानीति पञ्चमोक्तगद्यस्थितापिशब्देन प्रथमनामग्रहणादेव क्षीणसर्वपापस्यापि मरणे यन्नामग्रहणं तत्प्रशंसैव श्रूयते। तत्राप्यावृत्त्या—अथैनं मापनयत कृताशेषाघनिष्कृतिम्। यदसौ भगवन्नाम म्रियमाणः समग्रहीदित्यादि ॥ १६२ ॥

अशेषशब्दोऽत्र वासनापर्य्यन्तः। अघशब्दश्चापराधपर्य्यन्त इति। अत्र मरणे सर्वेषां दैन्योदयोऽपि श्रीभगवत्कृपातिशयद्वारमिति द्रष्टव्यम् ॥ ६ ॥ २ ॥ श्रीविष्णुदूताः यमदूतान् ॥ १६२ ॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदेवमधिकारिविशेषं प्राप्यैव तत्तत्फलोदयो दृष्टः। यथैव पू-
मुदाहृतम्। यथा च जातरुचिं प्राप्य—तव विक्रीड़ितं कृष्ण नृ
परममङ्गलम्। कर्णपीयूषमासाद्य त्यजन्त्यन्यस्पृहां जनाः॥ १६३॥

अतएवोक्तम्—न क्रोधो न च मात्सर्य्यं न लोभो न शुभा मति
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तम इति॥ ११॥ ६॥ श्री
उद्धवः॥ १६३॥

जातप्रेमाणं प्राप्य—नैषातिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते
पिवन्तं त्वन्मुखाम्भोजच्युतं हरिकथामृतम्॥ १६४॥

स्पष्टम्॥ १०॥ १॥ श्रीराजा॥ १६४॥

व्याख्याते यथाकथञ्चिद्भक्तजनसम्यग्भजनावृत्ती। तदेवं भगवदा-
धर्म्मादिसाध्यत्वात् तां विनान्येषामकिञ्चित्करत्वात्तस्याः स्वतः
समर्थत्वात् स्वलेशेन स्वभासादिनापि परमार्थपर्य्यन्तप्रापकत्वात् स-
वर्णानां नित्यत्वाच्च साक्षात् भक्तिरूपं तत्सांमुख्यमेवाभिधे-
यत्विति स्थितम्। इयमेव केवलत्वात् अनन्यताख्या। अनन्या-
श्चिन्तयन्तो मां ये जनाः पर्य्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं
वहाम्यहम्॥ येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः। ते
मामेव कौन्तेय यजन्त्यविधिपूर्वकम्॥ इत्यव्यवहितवाक्यद्वयोक्त-
व्यतिरेकोक्त्या अनन्यत्वं नाम ह्यन्योपासनाराहित्येन तद्भजनमु-
इत्थमेवाङ्गीकृतम्—अपि चेत् सुदुराचारो भजते मामनन्यभाक्त्वा-
तस्याश्च महादुर्बोधत्वं महादुर्लभत्वञ्चोक्तम्—धर्मस्तु साक्षाद्भग-
प्रणीतं न वै विदु ऋषयो नापि देवाः इत्यादौ। येऽभ्यर्थिता-
च नो नृगतिं प्रपन्ना इत्यादौ च। तदेवं तस्याः श्रवणादिरू-
साक्षाद्भक्तेः सर्वविघ्ननिवारणपूर्वकसाक्षाद्भगवत्प्रेमफलदत्वे
परमदुर्लभत्वे च सत्यन्यकामनया च नाभिधेयत्वम्। तथा चतुर्थे
दुराराध्यमाराध्य सतामपि दुरापया। एकान्तभक्त्या को वाञ्छेत्
मूलं विना वहिरिति तन्मात्रकामनायाश्च भक्तेरेवाकिञ्चनत्वम्

त्वञ्च संज्ञापितम् । मत्तोऽप्यनन्तात् परतः परस्मात् स्वर्गापवर्गाधिपतेर्न किञ्चित् । येषां किमु स्यादितरेण तेषामकिञ्चनानां मयि भक्तिभाजामिति श्रीऋषभदेववाक्यात् । अकामः सर्वकामो वा इत्यादेश्च । तथा इयमेवैकान्तितेत्यप्युच्यते । एकान्तिनो यस्य न कञ्चनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्ना इति गजेन्द्रवाक्यात् । एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः । एकान्तित्वात् भगवति नैच्छत्तानसुरोत्तम इति नारदवाक्याच्च । अतएवोक्तं गारुड़े—एकान्तेन सदा विष्णौ यस्मादेव परायणाः । तस्मादेकान्तिनः प्रोक्तास्तद्भागवतचेतस इति । एषा एवोपदिष्टा श्रीगीतोपनिषत्सु—भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप । मत्कर्म्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेति पाण्डवेति । मत्कर्म्म श्रवणकीर्त्तनादि । अहमेव परमः साधनत्वेन साध्यत्वेन च यस्य । अतएव साधनसाध्यान्तरसङ्गविवर्जित इति व्याख्येयम् । इमामेव भक्तिमाह—तस्मादर्थाश्च कामाश्च धर्माश्च यदपाश्रयाः । भजतानीहयात्मानमनीहं हरिमीश्वरम् ॥ १६५ ॥

यदपाश्रया यदधीना तं हरिमित्यन्वयः । अनीहया कामनात्यागेन । अनीहं तथैव कामनाशून्यम् । इच्छाकाङ्क्षा स्पृहा त्वड़ित्यमरः ॥ ७ ॥ ६ ॥ श्रीप्रह्लादः असुरबालकान् ॥ १६५ ॥

तथैवोभयोः कामनाशून्यत्वं स्वयमेवाह—आशासानो नैव भृत्यः स्वामिन्याशिषमात्मनः । न स्वामी भृत्यतः स्वाम्यमिच्छन् यो राति चाशिषः । अहन्त्वकामस्त्वद्भक्तस्त्वञ्च स्वाम्यनपाश्रयः । नान्यथेहावयोरर्थो राजसेवकयोरिव ॥ १६६ ॥

स्पष्टम् ॥ ७ ॥ १० ॥ प्रह्लादः श्रीनृसिंहम् ॥ १६६ ॥

एवमेवाह—नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते । यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥ १६७ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अयं प्रभुरात्मनो मानं पूजां जनान्निजभक्तान्न वृणोति नेच्छति। तत्र हेतुर्निजस्य भक्तस्यैव लाभेन पूर्णः परमसन्तुष्टः। हेत्वन्तरं, करुण, पूजार्थं तत्प्रयासादावसहिष्णुः। कथम्भूताज्जनादविदुषः, पितुरग्रे वालकवत् तस्याग्रे न किञ्चिदपि जानतः। एषा स्वस्य जनैकवर्गत्वेन दैन्योक्तिः। यद्वा तदावेशेनान्यत् किञ्चिदपि न जानत इत्यर्थः। अ यत्र पक्षेऽपि तच्च तस्य कारुण्यहेतुरिति भावः। तर्हि किं जनस्तस्य मानं न कुरुत एवेत्याशङ्क्याह यदिति। स च जनः यं यं मानं भगवते विदधीत सम्पादयति स सर्वोऽप्यात्मार्थमेव। तत्सम्मानमात्रेण स्वसम्माननाभिमननात् सुखं मन्यमानस्तन्मानं करोत्येवेत्यर्थः। तत्र सम्मानमात्रेण स्वसम्मानश्च तदेकजीवनस्य तज्जनस्य युक्त एवेति दृष्टान्तमाह, यथा मुखे या शोभा क्रियते तन्मात्रमेव प्रतिमुख शोभायैव भवति नान्यदिति ॥ ७ ॥ ८ ॥ प्रह्लादः श्रीनृसिंहम् ॥१

अतएवाह—नालं द्विजत्वं देवत्वमृषित्वं वासुरात्मजाः। प्री नाय मुकुन्दस्य न वृत्तिं न बहुज्ञता। न दानं न तपो नेज्या शौचं न व्रतानि च। प्रीयतेऽमलया भक्त्या हरिरन्यद्विड़म्बनम् ॥१

अमलया निष्कामया। विड़म्बनं नटनमात्रम्। अतः सकामस्यापि भक्तेर्नटनमात्रत्वं स्वार्थसाधनमात्रतात्पर्य्येण भक्त्यनुकरणमात्रत्वात्। यथा परेषामपि नटानां क्वचित् तदनुकरणत्वमेव। तत्र सकामत्वमैहिकं पारलौकिकञ्चेति द्विविधम्। तत् सर्वं निषिध्यते श्रीनागपत्नीवचनादौ—न पारमेष्ठ्यं न महेन्द्रधिष्ण्यमि दिना। तस्माद्वैवस्वतमनुपुत्रस्य पृषध्रस्य तु मुमुक्षोरप्येकान्ति व्यपदेशो गौण एव बोद्धव्यः। मा मां प्रलोभयोत्पत्त्यासक्तं का तैर्वरैः। तत्सङ्गभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रित इत्यत्र श्रीप्र वाक्ये मुमुक्षा तु कामत्यागेच्छैव। यदि रासीश मे कामान् वरां वरदर्षभ। कामानां हृद्यसंरोहं भवतस्तु वृणे वरमिति वक्ष्यमा भक्तियोगस्य तत् सर्वमन्तरायतयार्भक इति श्रीनारदेन

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्वाच्च। एवं श्रीमदम्बरीषस्य यज्ञविधानमपि लोकसंग्रहार्थमेव ज्ञेयम्। तमुद्दिश्याप्येकान्तभक्तिभावेनेत्युक्तमस्ति। तत्र चैहिकं निष्कामत्वं भक्त्या जीविकाप्रतिष्ठाद्युपार्जनं यत्तदभावमयमपि बोद्धव्यम्। विष्णुं यो नोपजीवतीति गारुड़े शुद्धभक्तिलक्षणात्। मौनव्रतश्रुततपोऽध्ययनस्वधर्म्मव्याख्यारहोजपसमाधय आपवर्ग्याः। प्रायः परं पुरुष ते त्वजितेन्द्रियाणां वार्त्ता भवन्त्युत न वा वत दाम्भिकानामिति श्रीप्रह्लादवाक्यवत्। मौनादय एवाजितेन्द्रियाणां वार्त्ता जीवनोपाया भवन्ति। दाम्भिकानान्तु वार्त्ता अपि भवन्ति न वा दम्भस्यानियतफलत्वादित्यर्थः। अतएवोक्तम्—आराधनं भगवत ईहमाना निराशिषः। ये तु नेच्छन्त्यपि परं ते स्वार्थकुशलाः स्मृता इति। परं मोक्षमपीति टीका च। तस्मात् साधूक्तं नालं द्विजत्वमित्यादि॥७।६॥ प्रह्लादोऽसुरबालकान्॥ १६८॥

ततोऽस्या एव भक्तेः सर्वशास्त्रसारत्वमाह—श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम्। अर्च्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्। इति पुंसार्पिता विष्णो भक्तिश्चेन्नवलक्षणा। क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्॥ १६९॥

श्रवणकीर्त्तने तदीयनामादीनाम्। स्मरणञ्च। पादसेवनं परिचर्य्या। अर्च्चनं विध्युक्तपूजा। वन्दनं नमस्कारः। दास्यं तद्दासोऽस्मीत्यभिमानम्। सख्यं बन्धुभावेन तदीयहिताशंसनम्। आत्मनिवेदनं गवाश्वादिस्थानीयस्य स्वदेहादिसंघातस्य तदेकभजनार्थं विक्रयस्थानीयतस्मिन्नर्पणम्। यत्र तद्भरणपालनचिन्तापि स्वयं न क्रियते। उदाहृतानि चैतानि प्राचीनैः—श्रीविष्णोः श्रवणे परीक्षिदभवद्वैयासकिः कीर्त्तने प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने। अक्रूरस्त्वभिवन्दने कपिपतिर्दास्येऽथ सख्येऽर्जुनः सर्वस्वात्मनिवेदने बलिरभूत् कृष्णाप्तिरेषां परमिति। इति नवलक्षणानि यस्याः सा भगवति तद्विषयिका अद्धा साक्षाद्रूपा न तु कर्माद्यर्पणरूपा पारम्परिकी भक्तिरियं तत्रापि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीविष्णोरेवार्पिता तदर्थमेवेदमिति भाविता न तु धर्मार्थादिष्वर्पिता एवम्भूता चेत् क्रियते तदा तेन कर्त्रा यदधीतं तदुत्तमं मन्य इत्यर्थः। तथाच श्रीगोपालतापनीश्रुतिः—भक्तिरस्य भजनं तदिहामुत्रोपाधि नैरास्येनामुष्मिन् मनःकल्पनमेतदेव नैष्कर्म्यमिति। अत्र नवलक्षण इति समुच्चयो नावश्यकः। एकेनैवाङ्गेन साध्याव्यभिचारश्रवणात् क्वचिदन्याङ्गमिश्रणन्तु तथापि भिन्नश्रद्धारुचित्वात्। ततो नवलक्षण शब्देन भक्तिसामान्योक्त्या तन्मात्रानुष्ठानं विधीयते इति ज्ञेयम्। नवलक्षणत्वञ्चास्या अन्येषामप्यङ्गानां तदन्तर्भावादुक्तम् ॥ ७ ॥ श्रीप्रह्लादः स्वपितरम् ॥ १६९ ॥

अथास्या अकिञ्चनाख्याया भक्तेः सर्वोपरिभूमिकावस्थितिर्मा कारिविशेषनिष्ठत्वञ्च दर्शयितुं प्रक्रियान्तरम्। तत्र परतत्त्वस्य वैमुख्य परिहाराय यथाकथञ्चित् साम्मुख्यमात्रं कर्त्तव्यत्वेन लभ्यते। त त्रिधा। निर्विशेषरूपस्य तदीयब्रह्माख्याविर्भावस्य ज्ञान सविशेषरूपस्य च तदीयभगवदाद्याख्याविर्भावस्य भक्तिरूपमि द्वयम्। तृतीयञ्च तस्य द्वयस्यैव द्वारं कर्मार्पणरूपमिति। तदेतत् पुरुषयोग्यताभेदेन व्यवस्थापयितुं लोकसामान्यतो ज्ञानकर्मभक्ती मेवोपायत्वं नान्येषामित्यनुवदति—योगास्त्रयो मया प्रोक्ता नृणां श्रे विधित्सया। ज्ञानं कर्म्म च भक्तिश्च नोपायोऽन्योऽस्ति कु चित् ॥ १७० ॥

योगा उपायाः। मया शास्त्रयोनिना श्रेयांसि मुक्तित्रिवर्गप्रेमाणि अनेन भक्तेः कर्मत्वञ्च व्यावृत्तम्। तेष्वधिकारिहेतूनाह द्वाभ्यां निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्म्मसु। तेष्वनिर्विण्णचित्ता कर्म्मयोगश्च कामिनाम्। यदृच्छया मत्कथादौ जातश्रद्धस्तु पुमान्। न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥ १७१ ॥

इह एषां मध्ये निर्विण्णानामैहिकपारलौकिकविषयप्रतिष्ठि सुखेषु विरक्तचित्तानाम् अतएव तत्साधनभूतेषु लौकिकवैदिक

न्यासिनां तानि त्यक्तवतामित्यर्थः । पदद्वयेन दृढ़जातमुमुक्षूणामित्यभिप्रेतम् । तेषां ज्ञानयोगः सिद्धिदः इत्युत्तरेणान्वयः । कामिनां तत्तत्सुखेषु रागिनाम् अतएव तेषु साधनभूतेषु कर्मसु अनिर्विण्णचित्तानां तानि त्यक्तुमसमर्थानां कर्मयोगः सिद्धिदः तत्संकल्पानुरूपफलदः । अथ ते वै विदन्त्यतितरन्ति च देवमायामित्यादौ तिर्य्यग्जना अपीत्यनेन भक्त्यधिकारे कर्मादिवज्जात्यादिकृतनियमातिक्रमात् श्रद्धामात्रं हेतुरित्याह यदृच्छयेति । यदृच्छया केनापि परमस्वतन्त्रभगवद्भक्तसङ्गतत्कृपाजातमङ्गलोदयेन । यदुक्तं, शुश्रूषोः श्रद्दधानस्येत्यादि । तदेतत् पद्यं स्वयमेव अग्रे व्याख्यास्यते द्वाभ्याम्—जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु । वेद दुःखात्मकान् कामान् परित्यागेऽप्यनीश्वरः । ततो भजेत मां प्रीतः श्रद्धालुर्दृढ़निश्चयः । जुषमानश्च तान् कामान् दुःखोदर्कांश्च गर्हयन् ॥ १७२ ॥

कथेत्युपलक्षणं मत्कथादिषु । एतदेव केवलं परमं श्रेय इति जातविश्वासः । अतएवान्येषु कर्मसु उद्विग्नः । किन्तु वर्त्तमानेषु प्राचीनकर्मफलभोगेषु एवम्भूत इत्याह, वेदेति । ततस्तां वेदेत्यादिव्याख्यातां न निर्विण्णो नातिसक्त इत्येवंलक्षणामवस्थामारभ्यैवेत्यर्थः । मां भजेत मदीयानन्यताख्यभक्तावधिकारी स्यान्न तु ज्ञानवज्जातिसम्यग्वैराग्य एव । तस्याः स्वतः सर्वशक्तिमत्त्वे नान्यनिरपेक्षत्वादित्यर्थः । अनन्तरञ्च वक्ष्यते—तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह । यत् कर्मभिर्यत्तपसा इत्यादि । न च कर्मनिर्वेदसापेक्षत्वमापतितम् । स तु भक्तेः सर्वोत्तमत्वविश्वासेन स्वत एव प्रवर्त्तते । अतो निर्व्विण्ण इत्यनुवादमात्रम् । अतएव यद्यपि ज्ञानकर्मणोरपि श्रद्धापेक्षास्त्येव तां विना वहिरन्तः सम्यक्प्रवृत्त्यनुपपत्तेस्तथाप्यत्र श्रद्धामात्रस्य कारणत्वेन विशेषतस्तदङ्गीकारः । अत्रापि च तदपेक्षा पूर्ववत् सम्यक्प्रवृत्त्यर्थैव । तां विनानन्यताख्या भक्तिस्तथा न प्रवर्त्तते । कदाचित् किञ्चित् प्रवृत्ता च

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मश्नुतीति। अतएव न निर्विण्णो नातिसक्त इत्यस्यानन्तरमपि म
कथाश्रवणादौ वेत्यत्र श्रद्धायां जातायामेव कर्मपरित्यागो विहित
भक्तिमात्रन्तु तां विना सिध्यति। सकृदपि परिगीतं श्रद्धया हेलया
वा भृगुवर नरमात्रं तारयेत् कृष्णनामेत्यादौ। सतां प्रसङ्गान्मम वीर्य
संविदो भवन्ति हृत्कर्णरसायनाः कथाः तज्जोषणादाश्वपवर्गवर्त्मनि
श्रद्धा रतिर्भक्तिरनुक्रमिष्यतीत्यादौ च। तत्पूर्वतोऽपि तस्याः फलदात्व
श्रवणात्। म्रियमाणो हरेर्नाम गृणन् पुत्रोपचारितम्। अजामिलो
प्यगाद्धाम किमुत श्रद्धया गृणन्। इत्यादौ तथा फलदातृत्वसाक्षात्
श्रवणाच्च। सा च श्रद्धा शास्त्राभिधेयावधारणस्यैवाङ्गं तद्विश्वासरू
त्वात्। ततो नानुष्ठानाङ्गत्वे प्रविशति। भक्तिश्च फलोत्पादने विधि
पेक्षापि न स्यात्। दाहादिकर्मणि वह्न्यादिवत्। भगवच्छ्रवणकीर्तना
दीनां स्वरूपस्य तादृशशक्तित्वात्। ततस्तस्याः श्रद्धाद्यपेक्षा न
स्यात्। अतः श्रद्धां विना क्वचिन्मूढादौ ऽपि सिद्धिर्दृश्यते श्रद्धया
हेलया वा इत्यादौ। हेला त्वपराधरूपाप्यबुद्धिपूर्वककृता चेद्दौरात्म्या
भावे न भक्त्या बाध्यत इत्युक्तमेव। ज्ञानबलदुर्विदग्धादौ तु तद्वि
रीत्येन बाध्यते। यथा मत्सरेण नामादि गृह्णाति वेणे क्वचिद्वस्तु
बाधिता दृश्यते। आर्द्रेन्धनादौ वह्निशक्तिरिव। श्रद्धयोपहृतं प्रे
भक्तेन मम वार्य्यपि। भूर्य्यप्यभक्तोपहृतं न मे तोषाय कल्पते
इत्यत्र श्रद्धाभक्तिशब्दाभ्यामादर एवोच्यते। स तु भगवत्तो
लक्षणफलविशेषस्योत्पत्तावनादरलक्षणतद्विघातकापराधस्य नि
रसनपरः। तस्मात् श्रद्धा न भक्त्यङ्गं किन्तु कर्मण्यर्थित्व
विद्वत्तावदनन्यताख्यायां भक्तावधिकारिविशेषणमेवेत्यत एव वि
शेषणत्वेनैवोक्तं, यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमानिति
जातश्रद्धो मत्कथास्विति च। अत्र तामारभ्येत्यर्थेन ल्यब्लोपे प
म्यन्तेन तत इति पदेनानवधिकनिर्देशेनात्मारामतावस्थायामपि
केषाञ्चित् प्रवर्त्तत इति तस्याः साम्राज्यमभिप्रेतम्। अनन्तर

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वक्ष्यते, न किञ्चित् साधवो धीरा इति । अतः साम्राज्यज्ञापनया तां विना कर्म्मज्ञाने अपि न सिध्यत इति च ज्ञापितम् । तदेवमनन्य-भक्त्यधिकारे हेतुं श्रद्धामात्रमुक्त्वा स यथा भजेत्तथा शिक्षयति । स श्रद्धालुर्विश्वासवान्, प्रीतः जातायां रुचावासक्तः, दृढ़निश्चयः साधनाध्य-वसायभङ्गरहितश्च सन् । सहसा त्यक्तुमसमर्थत्वात् कामान् जुषमाणश्च गर्हयंश्च । गर्हणे हेतुः, दुःखोदर्कान् शोकादिकदुत्तरफलानिति । अत्र कामा अपापकरा एव ज्ञेयाः । शास्त्रे कथञ्चिदपि अन्यानुविधा-नायोगात् । प्रत्युत, परपत्नीपरद्रव्यपरहिंसासु यो मतिम् । न करोति पुमान् भूप तोष्यते तेन केशवः ॥ इति विष्णुपुराणवाक्यादौ कर्म्मार्पणात् पूर्वमेव तन्निर्षेधादत्रैव च निष्कामकर्म्मस्वपि यद्यन्यन्न समाचरेदिति वक्ष्यमाणनिषेधात् । कर्म्मपरित्यागविधानेन सुतरां दुष्कर्म्मपरित्याग-प्रत्यासत्तेः । विष्णुधर्म्मे—मर्य्यादाञ्च कृतां तेन यो भिनत्ति स मानवः । न विष्णुभक्तो विज्ञेयः साधुधर्म्मार्च्चनो हरिरिति वैष्णवे-ष्वपि तन्निषेधात् । यत्पादसेवाभिरुचिस्तपस्विनामशेषजन्मोपचितं मलं धियः । सद्यः क्षिणोतीत्यत्र सद्यःशब्दप्रयोगेन जातमात्ररुचीनां, यदा नेच्छति पापानि यदा पुण्यानि वाञ्छति । ज्ञेयस्तदा मनुष्येण हृदि तस्य हरिः स्थितः ॥ इति विष्णुधर्म्मे नियमेन च, विकर्म्म यच्चोत्-पतितं कथञ्चिद्धुनोति सर्व्वं हृदि सन्निविष्टः । इत्यत्रापि कथञ्चित्-शब्दप्रयोगेन लब्धभक्तीनाञ्च स्वतस्तत्प्रवृत्त्ययोगात् । नाम्नो बलाद्-यस्य हि पापबुद्धि र्न विद्यते तस्य यमै र्हि शुद्धिरिति पद्मे नामाप-राधभञ्जनस्तोत्रादौ हरिभक्तिबलेनापि तत्प्रवृत्तावपराधापाताच्च । अपि चेत् सुदुराचार इति तु तदनादरदोषपर एव, न तु दुराचारता-विधानपरः, क्षिप्रं भवति धर्म्मात्मेत्यनन्तरवाक्ये दुराचारतापगमस्य श्रेयस्त्वनिर्द्देशादिति ॥ ११ ॥ २० ॥ श्रीभगवान् ॥ १७०—१७२ ॥

नन्वेवं केवलानां कर्म्मज्ञानभक्तीनां व्यवस्थोक्ता । नित्यनैमित्तिकं कर्म्म तु सर्व्वेष्वेवावश्यकम् । तर्हि साङ्कर्य्ये कथं शुद्धे ज्ञानभक्ती



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रवर्त्तयातां तदेतदाशङ्क्य तयोः कर्म्माधिकारितां वारयति—तावत्
त्कर्म्माणि कुर्व्वीत न निर्व्विद्येत यावता। मत्कथाश्रवणादौ वा
श्रद्धा यावन्न जायते॥ १७२॥

कर्म्माणि नित्यनैमित्तिकादीनीति टीका च। अतएव श्रुतिस्मृ
ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते। आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि
वैष्णवः॥ इत्युक्तदोषोऽप्यत्र नास्ति, आज्ञाकरणात्। प्रत्युत जातयो
निर्व्वेदश्रद्धयो स्तत्करण एवाज्ञाभङ्गः स्यात्। यथा च व्याख्यातम्
आज्ञायैवं गुणान् दोषानित्यस्य टीकायां भक्तिदार्ढ्येन निवृत्ता
कारतया सन्त्यज्येति। निवृत्ताधिकारत्वञ्चोक्तं श्रीकरभाजनेन
देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन्। सर्व्वा
त्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्त्तमिति तेषां
किङ्करः, किन्तु श्रीभागवत एवेत्यनधिकारित्वम्। कर्त्तं कृत्यं
कर्त्तं भेदमित्यर्थे ततो देवतादीनां स्वातन्त्र्यमिति यावत्।
मेवोक्तं गारुड़े—अयं देवो मुनिर्वन्द्य एष ब्रह्मा बृहस्पतिः। इत्यादि
जायते तावत् यावन्नार्च्चयते हरिमिति। न च विकर्म्मप्रायश्चित्त
कर्म्मान्तरं कर्त्तव्यं, तस्य तच्छरणस्य विकर्म्मप्रवृत्त्यभावात्।
च्चिदापतितेऽपि विकर्म्मणि तदनुस्मरणेनैव प्रायश्चित्तस्याप्यानुष
कसिद्धिरित्यप्युक्तमनन्तरपद्येनैव—स्वपादमूलं भजतः प्रियस्य त्य
न्यभावस्य हरिः परेशः। विकर्म्म यच्चोत्पतितं कथञ्चिद् धुनोति
सर्व्वं हृदि सन्निविष्ट इति। त्यक्तोऽन्यत्र देवतान्तरे भावो
वतीव भक्तिर्येन इति च व्याख्येयम्। अत्र कर्म्मपरित्यागी
नाभिधानात् श्रद्धाशरणापत्योरैकार्थ्यं लभ्यते। तच्च युक्तम्। श्रद्धा
शास्त्रार्थविश्वासः। शास्त्रञ्च तदशरणस्य भयं तच्छरणस्याभयं
ततो जातायाः श्रद्धायास्तच्छरणापत्तिरेव लिङ्गमिति। न च
तर्पणमात्रतात्पर्य्येणापि पृथक् पृथगाराधनं कर्त्तव्यम्। यथा
मूलनिषेचनेन इत्यादौ तत्पीनत्वप्राप्तेः। न च त्वत्कृ

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मध्ये विप्रस्थगितायामपि भक्तौ तत्त्यागानुतापो युज्यते। त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदीत्याद्युक्तेः। सर्व्व-धर्म्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वां सर्व्वपापेभ्यो मोक्ष-यिष्यामि मा शुचः॥ इत्यस्य देवर्षिभूताप्तनृणामित्यादिद्वयेनैकार्थ्यं दृश्यते। अतो भक्त्यारम्भ एव तु स्वरूपत एव कर्म्मत्यागः कर्त्तव्यः। परित्यज्येत्यत्र परिशब्दस्य तथैवार्थः। गौतमीये च—न जपो नार्च्चनं नैव ध्यानं नापि विधिक्रमः। केवलं सततं कृष्णचरणाम्भोजभाविनाम्॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु इत्यादिना चानन्यामेव भक्तिमुपदिदेश। तथा विष्णुपुराणेऽपि भरतमुद्दिश्य—यज्ञेशा-च्युत गोविन्द माधवानन्त केशव। कृष्ण विष्णो हृषीकेशेत्याह राजा स केवलम्। नान्यज्जगाद मैत्रेय किञ्चित् स्वप्नान्तरेष्वपीति। अत्र वचनान्तरस्याप्यनवकाशात्। सुतरामेव तत्तद्वचनमयकर्म्मा-न्तरपरित्यागः अङ्गीकृतः। कथञ्चित् क्रियमाणमपि तन्नाम्नैव कृत-मित्यवगतेश्च सर्व्वत्र तदीक्षणाच्छुद्धभक्तित्वमेवाङ्गीकृतम्। यथोक्तं पाद्मे—सर्व्वधर्मोज्झिता विष्णो र्नाममात्रैकजल्पकाः। सुखेन यां गतिं यान्ति न तां सर्व्वेऽपि धार्म्मिका इति। तस्मान्मतान्तरेणाप्यु-पचितः श्रद्धावतोऽनन्यभक्त्यधिकारः कर्माद्यनधिकारश्चेति। किन्तु श्रद्धासद्भाव एव कथं ज्ञायते इति विचार्य्यम्। तत्र च लिङ्गत्वेन पूर्व्वं शरणापत्तिरुपदिष्टैव। यस्याञ्च शरणापत्तौ वक्ष्यमाणानि आनु-कूल्यस्य संकल्प इत्यादीनि लिङ्गानि। तथा व्यवहारकार्पण्याद्यभावो-ऽपि श्रद्धालिङ्गं ज्ञेयम्। शास्त्रं हि तथैव श्रद्धामुत्पादयति। अनन्या-श्चिन्तयन्तो मां ये जनाः पर्य्युपासते। तेषां नित्याभियुक्तानां योग-क्षेमं वहाम्यहमित्यादि। किञ्च श्रद्धावतः पुरुषस्य भगवत्सम्बन्धि-द्रव्यजातिगुणक्रियाणां शास्त्रे श्रूयमाणेष्वैहिकव्यवहारिकप्रभावेष्वपि न कथञ्चिदनाश्वासो भवति। ततस्तासु प्राकृतद्रव्यादिसाधारण-दृष्ट्या दोषविशेषानुसन्धानतो न कदाचिदप्रवृत्तिः स्यात्। ते च

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तादृशप्रभावाः, अकालमृत्युशमनं सर्व्वव्याधिविनाशनम्। सर्व्व
दुःखोपशमनं हरिपादोदकं शुभमित्यादयः। केचित्तु तत्र श्र
वन्तोऽपि स्वापराधदोषेण सम्प्रति तत्फलं नोदेति इति स्वचि
यन्ते। यत्तु, यः स्मरेत् पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिरित्य
श्रद्दधाना अपि स्नानादिकम् आचरन्ति, तत् खलु श्रीमन्नारदव्यासा
सत्परम्पराचारगौरवात् एव। अन्यथा तदतिक्रमेऽप्यपराधः स्या
ते च तथा मर्य्यादां लोकस्य कदर्य्यवृत्त्यादिनिरोधायैव स्थापित
इति ज्ञेयम्। किञ्च जातायां श्रद्धायां सिद्धावसिद्धौ च स्वर्णा
लिप्सोरिव सदा तदनुवृत्तिचेष्टैव स्यात्। सिद्धिश्चात्रानन्त
कामादिदोष-क्षयकारि-परमानन्दपरमकाष्ठागामिश्रीहरिस्फुरणं
ज्ञेया। तस्यां स्वार्थसाधनानुप्रवृत्तौ च दम्भप्रतिष्ठादिमयचेष्टालेशो
न भवति। न सुतरां ज्ञानपूर्व्वकं महदवज्ञादयोऽपराधास्तर्पण
विरोधादेव। अतएव चित्रकेतोः श्रीमहादेवापराधस्तस्य स्वा
न्तरेणाच्छन्नस्वभावस्य भागवततत्त्वाज्ञानादेव मन्तव्यः। यदि
श्रद्धावतोऽपि प्रारब्धादिवशेन विषयसम्बन्धाभ्यासो भवति, तथापि
धया विषयसम्बन्धसमयेऽपि दैन्यात्मिका भक्तिरेवोच्छलिता स्या
यथोक्तम्—जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन्
बाध्यमानोऽपि मद्भक्त इत्यादौ च। अपि चेत् सुदुराचार इत्याद्यु
नन्यभाक्त्वेन लक्षिता तु या श्रद्धा सा खलु ये शास्त्रविधि
सृज्य यजन्ते श्रद्धयान्विता इत्यादिवल्लोकपरम्पराप्राप्ता न तु
र्थावधारणजाता। शास्त्रीयश्रद्धायान्तु जातायां सुदुराचारत्वं
स्यात्। परपत्नीपरद्रव्येत्यादिविष्णुतोषणशास्त्रविरोधात्।
दाश्च कृतां तेनेत्यादिना तद्भक्तत्वविरोधाच्च। न तु सा दुरा
तद्भक्तिमहिमश्रद्धाकृतैव, अपिशब्देन दुराचारत्वस्य हेयत्वश्र
तथा, क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं निगच्छति इ
प्रतिपत्तेः। नाम्नो बलात् यस्य हि पापबुद्धिरित्यादिना

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पाताच्च । ततः सा श्रद्धा न शास्त्रीयभक्त्यधिकारिणो विशेषणत्वे प्रवेश-नीया । किन्तु प्रशंसायामेव । तादृश्यापि श्रद्धया भक्तेः सत्वहेतुत्वं, न तु देवतान्तरयजनवत् ये शास्त्रविधिमुत्सृज्येत्यादावेवोक्तम् अन्या-दृश्यत्वमिति । अस्याः श्रद्धायाः पूर्णतावस्था तु ब्रह्मवैवर्त्ते—किं सत्यमनृतञ्चेह विचारः सम्प्रवर्त्तते । विचारेऽपि कृते राजन्नसत्य-परिवर्जनम् । सिद्धं भवति पूर्णा स्यात् तदा श्रद्धा महाफलेति । तदेवंलक्षणेषु श्रद्धोत्पत्तिलक्षणेषु सत्सु विधीयते, यदृच्छया मत्-कथादौ जातश्रद्धस्तु य इत्यादि मत्कथाश्रवणादौ वेत्यादि च । अत एव-मनधिकार्य्यधिकारिविषयत्वविवक्षयेव श्रीभगवन्नारदयो र्वाक्ये व्यव-तिष्ठेते । न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम् । जोषयेत् सर्व्व-कर्म्माणि विद्वान् युक्तः समाचरन्निति । जुगुप्सितं धर्म्मकृतेऽनुशासतः स्वभावरक्तस्य महान् व्यतिक्रमः । यद्वाक्यतो धर्म्म इतीतरः स्थितो न मन्यते तस्य निवारणं जनः ॥ इति च । एवम् अजितवाक्यञ्च तदधि-कारिविषयमेव—स्वयं निःश्रेयसं विद्वान् न वक्त्यज्ञाय कर्म्म हि । न राति रोगिणोऽपथ्यं वाञ्छतोऽपि भिषक्तम इति । अत्र यद्य-प्यधिकारितायां श्रद्धैव हेतुः सा चाज्ञस्य न सम्भवतीति नैतत् तद्विषयं स्यात्, तथापि कथमपि प्राचीनसंस्कारवितर्केण तदधि-कारित्वनिर्णयान् न दोष इति ज्ञेयम् । अन्यथोपदेष्टुरेव दोषः स्यात् । अश्रद्दधाने विमुखेऽप्यशृण्वति यश्चोपदेश इति वक्ष्य-माणापराधश्रवणात् । अथ प्रकृतमनुसरामः । तदेवं योगत्रयं तदधि-कारहेतुं श्चोक्त्वा कर्म्मणोऽपि यथा भगवत्साम्मुख्यरूपत्वं स्यात्, तथाह—स्वधर्म्मस्थो यजन् यज्ञैरनाशीःकाम उद्धव । न याति स्वर्ग-नरकौ यद्यन्यन्न समाचरेत् । अस्मिंल्लोके वर्त्तमानः स्वधर्म्मस्थोऽनघः शुचिः । ज्ञानं विशुद्धमाप्नोति मद्भक्तिञ्च यदृच्छया ॥ १७४ ॥

टीका च—अनाशीःकामोऽफलकामः । अन्यन्निषिद्धं नरकयानं हि द्विधैव भवति, विहितातिक्रमाद्वा निषिद्धाचरणाद्वा । अतः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्वधर्मस्थत्वान्निषिद्धवर्जनाच्च नरकं न याति अफलकामत्वात् न स्वर्ग मपीत्यर्थः। किन्तु अस्मिल्लोके अस्मिन्नेव देहे। अनघो निषि परित्यागी। अतः शुचिर्निवृत्तरागादिमलः। यदृच्छयेति। केवल ज्ञानादपि भक्तो दुर्ल्लभतां द्योतयतीत्येषा। अत्र अफलकामत्वं केवल श्वराज्ञाबुद्ध्या कुर्व्वाणत्वम्। अत्र ज्ञानिसङ्गे सति तन्मात्रत्वं भगवदर्पणं भवेत्। भक्तसङ्गे तु तत्सन्तोषमयत्वम्। अतो यदृच्छयेति पूर्व्ववत् भक्तसङ्गतत्कृपालक्षणं भाग्यं बोधितम्। यदुक्तम्—ए वानेव यजतामिह निःश्रेयसोदय इत्यादि। तदेवं कर्म्मार्पणकेवल ज्ञानकेवलभक्तयोऽधिकारिभेदेन व्यवस्थापिताः। ततः स्वाधिकारा सारेणैव स्थातव्यमित्याह—स्वे स्वेऽधिकारे या निष्ठा स गुणः क कीर्त्तित इति॥ १७५॥

स्पष्टम्॥ ११॥ २०॥ श्रीभगवान्॥ १७३—१७५॥

तत्र सामुख्यद्वारभूतस्य कर्मणः साक्षात् सामुख्यरूपज्ञानभक्त दयपर्य्यन्तत्वात् स्वयमेव ताभ्यां न्यक्कारः। तत्र साक्षात् सामुख्यं निर्विशेषसामुख्यं ज्ञानम्। सविशेषस्यापि तत्त्वस्य भगवत्त्वं प मात्मत्वञ्चेति मुख्यमाविर्भावद्वयमिति सविशेषसामुख्यरूपाया भक्तेः मुख्यं भेदद्वयं भगवन्निष्ठत्वं परमात्मनिष्ठत्वञ्चेति। तदेत श्रीगीतासूक्तम्। तत्र अक्षरं ब्रह्म परममित्यक्षरशब्देन पूर्वं ब्रह्म। तत्सामुख्यरूपं ज्ञानात्मकमुपासनञ्चोत्तरोक्तं यथा—यद वेदविदो वदन्तीत्यादि, तथा परमात्मानमपि पुरुषश्चाधिदैवतमि अधियज्ञोऽहमेवात्र देहे देहभृतां वरेति च, विराड्व्यष्टिरूपाधिदै द्वयभेदेन भिन्नप्रायमुक्त्वा, भक्तिरीतिद्वयो तयोरेकप्राया दर्शि तत्राभ्यासयोगयुक्तेनेत्यादिनैका। कविं पुराणमनुशासितारमित्य नान्या। तथा मच्छब्दोक्तश्रीकृष्णाख्यभगवद्भक्तिप्रकारश्चायम्—अन चेताः सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः नित्ययुक्तस्य योगिन इति। तदेतत् सामुख्यत्रयं श्रीकपिलदेवे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्युक्तम्--ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् । दृश्यादिभिः पृथग्भावैर्भगवानेक ईयत इति । दृशिर्ज्ञानम् । पृथक् परस्परमन्यादृशो भावो भावना येषु तथाविधैर्ज्ञानादिभिरेक एव परिपूर्णस्वरूपगुणः परब्रह्मेयते परमात्मेयते भगवांश्चेयते । तत्र ज्ञानेन परब्रह्मतया ज्ञायते भक्तिविशेषेण परमात्मतया पूर्णया भक्त्या भगवत्तयेति ज्ञेयम् । परब्रह्मणः स्वरूपलक्षणं ज्ञानमात्रमिति परमात्मन ईश्वरः पुमानिति भगवतो भगवानित्येव । विवृतश्चैतत् साम्मुख्यत्रयं भगवत्परमात्मसन्दर्भयोः । ब्रह्मणः अथापि भूमन्नित्यादिना । परमात्मनः केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तमित्यादिना ? भगवतो भक्तियोगेन मनसीत्यादिना च । तथाच यद्यपि साम्मुख्यत्वेनाविशिष्टं ज्ञानादित्रयमपि तद्वैमुख्यप्रतियोगि भवेत्, तथापि श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये । तेषामित्यादौ भक्तिं विना केवलज्ञानस्य अकिञ्चित्करत्वात् । अत्रापि च तस्मान्मद्भक्तियुक्तस्येत्यादौ भक्तेस्तन्निरपेक्षत्वात् यत्कर्मभिर्यत्तपसेत्यादौ आनुषङ्गिकसर्व्वफलत्वाच्च ज्ञानमपि न्यक्कृतम् । ततोऽवशिष्टायां सविशेषोपासनारूपायां भक्तौ च श्रीविष्णुरूपमवहुमन्यमानाः केचिन्निराकारेश्वरस्यान्याकारेश्वरस्य चोपासनां यां मन्यन्ते सापि न्यक्कृतास्ति । यतो हिरण्यकशिपोरपि नित्य आत्माव्ययः शुद्ध इत्यादितद्वाक्येन यदृच्छयेशः सृजतीदमव्यय इत्यादितदुदाहृतेतिहासवाक्येन तेन: कृतब्रह्मस्तवेन च ब्रह्मज्ञानं निराकारेश्वरज्ञानमन्याकारेश्वरज्ञानञ्च तस्यास्तीति वर्ण्यते । श्रीविष्णौ देवतासामान्यदृष्टेर्निन्द्यते च स इति । तथान्यत्राहंग्रहोपासना च न्यक्कृता । पौण्ड्रकवासुदेवादौ यदुभिरिव शुद्धभक्तैरुपहास्यत्वात् । सालोक्यसार्ष्टिसारूप्येत्यादिषु तत्फलस्य हेयतया निर्द्देशात् । तदुक्तं श्रीहनूमता—को मूढ़ो दासतां प्राप्य प्राभवं पदमिच्छतीति । तदेतत सर्व्वमभिप्रेत्य निष्किञ्चनां भक्तिमेव तादृशभक्त-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रशंसाद्वारेण सर्व्वोर्द्ध्वमुपदिशति—न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम। वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥१७६॥

धीरा धीमन्तः। यतो ममैकान्तिनो मय्येव प्रीतियुक्ताः। अतो मया दत्तमपि न गृह्णन्ति किं पुनर्वक्तव्यं न वाञ्छन्तीत्यर्थः। अपुनर्भवमात्यन्तिकमपि कैवल्यमित्येषा। ईदृशानामेकान्तिनामेव परम महिमा गारुड़े—ब्राह्मणानां सहस्रेभ्यः सत्रयाजी विशिष्यते। सत्रयाजिसहस्रेभ्यः सर्व्ववेदान्तपारगः। सर्व्ववेदान्तवित्कोट्या विष्णुभक्तो विशिष्यते। वैष्णवानां सहस्रेभ्य एकान्त्येको विशिष्यत इति यस्मादेवं सर्व्वानन्दातिक्रमलिङ्गेन परमानन्दस्वरूपासौ भक्तिस्तस्मात् तत्र स्वभावत एव प्रवृत्तिर्गुणस्तथाभूतामपि तन्माधुरीं स्वदोषेणानुभवितुम् असमर्थानां तु केवलविधिनिषेधसम्भवगुणदोषदृष्ट्यैव प्रवृत्तिरपि पूर्व्वापेक्षया दोष एव। यथोक्तमेतत्पूर्व्वाध्याये शमो मन्निष्ठता बुद्धेरित्यादौ साक्षाद्भक्तेरपि विधानाविधानयोर्गुणदोषतां किं वर्णितेन बहुनेत्यन्तेन ग्रन्थेन प्रतिपाद्य गुणदोषदृशिर्दोषो गुणस्तूभयवर्जित इति लब्धतन्माधुर्य्यानुभवानां तद्विधिनिषेधकृतगुणदोषौ नस्त एवेत्याह—न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणा इति ॥ १७७॥

टीका च—गुणदोषैर्विहितप्रतिषिद्धैरुद्भवो येषां ते गुणाः पुण्यपापादय इत्येषा ॥ ११ ॥ २० ॥ श्रीभगवान् ॥ १७६ ॥ १७७॥

इयमकिञ्चनाख्या भक्तिरेव जीवानां स्वभावत उचिता। स्वाभाविकतदाश्रया हि जीवाः। स कारणं करणाधिपाधिप इति श्रुतिः। अंशत्वेऽपि वहिरङ्गत्वस्वीकारात् तदाश्रयत्वं सूर्य्यमण्डलवहिरागतपरमाणूनामिव। अतएव पाद्मोत्तरखण्डे प्रणवव्याख्याने—अकारश्चाप्युकारश्च मकारश्च ततः परम्। वेदत्रयात्मकं प्रोक्तं प्रणवं ब्रह्मपदम् ॥ अकारेणोच्यते विष्णुः श्रीरुकारेण चोच्यते। मकारस्तु तयोर्दासः पञ्चविंशः प्रकीर्त्तित इत्यादि। अन्ते च—भगच्छेषभूतोऽयं मकाराख्यः सचेतन इति। तथा, अवधारणवाच्येव उकारः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वक्ष्यते, न किञ्चित् साधवो धीरा इति । अतः साम्राज्यज्ञापनया तां विना कर्म्मज्ञाने अपि न सिध्यत इति च ज्ञापितम् । तदेवमनन्य-भक्त्यधिकारे हेतुं श्रद्धामात्रमुक्त्वा स यथा भजेत्तथा शिक्षयति । सं श्रद्धालुर्विश्वासवान्, प्रीतः जातायां रुचावासक्तः, दृढ़निश्चयः साधनाध्य-वसायभङ्गरहितश्च सन् । सहसा त्यक्तुमसमर्थत्वात् कामान् जुषमाणश्च गर्हयंश्च । गर्हणे हेतुः, दुःखोदर्कान् शोकादिकृदुत्तरफलानिति । अत्र कामा अपापकरा एव ज्ञेयाः । शास्त्रे कथञ्चिदपि अन्यानुविधा-नायोगात् । प्रत्युत, परपत्नीपरद्रव्यपरहिंसासु यो मतिम् । न करोति पुमान् भूप तोष्यते तेन केशवः ॥ इति विष्णुपुराणवाक्यादौ कर्मार्पणात् पूर्वमेव तन्निषेधादत्रैव च निष्कामकर्म्मण्यपि यद्यन्यन्न समाचरेदिति वक्ष्यमाणनिषेधात् । कर्म्मपरित्यागविधानेन सुतरां दुष्कर्म्मपरित्याग-प्रत्यासत्तेः । विष्णुधर्म्मे—मर्य्यादाश्च कृतां तेन यो भिनत्ति स मानवः । न विष्णुभक्तो विज्ञेयः साधुधर्म्मार्चनो हरिरिति वैष्णवे-ष्वपि तन्निषेधात् । यत्पादसेवाभिरुचिस्तपस्विनामशेषजन्मोपचितं मलं धियः । सद्यः चिणोतीत्यत्र सद्यःशब्दप्रयोगेन जातरुचीनां, यदा नेच्छति पापानि यदा पुण्यानि वाञ्छति । श्रेयस्तदा मनुष्येण हृदि तस्य हरिः स्थितः ॥ इति विष्णुधर्म्मे नियमेन च, विकर्म्म यच्चोत्-पतितं कथञ्चिद्धुनोति सर्व्वं हृदि सन्निविष्टः । इत्यत्रापि कथञ्चित्-शब्दप्रयोगेन लब्धभक्तीनाञ्च स्वतस्तत्प्रवृत्त्ययोगात् । नाम्नो बलाद्-यस्य हि पापबुद्धि र्न विद्यते तस्य यमै र्हि शुद्धिरिति पद्मे नामाप-राधभञ्जनस्तोत्रादौ हरिभक्तिबलेनापि तत्प्रवृत्तावपराधापाताच्च । अपि चेत् सुदुराचार इति तु तदनादरदोषपर एव, न तु दुराचारता-विधानपरः, चिप्रं भवति धर्म्मात्मेत्यनन्तरवाक्ये दुराचारतापगमस्य श्रेयस्त्वनिर्द्देशादिति ॥ ११ ॥ २० ॥ श्रीभगवान् ॥ १७०—१७२ ॥

नन्वेवं केवलानां कर्म्मज्ञानभक्तीनां व्यवस्थोक्ता । नित्यनैमित्तिकं कर्म्म तु सर्व्वेष्वेवावश्यकम् । तर्हि साङ्कर्य्यं कथं शुद्धे ज्ञानभक्ती



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रवर्त्तेयातां तदेतदाशङ्क्य तयोः कर्म्माधिकारितां वारयति—तावत्
कर्म्माणि कुर्व्वीत न निर्व्विद्येत यावता। मत्कथाश्रवणादौ वा
श्रद्धा यावन्न जायते ॥ १७२ ॥

कर्म्माणि नित्यनैमित्तिकादीनीति टीका च। अतएव श्रुतिस्मृती
ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते। आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न
वैष्णवः॥ इत्युक्तदोषोऽप्यत्र नास्ति, आज्ञाकरणात्। प्रत्युत जातयोर्
निर्व्वेदश्रद्धयो स्तत्करण एवाज्ञाभङ्गः स्यात्। यथा च व्याख्यातम्—
आज्ञायैवं गुणान् दोषानित्यस्य टीकायां भक्तिदार्ढ्येन निवृत्ताधि-
कारतया सन्त्यज्येति। निवृत्ताधिकारत्वञ्चोक्तं श्रीकरभाजनेन—
देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन्। सर्व्वा-
त्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्त्तमिति तेषां
किङ्करः, किन्तु श्रीभागवत एवेत्यनधिकारित्वम्। कर्त्तं [illegible]
[illegible] भेदमित्यर्थं ततो देवतादीनां स्वातन्त्र्यमिति यावत्। [illegible]
सेवो[illegible]—अयं देवो मुनिर्वन्द्य एष ब्रह्मा बृहस्पतिः। इत्यादि
जायते तावत् [illegible]र्च्चयते हरिमिति। न च विकर्म्मप्रायश्चित्त-
कर्म्मान्तरं कर्त्तव्यं, तस्य तत्करणस्य निकर्म्मापवृत्त्यभावात्। क-
श्चिदापतितेऽपि विकर्म्मणि तदनुस्मरणेनैव प्रायश्चित्तस्याप्यानु-
कसिद्धिरित्यप्युक्तमनन्तरपद्येनैव—स्वपादमूलं भजतः प्रियस्य त्य-
न्यभावस्य हरिः परेशः। विकर्म्म यच्चोत्पतितं कथञ्चिद् धुनोति
सर्व्वं हृदि सन्निविष्ट इति। त्यक्तोऽन्यत्र देवतान्तरे भावो [illegible]
वतीव भक्तिर्येन इति च व्याख्येयम्। अत्र कर्म्मपरित्यागी [illegible]
नाभिधानात् श्रद्धाशरणापत्योरैकार्थ्यं लभ्यते। तच्च युक्तम्। श्रद्धा
शास्त्रार्थविश्वासः। शास्त्रञ्च तदशरणस्य भयं तच्छरणस्याभयं वद-
ततो जातायाः श्रद्धायास्तच्छरणापत्तिरेव लिङ्गमिति। न च दे-
तर्पणमात्रतात्पर्य्येणापि पृथक् पृथगाराधनं कर्त्तव्यम्। यथा त-
मूलनिषेचनेन इत्यादौ तत्पोनरुक्त्यप्राप्तेः। न च त्यक्त्वा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मध्ये विप्रस्थगितायामपि भक्तौ तत्त्यागानुतापो युज्यते। त्यक्त्वा स्वधर्म्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदीत्याद्युक्तेः। सर्व्व-धर्म्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वां सर्व्वपापेभ्यो मोक्ष-यिष्यामि मा शुचः॥ इत्यस्य देवर्षिभूताप्तनृणामित्यादिद्वयेनैकार्थ्यं दृश्यते। अतो भक्त्यारम्भ एव तु स्वरूपत एव कर्म्मत्यागः कर्त्तव्यः। परित्यज्येत्यत्र परिशब्दस्य तथैवार्थः। गौतमीये च—न जपो नार्च्चनं नैव ध्यानं नापि विधिक्रमः। केवलं सततं कृष्णचरणाम्भोजभाविनाम्॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु इत्यादिना चानन्यामेव भक्तिमुपदिदेश। तथा विष्णुपुराणेऽपि भरतमुद्दिश्य—यज्ञेशा-च्युत गोविन्द माधवानन्त केशव। कृष्ण विष्णो हृषीकेशेत्याह राजा स केवलम्। नान्यज्जगाद मैत्रेय किञ्चित् स्वप्नान्तरेष्वपीति। अत्र वचनान्तरस्याप्यनवकाशात्। सुतरामेव तत्तद्वचनमयकर्म्मा-न्तरपरित्यागः अङ्गीकृतः। कथञ्चित् क्रियमाणमपि तन्नाम्नैव कृत-मित्यवगतेश्च सर्व्वत्र तदीक्षणाच्छुद्धभक्तित्वमेवाङ्गीकृतम्। यथोक्तं पाद्मे—सर्व्वधर्मोज्झिता विष्णो र्नाममात्रैकजल्पकाः। सुखेन यां गतिं यान्ति न तां सर्व्वेऽपि धार्मिका इति। तस्मान्मतान्तरेणाप्यु-पचितः श्रद्धावतोऽनन्यभक्त्यधिकारः कर्माद्यनधिकारश्चेति। किन्तु श्रद्धासद्भाव एव कथं ज्ञायते इति विचार्य्यम्। तत्र च लिङ्गत्वेन पूर्व्वं शरणापत्तिरुपदिष्टैव। यस्याञ्च शरणापत्तौ वक्ष्यमाणानि आनु-कूल्यस्य संकल्प इत्यादीनि लिङ्गानि। तथा व्यवहारकार्पण्याद्यभावो-ऽपि श्रद्धालिङ्गं ज्ञेयम्। शास्त्रं हि तथैव श्रद्धामुत्पादयति। अनन्या-श्चिन्तयन्तो मां ये जनाः पर्य्युपासते। तेषां नित्याभियुक्तानां योग-क्षेमं वहाम्यहमित्यादि। किञ्च श्रद्धावतः पुरुषस्य भगवत्सम्बन्धि-द्रव्यजातिगुणक्रियाणां शास्त्रे श्रूयमाणेष्वैहिकव्यवहारिकप्रभावेष्वपि न कथञ्चिदनाश्वासो भवति। ततस्तासु प्राकृतद्रव्यादिसाधारण-दृष्ट्या दोषविशेषानुसन्धानतो न कदाचिदप्रवृत्तिः स्यात्। ते च

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तादृशप्रभावाः, अकालमृत्युशमनं सर्व्वव्याधिविनाशनम्। सर्व-
दुःखोपशमनं हरिपादोदकं शुभमित्यादयः। केचित्तु तत्र श्रद्धा-
वन्तोऽपि स्वापराधदोषेण सम्प्रति तत्फलं नोदेति इति स्वाभि-
यन्ते। यत्तु, यः स्मरेत् पुण्डरीकाक्षं सवाह्याभ्यन्तरः शुचिरित्यादौ
श्रद्दधाना अपि स्नानादिकम् आचरन्ति, तत् खलु श्रीमन्नारदव्यासादि-
सत्परम्पराचारगौरवात् एव। अन्यथा तदतिक्रमेऽप्यपराधः स्या-
ति च तथा मर्य्यादां लोकस्य कदर्य्यवृत्त्यादिनिरोधायैव स्थापित-
इति ज्ञेयम्। किञ्च जातायां श्रद्धायां सिद्धावसिद्धौ च स्वर्णादि-
लिप्सोरिव सदा तदनुवृत्तिचेष्टैव स्यात्। सिद्धिश्चात्रान्तः-
कामादिदोष-क्षयकारि-परमानन्दपरमकाष्ठागामिश्रीहरिस्फुरण-
ज्ञेया। तस्यां स्वार्थसाधनानुप्रवृत्तौ च दम्भप्रतिष्ठादिमयचेष्टालेशो-
न भवति। न सुतरां ज्ञानपूर्व्वकं महदवज्ञादयोऽपराधाश्चापत्तेर्-
विरोधादेव। अतएव चित्रकेतोः श्रीमहादेवापराधस्तस्य स्वैः-
न्तरेणाच्छन्नस्वभावस्य भागवततत्त्वाज्ञानादेव मन्तव्यः। यदि
श्रद्धावतोऽपि प्रारब्धादिवशेन विषयसम्बन्धाभ्यासो भवति, तथापि
धया विषयसम्बन्धसमयेऽपि दैन्यात्मिका भक्तिरेवोच्छलिता स्या-
यथोक्तम्—जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन्नि-
बाध्यमानोऽपि मद्भक्त इत्यादौ च। अपि चेत् सुदुराचार इत्यादावु-
नन्यभाक्त्वेन लक्षिता तु या श्रद्धा सा खलु ये शास्त्रविधि-
सृज्य यजन्ते श्रद्धयान्विता इत्यादिवल्लोकपरम्पराप्राप्ता न तु श-
र्थावधारणजाता। शास्त्रीयश्रद्धायान्तु जातायां सुदुराचारत्वं-
स्यात्। परपत्नीपरद्रव्येत्यादिविष्णुतोषणशास्त्रविरोधात्।
दाश्च क्षतां तेनेत्यादिना तद्भक्तत्वविरोधाच्च। न तु सा दुराचा-
तद्भक्तिमहिमश्रद्धाकृतैव, अपिशब्देन दुराचारत्वस्य हेयत्वव्यञ्ज-
तथा, क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं निगच्छति इत्यु-
प्रतिपत्तेः। नाम्नो बलात् यस्य हि पापबुद्धिरित्यादिना

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पाताच्च । ततः सा श्रद्धा न शास्त्रीयभक्त्यधिकारिणो विशेषणत्वे प्रवेश-नीया । किन्तु प्रशंसायामेव । तादृश्यापि श्रद्धया भक्तेः सत्वहेतुत्वं, न तु देवतान्तरयजनवत् ये शास्त्रविधिमुत्सृज्येत्यादावेवोक्तम् अन्या-दृश्यत्वमिति । अस्याः श्रद्धायाः पूर्णतावस्था तु ब्रह्मवैवर्त्ते—किं सत्यमनृतञ्चेह विचारः सम्प्रवर्त्तते । विचारेऽपि कृते राजन्नसत्य-परिवर्जनम् । सिद्धं भवति पूर्णा स्यात् तदा श्रद्धा महाफलेति । तदेवंलक्षणेषु श्रद्धोत्पत्तिलक्षणेषु सत्सु विधीयते, यदृच्छया मत्-कथादौ जातश्रद्धस्तु य इत्यादि मत्कथाश्रवणादौ वेत्यादि च । अत एव-मनधिकार्य्यधिकारिविषयत्वविवक्षयेव श्रीभगवन्नारदयो र्वाक्ये व्यव-तिष्ठेते । न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम् । जोषयेत् सर्व्व-कर्म्माणि विद्वान् युक्तः समाचरन्निति । जुगुप्सितं धर्मकृतेऽनुशासतः स्वभावरक्तस्य महान् व्यतिक्रमः । यद्वाक्यतो धर्म इतीतरः स्थितो न मन्यते तस्य निवारणं जनः ॥ इति च । एवम् अजितवाक्यञ्च तदधि-कारिविषयमेव—स्वयं निःश्रेयसं विद्वान् न वक्त्यज्ञाय कर्म हि । न राति रोगिणोऽपथ्यं वाञ्छतोऽपि भिषक्तम इति । अत्र यद्य-प्यधिकारितायां श्रद्धैव हेतुः सा चाज्ञस्य न सम्भवतीति नैतत् तद्विषयं स्यात्, तथापि कथमपि प्राचीनसंस्कारवितर्केण तदधि-कारित्वनिर्णयान् न दोष इति ज्ञेयम् । अन्यथोपदेष्टुरेव दोषः स्यात् । अश्रद्दधाने विमुखेऽप्यशृण्वति यश्चोपदेश इति वक्ष्य-माणापराधश्रवणात् । अथ प्रकृतमनुसरामः । तदेवं योगत्रयं तदधि-कारहेतुञ्चोक्त्वा कर्मणोऽपि यथा भगवत्साम्मुख्यरूपत्वं स्यात्, तथाह—स्वधर्मस्थो यजन् यज्ञैरनाशीःकाम उद्धव । न याति स्वर्ग-नरकौ यद्यन्यन्न समाचरेत् । अस्मिंल्लोके वर्त्तमानः स्वधर्मस्थोऽनघः शुचिः । ज्ञानं विशुद्धमाप्नोति मद्भक्तिञ्च यदृच्छया ॥ १७४ ॥

टीका च—अनाशीःकामोऽफलकामः । अन्यन्निषिद्धं नरकयानं हि द्विधैव भवति, विहितातिक्रमाद्वा निषिद्धाचरणाद्वा । अतः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्वधर्मस्थत्वान्निषिद्धवर्जनाच्च नरकं न याति अफलकामत्वात् न स्व-
मपीत्यर्थः। किन्तु अस्मिल्लोके अस्मिन्नेव देहे। अनघो निषि-
परित्यागी। अतः शुचिर्निवृत्तरागादिमलः। यदृच्छयेति। केव-
ज्ञानादपि भक्तो दुर्लभतां द्योतयतीत्येषा। अत्र अफलकामत्वं केवे-
श्वराज्ञाबुद्ध्या कुर्व्वाणत्वम्। अत्र ज्ञानिसङ्गे सति तन्मात्र-
भगवदर्पणं भवेत्। भक्तसङ्गे तु तत्सन्तोषमयत्वम्। अतो यदृच्छ-
पूर्व्ववत् भक्तसङ्गतत्कृपालक्षणं भाग्यं बोधितम्। यदुक्तम्—ए-
वानेव यजतामिह निःश्रेयसोदय इत्यादि। तदेवं कर्म्मार्पण-
ज्ञानकेवलभक्तयोऽधिकारिभेदेन व्यवस्थापिताः। ततः स्वाधिका-
सारेणैव स्थातव्यमित्याह—स्वे स्वेऽधिकारे या निष्ठा स गुणः
कीर्त्तित इति ॥ १७५ ॥

स्पष्टम् ॥ ११ ॥ २० ॥ श्रीभगवान् ॥ १७३—१७५ ॥

तत्र साम्मुख्यद्वारभूतस्य कर्मणः साक्षात् साम्मुख्यरूपज्ञान-
दयपर्य्यन्तत्वात् स्वयमेव ताभ्यां न्यक्कारः। तत्र साक्षात् साम्मु-
निर्विशेषसाम्मुख्यं ज्ञानम्। सविशेषस्यापि तत्त्वस्य भगव-
मात्मत्वञ्चेति मुख्यमाविर्भावद्वयमिति सविशेषसाम्मुख्यरूपाया
मुख्यं भेदद्वयं भगवन्निष्ठत्वं परमात्मनिष्ठत्वञ्चेति। तदेत-
श्रीगीतासूक्तम्। तत्र अक्षरं ब्रह्म परममित्यक्षरशब्देन पू-
ब्रह्म। तत्साम्मुख्यरूपं ज्ञानात्मकमुपासनञ्चोत्तरोक्तं यथा—
वेदविदो वदन्तीत्यादि, तथा परमात्मानमपि पुरुषश्चाधिदैवत-
अधियज्ञोऽहमेवात्र देहे देहभृतां वरेति च, विराड्व्यष्टिरूपाधि-
द्वयभेदेन भिन्नप्रायमुक्त्वा, भक्तिरीतिद्वयी तयोरेकप्राया द-
तत्राभ्यासयोगयुक्तेनेत्यादिनैका। कविं पुराणमनुशासितार-
नान्या। तथा मच्छब्दोक्तश्रीकृष्णाख्यभगवद्भक्तिप्रकारश्चायम्—
चेताः सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः
नित्ययुक्तस्य योगिन इति। तदेतत् साम्मुख्यत्रयं श्रीकपिल-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्युक्तम्—ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् । दृश्यादिभिः पृथग्भावैर्भगवानेक ईयत इति । दृश्भिर्ज्ञानम् । पृथक् परस्परमन्यादृशो भावो भावना येषु तथाविधैर्ज्ञानादिभिरेक एव परिपूर्णस्वरूपगुणः परब्रह्मेयते परमात्मेयते भगवांश्चेयते । तत्र ज्ञानेन परब्रह्मतया ज्ञायते भक्तिविशेषेण परमात्मतया पूर्णया भक्त्या भगवत्तयेति ज्ञेयम् । परब्रह्मणः स्वरूपलक्षणं ज्ञानमात्रमिति परमात्मन ईश्वरः पुमानिति भगवतो भगवानित्येव । विवृतश्चैतत् साम्मुख्यत्रयं भगवत्परमात्मसन्दर्भयोः । ब्रह्मणः अथापि भूमन्नित्यादिना । परमात्मनः केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तमित्यादिना । भगवतो भक्तियोगेन मनसीत्यादिना च । तथाच यद्यपि साम्मुख्यत्वेनाविशिष्टं ज्ञानादित्रयमपि तद्वैमुख्यप्रतियोगि भवेत्, तथापि श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये । तेषामित्यादौ भक्तिं विना केवलज्ञानस्य अकिञ्चित्करत्वात् । अत्रापि च तस्मान्मद्भक्तियुक्तस्येत्यादौ भक्तेस्तन्निरपेक्षत्वात् यत्कर्मभिर्यत्तपसेत्यादौ आनुषङ्गिकसर्व्वफलत्वाच्च ज्ञानमपि न्यक्कृतम् । ततोऽवशिष्टायां सविशेषोपासनारूपायां भक्तौ च श्रीविष्णुरूपमवहुमन्यमानाः केचिन्निराकारेश्वरस्यान्याकारेश्वरस्य चोपासनां यां मन्यन्ते सापि न्यक्कृतास्ति । यतो हिरण्यकशिपोरपि नित्य आत्माव्ययः शुद्ध इत्यादितद्वाक्येन यदृच्छयेशः सृजतीदमव्यय इत्यादितदुदाहृतेतिहासवाक्येन तेन: कृतब्रह्मस्तवेन च ब्रह्मज्ञानं निराकारेश्वरज्ञानमन्याकारेश्वरज्ञानञ्च तस्यास्तीति वर्ण्यते । श्रीविष्णौ देवतासामान्यदृष्टेर्निन्द्यते च स इति । तथान्यत्राहंग्रहोपासना च न्यक्कृता । पौण्ड्रकवासुदेवादौ यदुभिरिव शुद्धभक्तैरुपहास्यत्वात् । सालोक्यसार्ष्टिसारूप्येत्यादिषु तत्फलस्य हेयतया निर्द्देशात् । तदुक्तं श्रीहनूमता—को मूढ़ो दासतां प्राप्य प्राभवं पदमिच्छतीति । तदेतत सर्व्वमभिप्रेत्य निष्किञ्चनां भक्तिमेव तादृशभक्त-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रशंसाद्वारेण सर्व्वोर्द्ध्वमुपदिशति—न किञ्चित् साधवो धीरा भक्ता
ह्येकान्तिनो मम। वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥
धीरा धीमन्तः। यतो ममैकान्तिनो मय्येव प्रीतियुक्ताः। अतो
मया दत्तमपि न गृह्णन्ति किं पुनर्वक्तव्यं न वाञ्छन्तीत्यर्थः। अपुन-
र्भवमात्यन्तिकमपि कैवल्यमित्येषा। ईदृशानामेकान्तिनामेव
महिमा गारुड़े—ब्राह्मणानां सहस्रेभ्यः सत्रयाजी विशिष्यते।
याजिसहस्रेभ्यः सर्व्ववेदान्तपारगः। सर्व्ववेदान्तवित्कोट्या वि
भक्तो विशिष्यते। वैष्णवानां सहस्रेभ्य एकान्त्येको विशिष्यत
यस्मादेवं सर्व्वानन्दातिक्रमलिङ्गेन परमानन्दस्वरूपासौ भक्ति
तत्र स्वभावत एव प्रवृत्तिर्गुणस्तथाभूतामपि तन्माधुरीं स्वदोषे
भवितुम् असमर्थानां तु केवलविधिनिषेधसम्भवगुणदोषदृष्ट्यैव प्र
रपि पूर्व्वापेक्षया दोष एव। यथोक्तमेतत्पूर्व्वाध्याये शमो मन्नि
बुद्धेरित्यादौ साक्षाद्भक्तेरपि विधानाविधानयोर्गुणदोषतां किं
तेन बहुनेत्यन्तेन ग्रन्थेन प्रतिपाद्य गुणदोषदृशिर्दोषो गुणस्तूभय
इति लब्धतन्माधुर्य्यानुभवानां तद्विधिनिषेधकृतगुणदोषौ न
त्याह—न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणा इति ॥ १७७॥
टीका च—गुणदोषैर्विहितप्रतिषिद्धैरुद्भवो येषां ते गुणाः
पापादय इत्येषा ॥ ११ ॥ २० ॥ श्रीभगवान् ॥ १७६ ॥ १७७॥
इयमकिञ्चनाख्या भक्तिरेव जीवानां स्वभावत उचिता।
विकतदाश्रया हि जीवाः। स कारण-करणाधिपाधिप इति
अंशत्वेऽपि वहिरङ्गत्वस्वीकारात् तदाश्रयत्वं सूर्य्यमण्डलवहि
परमाणूनामिव। अतएव पाद्मोत्तरखण्डे प्रणवव्याख्याने-
चाप्युकारश्च मकारश्च ततः परम्। वेदत्रयात्मकं प्रोक्तं प्रणवं
पदम् ॥ अकारेणोच्यते विष्णुः श्रीरुकारेण चोच्यते। मकारस्तु
दासः पञ्चविंशः प्रकीर्त्तित इत्यादि। अन्ते च—भगवच्छेष
मकाराख्यः सचेतन इति। तथा, अवधारणवाच्येव उकार

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वक्ष्यते, न किञ्चित् साधवो धीरा इति। अतः साम्राज्यज्ञापनया तां विना कर्म्मज्ञाने अपि न सिध्यत इति च ज्ञापितम्। तदेवमनन्य-भक्त्यधिकारे हेतुं श्रद्धामात्रमुक्त्वा स यथा भजेत्तथा शिक्षयति। स श्रद्धालुर्विश्वासवान्, प्रीतः जातायां रुचावासक्तः, दृढ़निश्चयः साधनाध्य-वसायभङ्गरहितश्च सन्। सहसा त्यक्तुमसमर्थत्वात् कामान् जुषमाणश्च गर्हयंश्च। गर्हणे हेतुः, दुःखोदर्कान् शोकादिकृदुत्तरफलानिति। अत्र कामा अपापकरा एव ज्ञेयाः। शास्त्रे कथञ्चिदपि अन्यानुविधा-नायोगात्। प्रत्युत, परपत्नीपरद्रव्यपरहिंसासु यो मतिम्। न करोति पुमान् भूप तोष्यते तेन केशवः॥ इति विष्णुपुराणवाक्यादौ कर्म्मार्पणात् पूर्व्वमेव तन्निषेधादत्रैव च निष्कामकर्म्मस्वपि यद्यन्यन्न समाचरेदिति वक्ष्यमाणनिषेधात्। कर्म्मपरित्यागविधानेन सुतरां दुष्कर्म्मपरित्याग-प्रत्यासत्तेः। विष्णुधर्म्मे—मर्य्यादाञ्च कृतां तेन यो भिनत्ति स मानवः। न विष्णुभक्तो विज्ञेयः साधुधर्म्मार्च्चनो हरिरिति वैष्णवे-ष्वपि तन्निषेधात्। यत्पादसेवाभिरुचिस्तपस्विनामशेषजन्मोपचितं मलं धियः। सद्यः क्षिणोतीत्यत्र सद्यःशब्दप्रयोगेन जातमात्ररुचीनां, यदा नेच्छति पापानि यदा पुण्यानि वाञ्छति। ज्ञेयस्तदा मनुष्येण हृदि तस्य हरिः स्थितः॥ इति विष्णुधर्म्मे नियमेन च, विकर्म्म यच्चोत्-पतितं कथञ्चिद्धुनोति सर्व्वं हृदि सन्निविष्टः। इत्यत्रापि कथञ्चित्-शब्दप्रयोगेन लब्धभक्तीनाञ्च स्वतस्तत्प्रवृत्त्ययोगात्। नाम्नो बलाद्-यस्य हि पापबुद्धिर्न विद्यते तस्य यमैर्हि शुद्धिरिति पद्मे नामाप-राधभञ्जनस्तोत्रादौ हरिभक्तिबलेनापि तत्प्रवृत्तावपराधापाताच्च। अपि चेत् सुदुराचार इति तु तदनादरदोषपर एव, न तु दुराचारता-विधानपरः, क्षिप्रं भवति धर्म्मात्मेत्यनन्तरवाक्ये दुराचारतापगमस्य श्रेयस्त्वनिर्द्देशादिति॥ ११॥ २०॥ श्रीभगवान्॥ १७०—१७२॥

नन्वेवं केवलानां कर्म्मज्ञानभक्तीनां व्यवस्थोक्ता। नित्यनैमित्तिकं कर्म्म तु सर्व्वेष्वेवावश्यकम्। तर्हि साङ्कर्य्ये कथं शुद्धे ज्ञानभक्ती



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रवर्त्तेयातां तदेतदाशङ्क्य तयोः कर्म्माधिकारितां वारयति—तावत्
कर्म्माणि कुर्व्वीत न निर्व्विद्येत यावता। मत्कथाश्रवणादौ वा
श्रद्धा यावन्न जायते ॥ १७२ ॥

कर्म्माणि नित्यनैमित्तिकादीनीति टीका च। अतएव श्रुतिस्मृती
ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते। आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि
वैष्णवः॥ इत्युक्तदोषोऽप्यत्र नास्ति, आज्ञाकरणात्। प्रत्युत जातयोः
निर्व्वेदश्रद्धयो स्तत्करण एवाज्ञाभङ्गः स्यात्। यथा च व्याख्यातम्—
आज्ञायैवं गुणान् दोषानित्यस्य टीकायां भक्तिदार्ढ्येन निवृत्ताधि-
कारतया सन्त्यज्येति। निवृत्ताधिकारत्वञ्चोक्तं श्रीकरभाजनेन—
देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन्। सर्व्वा-
त्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्त्तमिति तेषां
किङ्करः, किन्तु श्रीभागवत एवैत्यनधिकारित्वम्। कर्त्तं कृत्यं
कर्त्तं भेदमित्यर्थः ततो देवतादीनां स्वातन्त्र्यमिति यावत्। एव-
मेवोक्तं गारुड़े—अयं देवो मुनिर्वन्द्य एष ब्रह्मा वृहस्पतिः। इत्यादि
जायते तावत् यावन्नार्च्चयते हरिमिति। न च विकर्म्मप्रायश्चित्त-
कर्म्मान्तरं कर्त्तव्यं, तस्य तच्छरणस्य विकर्म्मप्रवृत्त्यभावात्। कथ-
ञ्चिदापतितेऽपि विकर्म्मणि तदनुस्मरणेनैव प्रायश्चित्तस्याप्यानुषङ्गि-
कसिद्धिरित्यप्युक्तमनन्तरपद्येनैव—स्वपादमूलं भजतः प्रियस्य त्यक्ता-
न्यभावस्य हरिः परेशः। विकर्म्म यच्चोत्पतितं कथञ्चिद् धुनोति
सर्व्वं हृदि सन्निविष्ट इति। त्यक्तोऽन्यत्र देवतान्तरे भावो भ-
वतीव भक्तिर्येन इति च व्याख्येयम्। अत्र कर्म्मपरित्यागि ...
नाभिधानात् श्रद्धाशरणापत्योरैकार्थ्यं लभ्यते। तच्च युक्तम्। श्रद्धा
शास्त्रार्थविश्वासः। शास्त्रञ्च तदशरणस्य भयं तच्छरणस्याभयं वदति
ततो जातायाः श्रद्धायास्तच्छरणापत्तिरेव लिङ्गमिति। न च देवा-
तर्पणमात्रतात्पर्य्येणापि पृथक् पृथगाराधनं कर्त्तव्यम्। यथा त-
रुमूलनिषेचनेन इत्यादौ तत्पीनरुक्त्यप्राप्तेः। न च त्यक्तकर्म्म

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मध्ये विघ्नस्थगितायामपि भक्तौ तत्त्यागानुतापो युज्यते । त्यक्त्वा स्वधर्म्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदीत्याद्युक्तेः । सर्व्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज । अहं त्वां सर्व्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ इत्यस्य देवर्षिभूताप्तनृणामित्यादिद्वयेनैकार्थ्यं दृश्यते । अतो भक्त्यारम्भ एव तु स्वरूपत एव कर्म्मत्यागः कर्त्तव्यः । परित्यज्येत्यत्र परिशब्दस्य तथैवार्थः । गौतमीये च—न जपो नार्च्चनं नैव ध्यानं नापि विधिक्रमः । केवलं सततं कृष्णचरणाम्भोजभाविनाम् ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु इत्यादिना चानन्यामेव भक्तिमुपदिदेश । तथा विष्णुपुराणेऽपि भरतमुद्दिश्य—यज्ञेशाच्युत गोविन्द माधवानन्त केशव । कृष्ण विष्णो हृषीकेशेत्याह राजा स केवलम् । नान्यज्जगाद मैत्रेय किञ्चित् स्वप्नान्तरेष्वपीति । अत्र वचनान्तरस्याप्यनवकाशात् । सुतरामेव तत्तद्वचनमयकर्म्मान्तरपरित्यागः अङ्गीकृतः । कथञ्चित् क्रियमाणमपि तन्नाम्नैव कृतमित्यवगतेश्च सर्व्वत्र तदीक्षणाच्छुद्धभक्तित्वमेवाङ्गीकृतम् । यथोक्तं पाद्मे—सर्व्वधर्मोज्झिता विष्णो र्नाममात्रैकजल्पकाः । सुखेन यां गतिं यान्ति न तां सर्व्वेऽपि धार्म्मिका इति । तस्मान्मतान्तरेणाप्युपचितः श्रद्धावतोऽनन्यभक्त्यधिकारः कर्माद्यनधिकारश्चेति । किन्तु श्रद्धासद्भाव एव कथं ज्ञायते इति विचार्य्यम् । तत्र च लिङ्गत्वेन पूर्व्वं शरणापत्तिरुपदिष्टैव । यस्माच्च शरणापत्तौ वक्ष्यमाणानि आनुकूल्यस्य संकल्प इत्यादीनि लिङ्गानि । तथा व्यवहारकार्पण्याद्यभावोऽपि श्रद्धालिङ्गं ज्ञेयम् । शास्त्रं हि तथैव श्रद्धामुत्पादयति । अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहमित्यादि । किञ्च श्रद्धावतः पुरुषस्य भगवत्सम्बन्धिद्रव्यजातिगुणक्रियाणां शास्त्रे श्रूयमाणेष्वैहिकव्यवहारिकप्रभावेष्वपि न कथञ्चिदनाश्वासो भवति । ततस्तासु प्राकृतद्रव्यादिसाधारणदृष्ट्या दोषविशेषानुसन्धानतो न कदाचिदप्रवृत्तिः स्यात् । ते च

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तादृशप्रभावाः, अकालमृत्युशमनं सर्व्वव्याधिविनाशनम्। सर्व्व-
दुःखोपशमनं हरिपादोदकं शुभमित्यादयः। केचित्तु तत्र श्र-
वन्तोऽपि स्वापराधदोषेण सम्प्रति तत्फलं नोदेति इति स्वयमि-
यन्ते। यत्तु, यः स्मरेत् पुण्डरीकाक्षं सवाह्याभ्यन्तरः शुचिरित्यादि-
श्रद्धधाना अपि स्नानादिकम् आचरन्ति, तत् खलु श्रीमन्नारदव्यासादि-
सत्परम्पराचारगौरवात् एव। अन्यथा तदतिक्रमेऽप्यपराधः स्याद्
ति च तथा मर्य्यादां लोकस्य कदर्थ्यवृत्त्यादिनिरोधायैव स्थापितवन्त
इति त्वेवम्। किञ्च जातायां श्रद्धायां सिद्धावसिद्धौ च स्वर्णादि-
लिप्सोरिव सदा तदनुवृत्तिचेष्टैव स्यात्। सिद्धिश्चात्रान्तःकर-
कामादिदोष-क्षयकारि-परमानन्दपरमकाष्ठागामिश्रीहरिस्फुरणं
ज्ञेया। तस्यां स्वार्थसाधनानुप्रवृत्तौ च दम्भप्रतिष्ठादिमयचेष्टालेशोऽपि
न भवति। न सुतरां ज्ञानपूर्व्वकं महदवज्ञादयोऽपराधाश्चापतन्ति
विरोधादेव। अतएव चित्रकेतोः श्रीमहादेवापराधस्तस्य स्वभावा-
न्तरेणाच्छन्नस्वभावस्य भागवतत्त्वाज्ञानादेव मन्तव्यः। यदि
श्रद्धावतोऽपि प्रारब्धादिवशेन विषयसम्बन्धाभ्यासो भवति, तथापि तद्
धया विषयसम्बन्धसमयेऽपि दैन्यात्मिका भक्तिरेवोच्छलिता स्यात्
यथोक्तम्—जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन्नित्यादि
बाध्यमानोऽपि मद्भक्त इत्यादौ च। अपि चेत् सुदुराचार इत्याद्युक्त-
नन्यभाक्त्वेन लक्षिता तु या श्रद्धा सा खलु ये शास्त्रविधिमु-
त्सृज्य यजन्ते श्रद्धयान्विता इत्यादिवल्लोकपरम्पराप्राप्ता न तु शास्त्रा-
र्थावधारणजाता। शास्त्रीयश्रद्धायान्तु जातायां सुदुराचारत्वं
स्यात्। परपत्नीपरद्रव्येत्यादिविष्णुतोषणशास्त्रविरोधात्। न
दाश्च कृतां तेनेत्यादिना तद्भक्तत्वविरोधाच्च। न तु सा दुरा-
तद्भक्तिमहिमश्रद्धाकृतैव, अपिशब्देन दुराचारत्वस्य हेयत्वव्यञ्जना-
तथा, क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं निगच्छति इत्यु-
प्रतिपत्तेः। नाम्नो बलात् यस्य हि पापबुद्धिरित्यादिना

पाताच्च। ततः सा श्रद्धा न शास्त्रीयभक्त्यधिकारिणो विशेषणत्वे प्रवेश-नीया। किन्तु प्रशंसायामेव। तादृश्यापि श्रद्धया भक्तेः सत्वहेतुत्वं, न तु देवतान्तरयजनवत् ये शास्त्रविधिमुत्सृज्येत्यादावेवोक्तम् अन्या-दृश्यत्वमिति। अस्याः श्रद्धायाः पूर्णतावस्था तु ब्रह्मवैवर्त्ते—किं सत्यमनृतञ्चेह विचारः सम्प्रवर्त्तते। विचारेऽपि कृते राजन्नसत्य-परिवर्जनम्। सिद्धं भवति पूर्णा स्यात् तदा श्रद्धा महाफलेति। तदेवंलक्षणेषु श्रद्धोत्पत्तिलक्षणेषु सत्सु विधीयते, यदृच्छया मत्-कथादौ जातश्रद्धस्तु य इत्यादि मत्कथाश्रवणादौ वेत्यादि च। अत एव-मनधिकार्य्यधिकारिविषयत्वविवक्षयेव श्रीभगवन्नारदयो र्वाक्ये व्यव-तिष्ठेते। न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम्। जोषयेत् सर्व्व-कर्म्माणि विद्वान् युक्तः समाचरन्निति। जुगुप्सितं धर्म्मकृतेऽनुशासतः स्वभावरक्तस्य महान् व्यतिक्रमः। यद्वाक्यतो धर्म्म इतीतरः स्थितो न मन्यते तस्य निवारणं [illegible]नः॥ इति च। एवम् अजितवाक्यञ्च तदधि-कारिविषयमेव—स्वयं निःश्रेयसं विद्वान् न वक्त्यज्ञाय कर्म्म हि। न राति रोगिणोऽपथ्यं वाञ्छतोऽपि भिषक्तम इति। अत्र यद्य-प्यधिकारितायां श्रद्धैव हेतुः सा चाज्ञस्य न सम्भवतीति नैतत् तद्विषयं स्यात्, तथापि कथमपि प्राचीनसंस्कारवितर्केण तदधि-कारित्वनिर्णयान् न दोष इति ज्ञेयम्। अन्यथोपदेष्टुरेव दोषः स्यात्। अश्रद्दधाने विमुखेऽप्यशृण्वति यश्चोपदेश इति वक्ष्य-माणापराधश्रवणात्। अथ प्रकृतमनुसरामः। तदेवं योगत्रयं तदधि-कारहेतुञ्चोक्त्वा कर्म्मणोऽपि यथा भगवत्साम्मुख्यरूपत्वं स्यात्, तथाह—स्वधर्म्मस्थो यजन् यज्ञैरनाशीःकाम उद्धव। न याति स्वर्ग-नरकौ यद्यन्यन्न समाचरेत्। अस्मिंल्लोके वर्त्तमानः स्वधर्म्मस्थोऽनघः शुचिः। ज्ञानं विशुद्धमाप्नोति मद्भक्तिञ्च यदृच्छया॥ १७४॥

टीका च—अनाशीःकामोऽफलकामः। अन्यन्निषिद्धं नरकयानं हि द्विधैव भवति, विहितातिक्रमाद्वा निषिद्धाचरणाद्वा। अतः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्वधर्मस्थत्वान्निषिद्धवर्जनाच्च नरकं न याति अफलकामत्वात् न स्व
मपीत्यर्थः। किन्तु अस्मिन्लोके अस्मिन्नेव देहे। अनघो नि
परित्यागी। अतः शुचिर्निवृत्तरागादिमलः। यदृच्छयेति। के
ज्ञानादपि भक्ते दुर्लभतां द्योतयतीत्येषा। अत्र अफलकामत्वं के
श्वराज्ञाबुद्ध्या कुर्व्वाणत्वम्। अत्र ज्ञानिसङ्गे सति तन्मात्रं
भगवदर्पणं भवेत्। भक्तसङ्गे तु तत्सन्तोषमयत्वम्। अतो यदृच्छ
पूर्व्ववत् भक्तसङ्गतत्कृपालक्षणं भाग्यं बोधितम्। यदुक्तम्—ए
वानेव यजतामिह निःश्रेयसोदय इत्यादि। तदेवं कर्म्मार्पणं
ज्ञानकेवलभक्तयोऽधिकारिभेदेन व्यवस्थापिताः। ततः स्वाधिकार
सारेणैव स्थातव्यमित्याह—स्वे स्वेऽधिकारे या निष्ठा स गुणः
कीर्त्तित इति॥ १७५॥

स्पष्टम्॥ ११॥ २०॥ श्रीभगवान्॥ १७३—१७५॥

तत्र साम्मुख्यद्वारभूतस्य कर्मणः साक्षात् साम्मुख्यरूपज्ञान
दयपर्य्यन्तत्वात् स्वयमेव ताभ्यां न्यक्कारः। तत्र साक्षात् साम्मुख्यं
निर्विशेषसाम्मुख्यं ज्ञानम्। सविशेषस्यापि तत्त्वस्य भगवत्त्वं
मात्मत्वञ्चेति मुख्यमाविर्भावद्वयमिति सविशेषसाम्मुख्यरूपाया भ
मुख्यं भेदद्वयं भगवन्निष्ठत्वं परमात्मनिष्ठत्वञ्चेति। तदे
श्रीगीतासूक्तम्। तत्र अक्षरं ब्रह्म परममित्यक्षरशब्देन पू
ब्रह्म। तत्साम्मुख्यरूपं ज्ञानात्मकमुपासनञ्चोत्तरोक्तं यथा—य
वेदविदो वदन्तीत्यादि, तथा परमात्मानमपि पुरुषश्चाधिदैवत
अधियज्ञोऽहमेवात्र देहे देहभृतां वरेति च, विराड्व्यष्टिरूपाधि
द्वयभेदेन भिन्नप्रायमुक्त्वा, भक्तिरीतिद्वयी तयोरेकप्राया द
तत्राभ्यासयोगयुक्तेनेत्यादिनैका। कविं पुराणमनुशासितारमि
नान्या। तथा मच्छन्दोक्तश्रीकृष्णाख्यभगवद्भक्तिप्रकारश्चायम्—
चेताः सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः
नित्ययुक्तस्य योगिन इति। तदेतत् साम्मुख्यत्रयं श्रीकपिलदे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्युक्तम्—ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् । दृश्यादिभिः पृथग्भावैर्भगवानेक ईयत इति । दृग्भिर्ज्ञानम् । पृथक् परस्परमन्यादृशो भावो भावना येषु तथाविधैर्ज्ञानादिभिरेक एव परिपूर्णस्वरूपगुणः परब्रह्मेयति परमात्मेयति भगवांश्चेयति । तत्र ज्ञानेन परब्रह्मतया ज्ञायते भक्तिविशेषेण परमात्मतया पूर्णया भक्त्या भगवत्तयेति ज्ञेयम् । परब्रह्मणः स्वरूपलक्षणं ज्ञानमात्रमिति परमात्मन ईश्वरः पुमानिति भगवतो भगवानित्येव । विवृतञ्चैतत् साम्मुख्यत्रयं भगवत्परमात्मसन्दर्भयोः । ब्रह्मणः अथापि भूमन्नित्यादिना । परमात्मनः केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तमित्यादिना । भगवतो भक्तियोगेन मनसीत्यादिना च । तथाच यद्यपि साम्मुख्यत्वेनाविशिष्टं ज्ञानादित्रयमपि तद्वैमुख्यप्रतियोगि भवेत्, तथापि श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये । तेषामित्यादौ भक्तिं विना केवलज्ञानस्य अकिञ्चित्करत्वात् । अत्रापि च तस्मान्मद्भक्तियुक्तस्येत्यादौ भक्तेस्तन्निरपेक्षत्वात् यत्कर्मभिर्यत्तपसेत्यादौ आनुषङ्गिकसर्व्वफलत्वाच्च ज्ञानमपि न्यक्कृतम् । ततोऽवशिष्टायां सविशेषोपासनारूपायां भक्तौ च श्रीविष्णुरूपमवहुमन्यमानाः केचिन्निराकारेश्वरस्यान्याकारेश्वरस्य चोपासनां यां मन्यन्ते सापि न्यक्कृतास्ति । यतो हिरण्यकशिपोरपि नित्य आत्माव्ययः शुद्ध इत्यादितद्वाक्येन यदृच्छयेशः सृजतीदमव्यय इत्यादितदुदाहृतेतिहासवाक्येन तेनः कृतब्रह्मस्तवेन च ब्रह्मज्ञानं निराकारेश्वरज्ञानमन्याकारेश्वरज्ञानञ्च तस्यास्तीति वर्ण्यते । श्रीविष्णौ देवतासामान्यदृष्टेर्निन्द्यते च स इति । तथान्यत्राहंग्रहोपासना च न्यक्कृता । पौण्ड्रकवासुदेवादौ यदुभिरिव शुद्धभक्तैरुपहास्यत्वात् । सालोक्यसार्ष्टिसारूप्येत्यादिषु तत्फलस्य हेयतया निर्द्देशात् । तदुक्तं श्रीहनूमता—को मूढ़ो दासतां प्राप्य प्राभवं पदमिच्छतीति । तदेतत सर्व्वमभिप्रेत्य निष्किञ्चनां भक्तिमेव तादृशभक्ता-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रशंसाद्वारेण सर्व्वोर्द्ध्वमुपदिशति—न किञ्चित् साधवो धीरा भ
क्त्येकान्तिनो मम। वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥१४
धीरा धीमन्तः। यतो ममैकान्तिनो मय्येव प्रीतियुक्ताः। क
मया दत्तमपि न गृह्णन्ति किं पुनर्वक्तव्यं न वाञ्छन्तीत्यर्थः। अपु
र्भवमात्यन्तिकमपि कैवल्यमित्येषा। ईदृशानामेकान्तिनामेव पर
महिमा गारुड़े—ब्राह्मणानां सहस्रेभ्यः सत्रयाजी विशिष्यते। स
याजिसहस्रेभ्यः सर्व्ववेदान्तपारगः। सर्व्ववेदान्तवित्कोट्या वि
भक्तो विशिष्यते। वैष्णवानां सहस्रेभ्य एकान्त्येको विशिष्यत इ
यस्मादेवं सर्व्वानन्दातिक्रमलिङ्गेन परमानन्दस्वरूपासौ भक्तिस्त
तत्र स्वभावत एव प्रवृत्तिर्गुणस्तथाभूतामपि तन्माधुरीं स्वदोषे
भवितुम् असमर्थानां तु केवलविधिनिषेधसम्भवगुणदोषदृष्ट्यैव प्र
रपि पूर्व्वापेक्षया दोष एव। यथोक्तमेतत्पूर्व्वाध्याये शमो मन्नि
बुद्धेरित्यादौ साक्षाद्भक्तेरपि विधानाविधानयोर्गुणदोषतां किं व
तेन बहुनेत्यन्तेन ग्रन्थेन प्रतिपाद्य गुणदोषदृशि र्दोषो गुणस्तूभयव
इति लब्धतन्माधुर्य्यानुभवानां तद्विधिनिषेधकृतगुणदोषौ नस्त
त्याह—न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणा इति ॥ १७७।
टीका च—गुणदोषैर्विहितप्रतिषिद्धैरुद्भवो येषां ते गुणाः
पापादय इत्येषा ॥ ११ ॥ २० ॥ श्रीभगवान् ॥ १७६ ॥ १७७।
इयमकिञ्चनाख्या भक्तिरेव जीवानां स्वभावत उचिता। स्व
विकतदाश्रया हि जीवाः। स कारणं करणाधिपाधिप इति
अंशत्वेऽपि वहिरङ्गत्वस्वीकारात् तदाश्रयत्वं सूर्य्यमण्डलवहि
परमाणूनामिव। अतएव पाद्मोत्तरखण्डे प्रणवव्याख्याने—
स्याप्युकारश्च मकारश्च ततः परम्। वेदत्रयात्मकं प्रोक्तं प्रणवं
पदम् ॥ अकारेणोच्यते विष्णुः श्रीरुकारेण चोच्यते। मकारस्तु
दासः पञ्चविंशः प्रकीर्त्तित इत्यादि। अन्ते च—भगच्छेषत्व
मकाराख्यः सचेतन इति। तथा, अवधारणवाच्येव उकार

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दिष्यति। श्रीश्च तत्पक्षपातित्वादकारेणैव चोच्यते। भास्करस्य प्रभा यद्वत्तस्य नित्यानपायिनीत्यादि। अतएव श्रीवैष्णवानां प्रणव एव महावाक्यमिति स्थितम्। तथाष्टाक्षरव्याख्याने—श्रीमते विष्णवे तस्मै दास्यं सर्वं करोम्यहम्। देशकालाद्यवस्थासु सर्वासु कमलापतिः। इति स्वरूपसंसिद्धं मुख्यं दास्यमवाप्नुयात्। एवं विदित्वा मन्त्रार्थं तद्वृत्तिं सम्यगाचरेत्। दासभूतमिदं तस्य जगत् स्थावरजङ्गमम्। श्रीमन्नारायणः स्वामी जगतां प्रभुरीश्वरः॥ इति। तदेतदाहुः—स्वकृत-पुरेष्वमीष्ववहिरन्तरसंवरणं तव पुरुषं वदन्त्यखिलशक्तिधृतोऽंशकृतम्। इति नृगतिं विविच्य कवयो निगमावपनं भवत उपासते-ऽङ्घ्रिमभवं भुवि विश्वसिताः॥ १७८॥

स्वेन त्वया कृतेषु पुरेषु देहेषु वर्त्तमानं तव पुरुषं जनं तवैवांशरूपेण तदीयस्वरूपेण कृतं नित्यसिद्धं वदन्ति। तत्राखिलशक्तिधृतस्तव इत्युक्त्या तदखिलशक्तिगणान्तःपातिजीवाख्यतटस्थशक्तिविशिष्टस्यैव तवांशो न तु स्वरूपशक्तिविशिष्टस्य केवलस्वरूपस्येत्यायातम्। ततो मूलमण्डलस्थानीयत्वदाश्रयकरश्मिपरमाणुस्थानीया जीवा इति भावः। अंशत्वे हेतुः, अवहिरन्तरसंवरणम्। वहिरन्तश्च यस्य संवरणं नास्ति किन्तु तैस्तैरुपाधिभिः संवरणमेवास्तीत्यर्थः। अतः संवरणहीनस्य तवायमंश एवेति भावः। इति एतत्प्रकारान्तु जीवस्य गतिं स्वभावत एव त्वदाश्रयकस्त्वदेकजीवनश्चासौ जीव इति तत्त्वं विविच्य ज्ञात्वा कवयः पण्डिताः विश्वसिताः श्रद्दधाना भवत एवाङ्घ्रिमुपासते। विश्वासे हेतुः, निगमावपनं सकलवेदवीजोज्जीवनैकाश्रयत्वेनं शास्त्रयोनिमित्यर्थः। अतो नित्यत्वदाश्रयैकजीवनानामपि तेषां तदैमुख्येन यत् संसारदुःखं भवति तदपि स्वयमेव पलायत इत्याहुः, अभवमिति। न विद्यते भवः संसारो यत्रेति। अथवा भजनीयस्य नित्यत्वेन भक्तेरप्यनश्वरत्वं प्रतिपादयन्ति, अभवं जन्मरहितम् अङ्घ्रिमिति। तस्मादकिञ्चनाख्या भक्तिरेव सर्वोर्द्ध्वमभिधेया॥ १०॥८७॥ श्रुतयः॥ १७८॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अथ तस्या एव प्रकारान्तरेण स्थापनाय प्रकरणान्तरं यास
लक्षणप्रकरणम्। तदेवं परमदुर्लभस्वरूपं परमदुर्लभफलस्वाभि
नाख्यसाक्षाद्भक्तिरूपं साम्मुख्यं कथं स्यादिति वक्तुं साम्मुख्यमात्र
निदानमुपलक्षयति—भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्
सत्समागमः। सत्सङ्गमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जा
मतिः॥ १७९॥

यदा भ्रमतः संसरतो भवापवर्गो भवेत् संप्राप्तकालः स्यात् त
सत्सङ्गमो भवेत्। अत्र च यदा सत्सङ्गमो भवेत् तदा भवापवर्गो भ
दिति वक्तव्ये वैपरीत्येन निर्देशस्तत्र सत्सङ्गमस्यावश्यकहेतुत्वलि
क्षया। तथोक्तं नलकूवरमणिग्रीवौ प्रति श्रीभगवता—साधूनां स
चित्तानां सुतरां मत्कृतात्मनाम्। दर्शनान्नो भवेद्बन्धः पुंसोऽ
सवितुर्यथा॥ इति। अतएवातिशयोक्तिनामालङ्कारस्य चतु
भेदोऽयमित्यालङ्कारिकाः। तदुक्तं तद्विवृतौ—चतुर्थी सा कार
गदितुं शीघ्रकारिताम्। या हि कार्य्यस्य पूर्व्वोक्तिरिति। तत्र हेतु
यदा सत्सङ्गमस्तदैव परावरेशे त्वयि मतिर्भवति। तद्वैमुख्य
नादिसिद्धतज्ज्ञानसंसर्गाभावान्ते तत्साम्मुख्यकरं तज्ज्ञानं जा
इत्यर्थः। अतएवोक्तं श्रीविदुरेण—जनस्य कृष्णाद्विमुखस्य दैव
धर्म्मशीलस्य सुदुःखितस्य। अनुग्रहायेह चरन्ति नूनं भूतानि भव्य
जनार्द्दनस्येति। अत्र दैवात् प्राचीनकर्म्मणो हेतोस्तदाविष्टाद
शीलस्य भगवद्धर्म्मरहितस्य इत्यर्थः। मूलपद्ये यर्हि तदैव
निर्देशान्न कालविलम्बेन। तत्र चैवकाराज्ज्ञान्यदा कदाचिदपीत्य
तेन तन्मतौ हेतुः, सद्गतौ यत्र यत्र सन्तः सङ्गच्छन्ते तत्र तत्र
स्फुरणं यस्य तस्मिंस्त्वयीति। तथा चेतिहाससमुच्चये—यत्र राग
रहिता वासुदेवपरायणाः। तत्र सन्निहितो विष्णुर्नृपते नात्र संश
इति। सतां गताविव्यत्र व्याख्यानेऽपि असतां त्वसौ न ग
अतस्तद्द्वारैवान्येषां तल्लाभो युक्त इति पूर्व्ववदेव। पिङ्गलाया

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सत्सङ्गो विदेहानां पुरे ह्यस्मिन्नहमेकैव मूढ़धीरित्यत्र व्यक्तोऽस्ति। टीका च—सत्सङ्गतौ सत्यामप्यहो मम मोह इत्याह, विदेहाना-मितोत्येषा। तदेवं यत्र नोपलभ्यते सत्सङ्गस्तत्राप्याधुनिकः प्राक्तनो वा पारम्परिको वानुमेय एव। अत्र कृतश्रीनारदादिदर्शनादेरपि देव-तादेः श्रीनलकूवरादिवत्ताद्दशत्वप्राप्तिर्न श्रूयते इत्यत एवं विवेचनीयम्। यद्यप्यपराधसद्भावो वर्त्तते पुरुषे तदा तद्दोषेण सत्सु निरादराणां साधारणपुण्यादिदृष्टीनाञ्च तद्दोषशान्त्यर्थं सत्सङ्गस्य भगवत्-साम्मुख्यकारणत्वे तत्कृपासाहाय्यमपेक्षते, निरपराधत्वे सति तत्सङ्गे-नैव जातपरमोत्तमदृष्टीनां तु तेषां तेषु मनोऽवधानाभावेऽपि सत्सङ्ग-मात्रं तत्कारणमिति। अतः सापराधानेवाधिकृत्योक्तम् अजानज-देवैः—तान् वै ह्यसद्वृत्तिभिरक्षिभिर्ये पराकृतान्तर्मनसः परेश। अथो न पश्यन्त्युरुगाय नूनं ये ते पदन्यासविलासलक्ष्म्या इति। तव पद-न्यासविलासलक्ष्म्याः सम्बन्धिनो ये भक्ता इत्यर्थः। ते तान् नूनं प्रायो न पश्यन्ति न कृपादृष्टिविषयीकुर्व्वन्ति इत्यर्थः। कान्, ये असद्-वृत्तिभिः सापराधचेष्टैरक्षिभिरिन्द्रियैः पराकृतान्तर्मनसः दुरीकृता-न्तर्मुखचित्तवृत्तयो वहिर्मुखा इत्येवं व्याख्यानमत्रानुसन्धेयम्। अत्र साधारणासद्वृत्तित्वं न गृह्यते। सर्वस्य तत्कृपायाः प्राक् तथाभूतत्वात्, जनस्य कृष्णाद्विमुखस्य दैवादित्यादिकमविषयं स्यादिति। तस्मा-दपराधासद्वृत्तौ तेषां कृपा प्रवर्त्तते एव। कथञ्चिदवधानाभावेन तद-प्रवृत्तावपि सङ्गमात्रेणैव तेषां सम्मतिः स्यात्। यत्र तु सापराधेऽपि स्वैरतयैव कृपां कुर्व्वन्ति तस्यैव तन्मतिः स्यान्नान्यस्य, नलकूवरवत् साधारणदेवतावच्चेति। यथा चोपरिचरवसोर्वृत्तं विष्णुधर्मे। स हि देवसाहाय्यायैव दैत्यान् हत्वा विरज्य च भगवदनुध्यानाय पाता-लञ्च प्रविष्टवान्। तत्र निवृत्तमपि हन्तुं लब्धच्छिद्रा दैत्याः समागत्य तत्प्रभावेनोद्यतशस्त्रा एवातिष्ठन्। ततश्च व्यर्थोद्यमाः पुनः शुक्रोप-देशेन तं प्रति पाषण्डमार्गमुपदिशन्तोऽपि जातया तत्कृपया भगव-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्ता बभूवुरिति। अत उक्तं विष्णुधर्म एव, अनेकजन्मसंसार-
पापसमुच्चये। नाक्षीणे जायते पुंसां गोविन्दाभिमुखी मतिरिति। न
नैतान् विहाय कृपणान् विमुमुक्ष एको नान्यस्त्वदस्य शरणं भ्रमतो
पश्य इत्येवं श्रीप्रह्लादस्य सर्व्वस्मिन्नपि संसारिणि कृपा जाता,
कथं न सर्व्वमुक्तिः स्यात्, उच्यते। जीवानामनन्तत्वान्न ते सर्व्वे स
तस्याऽऽरूढ़ास्ततो यावन्तो दृष्टश्रुतास्तच्चेतस्याऽऽरूढ़ास्तावतां तत्प्रभा
क्षविश्यत्येव मोक्षः। नैतानित्येतच्छब्दप्रयोगात्। ये चान्ये तेषामपि
कीर्त्तनस्मरणमात्रेणैव कृतार्थतावरं स्वयमेव कृपया दत्तवान् श्रीनृसि
देवः—य एतत् कीर्त्तयेन्मह्यं त्वया गीतमिदं नरः। त्वाञ्च
स्मरन् काले कर्मबन्धात् प्रमुच्यत इति। यस्त्वां कीर्त्तयेदपि
पुनस्त्वं यान् कृपया स्मरसीति भावः। तस्मात् साधूक्तं भवाप
भ्रमतो यदा भवेदिति ॥ १० ॥ ५१ ॥ मुचुकुन्दः श्रीभगवन्तम् ॥

ततः सत्सङ्गस्यैव तत्र निदानत्वं सिद्धम्। तच्च युक्तम्। अ
सिद्धतदज्ञानमयतद्वैमुख्यवतामन्यथा हि तदसम्भवः। तदुक्तम्—त
ऽप्रतिष्ठः श्रुतयो विभिन्ना नासावृषिर्यस्य मतं न भिन्नम्। ध
तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः॥ इति। त
श्रीप्रह्लादवाक्यम्—मतिर्न कृष्णे परतः स्वतो वा मिथोऽभिपद्येत
व्रतानामित्युपक्रम्य, नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थाप
यदर्थः। महीयसां पादरजोऽभिषेकं निष्किञ्चनानां न वृणीत याव
इति। तथा तद्विमुखकर्मादिभिस्तत्साम्मुख्यप्रतिपत्तेश्चात्यन्ताभा
अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतादन्यत्र भूताच्च भ
च्चेति श्रुत्यादेः। तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदि
यज्ञेन दानेन तपसानाशकेनेति श्रुत्यादिकन्तु तत्साम्मुख्ये नैव
क्तानि कर्माण्यभिदधाति। तर्हि तदेव साम्मुख्यं कथं स्यादिति
रपि हेतुरेव प्रष्टव्यः स्यात्। अथ भगवत्कृपैव तत्साम्मुख्ये प्राथ
कारणमिति च गौणम्। सा हि संसारदुरन्तानन्तसन्तापसन्त

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तद्विमुखेषु स्वतन्त्रा न प्रवर्त्तते तदसम्भवात् । कृपारूपश्चेतोविकारो हि परदुःखस्य स्वचेतसि स्पर्शे सत्येव जायते । तस्य तु सदा परमानन्दैकरसत्वेनापहतकल्मषत्वेन च श्रुतौ जीवविलक्षणत्वसाधनात्, तेजोमालिनस्तिमिरायोगवत्तच्चेतस्यपि तमोमयदुःखस्पर्शनासम्भवेन, तत्र तस्या जन्मासम्भवः । अतएव सर्वदा विराजमानेऽपि कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थे तस्मिन् तद्विमुखानां न संसारसन्तापशान्तिः । अतः सत्कृपैवावशिष्यते । सन्तोऽपि तदानीं यद्यपि संसारदुःखैर्न स्पृशन्त एव, तथापि लब्धजागराः स्वप्नदुःखवत्ते कदाचित् स्मरेयुरपोत्यतस्तेषां सांसारिकेऽपि कृपा भवति, यथा श्रीनारदस्य नलकूवरमणिग्रीवयोः । तस्मात् प्रस्तुतेऽपि सांसारिकदुःखस्य तद्धेतुत्वाभावात्, परमेश्वरकृपा तु, स एवात्र मम शरणमित्यादिदैन्यात्मिका भक्तिसम्बन्धेनैव जायते, यथा गजेन्द्रादौ, व्यतिरेके नारक्यादौ । भक्तिर्हि भक्तकोटिप्रविष्टतदार्द्रीभावयितृतच्छक्तिविशेष इति विवृतं विवरिष्यते च । दैन्यसम्बन्धेन च साधिकमुच्छलिता भवतीति तत्र तदाधिक्यम् । तस्माद् या कृपा तस्य सत्सु वर्त्तते सा सत्सङ्गद्वारेणैव वा सत्कृपाद्वारेणैव वा सतो जीवान्तरे संक्रमते न स्वतन्त्रेति स्थितम् । तथैव चाहुः—स्वयं समुत्तीर्य्य सुदुस्तरं द्युमन् भवार्णवं भीममदभ्रसौहृदाः । भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवान् ॥ १८० ॥

हे द्युमन् स्वप्रकाश, भवत्पदाम्भोरुहलक्षणा या नौः भवार्णवतरणोपायः तामत्र भवार्णवपारे निधाय उत्तरोत्तरजनेषु प्रकाश्येत्यर्थः । ननु कथं तां न स्वयं प्रकाशयामि, कथमिव तेषामपेक्षा, तत्राह, सद्भिरेव द्वारभूतैरन्याननुगृह्णाति यः स सदनुग्रहो भवानिति । यद्वा सन्त एवानुग्रहो यस्य सः । तवानुग्रहो यः प्रापञ्चिके चरति स तदाकारतयैव चरति नान्यरूपतयेत्यर्थः । यथोक्तं रुद्रगीते—श्रयानपाङ्घ्रेस्तव कीर्त्तिं तीर्थयोरन्तर्बहिःस्नानविधूतपाप्मनाम् ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भूतेष्वनुक्रोशसुसत्वशीलिनां स्यात् सङ्गमोऽनुग्रह एष न स्तवैरिति सत्सु अनुग्रहो यस्येति व्याख्यानेऽपि तद्विमुखेष्वसत्सु तवानुग्रहो नास्तीति प्राप्तेः, सद्द्वारैव तत्प्रकाशनमुचितमित्येवायाति। तदुक्तं जायमानं हि पुरुषं पश्येदयं मधुसूदनः। सात्त्विकः स तु विज्ञेयो भवेन्मोक्षार्थनिश्चितः॥ इति मोक्षधर्मवचनमपि सत्सङ्गानन्तरजन्मापेक्षमेव बोद्धव्यम् ॥१०॥२॥ देवाः श्रीभगवन्तम् ॥१८०॥

ततः सत्सङ्गहेतुश्च सतां स्वैरचारितैव नान्यः। यथाह—एकदा निमेः सत्रमुपाजग्मुर्यदृच्छयेति ॥ १८१ ॥

ते नव योगीश्वरा यदृच्छया स्वैरतया न तु हेत्वन्तरप्रयुक्तत्वेनेत्यर्थः। यदृच्छा स्वैरतेत्यमरः। सत्सु परमेश्वरप्रयोक्तृत्वञ्च संदिच्छानुसारेणैव। तदुक्तं, स्वेच्छामयस्येति अहं भक्तपराधीन इति च। ११ ॥ २ ॥ श्रीनारदः ॥१८१॥

तथाच—तस्यैकदा तु भवनमङ्गिरा भगवानृषिः। लोकाननुचरन्नेतानुपागच्छद् यदृच्छया ॥ १८२ ॥

तस्य चित्रकेतोः। अत्रापि तदैव तस्य साम्मुख्यं जातं, कालान्तरे तु प्रादुर्भूतमिति मन्तव्यम्। अतएव तद्विलापसमये श्रीमतादरसैव ब्रह्मण्यो भगवद्भक्तो नावसीदितुमर्हतीत्युक्तम् ॥ ६ ॥ १४ ॥ श्रीशुकः ॥ १८२ ॥

सतां कृपा च दुरवस्थादर्शनमात्रोद्भवा न स्वोपासनाद्यपेक्षा, यथा श्रीनारदस्य नलकूवरमणिग्रीवयोः। तदाह—भजन्ति ये यथा देवान् देवा अपि तथैव तान्। छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥ १८३ ॥

स्पष्टम् ॥ ११ ॥ २ ॥ श्रीमानानकदुन्दुभिः ॥ १८३ ॥

सत्सङ्गमस्यैव परमसंस्कारहेतुत्वात्तदर्थं न पुरुषस्य संस्कारान्तरमपेक्ष्यञ्च। यत आह—न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः। ते पुनन्त्युरुकालेन दर्शनादेव साधव इति ॥ १८४ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

साम्मुख्यस्य तत्तदनुषङ्गेणैव तत्तद्भजनीये भगवदाविर्भावविशेषे तद्भजनमार्गविशेषे च रुचिर्जायते। ततश्च विशेषबुभुत्सायां सत्यां तेष्वेकतोऽनेकतो वा श्रीगुरुत्वेनाश्रितात् श्रवणं क्रियते। तच्चोपक्रमोपसंहारादिभिरर्थावधारणम्। पुनश्चासम्भावनाविपरीतभावनाविशेषवता स्वयं तद्विचाररूपं मननमपि क्रियते। ततो भगवतः सर्वस्मिन्नेवाविर्भावे तवाविधोऽसौ सदा सर्वत्र विराजत इत्येवंरूपा श्रद्धा जायते। तत्रैकस्मिंस्तु नया प्रथमजातया रुच्या सह निजाभीष्टदानसामर्थ्यातिशयवत्तानिर्द्धारणरूपत्वेन सैव श्रद्धा समुल्लसति। तत्र यद्यप्येकत्रैवातिशयितापर्य्यवसानं सम्भवति, न तु सर्वत्र, तथापि केषाञ्चित् ततो विशिष्टस्य श्रज्ञानादन्यत्रापि तथाबुद्धिरूपा श्रद्धा सम्भवति। एवं भजनमार्गविशेषश्च व्याख्यातव्यः। तदेवं सिद्धे ज्ञाने विज्ञानार्थं निदिध्यासनलक्षणतत्तदुपासनमार्गभेदोऽनुष्ठीयते। इत्येवं विचारप्रधानानां मार्गो दर्शितः। रुचिप्रधानानान्तु न तादृग्विचारापेक्षा जायते, किन्तु साधुसङ्गलीलाकथाश्रवणरुचिश्रद्धाश्रवणाद्यावृत्तिरूप एवासौ, यथा शुश्रूषोः श्रद्दधानस्य इत्यादिना पूर्वं दर्शितः, सतां प्रसङ्गान्मम वीर्य्यसंविद इत्यादौ च द्रष्टव्यः। प्रीतिलक्षणभक्तीच्छूनान्तु रुचिप्रधान एव मार्गः श्रेयान्, नाजातरुचीनामिव विचारप्रधानः। यथोक्तं श्रीप्रह्लादेन—नैते गुणानगुणिनो महदादयो ये सर्वे मनःप्रभृतयः सहदेवमर्त्त्याः। आद्यन्तवन्त उरुगाय वदन्ति हि त्वामेवं विविच्य सुधियो विरमन्ति शब्दात्॥ तत्तेऽर्हत्तम नमःस्तुतिकर्म्मपूजाः कर्म्मस्मृतिश्चरणयोः श्रवणं कथायाम्। संसेवया त्वयि विनेति षड़ङ्गया किं भक्तिं जनः परमहंसगतौ लभेत॥ इति। कर्म्म परिचर्य्या। कर्म्मस्मृतिर्लीलास्मरणम्। चरणयोरिति सर्व्वत्रान्वितं भक्तिव्यञ्जकम्। तदेतदुभयस्मिन्नपि तत्तद्भजनविधिशिक्षागुरुः प्राक्तनः श्रवणगुरुरेव भवति, तथाविधस्य प्राप्तत्वात्। प्राक्तनानां बहुत्वेऽपि प्रायस्तेष्वेवान्यतरोऽभिरुचितः। पूर्वस्मादेव हेतोः श्रीमन्त्रगुरुस्त्वेक एव,

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

निषेत्स्यमानत्वादङ्गनाम्। अथात्र प्रमाणानि। तत्र तदाविर्भाव-विशेषरुचिः, महापुरुषसभ्यर्च्चेन्मूर्त्त्याभिमतयात्मनः इत्याद्यौ, श्रीमदा-विर्होत्रादिनाभिप्रेता। भजनविशेषरुचिश्च, वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः। त्रयाणामीप्सितेनैव विधिना मां समर्च्चयेत् इत्यादौ, श्रीभगवताभिप्रेतः। अतः श्रवणगुरुमाह—तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्। शाब्दे परे च निष्णातं ब्रह्मण्यु-पशमाश्रयम्॥ २०२॥

शाब्दे ब्रह्मणि वेदे तात्पर्य्यविचारेण परे ब्रह्मणि भगवदादिरूपा-विर्भावे तु अपरोक्षानुभवेन निष्णातं तथैव निष्ठां प्राप्तम्। यथोक्तं पुरञ्जनोपाख्यानाद्युपसंहारे श्रीनारदेन—स वै प्रियतमश्चात्मा यतो न भयमण्वपि। इति वेद स वै विद्वान् यो विद्वान् स गुरुर्हरिः इति॥११॥३॥ श्रीप्रबुद्धो निमिम्॥ २०२॥

अत्र ब्रह्मवैवर्त्ते विशेषः—वक्ता सरागो नीरागो द्विविधः परि-कीर्त्तितः। सरागो लोलुपः कामी तदुक्तं हृत् न संस्पृशेत्॥ उपदेशं करोत्येव न परीक्षां करोति च। अपरीक्ष्योपदिष्टं यत् लोकनाशाय तद्भवेत्॥ किञ्च, कुलं शीलमथाचारमविचार्य्य गुरुं गुरुम्। भजेत श्रवणाद्यर्थी सरसं सारसागरम्॥ सरसत्वादिकं व्यञ्जितं तत्रैवान्यत्र कामक्रोधादियुक्तोऽपि कृपणोऽपि विषादवान्। श्रुत्वा विकाशमायाति स वक्ता परमो गुरुरिति। एवम्भूतगुरोरभावात् युक्तिभेदश्च बहूनप्याश्रयन्ते केचित्। यथा—न ह्येकस्माद् गुरो र्ज्ञानं सुस्थिरं स्यात् सुपुष्कलम्। ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः॥ २०२॥

स्पष्टम्॥ ११॥ १९॥ श्रीदत्तात्रेयो यदुम्॥ २०२॥

तत्र रुचिप्रधानानां श्रवणादिकम्—तत्रान्वहं कृष्णकथाः प्रगाय-तामनुग्रहेणाशृणवं मनोहराः। ताः श्रद्धया मेऽनुपदं विशृण्वतः प्रियश्रवस्यङ्ग ममाभवद्रतिः॥ इत्याद्युक्तप्रकारम्। विचारप्रधानानां तु यथा चतुःश्लोक्यादीनाम्। मननं यथा, भगवान् ब्रह्म कार्त्स्न्येन

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्यादौ। अथ तज्जाता श्रीभगवति श्रद्धा यथा—अस्ति यज्ञपतिर्नाम केषाञ्चिदर्हत्तमाः। इहामुत्र च लक्ष्यन्ते ज्योत्स्नावत्यः क्वचिद्भुवः॥ मनोरुत्तानपादस्य ध्रुवस्यापि महीपतेः। प्रियव्रतस्य राजर्षे रङ्गस्यास्मत् पितुः पितुः॥ ईदृग्विधानामथान्येषामजस्य च भवस्य च। प्रह्लादस्य बलेश्चापि कृत्यमस्ति गदाभृता॥ दौहित्रादीनृते मृत्योः शोच्यान् धर्मविमोहितान्। वर्गस्वर्गापवर्गाणां प्रायेणैकात्म्यहेतुना॥२०५॥

हे अर्हत्तमाः, यज्ञपतिर्नाम सर्वकर्मफलदातृत्वेन श्रुतिप्रतिपादितः परमेश्वरः केषाञ्चित् श्रुत्यर्थतत्त्वज्ञानां मते तावदस्ति, तथापि विप्रतिपत्तेर्न तत्सिद्धिरित्याशङ्क्य तत्र जगद्वैचित्र्यान्यथानुपपत्तिप्रमाणमप्युपोद्बलकमित्याह, इह प्रत्यक्षेणामुत्र शास्त्रेण तद्वदित्यनुमानेन च ज्योत्स्नावत्यः कान्तिमत्यो भुवो भोगभूमयो देहाश्च क्वचिदेवोपलभ्यन्ते न सर्वत्रेति। अयं भावः। न वा जड़स्य तत्कर्मणस्तत्तत्फलदातृत्वं घटते, फलमत उपपत्तेरिति न्यायात्। न चार्वाग्देवतानां स्वातन्त्र्यम्, अन्तर्यामिश्रुतेः। न च कर्मसाम्ये फलतारतम्यं क्वचिच्च तदसिद्धिः सम्भवति। अतः स्वतन्त्रेण परमेश्वरेण भाव्यम्। अत्र विद्वदनुभवोऽपि प्रमाणमित्याह, मनोरिति त्रिभिः। अस्मत्पितुः पितुः पितामहस्याङ्गस्य। प्रह्लादबली तदानीं शास्त्रादेव ज्ञात्वा गणितौ। गदाभृता परमेश्वरेण कृत्यमस्ति, हृदये बहिरपि आविर्भूय तेषां मुहुः कृत्यसम्पादनात्, तेन यत् कृत्यं करणीयं तत् तेषामस्तीत्यर्थः। तेषामेव तेन सह कृत्यमस्ति नान्येषामित्यर्थो वा। तदन्यांस्तु निन्दितत्वेनाह, मृत्योर्दौहित्रादीन् वेणप्रभृतीन् धर्मविमोहितान्। गदाभृच्छब्देन तन्नाम्ना प्रसिद्धात् श्रीविष्णोरन्यत्र परमेश्वरत्वं वारयति श्रुतियुक्तिविद्वदनुभवेषु। तं गदाभृतं विशिनष्टि वर्गेति। वर्गोऽत्र त्रिवर्गः। स्वर्गो धर्मस्य फलम्। अपवर्गो मोक्षः। तेषामैकात्म्येनैकरूप्येण सर्वान्तर्गतेन हेतुना। तत्रापि प्रायेण प्रचुरेण हेतुना। तदुक्तं स्कान्दे—बन्धको भवपाशेन भवपाशाच्च मोचकः। कैवल्यदः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

परं ब्रह्म विष्णुरेव सनातनः ॥ इति । अथ भजनश्रद्धा यथा—यत्पाद-
सेवाभिरुचिस्तपस्विनामशेषजन्मोपचितं मलं धियः । सद्यः चिणोत्य-
न्वहमेधती सती यथा पदाङ्गुष्ठविनिःसृता सरित् ॥ विनिर्धुताशेष-
मनोमलः पुमानसङ्गविज्ञानविशेषवीर्य्यवान् । यदङ्घ्रिमूले कृतकेतनः
पुनर्न संसृतिं क्लेशवहां प्रपद्यते ॥ २०५ ॥

तपस्विनां संसारतप्तानाम् । तत्पादसम्बन्धस्यैवैष महिमा ... दृष्टान्तेनाह यथेति । असङ्गस्ततोऽन्यत्रानासक्तिस्तेन विज्ञानविशे... भगवतो नानाविर्भावत्वात् तेषां मध्ये कस्याप्याविर्भावस्य साचात्कार... तदेव वीर्य्यं विद्यते यस्य सः । यस्याङ्घ्रिमूले कृताश्रयः सन् ॥४॥२... श्रीपृथुराजः सभ्यान् ॥२०४॥२०५॥

अथ श्रवणगुरुभजनशिचागुर्वोः प्रायिकमेकत्वमिति तत्रैवाह-
तत्र भागवतान् धर्म्मान् शिचेद्गुर्वात्मदैवतः । अमाययानुवृत्त्या यै-
स्तुष्येदात्मात्मदो हरिः ॥२०६॥

तस्माद्गुरुं प्रपद्येतेति पूर्व्वोक्ते स्तत्र श्रवणगुरौ । गुरुरेवात्मा जीव... दैवतं निजेष्टदैवततयाभिमतश्च यस्य तथाभूतः सन् । अमामया नि... श्रया अनुवृत्त्या तदनुगत्या शिचेत् । यैः धर्म्मैः । आत्मा परमात्मा... भक्तेभ्य आत्मप्रदः श्रीबलिप्रभृतिभ्य इव । अस्य शिचागुरोर्बहुत्व... मपि प्राग्वज्ज्ञेयम् ॥११॥६॥ श्रीप्रबुद्धो निमिम् ॥ २०६ ॥

मन्त्रगुरुस्त्वेक एवेत्याह—लब्धानुग्रह आचार्य्यात् तेन सन्दर्शि...
गमः । महापुरुषमभ्यर्चेन्मूर्त्त्याभिमतयात्मनः ॥ २०७ ॥

अनुग्रहो मन्त्रदीचारूपः । आगमो मन्त्रविधिशास्त्रम् । ... त्वमेकवचनेन बोध्यते । बोधः कलुषितस्तेन दौरात्म्यं प्रकटी... गुरुर्येन परित्यक्तस्तेन त्यक्तः पुरा हरिः ॥ इति ब्रह्मवैवर्त्तादौ त... निषेधात् । तदपरितोषेणैवान्यो गुरुः क्रियते । ततोऽनेकगुरुक... पूर्व्वत्याग एव सिद्धः । एतच्चापवादवचनद्वारापि श्रीनारदपञ्चरा... बोधितम्—अवैष्णवोपदिष्टेन मन्त्रेण निरयं व्रजेत् । पुनश्च वि...

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सम्यग् ग्राहयेद् वैष्णवाद्गुरोरिति ॥ ११ ॥ ३ ॥ श्रीमदाविर्होत्रो निमिम् ॥२०७॥

तत्र श्रवणगुरुसंसर्गेणैव शास्त्रीयज्ञानोत्पत्तिः स्यात् नान्यथेत्याह—
आचार्य्योऽरणिराद्यः स्यादन्तेवास्युत्तरारणिः । तत्सन्धानं प्रवचनं विद्या सन्धिः सुखावहः ॥ २०८ ॥

आद्यः अधरः । तत्सन्धानं तयोर्मध्यमं मन्थनकाष्ठम् । प्रवचनमुपदेशः । विद्या शास्त्रोक्तं ज्ञानन्तु सन्धौ भवोऽग्निरिव । तथाच श्रुतिः, आचार्य्यः पूर्वरूपमित्यादि । अतएव तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदिति । आचार्य्यवान् पुरुषो वेदेति । नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठेति ॥ ११ ॥ १० ॥ श्रीभगवान् ॥ २०८ ॥

शिक्षागुरोरप्यावश्यकत्वमाहुः—विजितहृषीकवायुभिरदान्तमनस्तुरगं य इह यतन्ति यन्तुमतिलोलमुपायखिदः । व्यसनशतान्विताः समवहाय गुरोश्चरणं वणिज इवाज सन्त्यकृतकर्णधरा जलधौ ॥२०९॥

ये गुरोश्चरणं समवहाय अतिलोलुपम् अदान्तमदमितं मन एव तुरगं विजितैरिन्द्रियैः प्राणैश्च कृत्वा यन्तुं भगवदन्तर्मुखीकर्त्तुं प्रयतन्ते ते उपायखिदः तेषु तेषु उपायेषु खिद्यन्ते अतो व्यसनशतान्विता भवन्ति अतएव इह संसारे तिष्ठन्त्येव । हे अज । अकृतकर्णधरा अस्वीकृतनाविका जलधौ यथा तद्वत् । श्रीगुरूपदर्शितभगवद्भजनप्रकारेण भगवद्धर्म्मज्ञाने सति तत्कृपया व्यसनानभिभूतौ सत्यां शीघ्रमेव मनो निश्चलं भवतीति भावः । अतो ब्रह्मवैवर्त्ते—गुरुभक्त्या स मिलति स्मरणात् सेव्यते बुधैः । मिलितोऽपि न लभ्येत जीवैरहमिकापरैः ॥ श्रुतिश्च—यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ इति ॥ १० ॥ ८७ ॥ श्रुतयः ॥ २०९ ॥

अतः श्रीमन्मगुरोरावश्यकत्वं सुतरामेव । तदेतत्परमार्थगुर्व्-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अथो व्यवहारिकगुर्वादिपरित्यागेनापि कर्त्तव्य इत्याशयेनाह—गुरु
स स्यात् स्वजनो न स स्यात् पिता न स स्याज्जननी न सा स्यात्
दैवं न तत् स्यात् न पतिश्च स स्यात् न मोचयेद् यः समुपेत
मृत्युम् ॥ २१० ॥

समुपेतः संप्राप्तो मृत्युः संसारो येन तम्। अत उक्तं श्रीना
देन—जुगुप्सितं धर्म्मकृतेऽनुशासतः स्वभावरक्तस्य महान् व्यति
इत्यादि। तस्मात् तावदेव तेषां गुर्वादिव्यवहारो यावन्मृत्युमो
श्रीगुरुचरणं नाश्रयत इत्यर्थः ॥५॥५॥ श्रीऋषभदेवः स्वपुत्रान् ॥२१

अन्यदा स्वगुरौ कर्म्मिभिरपि भगवद्दृष्टिः कर्त्तव्येत्याह—आचा
मां विजानीयान्नावमन्येत कर्हिचित्। न मर्त्यबुद्ध्यासूयेत सर्वदेव
गुरुः ॥ २११ ॥

ब्रह्मचारिधर्म्मान्तः पठितमिदम् ॥११॥१७॥ श्रीभगवान् ॥२१

ततः सुतरामेव परमार्थिभिस्तादृशे गुरावित्याह—यस्य साक्ष
भगवति ज्ञानदीपप्रदे गुरौ। मर्त्यासद्धीः श्रुतं तस्य सर्वं कुञ्जरशौ
वत्॥ एष वै भगवान् साक्षात् प्रधानपुरुषेश्वरः। योगेश्वरैर्वि
म्याङ्घ्रिर्लोकोऽयं मन्यते नरम् ॥ २१२ ॥

एष श्रीकृष्णलक्षणोऽपि। ततः प्राकृतदृष्टिर्न भगवत्त्वज्ञ
प्रमाणमिति भावः ॥ ७ ॥ १५ ॥ श्रीनारदो युधिष्ठिरम् ॥ २१२

शुद्धभक्तास्त्वेके श्रीगुरोः श्रीशिवस्य च भगवता सहाभेददृष्टिं त
प्रियतमत्वेनैव मन्यन्ते। यथा—वयन्तु साक्षाद् भगवान् भव
प्रियस्य सख्युः क्षणसङ्गमेन। सुदुश्चिकित्स्यस्य भवस्य मृत्योर्भिष
तमं त्वाद्यगतिं गताः स्मः ॥ २१३ ॥

टीका च—तव यः प्रियः सखा तस्य भवस्य। अत्यन्तमचिकि
त्स्यस्य भवस्य जन्मनो मृत्योश्च भिषक्तमं सद्वैद्यं त्वां गतिं
इत्येषा। श्रीशिवो ह्येषां वर्हिषां गुरुः ॥ ४ ॥ ३० ॥ श्रीप्रचे
श्रीमदष्टभुजपुरुषम् ॥ २१३ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदेवं रुच्यादिः श्रीगुर्वाश्रयान्तः उपासनापूर्वाङ्गरूपः साम्मुख्यभेदो बहुविधो दर्शितः। अथ साक्षादुपासनलक्षणस्तद्भेदोऽपि बहुविधो दर्श्यते। तत्र साम्मुख्यं द्विविधम्—निर्विशेषमयं सविशेषमयञ्च। तत्र पूर्वं ज्ञानम्। उत्तरन्तु द्विविधम्—अहंग्रहोपासनरूपं भक्तिरूपञ्च। अथ ज्ञानस्य लक्षणम्—ज्ञानञ्चैकात्म्यदर्शनम् इति ॥ २१४ ॥

अभेदोपासनं ज्ञानमित्यर्थः ॥ ११ ॥ १९ ॥ श्रीभगवान् ॥ २१४ ॥

तत्साधनप्रकारश्चैवं बहुविधस्तत्र तत्रोक्तः। स च ज्ञानमेवोच्यते। तत्र श्रवणं श्रीपृथुसनत्कुमारसंवादादौ द्रष्टव्यम्। तदनुसारेण मननञ्च ज्ञेयम्। प्रथमतः श्रोतॄणां हि विवेकस्तावानेव यावता जड़ातिरिक्तं चिन्मात्रं वस्तूपस्थितं भवति। तस्मिंश्चिन्मात्रेऽपि वस्तुनि या विशेषाः स्वरूपभूतशक्तिसिद्धा भगवत्तादिरूपा वर्त्तन्ते तांस्ते विवेक्तुं न क्षमन्ते यथा रजनीखण्डिनि ज्योतिषि ज्योतिर्मात्रत्वेऽपि ये मण्डलान्तर्बहिश्च दिव्यविमानादिपरस्परपृथग्भूतरश्मिपरमाणुरूपा विशेषास्तांश्चर्मचक्षुषो न क्षमन्ते इत्यन्वयः तद्वत्। पूर्ववच्च यदि महत्कृपाविशेषेण दिव्यदृष्टिता भवति तदा विशेषोपलब्धिश्च भवेत्। न चेन्निर्विशेषचिन्मात्रब्रह्मानुभवेन तल्लीन एव भवति। तथैव निदिध्यासनमपि तेषाम्। तद्यथा—स्थिरं सुखञ्चासनमास्थितो यतिर्यदा जिहासुरिममङ्ग लोकम्। काले च देशे च मनो न सज्जयेत् प्राणान् नियच्छेन्मनसा जितासुः ॥ मनः स्वबुद्ध्यामलया नियम्य क्षेत्रज्ञ एतां निलयेत् तमात्मनि। आत्मानमात्मन्यवरुध्य धीरो लब्धोपशान्तिर्विरमेत कृत्यात् ॥ २१५ ॥

एतां बुद्धिं क्षेत्रज्ञे बुद्ध्यादिद्रष्टरि निलयेत् प्रविलापयेत्। तञ्च क्षेत्रज्ञं स्वरूपभूतया शुद्ध्या आत्मनि तद्द्रष्टृत्वादिरहिते शुद्धे जीवे। तञ्च शुद्धमात्मानम् आत्मनि ब्रह्मणि। अवरुध्य तदेकत्वेन विचिन्त्य। लब्धोपशान्तिः प्राप्तनिर्वृतिः सन् कृत्याद्विरमेत्। तस्य ततः परं प्राप्याभावात् ॥ २ ॥ २ ॥ श्रीशुकः ॥ २१५ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदेवं ज्ञानमुक्तम्। इदमेव स्वभावोऽध्यात्ममुच्यत इत्यं श्रीगीतासूक्तम्। स्वस्य शुद्धस्यात्मनो भावो भावना आत्मन्यधि वर्त्तमानत्वादध्यात्मशब्देनोच्यत इत्यर्थः। अथाहंग्रहोपासनं तच्छ विशिष्ट ईश्वर एवाहमिति चिन्तनम्। अस्य फलं स्वस्मिंस्तच्छ द्याविर्भावः। यथा विष्णुपुराणे नागपाशादियन्त्रितः श्रीप्रह्लादस्ता मात्मानं स्मरन् नागपाशादिकमुत्सारितवान्। अत्रान्तिमफ कीटपेशस्कृन्न्यायेन सारूप्यसाष्टर्यादिकञ्च ज्ञेयम्। अथ भक्ति तस्यास्तटस्थलक्षणं स्वरूपलक्षणञ्च यथा गरुड़पुराणे—विद्धि प्रवक्ष्यामि यया सर्वमवाप्यते। यथा भक्त्या हरिस्तुष्येत् तथा नान्य केनचित्॥ इत्युक्त्वाह, भज इत्येष वै धातुः सेवायां परिकीर्त्ति तस्मात् सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी॥ इति। अत्र यया मवाप्यते इति तटस्थलक्षणम्। तत्र च अकामः सर्वकामो वेत्य सिद्धत्वादव्याप्त्यभावः, यथा भक्त्येत्याद्युक्तत्वादतिव्याप्त्यभावः, इ प्रोक्तत्वादसम्भवाभावश्च। सेवाशब्देन स्वरूपलक्षणम्। स च कायि वाचिकमानसात्मिका त्रिविधैवानुगतिरुच्यते। अतएव भयद्वेषादे मर्हंग्रहोपासनायाश्च व्यावृत्तिः। साधनभूयसी साधनेषु श्रेष्ठेत्य तदेव लक्षणद्वयं प्रकारान्तरेणाह—ये वै भगवता प्रोक्ता उ ह्यात्मलब्धये। अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान्॥

अविदुषां पुंसां तन्माहात्म्यमविद्वद्भिः अपि कर्त्तृभिः। यत ब्रह्म परमात्मा भगवान् इति आविर्भावभेदवतः स्वस्य धर्मस्य अञ्जः अनायासेनैव लब्धयेःलाभाय। उपायाः साधनानि। स्वयं वता, कालेन नष्टा वाणीयं प्रलये वेदसंज्ञिता। मयादौ ब्रह्मणे धर्म्मो यस्यां मदात्मकः॥ इत्यनुसारेण प्रोक्ताः। तान् उ भागवतान् धर्म्मान् विद्धि। हि प्रसिद्धौ। तत्र साक्षाद्भक्तिरेव वतधर्म्मास्थलम् एतावानेव लोकेऽस्मिन् इत्यादौ परमधर्म्मत्व दर्शितम्। अत्रात्मलब्धये प्रोक्ता इति तटस्थलक्षणम्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तद्लाभादव्यभिचारि । आत्मलब्धये उपाया इति तु स्वरूपलक्षणम् । तल्लाभोपायो हि तदनुगतिरेव ॥११॥२॥ श्रीकविर्निमिम् ॥ २१६ ॥

सा भक्तिस्त्रिविधा आरोपसिद्धा सङ्गसिद्धा स्वरूपसिद्धा च । तत्रारोपसिद्धा स्वतो भक्तित्वाभावेऽपि भगवदर्पणादिना भक्तित्वं प्राप्ता कर्म्मादिरूपा । सङ्गसिद्धा स्वतो भक्तित्वाभावेऽपि तत्परिकरतया संस्थापनेन, तत्र भागवतान् धर्म्मान् शिक्षेद्गुर्वात्मदैवत इत्यादि-प्रकरणेषु, सर्वतो मनसोऽसङ्गमित्यादिना लब्धतदन्तःपाता ज्ञानकर्म्म-तदङ्गरूपा । स्वरूपसिद्धा चाज्ञानादिनापि तत्प्रादुर्भावे भक्तित्वा-व्यभिचारिणी साक्षात् तदनुगत्यात्मा तदीयश्रवणकीर्त्तनादिरूपा । श्रवणं कीर्त्तनं विष्णोरित्यादौ विष्णोः श्रवणं विष्णोः कीर्त्तनमिति विशिष्टस्यैव विवक्षितत्वात् तेषामपि नारोपसिद्धत्वम् । यथा श्रीप्रह्लादस्य पूर्वजन्मनि श्रीनृसिंहचतुर्द्दश्युपवासः । यथा कुक्कुरमुखगतस्य श्येनस्य भगवन्मन्दिरपरिक्रमः । एवमन्यदृष्ट्यादिना मूढ़ादिभिः कृतस्य वन्दन-स्यापि ज्ञेयम् । तदेवं त्रिविधापि सा पुनरकैतवा सकैतवा चेति द्विविधा ज्ञेया । तत्रारोपसङ्गसिद्धयोर्यस्या भक्तेः सम्बन्धेन भक्तिपदप्राप्तरां सामर्थ्यं तन्मात्रापेक्षत्वं चेत् सकैतवत्वम् । स्वरूपसिद्धायाश्च यस्य भगवतः सम्बन्धेन तादृशं माहात्म्यं तन्मात्रापेक्षपरिकरत्वञ्चेदकैतवत्वं, प्रयोजनान्तरा-पेक्षया कर्म्मज्ञानपरिकरत्वञ्चेत् सकैतवत्वम् । इयमेवाकैतवाकिञ्चना-ख्यत्वेन पूर्वमुक्ता । धर्म्मः प्रोज्झितकैतवोऽत्र परम इत्येव वास्य तदुभयविधत्वे प्रमाणं ज्ञेयम् । तथोक्तम्—प्रीयतेऽमलया भक्त्या हरि-रन्यद्विड़म्बनमिति । अथारोपसिद्धा । एतदर्थमेव नैष्कर्म्म्यमप्य-च्युतभाववर्जितमित्यादौ, सकामनिष्कामयो र्द्वयोरपि कर्म्मणो र्निन्दा, भगवद्वैमुख्यानिक्षेपात् । तत्र याद‍ृच्छिकचेष्टाया अपि भगवदर्पितत्वे भगवद्धर्म्मत्वं भवति किमुत वैदिककर्म्मण इति वक्तुं तस्या अपि तद्रूपत्व-माह—कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वानुसृतस्वभावात् । करोति यद्यत् सकलं परस्मै नारायणायेति समर्पयेत् तत् ॥ २१७ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पूर्वं हि धर्म्मान् भागवतान् ब्रूत इति प्रश्नानन्तरं, ये वै भगवता प्रोक्ता इत्यादिना मुख्यत्वेन साक्षात् तल्लब्धये उपायभूताः श्रवण-कीर्त्तनादयो भागवता धर्म्मा लक्षिताः। ते चात्रैव शृण्वन् सुभद्राणि रथाङ्गपाणेरित्यादिना कतिचिद् दर्शिताः। उत्तराध्याये च तत्र भागवतान् धर्म्मान् शिक्षेद्गुर्वात्मदैवत इत्युपक्रमवाक्यादनन्तरम्, इति भागवतान् धर्मान् शिक्षन् भक्त्या तदुत्थया इत्युपसंहारवाक्यस्य प्राक् भागवतधर्मत्वेनान्यसङ्गादित्यागादिकमपि वक्ष्यते, सर्वतो मनसोऽसङ्ग-मित्यादिना। तस्मात् लौकिककर्माद्यर्पणमिदं यथा कथञ्चित् तदा-सिद्ध्यर्थमेवोच्यते। अर्थश्चायं टीकायाम्। आत्मना चित्तेनाहङ्कारेण वा। अनुसृतो यः स्वभावस्तस्मात्। अयमर्थः। न केवलं विधितः कृतमेवेति नियमः स्वभावानुसारि लौकिकमपीति। श्रीगीतासु च यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणमितीति। इतः पूर्वं प्राणबुद्धिदेहधर्मा-धिकारत इत्यादिमन्त्रस्य तथा। अत्र स्वाभाविककर्मणोऽर्पणे दुष्कर्मणो द्विविधा गतिः। ज्ञानेच्छूनामविशेषेण। भक्तेच्छूनान्तु सर्वे दुर्वासनदुःखदर्शनेन स करुणामयः करुणां करोत्विति वा, या प्रीति-रविवेकानां विषयेष्वनपायिनी। त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु॥ इति विष्णुपुराणोक्तप्रकारेण, युवतीनां यथा यूनि यूनाञ्च युवतौ यथा। मनोऽभिरमते तद्वन्मनो मे रमतां त्वयि॥ इति पाद्मोक्तप्रकारेण च मम सुकर्मणि दुष्कर्मणि च यत् रागसामान्यं तत् सर्वतोभावेन भगवद्विषयमेव भवत्विति वा समाधेयम्। कर्मि-नान्तु सर्वथैव सर्वदुष्कर्मार्पणम्। वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पित-मोश्वरे॥ इत्यत्र पुनर्वैदिकमेवेश्वरेऽर्पितं कुर्वाण इत्युक्तम्॥ ११॥ श्लोकविर्निमिम्॥ २१७॥

अथ वैदिककर्मार्पणस्य प्रशंसामाहुः—क्लेशभूर्य्यल्पसाराणि कर्माणि विफलानि वा। देहिनां विषयार्त्तानां न तथैवार्पितं त्वयि॥ २१

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विषयार्त्तानां कर्माणि क्वचित् क्लेशो भूरि येषु तथाप्यल्पं फलं येषु तथाभूतानि भवन्ति क्वचित् कृष्यादिवत् विफलानि वा भवन्ति। त्वय्यर्पितं कर्म तु न तथा। किन्तु क्लेशं विना यथा कथञ्चित् कृतस्य कामनयाप्यर्पणे तत्कामस्यावश्यकप्राप्तिः। सा च सर्वत उत्कृष्टा भवति। तथा तन्मात्रफलेन च पर्य्याप्तिर्न भवति। संसारविध्वंसादिफलत्वादित्यर्थः। तदुक्तम्—यानास्थाय नरो राजन् न प्रमाद्येत कर्हिचित्। धावन् निमील्य वा नेत्रे न स्खलेन्न पतेदिह॥ इति। सत्यं दिशत्यर्थितमर्थितो नृणाम् इत्यादि च। यथैव नाभिः श्रीऋषभदेवरूपं भगवन्तं पुत्रत्वेनापि लेभे। श्रीगीतासु च—नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते। स्वल्पमप्यस्य धर्म्मस्य त्रायते महतो भयात्॥ इति॥ ८॥ ५॥ देवाः श्रीमदजितम्॥२१८॥

तदेव कर्म्मार्पणमुपपादयति त्रिभिः—एतत् संसूचितं ब्रह्मंस्तापत्रयचिकित्सितम्। यदीश्वरे भगवति कर्म्म ब्रह्मणि भावितम्॥ २१९॥

ब्रह्मन् हे श्रीवेदव्यास। एतत् तापत्रयस्य चिकित्सितं चिकित्सा तैश्चातुर्मास्यवासिभिः परमहंसैः सूचितम्। किन्तत्, भगवति कर्म्म यत् समर्पितं भवति। तच्च कर्म्मसमर्पणमेवेत्यर्थः। कथम्भूते, स्वयं भगवति पूर्णस्वरूपैश्वर्य्यादिमत्तया सर्व्वांशिन्येव, केनचिदंशेन जीवादिनियन्तृतया ईश्वरे परमात्मशब्दवाच्ये, स्वरूपभूतविशेषैश्च विना केवलचिन्मात्रतया प्रतिपाद्यत्वेन ब्रह्मणि तच्छब्दवाच्ये। ननु उत्पत्त्यैव तत्तत्सङ्कल्पेन विहितत्वात् संसारहेतोः कर्म्मणः कथं तापत्रयनिवर्त्तकत्वम्? उच्यते, सामग्रीभेदेन घटत इति। यथा—आमयो यश्च भूतानां जायते येन सुव्रत। तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम्॥२२०॥

य आमयो रोगः येन घृतादिना जायते तदेव केवलमामयकारणं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

द्रव्यं तन्नामयं न निवर्त्तयति किन्तु चिकित्सितं द्रव्यान्तरैर्भावितं स
निवर्त्तयत्येव। एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः। त ए
त्मविनाशाय कल्पन्ते कल्पिताः परे ॥२२१॥

परे भगवति कल्पिताः कामनयाप्यर्पिताः सन्तः, संसार
पर्य्यन्तफलत्वात् आत्मविनाशाय धर्म्मनिवृत्तये कल्पन्ते ॥ १ ॥
श्रीनारदः श्रीवेदव्यासम् ॥२१८—२२१॥

किञ्च, कर्म्मफलं वस्तुतो भगवदाश्रयमेव। तत्तु दुर्बुद्धेरात्म
कुर्वतो युक्तैव तुच्छफलप्राप्तिः संसारश्च। सुधियस्तु तत् साक्षा
कुर्वतस्तद्वैपरीत्यमित्याह, गद्याभ्याम्—संप्रचरत्सु नानायो
विरचिताङ्गक्रियेष्वपूर्वं यत् तत् क्रियाफलं धर्म्माख्यं परे ब्रह्मणि यज्ञपु
सर्वदेवतालिङ्गानां मन्त्राणामर्थनियामकतया साक्षात् कर्त्तरि पर
तायां भगवति वासुदेव एव भावयमान आत्मनैपुण्यमृदितक
हविष्वध्वर्य्युभिर्गृह्यमाणेषु स यजमानो यज्ञभागभाजो देवां
पुरुषावयवेष्वभ्यधावदिति ॥२२२॥

टीका च—सम्प्रचरत्सु प्रवर्त्तमानेषु नानायोगेषु विरचिता
ष्ठिता अङ्गक्रिया येषु तेषु यत् अपूर्वं तद् वासुदेव एव भावय
सञ्चिन्तयन् स यजमानः यज्ञभागभाजो ये देवाः सूर्य्यादय
पुरुषस्य वासुदेवस्य अवयवेषु चक्षुरादिषु अभ्यधावत् न तु तत्पृ
त्वेनेत्यन्वयः। अपूर्वे पक्षद्वयं मीमांसकानाम्। तदिदा
सूक्ष्मत्वेनोत्पन्नं फलमेवापूर्वं, कालान्तरे फलोत्पादिका कर्म्म
र्वेति। तदुक्तम्—यागादेव फलं तद्धि शक्तिद्वारेण सिध्यति।
शक्त्यात्मकं वापि फलमेवोपजायत इति। तदेतदाह, क्रिया
धर्म्माख्यमिति च। ननु यद्यङ्गं देवताकर्म्मप्रधानमिति मतं
कर्त्तृनिष्ठमपूर्वं स्यात्। तदुक्तम्—कर्म्मभ्यः प्रागयोग्यस्य क
पुरुषस्य वा। योग्यता शास्त्रगम्या या परा सा पूर्वमिष्यत
अथ देवताप्रधानं कर्म्म तु देवताराधनार्थम्। तदा देवता

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

रूपत्वादपूर्वस्य देवताश्रयत्वमेव युक्तम् । कर्मभ्यः प्राक् अयोगस्य प्रोक्षणाद्यपूर्वस्यैव वोह्याद्याश्रयत्वम् । कुतो वासुदेवाश्रयमपूर्वं भावयति ? उच्यते । यदि कर्त्तृनिष्ठमपूर्वं स्यात्, तर्हि वासुदेवस्यान्तर्यामिणः प्रवर्त्तकत्वेन मुख्यकर्त्तृत्वात् तदाश्रयमेवापूर्वम् । न तु तत्-प्रयोज्ययजमानाश्रयम् । शास्त्रफलं प्रयोक्तरीति न्यायात् । अन्यथा ऋत्विजामप्यपूर्वाश्रयत्वप्रसङ्गात् । तदेतदाह साक्षात् कर्त्तरीति । देवताश्रयत्वेऽपि वासुदेवाश्रयत्वमेवेत्याह, परदेवतायामिति । परदेवतात्वे हेतुः, सर्वदेवतालिङ्गानां तत्तद्देवताप्रकाशकानां मन्त्राणां ये अर्था इन्द्रादिदेवतास्तेषां नियामकतया तस्यैव प्रसादनीयत्वात् फलदातृत्वाच्च युक्तमेवाश्रयत्वमित्यर्थः । एवं भावनमेव आत्मनो नैपुण्यं कौशलं तेन सूदिताः क्षीणाः कषाया रागादयो यस्य । अध्वर्य्युभिरिति बहुवचनं नानाकर्म्माभिप्रायेणेत्येषा । अत्र विष्णोरङ्गित्वे प्राप्ते यज्ञाङ्गत्वेन तद्भजनञ्च दोष इति लभ्यते। अत्र पाद्मोत्तरखण्डे यथा— उद्दिश्य देवता एव जुहोति च ददाति च । स पाषण्डीति विज्ञेयः स्वतन्त्रो वापि कर्मस्विति । पाषण्डित्वञ्च वैष्णवमार्गाद् भ्रष्टत्वमित्यर्थः । श्रीगीतासु च—येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् । अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ इति । अतो वास्तवविचारे सर्वं एव वेदमार्गाः श्रीभगवत्येव पर्य्यवसन्तीति अभिप्रेत्योक्तं श्रीमदक्रूरेण—सर्वं एव यजन्ति त्वां सर्वदेवमहेश्वरम् । ये नानादेवताभक्ता यद्यप्यन्यधियः प्रभो ॥ यथाद्रिप्रभवा नद्यः पर्जन्यापूरिता विभो । विशन्ति सर्वतः सिन्धुं तद्वत् त्वां गतयोऽन्ततः ॥ इति । गतयो मार्गाः । अन्ततो विचारपर्य्यवसानेन । अथ द्वितीयं गद्यम्—एवं कर्मविशुद्धिविशुद्धसत्त्वस्यान्तर्हृदयाकाशशरीरे ब्रह्मणि भगवति वासुदेवे महापुरुषरूपोपलक्षणे श्रीवत्सकौस्तुभवनमालारिदरगदाभिरुपलक्षिते निजपुरुषहृल्लिखिते-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नात्मनि पुरुषरूपेण विरोचमान उच्चैस्तरां भक्तिरनुदिनमेधमानरया जायत इति ॥ २२३ ॥

एवं पूर्वोक्तप्रकारेण कर्म्मविशुद्ध्या विशुद्धसत्त्वस्य भक्तिः श्रवणकीर्त्तनादिलक्षणा अजायतेत्यन्वयः। क्वचिद् भगवति वासुदेवे पूर्वस्वरूपभोगाभ्यां सर्वनिरासेन च तन्नाम्ना प्रसिद्धे। अन्तर्हृदये आकाशः स एव शरीरं स्वस्यैवाविर्भावविशेषाधिष्ठानं यस्य तस्मिन् अन्तर्यामिणि परमात्माख्ये। ब्रह्मणि निर्विशेषतयाविर्भावात् तदाख्ये च। भगवतो निराकारत्वं वारयति, महापुरुषस्य यद्रूपं श्रूयते तद्रूपं लक्ष्यते दृश्यते यत्र तस्मिन्। किञ्च श्रीवत्सादिचिह्निते। एधमानरया वर्द्धमानप्रकर्षा ॥ ५ ॥ ७ ॥ श्रीशुकः ॥ २२३ ॥

तदेतत् कर्मार्पणं द्विविधं; भवगत्प्रीणनरूपं तस्मिंस्तत्त्यागरूपञ्चेति। यथोक्तं कौर्म्ये—प्रीणातु भगवानीश कर्मणानेन शाश्वतः। करोति सततं बुद्ध्या ब्रह्मार्पणमिदं परम्॥ यद्वा फलानां संन्यासं प्रकुर्य्यात् परमेश्वरे। कर्मणामेतदप्याहुर्ब्रह्मार्पणमनुत्तमम्॥ अत्र निमित्तानि च त्रीणि; कामना नैष्कर्म्यं भक्तिमात्रं। निष्कामत्वन्तु केवलं न सम्भवति। यद् यद्धि कुरुते जन्तुस्तत्तत् कामस्य चेष्टितमित्युक्तेः। अत्र कामनानैष्कर्म्ययोः प्रायः कर्मत्यागः प्रीणनन्तु तदाभास एव स्वार्थपरत्वात्। भक्तौ पुनः प्रीणनमेव तस्य तदेकजीवनत्वात्। कामनाप्राप्तिर्यथा, क्लेशभूर्य्यल्पसाराणि यथा च, अङ्गस्य राज्ञः पुरुषार्थके यज्ञे। नैष्कर्म्यप्राप्तिश्च, वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे नैष्कर्म्यां लभते सिद्धिमित्यत्र। भक्तिप्राप्तिश्च एवं कर्मविशुद्ध्येत्यादिगद्ये दर्शितैव। यदत्र क्रियते कर्म भगवत्परितोषणम्। ज्ञानं यत् तदधीनं हि भक्तियोगसमन्वित-मित्यत्र च। भक्तियोगसहचरत्वात् ज्ञानमत्र भगवज्ज्ञानम्। भक्तास्तु भगवत्परितोषणं प्रीणनमेव प्रार्थयन्ते—यन्नः स्वधीतं गुरवः प्रसादिता विप्राश्च वृद्धाश्च सदानुवृत्त्या। आर्य्या नताः सुहृदो

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

रस्य सर्वाणि भूतान्यनसूययैव । यन्नः स्रुतस्तं तप एतदीश निरन्धसां कालमदभ्रमप्सु । सर्वं तदेतत् पुरुषस्य भूम्नो वृणीमहे ते परितोषणाय ॥ २२४ ॥

ते तव परितोषणाय भवत्विति वृणीमहे ॥ ४ ॥ ३० ॥ प्रचेतसः श्रीमदष्टभुजं पुरुषम् ॥ २२४ ॥

तदेवमारोपसिद्धा दर्शिता । अथ सङ्गसिद्धोदाहरणप्रान्ता मिश्रा भक्तिर्दर्शयिष्यते । स्वरूपसिद्धासङ्गेन ह्यन्येषामपि भक्तित्वं दर्शितम् । तत्र भागवतान् धर्मानित्यादिश्रीप्रबुद्धवाक्यप्रकरणे सर्वसङ्गदयामैत्र्यादीनामपि भागवतधर्मत्वाभिधानात् । तत्र कर्ममिश्रा त्रिविधा सम्भवति ; सकामा कैवल्यकामा भक्तिमात्रकामा च । यद्यपि कामकैवल्ये अपि, या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये । तया विना तदाप्नोति नरो नारायणाश्रयः ॥ इत्युक्तेः, केवलयैव भक्त्या सम्भवतः, तथापि तत्तद्वासनानुसारेण तत्र तत्र रुचिर्जायते इत्येवं तत्तदर्थं तन्मिश्रता जायत इत्यवगन्तव्यम् । ततः सकामा प्रायः कर्ममिश्रैव । तत्र कर्मशब्देन धर्म एव गृह्यते । तल्लक्षणञ्च यमदूतैः सामान्यत उक्तं, वेदप्रणिहितो धर्म इति । वेदोऽत्र त्रैगुण्यविषयः, त्रैगुण्यविषया वेदा इति श्रीगीतोक्तेः, तत्प्रवर्त्तनमात्रत्वेन सिद्धः, न तु भक्तिवद्-ज्ञानेनापीत्यर्थः । श्रीगीतास्वेवान्यत्र तस्य कर्मसंज्ञितत्वञ्चोक्तम्—भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः इति । विसर्गो देवतोद्देशेन द्रव्यत्यागः । तदुपलक्षितः सर्वोऽपि धर्मः कर्मसंज्ञित इत्यर्थः । स च भूतानां प्राणिनां ये भावा वासनास्तेषामुद्भवकरः इति विशेषणाद्भगवद्भक्तिर्व्यावृत्ता । अथ भक्तिसङ्गाय धर्मस्य वैशिष्ट्यञ्चैकादशे श्रीभगवतोक्तम्—धर्मो मद्भक्तिकृत् प्रोक्त इति । भगवदर्पणेन भक्तिपरिकरीभूतत्वेन च भक्तिकृत्त्वमुच्यते । तदेवमीदृशेन कर्मणा मिश्रा सकामा भक्तिर्यथा—प्रजाः सृजेति भगवान् कर्दमो ब्रह्मणोदितः । सरस्वत्यां तपस्तेपे सहस्राणां समा दश ॥ ततः समाधियुक्तेन क्रिया-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

योगेन कर्दमः। संप्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम् ॥ २२॥

अत्र तद्दर्शनजातभगवदश्रुपातलिङ्गेन निष्कामस्याप्यस्य ब्रह्मादि गौरवेणैव कामना ज्ञेया ॥ ३ ॥ २७ ॥ श्रीमैत्रेयो विदुरम् ॥ २२॥

अथ कैवल्यकामा क्वचित् कर्मज्ञानमिश्रा क्वचिज्ज्ञानमिश्रा च तत्र ज्ञानं ज्ञानञ्चैकात्म्यादर्शनमिति दर्शितम्। तदीयश्रवणादेः वैराग्ययोगसांख्यानाञ्च तदङ्गत्वान्न तदन्तःपातः। अथ कर्मज्ञान मिश्रा यथा—अनिमित्तनिमित्तेन स्वधर्मेणामलात्मना। तीव्रया मयि भक्त्या च श्रुतसम्भृतया चिरम्। ज्ञानेन दृष्टतत्त्वेन वैराग्येण बली यसा। तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना॥ प्रकृतिः पुरुषस्ये दह्यमाना ह्यहर्निशम्। तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः॥ इति।

निमित्तं फलम्। तत् न निमित्तं प्रवर्त्तकं यस्मिन् तेन निमित्तेन मेण। अमलात्मना निर्मलेन मनसा। ज्ञानेन शास्त्रोत्थेन। दृष्टं जीवात्मपरमात्मनोर्ध्यानम्। योगः संहननोपायध्यानसङ्गतियुक्ति ष्विति नानार्थवर्गात्। ध्यानमेव ध्यातृध्येयविवेकरहितं समाधिः। अत्र सर्वासामेव सिद्धीनां मूलं तच्चरणार्च्चनमित्युक्त्या भक्तेर्वाहुल्ये ऽपि अङ्गवन्निर्देशस्तेषां तत्र साधनान्तरसामान्यदृष्टिरित्यभिप्रायः। अतएव तेषां मोक्षमात्रमेव फलमिति ॥३॥२७॥ श्रीकपिलदेवः ॥२२॥

ज्ञानमिश्रामाह—विविक्तक्षेमशरणो मद्भावविमलाशयः। आत्मानं चिन्तयेदेकमभेदेन मया मुनिः ॥२२७॥

भावो भावना ॥११॥८॥ श्रीभगवान् ॥२२७॥

तदेवं कैवल्यकामायां ज्ञानमिश्रोक्ता। अथ भक्तिमात्रकामायां कर्ममिश्रा यथा—श्रद्धामृतकथायां मे शश्वन्मदनुकीर्त्तनम्। परि निष्ठा च पूजायां स्तुतिभिः स्तवनं मम॥ इत्यादि, मदर्थेऽर्थ त्यागो भोगस्य च सुखस्य च। इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः॥ एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम्। मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते॥ इत्यन्तम् ॥२२८॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मदर्थं मद्भजनार्थं तद्विरोधिनोऽर्थस्य परित्यागः। भोगस्य पूजयं धनस्य चन्दनादेः। सुखस्य पुत्रोपलालनादेः। इष्टादि वैदिकर्म तदपि मदर्थं कृतं भक्तेः कारणमित्यर्थः। धर्मैर्भागवताख्यैः एवं कायवाङ्मनोभिस्तदर्थमात्रचेष्टावत्त्वेनानुष्ठितैर्भगवद्धर्मैरात्मनिवेदिनाम्। यस्यास्ति भक्तिर्भगवत्यकिञ्चनेत्यादिन्यायेनास्य भक्तिमात्रकामस्य अन्यः कोऽर्थः साधनरूपः साध्यरूपो वावशिष्यते। सर्वोऽसावनाहृतोऽपि तदाश्रितोऽपि भवतीत्यर्थः ॥११॥१८॥ श्रीभगवान् ॥२२८॥

कर्मज्ञानमिश्रा यथा—निषेवितानिमित्तेन स्वधर्मेण महीयसा। क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः। मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः। भूतेषु मद्भावनया सत्त्वेनासङ्गमेन च। महतां बहुमानेन दीनानामनुकम्पया। मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च। आध्यात्मिकानुश्रवणान्नामसङ्कीर्त्तनाच्च मे। आर्जवेनार्य्यसङ्गेन निरहंक्रियया तथा। मद्धर्मणो गुणैरेतैः परिसंशुद्ध आशयः। पुरुषस्याञ्जसाभ्येति श्रुतमात्रगुणं हि माम् ॥२२९॥

निषेवितेन सम्यगनुष्ठितेन अनिमित्तेन च निष्कामेण स्वधर्मेण। महीयसा श्रद्धादियुक्तेन। क्रियायोगेन पञ्चरात्राद्युक्तवैष्णवानुष्ठानेन। शस्तेन उत्तमदेशकालादिमता निष्कामेण च। नातिहिंस्रेण अतिहिंसारहितेन। अतिशब्दः प्राणादिपीड़ापरित्यागफलपत्रादिजीवावयवस्वीकारार्थः। मद्धिष्ण्यं मदर्च्चादि। भूतेष्वन्तर्यामित्वेन मद्भावनया। सत्त्वेन धैर्य्येण। असङ्गमेन वैराग्येण च। अहिंसास्तेयब्रह्मचर्य्यापरिग्रहा यमाः। शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः। आध्यात्मिकमात्मानात्मविवेकशास्त्रम्। निरहंक्रियया गर्वराहित्येन। मद्धर्मणः मद्धर्मानुष्ठातुः पुरुषस्याशयः। श्रुतमात्रगुणं मामञ्जसाभ्येति मद्गुणश्रुतिमात्रेण मयीत्याद्युक्तलक्षणां ध्रुवानुस्मृतिं प्राप्नोतीत्यर्थः। अत्राध्यात्मिकश्रवणादिना ज्ञानमिश्रत्वमपि ॥३॥२९॥ श्रीकपिलदेवः ॥२२९॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

गीन क 'ज्ञानमिश्रा—दृष्टश्रुताभिर्मात्राभिर्निर्मुक्तः स्वेन तेजसा
अज्ञानसंत्यक्तो मद्भक्तः पुरुषो भवेत् ॥२३०॥

दृष्टेति ऐहिकामुष्मिकविषयैः। स्वेन तेजसा विवेकबलेन ॥
१६॥ श्रीसङ्कर्षणश्चित्रकेतुम् ॥२३०॥

अथ केवलस्वरूपसिद्धोदाक्रियते। तत्र सकामा कैवल्यकामा
चोपासकसङ्कल्पगुणैस्तत्तद्गुणत्वेनोपचर्य्यते। ततः सकामा द्विविधा
तामसी राजसी च। पूर्वा यथा—अभिसन्धाय यद्धिंसां दम्भं मात्सर्य्यमेव
वा। संरम्भी भिन्नदृग्भावं मयि कुर्य्यात् स तामसः ॥२३१॥

अभिसन्धाय सङ्कल्प्य। संरम्भी सक्रोधः। भिन्नदृक् स्वस्मिन्
सर्वत्र यत् सुखं दुःखं च तत्तदवेत्ता निरनुकम्प इत्यर्थः। उत्तरा
यथा—विषयानभिध्याय यश ऐश्वर्य्यमेव वा। अर्चादावर्चयेद् यो मां
पृथग्भावः स राजसः ॥२३२॥

पृथक् मत्तोऽन्यत्र विषयादिष्वेव भावः स्पृहा यस्य न तु मयि।
राजसत्वहेतुता दर्शिता। अथ कैवल्यकामा सात्त्विकैव। सा यथा—
कर्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम्। यजेद्यष्टव्यमिति वा
पृथग्भावः स सात्त्विकः ॥२३३॥

कर्मनिर्हारं मोक्षमुद्दिश्य परस्मिन् परमेश्वरे यो वा कर्मार्पणं
कुरुते यो वा यष्टव्यं सर्वेषां नित्यविधिप्राप्तत्वेनावश्यमेव तत्पूजनं
कर्त्तव्यमिति बुद्ध्या न तु भक्तितत्त्वज्ञानेन यो यजेत् परमेश्वरं पूज-
यति अतएव पूर्ववत् पृथग्भावः भक्तेः पृथक् मोक्षमेव पुरुषार्थत्वेन
भावयन् स सात्त्विक उच्यते। उत्तरस्यापि तात्पर्य्यं कर्मनिर्हारे एव
भवेदिति। उक्तञ्च—सात्त्विकः कारकोऽसङ्गीति, कैवल्यं सात्त्विकं
ज्ञानमिति, सात्त्विकं सुखमात्मोत्थमिति च तत्साधनसाध्ययोः सगुण-
त्वम्। अतत्योदाहरणं यजेदित्युत्तरार्द्धमेव। अथ यस्या एवोक्तं
ज्ञानार्थमेते भक्तिभेदा निरूपिताः सा भक्तिमात्रकामत्वाविष्कारा
निर्गुणा केवला स्वरूपसिद्धा निरूप्यते। इयमेवाकिञ्चनाख्या

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सर्वोऽहं पूर्वमप्यभिहिता। तामाह—मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये। मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ। लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्। अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे। सालोक्यसार्ष्टिसारूप्यसामीप्यैकत्वमप्युत। दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः। स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः। येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते॥२३४॥

मद्गुणश्रुतिमात्रेण न तु तत्रोद्देशान्तरसिद्ध्यभिप्रायेण। प्राकृतगुणमयकरणानां सर्वेषां गुहा करणागोचरपदवी तस्यां शेते गुह्यतया निश्चलतया च तिष्ठति यस्तस्मिन् मयि अविच्छिन्ना विषयान्तरेण विच्छेत्तुमशक्या या मनोगतिः सा। अविच्छिन्नत्वे दृष्टान्तः यथेति। गतिरिति पूर्वस्मादाकृष्यते छान्दसत्वात्। लक्षणं स्वरूपम्। ननु तस्या गुणश्रुतेः का वार्त्ता, उद्देश्यान्तराभावेन मनोगतित्वाभावेन च द्विधापि निर्देष्टुमशक्यत्वात्, तत्राह, अहैतुकी फलानुसन्धानरहिता, अव्यवहिता स्वरूपसिद्धत्वेन साक्षाद्रूपा, न त्वारोपादिसिद्धत्वेन व्यवधानात्मिका। तादृशी या भक्तिः, श्रोत्रादिना सेवनमात्रं, सा च तस्य स्वरूपमित्यर्थः। मात्रपदेनाविच्छिन्नेत्यनेन च मनोगतेरहैतुकीत्वादिसिद्धेः पृथग्योजनार्हत्वात्, सात्त्विकः कारकोऽसङ्गीत्यादिषु निर्गुणो मदपाश्रय इत्यादिभिस्तदाश्रयक्रियादीनां निर्गुणत्वस्थापनात्, मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम्। सुहृदं सर्वभूतानां साम्यासङ्गादयो गुणा इत्यत्र तद्गुणानामप्यप्राकृतत्वश्रवणात् अहैतुकीत्वमेव विशेषतो दर्शयति। जनाः मदीयाः। सालोक्यादिकमपि उत अपि दीयमानमपि न गृह्णन्ति। मत्सेवनं विनेति गृह्णन्ति चेत् तर्हि मत्सेवार्थमेव गृह्णन्ति न तु तदर्थमेवेत्यर्थः। सार्ष्टिः समानैश्वर्य्यम्। एकत्वं भगवत्सायुज्यं ब्रह्मसायुज्यञ्च। अनयोस्तल्लीनात्मकत्वेन तत्सेवनार्थत्वाभावादग्रहणावश्यकत्वमेवेति भावः। तस्मात् स एव चात्यन्तिकफलतया भवतीत्यपवर्ग इत्यर्थः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

गेन कं वियापयन्तीत्यादेः आत्यन्तिकप्रलयतया तत्प्रसिद्धेः
अथात्ययपूर्वकभगवत्साक्षात्कार एवापवर्ग इति चेत् तत्
तादृशधर्मत्वं स्वतः सिद्धमेवेत्याह येनेति। येन कदाचिदप्यपरि
ज्येन। मम भावाय विद्यमानतायै साक्षात्कारायेत्यर्थः। उपपदं
समर्थो भवति। यथोक्तं पञ्चमे—यथा वर्णविधानमपवर्गश्च भवं
योऽसौ भगवतीत्यादिकमनन्यनिमित्तभक्तियोगलक्षणो नानार्थं
निमित्ताविद्याग्रन्थिरन्धनद्वारेणेत्यन्तम्। अतो निर्गुणापि बहुधे
वगन्तव्या। एवमेवोक्तमेतत्प्रकरणारम्भे—भक्तियोगो बहुविधो मा
र्भाविनि भाव्यते। स्वभावगुणमार्गेण पुंसां भावो विभिद्यते॥ इति
मार्गैः प्रकारविशेषैः। अतः स्वस्य भक्तियोगस्यैव मार्गेण वृत्तिभे
श्रवणादिना भावस्याभिमानस्य तद्भेदेन दास्यादिना गुणानां त
आदीनाञ्च तद्भेदेन हिंसादिना पुंसां भावोऽभिप्रायो विभिद्
इत्यर्थः। अत्र मुक्ताफलटीका च—अयमात्यन्तिकः ततः परं प्रक
न्तराभावात्। अस्यैव भक्तियोग इत्याख्या अन्वर्थेन भक्तिशब्दस्य
मुख्यत्वात्। इतरेषु फल एवानुरागो न तु विष्णौ फलालाभेन भक्ति
त्यागादित्येषा। श्रीगोपालतापनीश्रुतौ च—भक्तिरस्य भजनं तदि
मुत्रोपाधिनैरास्येनामुष्मिन् मनःकल्पनमेतदेव नैष्कर्म्यञ्चेति। माध्यं
श्रुतौ—स होवाच याज्ञवल्क्यस्तत् पुमानात्महिताय प्रेम्णा हरिं भ
देति। प्रेम्णा प्रीतिमात्रकामनया यदात्महितं तस्मै इत्यर्थः॥ श्री
श्रीकपिलदेवः॥ २३४॥

तदेवं बहुधा साधितैषा अकिञ्चना आत्यन्तिकीत्यादिरूपा
भक्तिर्द्विविधा वैधी रागानुगा चेति। तत्र वैधी शास्त्रोक्तविधि
प्रवर्त्तिता। स च विधिर्द्विविधः। तत्र प्रथमः प्रवृत्तिहेतुः तत्
क्रमकर्त्तव्याकर्त्तव्यानां ज्ञानहेतुश्च। प्रथमस्तूदाहृतः, तस्मादेक
मनसा भगवान् सात्वतां पतिः। श्रोतव्यः कीर्त्तितव्यश्च ध्येयः पूज्य
नित्यदेत्यादिना। द्वितीयश्चार्चनव्रतादिगतः। तमाह—मामेव

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्षेण भक्तियोगेन विन्दति । भक्तियोगं स लभते एवं यः पूजयेत माम् ॥ २३५ ॥

नैरपेक्षेण अहैतुकेन । अहैतुकभक्तियोग एव कथं स्यात् तत्राह, भक्तियोगमिति । एवं यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पुरुषः । यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥ इत्याद्युक्तविधिना ॥ ११ ॥ २७ ॥ श्रीभगवान् ॥ २३५ ॥

एवमेकादशीजन्माष्टम्यादिगतोऽपि ज्ञेयः । अथ वैधीभेदाः शरणापत्तिश्रीगुर्वादिसत्सेवाश्रवणकीर्त्तनादयः । एते च प्रत्येकमपि द्वित्रादयः समुदित्यापि कारणानि भवन्ति । तथा श्रवणात् । तत्र प्रथमतः शरणापत्तिः । षड्वर्गाद्यविक्षतसंसारभयबाध्यमान एव हि शरणं प्रविशत्यनन्यगतिः । भक्तिमात्रकामोऽपि तत्कृतभगवद्वैमुख्यबाध्यमानः । अनन्यगतित्वञ्च द्विधा दर्श्यते । आश्रयान्तरस्याभावकथनेन नातिप्रज्ञया कथञ्चिदाश्रितस्यान्यस्य त्याजनेन च । पूर्वेण यथा—मर्त्यो मृत्युव्यालभीतः पलायन् लोकान् सर्वान् निर्भयं नाध्यगच्छत् । त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैतीति । उत्तरेण यथा—तस्मात् त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् । प्रवृत्तञ्च निवृत्तञ्च श्रोतव्यं श्रुतमेव च ॥ मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः ॥ इति । चोदनां श्रुतिं प्रतिचोदनां स्मृतिमिति टीका च । श्रीगीतासु च—सर्वधर्मान् परित्यज्येत्यादि । तस्याः शरणापत्तेर्लक्षणं वैष्णवतन्त्रे—आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यविवर्जनम् । रक्षिष्यतीति विश्वासो गोप्तृत्वे वरणं तथा । आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिरिति । अङ्गाङ्गिभेदेन षड्विधा । तत्र गोप्तृत्वे वरणमेवाङ्गि शरणागतिशब्देनैकार्थ्यात्, अन्यानि त्वङ्गानि तत्परिकरत्वात् । आनुकूल्यप्रातिकूल्ये तदङ्गादीनां शरणागतस्य भावस्य वा । रक्षिष्यतीति विश्वासः, क्षेमं विधास्यति स नो भगवांस्त्र्यधीश इत्यादिप्रकारः । आत्मनिक्षेपः, केनापि देवेन



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमीति गौतमीयतन्त्रोक्त-
प्रकारः। यथोक्तं पाद्मोत्तरखण्डे चाष्टाक्षरस्य नमःशब्दव्याख्याने-
अहङ्कृतिर्मकारः स्यान्नकारस्तन्निषेधकः। तस्मात्तु नमसा क्षेत्रि-
स्वातन्त्र्यं प्रतिषिध्यते॥ भगवत्परतन्त्रोऽसौ तदायत्तात्मजीवनः।
तस्मात् स्वसामर्थ्यविधिं त्यजेत् सर्वमशेषतः॥ ईश्वरस्य तु सामर्थ्या-
न्नालभ्यं तस्य विद्यते। तस्मिन् न्यस्तभरः शेते तत्कर्मैव समाचरेत्॥
अतएव ब्रह्मवैवर्त्ते—अहङ्कारनिवृत्तानां केशवो न हि दूरगः। अह-
ङ्कारयुतानां हि मध्ये पर्वतराशयः॥ अतएव तृतीये ब्रह्मस्तवे स्वात-
न्त्र्याभिमानिनः संसारः श्रूयते—यावत् पृथक्त्वमिदमात्मन इन्द्रि-
यार्थमायाबलं भगवतो जन ईश पश्येत्। तावन्न संसृतिरसौ प्रति-
सङ्क्रमेत व्यर्थापि दुःखनिवहं वहती क्रियार्था॥ इति। कार्पण्यं
परमकारुणिको न भवेत् परः परमशोच्यतमो न च मत्परः इत्यादि-
प्रकारम्। गोप्तृत्वे वरणञ्च यथा नारसिंहे—त्वां प्रपन्नोऽस्मि शरणं देव-
देवं जनार्दनम्। इति यः शरणं प्राप्तस्तं क्लेशादुद्धराम्यहम्॥ इति-
प्रकारम्। तदपि त्रिप्रकारं कायिकत्वादिभेदेन। यथोक्तं ब्रह्म-
पुराणे—कर्म्मणा मनसा वाचा येऽच्युतं शरणं गताः। न समर्थो यम-
स्तेषां ते मुक्तिफलभागिनः॥ इति। व्याख्यातं श्रीहरिभक्तिविलासे-
तवास्मीति वदन् वाचा तथैव मनसा विदन्। तत्स्थानमाश्रित-
स्तन्वा मोदते शरणागतः॥ इति। तदेवं यस्य सर्वाङ्गसम्पन्ना
शरणापत्तिस्तस्य झटित्येव सम्पूर्णफला। अन्येषान्तु यथासम्भवं
यथाक्रमञ्चेति ज्ञेयम्। तामेतां शरणापत्तिं श्रावयति—तापत्रयेणा-
भिहतस्य घोरे सन्तप्यमानस्य भवाध्वनीश। पश्यामि नान्यत् शरणं
तवाङ्घ्रिद्वन्द्वातपत्रादमृताभिवर्षात्॥ २३६॥

शरणागतानां सर्वदुःखदूरीकरणं निजमाधुरीणां सर्वतो भावे-
नाभिहितम्॥ ११॥ १९॥ उद्धवः श्रीभगवन्तम्॥ २३६॥

तदेवं शरणापत्तिर्विवृता। अस्याश्चापूर्वत्वं तां विना तदं-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सिद्धेः। तत्र यद्यपि शरणापत्त्यैव सर्वं सिध्यति, शरणं तं प्रपन्ना ये ध्यानयोगविवर्जिताः। ते वै मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम्॥ इति गारुड़ात्, तथापि वैशिष्ट्यलिप्सुः शक्तश्चेत् ततः भगवच्छास्त्रोपदेष्टॄणां भगवन्मन्त्रोपदेष्टॄणां वा श्रीगुरुचरणानां नित्यमेव विशेषतः सेवां कुर्य्यात्। तत्प्रसादो हि स्वस्वनानाप्रतीकारदुस्त्यजानर्थहानौ परमभगवत्प्रसादसिद्धौ च मूलम्। पूर्वत्र यथा सप्तमे श्रीनारदवाक्यम्—असङ्कल्पात् जयेत् कामं क्रोधं कामविवर्जनात्। अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात्। आन्वीक्षिक्या शोकमोहौ दम्भं महदुपासया। योगान्तरायान् मौनेन हिंसां कामाद्यनीहया। कृपया भूतजं दुःखं दैवं जह्यात् समाधिना। आत्मजं योगवीर्य्येण निद्रां सत्त्वनिषेवया। रजस्तमश्च सत्त्वेन सत्त्वञ्चोपशमेन च। एतत् सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत्॥ इति। उत्तरत्र वामनकल्पे ब्रह्मवाक्यम्—यो मन्त्रः स गुरुः साक्षात् यो गुरुः स हरिः स्वयम्। गुरुर्यस्य भवेत् तुष्टस्तस्य तुष्टो हरिः स्वयम्॥ इति। अन्यत्र—हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन। तस्मात् सर्वप्रयत्नेन गुरुमेव प्रसादयेत्॥ इति। अतएव सेवामात्रन्तु नित्यमेव। यथा चान्यत्र परमेश्वरवाक्यम्—प्रथमन्तु गुरुं पूज्य ततश्चैव ममार्चनम्। कुर्वन् सिद्धिमवाप्नोति ह्यन्यथा निष्फलं भवेत्॥ इति। अतएव नारदपञ्चरात्रे—वैष्णवं ज्ञानवक्तारं यो विद्याद् विष्णुवद् गुरुम्। पूजयेद् वाङ्मनःकायैः स शास्त्रज्ञः स वैष्णवः। श्लोकपादस्य वक्तापि यः पूज्यः स सदैव हि। किं पुनर्भगवद्विष्णोः स्वरूपं वितनोति यः॥ इत्यादि। पाद्मे देवद्युतिस्तुतौ—भक्तिर्यथा हरौ मेऽस्ति तद्वरिष्ठा गुरौ यदि। ममास्ति तेन सत्येन सन्दर्शयतु मे हरिः॥ इति। तस्मादन्यद् भगवद्भजनमपि नापेक्षते। यथोक्तमागमे पुरश्चरणफलप्रसङ्गे—यथा सिद्धरसस्पर्शात् ताम्रं भवति काञ्चनम्। सन्निधानाद् गुरोरेवं शिष्यो विष्णुमयो भवेदिति। तदेतदाह—नाहमिज्याप्रजा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तिभ्यां तपसोपशमेन वा। तुष्येयं सर्वभूतात्मा गुरुशुश्रू
यथा ॥ २३७ ॥

टीका च—ज्ञानप्रदात् गुरोरधिकः सेव्यो नास्तीत्युक्तम्। अ
एव तद्भजनादधिको धर्मश्च नास्तीत्याह, नाहमिति। इज्या गृह
धर्मः, प्रजातिः प्रकृष्टं जन्म उपनयनं, तेन ब्रह्मचारिधर्म उपल
ताभ्याम्। तथा तपसा वनस्थधर्मेण। उपशमेन यतिधर्मेण
अहं परमेश्वरस्तथा न तुष्येयं, यथा सर्वभूतात्मापि गुरुशुश्रू
इत्येषा। अत्र ज्ञानं ब्रह्मनिष्ठं भगवन्निष्ठञ्चेति द्विविधम्।
पूर्वत्र तथैव व्याख्या। उत्तरत्र त्वेवम्। इज्या पूजा, प्रजातिर्वै
दीक्षा, तपः समाधिः, उपशमो भगवन्निष्ठेति ॥१०॥८१॥ श्रीभग
श्रीदामविप्रम् ॥ २३७ ॥

श्रीगुर्वाज्ञया तत्सेवनाविरोधेन च अन्येषामपि वैष्णवानां
अन्यथा दोषः स्यात्। यथा श्रीनारदोक्तौ—गुरौ सन्निहिते
पूजयेदन्यमग्रतः। स दुर्गतिमवाप्नोति पूजनं तस्य निष्फलं
यः प्रथमं शाब्दे परे च निष्णातमित्याद्युक्तलक्षणं गुरुं नाश्रि
तादृशगुरोश्च मत्सरादितो महाभागवतसत्कारादावनुमतिं न ल
स प्रथमत एव त्यक्तशास्त्रो न विचार्य्यते। उभयसङ्कटपातो हि त
भवत्येव। एवमादिकाभिप्रायेणैव यो वक्ति न्यायरहितम
शृणोति यः। तावुभौ नरकं घोरं व्रजतः कालमक्षयम्॥ इति श्रीना
पञ्चरात्रे। अतएव दूरत एवाराध्यस्तादृशो गुरुः। वैष्णवविद्वे
परित्याज्य एव। गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः। उ
प्रतिपन्नस्य परित्यागो विधीयते॥ इति स्मरणात्, तस्य वैष्णव
राहित्येनावैष्णवतया अवैष्णवोपदिष्टेनेत्यादिवचनविषयत्वाच्च।
क्तलक्षणस्य श्रीगुरोरविद्यमानतायान्तु तस्यैव महाभागवत
नित्यसेवनं परमं श्रेयः। स च श्रीगुरुवत् समवासनः स्वस्मिन्
चित्तस्य ग्राह्यः। यस्य यत्सङ्गतिः पुंसो मणिवत् स्यात् स तद्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्वकुलर्द्ध्यै ततो धीमान् स्वयूथ्यानेव संश्रयेत् ॥ इति श्रीहरिभक्तिसुधोदयदृष्ट्या कृपां विना तस्मिन् चिन्तारत्या च। अथ सर्वस्यैव भागवतचिह्नधारिमात्रस्य तु यथायोग्यं सेवाविधानम्। तत्र महाभागवतसेवा द्विविधा प्रसङ्गरूपा परिचर्य्यारूपा च। तत्र प्रसङ्गरूपा यथा—न रोधयति मां योगो न सांख्यं धर्म्म उद्धव। न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणा। व्रतानि यज्ञाश्छन्दांसि तीर्थानि नियमा यमाः। यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ॥ २३८ ॥

पूर्वाध्याये, इष्टापूर्त्तेन मामेवं यो यजेत समाहितः। लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया ॥ इत्यनेन साधुसेवया भक्तिनिष्ठाजनने साधनान्तरसव्यपेक्षत्वमिवोक्तम्। तत्रेष्टाशब्देन सप्तमस्कन्धोक्तानीत्याग्निहोत्रदर्शपौर्णमासचातुर्मास्ययागपशुयागवैश्वदेवबलिहरणान्युच्यन्ते। पूर्त्तशब्देन सुरालयारामकूपवापीतड़ागप्रपानसत्राण्युच्यन्ते। अत्र तु इष्टं हविषाग्नौ यजेत मामित्यादौ अग्निहोत्राद्युपलक्षितं पूर्त्तमुद्यानोपवनाक्रीड़ेत्याद्युपलक्षितं ज्ञेयम्। एवं पूर्वोक्तप्रकारेणेष्टापूर्त्तेन यो मां यजेत स मत्स्मृतिस्तत्र साधुसेवया सतां प्रसङ्गेन सद्भक्तिम् अन्तरङ्गभक्तिनिष्ठां प्राप्नोतीत्यर्थः। तत्राग्निहोत्रादीनां भक्तौ प्रवेशोऽग्न्यन्तर्यामिरूपभगवदधिष्ठानत्वेनाग्न्यादिसन्तर्पणात्। कूपारामादीनाञ्च तत्परिचर्य्यार्थं क्रियमाणत्वात् तत्र प्रवेशः। तदेवं सत्सङ्गस्य सर्वापेक्षत्वमुक्तम्। पुनश्च तत्रैव तस्य स्वातन्त्र्येण यथेष्टफलदातृत्वं सर्वापेक्षया परमश्रेष्ठसामर्थ्यञ्च वक्तुं परमगुह्यमुपदिष्टम्—अथैतत् परमं गुह्यं शृण्वतो यदुनन्दन। सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत् सखेति। एतादृशमहिमत्वेनानुक्तत्वात्। तदेतत् परमगुह्यत्वमाह, न रोधयतीति। त्यागः सन्न्यासः। दक्षिणा दानमात्रम्। यज्ञो देवपूजा। छन्दांसि रहस्यमन्त्राः। यथा सत्सङ्गो मामवरुन्धे वशीकरोति तथा योगो न वशीकरोति न च सांख्यमित्यादिकोऽन्वयः। ततस्तेऽपि किञ्चिद्वशीकुर्वन्तीत्यर्थलब्धेर्भगवत्परा एव ज्ञेयाः न च

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

साधारणा:। अतएव च व्रताश्चैकादश्यादीनीति टीकाकारा:।
चैतावतैषां नित्यानां वैष्णवव्रतानामकर्त्तव्यत्वं प्रासङ्गिकस्य प्रा
श्रयसामर्थ्यप्रशंसयेतरस्य नित्यत्वनिराकरणायोगात्। यथा कर्म
कारिण:, न ह्यग्निमुखतोऽयं वै भगवान् सर्वयज्ञभुक्। इज्येत ह
राजन् यथा विप्रमुखे हुतैरिति श्रुत्वापि पूर्वोक्तम् अग्निहोत्र
यजेत् इति विधिं न परित्यक्तुं शक्नुवन्ति, तद्वत्। भक्ताधिकारि
यथा मद्भक्तपूजाभ्यधिका इति श्रुत्वापि दीक्षानन्तरं नित्यतया
भगवत्पूजां त्यक्तुं न शक्नुवन्ति तद्वदिति। अतएव, षड्भिर्मा
वासैस्तु यत् फलं परिकीर्त्तितम्। विष्णो नैवेद्यसिक्थेन तत्
भुञ्जतां कलावित्यपि न बाधकम्। एकादश्यादौ हि नित्यत्वे
षङ्गिकमेव महाफलदत्वं तत्र तत्र मतम्। अतएव नित्यत्व
मपि तादृशं वैष्णवं व्रतमवश्यमेव कर्त्तव्यमित्यागतम्। नित्य
व्रतत्वादिकञ्चैकादश्यादेरर्च्चनप्रसङ्गे किञ्चित् दर्शयिष्याम:। 
पूर्वाध्याये टीकाकारैरपि श्राद्धायैवं गुणान् दोषानित्यत्र विहिता
क्षणैकादश्युपवासानुपवासानिवेद्य श्रद्धादयो ये भक्तिविरुद्धा
स्तान् संत्यज्य इत्यर्थं इत्युक्तम्। प्रथमे च श्रीभीष्मयुधिष्ठिर
भगवद्धर्मानित्यत्र हरितोषणात् द्वादश्यादिनियमरूपानिति 
तम्। व्रतानि चेरे हरितोषणानीत्यत्र तृतीये एकादश्यादी
अतएव भगवन्महाप्रसादैकव्रतस्य श्रीमदम्बरीषस्य सच्छिरोमणे
दर्शनाय तदेव निश्चीयते इति। अथ प्रस्तुतमनुसराम:। वशी
मत्र द्विविधं मुख्यं गौणञ्च। तत्र मुख्येन प्रेम लक्ष्यते। 
भजतां भगवान् मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्ति
मिति न्यायेन। अतएव गौणेनान्यत् फलम्। अत्र मुख्यं श्री
गौणं वाणादौ। उत्तरत्र वशीकरणत्वं फलदानोन्मुखीकार
चर्य्यते। तदेतद् वशीकरणे दृष्टान्तमाह—सत्सङ्गेन हि
यातुधाना मृगा: खगा:। गन्धर्वाप्सरसो नागा: सिद्धाश्चारणगुह्य

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः । रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन् युगे युगे ॥ बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः । वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ॥ सुग्रीवो हनूमानृक्षो गजो गृध्रो वणिक्पथः । व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथापरे ॥ २३९ ॥

दैतेयास्तदुपलक्षितासुरदानवाश्च । यातुधाना राक्षसाः । तज्जातिषु दिग्दर्शनं त्वाष्ट्रेत्यादि । त्वाष्ट्रो वृत्रासुरः । वृत्रासुरस्य सत्सङ्गः प्राग्जन्मनि श्रीनारदाङ्गिरसोः सङ्गः श्रीसङ्कर्षणसङ्गश्च प्रसिद्धः । कायाधवः कयाधुपुत्रः प्रह्लादः । अस्य गर्भे श्रीनारदसङ्गः । आदिशब्दगृहीतान् पूर्वोक्तजातिक्रमेण कतिचिद् गणयति वृषेति । वृषपर्वा दानवः । अयं हि जातमात्रमातृपरित्यक्तो मुनिपालितो विष्णुभक्तो बभूवेति पुराणान्तरप्रसिद्धिः । बलेः श्रीप्रह्लादसङ्गः श्रीवामनसङ्गश्च । तदनन्तरमेव भक्त्युद्बोधदर्शनात् । बाणस्य बलिमहेशभगवत्सङ्गः । अस्य भुजकर्त्तनानन्तरं ज्ञातविष्णुमहिम्नो महाभागवतमहेशप्राप्तिरिव स्वप्राप्तिरित्युच्यते । मयो दानवः । अस्य सभानिर्माणादौ पाण्डवसङ्गो भगवत्सङ्गश्च । अन्ते तत्प्राप्तिस्तु ज्ञेया । विभीषणो यातुधानः । अस्य हनूमत्सङ्गो भगवत्सङ्गश्च । सुग्रीवाद्या गजान्ता मृगाः । तत्र ऋक्षो जाम्बवान् । अस्य भगवत्सङ्गः । गजो गजेन्द्रः । अस्य पूर्वजन्मनि सत्सङ्गः उन्नेयः । उत्तरजन्मान्ते भगवत्सङ्गश्च । गृध्रो जटायुर्नाम खगः । अस्य श्रीगरुड़दशरथादिसङ्गः श्रीसीतादर्शनं श्रीभगवद्दर्शनञ्च । गन्धर्वादींस्त्वनतिप्रसिद्धत्वेनानुदाहृत्य मनुष्येषु वैश्यादीनुदाहरति । वणिक्पथस्तुलाधारः । अस्य भारते जाजलिमुनिगन्धर्वप्रसङ्गे प्रोक्तमहिम्नः सत्सङ्गोऽन्वेषणीयः । व्याधो धर्म्मव्याधः । शूद्रोऽन्त्यजोऽपि । अत्रादिवाराहे कथेयम्— क्वचित् प्राचीनकलियुगे वसुनाम्ना वैष्णवेन राज्ञा प्राग्जन्मनि मृगभ्रान्त्या निहतो ब्राह्मणो ब्रह्मराक्षसतां प्राप्तस्तस्य राज्ञः प्रापश्चिक-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विष्णुलोकगमनसमये तच्छरीरं प्रविष्टः पुनश्च तस्य तद्भोगान्ते प्रा- प्राप्तस्य देहात् तत्कर्त्तृकब्रह्मपाराख्यस्तवपाठतेजसा निर्गतस्तद्र धर्म्मव्याधसंज्ञः हिंसातिशयविमुखः पर्य्यवसाने दृष्टनीलाद्रिनाथः स्तुतवात् प्राप्ततदालिङ्गनस्तत्सायुज्यमवापेति। कुब्जाया भगवत्कृ पूर्व्वजन्मनि च नारदसङ्ग इति माथुरहरिवंशप्रसिद्धम्। गोपी साधारण्यः। श्रीकृष्णव्रजे तदानीं विवाहादिना समागताः। तन्नित्यप्रेयसीवृन्दसङ्गः श्रीकृष्णदर्शनादिरूपो भगवत्सङ्गश्च। पत्नीनां श्रीकृष्णगुणकथकलोकसङ्गस्तत्सङ्गश्च। अपरे दैत्यादयो च। तेषां सत्सङ्गव्यतिरिक्तसाधनाभावमाह—ते नाधीतश्रुतिग नोपासितमहत्तमाः। अव्रतातप्ततपसो मत्सङ्गान्मामुपागताः॥२

न अधीताः श्रुतिगणा यैः। तदर्थञ्च नोपासिता महत्तमा किञ्च अकृतव्रता अकृततपस्काश्च। पूर्व्ववदध्ययनादिकं भगवत्प्री मेव ग्राह्यम्। अत्रैकेषां वृत्रादीनां प्राग्जन्मादौ साधनान्तरं तदपि सत्सङ्गानुषङ्गसिद्धमित्यभिप्रेत्य सङ्गसङ्गस्यैव तत्तत् फलमु धर्म्मव्याधादीनान्तु केवलस्यैव तस्येति ज्ञेयम्। सत्सङ्गशब्देनात्र सङ्गो मदीयादीनाञ्च सङ्ग इत्यभिधाप्यते। उभयत्रापि मत्सम त्वादित्यभिप्रायेण। तत्र स्वस्यापि सत्त्वात् सत्सङ्गप्रकरणे स्वसङ्गो न्तर्भावितः। यत्तु पुरा भागवतसङ्गेनैव भगवत्कृपा भवतीत्युक्तं तत्साम्मुख्यजन्मन्येव। अत्र तु स एव भागवतसङ्गः साधनवि त्वेनोच्यते इति न दोषः। यदि वात्र कुत्रचित् साम्मुख्यजन्म मपि भगवत्सङ्गो भवेत् तदाप्येवमाचक्ष्महे। सच्छब्दार्थस्य मङ्गीकृत्य यत् कदाचित् सर्व्वत्र कृपां वितनोति भगवान् तत्र सम्बन्धेनैवेत्यतो नाभ्युपगमहानिरिति। अथ मुख्यं वशीकरण भावितसाधनान्तरेण सत्सङ्गमात्रेण श्रीगोप्यादीनां दर्शयति— केन हि भावेन गोप्यो गावो नगा मृगाः। येऽन्ये मूढ़धियो सिद्धा मामीयुरञ्जसा॥ २४१॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्षेत्र भक्तियोगेन विन्दति। भक्तियोगं स लभते एवं यः पूजयेत माम् ॥ २३५ ॥

नैरपेक्ष्येण अहैतुकेन। अहैतुकभक्तियोग एव कथं स्यात् तत्राह, भक्तियोगमिति। एवं यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पुरुषः। यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे॥ इत्याद्युक्तविधिना ॥ ११ ॥ २७ ॥ श्रीभगवान् ॥ २३५ ॥

एवमेकादशीजन्माष्टम्यादिगतोऽपि ज्ञेयः। अथ वैधीभेदाः शरणापत्तिश्रीगुर्वादिसत्सेवाश्रवणकीर्त्तनादयः। एते च प्रत्येकमपि द्वित्रादयः समुदित्यापि कारणानि भवन्ति। तथा श्रवणात्। तत्र प्रथमतः शरणापत्तिः। षड्वर्गाद्यविज्ञातसंसारभयवाध्यमान एव हि शरणं प्रविशत्यनन्यगतिः। भक्तिमात्रकामोऽपि तत्कृतभगवद्वैमुख्यवाध्यमानः। अनन्यगतित्वञ्च द्विधा दर्श्यते। आश्रयान्तरस्याभावकथनेन नातिप्रज्ञया कथञ्चिदाश्रितस्यान्यस्य त्याजनेन च। पूर्वेण यथा— मर्त्त्यो मृत्युव्यालभीतः पलायन् लोकान् सर्वान् निर्भयं नाध्यगच्छत्। त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैतीति। उत्तरेण यथा—तस्मात् त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम्। प्रवृत्तञ्च निवृत्तञ्च श्रोतव्यं श्रुतमेव च॥ मामेकमेव शरणमात्मानं सर्वदेहिनाम्। याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः॥ इति। चोदनां श्रुतिं प्रतिचोदनां स्मृतिमिति टीका च। श्रीगीतासु च—सर्वधर्मान् परित्यज्येत्यादि। तस्याः शरणापत्तेर्लक्षणं वैष्णवतन्त्रे—आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यविवर्जनम्। रक्षिष्यतीति विश्वासो गोप्तृत्वे वरणं तथा। आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिरिति। अङ्गाङ्गिभेदेन षड्विधा। तत्र गोप्तृत्वे वरणमेवाङ्गि शरणागतिशब्देनैकार्थ्यात्, अन्यानि त्वङ्गानि तत्परिकरत्वात्। आनुकूल्यप्रातिकूल्ये तदङ्गत्वादीनां शरणागतस्य भावस्य वा। रक्षिष्यतीति विश्वासः, क्षेमं विधास्यति स नो भगवांस्त्र्यधीश [illegible]प्रकारः। आत्मनिक्षेपः, केनापि देवेन

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमीति गौतमोयतन्त्रे
प्रकारः। यथोक्तं पाद्मोत्तरखण्डे चाष्टाक्षरस्य नमःशब्दव्याख्याने
अहङ्कृतिर्मकारः स्यान्नकारस्तन्निषेधकः। तस्मात्तु नमसा क्षे
स्वातन्त्र्यं प्रतिषिध्यते॥ भगवत्परतन्त्रोऽसौ तदायत्तात्मजीवनः
तस्मात् स्वसामर्थ्यविधिं त्यजेत् सर्वमशेषतः॥ ईश्वरस्य तु सामर्थ्यं
नालभ्यं तस्य विद्यते। तस्मिन् न्यस्तभरः शेते तत्कर्मैव समाचरेत्॥
अतएव ब्रह्मवैवर्त्ते—अहङ्कारनिवृत्तानां केशवो न हि दूरगः। अह
ङ्कारयुतानां हि मध्ये पर्वतराशयः॥ अतएव तृतीये ब्रह्मस्तवे स्व
त्वाभिमानिनः संसारः श्रूयते—यावत् पृथक्त्वमिदमात्मन इ
यार्थमायाबलं भगवतो जन ईश पश्येत्। तावन्न संसृतिरसौ प्र
संक्रमेत व्यर्थापि दुःखनिवहं वहती क्रियार्था॥ इति। कारु
परमकारुणिको न भवेत् परः परमशोच्यतमो न च मत्परः इत्य
प्रकारम्। गोप्तृत्वे वरणञ्च यथा नारसिंहे—त्वां प्रपन्नोऽस्मि शरणं दे
देवं जनार्दनम्। इति यः शरणं प्राप्तस्तं क्लेशादुद्धराम्यहम्॥
प्रकारम्। तदपि त्रिप्रकारं कायिकत्वादिभेदेन। यथोक्तं
गुरा—कर्म्मणा मनसा वाचा येऽच्युतं शरणं गताः। न समर्थो
स्तेषां ते मुक्तिफलभागिनः॥ इति। व्याख्यातं श्रीहरिभक्तिविलासे
तवास्मीति वदन् वाचा तथैव मनसा विदन्। तत्स्थानमाश्रि
स्तन्वा मोदते शरणागतः॥ इति। तदेवं यस्य सर्वाङ्गस
शरणापत्तिस्तस्य झटित्येव सम्पूर्णफला। अन्येषान्तु यथास
यथाक्रमञ्चेति ज्ञेयम्। तामेतां शरणापत्तिं श्लाघते—तापत्रये
हतस्य घोरे सन्तप्यमानस्य भवाध्वनीश। पश्यामि नान्यत्
तवाङ्घ्रिद्वन्द्वातपत्रादमृतौघवर्षात्॥ २२६॥

शरणागतानां सर्वदुःखदूरीकरणं निजमाधुरीणां सर्वतो
त्वाभिहितम्॥ ११॥ १९॥ उद्धवः श्रीभगवन्तम्॥ २२६॥

तदेवं शरणापत्तिर्विवृ

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सिद्धेः । तत्र यद्यपि शरणापत्त्यैव सर्वं सिध्यति, शरणं तं प्रपन्ना ये ध्यानयोगविवर्जिताः । ते वै मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ॥ इति गारुड़ात्, तथापि वैशिष्ट्यलिप्सुः शक्तश्चेत् ततः भगवच्छास्त्रोपदेष्टॄणां भगवन्मन्त्रोपदेष्टॄणां वा श्रीगुरुचरणानां नित्यमेव विशेषतः सेवां कुर्य्यात् । तत्प्रसादो हि स्वस्वनानाप्रतीकारदुस्त्यजानर्थहानौ परमभगवत्प्रसादसिद्धौ च मूलम् । पूर्वत्र यथा सप्तमे श्रीनारदवाक्यम्—असङ्कल्पात् जयेत् कामं क्रोधं कामविवर्जनात् । अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात् । आन्वीक्षिक्या शोकमोहौ दम्भं महदुपासया । योगान्तरायान् मौनेन हिंसां कामाद्यनीहया । कृपया भूतजं दुःखं दैवं जह्यात् समाधिना । आत्मजं योगवीर्य्येण निद्रां सत्त्वनिषेवया । रजस्तमश्च सत्त्वेन सत्त्वञ्चोपशमेन च । एतत् सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत् ॥ इति । उत्तरत्र वामनकल्पे ब्रह्मवाक्यम्—यो मन्त्रः स गुरुः साक्षात् यो गुरुः स हरिः स्वयम् । गुरुर्यस्य भवेत् तुष्टस्तस्य तुष्टो हरिः स्वयम् ॥ इति । अन्यत्र—हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन । तस्मात् सर्वप्रयत्नेन गुरुमेव प्रसादयेत् ॥ इति । अतएव सेवामात्रन्तु नित्यमेव । यथा चान्यत्र परमेश्वरवाक्यम्—प्रथमन्तु गुरुं पूज्य ततश्चैव ममार्चनम् । कुर्वन् सिद्धिमवाप्नोति ह्यन्यथा निष्फलं भवेत् ॥ इति । अतएव नारदपञ्चरात्रे—वैष्णवं ज्ञानवक्तारं यो विद्याद् विष्णुवद् गुरुम् । पूजयेद् वाङ्मनःकायैः स शास्त्रज्ञः स वैष्णवः । श्लोकपादस्य वक्तापि यः पूज्यः स सदैव हि । किं पुनर्भगवद्विष्णोः स्वरूपं वितनोति यः ॥ इत्यादि । पाद्मे देवद्युतिस्तुतौ—भक्तिर्यथा हरौ मेऽस्ति तद्वरिष्ठा गुरौ यदि । ममास्ति तेन सत्येन सन्दर्शयतु मे हरिः ॥ इति । तस्मादन्यद् भगवद्भजनमपि नापेक्षते । यथोक्तमागमे पुरश्चरणफलप्रसङ्गे—यथा सिद्धरसस्पर्शात् ताम्रं भवति काञ्चनम् । सन्निधानाद् गुरोरेवं शिष्यो वि[illegible]भवेदिति । तदे[illegible]दाह—नाहमिज्याप्रजा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तिर्ष्या तपसोपशमेन वा। तुष्येयं सर्वभूतात्मा गुरुशुश्रू
यथा ॥ २३७ ॥

टीका च—ज्ञानप्रदात् गुरोरधिकः सेव्यो नास्तीत्युक्तम्। त
एव तद्भजनादधिको धर्म्मश्च नास्तीत्याह, नाहमिति। इज्या गृ
धर्म्मः, प्रजातिः प्रकृष्टं जन्म उपनयनं, तेन ब्रह्मचारिधर्म्मो उपल
ताभ्याम्। तथा तपसा वनस्थधर्म्मेण। उपशमेन यतिधर्म्मेण
अहं परमेश्वरस्तथा न तुष्येयं, यथा सर्वभूतात्मापि गुरुशुश्रू
षया। अत्र ज्ञानं ब्रह्मनिष्ठं भगवन्निष्ठञ्चेति द्विविधम्।
पूर्वत्र तथैव व्याख्या। उत्तरत्र त्वेवम्। इज्या पूजा, प्रजातिर्व
दीक्षा, तपः समाधिः, उपशमो भगवन्निष्ठेति ॥१०॥८१॥ श्रीभग
श्रीदामविप्रम् ॥ २३७ ॥

श्रीगुर्वाज्ञया तत्सेवनाविरोधेन च अन्येषामपि वैष्णवानां
अन्यथा दोषः स्यात्। यथा श्रीनारदोक्तौ—गुरौ सन्निहिते
पूजयेदन्यमग्रतः। स दुर्गतिमवाप्नोति पूजनं तस्य निष्फलं
यः प्रथमं शाब्दे परे च निष्णातमित्याद्युक्तलक्षणं गुरुं नाश्रि
तादृशगुरोश्च मत्सरादितो महाभागवतसत्कारादावनुमतिं न ल
स प्रथमत एव त्यक्तशास्त्रो न विचार्य्यते। उभयसङ्कटपातो हि त
भवत्येव। एवमादिकाभिप्रायेणैव यो वक्ति न्यायरहितम
शृणोति यः। तावुभौ नरकं घोरं व्रजतः कालमक्षयम् ॥ इति श्रीना
पञ्चरात्रे। अतएव दूरत एवाराध्यस्तादृशो गुरुः। वैष्णवविद्वेषी
परित्याज्य एव। गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः। उत्
प्रतिपन्नस्य परित्यागो विधीयते ॥ इति स्मरणात्, तस्य वैष्णव
राहित्येनावैष्णवतया अवैष्णवोपदिष्टेनेत्यादिवचनविषयत्वाच्च।
क्तलक्षणस्य श्रीगुरोरविद्यमानतायान्तु तस्यैव महाभागवतस्यै
नित्यसेवनं परमं श्रेयः। स च श्रीगुरुवत् समवासनः स्वस्मिन् कृ
चित्तश्च ग्राह्यः। यस्य

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सत्कुलर्द्धे ततो धीमान् स्वयूथ्यानेव संश्रयेत् ॥ इति श्रीहरिभक्तिसुधो-दयदृष्ट्या कृपां विना तस्मिन् चिन्तारत्या च । अथ सर्व्वस्यैव भागवत-चिह्नधारिमात्रस्य तु यथायोग्यं सेवाविधानम् । तत्र महाभागवत-सेवा द्विविधा प्रसङ्गरूपा परिचर्य्यारूपा च । तत्र प्रसङ्गरूपा यथा— न रोधयति मां योगो न सांख्यं धर्म्म उद्धव । न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणा । व्रतानि यज्ञाश्छन्दांसि तीर्थानि नियमा यमाः । यथावरुन्धे सत्सङ्गः सर्व्वसङ्गापहो हि माम् ॥ २३८ ॥

पूर्व्वाध्याये, इष्टापूर्त्तेन मामेवं यो यजेत समाहितः । लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया ॥ इत्यनेन साधुसेवया भक्तिनिष्ठा-जनने साधनान्तरसव्यपेक्षत्वमिवोक्तम् । तत्रेष्टशब्देन सप्तमस्कन्धो-क्तरीत्याग्निहोत्रदर्शपौर्णमासचातुर्मास्ययागपशुयागवैश्वदेवबलिहरणा-न्युच्यन्ते । पूर्त्तशब्देन सुरालयारामकूपवापीतड़ागप्रपानसत्राण्युच्यन्ते । अत्र तु इष्टं हविषाग्नौ यजेत मामित्यादौ अग्निहोत्राद्युपलक्षितं पूर्त्तमुद्यानोपवनाक्रीड़ेत्याद्युपक्षितं ज्ञेयम् । एवं पूर्व्वोक्तप्रकारेणेष्टा-पूर्त्तेन यो मां यजेत स मत्स्मृतिस्तत्र साधुसेवया सतां प्रसङ्गेन सद्भक्तिम् अन्तरङ्गभक्तिनिष्ठां प्राप्नोतीत्यर्थः । तत्राग्निहोत्रादीनां भक्तौ प्रवेशोऽन्यन्तर्यामिरूपभगवदधिष्ठानत्वेनाग्न्यादिसन्तर्पणात् । कूपारामादीनाञ्च तत्परिचर्य्यार्थं क्रियमाणत्वात् तत्र प्रवेशः । तदेवं सत्सङ्गस्य सर्व्वापेक्षत्वमुक्तम् । पुनश्च तत्रैव तस्य स्वातन्त्र्येण यथेष्टफल-दातृत्वं सर्व्वापेक्षया परमसामर्थ्यञ्च वक्तुं परमगुह्यमुपदिष्टम्—अथै-तत् परमं गुह्यं शृण्वतो यदुनन्दन । सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत् सखेति । एतादृशमहिमत्वेनानुक्तत्वात् । तदेतत् परम-गुह्यत्वमाह, न रोधयतीति । त्यागः सन्न्यासः । दक्षिणा दानमात्रम् । यज्ञो देवपूजा । छन्दांसि रहस्यमन्त्राः । यथा सत्सङ्गो मामवरुन्धे वशीकरोति तथा योगो न वशीकरोति न च सांख्यमित्यादिकोऽन्वयः ।

... गवत्परा एव ज्ञेयाः न च

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

साधारणाः। अतएव च व्रतान्येकादश्यादीनीति टीकाकाराः। चैतावतैषां नित्यानां वैष्णवव्रतानामकर्त्तव्यत्वं प्राप्तमेकस्य फल... श्रयसामर्थ्यप्रशंसयेतरस्य नित्यत्वनिराकरणायोगात्। यथा का... कारिणः, न ह्यग्निमुखतोऽयं वै भगवान् सर्वयज्ञभुक्। इज्येत ह... राजन् यथा विप्रमुखे हुतैरिति श्रुत्वापि पूर्वोक्तम् अग्निहोत्रा... यजेत् इति विधिं न परित्यक्तुं शक्नुवन्ति, तद्वत्। भक्तायधिकारि... यथा मन्नक्तापूजाभ्यधिका इति श्रुत्वापि दीक्षानन्तरं नित्यतया... भगवत्पूजां त्यक्तुं न शक्नुवन्ति तद्वदिति। अतएव, "षड्भिर्मा... वासैस्तु यत् फलं परिकीर्त्तितम्। विष्णो नैवेद्यसिक्थेन तत्... भुञ्जतां कलावित्यपि न बाधकम्। एकादश्यादौ हि नित्यत्वेऽप... षङ्गिकमेव महाफलदत्वं तत्र तत्र मतम्। अतएव नित्यलक्ष... मपि तादृशं वैष्णवं व्रतमवश्यमेव कर्त्तव्यमित्यागतम्। नित्यत्व... व्रतत्वादिकञ्चैकादश्यादेरर्च्चनप्रसङ्गे किञ्चित् दर्शयिष्यामः। ... पूर्वाध्याये टीकाकारैरपि आम्नायैवं गुणान् दोषानित्यत्र विहिता... कृष्णैकादश्युपवासानुपवासानिवेद्य श्रद्धादयो ये भक्तिविरुद्धा... स्तान् संत्यज्य इत्यर्थं इत्युक्तम्। प्रथमे च श्रीभीष्मयुधिष्ठिर... भगवद्धर्मानित्यत्र हरितोषणात् द्वादश्यादिनियमरूपानिति ... तम्। व्रतानि चेरे हरितोषणानीत्यत्र तृतीये एकादश्यादी... अतएव भगवन्महाप्रसादैकव्रतस्य श्रीमदम्बरीषस्य सच्छिरोमणि... दर्शनाय तदेव निर्बीयते इति। अथ प्रस्तुतमनुसरामः। वशी... मत्र द्विविधं मुख्यं गौणञ्च। तत्र मुख्येन प्रेम लभ्यते। ... भजतां भगवान् मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्ति... मिति न्यायेन। अतएव गौणेनान्यत् फलम्। अत्र मुख्यं श्रीगौ... गौणं वाणादौ। उत्तरत्र वशीकरणत्वं फलदानोन्मुखीकरण... चर्य्यते। तदेतद् वशीकरणे दृष्टान्तमाह—सत्सङ्गेन हि ... यातुधाना मृगाः खगाः। गन्धर्वाप्सरसो ... सिद्धाचारणगुह्य...

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः । रजस्तमःप्रकृतय-स्तस्मिंस्तस्मिन् युगे युगे ॥ बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः । वृषपर्वा वलिर्बाणो मयश्चाथ विभीषणः ॥ सुग्रीवो हनूमानृक्षो गजो गृध्रो वणिक्पथः । व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथा-ध्वरे ॥ २३९ ॥

दैतेयास्तदुपलक्षितासुरदानवाश्च । यातुधानाः राक्षसाः । तज्जा-तिषु दिग्दर्शनं त्वाष्ट्रेत्यादि । त्वाष्ट्रो वृत्रासुरः । वृत्रासुरस्य सत्सङ्गः प्राग्जन्मनि श्रीनारदाङ्गिरसोः सङ्गः श्रीसङ्कर्षणसङ्गश्च प्रसिद्धः । कायाधवः कयाधुपुत्रः प्रह्लादः । अस्य गर्भे श्रीनारदसङ्गः । आदि-शब्दगृहीतान् पूर्वोक्तजातिक्रमेण कतिचिद् गणयति वृषेति । वृष-पर्वा दानवः । अयं हि जातमात्रमातृपरित्यक्तो मुनिपालितो विष्णु-भक्तो बभूवेति पुराणान्तरप्रसिद्धिः । वलेः श्रीप्रह्लादसङ्गः श्रीवामन-सङ्गश्च । तदनन्तरमेव भक्त्युद्बोधदर्शनात् । वाणस्य वलिमहेश-भगवत्सङ्गः । अस्य भुजकर्त्तनानन्तरं ज्ञातविष्णुमहिम्नो महाभाग-वतमहेशप्राप्तिरिव स्वप्राप्तिरित्युच्यते । मयो दानवः । अस्य सभा-निर्माणादौ पाण्डवसङ्गो भगवत्सङ्गश्च । अन्ते तत्प्राप्तिस्तु ज्ञेया । विभीषणो यातुधानः । अस्य हनूमत्सङ्गो भगवत्सङ्गश्च । सुग्रीवाद्या गजान्ता मृगाः । तत्र ऋक्षो जाम्बवान् । अस्य भगवत्सङ्गः । गजो गजेन्द्रः । अस्य पूर्वजन्मनि सत्सङ्गः उन्नेयः । उत्तरजन्मान्ते भग-वत्सङ्गश्च । गृध्रो जटायुनामा खगः । अस्य श्रीगरुड़दशरथादि-सङ्गः श्रीसीतादर्शनं श्रीभगवद्दर्शनञ्च । गन्धर्वादींस्त्वनतिप्रसिद्धत्वेना-नुदाहृत्य मनुष्येषु वैश्यादीनुदाहरति । वणिक्पथस्तुलाधारः । अस्य भारते जाजलिमुनिगन्धर्वप्रसङ्गे प्रोक्तमहिम्नः सत्सङ्गोऽन्वेषणीयः । व्याधो धर्मव्याधः । शूद्रोऽन्त्यजोऽपि । अत्रादिवाराहे कथेयम्— क्वचित् प्राचीनकलियुगे वसुनाम्ना वैष्णवेन राज्ञा प्राग्जन्मनि मृग-

स्तस्य राज्ञः प्रार्पञ्चक-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विष्णुलोकगमनसमये तच्छरीरं प्रविष्टः पुनश्च तस्य तद्भोगान्ते
प्राप्तस्य देहात् तत्कर्तृकब्रह्मपाराख्यस्तवपाठतेजसा निर्गतः
धर्म्मव्याधसंज्ञः हिंसातिशयविमुखः पर्य्यवसाने दृष्टनीलाद्रिनाथः
स्तुतवात् प्राप्ततदालिङ्गनस्तत्सायुज्यमवापेति। कुब्जाया भगवत्
पूर्वजन्मनि च नारदसङ्ग इति माथुरहरिवंशप्रसिद्धम्। गोप्यः
साधारण्यः। श्रीकृष्णव्रजे तदानीं विवाहादिना समागताः।
तन्नित्यप्रेयसीवृन्दसङ्गः श्रीकृष्णदर्शनादिरूपो भगवत्सङ्गश्च।
पत्नीनां श्रीकृष्णगुणकथकलोकसङ्गस्तत्सङ्गश्च। अपरे दैतेयादयः
च। तेषां सत्सङ्गव्यतिरिक्तसाधनाभावमाह—ते नाधीतश्रुति
नोपासितमहत्तमाः। अव्रतातप्ततपसो मत्सङ्गान्मामुपागताः॥

न अधीताः श्रुतिगणा यैः। तदर्थञ्च नोपासिता महत्तमाः
किञ्च अकृतव्रता अकृततपस्काश्च। पूर्ववदध्ययनादिकं भगवत्
मेव ग्राह्यम्। अत्रैकेषां वृत्रादीनां प्रागजन्मादौ साधनान्तरं
तदपि सत्सङ्गानुषङ्गसिद्धमित्यभिप्रेत्य सङ्गसङ्गस्यैव तत्तत् फल
धर्माव्याधादीनान्तु केवलस्यैव तस्येति ज्ञेयम्। सत्सङ्गशब्देनात्र
सङ्गो मदीयादीनाञ्च सङ्ग इत्यभिधास्यते। उभयत्रापि मत्
त्वादित्यभिप्रायेण। तत्र स्वस्यापि सत्त्वात् सत्सङ्गप्रकरणे स्वसङ्गो
न्तर्भावितः। यत्तु पुरा भागवतसङ्गेनैव भगवत्कृपा भवतीत्युक्तं
तत्साम्मुख्यजन्मन्येव। अत्र तु स एव भागवतसङ्गः साधन
त्वेनोच्यते इति न दोषः। यदि वात्र कुत्रचित् साम्मुख्यजन्म
मपि भगवत्सङ्गो भवेत् तदाप्येवमाचक्ष्महे। सच्छब्दार्थम
ङ्गीकृत्य यत् कदाचित् सर्वत्र कृपां वितनोति भगवान् तत्र
सम्बन्धे नैवेत्यतो नाभ्युपगमहानिरिति। अथ मुख्यं व्रजौकसः
भावितसाधनान्तरेण सत्सङ्गमात्रेण श्रीगोप्यादीनां दर्शयति
केन हि भावेन गोप्यो गावो नगा मृगाः। येऽन्ये मूढधियो
सिद्धा मामीयुरञ्जसा॥ २४१॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्षेण भक्तियोगेन विन्दति । भक्तियोगं स लभते एवं यः पूजयेत माम् ॥ २२५ ॥

नैरपेक्ष्येण अहैतुकेन । अहैतुकभक्तियोग एव कथं स्यात् तत्राह, भक्तियोगमिति । एवं यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पुरुषः । यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥ इत्याद्युक्तविधिना ॥ ११ ॥ २७ ॥ श्रीभगवान् ॥ २२५ ॥

एवमेकादशीजन्माष्टम्यादिगतोऽपि ज्ञेयः । अथ वैधीभेदाः शरणापत्तिश्रीगुर्वादिसत्सेवाश्रवणकीर्त्तनादयः । एते च प्रत्येकमपि द्वित्रादयः समुदितापि कारणानि भवन्ति । तथा श्रवणात् । तत्र प्रथमतः शरणापत्तिः । षड्वर्गाद्यविक्षतसंसारभयवाध्यमान एव हि शरणं प्रविशत्यनन्यगतिः । भक्तिमात्रकामोऽपि तत्कृतभगवद्वैमुख्यवाध्यमानः । अनन्यगतित्वञ्च द्विधा दर्श्यते । आश्रयान्तरस्याभावकथनेन नातिप्रव्रज्यया कथञ्चिदाश्रितस्यान्यस्य त्याजनेन च । पूर्वेण यथा—मर्त्यो मृत्युव्यालभीतः पलायन् लोकान् सर्व्वान् निर्भयं नाध्यगच्छत् । त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैतीति । उत्तरेण यथा—तस्मात् त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् । प्रवृत्तञ्च निवृत्तञ्च श्रोतव्यं श्रुतमेव च ॥ मामेकमेव शरणमात्मानं सर्व्वदेहिनाम् । याहि सर्व्वात्मभावेन मया स्या ह्यकुतोभयः ॥ इति । चोदनां श्रुतिं प्रतिचोदनां स्मृतिमिति टीका च । श्रीगीतासु च—सर्व्वधर्म्मान् परित्यज्येत्यादि । तस्याः शरणापत्तेर्लक्षणं वैष्णवतन्त्रे—आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यविवर्जनम् । रक्षिष्यतीति विश्वासो गोप्तृत्वे वरणं तथा । आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिरिति । अङ्गाङ्गिभेदेन षड्विधा । तत्र गोप्तृत्वे वरणमेवाङ्गि शरणागतिशब्देनैकार्थ्यात्, अन्यानि त्वङ्गानि तत्परिकरत्वात् । आनुकूल्यप्रातिकूल्ये तद्भक्तादीनां शरणागतस्य भावस्य वा । रक्षिष्यतीति विश्वासः, क्षेमं विधास्यति स नो भगवांस्त्र्यधीश इत्यादिप्रकारः । आत्मनिक्षेपः, केनापि देवेन



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमीति गौतमीयतन्त्रो
प्रकारः। यथोक्तं पाद्मोत्तरखण्डे चाष्टाक्षरस्य नमःशब्दव्याख्याने-
अहङ्कृतिर्मकारः स्यान्नकारस्तन्निषेधकः। तस्मात्तु नमसा क्षे
स्वातन्त्र्यं प्रतिषिध्यते॥ भगवत्परतन्त्रोऽसौ तदायत्तात्मजीवनः
तस्मात् स्वसामर्थ्यविधिं त्यजेत् सर्वमशेषतः॥ ईश्वरस्य तु सामर्थ्या
नालभ्यं तस्य विद्यते। तस्मिन् न्यस्तभरः शेते तत्कर्मैव समाचरेत्
अतएव ब्रह्मवैवर्त्ते—अहङ्कारनिवृत्तानां केशवो न हि दूरगः। अ
ङ्कारयुतानां हि मध्ये पर्वतराशयः॥ अतएव तृतीये ब्रह्मस्तवे स्व
न्त्र्याभिमानिनः संसारः श्रूयते—यावत् पृथक्त्वमिदमात्मन इ
यार्थमायाबलं भगवतो जन ईश पश्येत्। तावन्न संसृतिरसौ प्र
संक्रमेत व्यर्थापि दुःखनिवहं वहती क्रियार्था॥ इति। कार्प
परमकारुणिको न भवेत् परः परमशोच्यतमो न च मत्परः इत्य
प्रकारम्। गोप्तृत्वे वरणञ्च यथा नारसिंहे—त्वां प्रपन्नोऽस्मि शरणं दे
देवं जनार्दनम्। इति यः शरणं प्राप्तस्तं क्लेशादुद्धराम्यहम्॥ इ
प्रकारम्। तदपि त्रिप्रकारं कायिकत्वादिभेदेन। यथोक्तं व
पुराणे—कर्म्मणा मनसा वाचा येऽच्युतं शरणं गताः। न समर्थो य
स्तेषां ते मुक्तिफलभागिनः॥ इति। व्याख्यातं श्रीहरिभक्तिविलासे
तवास्मीति वदन् वाचा तथैव मनसा विदन्। तत्स्थानमाश्रि
स्तन्वा मोदते शरणागतः॥ इति। तदेवं यस्य सर्वाङ्गसम्प
शरणापत्तिस्तस्य झटित्येव सम्पूर्णफला। अन्येषान्तु यथासम्
यथाक्रमञ्चेति ज्ञेयम्। तामेतां शरणापत्तिं श्लाघते—तापत्रयेण
हतस्य घोरे सन्तप्यमानस्य भवाध्वनीश। पश्यामि नान्यत् श
त्वाङ्घ्रिद्वन्द्वातपत्रादमृताभिवर्षात्॥ २३६॥

शरणागतानां सर्वदुःखदूरीकरणं निजमाधुरीणां सर्वतो वर्ष
त्वाभिहितम्॥ ११॥ १९॥ उद्धवः श्रीभगवन्तम्॥ २३६॥

तदेवं शरणापत्तिर्विवृता। अस्याश्चापूर्वत्वं तां विना तदीय

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सिद्धेः । तत्र यद्यपि शरणापत्त्यैव सर्वं सिध्यति, शरणं तं प्रपन्ना ये ध्यानयोगविवर्जिताः । ते वै मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ॥ इति गारुड़ात्, तथापि वैशिष्ट्यलिप्सुः शक्तश्चेत् ततः भगवच्छास्त्रोपदेष्टॄणां भगवन्मन्त्रोपदेष्टॄणां वा श्रीगुरुचरणानां नित्यमेव विशेषतः सेवां कुर्य्यात् । तत्प्रसादो हि स्वस्वनानाप्रतीकारदुस्त्यजानर्थहानौ परमभगवत्प्रसादसिद्धौ च मूलम् । पूर्वत्र यथा सप्तमे श्रीनारदवाक्यम्—असङ्कल्पात् जयेत् कामं क्रोधं कामविवर्जनात् । अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात् । आन्वीक्षिक्या शोकमोहौ दम्भं महदुपासया । योगान्तरायान् मौनेन हिंसां कामाद्यनीहया । कृपया भूतजं दुःखं दैवं जह्यात् समाधिना । आत्मजं योगवीर्य्येण निद्रां सत्त्वनिषेवया । रजस्तमश्च सत्त्वेन सत्त्वञ्चोपशमेन च । एतत् सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत् ॥ इति । उत्तरत्र वामनकल्पे ब्रह्मवाक्यम्—यो मन्त्रः स गुरुः साक्षात् यो गुरुः स हरिः स्वयम् । गुरुर्यस्य भवेत् तुष्टस्तस्य तुष्टो हरिः स्वयम् ॥ इति । अन्यत्र—हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन । तस्मात् सर्वप्रयत्नेन गुरुमेव प्रसादयेत् ॥ इति । अतएव सेवामात्रन्तु नित्यमेव । यथा चान्यत्र परमेश्वरवाक्यम्—प्रथमन्तु गुरुं पूज्य ततश्चैव ममार्चनम् । कुर्वन् सिद्धिमवाप्नोति ह्यन्यथा निष्फलं भवेत् ॥ इति । अतएव नारदपञ्चरात्रे—वैष्णवं ज्ञानवक्तारं यो विद्याद् विष्णुवद् गुरुम् । पूजयेद् वाङ्मनःकायैः स शास्त्रज्ञः स वैष्णवः । श्लोकपादस्य वक्तापि यः पूज्यः स सदैव हि । किं पुनर्भगवद्विष्णोः स्वरूपं वितनोति यः ॥ इत्यादि । पाद्मे देवद्युतिस्तुतौ—भक्तिर्यथा हरौ मेऽस्ति तद्वरिष्ठा गुरौ यदि । ममास्ति तेन सत्येन सन्दर्शयतु मे हरिः ॥ इति । तस्मादन्यद् भगवद्भजनमपि नापेक्षते । यथोक्तमागमे पुरश्चरणफलप्रसङ्गे—यथा सिद्धरसस्पर्शात् ताम्रं भवति काञ्चनम् । सन्निधानाद् गुरोरेवं शिष्यो विष्णुमयो भवेदिति । तदेतदाह—नाहमिज्याप्रजा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तिभ्यां तपसोपशमेन वा। तुष्येयं सर्व्वभूतात्मा गुरुशुश्रू
यथा ॥ २३७ ॥

टीका च—ज्ञानप्रदात् गुरोरधिकः सेव्यो नास्तीत्युक्तम्।
एव तद्भजनादधिको धर्म्मश्च नास्तीत्याह, नाहमिति। इज्या
धर्म्मः, प्रजातिः प्रकृष्टं जन्म उपनयनं, तेन ब्रह्मचारिधर्म्मै
ताभ्याम्। तथा तपसा वनस्थधर्म्मेण। उपशमेन यतिधर्म्मेण
अहं परमेश्वरस्तथा न तुष्येयं, यथा सर्व्वभूतात्मापि गुरुशुश्रू
इत्येषा। अत्र ज्ञानं ब्रह्मनिष्ठं भगवन्निष्ठञ्चेति द्विविधम्।
पूर्व्वत्र तथैव व्याख्या। उत्तरत्र त्वेवम्। इज्या पूजा, प्रजाति
दीक्षा, तपः समाधिः, उपशमो भगवन्निष्ठेति ॥१०॥८१॥ श्रीभ
श्रीदामविप्रम् ॥ २३७ ॥

श्रीगुर्व्वाज्ञया तत्सेवनाविरोधेन च अन्येषामपि वैष्णवानां
अन्यथा दोषः स्यात्। यथा श्रीनारदोक्तौ—गुरौ सन्निहिते
पूजयेदन्यमग्रतः। स दुर्गतिमवाप्नोति पूजनं तस्य निष्फलं
यः प्रथमं शाब्दे परे च निष्णातमित्याद्युक्तलक्षणं गुरुं नाश्रि
तादृशगुरोश्च मत्सरादितो महाभागवतसत्कारादावनुमतिं न
स प्रथमत एव त्यक्तशास्त्रो न विचार्य्यते। उभयसङ्कटपातो हि
भवत्येव। एवमादिकाभिप्रायेणैव यो वक्ति न्यायरहितम
शृणोति यः। तावुभौ नरकं घोरं व्रजतः कालमक्षयम्॥ इति श्री
पञ्चरात्रे। अतएव दूरत एवाराध्यस्तादृशो गुरुः। वैष्णवविद्वे
परित्याज्य एव। गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः।
प्रतिपन्नस्य परित्यागो विधीयते॥ इति स्मरणात्, तस्य वैष्ण
राहित्येनावैष्णवतया अवैष्णवोपदिष्टेनेत्यादिवचनविषयत्वाच्च।
त्तलक्षणस्य श्रीगुरोरविद्यमानतायान्तु तस्यैव महाभागवत
नित्यसेवनं परमं श्रेयः। स च श्रीगुरुवत् समवासनः स्वस्मिन्
चित्तश्च ग्राह्यः। यस्य यत्सङ्गतिः पुंसो मणिवत् स्यात् स तद्गु

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्वकुलर्द्ध्यै ततो धीमान् स्वयूथ्यानेव संश्रयेत् ॥ इति श्रीहरिभक्तिसुधोदयदृष्ट्या कृपां विना तस्मिन् चिन्तारत्या च। अथ सर्वस्यैव भागवत-चिह्नधारिमात्रस्य तु यथायोग्यं सेवाविधानम्। तत्र महाभागवत-सेवा द्विविधा प्रसङ्गरूपा परिचर्य्यारूपा च। तत्र प्रसङ्गरूपा यथा—न रोधयति मां योगो न सांख्यं धर्म्म उद्धव। न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणा। व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः। यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ॥ २३८ ॥

पूर्वाध्याये, इष्टापूर्त्तेन मामेवं यो यजेत समाहितः। लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया ॥ इत्यनेन साधुसेवया भक्तिनिष्ठा-जनने साधनान्तरसव्यपेक्षत्वमिवोक्तम्। तत्रेज्याशब्देन सप्तमस्कन्धो-क्तरीत्याग्निहोत्रदर्शपौर्णमासचातुर्मास्ययागपशुयागवैश्वदेवबलिहरणा-न्युच्यन्ते। पूर्त्तशब्देन सुरालयारामकूपवापीतड़ागप्रपानसत्राण्युच्यन्ते। अत्र तु इष्टं हविषाग्नौ यजेत मामित्यादौ अग्निहोत्राद्युपलक्षितं पूर्त्तमुद्यानोपवनाक्रीड़ेत्याद्युपक्षितं ज्ञेयम्। एवं पूर्वोक्तप्रकारेणेष्टा-पूर्त्तेन यो मां यजेत स मत्स्मृतिस्तत्र साधुसेवया सतां प्रसङ्गेन सद्भक्तिम् अन्तरङ्गभक्तिनिष्ठां प्राप्नोतीत्यर्थः। तत्राग्निहोत्रादीनां भक्तौ प्रवेशोऽग्न्यन्तर्यामिरूपभगवदधिष्ठानत्वेनाग्न्यादिसन्तर्पणात्। कूपारामादीनाञ्च तत्परिचर्य्यार्थं क्रियमाणत्वात् तत्र प्रवेशः। तदेवं सत्सङ्गस्य सर्वापेक्षत्वमुक्तम्। पुनश्च तत्रैव तस्य स्वातन्त्र्येण यथेष्टफल-दातृत्वं सर्वापेक्षया परमसामर्थ्यञ्च वक्तुं परमगुह्यमुपदिष्टम्—अथै-तत् परमं गुह्यं शृण्वतो यदुनन्दन। सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत् सखेति। एतादृशमहिमत्वेनानुक्तत्वात्। तदेतत् परम-गुह्यत्वमाह, न रोधयतीति। त्यागः सन्न्यासः। दक्षिणा दानमात्रम्। यज्ञो देवपूजा। छन्दांसि रहस्यमन्त्राः। यथा सत्सङ्गो मामवरुन्धे वशीकरोति तथा योगो न वशीकरोति न च सांख्यमित्यादिकोऽन्वयः। ततस्तेऽपि किञ्चिद्वशीकुर्वन्तीत्यर्थलब्धेर्भगवत्परा एव ज्ञेयाः न च

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

साधारणा:। अतएव च व्रताभ्येकादश्यादीनीति टीकाकारा:। चैतावतैषां नित्यानां वैष्णवव्रतानामकर्त्तव्यत्वं प्राप्तमेकस्य फलाश्रयसामर्थ्यप्रशंसयेतरस्य नित्यत्वनिराकरणायोगात्। यथा कर्मकारिण:, न ह्यग्निमुखतोऽयं वै भगवान् सर्वयज्ञभुक्। इज्येत हविषा राजन् यथा विप्रमुखे हुतैरिति श्रुत्वापि पूर्वोक्ताम् अग्निहोत्रादि यजेत् इति विधिं न परित्यक्तुं शक्नुवन्ति, तद्वत्। भक्ताधिकारि यथा मद्भक्तपूजाभ्यधिका इति श्रुत्वापि दीक्षानन्तरं नित्यतया भगवत्पूजां त्यक्तुं न शक्नुवन्ति तद्वदिति। अतएव, षड्भिर्मासैरुपवासैस्तु यत् फलं परिकीर्त्तितम्। विष्णो. नैवेद्यसिक्थेन तत् भुञ्जतां कलावित्यपि न बाधकम्। एकादश्यादौ हि नित्यत्वेऽप्यानुषङ्गिकमेव सद्गफलदत्वं तत्र तत्र मतम्। अतएव नित्यलक्षणमपि तादृशं वैष्णवं व्रतमवश्यमेव कर्त्तव्यमित्यागतम्। नित्यैर्व्रतत्वादिकश्चैकादश्यादेरर्चनप्रसङ्गे किञ्चित् दर्शयिष्याम:। पूर्वाध्याये टीकाकारैरपि आज्ञायैवं गुणान् दोषानित्यत्र विद्वैकादश्यैकादश्युपवासानुपवासानिवेद्य श्राद्धादयो ये भक्तिविरुद्धा धर्मास्तान् संत्यज्य इत्यर्थं इत्युक्तम्। प्रथमे च श्रीभीष्मयुधिष्ठिरसंवादे भगवद्धर्मानित्यत्र हरितोषणात् द्वादश्यादिनियमरूपानिति व्याख्यातम्। व्रतानि चेरे हरितोषणानीत्यत्र तृतीये एकादश्यादीनि। अतएव भगवन्महाप्रसादैकव्रतस्य श्रीमदम्बरीषस्य सच्छिरोमणेर्दर्शनाय तदेव निश्चीयते इति। अथ प्रस्तुतमनुसराम:। वशीकार मत्र द्विविधं मुख्यं गौणञ्च। तत्र मुख्येन प्रेम लभ्यते। भजतां भगवान् मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तिमिति न्यायेन। अतएव गौणेनान्यत् फलम्। अत्र मुख्यं श्रीगोपीगौणं बाणादौ। उत्तरत्र वशीकरणत्वं फलदानोन्मुखीकरणं चर्च्यते। तदेतद् वशीकरणे दृष्टान्तमाह—सत्सङ्गेन हि दैतेया यातुधाना मृगा: खगा:। गन्धर्वाप्सरसो नागा: सिद्धाश्चारणगुह्यका:

विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः । रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन् युगे युगे ॥ बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः । वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ॥ सुग्रीवो हनूमानृच्छो गजो गृध्रो वणिक्पथः । व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथापरे ॥ २३९ ॥

दैतेयास्तदुपलक्षितासुरदानवाश्च । यातुधानाः राक्षसाः । तज्जातिषु दिग्दर्शनं त्वाष्ट्रेत्यादि । त्वाष्ट्रो वृत्रासुरः । वृत्रासुरस्य सत्सङ्गः प्राग्जन्मनि श्रीनारदाङ्गिरसोः सङ्गः श्रीसङ्कर्षणसङ्गश्च प्रसिद्धः । कायाधवः कयाधुपुत्रः प्रह्लादः । अस्य गर्भे श्रीनारदसङ्गः । आदिशब्दगृहीतान् पूर्वोक्तजातिक्रमेण कतिचिद् गणयति वृषेति । वृषपर्वा दानवः । अयं हि जातमात्रमातृपरित्यक्तो मुनिपालितो विष्णुभक्तो बभूवेति पुराणान्तरप्रसिद्धिः । बलेः श्रीप्रह्लादसङ्गः श्रीवामनसङ्गश्च । तदनन्तरमेव भक्त्युद्बोधदर्शनात् । बाणस्य बलिमहेशभगवत्सङ्गः । अस्य भुजकर्त्तनानन्तरं ज्ञातविष्णुमहिम्नो महाभागवतमहेशप्राप्तिरिव सत्प्राप्तिरित्युच्यते । मयो दानवः । अस्य सभानिर्माणादौ पाण्डवसङ्गो भगवत्सङ्गश्च । अन्ते तत्प्राप्तिस्तु ज्ञेया । विभीषणो यातुधानः । अस्य हनूमत्सङ्गो भगवत्सङ्गश्च । सुग्रीवाद्या गजान्ता मृगाः । तत्र ऋच्छो जाम्बवान् । अस्य भगवत्सङ्गः । गजो गजेन्द्रः । अस्य पूर्वजन्मनि सत्सङ्गः उन्नेयः । उत्तरजन्मान्ते भगवत्सङ्गश्च । गृध्रो जटायुनामा खगः । अस्य श्रीगरुड़दशरथादिसङ्गः श्रीसीतादर्शनं श्रीभगवद्दर्शनञ्च । गन्धर्वादींस्त्वनतिप्रसिद्धत्वेनानुदाहृत्य मनुष्येषु वैश्यादीनुदाहरति । वणिक्पथस्तुलाधारः । अस्य भारते जाजलिमुनिगन्धर्वप्रसङ्गे प्रोक्तमहिम्नः सत्सङ्गोऽन्वेषणीयः । व्याधो धर्म्मव्याधः । शूद्रोऽन्त्यजोऽपि । अत्रादिवाराहे कथेयम्—क्वचित् प्राचीनकलियुगे वसुनाम्ना वैष्णवेन राज्ञा प्राग्जन्मनि मृगभ्रान्त्या निहतो ब्राह्मणो ब्रह्मराक्षसतां प्राप्तस्तस्य राज्ञः प्रायश्चित्त-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विष्णुलोकगमनसमये तच्छरीरं प्रविष्टः पुनश्च तस्य तन्नोगान्ते रा
प्राप्तस्य देहात् तत्कर्त्तृकब्रह्मपाराख्यस्तवपाठतेजसा निर्गतस्तत्पु
धर्म्मव्याधसंज्ञः हिंसातिशयविमुखः पर्य्यवसाने दृष्टनीलाद्रिनाथः
स्तुतवान् प्राप्ततदालिङ्गनस्तत्सायुज्यमवापेति। कुब्जाया भगवत्
पूर्वजन्मनि च नारदसङ्ग इति माथुरहरिवंशप्रसिद्धम्। गोपी
साधारण्यः। श्रीकृष्णव्रजे तदानीं विवाहादिना समागताः।
तन्नित्यप्रेयसीवृन्दसङ्गः श्रीकृष्णदर्शनादिरूपो भगवत्सङ्गश्च।
पत्नीनां श्रीकृष्णगुणकथकलोकसङ्गस्तत्सङ्गश्च। अपरे दैतेयादयः
च। तेषां सत्सङ्गव्यतिरिक्तसाधनाभावमाह—ते नाधीतश्रुति
नोपासितमहत्तमाः। अव्रतातप्ततपसो मत्सङ्गान्मामुपागताः॥

न अधीताः श्रुतिगणा यैः। तदर्थञ्च नोपासिता महत्तमाः
किञ्च अकृतव्रता अकृततपस्काश्च। पूर्ववदध्ययनादिकं भगवत्
मेव ग्राह्यम्। अत्रैकेषां वृत्रादीनां प्राग्जन्मादौ साधनान्त
तदपि सत्सङ्गानुषङ्गसिद्धमित्यभिप्रेत्य सत्सङ्गस्यैव तत्तत् फलमु
धर्म्मव्याधादीनान्तु केवलस्यैव तस्येति ज्ञेयम्। सत्सङ्गशब्दे
सङ्गो मदीयादीनाञ्च सङ्ग इत्यभिधास्यते। उभयत्रापि सत्
त्वादित्यभिप्रायेण। तत्र स्वस्यापि सत्त्वात् सत्सङ्गप्रकरणे स्वस
न्तर्भावितः। यत्तु पुरा भागवतसङ्गेनैव भगवत्कृपा भवतीत्यु
तत्साम्मुख्यजन्मन्येव। अत्र तु स एव भागवतसङ्गः साधना
त्वेनोच्यते इति न दोषः। यदि वाच कुत्रचित् साम्मुख्यजन्मा
मपि भगवत्सङ्गो भवेत् तदाप्येवमाचक्ष्महे। सच्छब्दार्थमुख्य
मङ्गीकृत्य यत् कदाचित् सर्वत्र कृपां वितनोति भगवान् तत्र
सम्बन्धो नैर्वेल्यतो नाभ्युपगमहानिरिति। अथ मुख्यं वशीकार
भावितसाधनान्तरेण सत्सङ्गमात्रेण श्रीगोप्यादीनां दर्शयति
लेन हि भावेन गोप्यो गावो नगा मृगाः। येऽन्ये मूढधियो
सिद्धा मामीयुरञ्जसा॥ २४१॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भावेन प्रकरणप्राप्तमत्सङ्गमात्रजन्मना प्रीत्या । भावोऽत्र वशीकारमुख्यत्वे चिह्नम् । वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथेत्यादेः । भक्त्याहमेकया ग्राह्य इत्यादेश्च । गावोऽपि गोपीवदागन्तुक्य एव ज्ञेयाः । नगा यमलार्जुनादयः । मृगा अपि पूर्ववत् । नागाः कालियादयः । यमलार्जुनकालिययोः प्राप्तिस्तदानीन्तन-तत्क्षणिकभगवत्प्राप्त्यावश्यम्भाविनित्यप्राप्तिमपेक्ष्योक्ता । सिद्धाः पूर्ववत् द्विविधात् सत्सङ्गात् । स तु तेषां भावो योगादिभिरप्राप्य एवेति । यथावरुन्ध इत्यत्र यथाशब्दार्थस्य पराकाष्ठा । तामेव व्यनक्ति—यं न योगेन सांख्येन दानव्रततपोऽध्वरैः । व्याख्यास्वाध्यायसन्न्यासैः प्राप्नुयाद् यत्नवानपि ॥ २४२ ॥

यं भावम् । अत्रापि योगादयो भगवत्परा एव, योगादिभिर्यत्नवानपीत्यनेन तत्प्राप्त्यर्थं प्रयुज्यमानत्वावगमात् । एष्वपि श्रीगोपीनामेव परमकाष्ठाप्राप्तिं दर्शयितुम् अथैतत् परमं गुह्यं शृण्वतो यदुनन्दनेत्येतत्पूर्वोक्तपरमगुह्यत्वस्य परमकाष्ठां दर्शयितुं रामेण सार्द्धमित्यादिप्रकरणमनुसन्धेयम् ॥ ११ ॥ १२ ॥ श्रीभगवान् ॥ २३८—२४२ ॥

एष च सत्सङ्गो ज्ञानं विनापि कृतोऽर्थद एव स्यादित्याह—सङ्गो यः संसृतेर्हेतुरसत्सु विहितोऽधिया । स एव साधुषु कृतो निःसङ्गायव कल्पते ॥ २४३ ॥

अधिया अज्ञानेन । यत्तु पूर्वं श्रीनारदादौ मुन्यन्तरसाधारणदृष्टिर्निन्दिता तदिहास्निग्धे ज्ञानलवदुर्विदग्धे च ज्ञेयम् ॥ ३ ॥ २३ ॥ श्रीदेवहूतिः ॥ २४७ ॥

तदेवं महाभागवतप्रसङ्गफलमुक्तम् । तत्परिचर्य्याफलमाह—यत्सेवया भगवतः कूटस्थस्य मधुद्विषः । रतिरासो भवेत् तीव्रः पादयोर्व्यसनार्दनः ॥ २४४ ॥

येषां युष्माकं महाभागवतानां सेवया परिचर्य्यया कूटस्थस्य नित्यस्य भगवतः [illegible] यः प्रेमोत्सवो भवेत् । तीव्र इति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विशेषणं प्रसङ्गमात्रात् परिचर्य्यायां विशिष्टं फलं द्योतयति। षङ्गिकं फलमाह व्यसनार्दन इति। व्यसनं संसारः। यत मद्भक्तपूजाभ्यधिकेति। मम पूजातोऽप्यभि सर्वतोभावेनाधिका मत्प्रीतिकरीत्यर्थः। एवं पाद्मोत्तरखण्डे—आराधनानां सर्वेषां विष्णोराराधनं परम्। तस्मात् परतरं देवि तदीयानां समर्चनम्॥ विदुरः श्रीमैत्रेयम्॥ २४४॥

व्यतिरेकेणाह—यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः। यत्तीर्थबुद्धिः सलिले न कर्हिचित् जनेष्वभिज्ञेषु स एव गोखरः॥ २४५॥

जड़त्वात् कुणपे स्वयं मृततुल्ये शरीरे। चिद्योगेऽपि त्रिभिर्वातपित्तादिभिर्दूषित इत्यर्थः। भौमे देवताप्रतिमादौ। यत्र यत्र अभिज्ञेषु तत्त्ववित्सु ताः बुद्धयो न सन्ति। तत्रात्मबुद्धिः परमासदत्वम्। स एव गोखरः गोनिकृष्ट उच्यते। यद्वा सिन्धुदेशे प्रसिद्धो वन्यगर्दभजातिविशेषो म्लेच्छजातिविशेषो वा सः न तु प्रसिद्धः। विवेकित्वाभिमानितायां सत्यामप्यविवेकित्वात् तस्य निकृष्टत्वं तस्येति। भौम इज्यधीरिति साधारणदेवताविषयकं पूर्वं तथैवोपक्रान्तत्वात् अर्चायामेव हरये इत्यादिविरोधाच्च। यथा तरोर्मूलनिषेचनेनेत्यादिवाक्यमत्र नावतारयितव्यम्॥ श्रीभगवान् मुनिवृन्दम्॥ २४५॥

अथ महाभागवतसेवासिद्धलक्षणम्—ते न स्मरन्त्यतितरां प्रियमीश मर्त्यं ये चान्वदः सुतसुहृद्गृहवित्तदाराः। ये त्वब्जनाभ भवदीयपदारविन्दसौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गाः॥ २४६॥

परमप्रियमपि मर्त्यं वपुः। ये चादौ वपुरनुलक्ष्योत्पन्ना वर्त्तन्ते तामपि स्मरन्ति। के त इत्यपेक्षायामाह ये त्विति। ध्रुवः श्रीध्रुवप्रियम्॥ २४६॥

वैष्णवमात्राणाञ्च

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तस्माद् विष्णुप्रसादाय वैष्णवान् परितोषयेत् । प्रसादसुमुखो विष्णु-स्तेनैव स्यान्न संशय इति । व्यतिरेकेणापि पाद्मोत्तरखण्डे—अर्चयित्वा तु गोविन्दं तदीयान् नार्चयेत् तु यः । न स भागवतो ज्ञेयः केवलं दाम्भिकः स्मृतः इति । तत्र, सर्वत्रास्खलिताटेशः सप्तद्वीपैकदण्ड-धृक् । अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः ॥ इति श्रीपृथुचरितानु-सारेण यत्किञ्चिज्जातावप्युत्तमत्वमेव मन्तव्यम् । यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णादिव्यञ्जकम् । यदन्यत्रापि दृश्येत तत् तेनैव विनिर्दिशेदिति नारदोक्तिदृष्टान्तेन वा । यथोक्तं पाद्ममाघमाहात्म्ये—श्वपाकमिव नेक्षेत लोके विप्रमवैष्णवम् । वैष्णवो वर्णवाह्योऽपि पुनाति भुवन-त्रयम् । न शूद्रा भगवद्भक्तास्ते तु भागवता नराः । सर्ववर्णेषु ते शूद्रा ये न भक्ता जनार्दने ॥ इतिहाससमुच्चये—स्पृष्टः सम्भाषितो वापि पूजितो वा द्विजोत्तम । पुनाति भगवद्भक्तश्चाण्डालोऽपि यदृ-च्छया ॥ अन्यथा दोषश्रवणञ्च तत्रैव—शूद्रं वा भगवद्भक्तं निषादं श्वपचं तथा । वीक्षते जातिसामान्यात् स याति नरकं ध्रुवम् ॥ इति । भक्तिवैशिष्ट्ये तु वैशिष्ट्यमपि दृश्यते । यथा गारुड़े—मद्भक्तजन-वात्सल्यं पूजायाञ्चानुमोदनम् । मत्कथाश्रवणे प्रीतिः स्वरनेत्रादि-विक्रिया ॥ विष्णोश्च कारणं नृत्यं तदर्थे दम्भवर्जनम् । स्वयमभ्यर्चनं चैव यो विष्णुं नोपजीवति ॥ भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्त्तते । स विप्रेन्द्रो मुनिश्रेष्ठः स ज्ञानी स च पण्डितः ॥ तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा हरिः ॥ इति । अतएवाह भग-वान्—न मे भक्तश्चतुर्वेदी मद्भक्तः श्वपचः प्रियः । तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम् ॥ इति । अतएव ज्ञानभक्तिमहिम्ना सता दुर्वाससापि श्रीमदम्बरीषस्य पादग्रहणमप्याचरितम् । किन्तु अम्बरीषस्यानभीष्टमेव तदिति तत्रैव व्यक्तत्वात्, श्रीभगवता श्रीम-दुद्धवादिभिश्च ब्राह्मणमात्रस्य वन्दनाच्च, इतरवैष्णवैस्तु तत् सर्वथा न [illegible]व्यम् । विप्रं कृ[illegible] [illegible]व द्रुह्यत मामकाः । घ्नन्तं बहुशपन्तं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वा नमस्कुरुत नित्यशः ॥ इति भगवदादेशभङ्गप्रसङ्गाच्च। मा
मिव नेच्छेत इत्यादिकन्तु तद्दर्शनासक्तिनिषेधपरत्वेन समा
दृश्यते युधिष्ठिरद्रौपद्यादीनामश्वत्थाम्नि तथा व्यवहारः। वै
पूजकैस्तु वैष्णवानामाचारोऽपि न विचारणीयः, अपि चेत् सु
चार इत्यादेः। यथोक्तं गारुड़े—विष्णुभक्तिसमायुक्तो मिथ्या
ऽप्यनाश्रमी। पुनाति सकलान् लोकान् सहस्रांशुरिवोदितः॥
तदेतदुदाहृतमेव, अहो वत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे
नाम तुभ्यमित्यादौ। अत्र श्वपचशब्दो यौगिकार्थपुरस्कारेणैव
ततो दुर्जातित्वेन दुराचारत्वेनापि नावमन्तव्यस्तद्भक्तजनः।
मन्तृत्वे तु सुतराम्। अतएवोक्तं गारुड़े—रूच्चाचरन्तु शूद्र
तथा भागवतैरितम्। प्रणामपूर्वं तं च्चान्त्या यो वदेद् वैष्णवो
सः॥ इति। तदेवं महदादिसेवा दर्शिता। अस्याश्च अपवर्ग
पूर्वत्वं, महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गि
मित्युक्तेः। तेभ्यो महद्भ्यस्त्वन्यदपि किमपि परममङ्गलायनं ज
यथा—तेषु नित्यं महाभाग महाभागेषु मत्कथाः। सम्भवन्ति
ता नृणां जुषतां प्रपुनन्त्यघम्। ता ये शृखन्ति गायन्ति ह्यनुमो
चादृताः। मत्पराः श्रद्दधानश्च भक्तिं विन्दन्ति ते मयि। भक्तिं
वतः साधोः किमन्यदवशिष्यते। मय्यनन्तगुणे ब्रह्मण्यानन्द
भवात्मनि॥ यथोपश्रयमाणस्य भगवन्तं विभावसुम्। शीतं
तमोऽप्येति साधून् संसेवतस्तथा॥ २४७॥

तेषु सन्तोऽनपेक्षा मच्चित्ता इत्याद्युक्तलक्षणेषु। भक्तिं प्रेम।
एवोक्तं श्रीरुद्रेण—क्षणार्द्धेनापि तुलये न स्वर्गं नापुनर्भवम्।
सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः॥ इति। श्रीशौनकेनापि
याम लवेनापि न स्वर्गमित्यादि पूर्ववत्। तत्रानुषङ्गिकं फलं
माह, यथेति। विभावसुमग्निम्। उपास्यबुद्ध्या श्रयमाणस्य
यथं ज्वालयत इत्यर्थः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

जीवादिक्षतम् । तथा साधून् सेवमानस्य कर्मादिजाड्यम् । आगामि संसारभयं तन्मूलमज्ञानञ्च नश्यतीत्यर्थः ॥११॥२६॥ श्रीभगवान् ॥२४७॥

अथ क्रमप्राप्तं श्रवणम् । तच्च नामरूपगुणलीलामयशब्दानां श्रोत्रस्पर्शः । तत्र नामश्रवणं यथा—नहि भगवन्नघटितमिदं त्वद्दर्शनान्नृणामखिलपापक्षयः । यन्नामसकृच्छ्रवणात् पुक्कशोऽपि विमुच्यते संसारात् ॥ २४८ ॥

तादृशस्यापि सकृच्छ्रवणेऽपि मुक्तिफलप्राप्तेरुत्तमस्य तच्छ्रवणे तु परमभक्तिरेव फलमित्यभिप्रेतम् ॥ ६ ॥ १२ ॥ चित्रकेतुः श्रीसङ्कर्षणम् ॥ २४८ ॥

अथ रूपश्रवणम्—ये तु त्वदीयचरणाम्बुजकोषगन्धं जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् । भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ हृदयाम्बुरुहात् स्वपुंसाम् ॥ २४९ ॥

तुशब्दो यो नादृतो नरकभाग्भिरसत्प्रसङ्गैरिति पूर्वोक्तनिन्दितानां भगवद्रूपानादरवतां प्रतियोग्यर्थनिर्देशे निर्दिष्टः । अनेन येऽत्र एतद्विरोधिनो भवन्ति त एव पूर्वोक्ता असत्प्रसङ्गा इति गम्यते । चरणमात्रनिर्देशो भक्त्यतिशयेन । गन्धं वर्णाकारादिमाधुर्यं कर्णविवरैर्जिघ्रन्ति नासाविवरैः परमामोदमिव तैरास्वादयन्तीत्यर्थः । श्रुतिर्वेदस्तदनुगामि शब्दान्तरञ्च सैव वातस्तेन प्रापितम् । ततः परया च भक्त्या प्रेमलक्षणया गृहीतचरणस्त्वं नापयातुं शक्नोषि ॥ ३॥९॥ ब्रह्मा श्रीगर्भोदशायिनम् ॥ २४९ ॥

अथ गुणश्रवणम्—कथा इमास्ते कथिता महात्मनाम् विताय लोकेषु यशः परेयुषाम् । विज्ञानवैराग्यविवक्षया विभो वचोविभूती न तु पारमार्थ्यम् । यदुत्तमःश्लोकगुणानुवादः संगीयतेऽभीक्ष्णममङ्गलघ्नः । तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः ॥ २५० ॥

टीका च—राजवंशानुकीर्त्तनस्य तात्पर्य्यमाह कथा इमा इति । [illegible] [illegible]म् । तयोर्विवक्षया । परेयुषां

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मृतानां वचोविभूतीर्वाग्विलासमात्ररूपाः। पारमार्थ्यं परमार्थ कथनं न भवतीत्यर्थः। कस्तर्हि पुरुषाणामुपादेयः परमार्थ यस्त्विति। नित्यं प्रत्यहम्। तत्राप्यभीक्ष्णमित्येषा। अत्र यत् श्रीरामलक्ष्मणादयोऽपि तेषां राज्ञां मध्ये वैराग्यार्थं कीर्तित पठ्यन्ते तन्निरस्यति। अतो यद्यपि निगमकल्पतरोरित्याद्यनु सर्वस्यैव प्रसङ्गस्य रसरूपत्वं तथापि क्वचित् साक्षाद्भक्तिमयशान्ता रसरूपत्वं क्वचित्तदुपकरणशान्तादिरसरूपत्वञ्च समर्थनीयम्। हि तत्र तत्र भक्तिरसेष्वपि तारतम्यमिति। गुणाः कारुण्याद तद्गुणकीर्त्तिः स्वभाव एवासाविति श्रीगीतास्वपि दृष्टम्, स्थाने केश तव प्रकीर्त्त्या जगत् प्रहृष्यत्यनुरज्यते चेत्यादौ। अत्र महाभा वतानामपि भगवत इव गुणश्रवणं मतम्, तत् कथ्यतां महाभाग कृष्णकथाश्रयम्। अथवास्य पदाम्भोजमकरन्दलिहां सतामिति कीर्त्तेः। यद्यप्यत्र गुणशब्देन रूपलीलयोरपि सौष्ठवं गृह्यते तत्प्राधान्यनिर्देशात् पृथक् ग्रहणम्। एवमुत्तरत्रापि। भक्तिं प्रेमा अमलां कैवल्यादीच्छारहिताम् ॥ १२ ॥ ३ ॥ श्रीशुकः ॥ २५० ॥

किञ्च—यत्रोत्तमःश्लोकगुणानुवादः प्रस्तूयते ग्राम्यकथाविघात निषेव्यमाणोऽनुदिनं मुमुक्षोर्मतीं सतीं यच्छति वासुदेवे ॥ २५१ ॥

मुमुक्षोरपि किं पुनर्भक्तिमात्रेच्छोः। सतीं मुमुक्षादन्यका रहिताम्। तदन्या तु व्यभिचारिणीतिभावः ॥ ८ ॥ १२ ॥ श्रीब्राह्म रहूगणम् ॥ २५१ ॥

व्यतिरेकेण च—निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनो भिरामात्। क उत्तमःश्लोकगुणानुवादात् पुमान् विरज्येत वि पशुघ्नात् ॥२५२॥

निवृत्तेत्यादिविशेषणत्रयेण मुक्तमुमुक्षुविषयिजनानां पशुघ्नो व्याधः। तस्य हि, राजपुत्र चिरं जीव मा जीव मुनिपुत्र जीव वा मर वा साधो व्याध मा जीव मा मर — इति न्यायेन वि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सुखेऽपि तात्पर्य्यं नास्ति। न च तदभिज्ञत्वमस्ति विशेषतस्तु कथा-रसज्ञाने। परमगूढ़त्वात् सामर्थ्यं नास्त्येव। यद्वा दैत्यस्वभावस्य यस्य निन्दामात्रतात्पर्य्यं स एव हिंसकत्वेन पशुघ्नशब्देनोच्यते। पशुघ्नो व्याधः। सोऽपि मृगादीनां सौन्दर्य्यादिकं गुणमगणयन्नेव हिंसामात्र-तत्पर इति। ततो रसग्रहणाभावात् युक्तमुक्तं विना पशुघ्नादिति। उभयथापि तद्वहिर्मुखेभ्यो गालिप्रदान एव तात्पर्य्यम्। यथा तृतीये श्रीमैत्रेयस्य—को नाम लोके पुरुषार्थसारवित् पुराकथानां भगव-त्कथासुधाम्। आपीय कर्णाञ्जलिभिर्भवापहामहो विरज्येत विना नरेतरमिति ॥१०॥१॥ श्रीराजानं श्रीशुकः ॥२५२॥

अथ लीलाश्रवणम्—ज्ञानं यदा प्रतिनिवृत्तगुणोर्म्मिचक्रमात्मप्रसाद उभयत्र गुणेष्वसङ्गः। कैवल्यसम्मतपथस्त्वथ भक्तियोगः को निर्वृतो हरिकथासु रतिं न कुर्य्यात् ॥२५३॥

यत् यासु कथासु ज्ञानं भवति। कीदृशम्, आ सर्वतः प्रतिनि-वृत्तम् उपरतं गुणोर्म्मीणां रागादीनां चक्रं समूहो यस्मात्। यतो यत्र यासु कथासु तद्धेतुरात्मप्रसादश्च तत्प्रसादहेतुर्विषयानासक्तिश्च, किं बहुना, तत्फलं यत् कैवल्यं तदपि, ब्रह्मभूतः प्रसन्नात्मा इत्याद्यु-क्तानुसारेण, सम्मतः पन्थाः प्राप्तिद्वारं यत्र सः प्रेमाख्यो भक्तियोगोऽपि, यासु श्रुतमात्रासु तत्तदनपेक्ष्यैव भवति, तासु हरिकथासु तच्चरितेषु कः श्रवणसुखेन निर्वृतः सन् अन्यत्रानिर्वृतो वा रतिं रागं न कुर्य्यात् ॥२॥३॥ श्रीशुकः ॥२५३॥

किं बहुना, एतदर्थमेवास्य महापुराणाविर्भाव इति, भवतानुदित-प्रायं यशो भगवतोऽमलमित्यादौ, समाधिनानुस्मर तद्विचेष्टितमित्यादौ च वर्णितम्। सा च लीला द्विविधा; सृष्ट्यादिरूपा लीलावतार-विनोदरूपा च। तयोरुत्तरा तु प्रशस्ततरेत्याशयेनाह—प्राधान्यतो यानृष आमनन्ति लीलावतारान् पुरुषस्य भूम्नः। आपीयतां कर्ण-

॥२५४॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यद्यपि पूर्वम्, आद्योऽवतारः पुरुषः परस्येत्यादिग्रन्थेन पु
कालादितच्छक्तिं मनआदितत्कार्य्यं ब्रह्मादितद्गुणावतारान् द
तत्तद्विभूतीश्चोक्तवानस्मि, तेन च सृष्ट्यादिलीलाः, तथापि यान्
ऋषे पुरुषस्य भूम्नो लीलावतारान् प्राधान्येन आमनन्ति तानेव
मम हृदयाधिरूढ़ान् कर्णकषायशोषान् तदितरश्रवणरागहन्तॄन् ि
सुपेशान् परममनोहरान् अनुक्रमिष्ये। तदनुक्रमेण आ
पीयताम् ॥२॥६॥ श्रीब्रह्मा नारदम् ॥२५४॥

एवं दुरवगमात्मतत्त्वनिगमायेत्यादौ वेदस्तुतावपि त
द्रष्टव्या। अतएव प्रथमे भावयत्येष इत्यादौ लीलावतारानुरत
तद्विशेषणं दत्तम्। तथाच श्रीभगवद्गीतासु—जन्म कर्म
दिव्यमेवं यो वेत्ति तत्त्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सो
नेति। एषा खलु मर्त्त्यशरीरमपि पार्षदभावेन जितमृत्युकं
धाति। यथाह—साधु वीर त्वया पृष्टमवतारकथां हरेः। य
पृच्छसि मर्त्त्यानां मृत्युपाशविशातनीम्। ययोत्तानपदः पुत्रो मु
गीतयार्भकः। मृत्योः कृत्वैव मूर्द्ध्यङ्घ्रिमारुरोह हरेः पदम् ॥
मुनिना श्रीनारदेन। अतस्तेन भगवदवतारकथापि तं
श्राविताऽस्तीति गम्यते। तेन शरीरेणैव मृत्युजयः पार्षदत्वञ्चो
परीत्याभ्यर्च्य धिष्ण्याग्र्यं कृतस्वस्त्ययनो द्विजैः। इत्येव तदधि
बिभ्रद्रूपं हिरण्मयमिति ॥३॥१४॥ श्रीमैत्रेयः ॥२५५॥

तदेवं नामादिश्रवणमुक्तम्। अत्र तत्परिकरश्रवणमपि
श्रुतस्य पुंसां सुचिरश्रमस्य नन्वञ्जसा सूरिभिरीड़ितोऽर्थः। त
गुणानुश्रवणं मुकुन्दपादारविन्दं हृदयेषु येषामित्यादौ। तत्र
प्येकतरेणापि व्युत्क्रमेणापि सिद्धिर्भवत्येव, तथापि प्रथमं नाम
णम् अन्तःकरणशुद्ध्यर्थमपेक्ष्यम्। शुद्धे चान्तःकरणे रूप
तदुदययोग्यता भवति। सम्यगुदिते च रूपे गुणानां स्फुरणं
द्यते। ततस्तेषु नामरूपगुणेषु तत् ... सम्यक् स्फुर

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भावेन प्रकरणप्राप्तमत्सङ्गमात्रजन्मना प्रीत्या । भावोऽत्र वशी-कारमुख्यत्वे चिह्नम् । वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्-पतिं यथेत्यादेः । भक्त्याहमेकया ग्राह्य इत्यादेश्च । गावोऽपि गोपीवदागन्तुक्य एव ज्ञेयाः । नगा यमलार्जुनादयः । मृगा अपि पूर्ववत् । नागाः कालियादयः । यमलार्जुनकालिययोः प्राप्ति-स्तदानीन्तन-तत्क्षणिकभगवत्प्राप्त्यावश्यम्भाविनित्यप्राप्तिमपेक्ष्योक्ता । सिद्धाः पूर्ववत् द्विविधात् सत्सङ्गात् । स तु तेषां भावो योगादिभि-रप्राप्य एवेति । यथावरुन्ध इत्यत्र यथाशब्दार्थस्य पराकाष्ठा । तामेव व्यनक्ति—यं न योगेन सांख्येन दानव्रततपोऽध्वरैः । व्याख्यास्वाध्याय-सन्न्यासैः प्राप्नुयाद् यत्नवानपि ॥ २४२ ॥

यं भावम् । अत्रापि योगादयो भगवत्परा एव, योगादिभिर्यत्न-वानपीत्यनेन तत्प्राप्त्यर्थं प्रयुज्यमानत्वावगमात् । एष्वपि श्रीगोपीनामेव परमकाष्ठाप्राप्तिं दर्शयितुम् अथैतत् परमं गुह्यं शृण्वतो यदुनन्दने-त्येतत्पूर्वोक्तपरमगुह्यत्वस्य परमकाष्ठां दर्शयितुं रामेण सार्द्धमित्यादि-प्रकरणमनुसन्धेयम् ॥ ११ ॥ १२ ॥ श्रीभगवान् ॥ २३८—२४२ ॥

एष च सत्सङ्गो ज्ञानं विनापि कृतोऽर्थद एव स्यादित्याह—सङ्गो यः संसृतेर्हेतुरसत्सु विहितोऽधिया । स एव साधुषु कृतो निःसङ्ग-त्वाय कल्पते ॥ २४३ ॥

अधिया अज्ञानेन । यत्तु पूर्वं श्रीनारदादौ मुन्यन्तरसाधारण-दृष्टिर्निन्दिता तदिहाविग्धे ज्ञानलवदुर्विदग्धे च ज्ञेयम् ॥ ३ ॥ २३ ॥ श्रीदेवहूतिः ॥ २४७ ॥

तदेवं महाभागवतप्रसङ्गफलमुक्तम् । तत्परिचर्य्याफलमाह—यत्सेवया भगवतः कूटस्थस्य मधुद्विषः । रतिरासो भवेत् तीव्रः पादयोर्व्यसनार्दनः ॥ २४४ ॥

येषां युष्माकं महाभागवतानां सेवया परिचर्य्यया कूटस्थस्य नित्यस्य भगवतः पादयोः रतिरासः प्रेमोत्सवो भवेत् । तीव्र इति



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विशेषणं प्रसङ्गमात्रात् परिचर्य्यायां विशिष्टं फलं द्योतयति। पा
षङ्गिकं फलमाह व्यसनार्दन इति। व्यसनं संसारः। यत एवं
मद्भक्तपूजाभ्यधिकेति। मम पूजातोऽप्यभि सर्वतोभावेनाधिका
मत्प्रीतिकरीत्यर्थः। एवं पाद्मोत्तरखण्डे—आराधनानां सर्वेषां विष्णो
राराधनं परम्। तस्मात् परतरं देवि तदीयानां समर्चनम् ॥ २।
विदुरः श्रीमैत्रेयम् ॥ २४४ ॥

व्यतिरेकेणाह—यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादि
भौम इज्यधीः। यत्तीर्थबुद्धिः सलिले न कर्हिचित् जनेष्वभिज्ञे
एव गोखरः ॥ २४५ ॥

जड़त्वात् कुणपे स्वयं मृततुल्ये शरीरे। चिद्योगेऽपि नि
र्वातपित्तादिभिर्दूषित इत्यर्थः। भौमे देवताप्रतिमादौ। यत् त
अभिज्ञेषु तत्त्ववित्सु ताः बुद्धयो न सन्ति। तस्मात्मबुद्धिः परमा
स्पदत्वम्। स एव गोखरः गोनिकृष्ट उच्यते। यद्वा सिन्धुतीरे
प्रसिद्धो वन्यगर्दभजातिविशेषो म्लेच्छजातिविशेषो वा सः न त
प्रसिद्धः। विवेकित्वाभिमानितायां सत्यामप्यविवेकित्वात् ततो
निकृष्टत्वं तस्येति। भौम इज्यधीरिति साधारणदेवताविषयकं
पूर्वं तथैवापक्रान्तत्वात् अर्च्चायामेव हरये इत्यादिविरोधाच्च।
यथा तरोर्मूलनिषेचनेनेत्यादिवाक्यमत्र नावतारयितव्यम् ॥१०
श्रीभगवान् मुनिवृन्दम् ॥ २४५ ॥

अथ महाभागवतसेवासिद्धलक्षणम्—ते न स्मरन्त्यतितरां प्रि
मौश मर्त्त्यं ये चान्वदः सुतसुहृद्गृहवित्तदाराः। ये त्वब्जनाभ
दीयपदारविन्दसौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गाः ॥ २४६ ॥

परमप्रियमपि मर्त्त्यं वपुः। ये चादौ वपुरनुलक्ष्योक्त्य सुतादि
वर्त्तन्ते तामपि स्मरन्ति। के त इत्यपेक्षायामाह ये त्विति ॥
ध्रुवः श्रीध्रुवप्रियम् ॥ २४६ ॥

वैष्णवमात्राणाञ्च यथायोग्यमाराधनं यथा इतिहाससमुच्चये

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तस्माद् विष्णुप्रसादाय वैष्णवान् परितोषयेत् । प्रसादसुमुखो विष्णु-स्तेनैव स्यान्न संशय इति । व्यतिरेकेणापि पाद्मोत्तरखण्डे—अर्चयित्वा तु गोविन्दं तदीयान् नार्चयेत् तु यः । न स भागवतो ज्ञेयः केवलं दाम्भिकः स्मृतः इति । तत्र, सर्वत्राखलितादेशः सप्तद्वीपैकदण्ड-धृक् । अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः ॥ इति श्रीपृथुचरितानु-सारेण यत्किञ्चिज्जातावप्युत्तमत्वमेव मन्तव्यम् । यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णादिव्यञ्जकम् । यदन्यत्रापि दृश्येत तत् तेनैव विनिर्दिशेदिति नारदोक्तिदृष्टान्तेन वा । यथोक्तं पाद्ममाघमाहात्म्ये—श्वपाकमिव नेक्षेत लोके विप्रमवैष्णवम् । वैष्णवो वर्णवाह्योऽपि पुनाति भुवन-त्रयम् । न शूद्रा भगवद्भक्तास्ते तु भागवता नराः । सर्ववर्णेषु ते शूद्रा ये न भक्ता जनार्दने ॥ इतिहाससमुच्चये—स्मृतः सम्भाषितो वापि पूजितो वा द्विजोत्तम । पुनाति भगवद्भक्तश्चाण्डालोऽपि यदृ-च्छया ॥ अन्यथा दोषश्रवणञ्च तत्रैव—शूद्रं वा भगवद्भक्तं निषादं श्वपचं तथा । वीक्षते जातिसामान्यात् स याति नरकं ध्रुवम् ॥ इति । भक्तिवैशिष्ट्ये तु वैशिष्ट्यमपि दृश्यते । यथा गारुडे—मद्भक्तजन-वात्सल्यं पूजायाञ्चानुमोदनम् । मत्कथाश्रवणे प्रीतिः स्वरनेत्रादि-विक्रिया ॥ विष्णोश्च कारणं नृत्यं तदर्थे दम्भवर्जनम् । स्वयमभ्यर्चनं चेत्र यो विष्णुं नोपजीवति ॥ भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्त्तते । स विप्रेन्द्रो मुनिश्रेष्ठः स ज्ञानी स च पण्डितः ॥ तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा हरिः ॥ इति । अतएवाह भग-वान्—न मे भक्तश्चतुर्वेदी मद्भक्तः श्वपचः प्रियः । तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम् ॥ इति । अतएव ज्ञानभक्तिमहिम्ना सता दुर्वाससापि श्रीमदम्बरीषस्य पादग्रहणमप्याचरितम् । किन्तु अम्बरीषस्यानभीष्टमेव तदिति तत्रैव व्यक्तत्वात्, श्रीभगवता श्रीम-दुद्धवादिभिश्च ब्राह्मणमात्रस्य वन्दनाच्च, इतरवैष्णवैस्तु तत् सर्वथा न मन्तव्यम् । विप्रं कृतागसमपि नैव द्रुह्यत मामकाः । घ्नन्तं बहुशपन्तं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वा नमस्कुरुत नित्यशः ॥ इति भगवदादेशभङ्गप्रसङ्गाच्च। ...
मिव नेच्छेत इत्यादिकन्तु तद्दर्शनासक्तिनिषेधपरत्वेन समा...
द्रक्ष्यति युधिष्ठिरद्रौपद्यादीनामश्वत्थाम्नि तथा व्यवहारः। ...
पूजकैस्तु वैष्णवानामाचारोऽपि न विचारणीयः, अपि चेत् सु...
चार इत्यादेः। यथोक्तं गारुड़े—विष्णुभक्तिसमायुक्तो मिथ्या...
ऽप्यनाश्रमी। पुनाति सकलान् लोकान् सहस्रांशुरिवोदितः॥ ...
तदेतदुदाहृतमेव, अहो बत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे ...
नाम तुभ्यमित्यादौ। अत्र श्वपचशब्दो यौगिकार्थपुरस्कारेणैव ...
ततो दुर्जातित्वेन दुराचारत्वेनापि नावमन्तव्यस्तद्भक्तजनः। ...
मन्तृत्वे तु सुतराम्। अतएवोक्तं गारुड़े—रूक्षाक्षरन्तु शृण्व...
तथा भागवतेरितम्। प्रणामपूर्वं तं क्षान्त्या यो वदेद् वैष्णवो ...
सः॥ इति। तदेवं महदादिसेवा दर्शिता। अस्याश्च श्रवणादि...
पूर्वत्वं, महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गि...
मित्युक्तेः। तेभ्यो महद्भ्यस्त्वन्यदपि किमपि परममङ्गलायनं ...
यथा—तेषु नित्यं महाभाग महाभागेषु मत्कथाः। सम्भवन्ति ...
ता नृणां जुषतां प्रपुनन्त्यघम्। ता ये शृण्वन्ति गायन्ति ह्यनुमोद...
चादृताः। मत्पराः श्रद्दधानाश्च भक्तिं विन्दन्ति ते मयि। भक्तिं ...
वतः साधोः किमन्यदवशिष्यते। मय्यनन्तगुणे ब्रह्मण्यानन्द...
भवात्मनि॥ यथोपश्रयमाणस्य भगवन्तं विभावसुम्। शीतं ...
तमोऽप्येति साधून् संसेवतस्तथा॥ २४७॥

तेषु सन्तोऽनपेक्षा मच्चित्ता इत्याद्युक्तलक्षणेषु। भक्तिं प्रेम। ...
एवोक्तं श्रीरुद्रेण—क्षणार्द्धेनापि तुलये न स्वर्गं नापुनर्भवम्। भग...
सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः॥ इति। श्रीशौनकेनापि—...
याम लवेनापि न स्वर्गमित्यादि पूर्ववत्। तत्रानुषङ्गिकं फलं सह...
माह, यथेति। विभावसुमग्निम्। उपास्यबुद्ध्या श्रयमाणस्य ...
व्यर्थं ज्वालयत इत्यर्थः। तस्य यथा शीतादिकमप्येति। भयं ...

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

जीवादिकृतम् । तथा साधून् सेवमानस्य कर्मादिजाद्यम् । आगामि संसारभयं तन्मूलमज्ञानञ्च नश्यतीत्यर्थः ॥११॥२६॥ श्रीभगवान् ॥२४७॥

अथ क्रमप्राप्तं श्रवणम् । तच्च नामरूपगुणलीलामयशब्दानां श्रोत्रस्पर्शः । तत्र नामश्रवणं यथा—नहि भगवन्नघटितमिदं त्वद्दर्श-नान्नृणामखिलपापचयः । यन्नामसकृच्छ्रवणात् पुक्कशोऽपि विमुच्यते संसारात् ॥ २४८ ॥

तादृशस्यापि सकृच्छ्रवणेऽपि मुक्तिफलप्राप्तेरुत्तमस्य तच्छ्रवणे तु परमभक्तिरेव फलमित्यभिप्रेतम् ॥ ६ ॥ १२ ॥ चित्रकेतुः श्रीसङ्क-र्षणम् ॥ २४८ ॥

अथ रूपश्रवणम्—ये तु त्वदीयचरणाम्बुजकोषगन्धं जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् । भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ हृदयाम्बुरुहात् स्वपुंसाम् ॥ २४९ ॥

तुशब्दो यो नादृतो नरकभाग्भिरसत्प्रसङ्गैरिति पूर्वोक्तनिन्दितानां भगवद्रूपानादरवतां प्रतियोग्यर्थनिर्देशे निर्दिष्टः । अनेन येऽत्र एतद्विरोधिनो भवन्ति त एव पूर्वोक्ता असत्प्रसङ्गा इति गम्यते । चरणमात्रनिर्देशो भक्त्यतिशयेन । गन्धं वर्णाकारादिमाधुर्य्यं कर्ण-विवरैर्जिघ्रन्ति नासाविवरैः परमामोदमिव तैरास्वादयन्तीत्यर्थः । श्रुतिर्वेदस्तदनुगामि शब्दान्तरञ्च सैव वातस्तेन प्रापितम् । ततः परया च भक्त्या प्रेमलक्षणया गृहीतचरणस्त्वं नापयातुं शक्नोषि ॥ ३॥९॥ ब्रह्मा श्रीगर्भोदशायिनम् ॥ २४९ ॥

अथ गुणश्रवणम्—कथा इमास्ते कथिता महात्मनाम् विताय लोकेषु यशः परेयुषाम् । विज्ञानवैराग्यविवक्षया विभो वचोविभूती र्न तु पारमार्थ्यम् । यदुत्तमःश्लोकगुणानुवादः संगीयतेऽभीक्ष्णममङ्गलघ्नः । तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः ॥ २५० ॥

टीका च—राजवंशानुकीर्त्तनस्य तात्पर्य्यमाह कथा इमा इति । विज्ञानं विषयासारताज्ञानम् । ततो वैराग्यम् । तयोर्विवक्षया । परेयुषां

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मृतानां वचोविभूतीर्वाग्विलासमात्ररूपाः। पारमार्थ्यं परमार्थ-
कथनं न भवतीत्यर्थः। कस्तर्हि पुरुषाणामुपादेयः परमार्थस्त-
दस्त्विति। नित्यं प्रत्यहम्। तत्राप्यभीक्ष्णमित्येषा। अत्र यत्तु
श्रीरामलक्ष्मणादयोऽपि तेषां राज्ञां मध्ये वैराग्यार्थं कीर्त्य-
पठ्यन्ते तन्निरस्यते। अतो यद्यपि निगमकल्पतरोरित्याद्युक्त्या
सर्वस्यैव प्रसङ्गस्य रसरूपत्वं तथापि क्वचित् साक्षाद्भक्तिमयत्वेन
रसरूपत्वं क्वचित्तदुपकरणशान्तादिरसरूपत्वञ्च समर्थनीयम्। त-
र्हि तत्र तत्र भक्तिरसेष्वपि तारतम्यमिति। गुणाः कारुण्या-
दयः तद्गुणकीर्त्तेः स्वभाव एवासाविति श्रीगीतास्वपि दृष्टम्, स्थाने
केश तव प्रकीर्त्त्या जगत् प्रहृष्यत्यनुरज्यते चेत्यादौ। अत्र महा-
वतानामपि भगवत इव गुणश्रवणं मतम्, तत् कथ्यतां महाभाग
कृष्णकथाश्रयम्। अथवास्य पदाम्भोजमकरन्दलिहां सतामिति
कीर्त्तिः। यद्यप्यत्र गुणशब्देन रूपलीलयोरपि सौष्ठवं गृह्यते त-
तत्प्राधान्यनिर्देशात् पृथक् ग्रहणम्। एवमुत्तरत्रापि। भक्तिं प्रेमा-
ममलां कैवल्यादीच्छारहिताम् ॥ १२ ॥ ३ ॥ श्रीशुकः ॥ २५०॥

किञ्च—यत्रोत्तमःश्लोकगुणानुवादः प्रस्तूयते ग्राम्यकथाविघातः।
निषेव्यमाणोऽनुदिनं मुमुक्षोर्मतीं सतीं यच्छति वासुदेवे ॥ २५१॥

मुमुक्षोरपि किं पुनर्भक्तिमात्रेच्छोः। सतीं मुमुक्षादन्यकामना-
रहिताम्। तदन्या तु व्यभिचारिणीतिभावः॥ ५ ॥ १२ ॥ श्रीब्राह्मणो
रहूगणम् ॥ २५१ ॥

व्यतिरेकेण च—निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनो-
भिरामात्। क उत्तमःश्लोकगुणानुवादात् पुमान् विरज्येत विना
पशुघ्नात् ॥२५२॥

निवृत्तेत्यादिविशेषणत्रयेण मुक्तमुमुक्षुविषयिजनानां ग्रहणम्।
पशुघ्नो व्याधः। तस्य हि, राजपुत्र चिरं जीव मा जीव मुनिपुत्र
जीव वा मर वा साधो व्याध मा जीव मा मर॥ इति व्याधेन

सुखेऽपि तात्पर्य्यं नास्ति । न च तदभिन्नत्वमस्ति, विशेषतस्तु कथा-रसज्ञाने । परमगूढ़त्वात् सामर्थ्यं नास्त्येव । यद्वा दैत्यस्वभावस्य यस्य निन्दामात्रतात्पर्य्यं स एव हिंसकत्वेन पशुघ्नशब्देनोच्यते । पशुघ्नो व्याधः । सोऽपि मृगादीनां सौन्दर्य्यादिकं गुणमगणयन्नेव हिंसामात्र-तत्पर इति । ततो रसग्रहणाभावात् युक्तमुक्तं विना पशुघ्नादिति । उभयथापि तद्वहिर्मुखेभ्यो गालिप्रदान एव तात्पर्य्यम् । यथा तृतीये श्रीमैत्रेयस्य—को नाम लोके पुरुषार्थसारवित् पुराकथानां भगवत्कथासुधाम् । आपीय कर्णाञ्जलिभिर्भवापहामहो विरज्येत विना नरेतरमिति ॥१०॥१॥ श्रीराजानं श्रीशुकः ॥२५२॥

अथ लीलाश्रवणम्—ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्रमात्मप्रसाद उभयत्र गुणेष्वसङ्गः । कैवल्यसम्मतपथस्त्वथ भक्तियोगः को निर्वृतो हरिकथासु रतिं न कुर्य्यात् ॥२५३॥

यत् यासु कथासु ज्ञानं भवति । कीदृशम्, आ सर्वतः प्रतिनिवृत्तम् उपरतं गुणोर्मीणां रागादीनां चक्रं समूहो यस्मात् । यतो यत्र यासु कथासु तद्धेतुरात्मप्रसादश्च तत्प्रसादहेतुर्विषयानासक्तिश्च, किं बहुना, तत्फलं यत् कैवल्यं तदपि, ब्रह्मभूतः प्रसन्नात्मा इत्याद्युक्तानुसारेण, सम्मतः पन्थाः प्राप्तिद्वारं यत्र सः प्रेमाख्यो भक्तियोगोऽपि, यासु श्रुतमात्रासु तत्तदनपेक्ष्यैव भवति, तासु हरिकथासु तच्चरितेषु कः श्रवणसुखेन निर्वृतः सन् अन्यत्रानिर्वृतो वा रतिं रागं न कुर्य्यात् ॥२॥३॥ श्रीशुकः ॥२५३॥

किं बहुना, एतदर्थमेवास्य महापुराणाविर्भाव इति, भवतानुदितप्रायं यशो भगवतोऽमलमित्यादौ, समाधिनानुस्मर तद्विचेष्टितमित्यादौ च वर्णितम् । सा च लीला द्विविधा ; सृष्ट्यादिरूपा लीलावतारविनोदरूपा च । तयोरुत्तरा तु प्रशस्ततरेत्याशयेनाह—प्राधान्यतो यानृष आमनन्ति लीलावतारान् पुरुषस्य भूम्नः । आपीयतां कर्णकषायशोषानुक्रमिष्येत इमान् सुपेशान् ॥२५४॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri.

यद्यपि पूर्वम्, आद्योऽवतारः पुरुषः परस्येत्यादिग्रन्थेन
कालादितच्छक्तिं मनआदितत्कार्य्यं ब्रह्मादितद्गुणावतारान्
तत्तद्विभूतीश्चोक्तवानस्मि, तेन च सृष्ट्यादिलीलाः, तथापि
रूपे पुरुषस्य भूम्नो लीलावतारान् प्राधान्येन आमनन्ति तानेव
मम हृदयाधिरूढ़ान् कर्णकषायशोषान् तदितरश्रवणरागहन्तॄन्
सुपेशान् परममनोहरान् अनुक्रमिष्ये। तदनुक्रमेण
पीयताम् ॥२॥६॥ श्रीब्रह्मा नारदम् ॥२५४॥

एवं दुरवगमात्मतत्त्वनिगमायेत्यादौ वेदस्तुतावपि
द्रष्टव्या। अतएव प्रथमे भावयत्येष इत्यादौ लीलावतारानु
तद्विशेषणं दत्तम्। तथाच श्रीभगवद्गीतासु—जन्म कर्म
दिव्यमेवं यो वेत्ति तत्त्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति
नेति। एषा खलु मर्त्त्यशरीरमपि पार्षदभावेन जितमृत्युकं
धाति। यथाह—साधु वीर त्वया पृष्टमवतारकथां हरेः।
पृच्छसि मर्त्यानां मृत्युपाशविशातनीम्। ययोत्तानपदः पुत्रो
गीतयार्भकः। मृत्योः कृत्वैव मूर्द्ध्न्यङ्घ्रिमारुरोह हरेः पदम्।
मुनिना श्रीनारदेन। अतस्तेन भगवदवतारकथापि तं
श्राविताऽस्तीति गम्यते। तेन शरीरेणैव मृत्युजयः पार्षदलक्षो
परीत्याभ्यर्च्य धिष्ण्याग्र्यं कृतस्वस्त्ययनो द्विजैः। इयेष तदधि
विभ्रद्रूपं हिरण्मयमिति ॥३॥१४॥ श्रीमैत्रेयः ॥२५५॥

तदेवं नामादिश्रवणमुक्तम्। अथ तत्परिकरश्रवणमपि
श्रुतस्य पुंसां सुचिरश्रमस्य नन्वञ्जसा सूरिभिरीड़ितोऽर्थः।
गुणानुश्रवणं मुकुन्दपादारविन्दं हृदयेषु येषामित्यादौ।
प्येकतरेणापि व्युत्क्रमेणापि सिद्धिर्भवत्येव, तथापि प्रथमं नाम
णम् अन्तःकरणशुद्ध्यर्थमपेक्ष्यम्। शुद्धे चान्तःकरणे रूप
तदुदययोग्यता भवति। सम्यगुदिते च रूपे गुणानां स्फुरणं
द्यते। ततस्तेषु नामरूपगुणेषु तत्परिकरेषु च सम्यक् स्फु

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

लीलानां स्फुरणं सुष्ठु भवतीत्यभिप्रेत्य साधनक्रमो लिखितः। एवं कीर्त्तनस्मरणयोर्ज्ञेयम्। इदञ्च श्रवणं श्रीमन्महन्मुखरितं चेन्महा-माहात्म्यं जातरुचीनां परमसुखदञ्च। तच्च द्विविधम्; महदावि-र्भावितं महत्कीर्त्त्यमानञ्चेति। तत्र श्रीभागवतमुपलक्ष्य पूर्वं यथा—इदं भागवतं नाम पुराणं ब्रह्मसम्मितम्। उत्तमःश्लोकचरितं चकार भगवानृषिः॥ २५६ ॥

अत्र तन्माहात्म्यसूचनार्थमेव तत्कर्त्तृकत्ववचनम्॥ १ ॥ ३ ॥ श्रीसूतः॥ २५६ ॥

यथा वा निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुत-मित्यादौ। अत्र श्रीशुकमुखादमृतद्रवसंयुतत्वेन परमसुखदत्वमुक्तम्। एतदुपलक्षणत्वेन श्रीलीलाशुकाद्याविर्भावितकर्णामृतादिग्रन्था अपि क्रोड़ीकर्त्तव्याः। अथ महत्कीर्त्त्यमानं यथा—स उत्तमःश्लोकमह-न्मुखच्युतो भवत्पदाम्भोजसुधाकणानिलः। स्मृतिं पुनर्विस्मृततत्त्व-वर्त्मनां कुयोगिनां नो वितरत्यलं वरैः॥ २५७ ॥

न कामये नाथ तदप्यत्यादिपूर्वोक्तानुसारात् स्वसुखातिशयेन कैवल्यसुखतिरस्कारी महतां मुखाद् विगलितो भवत्पदाम्भोजमाधुर्य्य-लेशस्यापि सम्बन्धी शब्दात्मकोऽनिलो विस्मृतपरमतत्त्वात्मकत्वदीय-ज्ञानानामस्माकं तदीयां स्मृतिमपि यच्छति। तस्मात् तथाविधस्य तस्य परमसाध्यसाधनात्मकत्वादलमन्यैर्वरैरित्यर्थः॥ ४ ॥ २० ॥ पृथुः श्रीविष्णुम्॥ २५७ ॥

तदेवं महामाहात्म्यं महासुखप्रदत्वञ्चोक्तम्। तदेतदुभयमप्यत्राह द्वाभ्याम्—तस्मिन् महन्मुखरिता मधुभिच्चरित्रपीयूषशेषसरितः परितः स्रवन्ति। ता ये पिबन्त्यवितृषो नृप गाढ़कर्णैस्तान्न स्पृशन्त्यशन-तृड्भयशोकमोहाः॥ २५८ ॥

अस्मिन् साधुसङ्गे। महद्भिर्मुखरिताः कीर्त्तिताः। शेषः सारः। अवितृषोऽलंबुद्धिशून्याः। गाढ़त्वं सावधानत्वम्। अशनं क्षुत्।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एतैरुपद्रुतो नित्यं जीवलोकस्वभावजैः। न करोति हरेर्नूनं कथामृतनिधौ रतिम् ॥ २५९ ॥

यैरेतैरशनादिभिरुपद्रुतः सन् कथामृतनिधौ रतिं न करोति तान् महत्कीर्त्तमानानि भगवद्यशांसि स्वमाहात्म्येन दूरे स्वसुखमनुभावयन्तीति पद्यद्वययोजनार्थः ॥३॥२९॥ श्रीनारदः प्राचीनबर्हिषम् ॥ २५९ ॥

तत्रापि श्रवणे श्रीभागवतश्रवणन्तु परमश्रेष्ठं, तस्य तादृशप्रभावमयशब्दात्मकत्वात् परमरसमयत्वाच्च। तत्र पूर्वस्माद् यथा—श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् इति ॥ २६० ॥

महामुनिः सर्वमहन्महनीयचरणपङ्कजः श्रीभगवान्। किं वा परैरित्यादिना शब्दस्वाभाविकमाहात्म्यं दर्शितम् ॥१॥ श्रीव्यासः ॥ २६० ॥

उत्तरस्माद् यथा—सर्ववेदान्तसारं हि श्रीभागवतमिष्यते। तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित् ॥ २६१ ॥

तद्रस एवामृतं तेन तृप्तस्य ॥ १२ ॥ १३ ॥ श्रीसूतः ॥ २६१ ॥

अत्रैवं विवेचनीयम्। श्रीभगवन्नामादेः श्रवणं तावत् परमं श्रेयः, तत्रापि महदाविर्भावितप्रबन्धादेः। तत्र महत्कीर्त्तमानस्य ततोऽपि श्रीभागवतस्य। तत्रापि च महत्कीर्त्त्यमानस्येति। अत्र मूढमतयात्मन इतिवत् निजाभीष्टनामादिश्रवणन्तु मुहुरावर्त्तनीयम्, तत्रापि सवासनमहानुभवमुखात्। सर्वस्य श्रीकृष्णनामादिकस्य परमभाग्यादेव सम्पद्यते तस्य पूर्णभगवत्त्वादिति। एवं कीर्त्तनेऽप्यनुसन्धेयम्। तत्र यत् स्वयं संप्रति कीर्त्त्यते तदपि श्रीशुकादिमहत्कीर्त्तितचरत्वेनानुसन्धाय कीर्त्तनीयमिति। तदेवं श्रवणं दर्शितम्। अस्य च कीर्त्तनादितः पूर्वत्वं तद्विना तत्तदज्ञानात्। तत्र षतस्य यदि साक्षादेव महत्कृतस्य कीर्त्तनस्य श्रवणभाग्यं न स्यात्

तदेव स्वयं पृथक् कीर्त्तनीयमिति तत्प्राधान्यात्। अतएवोक्तं तद्-वाग्विसर्गो जनताघविप्लव इत्यादौ टीकाकृद्भिः। यत् यानि नामानि वक्तरि सति शृण्वन्ति श्रोतरि सति गृणन्ति अन्यदा तु स्वयमेव गायन्तीति। अथातः कीर्त्तनम्। तत्र पूर्ववन्नामादिक्रमो ज्ञेयः। नाम्नो यथा—सर्वेषामप्यघवतामिदमेव सुनिष्कृतम्। नामव्याहरणं विष्णो-र्यतस्तद्विषया मतिः॥ २६२॥

टीका च—सुनिष्कृतं श्रेष्ठं प्रायश्चित्तमिदमेव। तत्र यतो नाम-व्याहरणात् तद्विषया नामोच्चारकपुरुषविषया मदीयोऽयं मया सर्वतो रक्षणीय इति विष्णोर्मतिर्भवतीत्येषा। अतः स्वाभाविकतदीयावेश-हेतुत्वेन तदीयस्वरूपभूतत्वात् परमभागवतानां तदेकदेशश्रवणमपि प्रीतिकरम्। यथा पाद्मोत्तरखण्डे श्रीरामाष्टोत्तरशतनामस्तोत्रे श्रीशिववाक्यम्—रकारादीनि नामानि शृण्वतो देवि जायते। प्रीतिर्मे मनसो नित्यं रामनामविशङ्कयेति। तदेवं सति पापक्षयमात्रं लक्षणं कियदिति भावः॥ ६॥ २॥ श्रीविष्णुदूता यमदूतान्॥ २६२॥

फलन्त्विदमेव यदाह—एवंव्रतः स्वप्रियनामकीर्त्त्या जातानुरागो द्रुतचित्त उच्चैः। हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः॥ २६३॥

एवं शृण्वन् सुभद्राणि रथाङ्गपाणेरित्याद्युक्तप्रकारं व्रतं वृत्तं यस्य तथाभूतोऽपि स्वप्रियाणि स्वाभीष्टानि यानि नामानि तेषां कीर्त्तनेन जातानुरागस्तत एव चित्तद्रवात् द्रुतचित्तः तत्रोचितभाववैचित्रीभिर्हस-तीत्यादि। अत्र तृतीयास्तुत्या नामकीर्त्तनस्यैव साधकतमत्वं लब्धम्। तदेवमेवंव्रत इत्यत्रापिशब्दोऽप्यध्याहृतः। अतएव भक्तिः परेशानु-भवो विरक्तिरित्याद्युत्तरपद्ये टीकाचूर्णिका "नन्वियमारूढयोगिनामपि बहुजन्मभिर्दुर्लभा गतिः कथं नामकीर्त्तनमात्रेणैकस्मिन् जन्मनि भवे-दित्याशङ्क्य सदृष्टान्तमाह, भक्तिरिति" इत्येषा। इत्थमुत्थापितश्च श्रीभगवन्नामकौमुद्यां सहस्रनामभाष्ये च पुराणान्तरवचनम्—एकं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दिवा च गतभीर्जितनिद्र एको निर्विन्न ईक्षितपथो मितभुक् प्रशान्
यद्यच्युते भगवति स मनो न सज्जेन्नामानि तद्रतिकराणि पठेन्
इति। अत्र गतभीत्यादयो गुणा नामैकतत्परतासम्पादका
न तु कीर्त्तनाङ्गभूता। भक्तिमात्रस्य निरपेक्षत्वं तस्य तु सुतरां ता
त्वमिति। यथा विष्णुधर्मे सर्वपातकातिपातकमहापातककारिक्ष
त्रबन्धूपाख्याने—ब्राह्मण उवाच। यद्येतदखिलं कर्त्तुं न श
ब्रवीमि ते। स्वल्पमन्यत्तथोक्तं भो करिष्यति भवान् यदि। क्ष
बन्धुरुवाच। अशक्यमुक्तं भवता चञ्चलत्वाद्धि चेतसः। वाक्
विनिष्पाद्यं यच्छक्यं तदुदीरय॥ ब्राह्मण उवाच। उत्तिष्ठता प्र
पता प्रस्थितेन गमिष्यता। गोविन्देति सदा वाच्यं क्षुत्तृट्प्रस्खल
दिषु॥ इति॥ ११॥ ३॥ श्रीकविर्विदेहम्॥ २६३॥

अन्यत्र च—न निष्कृतैरुदितैर्ब्रह्मवादिभिः तथा विशु
वान् व्रतादिभिः। यथा हरेर्नामपदैरुदाहृतैः तदुत्तम
गुणोपलम्भकम्॥२६४॥

न च पापविशोधनमात्रेणापक्षीयते तन्नामपदोदाहरणं
गुणानामप्युपलम्भकमनुभवहेतुर्भवति॥ ६॥ २॥ श्रीविष्णुदूता
दूतान्॥२६४॥

अतएव प्रथमस्कन्धान्तस्थितानां राज्ञः श्रेयोविविदिषावा
मनन्तरं द्वितीयस्कन्धारम्भे सर्वोत्तममुत्तरं वक्तुम्, इदं भागवतं
पुराणं ब्रह्मसम्मितम्। अधीतवान् द्वापरादौ पितुर्द्वैपायना
परिनिष्ठितोऽपि नैर्गुण्ये उत्तमःश्लोकलीलया। गृहीतचेता
आख्यानं यदधीतवान्। तदहं तेऽभिधास्यामि महापौ
भवान्। यस्य श्रद्दधतामाशु स्यान्मुकुन्दे मतिः सती॥ इति श्री
वतस्य परममहिमानमुक्त्वा, तदनन्तरं श्रीभागवतमुपक्रम
तस्य नानाङ्गवतः श्रीभगवदुन्मुखतया तन्नामकीर्त्तनमेवोपदि
तत्रापि सर्वेषामेव परमसाधनत्वेन परमसाध्यत्वेन चोपदि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एतन्निर्विद्यमानानामिच्छतामकुतोभयम् । योगिनां नृप निर्णीतं हरेर्नामानुकीर्त्तनम् ॥२६५॥

टीका च—साधकानां सिद्धानाञ्च नातः परमन्यत् श्रेयोऽस्तीत्याह, एतदिति । इच्छतां कामिनां तत्तत्फलसाधनमेतदेव । निर्विद्यमानानां मुमुक्षूणां मोक्षसाधनमेतदेव । योगिनां ज्ञानिनां फलञ्चैतदेव निर्णीतम् । नात्र प्रमाणं वक्तव्यमित्यर्थः । इत्येषा । नामकीर्त्तनञ्चेदमुच्चैरेव प्रशस्तम् । नामान्यनन्तस्य हतत्रपः पठन्नित्यादौ । अत्र पाद्मोक्ता दशाप्यपराधाः परित्याज्याः । यथा सनत्कुमारवाक्यम्—सर्वापराधकृदपि मुच्यते हरिसंश्रयात् । हरेरप्यपराधान् यः कुर्य्याद्द्विपदपांसनः । नामाश्रयः कदाचित् स्यात् तरत्येव स नामतः । नाम्नोऽपि सर्वसुहृदो ह्यपराधात् पतत्यधः ॥ इति । अपराधाश्चैते—सतां निन्दा नाम्नः परममपराधं वितनुते यतः ख्यातिं यातं कथम् उ सहते तद्विगर्हाम् । शिवस्य श्रीविष्णोर्य इह गुणनामादिकमलं धिया भिन्नं पश्येत् स खलु हरिनामाहितकरः ॥ गुरोरवज्ञा श्रुतिशास्त्रनिन्दनं तथार्थवादो हरिनाम्नि कल्पनम् । नाम्नो बलाद् यस्य हि पापबुद्धिर्न विद्यते तस्य यमैर्हि शुद्धिः ॥ धर्मव्रतत्यागहुतादिसर्वशुभक्रियासाम्यमपि प्रमादः । अश्रद्दधाने विमुखेऽप्यशृण्वति यश्चोपदेशः शिवनामापराधः ॥ श्रुत्वापि नाममाहात्म्यं यः प्रीतिरहितोऽधमः । अहंममादिपरमो नाम्नि सोऽप्यपराधकृदिति । अत्र सर्वापराधकृदपीत्यादौ श्रीविष्णुयामलवाक्यमप्यनुसन्धेयम्—मम नामानि लोकेऽस्मिन् श्रद्धया यस्तु कीर्त्तयेत् । तस्यापराधकोटीस्तु क्षमाम्येव न संशयः ॥ इति । सतां निन्देत्यनेन हिंसादीनां वचनागोचरत्वं दर्शितम् । निन्दादयस्तु यथा स्कान्दे श्रीमार्कण्डेयभगीरथसंवादे—निन्दां कुर्वन्ति ये मूढा वैष्णवानां महात्मनाम् । पतन्ति पितृभिः सार्द्धं महारौरवसंज्ञिते । हन्ति निन्दन्ति वै द्वेष्टि वैष्णवान् नाभिनन्दति । क्रुध्यते याति नो हर्षं दर्शने पतनानि षट् ॥ इति । तन्निन्दा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रवणेऽपि दोष उक्तः—निन्दां भगवतः शृण्वन् तत्परस्य जनस्य वा। ततो नापैति यः सोऽपि यात्यधः सुकृतात् च्युतः॥ इति। ततोऽपगमस्वासमर्थस्यैव। समर्थेन तु निन्दकजिह्वा छेत्तव्या। तत्राप्यसमर्थेन स्वप्राणपरित्यागोऽपि कर्त्तव्यः। यथोक्तं देव्या—कर्णौ पिधाय निरियाद् यदकल्प ईशे धर्मावितर्य्यसृणिभिर्नृभिरस्यमाने। जिह्वां प्रसह्य रुषतीमसतां प्रभुश्चेच्छिन्द्यादसूनपि ततो विसृजेत् स धर्म इति। शिवस्य श्रीविष्णोरित्यत्रैवमनुसन्धेयम्। श्रूयतेऽपि—यद् यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोऽंशसम्भवमिति। ब्रह्मा भवोऽहमपि यस्य कलाः कलाया इति। यत्पादनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्द्ध्न्यधिकृतेन शिवः शिवोऽभूदिति। सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः। विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्॥ तथा माध्वभाष्यदर्शितानि वचनानि। ब्रह्माण्डे—रुद्रं द्रावयते यस्माद् रुद्रस्तस्माज्जनार्द्दनः। ईशनादेव चेशानो महादेवो महत्त्वतः। पिबन्ति ये नरा नाकं मुक्ताः संसारसागरात्। तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः। शिवः सुखात्मकत्वेन सर्वसंरोधनाद्धरः। कृत्त्यात्मकमिमं देहं यतो वस्ते प्रवर्त्तयन्। कृत्तिवासास्ततो देवो विरिञ्चिश्च विरेचनात्। बृंहणाद्ब्रह्मनामासौ ऐश्वर्य्यादिन्द्र उच्यते। एवं नानाविधैः शब्दैरेक एव त्रिविक्रमः। वेदेषु च पुराणेषु गीयते पुरुषोत्तमः॥ इति। वामने—न तु नारायणादीनां नाम्नामन्यत्र संशयः। अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्त्तितः॥ इति। स्कान्दे—ऋते नारायणादीनि नामानि पुरुषोत्तमः। अदादन्यत्र भगवान् राजेवर्त्ते स्वकं पुरमिति। ब्राह्मे—चतुर्मुखः शतानन्दो ब्रह्मणः पद्मभूरिति। उग्रो भस्मधरो नग्नः कपालीति शिवस्य च। विशेषनामानि ददौ स्वकीयान्यपि केशवः इति। तदेवं श्रीविष्णोः सर्वात्मकत्वेन प्रसिद्धत्वात् तस्मात् सकाशात् शिवस्य गुणनामादिकं भिन्नं शक्त्यन्तरसिद्धमिति यो धियापि प्रपश्येत्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्यर्थः । द्वयोरभेदतात्पर्य्येण षष्ठ्यन्तत्वे सति श्रीविष्णोस्त्वित्यपेक्ष्य चशब्दः क्रियेत । तत्प्राधान्यविवक्षयैव श्रीशब्दश्च तत्रैव दत्तः । अतएव शिवनामापराध इति शिवशब्देन मुख्यतया श्रीविष्णुरेव प्रतिपादित इत्यभिप्रेतम् । सहस्रनामादौ च स्थाणुशिवादिशब्दास्तथैव । अथ श्रुतिशास्त्रनिन्दनम्—यथा पाषण्डमार्गेण दत्तात्रेयर्षभदेवोपासकानां पाषण्डिनाम् । तथार्थवादः स्तुतिमात्रमिदमिति मननम् । कल्पनं तन्माहात्म्यगौणताकरणाय गत्यन्तरचिन्तनम् । यथोक्तं कौर्मे व्यास-गीतायाम्—देवद्रोहाद्गुरुद्रोहः कोटिकोटिगुणाधिकः । ज्ञानापवादो नास्तिक्यं तस्मात् कोटिगुणाधिकमिति । यत्तु श्रुतनाममाहात्म्यस्याप्यजामिलस्य सोऽहं व्यक्तं पतिष्यामि नरके भृशदारुणे इत्येतद्वाक्यं, तत् खलु स्वदौरात्म्यमात्रदृष्ट्या । नाममाहात्म्यदृष्ट्या त्वग्रे वक्ष्यते, तथापि मे दुर्भगस्येत्यादिद्वयम् । नाम्नो बलादिति । यद्यपि भवेन्नाम्नो बलेनापि कृतस्य पापस्य तेन नाम्ना क्षयः, तथापि येन नाम्नो बलेन परमपुरुषार्थस्वरूपं सच्चिदानन्दसान्द्रं साक्षाच्छ्रीभगवच्चरणारविन्दं साधयितुं प्रवृत्तस्तेनैव परमघृणास्पदं पापविषयं साधयतीति परमदौरात्म्यम् । ततः कदर्थयत्येव तन्नाम चेति तत्पापकोटिमहत्तमस्यापराधस्यापातो वाढ़मेव । ततो यमैर्बहुभिर्यमनियमादिभिः कृतप्रायश्चित्तस्य क्रमेण प्राप्ताधिकारैरनेकैरपि दण्डधरैर्वा कृतदण्डस्य तस्य शुद्धभावो युक्त एव । नामापराधयुक्तानामित्यादिवक्ष्यमाणानुसारेण पुनरपि सन्तत-नामकीर्त्तनमात्रस्य तत्र प्रायश्चित्तत्वात्, सर्वापराधकृदपीत्याद्युक्तानुसारेण नामापराधयुक्तस्य भगवद्भक्तिमतोऽप्यधःपातलक्षणभोगनियमाच्च । तत इन्द्रस्याश्वमेधाख्यभगवद्यजनबलेन वृत्रहत्याप्रवृत्तिस्तु लोकोपद्रवशान्तिं तदीयासुरभावखण्डनञ्चेच्छूनामृषीणामङ्गीकृतत्वान्न दोष इति मन्तव्यम् । अथ धर्म्मव्रतत्यागेति । धर्म्मादिभिः साम्यमननमपि प्रमादः अपराधो भवतीत्यर्थः । अतएव च, वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः । तावन्ति हरिनामानि कीर्त्तितानि न

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

संशयः॥ इत्यतिदेशेनापि नाम्न एव माहात्म्यमायाति। उक्तं
मधुरमधुरमेतन्मङ्गलं मङ्गलानां सकलनिगमवल्लीसत्फलमिति। त
श्रीविष्णुधर्मे ऋग्वेदो हि यजुर्वेदः सामवेदोऽप्यथर्वणः। अधीता
येनोक्तं हरिरित्यक्षरद्वयम्॥ स्कान्दे पार्वत्युक्तौ—मा ऋचो मा य
स्तात मा साम पठ किञ्चन। गोविन्देति हरेर्नाम गेयं गाय
नित्यशः॥ पाद्मे श्रीरामाष्टोत्तरशतनामस्तोत्रे—विष्णोरेकैकनाम
सर्ववेदाधिकं मतमिति। अथाश्रद्दधाने इत्यादिनोपदेष्टुरपराधं द
त्वोपदेशस्याह, श्रुत्वेति। यतः अहंममादिपरमः अहन्तामम
तात्पर्य्येण तस्मिन्ननादरवानित्यर्थः। नामैकं यस्य वाचि स्मर
पथगतमित्यादौ देहद्रविणादिनिमित्तकपाषण्डशब्देन च दशाप
लक्ष्यन्ते पाषण्डमयत्वात् तेषाम्। तथा तद्विधानामेवापराधा
पाद्मवैशाखमाहात्म्ये—अवमन्य च ये यान्ति भगवत्कीर्त्तनं न
ते यान्ति नरकं घोरं तेन पापेन कर्म्मणेति। एतेषाञ्चापराधा
नन्यप्रायश्चित्तत्वमेवोक्तं तत्रैव—नामापराधयुक्तानां नामान्येव
न्त्यघम्। अविश्रान्तिप्रयुक्तानि तान्येवार्थकराणि च॥ इति।
सत्प्रभृतिष्वपराधे तु तत्सन्तोषार्थमेव सन्ततनामकीर्त्तनादिकं
चितम्, अम्बरीषचरितादौ तदेकक्षम्यत्वेनापराधानां दर्शनात्। उक्तं
नामकौमुद्याम्—महदपराधस्य भोग एव निवर्त्तकः तदनुग्रहो
इति। तस्मादगत्यन्तराभावात् साधूक्तम् एतन्निर्विद्यमानानामि
२॥ १॥ श्रीशुकः॥ २६५॥

एवं श्रीनारदेनोक्तं बृहन्नारदीये—महिम्नामपि यन्नाम्नः
गन्तुमनोश्वराः। मनवोऽपि मुनीन्द्राश्च कथं तं क्षुद्रधीर्भजे॥
अथ श्रीरूपकीर्त्तनम्। प्रत्याकृष्टं नयनमबला इत्यादौ यच्छ्री
जनयति रतिं कीर्त्त्यमाना कवीनामिति॥ २६६॥

यस्य श्रीकृष्णरूपस्य शोभासम्पत्तिः कीर्त्त्यमाना सती
तत्कीर्त्तकानां वाचां तत्कीर्त्तनेष्वेव रागं जनयति। अथोक्तं श्री

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्तनेन—कामं भवः सववृजिनैर्निरयेषु न स्तादित्यादौ वाचस्तु न स्तुलसिन्द्व यदि तेऽङ्घ्रिशोभा इति ॥ ११ ॥ ३० ॥ राजा श्रीशुकम् ॥२६६॥

अथ गुणकीर्त्तनम्—इदं हि पुंसस्तपसः श्रुतस्य वा स्विष्टस्य सूक्तस्य च बुद्धदत्तयोः । अविच्युतोऽर्थः कविभिर्निरूपितो यदुत्तमःश्लोकगुणानुवर्णनम् ॥ २६७ ॥

श्रुतं वेदाध्ययनम्। स्विष्टं यागादि । सूक्तं मन्त्रादिजपः । बुद्धं शास्त्रीयबोधः । दत्तं दानम् । एतेषां भगवदर्पितानां सतामेवाविच्युतोऽर्थः नित्यं फलम् । किं तत् ? उत्तमःश्लोकस्य गुणानुवर्णनं यत् । जातायामपि गुणानुवर्णनसाध्यायां परमपुरुषार्थरूपायां रतौ गुणानुवर्णनस्य प्रत्युत नित्यनित्योल्लासात् अविच्युतत्वमुक्तम् । तस्मादविच्युतत्वेन रतिमेवास्य फलं सूचयति॥ १ ॥ ५॥श्रीनारदःश्रीव्यासम्॥२६८॥

अथ लीलाकीर्त्तनम्—शृण्वतः श्रद्धया नित्यं गृणतश्च स्वचेष्टितम् । कालेन नातिदीर्घेण भगवान् विशते हृदि ॥२६८॥

नातिदीर्घेण स्वल्पेनैव । विशते स्फुरति ॥२॥८॥श्रीपरीक्षित्॥२६८॥

तथा—मृषागिरस्ता ह्यसतीरसत्कथा न कथ्यते यद् भगवानधोक्षजः । तदेव सत्यं तदुहैव मङ्गलं तदेव पुण्यं भगवद्गुणोदयमित्यादि यदुत्तमःश्लोकयशोऽनुगीयते इत्यन्तम् ॥२६९॥

असतीरसत्यः । असतां भगवतस्तद्भक्तेभ्यश्चान्येषां कथा यासु ताः । यत् यासु गीर्षु न कथ्यते । उत्तमःश्लोकस्य यशोऽनुगीयते इति तु यत् तत् तदीयलीलामयानुगानमेव सत्यमित्यादि । कथं सत्यत्वं मङ्गलत्वञ्च तत्राह, भगवद्गुणानामुदयः गायकहृदि स्फूर्त्तिर्यस्मात् तत् । तदीयरतिप्रदमित्यर्थः । स्कान्दे—यत्र यत्र महीपाल वैष्णवी वर्त्तते कथा । तत्र तत्र हरिर्याति गौर्यथा सुतवत्सला ॥ त्रिशुत्रमें स्कान्दे च भगवदुक्तौ—मत्कथावाचकं नित्यं मत्कथाश्रवणे रतम् । मत्कथाप्रीतिमनसं नाहं त्यक्ष्यामि तं नरमिति । अत्र चानुगीयते इत्यनेन सुकण्ठता चेद् गानमेव कर्त्तव्यं, तच्च



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रशस्तमित्यायातम्। एवं नामादीनामपि। उक्तञ्च—गीतानि नामानि तदर्थकानि गायन् विलज्जो विचरेदसङ्ग इति। अन्यत्र च—यानीह विश्वविलयोद्भववृत्तिहेतुः कर्म्माण्यनन्यविषयाणि हरिश्चकार। यस्त्वङ्ग गायति शृणोत्यनुमोदते वा भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे॥ इति। गानशक्त्यभावे स्वस्मादुत्कृष्टतरस्य प्राप्तौ तच्छृणोति। तदासत्त्यभावे तदनुमोदतेऽपीत्यर्थः। श्रीविष्णुधर्म्मे श्रीविष्णूक्तौ—रागेणाकृष्यते चेतो गान्धर्वाभिमुखं यदि। मयि बुद्धिं समास्थाय गायेथा मम सत्कथा इति। पाद्मे च कार्त्तिकमाहात्म्ये श्रीभगवदुक्तौ—नाहं वसामि वैकुण्ठे योगिनां हृदये न च। मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद। तेषां पूजादिकं गन्धधूपाद्यैः क्रियते नरैः। तेन प्रीतिं परां यामि न तथा मम पूजनादिति। ते च प्राणिमात्राणामेव परमोपकर्त्तारः किमुत स्वेषाम्। यथोक्तं नारसिंहे श्रीप्रह्लादेन—ते सन्तः सर्वभूतानां निरुपाधिकबान्धवाः। ये नृसिंह भवन्नाम गायन्त्युच्चैर्मुदान्विताः॥ इति। अत्र च बहुभिर्मिलित्वा कीर्त्तनं सङ्कीर्त्तनमित्युच्यते। तत्तु चमत्कारविशेषपोषात् पूर्वतोऽप्यधिकमिति ज्ञेयम्। अत्र च नामसङ्कीर्त्तने यथोपदिष्टं कलियुगपावनावतारेण श्रीभगवता—तृणादपि सुनीचेन तरोरिव सहिष्णुना। अमानिना मानदेन कीर्त्तनीयः सदा हरिः॥ इति॥ १२॥ श्रीसूतः॥२७९॥

इयञ्च कीर्त्तनाख्या भक्तिर्भगवतो द्रव्यजातिगुणक्रियाभिर्दीनजनैकविषयापारकरुणामयीति श्रुतिपुराणादिविश्रुतिः। कलौ च दोषे यथा ब्रह्मवैवर्त्ते—अतः कलौ तपोयोगविद्यायज्ञादिकाः क्रियाः साङ्गा भवन्ति न कृताः कुशलैरपि देहिभिरिति। अतएव कलौ स्वभावत एवातिदीनेषु लोकेष्वाविर्भूयताननायासेनैव तत्तद्युगगतमहासाधनानां सर्वमेव फलं ददाना सा कृतार्थयति। यत एव तस्यां कलौ भगवतो विशेषतश्च सन्तोषो भवति। तथा चैवोक्तं हरि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तपः श्रीहरिकीर्त्तनम् । कलौ युगे विशेषेण विष्णुप्रीत्यै समाचरेत् ॥ इति स्कान्दचातुर्मास्यमाहात्म्यवचनानुसारेण । तदेवमाह—कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः । द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात् ॥२७०॥

यद् यत् कृतादिषु तेन तेन साधनेन स्यात् तत् सर्वं कलौ हरिकीर्त्तनाद् भवतीति । अन्यत्र च—ध्यायन् कृते यजन् यज्ञै-स्त्रेतायां द्वापरेऽर्च्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्त्य केशव-मिति ॥१२॥३॥ श्रीशुकः ॥२७०॥

अतएव—कलिं सभाजयन्त्यार्य्या गुणज्ञाः सारभागिनः । यत्र सङ्कीर्त्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥२७१॥

गुणज्ञाः कीर्त्तनप्रचाररूपं तद्‌गुणं जानन्तः । अतएव तद्दोषा-ग्रहणात् सारभागिनः सारमात्रग्रहणाः कलिं सभाजयन्ति । गुणमेव दर्शयति, यत्र प्रचारितेन सङ्कीर्त्तनेनैव साधनान्तरनिरपेक्षेण तेने-त्यर्थः । सर्वः ध्यानादिभिः कृतादिषु साधनसहस्रैः साध्यः । कीर्त्तन-स्यैव महिमानमाह—न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह । यतो विन्देत परमां शान्तिं नश्यति संसृतिः ॥२७२॥

अतः कीर्त्तनात् । यतो यस्मात् कीर्त्तनात् । परमां शान्तिं शमो मन्निष्ठता बुद्धेरिति भगवद्वाक्यानुसारेण ध्यानादिभिरप्यसाध्यां सर्वोत्कृष्टां भगवन्निष्ठां प्राप्नोति अनुषङ्गेन संसारश्च नश्यति । अतएव ध्याननिष्ठा अपि कृतादिप्रजा एतादृशीं भगवन्निष्ठां न प्राप्तवत्यः । महाभागवता नित्यं कलौ कुर्वन्ति कीर्त्तनमिति स्कान्दाद्यनुसारेण तादृशनिष्ठाकारणं कीर्त्तनमाहात्म्यञ्च दीनैककृपातिशयशालिना भगवता तदानीं तत्तत्सामर्थ्यावसरे यस्मात् न प्रकाशितं, तस्मात् ध्यानादिसमर्थास्ताः प्रजा जिह्वौष्ठस्पन्दनमात्रस्य नातिसाधनत्वं भवे-दिति मत्वा तत्र अद्रितवत्यश्च । ततः कलिप्रजानां परमभगवन्निष्ठतां श्रुत्वा तदर्थं कलावेव केवलं निजजन्म प्रार्थयन्त इत्याह— कृतादिषु

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रजा राजन् कलाविच्छन्ति सम्भवम्। कलौ खलु भविष्यन्ति
नारायणपरायणाः ॥२७३॥

तत्परायणत्वमत्र तदीयप्रेमातिशयवत्त्वम्। एतदेव प्र
शान्तिमित्यनेन कार्य्यद्वारा व्यञ्जितम्। मुक्तानामपि सिद्धानां ना
यणपरायणः। सुदुर्लभः प्रशान्तात्मा इत्यत्र यद्वत्। अत्र क
सङ्गेन कीर्त्तनस्य गुणोत्कर्ष इति न वक्तव्यम्। भक्तिमात्रे का
देशनियमस्य निषिद्धत्वात्। विशेषतो नामोपलक्ष्य च वि
चत्रबन्धूपाख्याने—न देशनियमस्तत्र न कालनियमस्तथा। नो
च्छादौ निषेधश्च हरेर्नामनि लुब्धकेति। स्कान्दे पाद्मवैशाखमाहा
विष्णुधर्मे च—चक्रायुधस्य नामानि सदा सर्वत्र कीर्त्तयेदिति। ख
एव च—न देशकालावस्थात्मशुद्ध्यादिकमपेक्षते। किन्तु स्वतन्
तन्नाम कामितकामदमिति। विष्णुधर्मे च—कलौ कृतयुगं
कलिस्तस्य कृते युगे। यस्य चेतसि गोविन्दो हृदये यस्य न
इति। न च कलावन्यसाधनासमर्थत्वादेव तेनाल्पेनापि महत्
भवति न तु तस्य गरीयस्त्वेनेति मन्तव्यम्। यस्मिन् न्यस्त
याति नरकं स्वर्गोऽपि यच्चिन्तने विघ्नो यत्र निवेशितात्ममनसां ब्रा
ऽपि लोकोऽल्पकः। मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां द
त्यव्ययः किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्त्तिते।
समाधिपर्य्यन्तादपि स्मरणात् कैमुत्येन कीर्त्तनस्यैव गरी
श्रीविष्णुपुराणे दर्शितम्। अत एवोक्तमेतन्निर्विद्यमानानामिच्छ
तथाच, अघच्छित् स्मरणं विष्णोर्बह्वायासेन साध्यते। ओष्ठस्प
मात्रेण कीर्त्तनन्तु ततो वरमिति वैष्णवचिन्तामणौ। येन जन्म
पूर्वं वासुदेवः समर्चितः। तन्मुखे हरिनामानि सदा ति
भारत॥ इत्यन्यत्र। सर्वापराधकृदपीत्यादिनामापराधभञ्जन
च। तस्मात् सर्वत्रैव युगे श्रीमत्कीर्त्तनस्य समानमेव सामर्थ्
कलौ च श्रीभगवता कृपया तद्ग्राह्यत इत्यपेक्षयैव तत्र तत्र

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्थितम् । अतएव यद्यन्यापि भक्तिः कलौ कर्त्तव्या तदा तत्संयोगे-नैवेत्युक्तम्—यज्ञैः सङ्कीर्त्तनप्रायैर्यजन्ति हि सुमेधस इति । अत्र च स्वतन्त्रमेव नामकीर्त्तनमत्यन्तप्रशस्तं, हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥ इत्यादौ । तस्मात् साधूक्तं, कलिं सभाजयन्त्यार्य्या इत्यादिचयम् ॥ ११ ॥ ५ ॥ श्रीकरभाजनो निमिम् ॥ २७३ ॥

तदेवं कलौ नामकीर्त्तनप्रचारप्रभावेनैव परमभगवत्परायणत्व-सिद्धिर्दर्शिता । तत्र पाषण्डप्रवेशेन नामापराधिनो ये तेषान्तु तद्वहि-र्मुखत्वमेव स्यादिति व्यतिरेकेण तत् द्रढ़यति—कलौ न राजन् जगतां परं गुरुं त्रिलोकनाथानतपादपङ्कजम् । प्रायेण मर्त्त्या भगवन्तमच्युतं यक्ष्यन्ति पाषण्डविभिन्नचेतसः ॥ यन्नामधेयं म्रियमाण आतुरः पतन् स्खलन् वा विवशो गृणन् पुमान् । विमुक्तकर्मार्गलमुत्तमां गतिं प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥ २७४ ॥

स्पष्टम् ॥ १२ ॥ ३ ॥ श्रीशुकः ॥ २७४ ॥

तदेवं कीर्त्तनं व्याख्यातम् । तत्रास्मिन् कीर्त्तने निजदैन्यनिजा-भीष्टविज्ञप्तिस्तवपाठावप्यन्तर्भाव्यौ । तथा तत्र श्रीभागवतस्थित-नामादिकीर्त्तनन्तु पूर्ववदन्यदीयनामादिकीर्त्तनादधिकं ज्ञेयम् । कलौ तु प्रशस्तं तत् । कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह । कलौ नष्टदृशामेष पुराणार्कोऽधुनोदित इति । अथ शरणापत्त्यादिभिः शुद्धान्तःकरणश्चेत् एतन्निर्विद्यमानानामिच्छतामकुतोभयमित्याद्युक्त-त्वान्नामकीर्त्तनापरित्यागेन स्मरणं कुर्य्यात् । तच्च मनसानुसन्धानम् । यदेव नामादिसम्बन्धित्वेन बहुविधं भवति । तत्र स्मरणसामान्यम्—एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः । सर्वतो मन आकृष्य मय्यद्धावेश्यते यथा ॥ २७५ ॥

यथा यथावत् मय्यावेश्यते इति एतावानित्यर्थः । तथा च स्कान्दे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ब्रह्मोक्तौ—आलोड्य सर्वशास्त्राणि विचार्य्य च पुनः पुनः। इद
॥११॥१२॥ श्रीभगवान् ॥ २७५ ॥

तत्र नामस्मरणं, हरेर्नाम परं जप्यं ध्येयं गेयं निरन्तरम्। कं
नीयञ्च बहुधा निर्वृतीर्बहुधेच्छता ॥ इति जाबालिसंहितादयनु
ज्ञेयम्। नामस्मरणन्तु शुद्धान्तःकरणतामपेक्षते। तत् कीर्त
नावरमिति मूले तु नोदाहरणस्पष्टता। रूपस्मरणमाह—अविस्मृ
कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि च शं तनोति। सत्त्वस्य
परमात्मभक्तिं ज्ञानञ्च विज्ञानविरागयुक्तम् ॥ २७६ ॥

परमात्मनि श्रीकृष्णे प्रेमलक्षणां भक्तिमिति मुख्यं फलमन्
त्वानुषङ्गिकाणि ॥ १२ ॥ श्रीसूतः ॥ २७६ ॥

किञ्च—स्मरतः पादकमलमात्मानमपि यच्छति। किन्वर्थक
भजतो नात्यभीष्टान् जगद्गुरुः ॥ २७७ ॥

स्मरतः स्मरते। साक्षात् प्रादुर्भूय आत्मानं सत्त्वर्धीनं
इत्यर्थः। अर्थकामानिति बहुवचनं मोक्षमप्यन्तर्भावयति छिन्न
वायन्यायेन। यस्मादेवं तन्माहात्म्यं तस्मादेव गारुड़ेऽपीदमुक्त
एकस्मिन्नप्यतिक्रान्ते मुहूर्त्ते ध्यानवर्जिते। दस्युभिर्मुषिते नैव
माक्रन्दितुं भृशमिति ॥ १० ॥ ८५ ॥ श्रीदामविप्रभार्य्या तम् ॥ २
अथ पूर्ववत् क्रमसोपानरीत्या सुखलभ्यं गुणपरिकरसेवादि
स्मरणञ्चानुसन्धेयम्। तदिदं स्मरणं पञ्चविधम्। यत्किञ्चिदनु
स्मरणम्। सर्वतश्चित्तमाकृष्य सामान्याकारेण मनोधारणं धार
विशेषतो रूपादिचिन्तनं ध्यानम्। अमृतधारावदविच्छिन्नं
ध्रुवानुस्मृतिः। ध्येयमात्रस्फुरणं समाधिरिति। तत्र स्मरणम्—
केनाप्युपायेन स्मृतो नारायणोऽव्ययः। अपि पातकयुक्तस्य प्रसन्नः
संशयः॥ इति बृहन्नारदीयादौ। धारणा—विषयान् ध्यायतः
विषयेषु विसज्जते। मामनुस्मरतश्चित्तं मय्येव प्रविलीयते॥ इ
ध्यानम्—भगवच्चरणद्वन्द्वध्यानं निर्द्वन्द्वमीरितम्। पापिनोऽपि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विहितं सुहितं परमिति नारसिंहादौ । तत्र निर्द्वन्द्वं शीतोष्णादि-मयदुःखपरम्परातीतम् । ईरितं शास्त्रविहितम् । तच्च पापिनोऽपि सङ्गेनापि परमुत्कृष्टं सुहितं विहितं तत्रैवेत्यर्थः । ध्रुवानुस्मृतिश्च तद्गुणश्रुतिमात्रेणेत्यादौ त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरित्यादौ च । एषैव श्रीरामानुजभगवत्पादैः प्रथमसूत्रे दर्शितास्ति । समाधि-माह—तयोरागमनं साक्षादीशयोर्जगदात्मनोः । न वेद रुद्धधीवृत्ति-रात्मानं विश्वमेव चेति ॥ २७८ ॥

तयोः रुद्रतत्पत्न्योः । भगवदंशतच्छक्तित्वात् जगदात्मनोः तत्-प्रवर्त्तकयोरपि । तत्र हेतुः रुद्धधीवृत्तिर्भगवदाविष्टचित्तः । भक्तिं परां भगवति लब्धवानिति पूर्वोक्तेः । तस्मादसंप्रज्ञातनाम्नो ब्रह्म-समाधितो भिन्न एवासौ ॥ १२ ॥ १० ॥ श्रीसूतः ॥२७८॥

क्वचिल्लीलादियुक्ते च तस्मिन्नन्यास्फूर्त्तिः समाधिः स्यात् । यथाह—उरुक्रमस्याखिलबन्धमुक्तये समाधिनानुस्मर तद्विचेष्टित-मिति ॥ २७९ ॥

स्पष्टम् । एतद्रूपो दासादिभक्तानाम् । पूर्वस्तु प्रायः शान्तभक्ता-नाम् । स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽप्यजितरुचिरलीला-कृष्टसार इत्याद्युक्तिभ्यः ॥१॥७॥ श्रीनारदो व्यासम् ॥२७९॥

अथ रुचिः शक्तिश्च चेत्तदपरित्यागेन पादसेवा च कर्त्तव्या । सेवास्मरणसिद्ध्यर्थञ्च सा कैश्चित् क्रियते । तथाच, विष्णुरहस्ये पर-मेश्वरवाक्यम्—न मे ध्यानरताः सम्यक् योगिनः परितुष्टये । तथा भक्तिश्च देवर्षे क्रिया योगरता यथा । क्रियाक्रमेण योगोऽपि ध्यानिनः संप्रवर्त्तते ॥ इति । योगोऽत्र समाधिः । पादसेवायां पादशब्दो भक्त्यैव निर्दिष्टः । ततः सेवायाः सादरत्वं विधीयते । सेवा च कालदेशा-द्युचिता परिचर्य्यादिपर्य्याया । सा यथा—यत्पादसेवाभिरुचिस्तप-स्विनामशेषजन्मोपचितं मलं धियः । सद्यः क्षिणोत्यन्वहमेधती सती यथा पदाङ्गुष्ठविनिःसृता सरित् ॥ २८० ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तपस्विनां संसारतप्तानां मलं तत्तद्वासनाम्। त्वत्पादप्रे महिमेति दृष्टान्तेनाह, यथेति ॥ ४ ॥ २७ ॥ पृथुः श्रीविष्णुम् ॥२८
तथा,—न कामयेऽन्यं तव पादसेवनादकिञ्चनप्रार्थ्यतमाद्वि विभो। आराध्य कस्त्वां ह्यपवर्गदं हरे वृणीत आर्यो वरमा बन्धनम् ॥ २८१ ॥

अकिञ्चना मोक्षपर्य्यन्तकामनारहिताः। तत्र हेतुः, त्वामा कस्त्वामपवर्गदं सन्तं वृणीत, अपवर्गदतयाविर्भवन्तं समाश्रयेतेत्य वरमित्यव्ययमीषत्प्रिये। वरमात्मनो बन्धनमेव वृणीत। अनन्तरश्च तस्माद्विरिञ्ज्याशिष इत्यादिवाक्ये निरञ्जनमित्यादि ॥ २८२ ॥

अत्र सेव्यपादत्वेनैव प्राप्तस्य तस्य पुरुषोत्तमस्य सच्चिदानन्द मेवाभिप्रेतम् ॥१० ॥ ५१॥ मुचुकुन्दः श्रीभगवन्तम् ॥२८२॥

अत्र पादसेवायां श्रीमूर्त्तिदर्शनस्पर्शपरिक्रमानुव्रजनभगवन्मन्दि गङ्गा-पुरुषोत्तम-द्वारका-मथुरादि-तदीय-तीर्थ-स्नान-गमनादयोऽप भाव्याः। तत्परिकरप्रायत्वात्। यावज्जीवं तन्मन्दिरादिनि सस्तु शरणापत्तावन्तर्भवति। गङ्गादीनां तत्स्थप्राणिवृन्दा परमभागवतत्वमेवेति पक्षे तु तत्सेवादिकं महत्सेवाद पर्य्यवस्यति। ततो गङ्गादिष्वपि भक्तिनिदानत्वं भवेत्। एव शुश्रूषोः श्रद्दधानस्य वासुदेवकथारुचिः। स्यान्महत्सेवया वि पुण्यतीर्थनिषेवनादित्यत्र पुण्यतीर्थशब्दोक्तस्य गङ्गादेः पृथक् कार व्याख्येयम्। यथा तृतीये—यत्पादनिःसृतसरित्प्रवरोदकेन तो मूर्ध्नधिकृतेन शिवः शिवोऽभूदिति। शिवत्वं नाम ह्यत्र परम प्राप्तिरिति टीकाकृन्मतम्। तादृशसुखत्वञ्च भक्तावेव पर्य्यवसित तत ऊर्द्ध्वं सुखान्तराभावात्। ब्राह्मे पुरुषोत्तममुद्दिश्य—प क्षेत्रस्य माहात्म्यं समन्ताद्दशयोजनम्। दिविष्ठा यत्र पश्यन्ति नैव चतुर्भुजान्। स्कान्दे—संवत्सरं वा षण्मासान्मासं मासा वा। द्वारकावासिनः सर्वे नरा नार्य्यश्चतुर्भुजाः ॥ पाद्मपाताल

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अहो मधुपुरी धन्या वैकुण्ठाच्च गरीयसी । दिनमेकं निवासेन हरौ भक्तिः प्रजायते ॥ आदिवाराहे तामुद्दिश्य, जन्मभूमिः प्रिया ममेति । एषु च स्वोपासनास्थानमधिकं सेव्यम् । श्रीकृष्णस्य पूर्णभगवत्त्वात् तत्स्थानन्तु सर्वेषामेव पूर्णपुरुषार्थदं भवेत् । अतएवादिवाराहे— मथुराञ्च परित्यज्य योऽन्यत्र कुरुते रतिम् । मूढ़ो भ्रमति संसारे मोहितो मम माययेति । तदेवं तुलसीसेवा च सत्सेवायामन्तर्भाव्या; परमभगवत्प्रियत्वात्तस्याः । यथा अगस्त्यसंहितायां गारुड़संहितायाञ्च—विष्णोस्त्रैलोक्यनाथस्य रामस्य जनकात्मजा । प्रिया तथैव तुलसी सर्वलोकैकपावनीति । स्कान्दे—रतिं बध्नाति नान्यत्र तुलसीकाननं विना । देवदेवो जगत्स्वामी कलिकाले विशेषतः ॥ निरीक्षिता नरैर्यैस्तु तुलसीवनवाटिका । रोपिता यैस्तु विधिना संप्राप्तं परमं पदम् ॥ स्कान्द एव तुलसीस्तवे—तुलसीनाममात्रेण प्रीणात्यसुरदर्पहेति । तदेवं पादसेवा व्याख्याता, प्रसङ्गसङ्गत्या गङ्गादिसेवा च । अथार्चनम् । तच्चागमोक्तावाहनादिक्रमकम् । तन्मार्गे श्रद्धा चेदाश्रितमन्त्रगुरुस्तं विशेषतः पृच्छेत् । तथोदाहृतम्—लब्धानुग्रह आचार्य्यात्तेन संदर्शितागमः इत्यादिना । यद्यपि श्रीभागवतमते पञ्चरात्रादिवदर्चनमार्गस्यावश्यकत्वं नास्ति ; तद्विनापि शरणापत्त्यादीनामेकतरेणापि पुरुषार्थसिद्धेरभिहितत्वात् ; तथापि श्रीनारदादिवर्त्मानुसरद्भिः श्रीभगवता सह सम्बन्धविशेषं दीक्षाविधानेन श्रीगुरुचरणसम्पादितं चिकीर्षद्भिः कृतायां दीक्षायामर्चनमवश्यं क्रियेतैव । दिव्यं ज्ञानं यतो दद्यात् कुर्य्यात् पापस्य संक्षयम् । तस्माद्दीक्षेति सा प्रोक्ता देशिकैस्तत्त्वकोविदैः ॥ अतो गुरुं प्रणम्यैव सर्वस्वं विनिवेद्य च । गृह्णीयाद् वैष्णवं मन्त्रं दीक्षापूर्वं विधानतः ॥ इत्यागमात् । दिव्यं ज्ञानं ह्यत्र श्रीमति मन्त्रे भगवत्स्वरूपज्ञानं तेन भगवता सम्बन्धविशेषज्ञानञ्च । यथा पाद्मोत्तरखण्डादावष्टाक्षरादिकमधिकृत्य विवृतमस्ति । ये तु सम्पत्तिमन्तो गृहस्थास्तेषान्त्वर्चन-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न्मार्ग एव मुख्यः। यथोक्तं श्रीवसुदेवं प्रति मुनिभिः—अयं स्वस्त्य-
यनः पन्था द्विजातेर्गृहमेधिनः। यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुष
इति। तदकृत्वा हि निष्किञ्चनवत् केवलस्मरणादिनिष्ठत्वे शि-
ष्ठाट्यप्रतिपत्तिः स्यात्। परद्वारा तत्सम्पादनं व्यवहारनिष्ठत्वस्य
सत्वस्य वा प्रतिपादकम्। ततोऽश्रद्धामयत्वाद्धीनमेव तत्। त-
योऽमायया सन्ततयानुवृत्त्या इत्याद्युपदेशाद्भ्रश्येत्। किञ्च ए-
स्थानां परिचर्य्यामार्गे द्रव्यसाध्यतयार्चनमार्गादविशेषेण प्राप्तेऽप्यर्च-
मार्गस्यैव प्राधान्यमत्यन्तविधिसापेक्षत्वात्तेषाम्। तथा गार्हस्थ्यस्य
देवतायागस्य शाखापल्लवादिसेकस्थानीयस्य मूलसेकरूपं तद-
मित्यपि तदकरणे महान् दोषः। अतः स्कान्दे श्रीप्रह्लादवाक्यं
केशवार्च्चा गृहे यस्य न तिष्ठति महीपते। तस्यान्नं नैव भोक्त-
मभक्ष्येण समं स्मृतमिति। दीक्षितानान्तु सर्वेषां तदकरणे न-
पातः श्रूयते। यथा विष्णुधर्मोत्तरे—एककालं द्विकालं वा त्रि-
पूजयेद्धरिम्। अपूज्य भोजनं कुर्वन्नरकाणि व्रजेन्नर इत्यादि।
अशक्तमयोग्यं प्रति चाग्नेये—पूजितं पूज्यमानं वा यः पश्येद्भ-
हरिम्। श्रद्धया मोदयेद्यस्तु सोऽपि योगफलं लभेदिति। योऽ-
पञ्चरात्राद्युक्तः क्रियायोगः। क्वचिदत्र मानसपूजा च विहिता
तथा च पाद्मोत्तरखण्डे—साधारणं हि सर्वेषां मानसेज्या नृणां
इति। किञ्चास्मिन्नर्चनमार्गेऽवश्यं विधिरपेक्षणीयः। ततः पूर्वं
कर्त्तव्या। अथ शास्त्रीयं विधानञ्च शिक्षणीयम्। दीक्षा यथा
द्विजानामनुपनीतानां स्वकर्माध्ययनादिषु। यथाधिकारो ना-
स्याचोपनयनादनु। तथाचादीक्षितानान्तु मन्त्रदेवार्चनादिषु। ना-
कारोऽस्त्यतः कुर्य्यादात्मानं शिवसंस्तुतमिति। शास्त्रीयविधि-
यथा विष्णुरहस्ये—अविज्ञाय विधानोक्तं हरिपूजाविधिक्रि-
कुर्वन् भक्त्या समाप्नोति शतभागं विधानत इति। भक्त्या पर-
णैव शतभागं प्राप्नोति। अन्यथा तावन्तमपि नेत्यर्थः। कि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वैष्णवसंप्रदायानुसार एव प्रमाणम् । यतो विष्णुरहस्ये—अर्चयन्ति सदा विष्णुं मनोवाक्कायकर्मभिः । तेषां हि वचनं ग्राह्यं ते हि विष्णुसमा मताः ॥ कौर्मे—संपृष्टा वैष्णवान् विप्रान् विष्णुशास्त्रविशारदान् । चीर्णव्रतान् सदाचारान् तदुक्तं यत्नतश्चरेत् ॥ वैष्णवतन्त्रे—येषां गुरौ च जप्ये च विष्णौ च परमात्मनि । नास्ति भक्तिः सदा तेषां वचनं परिवर्जयेदिति । तथाह, एवं सदेत्यादौ, तन्निष्ठविप्राभिहितः शशासहेति ॥ २८३ ॥

अम्बरीष इति प्रकरणलब्धम् ॥ ९ ॥ ४ ॥ श्रीशुकः ॥ २८३ ॥

ननु भगवन्नामात्मका एव मन्त्राः । तत्र विशेषेण नमःशब्दाद्यलङ्कृताः श्रीभगवता श्रीमदृषिभिश्चाहितशक्तिविशेषाः श्रीभगवता सममात्मसम्बन्धविशेषप्रतिपादकाश्च । तत्र केवलानि श्रीभगवन्नामान्यपि निरपेक्षाण्येव परमपुरुषार्थफलपर्य्यन्तदानसमर्थानि । ततो मन्त्रेषु नामतोऽप्यधिकसामर्थ्ये लब्धे कथं दीक्षाद्यपेक्षा ? उच्यते—यद्यपि स्वरूपतो नास्ति, तथापि प्रायः स्वभावतो देहादिसम्बन्धेन कदर्य्यशीलानां विक्षिप्तचित्तानां जनानां तत्तत्सङ्कोचीकरणाय श्रीमदृषिप्रभृतिभिरत्रार्चनमार्गे क्वचित् क्वचित् काचित् काचिन्मर्य्यादा स्थापितास्ति । ततस्तदुल्लङ्घने शास्त्रं प्रायश्चित्तमुद्भावयति । तत उभयमपि नासमञ्जसमिति तत्र तत्तदपेक्षा नास्ति । यथा श्रीरामचन्द्रमुद्दिश्य रामार्चनचन्द्रिकायाम्—वैष्णवेष्वपि मन्त्रेषु राममन्त्राः फलाधिकाः । गाणपत्यादिमन्त्रेभ्यः कोटिकोटिगुणाधिकाः । विनैव दीक्षां विप्रेन्द्र पुरश्चर्य्यां विनैव हि । विनैव न्यासविधिना जपमात्रेण सिद्धिदा इति ॥ एवं साध्यत्वादिपरीक्षानपेक्षा च क्वचित् श्रूयते । यथोक्तं मन्त्रदेवप्रकाशिकायाम्—सौरमन्त्राश्च येऽपि स्युर्वैष्णवा नारसिंहकाः । साध्यसिद्धसुसिद्धारिविचारपरिवर्जिता इति । तन्त्रान्तरे—नृसिंहार्कवराहाणां प्रसादप्रवणस्य च । वैदिकस्य च मन्त्रस्य सिद्धादीनैव शोधयेदिति । सनत्कुमारसंहितायाम्—

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

साध्यः सिद्धः सुसिद्धश्च अरिश्चैव च नारद। गोपालेषु न शो
स्वप्रकाशो यतः स्मृतः॥ अन्यच्च। सर्वेषु वर्णेषु तथाश्रमेषु ना
नानाह्वयजन्मभेषु। दाता फलानामभिवाञ्छितानां प्रागेव गोपाल
मन्त्र एव इत्यादि। मर्य्यादा यथा ब्रह्मयामले—श्रुतिस्मृतिपुराणा
पञ्चरात्रविधिं विना। ऐकान्तिकी हरेर्भक्तिरुत्पातायैव कल्प
इत्थमेवाभिप्रेतं श्रीपृथिव्या चतुर्थे—अस्मिंल्लोकेऽथवामुष्मिन् मुनि
स्तत्त्वदर्शिभिः। दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये॥ ता
तिष्ठति यः सम्यगुपायान् पूर्वदर्शितान्। अवरः श्रद्धयोपेत उपा
विन्दतेऽञ्जसा।ताननादृत्य यो विद्वानर्थानारभते स्वयम्। त
व्यभिचरन्त्यर्था आरब्धाश्च पुनः पुनरिति। अतएवोक्तं पाद्मे श्रीना
यणनारदसंवादे—मद्भक्तो यो मदर्चाञ्च करोति विधिवद्
तस्यान्तरायाः स्वप्नेऽपि न भवन्त्यभयो हि स इति। तदेतदर्चनं
केवलं कर्म्ममिश्रञ्च। तयोः पूर्वं निरपेक्षाणां श्रद्धावतां दर्शितम्
र्होत्रेण य आशु हृदयग्रन्थिमित्यादौ। उक्तञ्च श्रीनारदेन—
यस्यानुगृह्णाति भगवानात्मभावितः। स जहाति मतिं लोके वे
परिनिष्ठितामिति। अत्र श्रीमदगस्त्यसंहिता च—यथा विधिनि
च मुक्तं नैवोपसर्पतः। तथा न स्पृशतो रामोपासकं विधिपू
मिति। उत्तरं व्यवहारचेष्टातिशयवत्तायादृच्छिकभक्त्यनुष्ठानवत्
लक्षणलक्षितश्रद्धानां तथा तद्वैपरीत्यलक्षितश्रद्धानामपि प्रतिष्ठि
त भक्तिवार्त्तानभिज्ञबुद्धिषु साधारणवैदिकीकर्म्मानुष्ठानलोपोऽपि
दिति लोकसंग्रहपराणां गृहस्थानां दर्शितम्। यथा—न ह्य
ऽनन्तपारस्येत्यादौ, सन्ध्योपास्त्यादिकर्म्माणि वेदेनाचोदितानि
पूजां तैः कल्पयेत् सम्यक्संकल्पः कर्म्मपावनीमित्यादि॥

स्पष्टम्॥ ११॥ २७॥ श्रीभगवान्॥२८४॥

श्रीनारदपञ्चरात्रे चैवमेव श्रीनारायणवाक्यं श्राद्धकथना
नाचरेद्यस्तु सिद्धोऽपि लौकिकं धर्म्ममग्रतः। उपप्लवाच्च

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ग्लानिर्भवति नारद । विवेकज्ञैरतः सर्वैर्लोकाचारो यथा स्थितः । आदेहपातादयत्नेन रक्षणीयः प्रयत्नत इति । एतेषाञ्च द्विविधा कर्मव्यवस्था । श्रीनारदपञ्चरात्रादौ, अन्तर्य्यामिश्रीभगवद्दृष्ट्यैव सर्वाराधानं विहितं, विष्णुयामलादौ तु, विष्णुपादोदकेनैव पितॄणां तर्पणक्रिया । विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरमित्यादिप्रकारेण विहितमिति । ये तु तत्र श्रीभगवत्पीठावरणपूजायां गणेशदुर्गाद्यावर्त्तन्ते, ते हि विष्वक्सेनादिवत् भगवतो नित्यवैकुण्ठसेवकाः । ततश्च ते गणेशदुर्गाद्या ये परे मायाशक्त्यात्मका गणेशदुर्गाद्यास्ते तु न भवन्ति । न यत्र माया किमुतापर इति द्वितीयोक्तेः । ततो भगवत्स्वरूपभूतशक्त्यात्मका एव ते । यत एव च श्रीकृष्णस्वरूपभूते श्रीमदष्टादशाक्षरादिमन्त्रगणेऽपि दुर्गानाम्नो भगवच्छक्त्यात्मकस्वरूपभूतशक्तिवृत्तिविशेषस्याधिष्ठातृत्वं श्रुतितन्त्रादिष्वपि दृश्यते । यथा नारदपञ्चरात्रे श्रुतिविद्यासंवादे— भक्तिर्भजनसम्पत्तिर्भजते प्रकृतिः प्रियम् । ज्ञायतेऽत्यन्तदुःखेन सेयं प्रकृतिरात्मनः । दुर्गेति गीयते सद्भिरखण्डरसवल्लभा ॥ इति । अतएव श्रीभगवदभेदेनोक्तं गौतमीयकल्पे—यः कृष्णः सैव दुर्गा स्याद् या दुर्गा कृष्ण एव स इति । त्वमेव परमेशानि अस्याधिष्ठातृदेवतेत्यादिकन्तु विराट्पुरुषमहापुरुषयोरिव केषाञ्चिदभेदोपासनाविवक्षयैवोक्तम् । सा हि मायांशरूपा तदधीने प्राकृतेऽस्मिन् लोके मन्त्ररक्षालक्षणसेवार्थं नियुक्ता चिच्छक्त्यात्मकदुर्गाया दासीयते न तु सैवाधिष्ठात्री । मायातीतवैकुण्ठावरणकथने यथोक्तं पाद्मोत्तरखण्डे—सत्याच्युतानन्तदुर्गाविष्वक्सेनगजाननाः । शङ्खपद्मनिधी लोकाश्चतुर्थावरणं स्मृतम् ॥ ऐन्द्रकाग्नेययाम्यानि नैर्ऋतं वारुणं तथा । वायव्यं सौम्यमैशानं सप्तमं मुनिभिः स्मृतम् ॥ साध्या मरुद्गणाश्चैव विश्वे देवास्तथैव च । नित्याः सर्वे परे धाम्नि ये चान्ये च दिवौकसः । ते वै प्राकृतनाकेऽस्मिन्न नित्यास्त्रिदशेश्वराः । ते

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ह नाकं महिमानः सचन्त इति वै श्रुतिरिति। किञ्च ... दंष्ट्ररूपा एव ते। यथोक्तं त्रैलोक्यसम्मोहनतन्त्रे अष्टादशाक्षर... ङ्गादिदेवताभेदकथनारम्भे—सर्वत्र देवदेवोऽसौ गोपवेशधरो ... केवलं रूपभेदेन नामभेदः प्रकीर्त्तित इति। अतो नाममात्रसाधारण्ये... नानन्यभक्तैर्न भेतव्यम्। किन्तु भागवतनित्यवैकुण्ठसेवकत्वादि... सेनादिवत् सत्कार्य्या एव ते। यस्यात्मबुद्धिः कुणपे त्रिधातुके इत्यादौ अर्चयित्वा तु गोविन्दं तदीयान्नार्चयेत्तु य इत्यादिपाद्मो... खण्डवचनेन तदसत्कारे दोषश्रवणात्। अतस्तानेवोद्दिश्या... दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून् सुरान्। स्वे स्वे स्थाने त... मुखान् पूजयेत् प्रोक्षणादिभिः ॥ २८५ ॥

पाद्मोत्तरखण्ड एव च—तस्मादवैदिकानाञ्च देवानामर्चनं ... स्वतन्त्रपूजनं यच्च वैदिकानामपि त्यजेत्। अर्चयित्वा जगद्वन्द्यं नारायणं हरिम्। तदावरणसंस्थानं देवस्य परितोऽर्चयेत्। हरे... शेषेण वलिं तेभ्यो विनिक्षिपेत्। होमञ्चैव प्रकुर्वीत तच्छेषेणैव ... इत्यादि ॥११॥२७॥ श्रीभगवान् ॥२८५॥

भूतादिपूजा तु तत्पूजाङ्गत्वे विहितापि न कर्त्तव्या; तदा... देवतात्वाभावात्। निषिद्धञ्च तत्रैव—यक्षाणाञ्च पिशाचानां ... मांसभुजां तथा। दिवौकसानां भजनं सुरापानसमं स्मृतम्। ... अतएवावश्यकपूज्यानामन्येषां तत्स्थोक्तैरपि मद्यादिभिः ... निषिद्धा। यथा सङ्कर्षणादीनाम्। अथ पीठपूजायां येऽधर्म... वर्त्तन्ते गुणत्रयञ्च, तानि तु पाद्मोत्तरखण्डे सृष्टान्यपि न ... तथा स्वायम्भुवागमेऽपि। तस्मान्नादरणीयाणि। केचित्तु नारद... दृष्ट्वा तान्यन्यथैव व्याचक्षते। यथोक्तं तत्रैव—अधर्माद्य... अश्रेयसि नियोजनमिति। अधार्मिकादिषु तत्तदत्यर्थ... रधर्माद्यमित्यर्थः। तथा पीठपूजायां भगवद्धामि श्रीगुर्वा... पूजनमेवं सङ्गच्छते। यथा, य एव भगवानत्र ...

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भक्तावतारत्वेन श्रीगुरुरूपो वर्त्तते, स एव तत्र समष्टिरूपतया वामप्रदेशे साक्षादवतारत्वेनापि तद्रूपो वर्त्तते इति। तथा ये चात्र श्रीरामाद्युपासनायां मैन्दद्विविदादय आवरणदेवतास्ते तु तदीयनित्यधामगता नित्याः शुद्धाश्च ज्ञेयाः। यथाक्रूराघमर्षणे तेन श्रीप्रह्लादादयो दृष्टाः। य एव श्रीप्रह्लादः पृथ्वीदोहनेऽपि वत्सोऽभूत् तदानीं तज्जन्माभावात् चाक्षुषमन्वन्तर एव हिरण्यकशिपोर्जातत्वात्। अन्ये तु स्वस्वधाम्नि नित्यप्राकट्यस्यैव श्रीरामादेः प्रपञ्चप्राकट्यावसरं प्राप्य तत्साहाय्यार्थं नित्यपार्षदमैन्दद्विविदादिशक्त्यावेशिनो जीवाः सुग्रीवादिभागवतद्वेषिवालिप्रभृतिसम्बन्धादुत्तरकाले भगवद्द्वेषिनरकासुरादिसङ्गाच्च दुष्टभावा भवन्तीत्यवधेयम्। प्रपञ्चलोकमिश्रत्वेनैव प्राकट्यसम्भवात्। अथ श्रीकृष्णगोकुलोपासनायामपि यत् श्रीरुक्मिण्यादीनामावरणत्वं तत्तु तच्छक्तिविशेषरूपाणां तासां विमलादीनामिवान्तर्धानगतत्वेनैव मन्यन्ते। यथा ते शङ्खचक्रगदामुद्रादिधारणं श्रीकृष्णचरणचिह्नत्वेनैव स्वीकुर्वन्ति। यथा च द्वारान्तःपार्श्वयोर्गङ्गायमुनयोः पूज्यमानयोर्गङ्गा श्रीगोवर्द्धने प्रसिद्धा मानसगङ्गेति मन्यन्ते। तथा च विष्वक्सेनादयो भद्रसेनादय इति। श्रीकृष्णपीठपूजायां श्वेतद्वीपक्षीरसमुद्रपूजा च गोलोकाख्यस्य तद्धाम्नोऽपि श्वेतद्वीपेति नामत्वात्। कामधेनुकोटिनिःसृतदुग्धपूरविशेषस्य च तत्र स्थितत्वात्। यथोक्तं ब्रह्मसंहितायां तद्वर्णनान्ते—स यत्र क्षीराब्धिः सरति सुरभिभ्यश्च सुमहान् निमेषार्द्धाख्यो वा व्रजति न हि यत्रापि समयः। भजे श्वेतद्वीपं तमहमिह गोलोकमिति यं विदन्तस्ते सन्तः क्षितिविरलचाराः कतिपये इति। एवमन्यत्रापि ज्ञेयम्। तथा सोमसूर्य्याग्निमण्डलान्यप्राकृतान्यतिशैत्यतापगुणपरित्यागेनैव वर्त्तन्ते। तत्र सर्वकल्याणगुणवस्तूनामेवाभिधानाय प्राकृतनिषेधात्। यथा नृसिंहतापन्याम्—तद्वा एतत् परं धाम मन्त्रराजाध्यापकस्य यत्र न दुःखादि यत्र न सूर्य्यो भाति यत्र न

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वायुर्वाति यत्र न चन्द्रमा स्तपति न यत्र नक्षत्राणि भान्ति
यत्र नाग्निर्दहति यत्र न मृत्युः प्रविशतिः यत्र न दोष इत्यादि
तदेवं कर्म्ममिश्रत्वादिनिरसनप्रसङ्गसङ्गत्या तत्परिकरा व्याख्याताः।
अथ तेषां शुद्धभक्तानां भूतशुद्ध्यादिकं यथामति व्याख्यायते। तत्र
भूतशुद्धिर्निजाभिलषितभगवत्सेवौपयिक-तत्पार्षददेहभावनापर्य्यन्ते
तत्सेवैकपुरुषार्थिभिः कार्य्या निजानुकूल्यात्। एवं यत्र यत्रात्मनो
निजाभीष्टदेवतारूपत्वेन चिन्तनं विधीयते तत्र तत्रैव पार्षदत्वे
भाव्यम्। अहंग्रहोपासनायाः शुद्धभक्तैर्द्विष्टत्वात्। ऐक्यञ्च
साधारण्यप्रायमेव। तदीयचिच्छक्तिवृत्तिविशुद्धसत्त्वांशविग्रहत्वात्
दानाम्। अथ केशवादिन्यासादौनां यत्राधमाङ्गविषयत्वं तत्र
ध्यात्वा तत्तन्मन्त्रांश्च जप्त्वैव तत्तदङ्गस्पर्शमात्रं कुर्य्यात्। न तु
मन्त्रदेवतास्तत्र तत्र न्यस्ता ध्यायेत्। भक्तानां तदनौचित्यात्।
मुख्यं ध्यानं श्रीभगवद्धामगतमेव। हृदयकमलगतन्तु योगिमत
स्मरेद्वृन्दावने रम्ये इत्याद्युक्तत्वात्। अतएव मानसपूजा च
चिन्तनीया। कामगायत्रीध्यानञ्च यत् सूर्य्यमण्डले श्रूयते
चिन्त्यम्। गोलोक एव निवसत्यखिलात्मभूत इत्यत्रैवकारात्।
श्रीवृन्दावननाथः साक्षान्न तिष्ठति किन्तु तेजोमयप्रतिमाकारेण
अथ वहिरुपचारैरन्तःपूजायां वेण्वादिपूजा तदङ्गज्योतिर्विलीन
स्वस्याङ्गे निविष्टस्य तस्य तन्मुखादावेव भाव्या। न तु स्वमुखादौ।
वेण्वादितद्भूषणमुद्रादर्शनम्। स्वमुखादौ तथा वेण्वादि यत्
तच्च तस्मै तदीयतत्तत्प्रियवस्तूनां दर्शनार्थमेव। न तु स्वस्यैवाङ्गे
भाव्यन्त इति। पूर्व्वहेतोरेव। तथा मानसादिपूजायां भूतपूर्व्व
करलीलासंवलितत्वमपि न कल्पनामयं किन्तु यथार्थमेव। यतः
प्राकट्यसमये लीलास्तत्परिकराश्च ये प्रादुर्बभूवुस्तादृशाश्च
नित्यं तदीये धाम्नि संख्यातीताःएव वर्त्तन्ते। असुरास्तु न तत्र
किन्तु यन्त्रमयतत्प्रतिमानिभा ज्ञेयाः। एवं विहारैरित्यादौ

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सेतुबन्धमर्कटप्लवनादिभिरितिवत्तत्तल्लीलानां नानाप्रकारैः कौतुकेनानुक्रियमाणत्वात् भगवत्सन्दर्भादौ हि तथा सन्यायं दर्शितास्ति । अथ मानसपूजामाहात्म्यम् । यथा नारदपञ्चरात्रे श्रीनारायणवाक्यम्— अयं यो मानसो योगो जराव्याधिभयापह इत्यादौ, यश्चैतत् परया भक्त्या सकृत् कुर्य्यान्महामते । क्रमोदितेन विधिना तस्य तुष्याम्यहं मुने ॥ इति । एषा क्वचित् स्वतन्त्रापि भवति । मनोमय्या मूर्त्तेरष्टमतया स्वातन्त्र्येण विधानात् । अर्च्चादौ हृदये वापि यथालब्धोपचारकैरित्याविर्होत्रवचनेन वाशब्दात् । अथ पूजास्थानानि विचार्य्यन्ते । तानि च विविधानि । तत्र शालग्रामादिकं तत्तद्भगवदाकाराधिष्ठानमिति चिन्त्यम् । आकारवैलक्षण्यात्, शालग्रामशिला यत्र तत्र सन्निहितो हरिरित्याद्युक्तेः । तत्र च स्वेष्टाकारस्यैव भगवतोऽधिष्ठानं सुष्ठु सिद्धिकरम् । तस्मिन्नेवायत्नतस्तदीयप्राकट्यात्, मूर्त्त्यभिमतयात्मन इत्युक्तेः । श्रीकृष्णादीनान्तु मथुरादिक्षेत्रं महाधिष्ठानम् । मथुरा भगवान् यत्र नित्यं सन्निहितो हरिरित्याद्युक्तेः । तथा तत्तन्मन्त्रध्येयवैभवत्वेन मथुरावृन्दावनादीनां श्रीगोपालतापन्यादौ प्रख्यातत्वात् । मथुरादिक्षेत्राण्येवान्यत्राधिष्ठाने ध्यानेन प्रकाश्य तेषु भगवांश्चिन्त्यते । अथ श्रीमत्प्रतिमायान्तु तदाकारैकरूपतयैव चिन्तयन्ति । आकारैक्यात्, शिलाबुद्धिः कृता किं वा प्रतिमायां हरेर्मयेति भावनान्तरे दोषश्रवणाच्च । एवमेव श्रीभगवता चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरमित्युक्तम् । प्रतिष्ठा प्रतिमा जीवस्य जीवयितुः परमात्मनो मम मन्दिरं मदङ्गप्रत्यङ्गैरेकाकारतास्पदमित्यर्थः । यद्वा प्रतिष्ठालक्षणेन कर्म्मणा पूर्वोक्ता प्रतिमा मम तदास्पदं भवतीत्यर्थः । तथा च हयशीर्षपञ्चरात्रे श्रीमूर्त्तिप्रतिष्ठाप्रसङ्गे, विष्णोः सन्निहितो भवेति सान्निध्यकरणमन्त्रविशेषानन्तरं मन्त्रान्तरम्—यच्च ते परमं तत्त्वं यच्च ज्ञानमयं वपुः । तत् सर्वमेकतो लीनमस्मिन् देहे विबुध्यतामिति । अथवा जीवमन्दिरं सर्वजीवानां परमाश्रयः



CC-0- Jangamwadi Math Collection. Digitized by eGangotri

साक्षाद्भगवानेव प्रतिष्ठेत्यर्थः। परमोपासकाश्च साक्षात्परमेश्वरत्वेनैव तां पश्यन्ति। भेदस्फूर्त्तेर्भक्तिविच्छेदकत्वात् तथैव ह्युचितम्, इत्थमेवोक्तं भगवता—वस्त्रोपवीताभरणपत्रस्रग्गन्धलेपनैः। कुर्वीत सप्रेम मद्भक्तो मां यथोचितमित्यत्र मामिति सर्वत्र च। अतएव विष्णुधर्मे तामधिकृत्य अम्बरीषं प्रति श्रीविष्णुवाक्यम्—तस्यां चित्तं समावेश्य त्यज चान्यान् व्यपाश्रयान्। पूजिसैव ते भक्त्या ध्याता चैवोपकारिणी॥ गच्छंस्तिष्ठन् स्वपन् भुञ्जंस्तामेवाग्रे च पृष्ठतः। उपर्य्यधस्तथा पार्श्वे चिन्तयंस्तामथात्मन इत्यादि। अतएव तत्पूजायामावाहनादिकमित्थं व्याख्यातमागमे—आवाहनञ्चादरेण सम्मुखीकरणं प्रभोः। भक्त्या निवेदनं तस्य संस्थापनमुदाहृतम्। तवास्मीति तदीयत्वदर्शनं सन्निधापनम्॥ क्रियासमाप्तिपर्य्यन्तस्थापनं संनिरोधनम्। सकलीकरणं प्रोक्तं तत्सर्वाङ्गप्रकाशनमिति। अत्र शूद्रादिपूजितार्च्चापूजानिषेधवचनमवैष्णवशूद्रादिपरमेव। न शूद्रा भगवद्भक्तास्ते तु भागवता नराः। सर्ववर्णेषु ते शूद्रा ये न भक्ता जनार्दन इत्युक्तेः। अथ सप्तमे पात्रमित्यादौ श्रीनारदोक्तौ अधिष्ठानविचारे श्रीमदर्च्चातोऽपि यः पुरुषमात्रातिशयस्तत्रापि ज्ञानिनः, स च कैवल्यकामो भक्त्याश्रयः; तस्मिन् प्रकरणे ज्ञाननिष्ठाय देयानीत्युपसंहारे ज्ञानिन एव दानपात्रत्वं परमोत्कर्षोक्तेः। अन्यत्र तु, न मे भक्तश्चतुर्वेदी, नायं सुखापो भगवानित्यादौ, मुक्तानामपि सिद्धानामित्यादौ च, भक्तस्यैव ततोऽप्युत्कर्षः किमुत तदुपास्यायाः श्रीमदर्च्चायाः। अतएव तामुद्दिश्योक्तम्—नारकी व्रजति यो मोहादित्यादि। तथापि पात्रमित्यादीनामर्थोऽपि क्रमेण दर्श्यते—पात्रन्त्वत्र निरुक्तं वै कविभिः पात्रवित्तमैः। हरिरेवैक उर्वीश यन्मयं वै चराचरम्। देवर्ष्यर्हत्सु वै सत्सु तत्र ब्रह्मात्मजादिषु। राजन् यदग्रपूजायामतः पात्रतयाच्युतः॥ २८६॥

तत्र राजसूये॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

जीवराशिभिराकीर्णे इत्यादि ॥ २८७ ॥

सर्वेषां जीवानाम् आत्मनश्च तर्पणरूपा सैव भवतीत्यर्थः ॥

पुराणनेनेत्यादि ॥ २८८ ॥

जीवेन जीवयित्रा जीवान्तर्य्यामिरूपेणेत्यर्थः ॥

तेष्वेव भगवानित्यादि ॥ २८९ ॥

तस्मात्तारतम्यवर्त्तनात्। पुरुषः प्रायो मनुष्यः पात्रम्। तत्र ज्ञान्यादिकं विशिष्टमिति भगवद्वर्त्तनस्यातिशयात्। तत्रापि आत्मा यावान् यथा ज्ञानादिपरिमाणादिकस्तथासौ पात्रमित्यर्थः। एवं स्थितेऽपि कालेनोपासकदोषोत्पत्तौ सत्यां वेददृष्ट्या विशिष्टमधिष्ठानान्तरं प्रकाशितमित्याह—दृष्ट्वा तेषां मिथो नृणाम् अवज्ञानात्मतां नृप। त्रेतादिषु हरेरर्च्चा क्रियायै कविभिः कृता ॥ २९० ॥

मिथोऽवज्ञानमसम्मानः तस्मिन्नात्मा बुद्धिर्येषां तेषां भावं दृष्ट्वा क्रियायै पूजाद्यर्थम् अर्च्चा कृता तत्परिचर्य्यामार्गदर्शनाय सा प्रकाशितेत्यर्थः। एतेन तादृशदोषयुक्तेष्वपि कार्य्यसाधकत्वात् श्रीमदर्च्चाया आधिक्यमेव व्यञ्जितम्। प्रतिमास्वल्पबुद्धीनामित्यत्र च अल्पबुद्धीनामपीत्यर्थः। नृसिंहपुराणादौ ब्रह्माम्बरीषादीनामपि तत्पूजाश्रवणात् ॥

ततोऽर्च्चायामित्यादि ॥ २९१ ॥

तत एवंप्रभावात्। केचिदित्यधिष्ठानवैशिष्ट्येन पूर्वतोऽप्युत्तमसाधनतत्परा इत्यर्थः। नन्ववज्ञावत् द्वेषेऽपि सिद्धिः स्यादित्याशङ्क्यातिप्रसङ्गवारणेच्छया प्रस्तुतपुरुषरूपाधिष्ठानादररक्षेच्छया च तं वारयति, उपास्तापीति ॥

अथ पुरुषेषु पूर्वोक्तविशेषं जात्यादिना विवृणोति—पुरुषेष्वपीत्यादि ॥ २९२ ॥

यो धत्ते त्वं सुपात्रं विदुः ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पूर्वोक्तं ब्राह्मणरूपं पात्रमेव स्तौति—नन्वस्येत्यादिना ॥ २८३ ॥

जगदात्मनः जगति लोकसंग्रहहधर्मादिप्रवर्त्तनेन तन्नियन्तुरित्यर्थः। दैवतं पूज्यत्वेन दर्शितम् ॥ ७ ॥ १४ ॥ श्रीनारदो युधिष्ठिरम् ॥ २८६—२९३ ॥

अथ तदनन्तराध्यायस्यादावेव तेषु सर्वोत्कृष्टमाह द्वाभ्याम्—कर्म्मनिष्ठा इत्यादि ॥ २९४ ॥

अनेन यथात्र मुमुक्षुप्रभृतीनां ज्ञानिपूजैव मुख्या, पुरुषान्तरपूजा तु तदभाव एव, तथा प्रेमभक्तिकामानां प्रेमभक्तपूजा ज्ञेया। ततः प्रेमभक्तानामपि यच्चित्तस्य परमाश्रयरूपं तदभिव्यक्तेः मुख्यसेवार्च्चाया आधिक्यमपि। एवं तदाश्रयरूपस्य विलक्षणप्रकाशस्य त्वादेव श्रीविष्णोर्व्यापकत्वेऽपि शालग्रामादिषु निर्द्धारणम्। तत्र पुरुषवन्नान्तर्य्यामित्वव्यपेक्षं, किन्तु स्वभावनिर्द्देशपरमेव। तन्निवासदेशादीनां महातीर्थत्वापादनादिना कीटादीनामपि कृतार्थत्वकथनात्। तथाच स्कान्दे—शालग्रामशिला यत्र तत्तीर्थं योजनत्रयम्। तत्र दानं जपो होम सर्वं कोटिगुणं भवेत् ॥ पाद्मे—शालग्रामसमीपे तु क्रोशमात्रं समन्ततः। कीकटेऽपि मृतो याति वैकुण्ठभुवनं नरः इति। तस्मादर्च्चाया आधिक्यमेव हि स्थितम् ॥ ७ ॥ १५ ॥ श्रीनारदो युधिष्ठिरम् ॥ २९४ ॥

अथाधिष्ठानान्तराले चैवम्। यथा—सूर्य्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम्। भूरात्मा सर्वभूतानि भद्र पूजापदानि मे॥ सूर्य्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम्। आतिथ्येन तु विप्राग्र्ये गोष्वङ्ग यवसादिना। वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया॥ वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः। स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि। क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम्। धिष्ण्येष्वित्येषु मद्रूपं शङ्खचक्रगदाम्बुजैः। युक्तं चतुर्भुजं शान्तं ध्यायन्नर्च्चेत् समाहितः ॥ २९५ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

टीका च—इदानीमेकादशपूजाधिष्ठानान्याह, सूर्य्ये इति । हे भद्र ! अधिष्ठानभेदेन पूजासाधनभेदमाह, सूर्य्ये इति त्रिभिः । त्रय्या विद्यया। सूक्तोपस्थानादिना । अग्नौ हे उद्धव । मुख्यधिया प्राणदृष्ट्या । तोये तोयादिभिर्द्रव्यैस्तर्पणादिना । स्थण्डिले भुवि मन्त्रहृदयै रहस्यमन्त्रन्यासैः । सर्वाधिष्ठानेषु ध्येयमाह, धिष्ण्येष्वित्येष्विति । इति अनेन प्रकारेण । एषु धिष्ण्येष्वित्येषा । अत्र सर्वत्र चतुर्भुजस्यैवानुसन्धाने सत्यपि द्विधा गतिः । एकाधिष्ठानपरिचर्य्ययैवाधिष्ठितुरुपासनालक्षणा, मन्दिरलेपनादिना तदधिष्ठातृप्रतिष्ठाया इव । यथा वैष्णवे बन्धुसत्कृत्या गोष्वङ्ग यवसादिनेत्यादि, यतो बन्धुसत्कारो वैष्णवविषयक ईश्वरे तु प्रभुभाव उपदिश्यते, ईश्वरे तदधीनेष्वित्यादौ, तथा गोसंप्रदानकमेव यवसादिभोजनदानं युज्यते, न तु श्रीचतुर्भुजसंप्रदानकम्, अभक्ष्यत्वात् । यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः । तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ॥ इति तत्रैव पूर्वमुक्तम् । अन्या तु साक्षादधिष्ठातुरुपासनालक्षणा, यथा हृदि खे ध्याननिष्ठया, तोये द्रव्यैस्तोयपुरस्कृतैरित्यादि । अत्राग्न्यादौ तदन्तर्यामिरूपस्यैव चिन्तनं कार्य्यम् । न जातु निजप्रेमसेवाविशेषाश्रयस्याभीष्टरूपविशेषस्य । स तु सर्वथा परमसुकुमारत्वादिबुद्धिजनितया प्रीत्यैव सेवनीयः । यथोक्तं श्रीभगवतैव—वस्त्रोपवीताभरणैरित्यादि । तेषां यथाभक्तिरीत्या परमेश्वरस्यापि तथाभावः श्रूयते । यथा श्रीनारदीये—भक्तिग्राह्यो हृषीकेशो न धनैर्धरणीसुराः । भक्त्या संपूजितो विष्णुः प्रददाति समीहितम् । जलेनापि जगन्नाथः पूजितः क्लेशहा हरिः । परितोषं व्रजत्याशु तृषार्त्तः सुजलैर्यथेति । अत्र दृष्टान्त उपजीव्यः । वैपरीत्ये दोषश्च । यथा ग्रीष्मे जलस्थ पूजा प्रशस्ता वर्षासु निन्दिता । यदुक्तं गारुड़े—शुचि शुक्रगते काले येऽर्चयिष्यन्ति केशवम् । जलस्थं विविधैः पुष्पैर्मुच्यन्ते यमताड़नात् । घनागमे प्रकुर्वन्ति जलस्थं वै जनार्दनम् ॥ ये जना नृपतिश्रेष्ठ तेषां वै नरकं ध्रुवमिति । एवमन्यत्रापि । परि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

चर्य्याविधौ तद्देशकालसुखदानि शतशो विहितानि। तद्विपरी
निषिद्धानि च विष्णुयामले—विष्णोः सर्वर्त्तुचर्य्या चेति।
एवोक्तम्—यद्यदिष्टतमं लोक इत्यादि। तत्र तत्रेष्टमन्त्र
च सर्वर्त्तुसुखमयमनोहररूपरसगन्धस्पर्शशब्दमयत्वेनैव ध्यातं
मस्ति। अन्यथा तत्तदाग्रहस्य वैयर्थ्यं स्यात्। तस्मादन्यादौ
र्यामिरूप एव भाव्य इति स्थितम् ॥११॥११॥ श्रीभगवान् ॥२८॥

अथ नैवेद्यार्पणप्रसङ्गे यः क्रमदीपिकादर्शितो निरुद्धनामा
मन्त्रस्तस्य स्थाने श्रीकृष्णैकान्तिकभक्तास्तु तन्मूलमन्त्रमेवेच्छ
तथा यच्च तन्मुखज्योतिरनुगतत्वेन ध्यातुं विधीयते, तत्तु
समये तन्मुखप्रसादमेव मन्यन्ते। भोजनन्तु यथा लोकसिद्ध
लीलत्वात् श्रीकृष्णस्य। अथ जपे मन्त्रार्थस्य नानात्वेऽपि पुरुषा
कूल एवासौ चिन्त्यः। यथा श्रीमदष्टाक्षरादावात्मनिवेदन
चतुर्थ्याद्यभाववति मन्त्रे तदनुसन्धानेनेति। एवमन्येऽपि पूजादि
यथायथं योजनीयाः। शुद्धभक्तिसिद्ध्यर्थं सर्वासां भक्तीनामेव
शुद्धत्वरूपेण द्विविधो हि भेदः सम्मत इति। तदेतदर्चनं फलेदा

एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः। अर्चन्नुभयतः
मत्तो विन्दत्यभीप्सिताम् ॥ २८६ ॥

उभयत इहामुत्र च। यथा—मामेव नैरपेक्ष्येण भक्ति
विन्दति। भक्तियोगं स लभते एवं यः पूजयेत माम् ॥ २८७ ॥

नैरपेक्ष्येण निरुपाधिना। भक्तियोगेन प्रेम्णा। स च मदि
एवंपूजायाः स्यादित्याह, भक्तीति ॥ ११ ॥ २७ ॥ श्रीभगवान् ॥२८

यानि चात्र वैष्णवचिह्नानि निर्माल्यधारणचरणामृतपाना
ङ्गानि तेषाञ्च पृथक् पृथक् माहात्म्यवृन्दं शास्त्रसहस्रेष्वनुसन्
अथार्चनाधिकारिनिर्णयः—एतद्वै सर्ववर्णानामाश्रमाणाञ्च सम्
श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणाञ्च मानद ॥ २८८ ॥

सर्ववर्णानां त्रैवर्णिकानाम्। तथा च स्मृत्यर्थसारे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वैशाखमाहात्म्ये—आगमोक्तेन मार्गेण स्त्रीभिः शूद्रैश्च पूजनम्। कर्त्तव्यं श्रद्धया विष्णोश्चिन्तयित्वा पतिं हृदि। शूद्राणाञ्चैव भवति नाम्ना वै देवतार्चनम्। सर्वे चागममार्गेण कुर्य्युर्वेदानुसारिणा। स्त्रीणामप्यधिकारोऽस्ति विष्णोराराधनादिषु। पतिप्रियहितानाञ्च श्रुतिरेषा सनातनीति। विष्णुधर्मे—देवतायाञ्च मन्त्रे च तथा मन्त्रप्रदे गुरौ। भक्तिरष्टविधा यस्य तस्य कृष्णः प्रसीदति। तद्भक्तजनवात्सल्यं पूजायां चानुमोदनम्। सुमना अर्चयेन्नित्यं तदर्थे दम्भवर्जनम्। तत्कथाश्रवणे रागस्तदर्थे चाङ्गविक्रिया। तदनुस्मरणं नित्यं यस्तन्नामोपजीवति। भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्त्तते। स मुनिः सत्यवादी च कीर्त्तिमान् स भवेन्नरः॥ इति। किञ्च तत्त्वसागरे—यथा काञ्चनतां याति कांस्यं रसविधानतः। तथा दीक्षाविधानेन द्विजत्वं जायते नृणामिति। अथ कृते शुक्लश्चतुर्बाहुरित्यादिना युगभेदे यश्चोपासनायामाविर्भावभेद उच्यते, स च प्रायिक एव। तेभ्यश्चतुर्भ्योऽन्येषामुपासनाशास्त्रादेव। अन्यथेतरोपासनायाः कालासमावेशः स्यात्। श्रूयन्ते च सर्वत्र युगे सर्वोपासकाः। तस्मात् सर्वैरपि सर्वदापि यथेच्छं सर्व एवाविर्भावाः पूज्या इति स्थितम्। अत एतद्वै सर्ववर्णानामित्यादिकं सर्वसम्मतमेव॥ ११॥२७॥उद्धवः श्रीभगवन्तम्॥ २८८॥

तदेतदर्चनं व्याख्यातम्। अस्याङ्गानि चागमादौ ज्ञेयानि। तथा श्रीकृष्णजन्माष्टमीकार्त्तिकव्रतैकादशीमाघस्नानादिकमत्रैवान्तर्भाव्यम्। तत्र जन्माष्टमी यथा विष्णुरहस्ये ब्रह्मनारदसंवादे—तुष्ट्यर्थं देवकीसूनोर्जयन्तीसम्भवं व्रतम्। कर्त्तव्यं वित्तशाठ्येन भक्त्या भक्तजनैरपि। अकुर्वन् याति निरयं यावदिन्द्राश्चतुर्दशेति। तथा—कृष्णजन्माष्टमीं त्यक्त्वा योऽन्यद् व्रतमुपासते। नाप्नोति सुकृतं किञ्चिद्दृष्टं श्रुतमथापि वा इति। वित्तशाठ्यञ्चोक्तमष्टमे—धर्माय यशसेऽर्थाय कामाय स्वजनाय च। पञ्चधा विभजन् वित्तमिहामुत्र च मोदत इति। अथ कार्त्तिको यथा स्कान्दे—एकतः सर्वतीर्थानीत्यादिकमुक्त्वा, एकतः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कार्त्तिको वत्स सर्वदा केशवप्रियः। यत् किञ्चित् क्रियते पुण्यं वि- मुद्दिश्य कार्त्तिके। तदक्षयं भवेत् सर्वं सत्योक्तं तव नारद। अव्रतेन क्षिपेद्यस्तु मासं दामोदरप्रियम्। तिर्य्यग्योनिमवाप्नोति धर्म्मबहिष्कृत इति। अथैकादशी। तत्र तावदस्या अवैष्णवेऽपि नि- त्यम्। तत्र सामान्यतः विष्णुधर्मे—वैष्णवो वाथ सौरो वा कु- र्य्यादेकादशीव्रतमिति। सौरपुराणे—वैष्णवो वाथ शैवो वा सौरो- ऽपि समाचरेदिति। विशेषतश्च नारदपञ्चरात्रे दीक्षानन्तराचार- कथने—समयांश्च प्रवक्ष्यामीत्यादौ, एकादश्यां न भुञ्जीत प- क्षयोरुभयोरपि। जागरं निशि कुर्वीत विशेषाच्चार्चयेद्विभुमिति। ब्रह्म- यामले अपि तत्कथने—दिग्विद्धैकादशीव्रतम्। शुक्लाकृष्णै- कादश्यासहशापारो व्रति तथा। शक्तौ फलादिभुक्तिश्च आद्यश्चैकादशी- द्वादश्याश्च दिवास्वापस्तुलस्यावचयस्तथा॥ तत्र विष्णोर्दिवास्वाप- निषिद्धत्वेनोक्तम्। पाद्मोत्तरखण्डे च वैष्णवधर्म्मकथने—ह- व्रतनिष्ठतेति। तथा स्कान्दे काशीखण्डे सोपर्णद्वारकामाहा- त्म्ये च चन्द्रशर्म्मणो भगवद्धर्म्मप्रतिज्ञा—अद्यप्रभृति कर्त्तव्यं ... कृष्ण तच्छृणु। एकादश्यां न भोक्तव्यं कर्त्तव्यो जागरः सदा। भक्त्यात्र कर्त्तव्यं प्रत्यहं पूजनं तव। पलार्द्धेनापि विद्धन्तु ... वासरं तव। त्वत्प्रोत्याष्टौ मया कार्य्या द्वादश्यां व्रतसंयुता ... दिका। अत उक्तमाग्नेये—एकादश्यां न भोक्तव्यं तद्व्रतं ... महदिति। गौतमीये—वैष्णवो यदि भुञ्जीत एकादश्यां प्रमा- विष्ण्वर्चनं वृथा तस्य नरकं घोरमाप्नुयादिति। मत्स्यभविष्यपु- एकादश्यां निराहारो यद्भुङ्क्ते द्वादशीदिने। शुक्ला वा यदि ... तद्व्रतं वैष्णवं महदिति। स्कान्दे—मातृहा पितृहा चैव ... गुरुहा तथा। एकादश्यान्तु यो भुङ्क्ते विष्णुलोकच्युतो भवे- अत्र वैष्णवानां निराहारत्वं नाम महाप्रसादान्नपरित्याग एव। मन्यभोजनस्य नित्यमेव निषिद्धत्वात्। ब्रह्माण्डपुराणे—एवं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

फलं तोयमन्नपानाद्यमौषधम् । अनिवेद्य न भुञ्जीत यदाहाराय कल्पितम् ॥ अनिवेद्यन्तु भुञ्जानः प्रायश्चित्ती भवेन्नरः । तस्मात् सर्वं निवेद्यैव विष्णोर्भुञ्जीत सर्वदेति । जागरस्यापि नित्यत्वं यथा स्कान्दे उमामहेश्वरसंवादे—सम्प्राप्ते वासरे विष्णोर्ये न कुर्वन्ति जागरम् । भ्रश्यते सुकृतं तेषां वैष्णवानाञ्च निन्दया ॥ मतिर्न जायते यस्य द्वादश्यां जागरं प्रति । न हि तस्याधिकारोऽस्ति पूजने केशवस्य हि ॥ इति । तद्व्रतस्य विष्णुप्रीतिदत्वञ्च श्रूयते, पाद्मोत्तरखण्डे—शृणु देवि प्रवक्ष्यामि द्वादश्याश्च विधानकम् । तस्याः स्मरणमात्रेण सन्तुष्टोऽभूज्जनार्दनः ॥ इति । भविष्ये—एकादशी महापुण्या सर्वपापविनाशिनी । भक्तेस्तु दीपनी विष्णोः परमार्थगतिप्रदेति । अत एव श्रीमदम्बरीषादीनां भक्त्येकनिष्ठानां महाप्रसादैकभुजां तद्व्रतं दर्शयता श्रीभागवतेनापि तदन्तरङ्गवैष्णवधर्मत्वेन सम्मतमिति दिक् । पाद्मे कार्त्तिकमाहात्म्ये च—ब्राह्मणकन्यायाः कार्त्तिकव्रतैकादशीव्रतप्रभावात् श्रीमत्सत्यभामाख्यभगवत्प्रेयसीपदप्राप्तिरपि श्रूयते । किं बहुना । अथ माघः सौपर्णे—दुर्लभो माघमासस्तु वैष्णवानामतिप्रियः । देवतानामृषीणाञ्च मुनीनां सुरनायक । विशेषेण शचीनाथ माधवस्यातिवल्लभः ॥ इति । स्कान्दे ब्रह्मनारदसंवादे—सर्वपापविनाशाय कृष्णसन्तोषणाय च । माघस्नानं सदा कार्य्यं वर्षे वर्षे च नारद ॥ इति । भविष्योत्तरे—एकविंशगणैः सार्द्धं भोगान् त्यक्त्वा यथेप्सितम् । माघमासमुषसि स्नात्वा विष्णुलोकं स गच्छति ॥ इति । एवं श्रीरामनवमीवैशाखव्रतादयस्तत्र ज्ञेयाः । एतत्सर्वमपि सदाचारकथनद्वारा विधत्ते—गां पर्य्यटन्नित्यादौ, व्रतानि चेरे हरितोषणानीति ॥२८८॥

व्रतानि एकादश्यादीनीति । विदुर इति प्रकरणलब्धम् ॥३॥१॥ श्रीशुकः ॥ २८८ ॥

एवं तादृशव्रतेष्वपि तत्तदुपासकानां स्वस्वेष्टदेवतव्रतं सुष्ठ्वेव विधेयमित्यागतम् । तथास्मिन् पादसेवार्चनमार्गे, यानैर्वा पादुकै-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

र्वापि गमनं भगवद्गृहे इत्यादिनागमोक्ता ये द्वात्रिंशदपराधास्त
राजान्नभक्षणं चैवमित्यादिना वाराहोक्ता ये च तत्संख्यकास्तथा
शास्त्रं वहिष्कृत्य अस्माकं यः प्रपद्यत इत्यादिना तदुक्ता ये
बहवस्ते सर्वे, ममार्चनापराधा ये कीर्त्यन्ते वसुधे मया। वैष्णवै
सदा ते तु वर्जनीया प्रयत्नतः ॥ इति वाराहानुसारेण, परित्याज्य
इत्याशयेनाह—अश्रद्धयोपहृतं प्रेष्ठं भक्तेन मम वार्य्यपि। भूर्य्यप्यभक्तो
पहृतं न मे तोषाय कल्पते ॥ ३०० ॥

अश्रद्धाभक्तिशब्दाभ्यामत्रादर एव विधीयते। अपराधास्तु सर्वे
दरात्मका एव, प्रभुत्वावमानतश्च। तस्मादपराधनिदानमनादर
एव परित्याज्य इत्यर्थः ॥ ११ ॥ २७ ॥ श्रीभगवान् ॥ ३०० ॥

महतामनादरस्तु सर्वनाशक इत्याह—न भजति कुमनीषिणां
इज्यां हरिरधनात्मधनप्रियो रसज्ञः। श्रुतधनकुलकर्म्मणां मदैर्ये
धति पापमकिञ्चनेषु सत्सु ॥ ३०१ ॥

अधनाश्च ते आत्मधना भगवदेकधनाश्च ते प्रिया यस्य सः।
भक्तिरसिको हरिः। के कुमनीषिण इत्यपेक्षायामाह, श्रुतेति।
मपराधम् ॥ ४ ॥ ३१ ॥ श्रीनारदः प्रचेतसः ॥३०१॥

किञ्च, न विक्रिया विश्वसुहृत्सखस्य साम्ये न वीताभिमतेस्तवा
महद्विमानात् स्वकृताद्धि मादृक् नङ्क्षत्यदूरादपि शूलपाणेः ॥ ३०
स्पष्टम् ॥ ५ ॥ १० ॥ रहूगणः श्रीभरतम् ॥ ३०२ ॥

अथ तथापि प्रामादिके भगवदपराधे पुनर्भगवत्प्रसादनानि
व्यानि। यथा स्कान्दे अवन्तीखण्डे श्रीव्यासोक्तौ—अहन्यहनि
मर्त्यो गीताध्यायं पठेत्तु वै। द्वात्रिंशदपराधांस्तु क्षमते तस्य के
इति। तत्रैव द्वारकामाहात्म्ये—सहस्रनाममाहात्म्यं यः पठेद्
दपि। अपराधसहस्रेण न स लिप्येत् कदाचन॥ इति।
रेवाखण्डे—द्वादश्यां जागरे विष्णोर्यः पठेत्तुलसीस्तवम्।
दपराधानि क्षमते तस्य केशवः ॥ इति। तत्रैवान्यत्र—तुलसी

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कार्य्यं श्रवणेन विशेषतः। अपराधसहस्राणि क्षमते पुरुषोत्तमः ॥ इति। तत्रैवान्यत्र, कार्त्तिकमाहात्म्ये—तुलस्या कुरुते यस्तु शालग्रामशिलार्चनम्। द्वात्रिंशदपराधांश्च क्षमते तस्य केशवः॥ इति। अन्यत्र—यः करोति हरेः पूजां कृष्णशस्त्राङ्कितो नरः। अपराधसहस्राणि नित्यं हरति केशवः॥ इति। आदिवाराहे—संवत्सरस्य मध्ये तु तीर्थे शौकरके मम। कृतोपवासः स्नानेन गङ्गायां शुद्धिमाप्नुयात्॥ मथुरायां तथाप्येवं सापराधः शुचिर्भवेत्। अनयोस्तीर्थयोरेकं यः सेवेत् सुकृती नरः॥ सहस्रजन्मजनितानपराधान् जहाति सः॥ इति। शौकरके शूकरक्षेत्राख्ये। महदपराधस्तु चाटुकारादिना वा तत्प्रीत्यर्थंकृतेन निरन्तरदीर्घकालीनभगवन्नामकीर्त्तनेन वा तं प्रसाद्य क्षमापनीय इत्यवोचामैव। तत्प्रसादं विना तदसिद्धेः। अतएवोक्तं श्रीशिवं दक्षेण—योऽसौ मया विदिततत्त्वदृशा सभायां क्षिप्तो दुरुक्तिविशिखैर्विगणय्य तन्माम्। अर्वाक् पतन्तमर्हत्तमनिन्दयापाद्दृष्ट्यार्द्रया स भगवान् स्वकृतेन तुष्येदिति। एवमुत्तरत्रापि ज्ञेयम्।

अथ वन्दनम्। तच्च यद्यप्यर्चनाङ्गत्वेनापि वर्त्तते तथापि कीर्त्तनस्मरणवत् स्वातन्त्र्येणापीत्यभिप्रेत्य पृथग्विधीयते। एवमन्यत्रापि ज्ञेयम्। वन्दनस्य पृथग्विधानं चानन्तगुणैश्वर्य्यश्रवणात् तद्गुणानुसन्धानपादसेवादौ विधुतदैन्यानां नमस्कारमात्रे कृताध्यवसायानामर्थे। स एष नमस्कारस्तस्यार्चनत्वेनाप्यतिदिष्टः। यथा नारसिंहे—नमस्कारः स्मृतो यज्ञः सर्वयज्ञेषु चोत्तमः। नमस्कारेण चैकेन साष्टाङ्गेन हरिं व्रजेदिति। तदेतद्वन्दनं यथा—तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम्। हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक्॥ २०३॥

यस्माद्गुणात्मनस्तेऽपि गुणान् विमातुमित्यादिना तादृशत्वमुच्यते तत् तस्मात्। नमः नमस्कारम्। मुक्तिपदे नवमपदार्थस्य मुक्तेरप्याश्रये परिपूर्णदशमपदार्थे। यद्वा मुक्तिरिह पञ्चमस्थगद्यानुसारेण प्रेमैव

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तत्पदे तद्विषये परिपूर्णभगवल्लक्षणे त्वयि दायभाग्भवति। अ
वर्त्तन इव त्वं तस्य दायत्वेन वर्त्तस इत्यर्थः। मुक्तिमात्रन्तु सक
स्कारेणैवासन्नं स्यात्। यथा विष्णुधर्मे—दुर्गसंसारकान्तारमपार
धावताम्। एकः कृष्णे नमस्कारो मुक्तितीरस्य दैशिकः॥ इति।
इत्यत्र सुसमीक्षमाणः प्रतीक्षमाण इति टीका। यद्वा प्रतिक्षणं
पाधिकल्पयैव प्रभुणा तथा तथा क्रियमाणामनुकम्पां सुष्ठुरूपामीक्ष
स्तत्रानन्दीभवन् तां सम्यक् पश्यन् विभावयन् तथा हृदा यद्वा
यद्वा वपुषा नमो विदधज्जनः इत्यादिव्याख्या ज्ञेया। नमस्कारेऽप
श्चैते परिहर्त्तव्याः, विष्णुस्मृत्यादिदृष्टाः, ये खलु एकहस्तकृत
वृतदेहत्व-भगवदग्रपृष्ठ-वामभागात्यन्तनिकट-गर्भमन्दिरगतत्वादि
॥ १० ॥ १४ ॥ श्रीब्रह्मा श्रीभगवन्तम् ॥ ३०३ ॥

अथ दास्यम्। तच्च श्रीविष्णोर्दासम्मन्यत्वम्। जन्मान्तर
यस्य स्यान्मतिरीदृशी। दासोऽहं वासुदेवस्य सर्वान् लोकान् सम
दित्युक्तलक्षणम्। अस्तु तावद्भजनप्रयासः केवलतादृशत्वाभिमान
सिद्धिर्भवतीति अभिप्रेत्यैवोत्तरत्र निर्देशश्च तस्य। यथोक्तम्—
न्तरेत्येतत्पद्यस्यैवान्ते, किं पुनस्तद्गतप्राणाः पुरुषाः संयतेन्द्रियाः
श्रीप्रह्लादस्तुतौ, तत्तेऽर्हत्तमेत्यादिपद्ये तु नमःस्तुतिसर्वकर्मार्पण
चर्य्याचरणस्मृतिकथाश्रवणात्मकं दास्यं टीकायां सम्मतम्। श्रीमद
वाक्ये च—त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः। उच्छिष्टभोजि
दासास्तव मायां जयेमहीति ॥ ३०४ ॥

तत्र तत्र च कार्य्यद्वारैव निर्दिष्टम्। उदाहरणन्तु, स वै
कृष्णपदारविन्दयोरित्यादौ, कामञ्च दास्ये न तु कामकाम्यया
च्छया तं चकारेति वासनान्तरव्यवच्छेदः ॥९॥ ४ ॥ श्रीशुकः ॥
तदेतद्दास्यसम्बन्धेनैव सर्वमपि भजनं महत्तरं भवतीत्य
यन्नामश्रुतिमात्रेण पुमान् भवति निर्म्मलः। तस्य तीर्थपदः किं
दासानामवशिष्यते ॥ ३०५ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यस्य भगवतो नामश्रवणमात्रेण यथाकथञ्चित्तच्छ्रवणेन किं पुनः सम्यक्तत्तद्भजनेनेत्यर्थः । तर्हि दासोऽस्मीत्यभिमानेन सम्यगेव भजतां सर्वत्र साधने साध्ये च किमवशिष्यते । तदधिकमन्यत् किमपि नास्तीत्यर्थः ॥ ९ ॥ ५ ॥ दुर्वासा श्रीमदम्बरीषम् ॥ २०५ ॥

अथ सख्यम् । तच्च हिताशंसयनमयं बन्धुभावलक्षणम् । यन्मित्रं परमानन्दमित्यत्र तथैव मित्रपदन्यासात् । यथा रामार्चनचन्द्रिकायाम्—परिचर्य्यापराः केचित् प्रासादादिषु शेरते । मनुष्यमिव तं द्रष्टुं व्यवहर्त्तुञ्च बन्धुवदिति अस्य चोत्तरत्र पाठः । प्रेमविस्रम्भवत् भावनामयत्वेन दास्यादप्युत्तमत्वापेक्षया । किञ्च परमेश्वरेऽपि यत् सख्यं शास्त्रे विधीयते तन्नाश्चर्य्यम् । न देवो देवमर्चयेदिति तद्भावस्यापि विधानश्रवणात् । किन्तु तद्भावस्तत्सेवाविरुद्ध इति शुद्धभक्तैरुपेक्ष्यते । सख्यन्तु परमसेवानुकूलमित्युपादीयत इति । तदेतत् साक्षाद्भजनात्मकं दास्यं सख्यञ्च टीकायामपि दर्शितमस्ति । तस्यैव मे सौहृदसख्यमैत्रिदास्यं पुनर्जन्मनि जन्मनि स्यादित्यत्र श्रीदामविप्रवाक्ये । यथा श्रीकृष्णस्य भक्तवात्सल्यं दृष्ट्वा तद्भक्तिं प्रार्थयते तस्येति । सौहृदं प्रेम च सख्यं हिताशंसनञ्च मैत्री उपकारित्वञ्च दास्यं सेवकत्वञ्च तत्, समाहार एकवचनं, तस्य सम्बन्धि मे मम स्यात्, न तु विभूतिरित्येतत् । अत्र नवविधायां साध्यत्वात् प्रेमा नान्तर्भाव्यते । मैत्री तु सख्य एवान्तर्भाव्य इति । दास्यसख्यत्वे एव गृहीते । अत्र च ताभ्यां कर्म्मार्पणविश्वासौ न व्याख्यातौ । साक्षाद्भक्तित्वाभावात् । कर्म्मार्पणस्य फलं भक्तिर्विश्वासश्च भक्त्यभिनिवेशहेतुरितीह पूर्वमुक्तम् । यच्च भगवद्विषयहिताशंसनमयं सख्यं, भगवत्कृतहिताशंसनस्य नित्यत्वात् तेन सह तस्य नित्यसहवासाच्च, भजनविशेषेणापि विशिष्टं सम्पादयितुं नातिदुष्करं स्यादित्याह—कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत् सतः । स्वस्यात्मनः सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः ॥ २०६ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

छिद्रवदाकाशवदलिप्तत्वेन सदा वर्त्तमानस्य। नातिप्रयासे
सर्वेषां देहिनां यः स्व आत्मा शुद्धं स्वरूपं तस्य। सामान्यतः
निर्विशेषतयैव सखा। यथावसरं वहिरन्तःकरणविषयादिलक्षणमा
निजप्रेमादिलक्षणामायिकयाश्च सम्पत्तेर्दानेन हिताशंसी
हरिः। तस्मादारोपितानां नश्वराणां विषयाणां जायापत्यादी
मुपार्जनैः किमिति ॥७॥७॥ श्रीप्रह्लादोऽसुरवालकान् ॥ २०६॥

तद्यथा—मयि निर्बद्धहृदयाः साधवः समदर्शिनः। वशे कुर्वन्ति
मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥२०७॥

अत्र दृष्टान्तेनांशतः सख्यात्मिका भक्तिर्लक्ष्यते ॥९॥४॥ श्रीवैकुण्ठो
दुर्वाससम् ॥ २०७ ॥

एवञ्च—शान्ताः समदृशः शुद्धाः सर्वभूतानुरञ्जनाः। यास्यन्त्य
च्युतपदमच्युतप्रियबान्धवाः ॥२०८॥

अच्युत एव प्रियबान्धवो येषाम्। अच्युतस्य पदं तत्सनाथं लोकं
अच्युतशब्दावृत्त्या फलस्य केनाप्यंशेन व्यभिचारित्वं नेति दर्शितं
१२॥ श्रीमैत्रेयः ॥३०८॥

अथ आत्मनिवेदनम्। तच्च देहादिशुद्धात्मपर्य्यन्तस्य सर्वतोभावेन
तस्मिन्नेवार्पणम्। तत्कार्य्यं चात्मार्थचेष्टाशून्यत्वं तन्न्यस्तात्मसा
साध्यत्वं तदर्थैकचेष्टामयत्वञ्च। इदं ह्यात्मार्पणं गोविक्रयवत्
तस्य गोर्वर्त्तनार्थं विक्रीतवता चेष्टा न क्रियते। तस्य च
साधकस्तं क्रीतवानेव स्यात्। स च गौस्तस्यैव कर्म्म कुर्य्यात्
पुनर्विक्रीतवतोऽपीति। इदमेवात्मार्पणं श्रीरुक्मिणीवाक्ये—तन्मे
खलु भवान् पतिरङ्ग जायां मात्मार्पितश्च भवतोऽत्र विभो विधेहि
अत्र केचिद्देहार्पणमेवात्मार्पणमिति मन्यन्ते। यथा भक्तिविवेके
चिन्तां कुर्य्यान्न रक्षायै विक्रीतस्य यथा पशोः। तथार्पयन् हरौ
विरमेदस्य रक्षणात् ॥ इति। केचिच्छुद्धत्वेनन्नार्पणमेव। यथा श्री
लकमन्दारस्तोत्रे—वपुरादिषु योऽपि कोऽपि वा गुणतो यानि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथाविधः। तदयं तव पादपद्मयोरहमद्यैव मया समर्पित इति। केचिच्च दक्षिणहस्तादिकमप्यर्पयन्तस्तेन तत्कर्म्ममात्रं कुर्वते न तु देहादिकर्मेत्याद्यपि दृश्यते। तदेतत् सर्वात्मकं सकार्य्यमात्म-निवेदनं यथा—स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानु-वर्णने। करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम्। घ्राणञ्च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते। पादौ हरेः क्षेत्र-पदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने। कामञ्च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः ॥२०८॥

चकार अर्पयामास। कृष्णपदारविन्दयोरित्यादिकमुपलक्षणं तत्-सेवादीनाम्। लिङ्गं श्रीमूर्त्तिः। आलयस्तद्भक्तास्तन्मन्दिरादिः। श्रीमत्तुलस्यास्तत्पादसरोजसम्बन्धि यत् सौरभं तस्मिन्। तदर्पिते महा-प्रसादान्नादौ। कामं सङ्कल्पं च दास्ये निमित्ते। कथं चकार, यथा येन प्रकारेण उत्तमश्लोकजनाश्रया रतिः सा भवेदिति। अत्र सर्वथा तत्रैव सङ्घातात्मनिक्षेपः कृत इति वैशिष्ट्यापत्त्या स्मरणादिमयोपास-नस्यैवात्मार्पणत्वम्। एवमेवोक्तम्—श्रद्धामृतकथायां मे शश्वन्मदनु-कीर्त्तनमित्यारभ्य, एवं धर्मैर्मनुष्याणामिति। यथा स्मरणकीर्त्तनपाद-सेवनमयमुपासनमेव आगमोक्तविधिमयत्ववैशिष्ट्यापत्त्यार्चनमित्यभि-धीयते। ततो नाविविक्तत्वम्। स्नानपरिधानादिक्रिया चास्य भगवत्-सेवायोग्यत्वायैवेति तत्रापि नात्मार्पणभक्तिहानिरित्यनुसन्धेयम्। एतदात्मार्पणं श्रीबलावपि स्फुटं दृश्यते। उदाहृतञ्चेदमात्मार्पणं धर्मार्थकाम इत्यादिना श्रीप्रह्लादमते। मर्त्यो यदा त्यक्तसमस्त-कर्मा निवेदितात्मेत्यादिना श्रीभगवन्मतेऽपि। तदेतदात्मनिवेदनं भावं विना भाववैशिष्ट्येन च दृश्यते। पूर्वं यथा मर्त्यो यदेत्यादि। उत्तरं यथैकादश एव दास्येनात्मनिवेदनमिति। यथा च रुक्मिणी-वाक्य आत्मार्पितश्च भवत इति ॥९॥४॥ श्रीशुकः ॥२०९॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदेवं वैधी भक्तिर्दर्शिता। अस्याश्चोक्तानामङ्गानामनुष्ठाने कुत्रचित् कस्याप्यङ्गस्यान्यत्र तु तदितरस्य यन्महिमाधिक्यं वर्णितं तत् तत्तच्छ्रद्धाभेदेन तत्तत्प्रभावोल्लासापेक्षयेति न परस्परविरुद्धत्वम्। अधिकारिभेदेन ह्यौषधादीनामपि तादृशत्वं दृश्यते। अथ रागानुगा। तत्र विषयिणः स्वाभाविको विषयसंसर्गेच्छातिशयमयः प्रेमा रागः। यथा चक्षुरादीनां सौन्दर्य्यादौ। तादृश एवात्र भक्तस्य श्रीभगवत्यपि राग इत्युच्यते। स च रागो विशेषणभेदेन बहुधा दृश्यते। येषाम् प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टमित्यादौ। तत्र प्रियः यथा तदीयप्रेयसीनाम्। आत्मा परब्रह्मरूपः श्रीसनकादीनाम्। सुतः श्रीव्रजेश्वरादीनाम्। सखा श्रीश्रीदामादीनाम्। गुरुः श्रीप्रद्युम्नादीनाम्। कस्यापि भ्राता कस्यापि मातुलेयः कस्यापि वैवाहिक इत्यादिरूपः स एक एव तेषु बहुप्रकारत्वेन सुहृदः सम्बन्धिनाम्। दैवमिष्टं तदीयसेवकानां श्रीदारुकप्रभृतीनामिति प्रसिद्धम्। श्रीमत्यां मोहिन्यां यः खलु रुद्रस्य भावो जातः स तु नाङ्गीकृतः अनुक्तत्वात्, तस्य मायामोहिततयैव तादृशभावाभ्युपगमाच्च। तदेवं तत्तदभिमानलक्षणभावविशेषेण स्वाभाविकरागस्य वैशिष्ट्ये सति तत्तद्रागप्रयुक्ता श्रवणकीर्त्तनस्मरणपादसेवनवन्दनात्मनिवेदनप्राया भक्तिस्तेषां रागात्मिका भक्तिरित्युच्यते। तस्याश्च साध्यायां रागलक्षणभक्तिगङ्गायां तरङ्गरूपत्वात् साध्यत्वमेवेति न तु साधनप्रकरणेऽस्मिन् प्रवेशः। अतो रागानुगा कथ्यते। यस्य पूर्वोक्ते रागविशेषे रुचिरेव जातास्ति न तु रागविशेष एव स्वयं, तस्य तादृशरागसुधाकरकराभाससमुल्लसितहृदयस्फटिकमणेः शास्त्रादिश्रुतासु तादृश्या रागात्मिकाया भक्तेः परिपाटीष्वपि रुचिर्जायते। ततस्तदीयं रागं रुचानुगच्छन्ती सा रागानुगा तस्यैव प्रवर्त्तते। एषैवाविहिते केषाञ्चित् संज्ञा रुचिमात्रप्रवृत्त्या विधिप्रयुक्तत्वेनाप्रवृत्तत्वात्। न च वक्तव्यं विध्यनधीनस्य न सम्भवति भक्तिरिति। प्रायेण मुनयो राजन् निवृत्ता

विधिषेधतः । नेमं स्वस्था रमन्ते स्म गुणानुकथने हरेरित्यत्र श्रूयते । ततो विधिमार्गभक्तिर्विधिसापेक्षेति सा दुर्बला इयन्तु स्वतन्त्रैव प्रवर्त्तते इति प्रबला च ज्ञेया । अतएवास्या जन्मलक्षणं भक्तिव्यतिरेकेणान्यत्रानभिरुचित्वमित्याद्यपि ज्ञेयम् । यथोक्तं तृतीये श्रीविदुरेण भगवत्कथारुचिमुपलक्ष्य—सा श्रद्दधानस्य विवर्द्धमाना विरक्तिमन्यत्र करोति पुंसः । हरेः पदानुस्मृतिनिर्वृतस्य समस्तदुःखाप्ययमाशु धत्ते ॥ इति । सा पूर्वोक्ता कथाग्रहीता मतिस्तद्रुचिरित्यर्थः । विधिनिरपेक्षत्वादेव पूर्वाभ्यां दास्यसख्याभ्याम् एतदीययोस्तयोर्भेदश्च ज्ञेयः । (एवमेवोक्तं तन्मन्येऽधीतमुत्तममिति) अतएव विध्युक्तक्रमोऽपि नास्यामत्यादृतः । किन्तु रागात्मिकाश्रुतक्रम एव । तत्र रागात्मिकायां रुचिर्यथा—सुहृत् प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् । तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा ॥ ३१० ॥

अत्र स्वाभाविकसौहृद्यादिधर्मैस्तस्मिन्नेव स्वाभाविकपतित्वं स्थापयित्वा परस्योपाधिकपतित्वमित्यभिप्रेतम् । अन्यत्र पत्यावेकत्वं सा गता यस्माच्चरुमन्त्राहुतिव्रतेति छन्दोगपरिशिष्टानुसारेण कृत्रिममेवात्मत्वम् । तस्मिन् परमात्मनि तु स्वभावत एवेत्यात्मशब्दस्याप्यभिप्रायः । एवं यद्यपि तस्मिन् पतित्वमनाद्यार्थ्यमेवास्ति तथापि आत्मनैव मूलभूतेन तं विशेषतः क्रीत्वा यथान्यापि कन्या विवाहात्मकेन स्वात्मसमर्पणेन कञ्चित् पतित्वेनोपादत्ते तथाभावेनाश्रित्य । अनेन परममनोहररूपेण तेन सह रमे रमा लक्ष्मीर्यथा । तदेवं तस्या पिङ्गलाया स्वरुचिर्द्योतिता । रागानुगायां प्रवृत्तिरपीदृशी । सन्तुष्टा श्रद्दधत्येतद्यथालाभेन जीवती । विहराम्यमुनैवाहमात्मना रमणेन वै ॥ ३११ ॥

अमुनेति भावमर्भरमणेन सह । आत्मना मनसैव तावद्विहरामि । रुचिप्रधानस्य मार्गस्यास्य मनःप्रधानत्वात् । तत्प्रेयसीरूपेणासिद्धायास्तादृशभजने प्रायो मनसैव युक्तत्वात् । अनेन श्रीमत्प्रति-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मादौ तादृशीनामप्यौद्धत्यं परिहृतम्। एवं पितृत्वादिभावेष्वप्य-
सन्धेयम् ॥ ११ ॥ ८ ॥ श्रीपिङ्गला ॥ ३११ ॥

एवं प्रेयसीत्वाभिमानमयी दर्शिता। एषा ब्रह्मवैवर्त्ते कामकला-
मपि दृष्टा। सैत्रकत्वाद्यभिमानमय्यां रुचिभक्तिश्चान्यत्र ज्ञेया। त-
दमूस्तनुभृतामित्यादावुपनय मां निजभृत्यपार्श्वमिति श्रीप्रह्लाद-
वत्। यथा श्रीनारदपञ्चरात्रादौ—कदा गम्भीरया वाचा श्रिया यु-
जगत्पते। चामरव्यग्रहस्तं मामेवं कुर्व्विति वक्ष्यसीति।
स्कान्दे सनत्कुमारप्रोक्तसंहितायां प्रभाकरराजोपाख्याने—श्रुत्वे-
स वै नैच्छत् पुत्रं कर्म्मानुचिन्तयन्। वासुदेवं जगन्नाथं सर्वा-
सनातनम्। अशेषोपनिषद्वेद्यं पुत्रीकृत्य विधानतः। अभिषि-
राजा स्वराज उपचक्रमे। न पुत्रमभ्यर्थितवान् साक्षादभूता-
र्दनात्॥ अग्रे भगवद्वरश्च, अहन्ते भविता पुत्र इत्यादि।
एवोक्तं श्रीनारायणव्यूहस्तवे—पतिपुत्रसुहृद्भ्रातृपितृवन्मितवर्ति
ये ध्यायन्ति सदोद्युक्तास्तेभ्योऽपीह नमो नमः॥ इति। अत्र पत्नी-
वदिति ध्येयस्य पितृवदिति ध्यातुर्विशेषणं ज्ञेयम्। तथा मातृवदि-
वतिप्रत्ययेन प्रसिद्धतन्मातृजनाभेदभावना नैवाङ्गीक्रियते।
तदनुगतभावनैव। एवं पितृभावादावपि ज्ञेयम्। अन्यथा भगव-
ग्रहोपासनावत्तेष्वपि दोषः स्यात्। तथा ध्यायन्तीति पूर्वोक्तं मन-
नत्वमेवोरीकृतम्। अपिशब्देन तत्तद्रागसिद्धानां कैमुत्यमाक्षिप्यते।
चोदनालक्षणोऽर्थो धर्म्म इत्यनेन पूर्वमीमांसायां विधिनैवापूर्वं
इति श्रूयते। तथा श्रुतिस्मृतिपुराणोक्तपञ्चरात्रविधिं विना इत्या-
यामले श्रुत्याद्येकतरोक्तक्रमनियमं विना दोषः श्रूयते। तथा श्रुति-
ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते। आज्ञाच्छेदी मम द्वेषी मद्भक्तो-
वैष्णवः॥ इत्यत्र श्रुत्याद्युक्तावश्यकक्रियानिषेधयोरुल्लङ्घनं वैष्ण-
व्याघातकं श्रूयते। कथं तर्हि विधिनिरपेक्षया तया सिद्धिः? तत्र
श्रीभगवन्नामगुणादिषु वस्तुशक्तेः सिद्धत्वात् न धर्म्मवन्नोदना-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्वम् । अतो ज्ञानादिकं विनापि फललाभो बहुत्र श्रुतोऽस्ति । चोदना तु यस्य स्वतः प्रवृत्तिर्नास्ति तद्विषयैव । तथा क्रमविधिश्च तद्विषयः । तस्मिन्नेव नानाविक्षेपवति रुच्यभावेन रागात्मकभक्तिशैलीमनभिजानति, सत्यामपि धावन्निमील्य वा नेत्रे इत्यादिन्यायेन यथाकथञ्चिदनुष्ठानतः सिद्धौ, सुष्ठु वर्त्मप्रवेशाय क्रमशश्चित्ताभिनिवेशाय च मर्य्यादारूपः स निर्म्मीयते । अन्यथा सन्तततज्जत्युन्मुखताकरताट्टशरुच्यभावान्मर्य्यादानभिपत्तेश्चाध्यात्मिकादिभिस्तत्पातैर्विहन्यते च स इति । न तु स्वयं प्रवृत्तिमत्यपि मर्य्यादानिर्माणं, तस्य रुच्यैव भगवन्मनोरमरागात्मिकाक्रमविशेषाभिनिवेशात् । तदुक्तं स्वयमेव—ज्ञात्वाज्ञात्वाथ ये वै मामित्यादिना । रागात्मकभक्तिमतां दुरभिसन्धिनाप्यनुकरणमात्रेण श्रेष्ठत्वप्राप्तिः श्रूयते । यथा धात्रीत्वानुकरणेन पूतनायाः । तदुक्तं, सद्वेषादिव पूतनापि सकुलेति । किमुत तदीयरुचिमङ्गिस्ताट्टशनिरन्तरसम्यग्भक्त्यनुष्ठानेन । तदुक्तम्—पूतना लोकबालघ्नी राक्षसी रुधिराशना । जिघांसयापि हरये स्तनं दत्त्वाप सद्गतिम् । किं पुनः श्रद्धया भक्त्या कृष्णाय परमात्मने । यच्छन् प्रियतरं किं नु रक्तास्तन्मातरो यथेति । अत उक्तम्—न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणा इति । एकान्तित्वं खलु भक्तिनिष्ठा । सा रुच्यैव वा शास्त्रविध्यादरेणैव वा जायते । ततो रुचेर्विरलत्वादुत्तराभावेनापि यदैकान्तिकीत्वं तत्तस्यैकान्तिमानिनो दम्भमात्रमित्यर्थः । ततस्तदनूद्यैव निन्दा, श्रुतिस्मृतिपुराणेत्यादिना । न तु रुचिभावेऽपि तन्निन्दा युक्ता, पूतनेत्यादेः । तथाचोक्तं पाद्मोत्तरखण्डे—स्वातन्त्र्यात् क्रियते कर्म्म न च वेदोदितं महत् । विनैव भगवत्प्रीत्या ते वै पाषण्डिनः स्मृता इति । प्रीतिरत्र ताट्टशरुचिः । तदेवमत्र शास्त्रानादरस्यैव निन्दा, न तु तदज्ञानस्य । धावन्निमील्य वेत्यादेः । गौतमीयतन्त्रे लिङ्गमप्युक्तम्—न जपो नार्चनं नैव ध्यानं नापि विधिक्रमः । केवलं सन्ततं कृष्णचरणाम्भोजभाविनाम् ॥ अजात-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ताट्टशरुचिना तु सद्विशेषादरमात्राद्दृता रागानुगापि वैधीसंवलिता
ष्टेया। तथा लोकसंग्रहार्थं प्रतिष्ठितेन जाततादृशरुचिना च।
मिश्रत्वे च यथायोग्यं रागानुगयैकीकृत्यैव वैधी कर्त्तव्या। केचित्
दशाक्षरध्यानं गोदोहनसमयवंशीवाद्यसमाकृष्टतत्तत्सर्वमयत्वेन
यन्ति। यथा चैके तादृशमुपासनं साक्षाद् व्रजजनविशेषावैः
श्रीगुरुचरणैर्मदभीष्टविशेषसिद्ध्यर्थमुपदिष्टं भावयामि।
श्रीव्रजेन्द्रनन्दनं सेव्यमान एवास्म इति भावयन्ति। अथ श्रुतिः
ममैवाज्ञे इत्यादिनिन्दितमात्रस्यावश्यकक्रियानिषेधयोरुल्लङ्घनं
धम्। तौ हि धर्म्मशास्त्रोक्तौ भक्तिशास्त्रोक्तौ चेति। भगवद्
विश्वासेन दौःशील्येन वा पूर्वयोरकरणकरणप्रत्यासत्तौ न वै
भावाद्भ्रंशः; देवर्षिभूताप्तनृणामित्याद्युक्तेः अपि चेत् सु
चार इत्याद्युक्तेश्च। तादृशरुचिमति तु तयैव रुचा हिष्टत्वादपुरु
ह्यानन्दस्यापि वाञ्छा नास्ति किमुत परमद्वेषास्पदस्य। अत
स्वत एव न प्रवृत्तिः। प्रमादादिना कदाचिज्जातं चेद्विकर्म्म तद्
नश्यत्यपि। उक्तञ्च—विकर्म्म यच्चोत्पतितं कथञ्चिद्धुनोति सर्वं
सन्निविष्ट इति। अथ वैष्णवशास्त्रोक्तौ। तौ तर्हि विष्णुसन्तो
प्रयोजनाविव भवतः। तयोश्च तादृशत्वे श्रुते सति तदीयरागरु
स्वत एव प्रवृत्त्यप्रवृत्ती स्यातां तत्सन्तोषैकजीवनत्वात् प्रीतिः
अतएव न तत्र स्वानुगम्यमानरागात्मकसिद्धभक्तविशेषेण
त्वयोरनुसन्धानञ्चापेक्ष्यं स्यात्। किन्तु तत्कृतत्वे सति विशे
ग्रहो भवतीत्येव विशेषः। अत्र क्वचिच्छास्त्रोक्तक्रमविध्यपेक्षा
रुच्यैव प्रवर्त्तितेति रागानुगान्तःपात एव। ये च श्रीगोकुलादि
रागात्मिकानुगास्तत्पराः ते तु श्रीकृष्णक्षेमतत्संसर्गान्तराया
कास्यात्मकतदभिप्रायरीत्यैव वैष्णवलौकिकधर्म्मानुष्ठानं कुर्वन्ति।
एव रागानुगायां रुचेरेव सद्धर्म्मप्रवर्त्तकत्वात् श्रुतिस्मृती
इत्येतद्वाक्यस्य न तद्वत्भक्तविषयत्वम्। अपि चेत् सुदुराचार इत्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विरोधान्न च विधिवर्त्मभक्तिविषयत्वम्। किन्तु वाह्यशास्त्रनिर्मित-वुद्धर्षभदत्तात्रेयादिभजनवर्त्मविषयत्वमेव। तथोक्तम्—वेदधर्म्मविरुद्धात्मा यदि देवं प्रपूजयेत्। स याति नरकं घोरं यावदाहूतसंप्लवमिति। रागानुगायां विध्यप्रवर्त्तितायामपि न वेदवाह्यत्वम्। वेदवैदिकप्रसिद्धैव सा तत्र तत्र रुचित्वात्। वेदेषु बुद्धादीनान्तु वर्णनं वेदवाह्यं विरुद्धत्वेनैव। यथा, ततः कलौ संप्रवृत्ते सम्मोहाय सुरद्विषाम्। बुद्धो नाम्नाजिनसुतः कीकटेषु भविष्यतीत्यादि। तस्माद्भवत्येव रागानुगा समीचीना। तथा वैधीतोऽप्यतिशयवती च। मर्य्यादावचनं ह्यावेशार्थमेवेति दर्शितम्। स पुनरावेशो यथा रुचिविशेषलक्षणमानसभावेन स्यात् न तथा विधिप्रेरणया। स्वारसिकमनोधर्म्मत्वात्तस्य। तत्र चास्तां तावदनुकूलभक्तिः। परमनिषिद्धेन प्रतिकूलभावेनाप्यावेशो झटिति स्यात्। तदावेशसामर्थ्येन प्रतिकूलदोषहानिः स्यात्। सर्व्वानर्थनिवृत्तिश्च स्यादिति। भावमार्गस्य बलवत्त्वे दृष्टान्तोऽपि दृश्यते। तत्र यद्यनुकूलभावः स्यात्तदा परमैकान्तिसाध्य एवासौ। अथ भावमार्गसामान्यस्य बलवत्त्वं दर्शयितुं प्रकरणमुत्थाप्यते—श्रीयुधिष्ठिर उवाच। अहो अत्यद्भुतं ह्येतद्दुर्लभैकान्तिनामपि। वासुदेवे परे तत्त्वे प्राप्तिश्चैद्यस्य विद्विषः ॥ ३१२ ॥

एकान्तिनां परमज्ञानिनामपि यतस्तस्य सा न सम्भवति। एतद्वेदितुमिच्छामः सर्व्व एव वयं मुने। भगवन्निन्दया वेणो द्विजैस्तमसि पातितः ॥ ३१३ ॥

तमसि नरके। बहुनरकादिभोगानन्तरमेव पृथुजन्मप्रभावोदयेन तस्य सद्गतिश्रवणात्। एवं दमघोषसुतः पाप आवाल्यकलभाषणात्। संप्रत्यमर्षी गोविन्दे दन्तवक्रश्च दुर्मतिरित्यादि ॥ ३१४ ॥

स्पष्टं तत्रोत्तरं, श्रीनारद उवाच यथा, अहो भगवन्निन्दकस्य नरकपातेन भाव्यमिति वदतस्तव कोऽभिप्रायः। भगवत्पीड़ाकरत्वाद्वा तदभावेऽपि सुरापानादिवन्निषिद्धनिन्दाश्रवणाद्वा। तत्र तावद्विमूढ़ैर्जनैर्निन्दादिकं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्राकृतान् तमआदिगुणानुद्दिश्यैव प्रवर्त्तते। ततः प्रकृतिपर्य्यन्ता...
तत्कृतनिन्दादेरप्राकृतगुणविग्रहादौ तस्मिन् प्रवृत्तिर्नास्त्येव। ...
जीववत् प्रकृतिपर्य्यन्ते वस्तुजाते भगवदभिमानोऽस्ति। ततश्च तेन...
पीड़ापि नास्त्येव। तदेतदाह सार्द्धैस्त्रिभिः—निन्दनस्तव सत्...
न्यक्कारार्थं कलेवरम्। प्रधानपरयो राजन्नविवेकेन क...
तम् ॥ १५ ॥

निन्दनं दोषकीर्त्तनम्। न्यक्कारस्तिरस्कारः। निन्दनस्तु...
ज्ञानार्थं प्रधानपुरुषयोरविवेकेन जीवानां कलेवरं कल्पितं रचि...
ततश्च, हिंसातदभिमानेन दण्डपारुष्ययोर्यथा। वैषम्यमिह भू...
ममाहमिति पार्थिव। यन्निबद्धोऽभिमानोऽयं तद्वधात् प्राणिनां व...
तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः। परस्य दमक...
हिंसा केनास्य कल्पते ॥३१६॥

इह प्राकृते लोके। यथा तत्कलेवराभिमानेन भूतानां ममाहं...
वैषम्यं भवति, यथा तत्कृताभ्यां दण्डपारुष्याभ्यां ताड़नादि...
निमित्तभूताभ्यां हिंसा च भवति, यथा यस्मिन्निबद्धोऽभिमान...
देहस्य वधात् प्राणिनां वधश्च भवति, तथा यस्याभिमानो नास्ति...
अस्य परमेश्वरस्य हिंसा केन हेतुना कल्पते अपि तु न केनापि...
तथाभिमानाभावे हेतुः कैवल्यात्। देहेन्द्रियासुहीनानां वै...
पुरवासिनामिति केमुत्यादिप्राप्तशुद्धत्वात्। तादृशनिन्दा...
शुद्धसच्चिदानन्दविग्रहादित्वादित्यर्थः। तस्य तदगम्यत्वञ्च नाहं प्र...
सर्वस्य योगमायासमावृत इति श्रीभगवद्गीतातः। तादृशत्वे...
हेतुः अखिलानामात्मभूतस्य। तत्र हेतुः परस्य प्रकृतिवैभव...
रहितस्य। हिंसाया अविषयत्वे हेत्वन्तरं दमकर्त्तुः परमार्थ...
शक्तित्वात् सर्वेषामेव शिक्षाकर्त्तुरिति। तदेवं यथा...
निन्दादिकृतं वैषम्यं नास्ति तस्माद्येन केनाप्युपायेन सर्व...
प्रतिमान्तराहितेत्यादिवत् तदाभासमपि ध्यायतस्तदावेश...

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वैरेणापि ध्यायतस्तदावेशेनैव निन्दादिकृतपापस्यापि नाशात् तत्-सायुज्यादिकं युक्तमित्याशयेनाह तस्मादित्यादिभिः । तथाहि—तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा । स्नेहात् कामेन वा युञ्ज्यात् कथञ्चिन्नेक्षते पृथक् ॥११७॥

युञ्ज्यादिति स्नेहकामादीनां विधातुमशक्यत्वात् सम्भावनायामेव लिङ् । वैरानुबन्धादीनामेकतरेणापि युञ्ज्यात् ध्यायेत् चेत् तदा भगवतः पृथक् नेक्षते तदाविष्टो भवतीत्यर्थः । वैरानुबन्धो वैरभावाविच्छेदः । निर्वैरं वैराभावमात्रम् औदासीन्यमुच्यते । तेन कामादिराहित्यमप्यायाति । वैरादिभावराहित्यमित्यर्थः । तेन वा वैरादिभावराहित्येन युञ्ज्यात् । विहितत्वमात्रबुद्ध्या ध्यायेत् । ध्यानोपलक्षितं भक्तियोगं कुर्य्यादित्यर्थः । स्नेहः कामातिरिक्तः परस्परमकृत्रिमः प्रेमविशेषः । स तु साधके तदभिरुचिरेव । तदेवं सर्वेषां तदावेश एव फलमिति स्थिते झटिति तदावेशसिद्धये तेषु भावमयमार्गेषु निन्दितेनापि वैरेण विधिमय्या भक्तेर्नासाम्यमित्याह—यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात् । न तथा भक्तियोगेन इति मे निश्चिता मतिः ॥ १७८ ॥

वैरानुबन्धेनेति भयस्याप्युपलक्षणम् । यथा शत्रेण तन्मयतां तदाविष्टताम् । भक्तियोगेन विहितत्वमात्रबुद्ध्या क्रियमाणेन तु न तथा । आस्तां तादृशवस्तुशक्तियुक्तस्य तेषु प्रकाशमानस्य भगवतो भगवद्विग्रहाभासस्य वा वार्त्ता । प्राकृतेऽपि तद्भावमात्रस्य भाव्यावेशफलं महत् दृश्यत इति सदृष्टान्तं तदेव प्रतिपादयति—कीटः पेशस्कृता रुद्धः कुड्यायां तमनुस्मरन् । संरम्भभययोगेन विन्दते तत्स्वरूपताम् । एवं कृष्णे भगवति मायामनुज ईश्वरे । वैरेण पूतपाप्मानस्तमापुरनुचिन्तया ॥ ११९ ॥

संरम्भो द्वेषो भयञ्च । ताभ्यां योगस्तदावेशस्तेन । तत्स्वरूपतां तस्य समानीयं रूपमाकृतिर्यत्र तत्तां तत्स्वारूप्यमित्यर्थः । एवमिति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एवमपीतीत्यर्थः । नराकृतिपरब्रह्मत्वात् माययैव प्राकृतमनुजतया प्रतीयमाने। ननु कीटस्य पेशस्कृद्द्वेषे पापं न भवति तत्र तु तत् स्यादित्याशङ्क्याह,वैरेण यानुचिन्ता तदावेशः तयैव पूतपाप्मानः तद्ध्यानावेशस्य तादृक्शक्तित्वादितिभावः । न च शास्त्रविहितेनैव भगवद्धर्मेण सिद्धिः स्यात् न तदविहितेन कामादिनेति वाच्यम् । यतः, कामाद्द्वेषाद्भयात् स्नेहात् यथा भक्त्येश्वरे मनः । आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥ ३२० ॥

यथा विहितया भक्त्या ईश्वरे मन आवेश्य तद्गतिं गच्छन्ति तथैवाविहितेनापि कामादिना बहवो गता इत्यर्थः । तदघं तेषु कामादिषु मध्ये यत् द्वेषभययोरघं भवति तद्धित्वैव । भयस्यातिद्वेषसम्वलितत्वादघोत्पादकत्वं ज्ञेयम् । अत्र केचित् कामे ऽप्यघं मन्यन्ते। तत्रेदं विचार्य्यते । भगवति काम एव केवलः पापावहः किं वा पतिभावयुक्तः अथ वा उपपतिभावयुक्त इति । स एव केवल इति चेत् स किं द्वेषादिगणपातित्वात् तद्वत् स्वरूपेणैव वा परमशुद्धे भगवति यदधरपानादिकं यच्च कामुकत्वाद्यारोपणं तेनातिक्रमेण वा पापश्रवणेन वा । नाद्येन । उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः । द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रिया इत्यत्र द्वेषादेर्न्यक्कृतत्वात् । अतश्च प्रिया इति स्नेहवत् कामस्यापि प्रीत्यात्मकत्वेन तद्वदेव न दोषः। तादृशीनां कामो हि प्रेमैकरूपः । यत्ते सुजातचरणाम्बुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्कशेष्वित्यादावतिक्रमस्यापि स्वसुखतदानुकूल्य एव तात्पर्य्यदर्शनात् सैरिन्ध्र्यास्तु भावो रिरंसाप्रायत्वेन श्रीगोपीनामिव केवलतत्तात्पर्य्याभावात्तदपेक्षयैव निन्द्यते न तु स्वरूपतः । सानङ्गतप्तकुचयोरित्यादौ अनन्तचरणेन रुजो मृजन्तीति परिरभ्य कान्तमानन्दमूर्त्तिमिति कार्य्यद्वारा तत्स्तुतिः । तत्रापि सहोष्यतामिह प्रेष्ठेत्यत्र प्रीत्यभिव्यक्तेश्च । अतएव, नैवं कैवल्यनाथं तं प्राप्य दुष्प्रापमीश्वरम् । अङ्गरागार्पणेनाहो दुर्भगेदमयाच-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तीति। दुराराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरम्। यो वृणीते मनोग्राह्यमसत्त्वात् कुमनीष्यसाविति चैवं योजयन्ति। कैवल्य-मैकान्तित्वं तेन यो नाथः सेवनीयस्तम्। पुरा तादृशत्रिवक्र-त्वादिलक्षणदौर्भाग्यवत्यपि। अहो आश्चर्यं। अङ्गरागार्पणलक्षणेन भगवद्धर्मांशेन कारणेन संप्रतीदं सह्योष्यतामिह प्रेष्ठ दिनानि कति-चिन्मया। रमस्वेत्यादिलक्षणं सौभाग्यमयाचतेति। अतः, किम-नेन कृतं पूर्वमवधूतेन भिक्षुणा। श्रिया हीनेन लोकेऽस्मिन् गर्हितेनाधमेन चेति श्रीदामविप्रसुहृदिश्चान्तःपुरजनवचनवदेव तथोक्तिः। ननु कामुकी सा किमिति श्लाघ्यते, तत्राह, दुराराध्यमिति। यो मनोग्राह्यं प्राकृतमेव विषयं वृणीते कामयते असावेव कुमनीषी। सा तु भगवन्तमेव कामयते इति परमसुमनीषिण्येवेति भावः। तदेवं तस्य कामस्य द्वेषादिगणान्तःपातित्वं परिहृत्य तेन पापावहत्वं परि-हृतम्। अथ कामुकत्वाद्यारोपणाद्यधरपानादिरूपस्तत्र व्यवहारोऽपि नातिक्रमहेतुः। यतो लोकवत्तु लीलाकैवल्यमिति न्यायेन लीला तत्र स्वभावत एव सिद्धा, तत्र च श्रीभूलीलादिभिस्तस्य तादृशलीलायाः श्रीवैकुण्ठादिषु नित्यसिद्धत्वेन स्वतन्त्रलीलाविनोदस्य तस्याभिरुचिव-त्वावगमात् तादृशलीलारसमोहस्वाभाविकं भगवत्ताद्यननुसन्धानमपि कामुकत्वादिमननमपि च तदभिरुचितत्वेनैवावगम्यते। तथा तत्-प्रेयसीजनानामपि तत्स्वरूपशक्तिविग्रहत्वेन परमशुद्धरूपत्वात् ततो न्यूनत्वाभावाच्च तदधरपानादिकमपि नाननुरूपं पूर्वयुक्त्या तदभिरुचित-मेव च। न च प्राकृतवामाजने दोषः प्रसञ्जनीयः। तद्योग्यं तादृशं भावं स्वरूपशक्तिविग्रहत्वञ्च प्राप्यैव तदिच्छयैव तत्प्राप्तेः। अथ प्राप-श्रवणेन च न पापावहोऽसौ कामः, तदश्रवणादेव। अतः पतिभाव-युक्ते च तत्र सुतरां न दोषः, प्रत्युत स्तुतिः श्रूयते—याः सम्पर्य्यचरन् प्रेम्णा पादसम्वाहनादिभिः। जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तप इति। महानुभावमुनीनामपि तद्भावः श्रूयते। यथा श्रीमध्वाचार्य्य-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भृतं कौर्म्मवचनम्—अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे। भर्त्तारञ्च जगद्योनिं वासुदेवमजं विभुमिति। अतएव वन्दितं पतिपुत्रसुहृद्भ्रातृ इत्यादिना। अथोपपतिभावेन च पापावहोऽसौ। यत् पत्यपत्यसुहृदामनुवृत्तिरङ्गेत्यादिना ताभिरेवोत्तरितत्वात्। गोपीनां तत्पतीनाञ्चेत्यादिना श्रीशुकदेवेन च। न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि व इत्यत्र निरवद्यसंयुजामित्यनेन स्वयं श्रीभगवता च। तादृशानामन्येषामपि तद्भावो दृश्यते। यथा पाद्मोत्तरखण्डवचनम्—पुरा महर्षयः सर्वे दण्डकारण्यवासिनः। दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहम्॥ ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले। हरिं संप्राप्य कामेन ततो मुक्ता भवार्णवादिति। अतः पुरुषेष्वपि स्त्रीभावेनोद्भवाद्भगवद्विषयत्वात् न प्राकृतकामदेवोद्भावितः प्राकृतः कामोऽसौ, किन्तु साक्षान्मन्मथमन्मथ इति श्रवणात् आगमादौ तस्य कामत्वेनोपासनाच्च भगवदेकोद्भावितोऽप्राकृत एवासौ काम इति ज्ञेयम्। श्रीमदुद्धवादीनां परमभक्तानामपि च तत्श्लाघा श्रूयते, एताः परं तनुभृतो भुवि गोपवध्व इत्यादौ। किं बहुना श्रुतीनामपि तद्भावो बृहद्वामने प्रसिद्धः। यतस्तत्र श्रुतयोऽपि नित्यसिद्धगोपिकाभावाभिलाषिण्यस्तद्रूपेणैव तदन्तःपातिन्यो बभूवुरिति प्रसिद्धिः। एतत्प्रसिद्धिसूचकमेवैतदुक्तं ताभिरेव—निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात्। स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधा इति। विस्पष्टश्चायमर्थः। यद्ब्रह्माख्यं तत्त्वं शास्त्रदृष्ट्या प्रयासबाहुल्येन मुनय उपासते तदरयोऽपि यस्य स्मरणात् तदुपासनां विनैव ययुः। तथा स्त्रियः श्रीगोपसुभ्रुवस्ते तव श्रीनन्दनन्दनरूपस्य उरगेन्द्रदेहतुल्यौ यौ भुजदण्डौ तत्र विषक्तधियः सत्यस्तवैवाङ्घ्रिसरोजसुधाः तदीयस्पर्शविशेषजातप्रेममाधुर्य्याणि ययुः। वयं श्रुतयोऽपि समदृशस्तत्तुल्यभावाः सत्यः समाः

स्तादृशगोपिकात्वप्राप्त्या तत्साम्यमाप्तास्ता एवाङ्घ्रिसरोजसुधामया तावत्य इत्यर्थः । अर्थवशाद्विभक्तिपरिणामः । अङ्घ्रीति सादरोक्तिः । अत्र तदरयोऽपि ययुः स्मरणादित्यनेन भावमार्गस्य झटित्यर्थसाधकत्वं दर्शितम् । समदृश इत्यनेन रागानुगाया एव तत्र साधकतमत्वं व्यञ्जितम् । अन्यथा सर्वसाधनसाध्यविदुष्यः श्रुतयोऽन्यथैव प्रवर्त्तेरन् । तथा स्मरणपरयुग्मद्वयेऽस्मिन् स्वस्वयुग्मे प्रथमस्य मुख्यत्वं द्वितीयस्य गौणत्वं दर्शितम् । उभयत्राप्यपिशब्दसाहित्येनोत्तरत्र पाठादेकार्थताप्राप्तेः । अतः स्त्रिय इति नित्याः श्रीगोपिका एव ता ज्ञेयाः । तथैव श्रुतिभिरपि श्रीकृष्णनित्यधाम्नि ता दृष्टा इति बृहद्वामन एव प्रसिद्धम् । तदेवं साधु व्याख्यातं, कामाद्द्वेषादित्यादौ तदघं हित्वेत्यत्र तेषु मध्ये द्वेषभययोर्यदघमित्यादि । अथ बहवस्तद्गतिं गता इत्यत्र निदर्शनमाह—गोप्यः कामाद्भयात् कंसो द्वेषाच्चैद्यादयो नृपाः । सम्बन्धाद् वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो ॥ ३२१ ॥

गोप्य इति साधकचरीणां गोपीविशेषाणां पूर्वावस्थामेवावलम्ब्योच्यते । वयमिति । यथा श्रीनारदस्य हि प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुमित्याद्युक्तरीत्या पार्षददेहत्वे सिद्धे तेन स्वयं वयमिति पूर्वावस्थामेवावलम्ब्योच्यते । तत्रैव वैधी भक्तिः । अधुना लब्धरागस्य तस्य, न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः । गुणदोषदृशिर्दोषो गुणस्तूभयवर्जित इति न्यायेन, विध्यनधीना रागात्मिकैव विराजते इति । अतएव तद्गतिं गता इति तेषां फलप्राप्तेरप्यतीतत्वनिर्देशः । अत्र ता गोप्य इवाधुनिकास्च तद्गुणादिश्रवणेनैव तद्भावा भवेयुः । यथोक्तम्—श्रुतमात्रोऽपि यः स्त्रीणां प्रसह्याकर्षते मनः । उरुगायोरुगीतो वा पश्यन्तीनां कुतः पुनरिति । अथवा पार्षदचरस्यापि चैद्यस्यागन्तुकोपद्रवाभासनाशदर्शनेनैव साधकत्वनिर्देशः । सम्बन्धादयः स्नेहो रागस्तस्माद् वृष्णयो यूयञ्चेत्येकम् । तस्माद् वैरानुबन्धेनेत्यादौ कामादित्यादौ चोक्तस्यैवार्थस्योदाहरणवाक्येऽस्मिन् तदैकार्थ्यावश्यक-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्वात्, पञ्चानामिति वक्ष्यमाणानुरोधात्, उभयत्रापि सम्बन्धद्वयोर्द्वयोरपि विद्यमानत्वाच्च। सम्बन्धग्रहणं रागस्यैव विशेषत्वज्ञापनार्थम्। गोपीवदत्रापि साधकचरा वृष्णिविशेषाः पाण्डवसम्बन्धिविशेषाश्च पूर्वावस्थामवलम्ब्य साधकत्वेन निर्दिष्टाः। अतः सम्बन्धसम्बन्धोऽपि तदभिरुचिमात्रं ज्ञेयम्। भक्त्या विहितया। अस्या एव प्रतिलब्धत्वेन भावमार्गं निर्देष्टुमुपक्रान्तत्वात्। यदि द्वेषेणापि सिद्धिस्तर्हि वेणः किमिति नरके पातित इत्याशङ्क्याह—कतमोऽपि न वेणः स्यात् पञ्चानां पुरुषं प्रतीति॥ ३२२॥

पुरुषं भगवन्तं प्रति लक्ष्यीकृत्य पञ्चानां वैरानुबन्धादीनां मध्ये वेणः कतमोऽपि न स्यात्। तस्य तं प्रति प्रासङ्गिकनिन्दामात्रात्मकं वैरं न तु वैरानुबन्धः। ततस्तीव्रध्यानाभावात् पापमेव तत्र प्रतिफलितमिति भावः। ततो सुरतुल्यस्वभावैरपि तस्मिन् स्वमोचार्थं वैरभावानुष्ठानसाहसं न कर्त्तव्यमित्यभिप्रेतम्। अतएव ये वै भगवता प्रोक्ता इत्यादेरप्यतिव्याप्तिर्व्याहन्यते। अनभिप्रेतत्वेनाप्रोक्तत्वात्। यस्मादेवं, तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेदिति॥ ३२३॥

अत्रापि पूर्ववन्निवेशयेदिति सम्मतिमात्रं, न विधिः। केनापि तेष्वप्युपायेषु युक्ततमेनैकेनेत्यर्थः। अहो यस्तादृशबहुप्रयत्नसाध्यवैधभक्तिमार्गेण चिरात् साध्यते स एवाचिराद्भावविशेषमात्रेण। तत्र च द्वेषादिनापि। तस्मादेवंभूते परमसद्गुणस्वभावे तस्मिन् दूरेऽस्तु पामरजनभाव्यस्य वैरस्य वार्त्ता, को वाधम औदास्यमवलम्ब्य प्रीतिमपि न कुर्य्यादिति रागानुगायामेव तच्च युक्ततमत्वमङ्गीकृतं भवति॥ ७॥ १॥ श्रीनारदः श्रीयुधिष्ठिरम्॥३१५—३२३॥

तदेवं भावमार्गसामान्यस्यैव बलवत्त्वेऽपि कैमुत्येन रागानुगायामेवाभिधेयत्वमाह—वैरेण यं नृपतयः शिशुपालशाल्वपौण्ड्रादयो गतिविलासविलोकनाद्यैः। ध्यायन्त आकृतिधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियां पुनः किम्॥ ३२४॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

आकृतिधियः तत्तदाकारा धीर्येषाम् । एवमेवोक्तं गारुड़े— अज्ञानिनः सुरवरं समधिक्षिपन्तो यं पापिनोऽपि शिशुपालसुयोधनाद्याः । मुक्तिं गताः स्मरणमात्रविधूतपापाः कः संशयः परमभक्तिमतां जनानामिति । अतो यथा वैरानुबन्धेनेत्यत्र वैरानुबन्धस्य सर्वत एवाधिक्यं न योजनीयम् । यच्च, मयि संरम्भयोगेन निस्तीर्य्य ब्रह्महेलनम् । प्रत्येष्यतं निकाशं मे कालेनाल्पीयसा पुनरिति जयविजयौ प्रति वैकुण्ठवचनं, तदपि तदपराधाभासभोगार्थमेव संरम्भयोगाभासं विधत्ते, तत्प्राप्तेस्तयोः स्वाभाविकसिद्धत्वात्, युद्धलीलार्थमेव तत्प्रपञ्चनात् । अत्र द्वेषादावपि केचिद्भक्तित्वं मन्यन्ते । तदसत्; भक्तिसेवादिशब्दानामानुकूल्य एव प्रसिद्धेः वैरे तद्विरोधत्वेन तदसिद्धेश्च । पाद्मोत्तरखण्डे च भक्तिद्वेषादीनाञ्च भेदोऽवगम्यते । योगिभिर्दृश्यते भक्त्या नाभक्त्या दृश्यते क्वचित् । द्रष्टुं न शक्यो रोषाच्च मत्सराच्च जनार्दन इत्यत्र च । ननु मन्येऽसुरान् भागवतानित्यादौ श्रीमदुद्धववाक्ये तेषामपि भागवतत्वं निर्दिश्यते । नैवम् । यतो मन्य इत्यनेनोत्प्रेक्षावगमात् न स्वयं भागवतत्वं तत्रास्तीत्येवं सिद्ध्यति इति । सा चोत्प्रेक्षा तेन तच्छ्लोकोत्कण्ठावता केवलदर्शनभाग्यांशेनैव रचिता युक्तैव । यथा, हन्त वयमेव तद्बहिर्मुखाः, येषामन्तिमसमये तन्मुखचन्द्रमसो दर्शनसम्भावनापि न विद्यते । येभ्यश्चासुरा अपि भागवताः, ये खलु तदानीं तन्मुखचन्द्रमसोर्दर्शनसौभाग्यं प्रापुरिति । तस्मान्न द्वेषादौ कथञ्चिदपि भक्तित्वम् ॥ ११ ॥ ५ ॥ श्रीनारदः श्रीवसुदेवम् ॥३२४॥

तदेवं रागानुगा साधिता । सा च श्रीकृष्ण एव मुख्या । गोप्यः कामादित्यादिना तस्मिन्नेव दर्शितत्वात् । दैत्यानामपि द्वेषेणापि तस्मिन्नेवावेशलाभदर्शनात्, सिद्धिप्राप्तेश्च । नान्यत्र तु कुत्राप्यंशिन्यंशे वा । अत एवोक्तं, तस्मात् केनाप्युपायेन मनः कृष्ण इत्यादि । अतस्ताद्दृशभक्टित्यावेशहेतूपासनालाभादेव स्वयमेकादशे वैधोपासना

स्वस्मिन्नोक्ता किन्त्वन्यत्र चतुर्भुजाकार एव। तत्र च शुद्धस्य रागस्य श्रीगोकुल एव दर्शनात्, तत्र तु रागानुगा मुख्यतमा। यत्र खलु स्वयं भगवानपि तेषां पुत्रादिभावेनैव विलसति। ये यथा मां प्रपद्यन्ते इत्यादेः, मल्लानामशनिरित्यादेः, स्वेच्छामयस्ये-त्यस्माच्च। ततश्च भक्तकर्त्तृकभोजनपानस्नपनवीजनादिलक्षणलालने-च्छापि तस्याकृत्रिमैव जायते। साधारणभक्तिसद्भावेनैव हि, पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मन इत्युक्तम्। श्रीशुकदेवेन च तदेतदेवाकाङ्क्षया श्लाघितम्। पादसंवाहनं चक्रुः केचित्तस्य महात्मनः। अपरे हतपाप्मानो व्यजनैः समवीजयन्नित्यादिना। नानेन चैश्वर्यस्य हानिः, तदानीमपि तस्यै-श्वर्यस्यान्यत्र स्फुरद्रूपत्वात्। भक्तेच्छामयत्वस्य चेशितरि प्रशंसनीय-स्वभावत्वादेव। यथा श्रीव्रजेश्वरीबद्ध एव यमलार्जुनमोक्षं कृतवान्। तादृशैश्वर्येऽपि तस्मिन् श्रीव्रजेश्वरीवश्यतैव श्रीशुकदेवेन वन्दिता, एवं सन्दर्शिता ह्यङ्ग इत्यादिना। तस्माद् ये चाद्यापि तदीयरागानुगा-परास्तेषामपि श्रीव्रजेन्द्रनन्दनत्वादिमात्रधर्मैरुपासना युक्ता। यथा गोवर्द्धनोद्धरणलब्धविस्मयान् श्रीगोपान् प्रत्युक्तं स्वयं भगवतैव विष्णु-पुराणे—यदि वोऽस्ति मयि प्रीतिः श्लाघ्योऽहं भवतां यदि। तदात्म-बन्धुसदृशी बुद्धिर्वः क्रियतां मयीति। तदार्चाबन्धुसदृशी:बान्धवाः क्रियतां मयीति वा पाठः। तथा, नाहं देवो न गन्धर्वो न यक्षो न च दानवः। अहं वो बान्धवो जातो नात्तश्चिन्त्यमतोऽन्यथा इति। युवां मां पुत्रभावेन ब्रह्मभावेन वासकृदित्यत्र तु श्रीवसुदेवादीना-मैश्वर्यज्ञानप्रधानत्वात् ह्यात्मिकैव भगवदनुमतिर्ज्ञेया। प्राग्जन्मन्यपि तयोस्तपआदिप्रधानैव भक्तिरुक्ता। अतः श्रीव्रजेश्वर्याः पुनस्तन्मुख-दृष्टवैश्वत्वमश्लाघित्वा पुत्रस्नेहमयीं मायाद्येकपर्य्यायां तत्कृपामेव बहुमन्यमानस्तादृशभाग्यञ्च श्रीवसुदेवादिकयोर्नास्तीति विस्मृष्यन् तस्याः श्रीव्रजेश्वरस्य च भाग्यं तादृशवात्सल्यलीलोच्छ्लत्यमानपुत्रभावेन

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

राजमानमतिश्लाघितवान् राजा, नन्दः किमकरोद्ब्रह्मन्नित्यादि-द्वयेन। श्रीमुनिराजश्च तादृशतत्प्रेमैव श्लाघितवान्, एवं सन्दर्शिता ह्यङ्ग हरिणा इत्यादिना। तदेवं श्रीवसुदेवदेवक्याद्युपलक्ष्य श्रीनारदोऽपि साधकान् प्रति दर्शनालिङ्गनालापैरित्यादिना यदुपदिष्टवान्, तत्र टीका च, यथा, पुत्रोपलालनेनैव भागवतधर्म्मसर्वस्वनिष्पत्तेरित्येषा, तथा मापत्यबुद्धिमकृथाः कृष्णे सर्वेश्वरेश्वर इत्येतदपि तदविरोधेन टीकायामेवमवतारितम्। यथा, ननु पुत्रस्नेहश्चेन्मोक्षहेतुस्तर्हि सर्वेऽपि मुच्येरन्, तत्राह, मापत्यबुद्धिमितीत्येतत्। तस्मिन्नपत्यत्वं प्राप्ते अपि तस्मिन् तादृशभावनावशं गतेऽपि अस्ति स्वाभाविकं पारमैश्वर्य्यमधिकमिति भावः। यद्वा पूर्ववन्नार्षोऽडागमः, किन्त्वकारो निषेधे, अभावे न ह्य नो नेति शब्दकोषात्। ततो निषेधद्वयादपत्यबुद्धिमेव कुर्वित्यर्थः। अतएव ज्ञानाज्ञानयोरनादरेण केवलरागानुगाया एवानुष्ठितिः प्रशस्ता, ज्ञात्वाज्ञात्वाथ ये वै मामित्यादिना। तस्मात् श्रीगोकुल एव रागात्मिकायाः शुद्धत्वात् तदनुगा भक्तिरेव मुख्यतमेति साध्वेवोक्तम्। तदेवमन्यत्रासम्भवतया रागानुगामाहात्म्यदृष्ट्या पूर्णभगवत्तादृष्ट्या च श्रीकृष्णभजनस्य माहात्म्यं महदेव सिद्धं, तत्रापि गोकुललीलात्मकस्य। अथ तद्भजनमात्रस्य माहात्म्यमुपक्रमत एव यथा—मुनयः साधु पृष्टोऽहं भवद्भिर्लोकमङ्गलम्। यत् कृतः कृष्णसंप्रश्नो येनात्मा सुप्रसीदति इति। तत्रैतद्वक्तव्यम्—पूर्वं मनसः प्रसादहेतुः स्पष्टः; अनेन तु श्रीकृष्णप्रश्नमात्रस्य तद्धेतुतोक्ता; न तु स वै पुंसां परो धर्म्म इत्यादिना तदीयानन्तरप्रकरणे यथा महता प्रयत्नेन कर्म्मार्पणमारभ्य भक्तिनिष्ठापर्य्यन्त एव जाते प्रादुर्भावान्तरभजनस्य तद्धेतुतोक्ता, तथेति। अतएवावतारान्तरकथाया अपि तदभिनिवेश एव फलमित्याह—हरेरद्भुतवीर्य्यस्य कथा लोकसुमङ्गलाः। कथयस्व महाभाग यथाहमखिलात्मनि। कृष्णे निवेश्य निःसङ्गं मनस्त्यक्ष्ये कलेवरम् इति॥ ३२५॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

हरेस्तदवताररूपस्य। अखिलात्मनि सर्वांशिनि कृष्णे श्रीमदर्जुनसखे ॥ २ ॥ ८ ॥ राजा ॥ ३२५ ॥

तथा श्रीमदुद्धवसंवादान्ते च यथा। तत्र यद्यपि पूर्वाध्यायसमाप्तौ उक्ताया ज्ञानयोगचर्य्याया भक्तिसहभावेनैव स्वफलजनकत्वं श्रीभगवतोक्तं, तथापि तां ज्ञानयोगचर्य्यामंशतोऽप्यनङ्गीकुर्वता परमैकान्तिना श्रीमदुद्धवेन, सुदुस्तरामिमां मन्ये योगचर्य्यामनात्मनः। यथाञ्जसा पुमान् सिध्येत्तन्मे ब्रूह्यञ्जसाच्युत। प्रायशः पुण्डरीकाक्ष युञ्जतो योगिनो मनः। विषीदन्त्यसमाधानान्मनोनिग्रहकर्षिताः ॥ इत्यत्र स्ववाक्ये तस्या दुष्करत्वेन प्रायः फलपर्य्यवसायित्वाभावेन चोक्तत्वात्, शुश्रूषमाणाया भक्तेस्तु सुकरत्वेनावश्यकफलपर्य्यवसायित्वेन चाभिप्रेतत्वात्, तद्भक्तिरेव कर्त्तव्येति स्वाभिप्रायो दर्शितः। तदेवं तां ज्ञानयोगचर्य्यामनादृत्य भक्तिमेवापि कुर्वाणास्तव श्रीकृष्णरूपस्यैव भक्तिं तादृशास्तु ज्ञानयोगादिफलानादरेणैव कुर्वन्तीति पुनराह चतुर्भिः—अथात आनन्ददुघं पदाम्बुजं हंसाः श्रयेरन्नरविन्दलोचने। सुखं नु विश्वेश्वरयोगकर्म्मभिस्त्वन्मा ययामी विहता न मानिनः ॥ ३२६ ॥

यस्मादेवं केचन विषीदन्ति अथातः अतएव ये हंसाः सारासारविवेकचतुराः ते तु समस्तानन्दपूर्वकं पदाम्बुजमेव नु निश्चितं सुखं यथा स्यात्तथा श्रयेरन् सेवन्ते। पदाम्बुजस्य सम्बन्धिपदानुक्तिः साक्षाद्दृश्यमानतदीयपदाम्बुजाभिव्यञ्जनार्था। अमी च शुद्धभक्ता योगकर्म्मभिस्त्वन्मायया च विहताः कृतभक्त्यनुष्ठानान्तराया न भवन्ति। यतो न च मानिनः ते मानिनोऽपि न भवन्ति। पुरुषार्थसाधने भगवतो निरुपाधिदीनजनकृपाया एव साधकतमत्वं मन्यन्ते न योगिप्रभृतिवत् स्वप्रयत्नस्येत्यर्थः। एवंभूतस्य भक्तस्य ज्ञानयोगादीनां यत् फलं तन्मात्रं न किन्त्वन्यन्महदेवेत्याह—किञ्चित्रमच्युत तवैतदशेषबन्धो दासेष्वनन्यशरणेषु यदात्मसात्त्वम्। योऽरोचयत् सह मृगैः स्वयमीश्वराणां श्रीमत्किरीटतटपीड़ितपादपीठः ॥ ३२७ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अशेषबन्धो दासेष्वनन्यशरणेषु। यद्वा अशेषाणाम् असुरपर्यन्तानां बन्धुर्मोक्षादिदानैर्निरुपाधिहितकारी, हे तथाभूत। तवैतत् उचितम्। यत् अनन्यशरणेषु ज्ञानयोगकर्म्माद्यनुष्ठानविमुखेषु दासेषु शुद्धभक्तेषु बलिप्रभृतिषु आत्मसात्त्वं तेषां य आत्मा तदधीनत्वमित्यर्थः। तदुक्तं, न साधयति मां योग इत्यादि। तस्य तव तथाभूतेषु न जाति गुणाद्यपेक्षा चेत्यन्तरङ्गलीलायामपि दृश्यते इत्याह य इति। सखेति सहभावं सख्यमित्यर्थः। मृगैर्वृन्दावनचारिभिः। स्वयन्तु कथम्भूतोऽपि ईश्वराणामित्यादिलक्षणोऽपि। ईश्वराः श्रीशिवब्रह्मादयः। ज्ञानयोगादिपरमफलरूपापि या मुक्तिस्तां दैत्येभ्यो ददासि। पाण्डवादिसख्यदौत्यवीरासनादिस्थितिवत् दासानान्तु स्वयमधीनो भवसि। अत एवंभूतस्य श्रीकृष्णस्यैव तव भक्तिर्मुख्येति भावः। फलितमाह—त्वां ... लाखिलात्मदयितेश्वरमाश्रितानां सर्वार्थदं स्वकृतविद्विसृजेत को नु। को वा भजेत् किमपि विस्मृतये नु भूत्यै किं वा भवेन्न तव पादरजोजुषां नः॥ ३२८॥

तमेवंभूतं त्वां स्वकृतवित् प्रसन्नवदनाम्भोजं पद्मगर्भारुणेक्षणमित्यादि श्रीकपिलदेवोपदेशतः स्वसौन्दर्य्यादिस्फूर्त्तिलक्षणं स्वस्मिन् कृतं त्वदीयोपकारं यो वेत्ति स को नु विसृजेत् तत्रापि चित्तवडिशं शनकैर्वियुङ्क्ते इति तदुपदिष्टाधिकारिविशेषवत् परित्यजेत्? न कोऽपीत्यर्थः। तस्माद् यस्त्यजति स कृतघ्न एवेति भावः। कथंभूतं त्वाम्? स्वरूपत एवाखिलानामात्मनां दयितं प्राणकोटिप्रेष्ठम् ईश्वरञ्चेत्यादि। तथा, नु वितर्के, त्वद्व्यतिरिक्तं किमपि देवतान्तरं धर्म्मज्ञानादिसाधनं भूत्यै ऐश्वर्य्याय संसारस्य विस्मृतये मोक्षाय वा को भजेत्? न कोऽपीत्यर्थः। अस्माकन्तु तत्तत् फलमपि त्वद्भक्तेरेवान्तर्भूतमित्याह, किञ्चेति। वाशब्देन तत्राप्यनादरः सूचितः। तदुक्तं, यत् कर्म्मभिर्यत्तपसेत्यादि। ननु कथं तत्तत् फलमपि विसृजसि, न तु मां, किं वा मम कृतं, तत्राह—नैवोपयन्त्यपचितिं कवयस्तवेश



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पे कृतमृद्धमुदः स्मरन्तः। योऽन्तर्बहिस्तनुभृतामशुभं विधु-
ग्चैत्यवपुषा स्वगतिं व्यनक्ति॥ ३२८ ॥

ईश्वर, कवयः सर्वज्ञाः ब्रह्मतुल्यायुषोऽपि तत्कालपर्यन्तं
पौत्यर्थः। तव कृतमुपकारम् ऋद्धमुदः उपचितत्वद्भक्ति-
न्दाः सन्तः स्मरन्तः। अपचितिं प्रत्युपकारमानृण्यमिति
तां न उपयन्ति पश्यन्ति। तस्मान्न विसृजेदित्युक्तम्। कृतमाह,
वान् तनुभृतां त्वत्कृपाभाजनत्वेन केषाञ्चित् सकलतनुधारिणां
ाचार्य्यवपुषा गुरुरूपेण अन्तश्चैत्यवपुषा चित्तस्फुरितश्रेया-
ण अशुभं त्वद्भक्तिप्रतियोगि सर्वं विधुन्वन् स्वगतिं स्वानुभवं
क्तीति ॥ ११ ॥ २८ ॥ श्रीमदुद्धवः ॥ ३२५—३२८ ॥

तथैव स्वभक्तेरतिशयित्वं श्रीभगवानपि तदनन्तरमुवाच। तत्र
तादृशान् प्रति शुद्धां स्वभक्तिं हन्त ते कथयिष्यामीत्यादिचतुर्भि-
क्ताप्यतादृशान् प्रति च करुणया स्वभजनप्रवर्त्तनार्थमन्यद्विचारित-
ान् चतुर्भिः। यतः प्रायशो लोकाः स्पर्द्धादिपराः कथञ्चिदन्तर्मुखत्वे-
ऽपि सर्वान्तर्य्यामिरूपत्वज्ञजनमात्रज्ञानिन इत्यालोच्य कृपया तेषां
स्पर्द्धादीन् झटिति दूरीकर्त्तुं स्वस्मिन्नेवान्तर्मुखीकर्त्तुञ्च विष्टभ्याहमिदं
कृत्स्नमेकांशेन स्थितो जगदित्याद्युक्ततदन्तर्यामिरूपस्वांशस्य भजन-
स्थाने स्वभजनमुपदिष्टवान्। यथा—मामेव सर्वभूतेषु वहिरन्तरपा-
वृतम्। ईक्षेतात्मनि चात्मानं यथा खममलाशयः॥३३०॥

टीका च—अन्तरङ्गां भक्तिमाह मामिति त्रिभिः। सर्वभूतेष्वा-
त्मनि चात्मानमीश्वरं स्थितं मामेव ईक्षेतेत्येषा। कथंभूतमीश्वरं,
वहिरन्तः पूर्णमित्यर्थः। तत् कुतः, अपावृतम्, अनावरणं; तदपि कुतः,
यथा खम् असङ्गत्वाद्विभुत्वाच्चेत्यर्थः। अत्र मामेवेति श्रीकृष्णरूप-
मेवेक्षेत, न तु केवलान्तर्यामिरूपमित्यभिप्रायेणैवान्तरङ्गां भक्तिमाहेति
व्याख्यातम्। ततश्च, इति सर्वाणि भूतानि मद्भावेन महाद्युते।
सभाजयन् मन्यमानो ज्ञानं केवलमाश्रितः। ब्राह्मणे पुक्कसे स्तेने

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ब्रह्मण्येऽर्के स्फुलिङ्गके । अक्रूरे क्रूरके चैव समदृक् पण्डितो मतः॥ २२१ ॥

केवलं ज्ञानम् अन्तर्यामिदृष्टिमाश्रितोऽपि । इति पूर्वोक्तप्रकारेण सर्वाणि भूतानि मद्भावेन तेषु मम श्रीकृष्णरूपस्य यो भावः अस्तित्व तद्विशिष्टतया मन्यमानः सभाजयन् पण्डितो मतः । मद्दृष्ट्या ब्राह्मणादिषु समदृक् समं मामेव पश्यतीति । ततश्च नरेष्वभीक्ष्णमित्यादिना तादृशस्योपासनाविशेषस्य झटिति स्पर्द्धादित्रयलक्षणं फलमुक्त्वा विसृज्येत्यादिना तथादृष्टिसाधनं सर्वनमस्कारमुपदिश्य यावदित्यादिना तादृशोपासनाया अवधिञ्च सर्वत्र स्वतः स्वस्फूर्त्तिमुक्त्वा सर्वमित्यादिना नव्यवद्‌हृदये यज्ज्ञो ब्रह्मैतद्‌ब्रह्मवादिभिः न मुह्यन्ति न शोचन्ति न हृष्यन्ति यतो गता इति प्रचेतसः प्रति श्रीभगवद्वाक्ये तट्टीकायाञ्च तस्य भगवतः प्रतिपदनव्यस्फूर्त्तिरेव ब्रह्मेतीति यदुक्तं तदेव तत्फलमित्युक्त्वा । यद्वा कथमशावनारस्य ब्रह्मता भवतीति गोपालतापनीप्रसिद्धब्रह्मेत्यभिधाननराकृतिपरब्रह्मरूपस्फूर्त्तिस्तत्फलमित्युक्त्वा तेनैव तादृशोपासनां सर्वोर्द्धमपि प्रशंसति—अयं हि सर्वकल्पानां सध्रीचीनो मतो मम । मद्भावः सर्वभूतेषु मनोवाक्कायवृत्तिभिः ॥२२२॥

सर्वकल्पानां सर्वोपायानां सध्रीचीनः समीचीनः । मद्भावो मम श्रीकृष्णरूपस्य भावना । एतच्च श्रीकृष्णभजनस्यान्तर्यामिभजनादप्याधिक्यं श्रीगीतोपसंहारानुसारेणैवोक्तम् । तथाहि—ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढ़ाणि मायया ॥ तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ इति ते ज्ञानमाख्यातं गुह्याद्‌गुह्यतरं मया । विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ सर्वगुह्यतमं भूयः शृणु मे परमं वचः । इष्टोऽसि मे दृढ़मिति ततो वक्ष्यामि ते हितम् ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ सर्वधर्मान् परित्यज्य मामेकं शरणं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्वां सर्वपापेभ्यो मोचयिष्यामि माशुचः॥ इति। अत्र
ध्यायोक्तं ज्ञानं, गुह्यतरमन्तर्यामिज्ञानं, सर्वगुह्यतरं तन्मन-
त्वं तदेकशरणत्वलक्षणञ्च तदुपासनमिति समानम्। एवं
व नवमाध्यायेऽपि, इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे।
ानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात्॥ राजविद्या राज-
ादिना वक्ष्यमानार्थं प्रशस्य, श्रीकृष्णरूपस्यभजनस्याहीनात्
तच्छ्रद्धावतः प्रशस्तवान् स्वयमेव। यथा—अवजानन्ति मां
ानुषीं तनुमाश्रितम्। परं भावमजानन्तो मम भूतमहेश्वरम्॥
ा मोघकर्माणो मोघज्ञाना विचेतसः। राक्षसीमासुरीञ्चैव
रोहिनीं श्रिताः॥ महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः।
अनन्यमनसो ज्ञात्वा भूतादिमव्ययमिति। माम् अत्र अनादरेण
षीं तनुमाश्रितं जानन्तीत्यर्थः। तस्मात् सर्वान्तर्यामिभजनाद-
मत्वेन तदनन्तरञ्च सर्वगुह्यतममित्यत्र सर्वग्रहणात् सर्वत उत्तम-
ा श्रीकृष्णभजने सिद्धे तदवतारान्तरभजनात् सुतरामेवोत्तमता
ध्यति। अथ तामेव कैमुत्येनाप्याह—यो यो मयि परे धर्मः
ल्प्यते निष्फलाय चेत्। तत्रायासोऽनिरर्थः स्याद्भयादेरिव सत्तम॥२३३॥
मयि मदर्पितत्वेन कृतो यो यो धर्मो वेदविहितः स स यदि निष्फ-
लाय फलाभावाय कल्पते फलकामनया नार्प्यत इत्यर्थः तदा तत्र तत्रा-
यासः श्रान्तिः अनिरर्थः स्यात् व्यर्थो न भवति। निष्फलायेति विशेषणं
फलभोगादिरूपतद्धत्यन्तरायाभावेन अनिरर्थतातिशयतात्पर्य्येण।
तत्रानिरर्थत्वे कैमुत्येन श्रीकृष्णलक्षणस्य स्वस्य असाधारणभजनीयता-
व्यञ्जको दृष्टान्तः, भयादेरिवेति। यथा कंसादौ मत्सम्बन्धमात्रे
भयादेरप्यायासो निरर्थो न भवति मोक्षसम्पादकत्वादित्यर्थः। अथ
श्रीमदुद्धववत् श्रीकृष्णैकानुगतानां साधनत्वे साध्यत्वे च स्वयं
श्रीकृष्णरूप एव परमोपादेय इत्याह—ज्ञाने कर्म्मणि योगे च वार्त्तायां
दण्डधारणे। यावानर्थो नृणां तात तावांस्तेऽहं चतुर्विधः॥२३४॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ज्ञानादौ यावान् धर्म्मादिलक्षणश्चतुर्विधोऽर्थः तावान् स
मद्‌गृहमेव। तत्र ज्ञाने मोक्षः कर्म्मणि धर्मः कामश्च योगे नाना
सिद्धिलक्षणो लौकिकः वार्त्तायां दण्डधारणे च नानाविधलौ
ञार्थं इति चतुर्विधत्वं ज्ञेयम् ॥११॥२९॥ श्रीभगवान् ॥३३०—३३

पुनरेवमेव श्रीमानुद्धवोऽपि प्रार्थितवान्—नमोऽस्तु ते म
योगिन् प्रपन्नमनुशाधि माम्। यथा त्वच्चरणाम्भोजे रतिः स्यादन
पायिनी ॥ ३३५ ॥

टीका च—एवं यद्यपि त्वया बहूक्तं, तथाप्येतावत् प्रार्थय इत्याह
नमोऽस्त्विति। अनुशाधि अनुशिक्षय। अनुशासनीयत्वमेवाह यथेति
मुक्तावप्यनपायिनीत्येषा ॥ ११ ॥ २९ ॥ श्रीमानुद्धवः ॥ ३३५ ॥

अतएवान्यत्राप्यभिप्रेयाय—यथा त्वामरविन्दाक्ष यादृशं याव
त्मकम्। ध्यायेन्मुमुक्षुरेतन्मे ध्यानं मे वक्तुमर्हसि ॥ ३३६ ॥

टीका च—मुमुक्षुस्त्वां यथा ध्यायेत् तन्मे वक्तुमर्हसि। जिज्ञासोः
कथनाय मे पुनरेतत् त्वद्दास्यमेव पुरुषार्थः, न तु ध्यानेन कृत्यमस्तीति।
तदुक्तं, त्वयोपयुक्तस्रग्गन्धेत्यादीत्येषा ॥११॥१४॥ श्रीमानुद्धवः ॥३३६॥

तस्य सर्वावतारावतारिष्वप्रकटितं परमशुभस्वभावत्वं च स्पष्टयाह—
अहो बकीयं स्तनकालकूटं जिघांसयापाययदप्यसाध्वी। लेभे गतिं
धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम ॥ ३३७ ॥

धात्र्याया उचिता गतिस्तामेव ॥ ३ ॥ २ ॥ स एव ॥ ३३७ ॥

अनेन तत्रापि गोकुललीलात्मकस्य श्रीकृष्णस्य भजनमाहा-
त्म्यातिशयो दर्शितः। तथा पूतना लोकबालघ्नीत्यादौ च ज्ञेयम्।
तथा श्रीकृष्णसन्दर्भे च येन येनावतारेणेत्यादिकं विवृतमस्ति। अथ
गोकुलेऽपि श्रीमद्व्रजवधूसहितरासादिलीलात्मकस्य परमवैशिष्ट्य-
माह—विक्रीड़ितं व्रजवधूभिरिदञ्च विष्णोः श्रद्धान्वितोऽनुशृणुया-
दथ वर्णयेद् यः। भक्तिं परां भगवति प्रतिलभ्य कामं हृद्रोगमाश्वप-
हिनोत्यचिरेण धीरः ॥ ३३८ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ादन्यच्च। अथेति वार्थे। शृणुयाद्वा वर्णयेद्वा। उपलक्षण-
ादिः। परां यतः परा नान्या कुत्रचिद्विद्यते ताद्दशीम्।
ामादिकमपि शीघ्रमेव त्यजति। अत्र सामान्यतः अपि
सिद्धे तत्रापि परमप्रेष्ठश्रीराधासंवलितलीलामयतद्भजनन्तु
मेवेति स्वतः सिध्यति। किन्तु रहस्यलीला तु पौरुषविकार-
ये: पितृपुत्रदासभावैश्च नोपास्या; स्त्रीयभावविरोधात्। रहस-
स्या: क्वचिदल्पांशेन क्वचित्तु सर्वांशेनेति ज्ञेयम्॥ १०॥ ३३॥
त:॥ ३३८॥

त्र ते भक्तिमार्गा दर्शिता:। अत्र च श्रीगुरोः श्रीभगवतो वा
लब्धं साधनसाध्यगतं स्वीयसर्वस्वभूतं यत् किमपि रहस्यं तत्तु
स्मैचित् प्रकाशनीयम्। यथाह—नैतत् परस्मा आख्येयं पृष्टयापि
ञ्चन। सर्वं सम्पद्यते देवि देवगुह्यं सुसंवृतम्॥ ३३९॥
सम्पद्यते फलदं भवति॥ ८॥ १७॥ श्रीविष्णुरदितिम्॥ ३३९॥

तदेवं साधनात्मिका भक्तिर्दर्शिता। तत्र सिद्धिक्रमश्च श्रीसूतोप-
ारम्भे शुश्रूषोः श्रद्दधानस्येत्यादिना दर्शितः। यथा च श्रीनारद-
क्ये अहं पुरातीतभवेऽभवमित्यादौ। यथा च श्रीकपिलदेव-
क्ये सतां प्रसङ्गान्मम वीर्य्यसम्विद इत्यादौ। अत्र केवल-
कामायां भक्त्या पुमान् जातविराग इत्यादिना शुद्धायां नैका-
त्मतां मे स्पृहयन्ति केचिदित्यादिना क्रमो ज्ञेयः। तथा शुद्धायामेव
श्रीप्रह्लादकृतदैत्यबालानुशासने गुरुशुश्रूषयेत्यादिना। तमेवं क्रममेव
संक्षिप्य सदृष्टान्तमाह—भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक
एककालः। प्रपद्यमानस्य यथाश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनु-
घासम्। इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः।
भवन्ति वै भागवतस्य राजंस्ततः परां शान्तिमुपैति साक्षात्॥ ३४०॥

टीका च—प्रपद्यमानस्य हरिं भजतः पुंसो भक्तिः प्रेमलक्षणा
परेशानुभवः प्रेमास्पदभगवद्रूपस्फूर्त्तिः तया निर्वृतस्य ततोऽन्यत्र

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

गृहादिषु विरक्तिरित्येष त्रिक एककालः भजनसमकाल एव यथाश्नतो भुञ्जानस्य तुष्टिः सुखं पुष्टिरुदरभरणं क्षुन्निवृत्तिश्च ग्रासं स्युः । उपलक्षणमेतत् । प्रतिसिक्थमपि यथा स्युस्तद्वत् । मेवैकस्मिन् भजने किञ्चित् प्रेमादित्रिके जायमाने अनुवृत्त्या परमप्रेमादि जायते । बहुग्रासभोजिन इव परमतुष्ट्यादि । भगवत्प्रसादेन कृतार्थो भवतीत्याह, इत्यच्युताङ्घ्रिमितो शान्तिं कृतार्थत्वम् । साक्षादन्तर्बहिश्च प्रकटितपरमपुरुषार्थत्वादव्य धानेनैवेत्यर्थः । पूर्वपद्ये भक्त्यादीनां तुष्ट्यादयः क्रमेणैव दृष्टा ज्ञेयाः । उत्तरत्राप्येतत्क्रमेणैव भक्तितुष्ट्योः सुखैकरूपत्वात्, पु भवयोरात्मभरणैकरूपत्वात्, क्षुदपायविरक्त्योः शान्त्यैकरूपत्वा यद्यपि भुक्तवतोऽन्नेऽपि वैतृष्ण्यं जायते भगवदनुभविनस्तु विषयान् एवेति वैधर्म्यं, तथापि वस्त्वन्तरवैतृष्ण्यांश एव दृष्टान्तो गम्य इति ॥ ११ ॥ २ ॥ श्रीकविर्निमिम् ॥ ३४० ॥

तदेतद्व्याख्यातमभिधेयम् । अत्रान्योऽपि विशेषः शास्त्रमहाजन-दृष्ट्यानुसन्धेयः । गुरुः शास्त्रं श्रद्धा रुचिरनुगतिः सिद्धिरिति मे यदेतत् तत् सर्वं चरणकमलं राजति ययोः । कृपापूरस्यन्दस्नपितनयनाम्भोज-युगलैः सदा राधाकृष्णावशरणगती तौ मम गतिः ॥

इति कलियुगपावनस्वभजनविभजनप्रयोजनावतार-श्रीश्रीभगवत्कृष्ण-चैतन्यदेवचरणानुचरविश्ववैष्णवराजसभासभाजन-श्रीरूपसना-तनानुशासनभारतीगर्भे श्रीभागवतसन्दर्भे भक्तिसन्दर्भो नाम पञ्चमः सन्दर्भः ॥ ५ ॥

श्रीभागवतसन्दर्भे सर्वसन्दर्भगर्भगे ।
पञ्चमो भक्तिसन्दर्भः समाप्तिमिह सङ्गतः ॥

समाप्तोऽयं पञ्चमः सन्दर्भः ।

—o—

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

षट्सन्दर्भनामक-

# श्रीभागवतसन्दर्भे

षष्ठः

## प्रीतिसन्दर्भः ।

तौ सन्तोषयता सन्तौ श्रीलरूपसनातनौ ।
दाक्षिणात्येन भट्टेन पुनरेतद्विविच्यते ॥
तस्याद्यं ग्रन्थनालेखं क्रान्तव्युत्क्रान्तखण्डितम् ।
पर्य्यालोच्याथ पर्य्यायं कृत्वा लिखति जीवकः ॥

अथ प्रीतिसन्दर्भो लेख्यः । इह खलु शास्त्रप्रतिपाद्यं परमतत्त्वं सन्दर्भचतुष्टयेन पूर्वं सम्बद्धम् । तदुपासना च तदनन्तरसन्दर्भेणाभिहिता । तत्क्रमप्राप्तत्वेन प्रयोजनं खल्वधुना विविच्यते । पुरुषप्रयोजनं तावत् सुखप्राप्तिर्दुःखनिवृत्तिश्च । श्रीभगवत्प्रीतौ तु सुखत्वं दुःखनिवर्त्तकत्वञ्चात्यन्तिकमिति एतदुक्तं भवति । यत् खलु परमतत्त्वं शास्त्रप्रतिपाद्यत्वेन पूर्वं निर्णीतं, तदेव सदनन्तपरमानन्दत्वेन सिद्धम् । श्रुतावपि सैषानन्दस्य मीमांसा भवतीत्यारभ्य मानुषानन्दतः प्राजापत्यानन्दपर्य्यन्तं दशकृत्वः शतगुणिततया क्रमेण तेषामानन्दोत्कर्षपरिमाणं प्रदर्श्य, पुनश्च ततोऽपि शतगुणत्वेन परब्रह्मानन्दं प्रदर्श्याप्यपरितोषात् यतो वाचो निवर्त्तन्ते, इत्यादिश्लोकेन तदानन्दस्यानन्त्यमेव स्थापितं विलक्षणत्वञ्च । को ह्येवान्यात् कः प्राण्यादयदेष आकाश आनन्दो न स्यादित्यनेन नानास्वरूपधर्म्मवतोऽपि तस्य केवलानन्दरूपत्वमेव च दर्शितम् । तथाभूतमार्त्तण्डादिमण्डलस्य केवलज्योतिष्ट्ववत् । अथ जीवश्च तदीयोऽपि तज्ज्ञानसंसर्गाभावयुक्तत्वेन तन्मायापराभूतः सन्नात्मस्वरूपज्ञानलोपान्मायाकल्पितोपाध्यावेशाच्चानादिसंसारदुःखेन सम्बध्यत इति परमात्म-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सन्दर्भादावेव निरूपितमस्ति। तत इदं लभ्यते—परमतत्त्वसाक्षात्कारलक्षणं तज्ज्ञानमेव परमानन्दप्राप्तिः, सैव परमपुरुषार्थं इति। स्वाभाज्ञाननिवृत्तिः दुःखात्यन्तनिवृत्तिश्च निदाने तदज्ञाने गते सति स्वत एव सम्पद्यते। पूर्वस्याः परमतत्त्वस्वप्रकाशताभिव्यक्तिलक्षणभावात्मकत्वात् उत्तरस्याश्च ध्वंसाभावरूपत्वादनश्वरत्वम्। उक्ताञ्च पूर्वस्याः परमपुरुषार्थत्वं, धर्मस्य ह्यापवर्गस्येत्यादिना, तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया। पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया इत्यन्तेन। स्वतः सर्वदुःखनिवृत्तिश्च तत्रैवोक्ता, भिद्यते हृदयग्रन्थिरित्यादिना। श्रीविष्णुपुराणे च—निरस्तातिशयाह्लादसुखभावैकलक्षणा। भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिका मता इति। श्रुतौ च—आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति। एष एव च मुक्तिशब्दार्थः, संसारबन्धच्छेदपूर्वकत्वात्। यथोक्तं श्रीसूतेन—यदैवमेतेन विवेकहेतिना मायामयाहङ्करणात्मबन्धनम्। छित्त्वाच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यन्तिकमङ्ग संप्लवमिति। अच्युताख्ये आत्मनि परमात्मनि अनुभवो यस्य तथाभूतः सन् अवतिष्ठते यत् तमात्यन्तिकं संप्लवं मुक्तिमाहुरित्यर्थः। अथ मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिरित्येतदपि तत्तुल्यार्थमेव; यतः स्वरूपेण व्यवस्थितिर्नाम स्वरूपसाक्षात्कार उच्यते; तदवस्थानमात्रस्य संसारदशायामपि स्थितत्वात्; अन्यथारूपत्वस्य च तदज्ञानमात्रार्थत्वेन तद्धानौ तज्ज्ञानपर्यवसानात्। स्वरूपञ्चात्र मुख्यं परमात्मलक्षणमेव। रश्मिपरमाणूनां सूर्य इव स एव हि जीवानां परमोऽंशिस्वरूपः। यथोक्तं ब्रह्माण्डं प्रति श्रीमता गर्भोदशायिना—यदा रहितमात्मानं भूतेन्द्रियगुणाशयैः। स्वरूपेण मयोपेतं पश्यन् स्वाराज्यमृच्छति॥ इति। उपेतं युक्तमित्येवाक्लिष्टोऽर्थः। जीवस्वरूपस्यैव गौणानन्दत्वं दर्शितम्। तस्मात् प्रियतमः स्वात्मेत्युक्त्वा, कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्। जगद्धिताय सोऽप्यत्र देहीवेत्यनेन जीवपरयोरभेदवादस्तु परमात्मसन्द-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

र्मादौ विशेषतोऽपि परिहृतोऽस्ति । अतएव निरधारयच्छ्रुतिः, रसो वै सः रसं ह्येवायं लब्ध्वानन्दीभवतीति । अत्रांशेनांशिप्राप्तिश्च द्विधा योजनीया । तत्राद्या ब्रह्मप्राप्तिर्मायाद्वयविद्यानाशानन्तरं केवलतत्स्वरूपशक्तिलक्षणतद्विज्ञानाविर्भावमात्रम् । सा च स्वस्थान एव वा स्यात्, क्रमेण सर्वलोकसर्वावरणातिक्रमानन्तरं वा स्यात्, उपासनाविशेषानुसारेण । द्वितीया भगवत्प्राप्तिश्च तस्य विभोरप्यसर्वप्रकटस्य तस्मिन्नाविर्भावेन विभुनापि वैकुण्ठे सर्वप्रकटेन तेनाचिन्त्यशक्तिना स्वचरणारविन्दसान्निध्यप्रापनया च । तदेवं स्थिते, सा च मुक्तिरुत्क्रान्तदशायां जीवद्दशायामपि भवति । उत्क्रान्तस्योपाध्यभावेऽपि तदीयस्वप्रकाशतालक्षणधर्म्माव्यवधानस्यैतत्साक्षात्काररूपत्वात् । जीवतस्तत्साक्षात्कारेण मायाकल्पितस्यान्यथाभावस्य मिथ्यात्वावभासात् सैषा मुक्तिरेवात्यन्तिकपुरुषार्थतयोपदिश्यते—तत्रापि मोक्ष एवार्थ आत्यन्तिकतयेष्यते । त्रैवर्ग्योऽर्थो यतो नित्यं कृतान्तभयसंयुतः ॥ इति श्रीपृथुं प्रति श्रीसनत्कुमारेण । श्रुतिश्च—येनाहं नामृतः स्यां किमहं तेन कुर्य्यामिति । तदेवं परमतत्त्वसाक्षात्कारात्मकस्य तस्य मोक्षस्य परमपुरुषार्थत्वे स्थिते पुनर्विविच्यते । तच्च परमं तत्त्वं द्विधाविर्भवति ;—अस्पष्टविशेषत्वेन स्पष्टस्वरूपभूतविशेषत्वेन च । तत्र ब्रह्माख्यास्पष्टविशेषपरतत्त्वसाक्षात्कारतोऽपि भगवत्परमात्माद्याख्यस्पष्टविशेषतत्साक्षात्कारस्योत्कर्षं, भगवत्सन्दर्भे, जिज्ञासितमधीतञ्च ब्रह्म यत् तत् सनातनम् । तथापि शोचस्यात्मानमकृतार्थ इव प्रभो ॥ इत्यादिप्रकरणकप्रघट्टकेन दर्शितवानस्मि । अत्रापि वचनान्तरैर्दर्शयिष्यामि । तस्मात् परमात्मत्वादिलक्षणनानावस्थभगवत्साक्षात्कार एव तत्रापि परमः । तत्र सत्यपि निरुपाधिप्रीत्यास्पदत्वस्वभावस्य तस्य स्वरूपधर्म्मान्तरवृन्दसाक्षात्कृतौ परमत्वे प्रीतिभक्त्यादिसंज्ञं प्रियत्वलक्षणधर्म्मविशेषसाक्षात्कारमेव परमात्मत्वेन मन्यन्ते । तया प्रीत्यैवात्यन्तिक-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दुःखनिवृत्तिश्च, यां प्रीतिं विना तत्स्वरूपस्य तद्धर्मान्तरवृन्दस्य च साक्षात्कारो न सम्पद्यते। यत्र सा तत्रावश्यमेव सम्पद्यते। यावल्लेव प्रीतिसम्पत्तिस्तावत्येव तत्सम्पत्तिः। सम्पद्यमाने सम्यक्षेव तस्मिन् साधिकमाविर्भवति। तदेतत् सर्वमपि युक्तमेव। परमसुखं खलु भगवतस्तद्गुणवृन्दस्य च स्वरूपम्। सुखञ्च निरुपाधिप्रीत्यास्पदम्। ततस्तदनुभवे प्रीतेरेव मुख्यत्वमिति। तस्मात् पुरुषेण सैव सर्वदान्वेषितव्येति पुरुषप्रयोजनं तत्रैव परमतममिति स्थितम्। क्रमेणोदाह्रियते—तत्र सत्यपीत्यादिकम्; सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा। स्वर्गापवर्गं मद्धाम कथञ्चिद् यदि वाञ्छतीत्यादि श्रीभगवद्वाक्यादौ; तथेत्यादिकम्; प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावदिति श्रीऋषभदेववाक्ये; यामित्यादिकं; भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सतामिति श्रीभगवद्वाक्ये; सम्पद्यमान इत्यादिकं; मद्रूपमद्वयं ब्रह्म मध्याद्यन्तविवर्जितम्। स्वप्रभं सच्चिदानन्दं भक्त्या जानाति चाव्ययमिति वासुदेवोपनिषदि; यत्रेत्यादिकम्; भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पूरुषो भक्तिरेव भूयसीति माठरश्रुतौ। यावतीत्यादिकम्; भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककाल इति कवियोगेश्वरवाक्ये। एवं तत्त्वमसीत्यादि शास्त्रमपि तत्प्रेमपरमेव ज्ञेयम्। त्वमेवासुक इतिवत्। किञ्च लोकव्यवहारोऽपि तत्पर एव दृश्यते। सर्वे हि प्राणिनः प्रीतितात्पर्य्यका एव। तदर्थमात्मव्ययादेरपि दर्शनात्। किन्तु योग्यविषयमलब्ध्वा तैस्तच तत्र सा परिवर्ज्यते। अतः सर्वैरेव योग्यतद्विषयेऽन्वेष्टुमिष्टे सति श्रीभगवत्येव तस्याः पर्य्यवसानं स्यादिति। तदेवं भगवत्प्रीतेरेव परमपुरुषार्थत्वे समर्थिते साधूक्तम् अथ प्रीतिसन्दर्भो लेख्य इत्यादि। स एष एव परमपुरुषार्थः क्रमरीत्या सर्वोपरि दर्शयितुं संदृभ्यते। तत्रोक्तलक्षणस्य मुक्तिसामान्यस्य मोक्षप्रयोजनत्वमाह, सर्ववेदान्तेत्यादौ कैवल्यैकप्रयोजनमिति॥१॥

केवलः शुद्धः ; तस्य भावः कैवल्यम् ; तदेकमेव प्रयोजनं परम-पुरुषार्थत्वेन प्रतिपाद्यं यस्य तदिदं श्रीभागवतमिति पूर्वश्लोकस्थेनान्वयः। दोषमूलं हि जीवस्य परमतत्त्वज्ञानाभाव एवेत्युक्तम् । भयं द्वितीयाभिनिवेशतः स्यादित्यादौ ईशादपेतस्येत्यादिभिः । अतस्तज्ज्ञानमेव शुद्धत्वमिति कैवल्यशब्दस्यात्र पूर्ववत्तदनुभव एव तात्पर्यम्। अथवा कैवल्यशब्देन परमस्य स्वभाव एवोच्यते। यथा स्कान्दे—ब्रह्मेशानादिभिर्देवैर्यत् प्राप्तुं नैव शक्यते। स यत्स्वभावः कैवल्यं स भवान् केवलो हरे ॥ इति। क्वचित् स्वार्थिकतद्धितान्तेन कैवल्यशब्देनापि परम उच्यते। यथा श्रीदत्तात्रेयशिक्षायाम्—केवलानुभवानन्दसन्दोहो निरुपाधिकः। परावराणां परम आस्ते कैवल्यसञ्ज्ञित इति ॥ तथाप्युभयथैव तदनुभव एव तात्पर्य्यम्। तत्स्वभावमेव वा। तमेवानुभावयितुमिदं शास्त्रं प्रवृत्तमित्यर्थः ॥१२॥१३॥ श्रीसूतः ॥ १ ॥

तथा चान्यत्र—एतावानेव मनुजैर्योगनैपुण्यबुद्धिभिः। स्वार्थः सर्वात्मना ज्ञेयो यत्परात्मैकदर्शनम् ॥ २ ॥

टीका च—न चातः परः पुरुषोऽस्तीत्याह, एतावानिति। परस्यात्मन एकं दर्शनमिति यत् एतावानेवेत्येषा। परमात्मनः केवलस्य दर्शनमिति वा ॥ ६ ॥ १६ ॥ श्रीसङ्कर्षणश्चित्रकेतुम् ॥ २ ॥

सैषा हि मुक्तिरुत्क्रान्तदशायां द्विधा भवति ;—सद्य एव च क्रमरीत्या च। तत्र पूर्वा, द्वितीये, स्थिरं सुखं चासनमित्यादिप्रकरणान्ते विसृजेत् परं गत इत्यत्र। उत्तरा च, तदनन्तरं, यदि प्रयास्यन् नृप पारमेष्ठ्यमित्यादौ तेनात्मनात्मानमुपैति शान्तिमित्यत्र। जीवद्दशायामपि सा तु तद्विशेषेष्वशतो दर्शनीया। तत्र ब्रह्मसाक्षात्कारलक्षणां जीवन्मुक्तिमाह—यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा। अविद्ययात्मनि कृते इति तद्ब्रह्मदर्शनम् ॥ ३ ॥

यत्र यस्मिन् दर्शने स्थूलसूक्ष्मरूपे शरीरे स्वसंविदा जीवात्मनः स्वरूपज्ञानेन प्रतिषिद्धे भवतः। केन प्रकारेण, वस्तुत आत्मनि ते नस्त

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एव किन्त्वविद्ययैवात्मनि कृते अध्यस्ते इति एतत्प्रकारेणेत्यर्थः। तद्ब्रह्मदर्शनमिति यत्तदोरन्वयः। ब्रह्मणो दर्शनं साक्षात्कारः। यत्र स्वसंविदेत्युक्त्या जीवस्वरूपज्ञानमपि तदाश्रयमेव भवति इति, तथा केवलस्वसंविदा ते निषिद्धे न भवत इति च ज्ञापितम्। ततश्च जीवत एवाविद्याकल्पितमायाकार्य्यसम्बन्धमिथ्यात्वज्ञापकजीवस्वरूप-साक्षात्कारेण तादात्म्यापन्नब्रह्मसाक्षात्कारो जीवन्मुक्तिविशेष इत्यर्थः ॥ १ ॥ २ ॥ श्रीसूतः ॥ ३ ॥

ईदृशमेव तन्मुक्तिलक्षणं श्रीकापिलेये मुक्ताश्रयमित्यादिचतु-ष्टये दर्शितम्। तत्र हि प्रतिनिवृत्तगुणप्रवाहः सन् आत्मानं परमा-त्मानमैक्षत इति मुक्ताश्रयमित्यादौ स्वस्वरूपभूते महिम्नि अवसितो निष्ठां प्राप्तः सन्नुपलब्धपरात्मकाष्ठ इति सोऽप्येतयेत्यादौ स्वरूपं जीव-ब्रह्मणोर्याथात्म्यमध्यगमदिति देहं चेत्यादौ एवं प्रतिबुद्धवस्तुरिति देहोऽपीत्यादौ चेति। तस्मादस्य प्रारब्धकर्म्ममात्राणामनभिनिवेशेनैव भोगः। एवमेवोक्तं, तत्र को मोहः कः शोक एकत्वमनुपश्यत इति। अथान्तिमां ब्रह्मसाक्षात्कारलक्षणां मुक्तिमाह—यद्येषो-परता देवी माया वैशारदी मतिः। सम्पन्न एवेति विदुर्महिम्नि स्वे महीयते ॥ ४ ॥

एषा जीवन्मुक्तिदशायां स्थिता विशारदेन परमेश्वरेण दत्ता देवी द्योतमाना मतिर्विद्या तद्रूपा या माया स्वरूपशक्तिवृत्तिभूतविद्याविर्भाव-द्वारलक्षणा सत्त्वमयी मायावृत्तिः सा यदि उपरता निवृत्ता भवति तदा व्यवधानाभासस्यापि राहित्यात् सम्पन्नो लब्धब्रह्मानन्दसम्पत्तिरेवेति विदुर्मुनयः। ततश्च तत्सम्पत्तिलाभात् स्वे महिम्नि स्वरूपसम्पत्तावपि महीयते पूज्यते प्रकृष्टप्रकाशो भवतीत्यर्थः ॥ १ ॥ २ ॥ श्रीसूतः ॥ ४ ॥

अत्र पूर्वं तत्त्वभगवत्परमात्मसन्दर्भेष्वेवं मूलेन श्रुत्यादिभिश्च प्रतिपादितम्। जीवाख्यसमष्टिशक्तिविशिष्टस्य परमतत्त्वस्य खल्वंश-एको जीवः। स च तेजोमण्डलस्य बहिश्चररश्मिपरमाणुरिव परम-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

चिदेकरसस्य तस्य वह्निस्वरचित्परमाणुः । तत्र तस्य व्यापकत्वात् तदेकदेशत्वमेव जीवे स्यात् । निराकारतया तदेकदेशत्वम् न विरुद्धम् । तथापि बहिस्वरत्वं तदाश्रयित्वात् । तज्ज्ञानाभावात् छायया रश्मिवत् माययाभिभाव्यत्वाच्च वह्निस्वरत्वं व्यपदिश्यते । रश्मिस्थानीयत्वञ्च तद्व्यतिरेकाद् व्यतिरेकितया यस्तदाश्रयिभावः, या च पूर्वयुक्त्या वह्निस्वरत्वेऽप्येकवस्तुत्वश्रुतिस्तदादिभिर्गम्यते । शक्तित्वञ्च तद्रूपतयैव तदीयलीलोपकरणत्वात् । अणुत्वञ्च शब्दात् हरिचन्दनविन्दुवत् तस्य प्रभावलक्षणगुणेनैव सर्वदेहव्याप्तेः । सर्वं चैतत् परमस्याचिन्त्यशक्तिमयत्वादविरुद्धमिति पूर्वं दृढ़ीकृतमस्ति, श्रुतेस्तु शब्दमूलत्वादिति न्यायेन, एकदेशस्थितस्याग्नेरित्यादिना च । तत्र जीवेश्वरयोरत्यन्ताभेदे युगपदविद्याविद्याश्रयत्वाद्यनुपपत्तिश्च पूर्वं विवृता । तत्त्वमसीत्यादौ लक्षणा त्वत्यन्ताभेदे तदंशत्वे च समानैव । परस्तत्त्वस्य निरंशत्वश्रुतिस्तु द्विधा प्रवर्त्तते । तत्र केवलविशेष्यलक्षणनिर्देशपराया मुख्यैव प्रवृत्तिः ; आनन्दमात्रत्वात्तस्य । आनन्दैकरूपस्य तस्य स्वरूपशक्तिविशिष्टस्य निर्देशपरायास्तु प्राकृतांशलेशराहित्यमात्रे तात्पर्य्याद्गौणी प्रवृत्तिः । सर्वशक्तिविशिष्टस्य तस्य तु सर्वांशित्वं गीतमेव । तदेवं तस्य रश्मिपरमाणुस्थानीयांशत्वे सिद्धे तद्वत् सर्वस्यामपि दशायां कर्त्तृत्वभोक्तृत्वादिस्वरूपधर्म्मा अपि सिध्यन्ति । तद्वदेव च परमेश्वरशक्त्यनुग्रहेणैव ते कार्य्यक्षमा भवन्ति । तत्र तेषां प्रकृतिविकारमयकर्त्तृत्वादिकं तदीयमायाशक्तिमयानुग्रहेण । अतएव तत्सम्बन्धात् तेषां संसारः । स्वानुभवब्रह्मानुभवभगवदनुभवकर्त्तृत्वादिकन्तु तदीयस्वरूपशक्त्यनुग्रहेण । यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदिति श्रुतिश्च तत्स्वरूपशक्तिं विना तद्दर्शनासामर्थ्यं द्योतयति । यमेवैष वृणुते तेन लभ्य इत्यादिश्रुतिः । अतएव स्वरूपशक्तिसम्बन्धान्मायान्तर्द्धाने तेषां संसारनाशः । येषान्तु मते मुक्तावानन्दानुभवो नास्ति, तेषां पुमर्थता न सम्पद्यते । सतोऽपि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वस्तुनः स्फुरणाभावे निरर्थकत्वात्। न च सुखमहं स्यामिति कस्यचिदिच्छा, किन्तु सुखमहमनुभवामि इत्येव। ततश्च प्रवृत्त्यभावात् तादृशपुरुषार्थसाधनप्रेरणापि शास्त्रं व्यर्थैव स्यात्। तन्मते केवलानन्दरूपस्याज्ञानदुःखसम्बन्धासम्भवात् तन्निवृत्तिरूपश्च पुरुषार्थो न घटते। विगीतं त्वीदृशपुरुषार्थत्वं प्राचीनबर्हिषं प्रति श्रीनारदवाक्ये, दुःखहानिः सुखावाप्तिः श्रेयस्तन्नेह चेष्यत इति। तस्मादस्त्येवानुभवः। तथाच श्रुतिः, रसं ह्येवायं लब्ध्वानन्दीभवतीति। आत्मरतिः आत्मक्रीड़ इत्यादिश्च। यथा विष्णुधर्मे—भिन्ने दृतौ यथा वायुर्नैवान्यः सह वायुना। क्षीणपुण्याघबन्धस्तु तथात्मा ब्रह्मणा सह॥ ततः समस्तकल्याणसमस्तसुखसम्पदाम्। आह्लादमन्यमकलङ्कमवाप्नोति शाश्वतम्॥ ब्रह्मस्वरूपस्य तथा ह्यात्मनो नित्यदेव सः। व्युत्थानकाले राजेन्द्र आस्ते हि अतिरोहितः॥ आदर्शस्य मलाभावाद् वैमल्यं काशते यथा। ज्ञानाग्निदग्धहेयस्य स ह्लादो ह्यात्मनस्तथा॥ तथा हेयगुणध्वंसादवबोधादयो गुणाः। प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते॥ ज्ञानं वैराग्यमैश्वर्यं धर्मश्च मनुजेश्वर। आत्मनो ब्रह्मभूतस्य नित्यमेव चतुष्टयम्॥ एतद्द्वैतमाख्यातमेष एव तवोदितः। अयं विष्णुरिदं ब्रह्म तथैतत् सत्यमुत्तममिति। अत्र जीवब्रह्मणोरंशांशित्वांशेनैव वायुदृष्टान्तः। अंशत्वेऽपि वह्निरङ्गत्वं त्वन्यतो ज्ञेयम्। अतः पृथगीश्वरे स्वरूपभूतानुभवे च सति तद्वैमुख्येनानादिना लब्धच्छिद्रयेशमायया तदनुभवलोपादेः सम्भवात् कथञ्चित्साम्मुख्येन तदनुग्रहान्निवृत्तिश्चास्ति। आनन्दं ब्रह्मणो विद्वानित्यादश्रुतिः। न तस्मात् प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येतीत्यत्रापि। अन्यो ब्रह्मभावस्तथान्यो ब्रह्मण्यप्यय इति स्पष्टम्। ब्रह्मभावानन्तरं तदप्ययस्य पुनरभिधानात्। अप्येतेः कर्मतया ब्रह्मनिर्देशाच्च। ततः च ब्रह्मैव सन्निति तत्सामान्यतत्तदात्मापत्त्यैवाभेदनिर्देशः। एवं ब्रह्मवेद ब्रह्मैव भवतीत्यत्रापि व्याख्येयम्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्वचिदेकत्वशब्देनापि तथैवोच्यते । अत्र तत्साम्यं यथोक्तम्—निरञ्जनं परमसाम्यमुपैति इत्यादिश्रुतौ ; इदं ज्ञानमुपाश्रित्य मम साधर्म्म्य-मागता इति श्रीगीतोपनिषत्सु । उभयं चोक्तं स्पष्टमेव । यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतमेति श्रुतौ । तत्रैवकारेण न तु तदेव भवति न तु वा तदसाधर्म्म्येण पृथगुपलभ्यत इति द्योत्यते । स्कान्दे च—उदके तूदकं सिक्तं मिश्रमेव यथा भवेत् । तद्वै तदेव भवति यतो बुद्धिः प्रवर्त्तते । एवमेवं हि जीवोऽपि तादात्म्यं परमात्मना । प्राप्तोऽपि नासौ भवति स्वातन्त्र्यादिविशेषणादिति । बिम्बप्रतिबिम्बनिर्देशश्च अम्बुवदग्रहणादित्यादिसूत्रद्वये गौण एव योजितः । एवमेष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इत्यत्रापि तथैव भेदः प्रतिपादितः । श्रीविष्णुपुराणेऽपि विभेदजनके ज्ञाने नाशम् इत्यादौ देवादिभेदनाशानन्तरं ब्रह्मात्मनोर्भेदं न कोऽप्यसन्तं करिष्यति, अपि तु सन्तमेव करिष्यतीति व्याख्यातमेव । एवमेव टीकाकृद्भिः सम्मतं श्रीगोपानां ब्रह्मसम्पत्त्यनन्तरमपि वैकुण्ठदर्शनम् । तस्मात् साधु व्याख्यातं यद्येषोपरतेत्यादि । तदेवं ब्रह्मसम्पत्तिर्व्याख्याता । तत्र श्रीविष्णुपुराणे परमार्थनिर्णये रहूगणं प्रति जड़भरतवाक्यं यथा । तत्र केवलब्रह्मानुभवस्यैव परमार्थत्वं निर्देष्टुं यज्ञाद्यपूर्वस्य तावदपरमार्थत्वं चतुर्भिरुक्तम्—ऋग्यजुःसामनिष्पाद्यं यज्ञकर्म्म मतं तव । परमार्थभूतं तत्रापि श्रूयतां गदतो मम ॥ यत्तु निष्पद्यते कार्य्यं मृदा कारणभूतया । तत्कारणानुगमनाज्जायते नृप मृन्मयम् ॥ एवं विनाशिभिर्द्रव्यैः समिदाज्यकुशादिभिः । निष्पाद्यते क्रिया या तु सा भवित्री विनाशिनी ॥ अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते । तत्तु नाशि न सन्देहो नाशिद्रव्योपपादितमिति । एतद्दृष्टान्तेन पूजादिमयभक्तेरपि तादृशत्वं नानुमेयम् । अपूर्ववद्भक्तेर्निष्पाद्यत्वाभावात् । गुणमयं



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

हि निष्पाद्यं स्यात्, नागुणमयम्। कैवल्यं सात्त्विकं ज्ञानमित्यारभ्य एकादशे श्रीभगवतैवागुणमयत्वमङ्गीकृतम्। अतः स्वरूपशक्तिवृत्तिविशेषत्वेन तस्याः भगवत्प्रसादे सति स्वयमाविर्भाव एव न जन्म। स चाविर्भावोऽनन्त एव तदीयफलानन्त्यश्रवणात्। तस्मात् परमेश्वरगुणाश्रयत्वं तत्रोपाधिर्भविष्यति। हिंसायां पापोत्पत्त्यनुमितावविहितत्ववत्। ज्ञानप्रकरणे चास्मिन् भक्तिर्न प्रस्तूयत इति साधारणयज्ञादिकमुपादायैव प्रवृत्तिश्चेयम्। तदेवं यज्ञादिकर्मापूर्वस्य विनाशित्वादपरमार्थत्वमुक्त्वा निष्कामकर्मणोऽपि साधनत्वेनार्थान्तरस्यैव साध्यत्वात्तादृशत्वमुक्तमेकेन—तदेवाफलदं कर्म परमार्थो मतस्तव। मुक्तिसाधनभूतत्वात् परमार्थो न साधनमिति। अत्र भक्तेः साधनभूतत्वेऽपि न तादृशत्वं मन्तव्यम्। भगवत्प्रेमविलासरूपतया सिद्धानामपि तदत्यागश्रवणात्। तथादिदमपि पूर्ववज्ज्ञेयम्। ननु शुद्धजीवात्मध्यानस्य परमार्थत्वं भवेत्। मुक्तिदशायामपि स्फूर्त्यङ्गीकारेण तद्रूपस्य तस्यानश्वरत्वात्। तदाच्छादनादधुना संसार इति तस्यैव साध्यत्वाच्च। तत्रोक्तमेकेन—ध्यानं वेदात्मनो भूप परमार्थार्थशब्दितम्। भेदकारिपरेभ्यस्तत्परमार्थो न भेदवानिति। यद्विज्ञानेन सर्वविज्ञानं भवति तदेव ब्रह्मश्रुतौ परमार्थत्वेन प्रतिज्ञातम्। सर्वविज्ञानमयत्वञ्च तस्य सर्वात्मत्वात्। आत्मविज्ञानं हि ज्वालाविस्फुलिङ्गादेरिव विज्ञापकं भवति। एकस्य जीवस्य तु तदीयजीवशक्तिलक्षणांशपरमाणुत्वनित्यतत्त्वस्य तत्स्फुरणस्य च भेदवतो न परमार्थत्वमित्यर्थः। ननु जीवात्मपरमात्मनोरेकत्र स्थितिभावनयात्यन्तसंयोगे प्रादुर्भूते सति तस्यापि सर्वात्मता स्यात्; तदभेदापत्तेः; स च योगो वशिनश्वरः; ज्ञानानन्तरसिद्धत्वात्; तस्मात् तयोर्योग एव परमार्थो भवतु। तत्रोक्तमेकेन—परमात्मात्मनोर्योगः परमार्थ इतीष्यते। मिथ्यैतदन्यद् द्रव्यं हि नैति तद्द्रव्यतां यत इति। एतत् पर-

मार्थत्वं मिथ्यैवेष्यत इत्यर्थः । हि निश्चितम् । यतो यस्मात् जीव-
लक्षणमन्यद् द्रव्यं तद्द्रव्यतां परमात्मलक्षणद्रव्यतां न याति ।
तस्मान्महातेजःप्रविष्ट-स्वल्पतेजोवदत्यन्तसंयोगतोऽप्यभेदानुपपत्तेस्तयो-
र्योगोऽपि न परमार्थ इति भावः । अथवात्र योगशब्देनैकत्वमेवोच्यते ।
ततश्चैतत् एकत्वमिति व्याख्येयम् । शेषं पूर्ववत् । तदेवं पूर्वपक्षान्
निषिध्य उत्तरपक्षं स्थापयितुमुपक्रान्तमेकेन—तस्मात् श्रेयांस्यशे-
षाणि नृपैतानि न संशयः । परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां ममेति ।
श्रेयांसि परमार्थसाधनानि । परमार्थनिर्देशस्त्रयेणोक्तः—एको
व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः । जन्मवृद्ध्यादिरहित आत्मा
सर्वगतोऽव्ययः । परज्ञानमयोऽसद्भिर्नामजात्यादिभिर्विभुः । न
योगवान्न युक्तोऽभून्नैव पार्थिव योक्ष्यति । तस्यात्मपरदेहेषु सतोऽप्येक-
मयं हि यत् । विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिन इति । एकः
न तु जीवा इवानेके । ज्वालाविस्फुलिङ्गेष्वग्निरिव स्वशक्तिषु स्व-
कार्येषु (सर्वेषु) व्याप्नोतीति व्यापी । सर्वगत इत्यनेन जीव इव
नाखण्डे देहे प्रभावेनैव व्यापीति ज्ञापितम् । जीवज्ञानादपि परं यज्-
ज्ञानं तन्मयः तत्प्रकाशप्रधानः । असद्भिरिति विशेषणात् भगवद्रूपे
प्रकाश्येऽपि सद्भिः स्वरूपसिद्धैरेव नामादिभिर्योगवान् भव-
तीति विज्ञापितम् । तस्यैवंलक्षणस्य परमात्मरूपेणात्मपरदेहेषु
आत्मनः परेषामपि देहेषु तत्तदुपाधिभेदेन पृथक् पृथगिव सतोऽपि
एकं तदीयं स्वस्वरूपं तन्मयं तदात्मकं यद्विज्ञानं तदनुभवः असाविव
परमार्थः ; नाशित्वात् साध्यत्वात् सर्वविज्ञानान्तर्भाववत्त्वाच्चेति
भावः । ये तु द्वैतिनः तत्तदुपाधिदृष्ट्या तस्यापि भेदं मन्यन्ते, तद्वि-
ज्ञानेन सर्वविज्ञानान्तर्भावञ्च न मन्यन्ते, ते पुनरतथ्यदर्शिन
एवेति । तच्चोपाधिभेदेऽभेदेऽप्यभेदो दृष्टान्तेन साधितो द्वाभ्याम्—
वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः । अभेदव्यापिनो वायोस्तथा
तस्य महात्मनः । एकत्वं रूपभेदश्च वाह्यकर्मप्रवृत्तिजः । देवादि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भेदमध्यास्ते नास्त्येवान्तरणो हि स इति। तथा तस्यैकत्वमित्यन्वयः। रूपस्य तत्तदाकारस्य भेदस्तु वाह्यस्य तदीयवहिरङ्गचिदंशस्य जीवस्य या कर्म्मप्रवृत्तिस्ततो जातः। स तु परमात्मा देवादिभेदमव्यैमितयैवाधिष्ठायास्ते तत्तदुपाधिसम्बन्धाभावाच्च नास्त्येवावरणं यस्य तथाभूतः सन्निति। तस्मात्तस्य देवादिरूपता तु स्वलीलामय्येवेति भावः। अथ श्रीभगवत्साक्षात्कारस्य मुक्तित्वमाह—ततो विदूरात् परिहृत्य दैत्या दैत्येषु सङ्गं विषयात्मकेषु। उपेतनारायणमादिदेवः स मुक्तसङ्गैरिषितोऽपवर्गः॥ ५॥

टीका च—यस्मात् स एवापवर्ग इष्ट इत्येषा। अत्र नारायणस्यापवर्गत्वं तत्साक्षात्कृतावेव पर्य्यवस्यति। तस्या एव संसारध्वंसपूर्वकपरमानन्दप्राप्तिरूपत्वात् तदस्तित्वमात्रत्वे तादृशलाभावाच्च॥ ३॥ ६॥ श्रीप्रह्लादः॥ ५॥

तथा—सत्याशिषो हि भगवंस्तव पादपद्ममाशीस्तथानुभजतः पुरुषार्थमूर्त्तेः। अप्येवमार्य्य भगवान् परिपाति दीनान् वाश्रेव वत्सकमनुग्रहकातरोऽस्मान्॥ ६॥

टीका च—हे भगवन् पुरुषार्थः परमानन्दः स एव मूर्त्तिर्यस्य तस्य तव पादपद्मम् आशिषो राज्यादेः सकाशात् सत्या आशीः परमार्थफलम्। हि निश्चितम्। कस्य, तथा तेन प्रकारेण त्वमेव पुरुषार्थ इत्येवं निष्कामतया अनुभजतः। यद्येवं तथापि हे आर्य्य हे स्वामिन् दीनान् सकामानप्यस्मान्नित्यादिका॥ ४॥ ८॥ श्रुव श्रीध्रुवप्रियम्॥ ६॥

स चात्मसाक्षात्कारो द्विविधः; अन्तराविर्भावलक्षणो वहिराविर्भावलक्षणश्च। यथा—प्रगायतः स्ववीर्य्याणि तीर्थपादः प्रियश्रवाः। आहूत इव मे शीघ्रं दर्शनं याति चेतसीत्यादौ तेऽचक्षताक्षविषयं स्वसमाधिभाग्यमित्यादौ च। तत्रान्तःसाक्षात्कारे योग्यता श्रीवद्गीते—न यस्य चित्तं वहिरर्थविभ्रमं तमोगुहायाञ्च विशुद्धमाविशत्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यद्भक्तियोगानुगृहीतमञ्जसा मुनिर्विचष्टे ननु तत्र ते गतिमिति। तत्र तेषां पूर्वोक्तानां सतां भक्तियोगेनानुगृहीतं विशुद्धं यस्य चित्तं वाह्येष्वर्थेषु भ्रान्तं न भवति तमोरूपायां गुहायां च न विशति स मुनिरित्यादिकं च व्याख्येयम्। वहिःसाक्षात्कारोऽपि व्यतिरेकेण तथैव नारदं प्रति श्रीभगवतोक्तम्—हन्तास्मिन् जन्मनि भवान् मा मां द्रष्टुमिहार्हति। अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनामिति। न केवलं शुद्धचित्तत्वमेव योग्यता। किं तर्हि, तद्भक्तिविशेषाविष्कृततदिच्छामयतदीयस्वप्रकाशताशक्तिप्रकाश एव मूलरूपा सा, यत्प्रकाशेन तदपि निःशेषं सिध्यति। यथान्तःसाक्षात्कारे, भिद्यते हृदयग्रन्थिरित्यादि। तथा वहिःसाक्षात्कारेऽपि श्रीसङ्कर्षणं प्रति चित्रकेतुवाक्ये, न हि भगवन् न घटितमिदं त्वद्दर्शनान्नृणामखिलपापक्षय इति। प्रह्लादं प्रति श्रीनृसिंहवाक्ये, मां प्रीणयत आयुष्मन् दर्शनं दुर्लभं मम। दृष्ट्वा मां न पुनर्जन्तुरात्मानं तप्तुमर्हतीति। श्रीभगवन्तं प्रति श्रुतदेववाक्ये च, स त्वं शाधि स्वभृत्यान्नः किं देव करवाम ते। एतदन्तो नृणां क्लेशो यद्भवानक्षिगोचर इति। तदेवं तत्प्रकाशेन निःशेषशुद्धचित्तत्वे सिद्धे, पुरुषकरणानि तदीयस्वप्रकाशताशक्तितादात्म्यापन्नतयैव तत्प्रकाशताभिमानवन्ति स्युः। तत्र भक्तिविशेषसापेक्षत्वमुक्तं, तच्छ्रद्दधाना मुनय इत्यादौ। तदिच्छामयेत्याद्युदाहरणं च, ब्रह्मभगवतोरविशेषतयैव दृश्यते। यथा सत्यव्रतं प्रति श्रीमत्स्यदेववाक्ये ;—मदीयं महिमानञ्च परं ब्रह्मेति शब्दितम्। वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदीति। तथैव हि ब्रह्माणं प्रति श्रीभगवद्वाक्ये ;—मनीषितानुभावोऽयं मम लोकावलोकनमिति। श्रीनारायणाध्यात्मे ;—नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः। त्वामृते पुण्डरीकाक्षं कः पश्येतामितं प्रभुमिति। श्रुतौ च ;—यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वामिति। ततस्तत्करणशुद्ध्यपेक्षापि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त च्छक्तिप्रतिफलनार्थमेव ज्ञेया। एवमपि भक्त्या तं दृष्टवति मुचुकुन्दादौ या मृगयापापाद्यस्थिता श्रीभगवता कीर्त्तिता, सा तु प्रेमवर्द्धिन्या झटितिभगवद्प्राप्तिशङ्काजन्मनस्तदुत्कण्ठाया वर्द्धनार्थं विभीषिकयैव कृता। यत्तु तदीयस्निग्धानां श्रीयुधिष्ठिरादीनां नरकदर्शनं तत् खलु इन्द्रमायामयमेवेति स्वर्गारोहणपर्वण्येव व्यक्तमस्ति।* विष्णुधर्मे तृतीयजन्मनि दत्ततिलधेनोरपि विप्रस्य प्रसङ्गमात्रेण नरकानामपि स्वर्गतुल्यरूपताप्राप्तिवर्णनात्। श्रीभागवतेन तु तदपि नाङ्गीक्रियते; तदनुपाख्यानात् प्रत्युताव्यवहितभगवत्प्राप्तिवर्णनाच्च। अथ यदवतारादावशुद्धचित्तानामपि तत्साक्षात्कारः श्रूयते, तत् खलु तदाभास एव ज्ञेयः। नाहं प्रकाशः सर्वस्य योगमायासमावृत इति श्रीगीतोपनिषद्भ्यः। योगिभिर्दृश्यते भक्त्या नाभक्त्या दृश्यते क्वचित्। द्रष्टुं न शक्यो रोषाच्च मत्सराच्च जनार्दन इति पाद्मोत्तरखण्डाच्च। अदर्शनञ्चानवतारसमये व्यापकस्यापि दर्शनाभावः। अवतारसमये तु परमानन्देऽपि दुःखदत्वं मनोरमेऽपि भीषणत्वं सर्वसुहृद्यपि दुर्हृत्त्वमित्यादिविपरीतदर्शनमेव। तदप्रकाशे योगमायाप्रकाशे च मूलं कारणं तद्भक्तापराधादिमयपुरुषचित्ताख्यच्छद्म। यत् खलु तदानीन्तने तस्य सार्वत्रिकप्रकाशेऽपि वज्रलेपायते। अतएव मुक्तिर्हित्वेत्यादिलक्षणस्याव्याप्तेर्न तस्य साक्षात्काराभासस्य मुक्तिसंज्ञत्वमपि। अतएव श्रीविष्णुपुराणे तच्च रूपमित्यादिगद्येन यद्यपि शिशुपालस्य तद्दर्शनमुक्तं, तथापि निर्दोषदर्शनं त्वन्तकाल एव उक्तम्, आत्मविनाशाय भगवदस्तचक्रांशुमालोज्ज्वलमक्षयतेजःस्वरूपं परमब्रह्मभूतमपगतद्वेषादिदोषे भगवन्तमद्राक्षीदित्यनेन। एतदन्तो नृणां क्लेशो यन्नवानक्षिगोचर इत्यादिकं च नृषु ये स्वच्छचित्ता ये च तद्भक्ता-

* तत् खलु लोकविभीषिकार्थं स्वदृष्टानेकनारकनिस्तारणार्थञ्च स्वाच्छन्द्यनैवाचरितमिति ज्ञेयमिति पाठान्तरम्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पराधेतरदोषमलिनचित्तास्तेषां क्लेशनाशस्य तदात्वापेक्षया ये त्वन्या-दृशास्तेषां तन्नाशस्योन्मुखतापेक्षयैव । तेभ्यः स्ववीक्षणविनष्टतमिस्र-दृग्भ्यः क्षेमं त्रिलोकगुरुरर्थदृशं च यच्छन्निति श्रवणात् श्रीविष्णु-पुराणाद्यनुसाराच्च । ते चास्वच्छचित्ता द्विविधाः ; भगवद्बहिर्मुखा भग-वद्विद्वेषिणः च । तद्बहिर्मुखाश्च द्विविधाः ; लब्धे तद्दर्शनेऽपि विषया-द्यभिनिवेशवन्तस्तदवज्ञातारश्च । यथा तदवतारसमये साधारण-देवमनुष्यादयः । यथा च कृष्णं मर्त्यमुपाश्रित्येत्यादिदुर्वचसो महेन्द्रा-दयः । यत उक्तं श्रुतिभिः—दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथानिति । महेन्द्रं प्रति श्रीभगवता च—मामैश्वर्य्यमदान्धो हि दण्डपाणिं न पश्यति । तं भ्रंशयामि सम्पद्भ्यो यस्य वाञ्छाम्यनुग्रहमिति । श्रीगोपानान्तु विषय-सम्बन्धो न स्वार्थः, किन्तु तत्सेवोपयोगार्थ एव । यथा, यद्धामार्थ-सुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते इति । कृष्णेऽर्पितात्मसुहृदर्थ-कलत्रकामा इति । कृष्णे कमलपत्राक्षे संन्यस्ताखिलराधस इति च । श्रीयादवपाण्डवानां स्वार्थ इवापि तत्सम्बन्धस्तदाभास एव । यथो-क्तम्—शय्यासनाटनालापक्रीड़ास्नानाशनादिषु । न विदुः सन्त-मात्मानं वृष्णयः कृष्णचेतस इति । किन्ते कामाः सुरस्पार्हा मुकुन्द-मनसो द्विजाः । अधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथेतरे इति । अतः, एवं गृहेषु सक्तानां प्रमत्तानां तदीहया इत्यादिकं जहल्लक्षणया तदुप-लक्षितान् धृतराष्ट्रादीनपेक्ष्योक्तम् । अतएवानन्तरं विदुरस्तदभि-प्रेत्येत्यादौ तत्र धृतराष्ट्रस्यैव शिक्षा, न तु तेषामपि । क्वचिच्च लीला-शक्तिरेव स्वयं तल्लीलामाधुर्य्यपोषाय प्रतिकूलेष्वनुकूलेषु चात्मोपकर-णेषु तादृशशक्तिं विन्यस्य तादृशतत्प्रियजनानामपि विषयावेशाद्या-भासं संपादयति । यथा पूतनावर्णने—वल्गुस्मितापाङ्गविसर्गवीक्षिते-र्मनो हरन्तीं वनितां व्रजौकसामिति । तदाभासत्वविवक्षया च मनो-हरन्तीं मनोहरेवाचरन्तीमिति श्लिष्टमुक्तम् । तद्दत्तशक्तित्वञ्च तस्या-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्तत्रैव सूचितम्। न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु। कुर्वन्ति सात्वतां भर्त्तुर्यातुधान्यश्च तत्र हीत्यनेन। तथैवेदं घटते—असंस्ताम्भोजकरेण रूपिणीं गोप्यः श्रियं द्रष्टुमिवागतां पतिमिति। श्रियं प्राकृतसम्पदधिष्ठात्रीं पतिं यं कञ्चित्तदुचितप्राचीनपुण्यभाजमित्यर्थः। पूर्ववदेव तां तीक्ष्णचित्तामित्यादौ तत्प्रभयावधर्षिते जननी अतिष्ठतामित्युक्तम्। एवमेव क्वचित्तादृशानामपि मायाभिभवाभासो मन्तव्यः। यथा, प्रायो मायास्तु मे भर्त्तुर्नान्या मेऽपि विमोहिनीत्यादिषु श्रीबलदेवादीनाम्। यथा दैत्यजन्मनि जयविजययोः। अत्र पूर्वेषां स्वल्प एव तदाभासः। तयोस्तु सम्यगिति विशेषः। तत्प्रेमादीनामनावरणादावरणाच्च। तत्र तयोर्वैरभावप्राप्तौ खलु मुनिकृतत्वं न स्यात्। मतन्तु मे इत्यत्र भगवदिच्छायास्तत्कारणत्वेन स्थापितत्वात्। नापि सा तदीयवैरभावाय सम्पद्यते स्वेच्छामयस्येत्यादिभ्यः। त्रैवर्गिकायाः सविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्रेत्यादिभिः कैमुत्यापाताच्च। यथा चोक्तम्—तथा न ते माधव तावकाः क्वचिद्भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदा इति। न च तयोरेव स्वापराधभोगशीघ्रनिस्तारार्थमपि तादृशीच्छा जाता इति वाच्यम्। तादृशैः परमभक्तैर्हि भक्तिं विना सालोक्यादिकमपि नाङ्गीक्रियते, तत्सद्भावे निरयोऽप्यङ्गीक्रियत इति। नात्यन्तिकं विगणयन्त्यपीत्यादेः। कामं भवः स्ववृजिनैर्निरयेषु नस्तादित्यादेश्च। अतएवाभ्यामपि तथैव प्रार्थितम्—मा वोऽनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह तु नौ व्रजतोरधोऽध इत्यनेन। न च तयोर्वास्तववैरभावे सति भक्तान्तराणामपि सुखं स्यादिति वाच्यम्। भक्तिस्वभावभक्तसौहृदविरोधादेव। तस्मात्तयोर्वैरभावाभासत्व एव श्रीभगवतस्तयोरन्येषां भक्तानामपि रसोदयः स्यादिति स्थितम्। तत एवमर्थापत्तिलब्धं सर्वभक्तसुखदश्रीभगवदभिमतयुद्धकौतुकादिसम्पादनार्थं वैरभावात्मकमायिकोपाधिं स्वाभाविकाणिमादिसिद्धिकेन शुद्धसत्त्वात्मकस्वविग्रहेण प्रविश्य स्वसान्निध्येन चेतनीकृत्य च विलीय

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्थिताया अपि भक्तिवासनायाः प्रभावेन तत्रानाविष्टाविव तिष्ठतः । अतो वैरभावजस्मरणेन वैरभावोऽपगत इत्युभयमपि वाच्यम् । एतदभिप्रेत्यैव श्रीवैकुण्ठेनाप्युक्तम्—यातं साभिष्टमस्तु शमिति । तथाहि हिरण्याक्षयुद्धे परानुषक्तमित्यादिपद्ये टीका—प्रचण्डमन्युत्वम् अधिक्षेपादिकं चानुकरणमात्रं दैत्यवाक्यभीतानां देवानां भयनिवृत्तये । वस्तुतस्तेन तथानुक्तत्वेन कोपादिहीनस्वभावादित्येषा । करालेत्यादिपद्ये च—इवेति वस्तुतः क्रोधाभाव इत्येषा । तदेवं स्यमन्तकोपाख्यानमहाकालपुरोपाख्यानमौषलोपाख्यानादौ श्रीबलदेवार्जुननारदादीनां क्रोधाद्यावेशोऽपि तदाभासत्वलेशेनैव सङ्गमयितव्यः । तत्र श्रीबलदेवार्जुनादीनां श्रीभगवन्मताज्ञानेन श्रीनारदादीनान्तु तज्ज्ञानेनेति विवेकः । कोपिता मुनयः शेपुर्भगवन्मतकोविदा इति तृतीये श्रीमदुद्धववाक्यात् । तस्माद् येषां लिङ्गान्तरेण निष्णात एव साक्षात्कारो गम्यते तेषामस्वच्छान्तःकरणत्वं प्रतीयमानमपि तदाभास एव । येषान्तु न गम्यते विषयावेशादिकञ्च दृश्यते, तेषां साक्षात्काराभास एवेति निर्णीतम् । तदेवमस्वच्छचित्तेषु वहिर्मुखाः पश्यन्तोऽपि न पश्यन्तीत्युक्तम् । तद्विद्वेषिणश्च द्विविधाः । एके सौन्दर्य्यादिकं गृह्णन्ति, तथापि तन्माधुर्य्याग्रहणात्तत्रैवारुच्या द्विषन्ति । यथा कालयवनादयः । अन्ये तु वैरूप्यमेव प्रतियन्ति, ततो द्विषन्ति च । यथा मल्लादयः । तदेवं पूर्वोत्तरयोश्चतुर्ष्वपि भेदेषु सदोषजिह्वाः खण्डाशिनो दृष्टान्ताः । एके हि पित्तवातजजिह्वादोषवन्तस्तदास्वादं न गृह्णन्ति, किन्तु सर्वादरमवधाय नावजानन्ति । अन्ये त्वभिमानिनोऽवजानन्त्यपि । अथापरे मधुररसमिदमिति गृह्णन्ति, किन्तु तिक्ताम्लादिरसप्रियास्तमेव रसं द्विषन्ति । अवरे च तिक्ततयैव तद्गृह्णन्ति, द्विषन्ति चेति । सर्वेषां चैषां निजदोषसव्यवधानखण्डग्रहणवत्तदाभासत्वम् । तेषां भगवत्स्वभावाननुभवश्च युक्त एव । ज्ञानभक्तिशुद्धप्रीत्यभावेन सच्चिदानन्दत्वपारमैश्वर्य्यपरममाधुर्य्यलक्षणानां तत्स्वभावानां ग्रहीतुमशक्यत्वात् ।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदग्रहणेऽपि कालान्तरे निस्तारः खण्डसेवनवदेव ज्ञेयः। यथोक्तं विष्णुपुराणे गद्येन, ततस्तमेवाश्लोशेषूच्चारयन्नित्यादिना अपगतद्वेषादिदोषो भगवन्तमद्राक्षीदित्यन्तेन। तस्मात् स्वच्छचित्तानामेव साक्षात्कारः, स एव च मुक्तिसंज्ञ इति स्थितम्। तस्य ब्रह्मसाक्षात्कारादप्युत्कर्षस्तु भगवत्सन्दर्भे सनकादिवैकुण्ठदर्शनप्रस्तावे श्रीनारदव्याससंवादादिमयब्रह्मभगवत्तारतम्यप्रकरणे च दर्शित एव। यत्र तस्यारविन्दनयनस्येत्यादिकं जिज्ञासितमधीतं चेत्यादिकञ्च वचनजातं प्रबलतमम्। तथैव श्रीध्रुवेणोक्तम्—या निर्वृतिस्तनुभृतामित्यादि। श्रीभागवतवक्तृतात्पर्यञ्च तत्रैव स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभाव इत्यादिना दर्शितम्। श्रीगीतोपनिषत्सु च ब्रह्मभूतः प्रसन्नात्मेत्यादिना तदेवाङ्गीकृतम्। अतएव श्रीप्रह्लादस्य भगवत्साक्षात्कारकृतसर्वाघधूननपूर्वकब्रह्मसाक्षात्कारानन्तरभगवत्-साक्षात्कारविशेषात्मकनिर्वृतिं परमाभीष्टत्वेनाह—स तत्करस्पर्शधुताखिलाशुभः सपद्यभिव्यक्तपरात्मदर्शनः। तत्पादपद्मं हृदि निर्वृतो दधौ हृष्यत्तनुः क्लिन्नहृदश्रुलोचनः॥ ७॥

स्पष्टम्॥ ७॥ ९॥ श्रीशुकः॥ ७॥

ईदृशेऽपि भगवत्साक्षात्कारे वहिःसाक्षात्कारस्योत्कर्षमाह—गृहीत्वाजादयो यस्य श्रीमत्पादाब्जदर्शनम्। मनसा योगपक्वेन स भवान् मेऽक्षिगोचरः॥ ८॥

टीका च—यस्य तव श्रीमत्पादाब्जदर्शनं मनसापि गृहीत्वा प्राप्य प्राकृता अप्यजादयो भवन्ति स भगवान् मेऽक्षिगोचरो जातोऽस्मि किमतः परं वरेणेत्यर्थ इत्येषा। अत्र यत्पादपांशुर्बहुजन्मकृच्छ्रत इत्यादिकमप्यनुसन्धेयम्। अतएव प्रगायतः स्ववीर्य्याणि तीर्थपादः प्रियश्रवाः। आहूत इव मे शीघ्रं दर्शनं याति चेतसीत्येवं भाववानपि। गोविन्दभुजगुप्तायां द्वारवत्यां कुरूद्वह। अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालस इत्युक्तम्॥ १२॥ ९॥ मार्कण्डेयः श्रीनारायणर्षिम्॥ ८॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अथैतस्यां भगवत्साक्षात्कारलक्षणायां मुक्तौ जीवदवस्थामाह—
अकिञ्चनस्य दान्तस्य शान्तस्य समचेतसः। मया सन्तुष्टमनसः सर्वाः सुखमया दिशः ॥ ८ ॥

भगवन्तं विना किञ्चनान्यदुपादेयत्वेन नास्तीत्यकिञ्चनस्य। तत्र हेतुः, मयेति। अकिञ्चनत्वेनैव हेतुना विशेषणत्रयं, दान्तस्येति। अन्यत्र हेयोपादेयराहित्यात् समचेतसः। सर्वत्र तस्यैव साक्षात्-कारात् सर्वा इत्युक्तम् ॥ ११ ॥ १४ ॥ श्रीभगवान् ॥ ८ ॥

तत्रोत्क्रान्तावस्था च श्रीप्रह्लादस्तुतौ उत्तम तेऽङ्घ्रिमूलं प्रीतोऽपवर्गशरणं ह्वयसे कदा न्वित्यादौ ज्ञेया। सैवान्तिमा मुक्तिश्च पञ्चधा, सालोक्यसार्ष्टिसारूप्यसामीप्यसायुज्यभेदेन। तत्र सालोक्यं समानलोकत्वं श्रीवैकुण्ठवासः। सार्ष्टिस्तत्रैव समानैश्वर्य्यमपि भव-तीति। सारूप्यं तत्रैव समानरूपतापि प्राप्यत इति। सामीप्यं समीपगमनाधिकारित्वम्। सायुज्यं केषाञ्चित्तु भगवच्छ्रीविग्रह एव प्रवेशो भवतीति। सालोक्यादिशब्दानां मुक्त्यादिशब्दसामानाधिकर-ण्यञ्च सालोक्यादित्वप्राधान्येन। तत्र सालोक्यसार्ष्टिसारूप्यमात्रे प्रायो-ऽन्तःकरणसाक्षात्कारः। सामीप्ये प्रायो बहिः। सायुज्ये चान्तर एव। तथापि प्रकटस्फूर्त्तिलक्षणं तत् सुषुप्तिवदनतिप्रकटस्फूर्त्तिलक्ष-णाद् ब्रह्मसायुज्याच्छिद्यते। उत्क्रान्तमुक्त्यवस्थायामपि विशेषस्फूर्त्तिः श्रुतावेव सम्मता, स वा एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरति-रात्मक्रीड़ आत्ममिथुन आत्मानन्दः स स्वराड्भवति सर्वेषु लोकेषु काम-चारी भवतीति। एषा च पञ्चविधापि गुणातीतैव। निर्गुणायां भूमविद्यायामेव, स एकधा भवति द्विधा भवति त्रिधा भवति इत्यादिना तद्विधस्य मुक्तस्य स्वेच्छया नानाविधरूपप्राकट्यश्रवणात्, न यत्र माये-त्यादौ वैकुण्ठस्य मायातीतत्वश्रवणात्। अनावृत्तिराहित्यं चाङ्गी-कृतम्। अनावृत्तिः शब्दादित्यनेन न स पुनरावर्त्तत इति श्रुतेः। तथोक्तं हिरण्यकशिपूपद्रुतदेवैः—तस्यै नमोऽस्तु काष्ठायै यत्रात्ते

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ह्वरिरीश्वरः। यद्गत्वा न निवर्त्तन्ते शान्ताः सन्न्यासिनोऽमलाः इति। श्रीकपिलदेवेन च—न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नो मेऽनिमिषो लेढि हेतिरिति। तथैव—आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन। मां प्राप्यैव तु कौन्तेय पुनर्जन्म न विद्यते इति, यद्गत्वा न निवर्त्तन्ते तद्धाम परमं ममेति, तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतमिति च श्रीगीतोपनिषदश्च दृश्याः। पाद्मसृष्टिखण्डे च—आब्रह्मसदनादेव दोषाः सन्ति महीपते। अतएव हि नेच्छन्ति स्वर्गप्राप्तिं मनीषिणः। आब्रह्मसदनादूर्द्ध्वं तद्विष्णोः परमं पदम्। शुभ्रं सनातनं ज्योतिः परब्रह्मेति तद्विदुः। न तत्र मूढ़ा गच्छन्ति पुरुषाः विषयात्मकाः। दम्भलोभभयद्रोहक्रोधमोहैरभिद्रुताः। निर्ममा निरहङ्कारा निर्द्वन्द्वाः संयतेन्द्रियाः। ध्यानयोगरताश्चैव तत्र गच्छन्ति साधवः। इति। तत्रैव सुबाहुनृपवाक्यम्—ध्यानयोगेन देवेशं यजिष्ये कमलाप्रियम्। भवप्रलयनिर्मुक्तं विष्णुलोकं व्रजाम्यहमिति। सालोक्यादीनामविच्युतत्वं दर्शयिष्यते च। मत्सेवया प्रतीतं ते सालोक्यादिचतुष्टयम्। नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतमित्यादिषु तदितरत्रैव कालविप्लुतत्वाङ्गीकारात्। तस्मात् क्वचिदावृत्तिश्रवणन्तु प्रपञ्चान्तर्गततद्धामत्वापेक्षया कादाचित्कतल्लीलाकौतुकापेक्षया च मन्तव्यम्। पश्चात्तु नित्यसालोक्यमेव यथा भविष्योत्तरे—एवं कौन्तेय कुरुते योऽरण्यद्वादशीं नरः। स देहान्ते विमानस्थो दिव्यकन्यासमावृतः। याति ज्ञातिसमायुक्तः श्वेतद्वीपं हरेः पुरम्। यत्र लोका पीतवस्त्रा इत्यादि। तिष्ठन्ति विष्णुसामान्ये यावदाहूतसंप्लवम्। तस्मादेत्य महावीर्य्याः पृथिव्यां नृप पूजिताः। मर्त्त्यलोके कीर्त्तिमन्तः सम्भवन्ति नरोत्तमाः। ततो यान्ति परं स्थानं मोक्षमार्गं शिवं सुखम्। यत्र गत्वा न शोचन्ति न संसारे भ्रमन्ति चेति। यथा च जयविजयवृत्ते। तत्र सालोक्योदाहरणे तत्साधकदशायामपि नैर्गुण्यावेश उक्तः, सात्त्विकः कारकोऽसङ्गी

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्यादौ निर्गुणो मदपाश्रय इति । उत्क्रान्तमुक्तिदशायान्तु तेषां भगवत्तुल्यत्वमिवाह—वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्त्तयः । ये निमित्तनिमित्तेन धर्म्मेणाराधयन् हरिम् ॥ १० ॥

निमित्तं फलं तन्निमित्तं प्रवर्त्तकं यस्मिन् तेन निष्कामेणेत्यर्थः । धर्म्मेण भागवताख्येन । वैकुण्ठस्य भगवतो ज्योतिरंशभूता वैकुण्ठलोकशोभारूपा या अनन्ता मूर्त्तयः तत्र वर्त्तन्ते तासामेकया सह मुक्तस्यैकस्य मूर्त्तिः भगवता क्रियत इति वैकुण्ठस्य मूर्त्तिरिव मूर्त्तिर्येषामित्युक्तम् ॥ ३ ॥ १६ ॥ श्रीब्रह्मा देवान् ॥ १० ॥

यथैवाह—प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम् । आरब्धकर्म्मनिर्वाणो न्यपतत् पाञ्चभौतिकः ॥ ११ ॥

हित्वावद्यमिमं लोकं गन्ता मज्जनतामसीति या तनुः श्रीभगवता दातुं प्रतिज्ञाता तां भागवतीं भगवदंशज्योतिरंशरूपां शुद्धां प्रकृतिस्पर्शशून्यां तनुं प्रति श्रीभगवतैव मयि प्रयुज्यमाने नीयमाने आरब्धं यत् कर्म्म तन्निर्वाणं समाप्तं यस्य स पाञ्चभौतिको न्यपतदिति । प्राक्तनलिङ्गशरीरभङ्गोऽपि लक्षितः । तादृशभगवन्निष्ठे प्रारब्धकर्म्मपर्य्यन्तमेव तत्स्थितेः । इत्यमेव टीका च—अनेन पार्षदतनूनामकर्म्मारब्धत्वं शुद्धत्वं नित्यत्वमित्यादि सूचितं भवतीत्येषा ॥ १ ॥ ६ ॥ श्रीनारदः श्रीव्यासम् ॥ ११ ॥

एतां मूर्त्तिमुद्दिश्यैवाह—यं धर्म्मकामार्थेत्यादौ रात्यपि देहमव्ययमिति ॥ १२ ॥

टीका च देहमव्ययं रातीत्येषा ॥ ८ ॥ ३ ॥ श्रीगजेन्द्रः ॥ १२ ॥

तदेतत्ताण्डिनां श्रुतावप्युक्तम्—अश्व इव रोमाणि विधूय धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानीति । क्वचित् प्राकृत्यपि मूर्त्तिरचिन्त्यया भगवच्छक्त्या तादृशत्वमापद्यते । यथोक्तं श्रीध्रुवमुद्दिश्य, बिभ्रद्रूपं हिरण्मयमिति । तदेव रूपं हिरण्मयं बिभ्रदिति टीका च । तथा साष्टिंश्च दर्शिता भक्तिसन्दर्भे, मर्त्त्यो यदा

त्यक्तसमस्तकर्मेत्यादौ मयात्मभूयाय च कल्पते वै इत्यनेन। श्रुतिश्चात्र स तत्र पर्य्येति जक्षन् क्रीड़न्रममाण इत्यादिका। आप्नोति स्वाराज्यं सर्वेऽस्मै देवा वलिमाहरन्ति तस्य सर्वेषु लोकेषु कामचारो भवतीत्यादिका सर्वेश्वर इत्यादिका च। किन्तु जगद्व्यापारवर्ज्जमित्यादिन्यायेन सृष्टिस्थित्यादिसामर्थ्यं तस्य न भवति कुतो वैकुण्ठैश्वर्य्यादिकम्। उक्तञ्च, अष्टष्वान्यतमं लोके इत्यादि। ततो भोग्यमेव समानैश्वर्य्यम्। अतएवाणिमादिप्राप्तिरप्यंशेनैव ज्ञेया। श्रीभगवत्प्रसादलब्धसंपत्तेश्चाविनश्वरत्वमाह द्वयेनैव। ये मे स्वधर्मनिरतस्य तपःसमाधिविद्यात्मयोगविजिता भगवत्प्रसादाः। तानेव ते मदनुसेवनयावरुद्धान् दृष्टिं प्रपश्य वितराम्यभयानशोकान्। अन्ये पुनर्भगवतो भ्रुव उद्विजृम्भविभ्रंशितार्थरचनाः किमुरुक्रमस्य। सिद्धासि भुङ्क्ष्व विभवान्निजधर्मदोहान् दिव्यान्नरैर्दुरधिगान्नृप विक्रियाभिः ॥ १३ ॥

तपश्च समाधिश्च विद्या च उपासना तासु य आत्मयोगश्चित्तैकाग्र्यम्। अन्ये पुनर्भोगाः किमुरुक्रमसम्बन्धिनः। अपि तु नेत्यर्थः। अतएव भगवतो भ्रुव इत्यादि ॥३॥२३॥ श्रीकर्दमो देवहूतिम् ॥१३॥

तदेवं सारूप्यमपि ज्ञेयम्। यथा—गजेन्द्रो भगवत्स्पर्शाद्विमुक्तोऽज्ञानबन्धनात्। प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ॥ १४ ॥ स्पष्टम् ॥ ८ ॥ ४ ॥ श्रीशुकः ॥ १४ ॥

सामीप्यमप्युदाहृतं भगवत्सन्दर्भे कर्दमनिर्याणवर्णनया। मनो ब्रह्मणि युञ्जान इत्यारभ्य मध्ये च लब्धात्मा मुक्तबन्धन इत्युक्त्वा सर्वान्ते भगवद्भक्तियोगेन प्राप्तो भागवतीं गतिमित्येवमुक्तरीत्या। अथ सायुज्यम्। अघासुरादिदृष्टान्तेन साधकानामपि गम्यम्। सालोक्यादिवत्स्वाभिमतत्वाभावात् स्पष्टोदाहरणं श्रीमता भागवतेन कृतमिति। अस्य 'भगवल्लक्षणानन्दनिमग्नतास्फूर्त्तिरेव प्रधानं क्वचिदिच्छया तदनुग्रहेण तदीयतच्छक्तिलेशप्राप्त्यैव यथासुखं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वहिस्तद्दत्ताप्राकृततद्भोगोच्छिष्टलेशमेवानुभवतीत्येके। तत्र च न तु तमेव सर्वमेव चानुभवतीत्यभ्युपगम्यम्। सर्वथा तत्प्राप्तेरनभ्युपगतत्वात्। जगद्व्यापारादिनिषेधेन। इदमेवोक्तं, यदेनं मुक्तो नु प्रविशति मोदते च कामांश्चैवानुभवतीति बृहत्श्रुतौ। ब्रह्माभिसम्पद्य ब्रह्मणा पश्यति ब्रह्मणा शृणोतीत्यादिमाध्यन्दिनायनश्रुतौ। आदत्ते हरिर्हस्तेन इत्यादिकमपि तच्छक्तिलेशप्राप्त्याद्यभिप्रायेणैवोक्तम्। क्वचिदिच्छया लीलार्थं वहिरपि निष्कासयति पार्षदत्वेन च संयोजयति। यथा शिशुपालदन्तवक्रौ लब्धसायुज्यावपि पुनः पार्षदतामेव प्राप्तौ। वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्मताम्। नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ इति तावुद्दिश्य श्रीनारदवाक्यात्। तत्रैषां सालोक्यादीनामनवच्छिन्नभगवत्प्राप्तिरूपतया तत्साक्षात्कारविशेषत्वेन ब्रह्मकैवल्यादाधिक्यं प्राचीनवचनैः सुतरामेव सिद्धम्। अतएव क्रममुक्तिवत् क्रमभगवत्प्राप्तौ ब्रह्मप्राप्त्यनन्तरभावित्वमपि क्वचित् श्रूयते। यथा श्रीमतोऽजामिलस्य सिद्धिप्राप्तौ—स तस्मिन् देवसदन आसीनो योगमास्थितः। प्रत्याहृतेन्द्रियग्रामो युयोज मन आत्मनि। ततो गुणेभ्य आत्मानं वियुज्यात्मसमाधिना। युयुजे भगवद्धाम्नि ब्रह्मण्यनुभवात्मनि। यर्ह्युपारतधीस्तस्मिन्नद्राक्षीत् पुरुषान् पुरः। उपलभ्योपलब्धान् प्रागववन्दे शिरसा द्विजः। हित्वा कलेवरं तीर्थे गङ्गायां दर्शनादनु। सद्यः स्वरूपं जगृहे भगवत्पार्श्ववर्त्तिनाम्। साकं विहायसा विप्रो महापुरुषकिङ्करैः। हैमं विमानमारुह्य ययौ यत्र श्रियः पतिः ॥ १५ ॥

स्पष्टम्। एवं सद्यो भगवत्प्राप्तावप्याधिक्यमवगतम् ॥ ६ ॥ २ ॥ श्रीशुकः ॥ १५ ॥

सालोक्यादिषु च सामीप्यस्याधिक्यं वहिःसाक्षात्कारमयत्वात्। तस्यैव ह्याधिक्यं दर्शितम्। तदेवं मुक्तिदर्शिता। तत्र श्रीविष्णुधर्मोत्तरे श्रीवज्रप्रश्नः—कल्पानां जीवसाम्ये हि मुक्तिर्नै-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वोपपद्यते। कदाचिदपि धर्मज्ञ तत्र पृच्छामि कारणम्। एकैकस्मिन्नरे मुक्तिं कल्पे कल्पे गते द्विज। अभविष्यज्जगच्छून्यं कालस्यादेरभावतः। अथ श्रीमार्कण्डेयस्योत्तरम्—जीवस्यान्यस्य सर्गेण नरे मुक्तिमुपागते। अचिन्त्यशक्तिर्भगवान् जगत् पूरयते सदा। ब्रह्मणा सह मुच्यन्ते ब्रह्मलोकमुपागताः। सृज्यन्ते च महाकल्पे तद्विधास्त्वापरे जना इति। अत्र क्वचिदपि कल्पे केषाञ्चिदपि जीवानामनुद्बुद्धकर्मत्वेन सुषुप्तवत् प्रकृतावपि लीनानामनन्तब्रह्माण्डगतानामिवानन्तानामेकस्योपाधिसृष्ट्या ब्रह्माण्डप्रवेशनं सर्ग इति ज्ञेयम्। अपूर्वसृष्टौ सादित्वे कृतहान्यकृताभ्यागमः स्यात्। अथ मुक्तिभ्यो भगवत्प्रीतेराधिक्यं विव्रियते। तत्र यद्यपि तत्प्रीतिं विना ता अपि न सन्त्येव तथापि केषाञ्चित्तेषां स्वस्य दुःखहानौ सामीप्यादिलक्षणसम्पत्तावपि तात्पर्य्यं न तु श्रीभगवत्सेवेति तेषु न्यूनता। तत्र कैवल्यैकप्रयोजनमिति यदुक्तं तस्य चार्थस्य तत्रैव विश्रान्तिः। तथैव सर्ववेदान्तेत्यादिप्राक्तनपादत्रयस्य विश्रान्तिस्तत्त्वभगवत्सन्दर्भाभ्यां श्रीभगवत्येव दर्शिता। तत्रैव तत्त्वपदार्थस्य पूर्णत्वस्थापनात्। तथैतत्पूर्वमपि हरिलीलाकथाव्रातामृतानन्दितसत्सुरमिति पद्यार्द्धेन ग्रन्थस्वभाववर्णने तत्प्रीतेरेव मुख्यत्वं दर्शितम्। हरिलीलाकथाव्रात एवामृतं सन्तः आत्मारामा एव सुरा इति। इत्थं सतां ब्रह्मसुखानुभूत्येतिप्रसिद्धेः। परिनिष्ठितोऽपि नैर्गुण्य इत्यादेश्च। अतः कैवल्यशब्दश्च तत्तदनुसारेण व्याख्यातव्यः। तथा हि, यदि तत्र कैवल्यशब्देन शुद्धत्वं वक्तव्यं तदा तत्प्रीत्येव तात्पर्य्या एव परमशुद्धा इति तस्यामेव तात्पर्य्यम्। पूर्वं भक्तिसन्दर्भेऽपि शुद्धशब्देनैकान्तिभक्त एव प्रतिपादितः। तदुक्तमन्यस्य सदोषत्वकथनेन। धर्मः प्रोज्झितकैतवोऽत्र परम इत्यत्र। टीका च—प्रशब्देन मोक्षाभिसन्धिरपि निरस्त इत्येषा। अत्र भगवद्धर्मे मोक्षाभिसन्धिरपि कैतवम्। तात्पर्य्यान्तरादित्यर्थः। यदि च तत्र कैवल्यशब्देन भगवानेवोक्तस्तदा

स्वभावो वा, तथापि प्रीतिमतामेव। कामं भवः स्ववृजिनैर्निरयेषु न स्तात्चेतोऽलिवद् यदि नु ते पदयो रमेतेति न्यायेन तदेकानुशीलनमात्र-तात्पर्य्यात् प्रीतावेव विश्रान्तिः। अतएव कैवल्यात् मोक्षादप्येकः श्रेष्ठो यो भगवत्प्रीतिलक्षणोऽर्थस्तत्प्रयोजनमिति व्याख्यान्तरम्। वस्तुतस्तूक्तन्यायेन कैवल्यादिशब्दाः शुद्धभक्तिवाचकताप्रधाना एव। तथैवाह गद्याभ्याम्—यथावर्णविधानमपवर्गश्च भवति इति। योऽसौ भगवति सर्वात्मन्यनात्मेऽनिरुक्तेऽनिलयने परमात्मनि वासुदेवेऽनन्य-निमित्तभक्तियोगलक्षणो नानागतिनिमित्ताविद्याग्रन्थिरन्धनद्वारेण। यदा हि महापुरुषपुरुषप्रसङ्ग इति च॥ १६॥

यस्य वर्णस्य यद्विधानं भगवदर्पितस्वस्वधर्म्मानुष्ठानं, तदनुक्रमेणाप-वर्गश्च भवति। तस्यापवर्गस्य स्वरूपमाह, द्वितीयेन, योऽसाविति। आत्मनि भवमात्मं रागादि, तद्रहिते। स हि भक्तसुखार्थमेव प्रयतते, न तु पृथक् स्वसुखार्थम्। यथा हि भक्तास्तत्सुखार्थमेवेति। अनि-रुक्ते स्वरूपतो गुणतश्च वाचामगोचरे। अनिलयने निलयनमन्तर्द्धानं तद्रहिते सदैव प्रकाशमान इत्यर्थः। अनन्यनिमित्तो मोक्षाद्युपाधि-रहितो यो भक्तियोगः स एव लक्षणं स्वरूपं यस्य सः। तत्रापवर्ग-शब्दस्य प्रवृत्तिं घटयति, नानागतीनां निमित्तं योऽविद्याग्रन्थिस्तस्य रन्धनम् अपवर्ज्जनं छेदनमिति यावत्, तद्द्वारेण योऽसापवर्ग उच्यत इत्यर्थः। अपवृज्यते येनेति निरुक्त्या इति भावः। पाद्मो-त्तरखण्डे च—विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः इति। तथा स्कान्दे रेवाखण्डे—निश्चला त्वयि भक्तिर्या सैव मुक्तिर्जनार्द्दन। मुक्ता एव हि भक्तास्ते तव विष्णो यतो हरे इति। श्रीरुक्मिणीसान्त्वने श्रीभगवताप्येवमभिप्रेतं तां प्रति—सन्ति ह्येकान्तभक्ताया स्तवे-त्युक्ता, मां प्राप्य मानिन्यपवर्गसम्पदं वाञ्छन्ति ये सम्पद एव तत्पतिमिति। अतएव कैवल्यसम्मतपथस्त्वथ भक्तियोग इत्यत्र टीकाकारैरप्युक्तम्—कैवल्यमित्येव सम्मतः पन्था यो भक्तियोग



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

इति। पन्था भगवत्प्राप्त्युपायभूतोऽपीत्यर्थः। स खलु यदा साक्षाद्भवति, यदा ह्येति ॥ ५ ॥ १८ ॥ श्रीशुकः ॥ १६ ॥

तदेवम् अत्र सर्गो विसर्गश्चेत्यादिषु दशस्वेव महापुराणप्रतिपाद्येषु अर्थेषु मुक्तिशब्दस्य तत्रैव च विश्रान्तिः। पोषणेऽपि तदेव मुख्यं प्रयोजनम्। पोषणशब्देन ह्यनुग्रह उच्यते। तस्य च पराकाष्ठाप्राप्तिः स्वप्रीतिदान एव। तदुक्तं, मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगमिति। तथैवान्यत्रापि श्रीपृथुं प्रति वरञ्च मत्कञ्चन मानवेन्द्र वृणीष्वेत्युक्त्वा यथाचरेद्बालहितं पिता स्वयं तथा त्वमेवार्हसि नः समीहितमिति तद्वाक्यानन्तरं तमाह—राजन्मयि भक्तिरस्तु ते इति ॥ १७ ॥

भक्तिः प्रीतिलक्षणा ॥४ ॥ २० ॥ श्रीविष्णुः ॥ १७ ॥

एवमेव श्रीभागवतग्रन्थश्रवणफलत्वेनापि सैव परमपुरुषार्थतया निर्णीतास्ति तत्त्वसन्दर्भे संक्षेपतात्पर्य्ये। श्रीव्याससमाधिना श्रीशुकहृदयेन च तथैव निर्णयो विहितः। यस्यां वै श्रूयमाणायामित्यादिषु स्वसुखनिभृतचेता इत्यादौ च। प्रतिज्ञा चेत्थमेव, धर्मः प्रोज्झितकैतवेत्यादौ किं वा परैरीश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणादिति। अतएव चतुःश्लोक्यां रहस्यशब्देन सैवोक्ता। सैव च तृतीयश्लोकार्थत्वेन भगवत्सन्दर्भे विस्पष्टीकृतास्ति। तदेवं श्रीमत्प्रीतेरेवापवर्गत्वं परमभगवदनुग्रहमयत्वं श्रीभागवतश्रवणफलत्वं पुरुषार्थेषु तस्याः परमत्वसाधनाय दर्शितम्। तथैव श्रीनारद आक्षेपद्वारा शिक्षितवांश्च तत्संहितामाविर्भावयिष्यन्तं श्रीव्यासम्। यथाह—यथा धर्म्मादयश्चार्था मुनिवर्य्यानुकीर्त्तिताः। न तथा वासुदेवस्य महिमा ह्यनुवर्णितः ॥ १८ ॥

चशब्दोऽप्यर्थे। महिमानुवर्णनं तत्प्रीत्युद्बोधनं भवेदित्यभिप्रायेणैवमुक्तम् ॥ १ ॥ ५ ॥ श्रीनारदः ॥ १८ ॥

यथान्येषामपवर्गाणामपि तया तिरस्कृती मुक्ताकण्ठा एव श्रुताः

उदाहार्य्याः। सा च तिरस्कृतिः क्वचित्तत्स्वरूपेण क्रियते, क्वचित्तत्परिकरद्वारा च। तत्र तत्स्वरूपेण तिरस्कृतिमाह मद्येन— यत्रामेव कवय आत्मानमविरतं विविधवृजिनसंसारपरितापोपतप्यमानमनुसवनं स्नपयन्तस्तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्था इति ॥ १९ ॥

यस्यां पूर्वगद्योक्तलक्षणायां भक्तौ। मुक्त्यादिसम्पदां भक्तिसम्पदनुचरीत्वात् परिसमाप्तसर्वार्थत्वम्। तथोक्तं श्रीनारदपञ्चरात्रे— हरिभक्तिमहादेव्याः सर्वा मुक्त्यादिसिद्धयः। भुक्तयश्चाद्भुतास्तस्याश्चेटिकावदनुव्रता इति। अत एवानादरोऽपि। यथोक्तं श्रीवृत्रं प्रति महेन्द्रेण—यस्य भक्तिर्भगवति हरौ निःश्रेयसेश्वरे। विक्रीड़तोऽमृताम्भोधौ किं क्षुद्रैः खातकोदकैरिति ॥ ६ ॥ ८ ॥ श्रीशुकः ॥ १९ ॥

अथ तत्परिकरेषु तदीयकार्य्यद्वारा यथा। तत्र तदीयगुणकथानुशीलनद्वारा तामाहुः—दुरधिगमात्मतत्त्वनिगमाय तवात्ततनोश्चरितमहामृताब्धिपरिवर्त्तपरिश्रमणाः। न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥ २० ॥

आत्मतत्त्वं तादृशसच्चिदानन्दमूर्त्तित्वादिकं निजयाथात्म्यम्। निगमोऽनुभावना। आत्ततनोः प्रकटितस्वमूर्त्तेः। परिवर्जनार्थः। चरितमहामृताब्धेः परिवर्त्तनाभ्यासेन वर्जितश्रमाः। चरणसरोजहंसानां श्रीशुकदेवादीनां यानि कुलानि शिष्योपशिष्यपरम्पराः तेषां सङ्गेन विसृष्टमात्रगृहा अपि यद्यपवर्गं न परिलषन्ति, तदा चरणसरोजहंसादयस्तु किमुतेत्यर्थः ॥ १० ॥ ८७ ॥ श्रुतयः ॥ २० ॥

तदीयपादसेवातदीयगुणकथाद्वारा मुक्तिविशेषस्य तिरस्कृतिर्भक्तिसन्दर्भे दर्शितास्ति श्रीकपिलदेववाक्येन, नैकात्मतां मे स्पृहयन्ति केचिदित्यादिना। एकात्मतां ब्रह्मसायुज्यं भगवत्सायुज्यमपि। एवं सेवाद्वारा मुक्तिविशेषाणाञ्च श्रीविष्णुवाक्ये

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मत्सेवया प्रतीतन्त इत्यादिना, श्रीकपिलदेववाक्येन च सालोक्य-साष्टीत्यादिना। अथ पुरुषार्थान्तरवन्मुक्तिरपि हेयैवेति वक्तुं तैरपि साध्यं तस्यास्तिरस्कृतिर्निर्दिश्यते। तत्र भक्तेः स्वरूपेण मुक्तिसामान्यस्य तिरस्कृतिरुदाहृतैवास्ति भक्तिसन्दर्भादौ, न किञ्चित् साधवो धीरा इत्यादिना। नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत। भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यय इति चान्यत्र। अथ कार्यद्वारेषु तत्रापतितमहासुखदुःखान्तरतिरस्कारितदासक्तिद्वारा तामाह—नारायणपराः सर्वे न कुतश्चन बिभ्यति। स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः॥ २१॥

स्वर्गादीनां तुल्यहेयत्वात् तेषु तुल्यभगवदेकपुरुषार्थत्वाच्च तुल्य-दर्शिनः॥ ६॥ १७॥ श्रीरुद्रो देवीम्॥ २१॥

तदीयपादसेवापरमोत्कण्ठाद्वारा तामाह—को न्वीश ते पाद-सरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह। तथापि नाहं प्रवृणोमि भूमन् भवत्पदाम्भोजनिषेवणोत्सुकः॥ २२॥

हे ईश॥ ३॥ ४॥ उद्धवः श्रीभगवन्तम्॥ २२॥

सर्वात्मार्पणकारि-भजनीय-विषयकाभिलाषद्वारा तामाह—न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम्। न योग-सिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत्॥ २३॥

टीका च—रसाधिपत्यं पातालादिस्वाम्यम्। अपुनर्भवं मोक्ष-मपि। मद्विना मां हित्वान्यन्नेच्छति, अहमेव तस्य प्रेष्ठ इत्यर्थः, इत्येषा। सार्वभौमं श्रीप्रियव्रतादीनामिव महाराज्यम्। पारमेष्ठ्यादिचतुष्टयस्यानुक्रमस्त्वाधोऽधोविवक्षया न्यूनत्वविवक्षया च। ततश्चोत्तरोत्तरं कैमुत्यमपि। योगसिद्ध्यादिद्वयन्तु सार्वत्रिकमिति पश्चाद्विन्यस्तम्। अनयोरनूत्तरश्रेष्ठत्वम्॥ ११॥ १४॥ श्रीभगवान्॥२३॥

तथैवाह—न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधि-पत्यम्। न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे॥२४॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नाकपृष्ठं ध्रुवपदम् । अत्र चतुष्टये पूर्ववत् न्यूनत्वविवक्षया कैमुत्यम् । ध्रुवपदस्य श्रैष्ठ्यं विष्णुपदसन्निहितत्वात् ॥ ६ ॥ ११ ॥ श्रीब्रह्मः ॥ २४ ॥

गाढ़तत्प्रपत्तिद्वाराह्नुः—न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम् । न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजःप्रपन्नाः ॥ २५ ॥

तत्र नाकपृष्ठमपि न वाञ्छन्ति, किमुत सार्वभौमम् । पारमेष्ठ्यमपि न वाञ्छन्ति, किमुत रसाधिपत्यमिति पूर्वार्द्धे योज्यम् । उत्तरार्द्धे वाशब्दोऽप्यर्थे । पादरजःशब्देन भक्तिविशेषज्ञापनया गाढ़प्रपत्तिर्ज्ञाप्यते ॥ १० ॥ १६ ॥ नागपत्न्यः श्रीभगवन्तम् ॥ २५ ॥

गुणगानद्वाराह—तुष्टे च तत्र किमलभ्यमनन्त आद्ये किन्तैर्गुणव्यतिकरादिह ये स्वसिद्धाः । धर्म्मादयः किमगुणेन च काङ्क्षितेन सारंजुषां चरणयोरुपगायतां नः ॥ २६ ॥

अगुणेन मोक्षेण । सारंजुषां तन्माधुर्य्यास्वादिनां सताम् ॥७॥६॥ श्रीप्रह्लादो दैत्यबालकान् ॥ २६ ॥

गुणश्रवणद्वाराह—वरान् विभो त्वद्वरदेश्वराद् बुधः कथं वृणीते गुणविक्रियात्मनाम् । ये नारकानामपि सन्ति देहिनां तानीश कैवल्यपते वृणे न च । न कामये नाथ तदप्यं क्वचिन्मयाच युष्मच्चरणाम्बुजासवः । महत्तमान्तर्हृदयान्मुखच्युतो विधत्स्व कर्णायुतमेष मे वरः ॥ २७ ॥

तदपि कैवल्यमपि ॥ ४ ॥ २० ॥ पृथुः श्रीविष्णुम् ॥ २७ ॥

तदीयनिजसेवकताप्राप्तिकामनाद्वाराह—यो दुस्त्यजच्चितिसुतस्वजनार्थदारान् प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम् । नैच्छन्नृपस्तदुचितं महतां मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुः ॥ २८ ॥

य आर्षभेयो भरतः ॥ ५ ॥ १४ ॥ श्रीशुकः ॥ २८ ॥

लोकप्रसिद्धतामात्रलक्षणतत्सेवाभिमानद्वाराप्याह—प्रत्यानीताः परम

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भवता त्रायता नः स्वभागा दैत्याक्रान्तं हृदयकमलं त्वद्गृहं प्रत्यबोधि। कालग्रस्तं कियदिदमहो नाथ शुश्रूषतां ते मुक्तिस्तेषां न हि बहुमता नारसिंहापरैः किम् ॥ २९ ॥

स्पष्टम् ॥ ७ ॥ ८ ॥ महेन्द्रः श्रीनृसिंहम् ॥ २९ ॥

अथ कारणेषु महाभागवतसङ्गमाहुः—क्षणार्द्धेनापि तुलये न स्वर्गं नापुनर्भवम्। भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥३०॥

टीका च—तत्पादमूले प्रविष्टस्य कृतान्तभयाभावः कियानयं लाभः, यावता तद्भक्तसङ्ग एव सकलपुरुषार्थश्रेणिशिरसि वर्त्तत इत्यादि ॥ ४ ॥ २४ ॥ श्रीरुद्रः प्रचेतसः ॥ ३० ॥

तथैवाहुः—यावत्ते मायया स्पृष्टा भ्रमाम इह कर्म्मभिः। तावद्भवत्प्रसङ्गानां सङ्गः स्यान्नो भवे भवे। तुलयाम लवेनापि न स्वर्गं नापुनर्भवम्। भगवत्सङ्गीत्यादि ॥ ३१ ॥

तद्बहिर्मुखताप्राप्त्याशङ्कया तत्परिहारकारणं प्रार्थयन्ते, यावदिति। नैतावत्त्वं तत्सङ्गस्य किन्त्वपारमहिमत्वमेवेत्याहुः, तुलयामेवेति। अतो यावदित्यादिकं प्रेम्णैव भगवच्चरणसामीप्यप्राप्त्याशयोक्तं, न सामीप्यादिमुक्तिसम्पत्त्याशयेति ज्ञेयम् ॥४॥३०॥ प्रचेतसः श्रीमदष्टभुजं पुरुषम् ॥ ३१ ॥

अन्यत्रापीदृशोऽर्थो दृश्यते। तत्र तच्छास्त्रस्य परमफलत्वे यथा माध्वभाष्यधृतं बृहत्तन्त्रम्—यथा श्रीर्नित्यमुक्तापि प्राप्तकामापि सर्व्वदा। उपास्ते नित्यशो विष्णुमेवं भक्तो भवेदपीति। ब्रह्मवैवर्त्ते च—न ह्रासो न च वृद्धिर्वा मुक्तानां विद्यते क्वचित्। विद्यत्प्रत्यक्षसिद्धत्वात् कारणाभावतोऽनुमा। हरेरुपासना चात्र सदैव सुखरूपिणी। न च साधनभूता सा सिद्धिरेवात्र सा यत इति। तदुत्थापिता सौपर्णश्रुतिश्च—सर्व्वदैतमुपासीत यावद्विमुक्तिर्मुक्ता अप्येनमुपासत इति। तदीयभारततात्पर्य्यं च श्रुत्यन्तराभिधानम्—मुक्तानामपि भक्तिर्हि परमानन्दरूपिणीति। एवं एवार्थः श्रीबहूतीतमो-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ऽपि दृश्यते, यथा—एवं दीक्षाश्वरेद्यस्तु पुरुषो वीतकल्मषः। स लोके वर्त्तमानोऽपि जीवन्मुक्तः प्रमोदते। उदिताकृतिरानन्दः सर्वत्र समदर्शकः। पूर्णाहन्तामयी साक्षाद्भक्तिः स्यात् प्रेम-लक्षणा॥ अन्यत्र ज्ञानोपादानबुद्धिरहितत्वात् समदर्शित्वं ज्ञेयम्। अत्र मुनय ऊचुः—कथं भक्तिर्भवेत् प्रेम्ना जीवन्मुक्तस्य नारद। जीवन्मुक्तशरीराणां चित्तत्वानिःस्पृहा यतः॥ विरक्तेः कारणं भक्तिः सा तु मुक्तेस्तु साधनम्॥ नारद उवाच—भद्रमुक्तं भवद्भिश्च मुक्तिस्तुर्य्या परात्परा। निरहं यत्र चित्सत्ता तुर्य्या सा मुक्तिरुच्यते। पूर्णाहन्तामयी भक्तिस्तुर्य्यातीता निगद्यते। कृष्णधाममयं ब्रह्म क्वचित् कुत्रापि भासते। निर्बीजेन्द्रियगं तत्तु आत्मस्थं केवलं सुखम्। कृष्णस्तु परिपूर्णात्मा सर्वत्र सुखरूपकः। भक्तिवृत्ति-कृताभ्यासात्तत्तच्छ्रवणाद्गोचरीकृत इति। तादृगर्थत्वेनैवाद्वैतवाद-गुरुभिरपि सम्मता श्रीनृसिंहतापनी च—यं वै सर्वे वेदा आनमन्ति मुमुक्षवो ब्रह्मवादिनश्चेति। यथा मुक्ता अपि लीलया विग्रहं कृत्वा भगवन्तं भजन्त इति हि तद्भाष्यम्। ब्रह्मणा वदितुं स्थिरीभवितुं शीलमेषामिति ब्रह्मवादिनो मुक्ता इति। वद स्थैर्य्ये इति स्मरणात्। श्रीगीतोपनिषदश्च— तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यत इति। अथ तस्याः परमभगवदनुग्रहप्राप्यत्वे नारदपञ्चरात्रीयजितन्तेस्तोत्रं यथा—मोक्षसालोक्यसारूप्यान् प्रार्थये न धराधर। इच्छामि हि महाभाग कारुण्यं तव सुव्रतेति। पुरुषार्थान्तरतिरस्कारि हयशीर्षीय-श्रीनारायणव्यूहस्तवः—न धर्म्मं काममर्थं वा मोक्षं वा वरदेश्वर। प्रार्थये तव पादाब्जे दास्यमेवाभिकामये। पुनः पुनर्वरान् दित्सु-र्विष्णुर्मुक्तिं न याचितः। भक्तिरेव वृता येन प्रह्लादं तं नमाम्यहम्। यदृच्छया लब्धमपि विष्णोर्दाशरथेस्तु यः। नैच्छन्मोक्षं विना दास्यं तस्मै हनुमते नम इति। पुनर्जितन्तेस्तोत्रञ्च—धर्म्मार्थकाममोक्षेषु नेच्छा मम कदाचन। तत्पादपङ्कजस्याधो जीवितं दीयतां ममेति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न च तादृशभगवत्प्रीत्या तत्तत्पुरुषार्थतिरस्कारोऽद्भुत इव। यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुरा इति भक्तिस्वाभाविकभूतकारुण्यगुणेनाप्यसौ श्रूयते। यथाह—न कामयेऽहं गतिमीश्वरात् परामष्टर्द्धियुक्तामपुनर्भवं वा। आर्त्तिं प्रपद्येऽखिलदेहभाजामन्तःस्थितो येन भवन्त्यदुःखाः ॥ ३२ ॥

स्पष्टम्। न चात्र यथा दयावीरस्यास्य दयामात्रेणान्यपरित्यागो न तु सारासारत्वज्ञानेन, तथा उपस्थितमहार्थपरित्यागिलाघ्यान-वीराणां तेषामपि भगवत्प्रीतिजेनोत्साहमात्रेणेत्याशङ्क्यम्। सर्वतत्त्वानुभविनां परमार्थैकनिष्ठाग्रहाणां श्रीशुकदेवादीनामपि तत्रो-दाहृतत्वात्। तस्मादस्त्येव भगवत्प्रीतेः सर्वस्मादप्यपवर्गादुपादेय-त्वम् ॥ ९ ॥ २१ ॥ रन्तिदेवः ॥ २२ ॥

अत एवान्येषामपि वैदिकानां साधनानां सैव मुख्यं फलमिति निर्दिशति—पूर्त्तेन तपसा यज्ञैर्दानै र्योगैः समाधिना। राद्धं निःश्रेयसं पुंसां मत्प्रीतिस्तत्त्वविन्मतम् ॥ ३३ ॥

टीका च—न च मत्प्रीतेरप्यधिकं किञ्चिदस्ति इत्याह, पूर्त्तादि-भीराद्धं सिद्धं यत् निःश्रेयसं फलं, तत् मत्प्रीतिरेवेति तत्त्वविदां मतमित्येषा। अन्यत्तु फलमतत्त्वविदां मतमिति भावः। तत्र तेषां साधनत्वञ्च भक्तिद्वारेति ज्ञेयम्। तदेवं कथं तत्त्वविदां मतं तत्राह—अहमात्मात्मनां धातः प्रेष्ठः सन् प्रेयसामपि। अतो मयि रतिं कुर्या-द्देहादि र्यत्कृते प्रियः ॥ ३४ ॥

आत्मनां रश्मिस्थानीयानां शुद्धजीवानामपि आत्मा मण्डलस्थानीय परमात्माहम्। कृष्णमेनमवेहि त्वमात्मानमखिलात्मनामिति च वचनात्। अतः प्रेयसामात्मनामपि प्रेष्ठः सन् निरवद्यः। येषामात्मनां हर्त्तुं देहादिरर्थोऽपि प्रियो भवति। कुर्य्यात् सर्व एव कर्त्तुमर्हतीत्यर्थः। सतो मदज्ञानदोषेणैव न करोतीति भावः ॥ २ ॥ ९ ॥ श्रीगर्भोदशायी ब्रह्माणम् ॥ ३३ ॥ ३४ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतएव शुद्धप्रीतिमत एव सर्वतः श्रैष्ठ्यमाह—रजोभिः समसंख्याताः पार्थिवैरिह जन्तवः। तेषां ये केचनेहन्ते श्रेयो वै मनुजादयः। प्रायो मुमुक्षवस्तेषां केचनैव द्विजोत्तम। मुमुक्षूणां सहस्रेषु कश्चिन्मुच्येत सिध्यति। मुक्तानामपि सिद्धानां नारायणपरायणः। सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥ ३५ ॥

श्रेयः परलोकसुखसाधनं धर्म्मादि। मुच्येत जीवन्मुक्तो भवति। जीवन्मुक्तस्य च यस्य भगवदाद्यपराधो दैवान्न स्यात् स एव सिध्यति तत्तल्लक्षणामन्तिमां मुक्तिं प्राप्नोति। आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधो नादृतयुष्मदङ्घ्रयः। जीवन्मुक्ताः प्रपद्यन्ते पुनः संसारवासनाम्। यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिनः। नानुव्रजति यो मोहाद्व्रजन्तं परमेश्वरम्। ज्ञानाग्निदग्धकर्म्मापि स भवेद्ब्रह्मराक्षसः॥ इत्यादिभक्तिसन्दर्भदर्शितप्रमाणेभ्यः। तत्र जीवन्मुक्तानां सिद्धमुक्तानाञ्च याः कोटयस्तास्वपि नायं सुखापो भगवान् इत्यादिः। मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगमित्यत्र च नारायणपरायणः सुदुर्लभ एव; यतः स एव प्रशान्तात्मा प्रकृष्टभगवत्तत्त्वनिष्ठावरिष्ठ इत्यर्थः; शमो मन्निष्ठता बुद्धेरिति श्रीभगवता स्वयं व्याख्यातत्वात्॥ ६ ॥ १४ ॥ राजा श्रीशुकम् ॥ ३५ ॥

अतएव, प्रायेण मुनयो राजन्निवृत्ता विधिषेधतः। नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेरित्यादित्रयेणात्मारामश्रेष्ठानां भक्तिं प्रदर्श्य, तदभाववतां निन्दा, तदश्मसारं हृदयं वतेदम् इत्यादिना। अतएवाह—अथापि ब्रूमहे प्रश्नांस्तव राजन् यथाश्रुतम्। सम्भाषणीयो हि भवानात्मनः शुद्धिमिच्छता ॥ ३६ ॥

शुद्धिं शुद्धभक्तिवासनारूपाम्॥ ७॥ १३॥ श्रीदत्तात्रेयः श्रीप्रह्लादम्॥ ३६ ॥

अतएव—वाग्गद्गदा द्रवते यस्य चित्तं रोदित्यभीक्ष्णं हसति क्वचिच्च। विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥३७॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्पष्टम् ॥

तथा—निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम्। अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥ ३८ ॥

निरपेक्षं निष्किञ्चनभक्तम् अतएव शान्तं क्षोभरहितमतएवाभ्यस निर्वैरं समदर्शनञ्च हेयोपादेयभावनारहितं मुनिं श्रीनारदादिमनुव्रजामि। यतस्तस्य तादृशनिष्कपटभक्तिमयसाधुत्वदर्शनेन ममापि तत्र भक्तिविशेषो जायते, कथं गोपनीय इत्याह, पूयेयेति। मद्भक्तलिप्सु तिदोषात् पवित्रितः स्यामितिभावेनेति भावः ॥ ११ ॥ १४ ॥ श्रीभगवान् ॥ ३७ ॥ ३८ ॥

अतएवाह—गुणैरलमसंख्येयै र्माहात्म्यं तस्य सूच्यते। वासुदेवे भगवति यस्य नैसर्गिकी रतिः ॥ ३९ ॥

तस्य श्रीप्रह्लादस्य ॥ ३ ॥ ४ ॥ श्रीशुकः ॥ ३९ ॥

तस्मात् प्रीतेरेव पुरुषार्थश्रेष्ठत्वं सिद्धम्। यथाहुर्गद्येन—अथ ह वाव तव महिमामृतरससमुद्रविप्रुषा सकृदपि लीढया स्वमनसि निःस्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतविषयसुखलेशाभासाः परमभागवता एकान्तिनो भगवति सर्व्वभूतप्रियसुहृदि सर्व्वात्मनि नितरां निर्वृतमनसः कथमु ह वा एते मधुमथन पुनः स्वार्थकुशला ह्यात्मप्रियसुहृदः साधवस्त्वच्चरणाम्बुजसेवां विसृजन्ति न यत्र पुनरयं संसारपर्य्यावर्त्त इति ॥ ४० ॥

सकृदपीति चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचिदितिवदत्रापि सूचितम्। आत्मा त्वमेव प्रियः सुहृच्च येषां ते ॥ ६ ॥ [illegible] ॥ देवाः श्रीपुरुषोत्तमम् ॥ ४० ॥

अतएवाह—तस्यैव हेतोः प्रयतेत कोविदो न लभ्यते यद्भ्रमतामुपर्य्यधः। तल्लभ्यते दुःखवदन्यतः सुखं कालेन सर्व्वत्र गभीररंहसा। न वै जनो जातु कथञ्चनाव्रजेन्मुकुन्दसेव्यन्यवदङ्ग संसृतिम्। स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो जनः ॥ ४१ ॥ स्पष्टम् ॥ १८ ॥ ५ ॥ श्रीनारदः ॥ ४१ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथा—भजन्त्यथ त्वामत एव साधवो व्युदस्तमायागुणविभ्रमोदयम्। भवत्पदानुस्मरणादृते सतां निमित्तमन्यद्भगवन्न विद्महे ॥४२॥

टीका च—यतस्त्वं दीनवत्सलः अतएव साधवो निष्कामा अथ ज्ञानानन्तरमपि त्वां भजन्ति। कथम्भूतम्; मायागुणानां विभ्रमो विलासः तस्योदयः कार्य्यं स निरस्तो यस्मिन् तम्। ते किमर्थं भजन्ति, तत्राह, भवत्पदानुस्मरणाद्विना अन्यत्तेषां फलं न विद्महे; इत्येषा ॥ ४ ॥ २० ॥ पृथुः श्रीविष्णुम् ॥ ४२ ॥

तस्मात्तद्भक्तानां तत्प्रीतिमनोरथ एवोपादेयः। तदन्यस्तु सर्वोऽपि हेय इत्याह—सुखोपविष्टः पर्य्यङ्के रामकृष्णोरुमानितः। लेभे मनोरथान् सर्वान् पथि यान् स चकार ह। किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने। तथापि तत्परा राजन्न हि वाञ्छन्ति किञ्चन ॥ ४३ ॥

सोऽक्रूरः। यान्, किं मयाचरितं भद्रं किं तप्तं परमं तपः। किंवाथाप्यर्हते दत्तं यद्द्रक्ष्याम्यद्य केशवमित्यादिभक्तिवासनामयान्, न तु मुक्त्यादिकमपि। कथं न प्रार्थितं तत्राह, किमलभ्यमिति ॥१०॥ ३८ ॥ श्रीशुकः ॥ ४३ ॥

यथैवाह—पुनश्च भूयाद्भगवत्यनन्ते रतिः प्रसङ्गश्च तदाश्रयेषु। महत्सु यां यामुपयामि सृष्टिं मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः ॥ ४४ ॥

सृष्टिं जन्म। अन्यत्र तु सर्वत्र मैत्री अविषमा दृष्टिरस्तु। ब्राह्मणेषु त्वादरविशेषोऽस्त्वित्याह, नम इति ॥ १ ॥ १९ ॥ राजा ॥ ४४ ॥

अत एवाह—न वै मुकुन्दस्य पदारविन्दयो रजोजुषस्तात भवादृशा जनाः। वाञ्छन्ति तद्दास्यमृतेऽर्थमात्मनो यदृच्छया लब्धमनःसमृद्धयः ॥ ४५ ॥

यदृच्छया अनायासेनैव लब्धा मनःसमृद्धिर्येषां ते। स्वतो भक्तिमाहात्म्यबलेन सर्वपुरुषार्थप्रतीच्छितकृपादृष्टिलेशा अपीत्यर्थः। एतदनुसारेण नैच्छन्मुक्तिपतेर्मुक्तिं तेन तापमुपेयिवानित्यत्र श्रीध्रुवमुद्दिश्य पूर्वोक्तेऽपि पद्ये मुक्तिशब्देन दास्यमेव वाच्यम्। तदुक्तं,

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः इति ॥ ४ ॥ ९ ॥ श्रीमैत्रेयः ॥ ४५ ॥

एतदेवान्यनिन्दाशुद्धभक्तस्तवाभ्यां द्रढयति गद्यपञ्चकेन—यत्तद्भगवतानधिगतान्योपायेन याञ्चाच्छलेनापहृत्य स्वशरीरावशेषितलोकत्रयो वरुणपाशैश्च संप्रति मुक्तो गिरिदर्य्यां चापविद्ध इति होवाच। नूनं बतायं भगवानर्थेषु न निष्णातो योऽसाविन्द्रो यस्य सचिवो मन्त्राय वृत एकान्ततो बृहस्पतिस्तमतिहाय स्वयमुपेन्द्रेणात्मानमयाचत आत्मनश्चाशिषो नो एव तद्दास्यम्। अतिगम्भीरवयसः कालस्य मन्वन्तरपरिमितं कियल्लोकत्रयमिदम्। यस्यानुदास्यमेवास्मत्पितामहः किल वव्रे न तु स्वपित्र्यं यदुताकुतोभयं पदं दीयमानं भगवतः परमिति। भगवतोपरते खलु स्वपितरि। तस्य महानुभावस्यानुपथममृजितकषायः को वास्मद्विधः परिहीनभगवदनुग्रह उपजिगमिषतीति ॥ ४६ ॥

टीका च—तस्यैकान्तभक्तिं सप्रपञ्चमाहेत्यादिका। यत्तदतिप्रसिद्धम्। इति एतदुवाच श्रीवलिः। तम् उपेन्द्रं (प्रति)। अतिहाय पुरुषार्थत्वेनानभिलक्ष्य। स्वयमुपेन्द्रेणैव द्वारभूतेन आत्मानं मां परमक्षुद्रं (प्रति परमक्षुद्रं) लोकत्रयमयाचत। अनुदास्यं नय मां निजभृत्यपार्श्वमित्यनेन तद्दासदास्यम्। स्वपित्र्यं त्रैलोक्यराज्यम्। यदुत अकुतोभयं पदं मोक्षम्। तन्नतु वव्रे। कथं, भगवतः परमन्यदिदमिति कृत्वा। (तदंशाभास) तदंशमात्रात्मकत्वात्तयोः। कथं व्यवहृतमित्याशङ्क्याह, भगवतेति ॥ ५ ॥ २४ ॥ श्रीशुकः ॥ ४६ ॥

अतएवान्यसुखदुःखनैरपेक्ष्येणैव शुद्धत्वं भक्तानामिति सिद्धम्। तदुक्तं, नारायणपराः सर्वे इत्यादि। श्रीभगवानपि तथाविधानुकम्पानां सर्वमन्यद्दूरीकरोति। यथोक्तं स्वयमेव, ब्रह्मन् यमनुगृह्णामि तद्विशो विधुनोम्यहमिति। यथाह—त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्र। ततोऽनुमेयो भगवत्प्रसादो यो दुर्लभोऽकिञ्चनगोचरोऽन्यैः ॥ ४७ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पुरुषस्य स्वात्यन्तिकभक्तस्य यदि कथञ्चित् त्रैवर्गिकायास आपतति तदा स्वयमेव तद्विघातं विधत्त इत्यर्थः। अकिञ्चनस्तु गोचरो विषयो यस्येत्यनेन मोक्षायासस्यापि विघातविधानं व्यञ्जितम्। अकिञ्चनशब्दस्य शुद्धभक्तार्थत्वं हि भक्तिसन्दर्भे दर्शितम्॥ ६॥ ११॥ श्रीमान् वृत्रः शक्रम्॥ ४७॥

तदेवं सति तादृशानामपि यदि कदाचिदन्यत् प्रार्थनं दृश्यते तदा तत्प्रीतिसेवोपयोगितयैव न तु स्वार्थत्वेन तदिति मन्तव्यम्। यथा—यक्ष्यति त्वां मखेन्द्रेण राजसूयेन पाण्डवः। पारमेष्ठ्यकामो नृपतिस्तद्भवाननुमोदतामिति। परमेष्ठिशब्देनात्र श्रीद्वारकापतिरुच्यते। यथा पृथुकोपाख्याने—तावच्छ्रीर्जगृहे हस्तं तत्परा परमेष्ठिन इति। ततः पारमेष्ठ्यशब्देन द्वारकैश्वर्यमुच्यते। ततश्च पारमेष्ठ्यकाम इति तत्समानैश्वर्यं कामयमान इत्यर्थः। तत्कामना च द्वारकावदिन्द्रप्रस्थेऽपि श्रीकृष्णनिवासनयोग्यसम्पत्तिसिद्ध्यर्थैव ज्ञेया, नान्यर्था। तानुद्दिश्यैव, किन्ते कामा सुरस्पार्हा मुकुन्दमनसो द्विजाः। अधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथेतरे इत्याद्युक्तेः। श्रीभगवत्प्रसादत इहैव च तथैव तत्प्राप्तिरपि तस्य दृश्यते—सभायां मयक्लृप्तायां क्वापि धर्मसुतोऽधिराट्। वृतोऽनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा। आसीनः काञ्चने साक्षादासने मघवानिव। पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च वन्दिभिरित्यत्र। अत्र स्वचक्षुषेति विशेषणमपि तेषामनन्यकामत्वायोपजीव्यम्। यथा चक्षुष्मता जनेनान्यजनागोचरसम्पत्तिविशेषश्चक्षुरर्थमेव काम्यते, कदाचित्तन्मुद्रणादौ तु स सर्व्वोऽपि वृथैव, तथा कृष्णनाथैरपीतिभावः। तथोक्तं श्रीमत्पाण्डवानुद्दिश्य श्रीपरीक्षितं प्रति मुनिभिः, न वा इत्यादौ येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामा इति। अतएव तद्भवाननुमोदितामिति नारदवाक्यानुसारेण परमैकान्तिषु श्रीभगवानपि तदनुमोदते। अन्यत्र च तथैव स्वयमाह—यान् यान् कामयसे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

देवि मय्यकामाय कामिनि। सन्ति ह्येकान्तभक्तायास्तव कल्याणि नित्यदा ॥ ४८ ॥

न विद्यते कामो यत्रेति विग्रहेण शुद्धप्रीतिमयभक्तिलक्षणोऽर्थः खल्वत्राकाम इत्युच्यते। अकामः सर्व्वकामो वेत्यादौ भक्तिमात्रकाम इव। तथोक्तं भक्तिलक्षणं वदता श्रीप्रह्लादेन भृत्यलक्षणजिज्ञासुरित्यादौ। तस्मादकामाय प्रीतिसेवासम्पत्त्यर्थं यान् यानर्थान् कामयसे हे देवि ते तव नित्यलक्ष्मीदेवीरूपश्रेयसीत्वात् नित्यं सन्त्येवेति व्याख्येयम्। तत्रैकान्तभक्ताख्या इति स्वार्थकामनानिषेधः। कामिनीति मदेककामिनीत्यर्थः। कल्याणीति तादृशसेवासम्पत्तेरविघ्नत्वं दर्शयतीति ज्ञेयम् ॥ १० ॥ ६० ॥ श्रीभगवान् रुक्मिणीम् ॥ ४८ ॥

एवं सद्यो जहुर्भगवत्पार्श्वकामा इत्यत्र तत्सामीप्यकामनापि व्याख्येया। तत्प्रीतिविशेषातिशयवत्तां हि तेषां तत्कृतात्तिर्भरेणैव तत्स्फूर्त्तावप्यतृप्तौ सत्यां तत्सामीप्यप्राप्तेश्च तत्प्राप्तिविघातकसंसारबन्धनत्रोटनस्य च प्रार्थनं दृश्यते। पितृमातृप्रीत्येकसुखिनां विदूरवर्त्तिनां बालकानामिव। यथाह—त्रस्तोऽस्म्यहं कृपणवत्सल दुःसहोग्रसंसारचक्रकदनाद्ग्रसतां प्रणीतः। बद्धः स्वकर्म्मभिरुशत्तम तेऽङ्घ्रिमूलं प्रीतोऽपवर्गशरणं ह्वयसे कदा नु ॥ ४९ ॥

त्वद्भक्तिमुखव्याकारमयत्वाद्दुःसहम् अनुशीलयितुम् अशक्यम्। त्वद्भक्तिविरोधिव्याकारमयत्वादुग्रं भयानकं यत् संसारचक्रं तस्माद् यत् कदनं लोकानां मनोदौःस्थ्यं तस्मादहं त्रस्तोऽस्मि तदभिमुखीभवितुं न पारय इत्यर्थः। एवमेव वक्ष्यते—श्रीनारद उवाच। भक्तियोगस्य तत्सर्व्वमन्तरायतयार्भकः। मन्यमानो हृषीकेशं स्मयमान उवाच ह। श्रीप्रह्लाद उवाच। मा मां प्रलोभयोत्पत्त्यासक्तं कामेषु तैर्वरैः। तत्सङ्गभीतो निर्व्विण्णो मुमुक्षुस्त्वामुपाश्रित इत्यनेन। यद्यप्येवं त्रस्तोऽस्मि तथाप्यहो ग्रसतां भगवद्विरोधित्वेन मादृशसर्व्वगिलनाभिप्रायाणां मध्ये स्वकर्म्मभिर्बद्धः सन् प्रणीतो निक्षिप्तोऽस्मि। ततस्तत्र

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विरहदूनतया इदं याचे । कदा नु प्रीतः सन् अपवर्गभूतम् अरणं शरणं तवाङ्घ्रिमूलं त्वत्समीपं प्रति मामाह्वास्यसीति ॥ ७ ॥ ८ ॥ प्रह्लादः श्रीनृसिंहम् ॥ ४९ ॥

अतएव विष्णुपुराणे तस्य श्रीमत्प्रह्लादस्य केवलप्रीतिवरयाञ्चापि नानेन विरुद्धा । यथा—नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम् । तेषु तेष्वच्युता भक्तिरच्युतेऽस्तु सदा त्वयि । या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्नापसर्पतु । कृतकृत्योऽस्मि भगवन् वरेणानेन यत्त्वयि । भवित्री त्वत्प्रसादेन भक्तिरव्यभिचारिणी । धर्मार्थकामैः किन्तस्य मुक्तिस्तस्य करे स्थिता । समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयीति । तत्र श्रीमत्परमेश्वरवाक्यमपि तथैव—यथा ते निश्चलं चेतो मयि भक्तिसमन्वितम् । तथा त्वं मत्प्रसादेन निर्व्वाणं परमाप्स्यसीति । यथा येन प्रकारेण तथा तेन प्रकारेणैव परं मदीयचरणसेवोचितत्वेन महदित्यर्थः । सेवानुरक्तमनसामभवोऽपि फल्गु रित्युक्तत्वात् । तथा वक्ष्यमाणाभिप्रायेणैवैतदाह—अहं किल पुरानन्तं प्रजार्थी भुवि मुक्तिदम् । अपूजयं न मोक्षाय मोहितो देवमायया ॥ ५० ॥

सुतपोनाम्ना निजांशेनाहम् अनन्तमन्यत्र मुक्तिदमपि तत्तच्चरणप्रजाप्रयोजनक एवापूजयम् । न तु मोक्षायापूजयम् । यतो देवे तस्मिन् तद्दर्शनोत्थिता या माया कृपा पुत्रभावस्तेन मोहितः । माया दम्भे कृपायाञ्चेति विश्वप्रकाशात् । किलेति सूतोक्तहे श्रीकृष्णवाक्यमपि प्रमाणीकृतम् । अथ यथा विचित्रव्यसनादित्यादितद्वाक्यान्तरेषु च, व्यसनं श्रीकृष्णाविच्छेदहेतुः, भयं भाविततद्विच्छेदशङ्केति व्याख्येयम् । तत्र मन्येऽकुतश्चिदित्यादिश्रीनारदोदाहृतवाक्यमुत्तरं गद्यम् । अत्र हि विश्वशब्दादुत्तभयनिवर्त्तनमपि प्रतिपद्यामहे । संवादान्ते त्वमप्येतानित्यादिकं चातिदेशेन साक्षात् श्रीकृष्णप्राप्तिगमकमेव तयोरिति ॥ ११ ॥ ॥ २ ॥ श्रीमदानकदुन्दुभिः श्रीनारदम् ॥ ५० ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदेवं तेषां तत्तत्प्रार्थनमपि तत्प्रीतिविलास एव। अत्रेदं तत्त्वम् ;—एकान्तिनस्तावद्द्विविधाः, अजातजातप्रीतित्वभेदेन। जातप्रीतयश्च द्विविधाः ; एके तदीयानुभवमात्रनिष्ठाः शान्तभक्तादयः, अन्ये तदीयदर्शनसेवनादिरसमयाः परिकरविशेषाभिमानिनः, स्वयं परिकरविशेषाश्च। तत्र तेषु अजातप्रीतिभिः सर्वपुरुषार्थत्वेन तत्प्रीतिरेव प्रार्थनीया। अथ जातप्रीतिषु शान्तभक्तादयस्तु कदाचिद्दर्शनादिकं वा प्रार्थयन्ते सेवादिकं विनैव ; तद्वासनाया अभावात्। सकृदपि कृपादृष्ट्यादिलाभेन तृप्ताश्च भवन्ति ; नातिकामं भगवतः स्निग्धापाङ्गविलोकनादिति श्रीकर्दमवर्णनात्। अतएव तत्सामीप्यादिकेऽपि तेषामनाग्रहः। ये तु तत्परिकरविशेषाभिमानिनस्ते खलु तत्तत्प्रीतिविशेषोत्कण्ठिनो यदा भवन्ति तदा तत्तत्सेवाविशेषेच्छया प्रार्थयन्त एव तत्सामीप्यादिकम्। तत्प्रार्थना च प्रीतिविलासरूपैव। पुष्णाति च तामिति गुण एव। यदा च तेषां दैन्येन तत्प्राप्त्यसंभावना जायते तदापि च तत्प्रीत्यविच्छेदमात्रं प्रार्थयन्ते। सोऽपि च गुण एव। यत्तु केवलसंसारमोक्षतत्सामीप्यानन्दविशेषप्रार्थनं प्रीतिविकारताशून्यं तत् पुनः सर्वथा केषाञ्चिदप्येकान्तिनां नाभिरुचितम्। अतएव सर्वं मद्भक्तियोगेनेत्यादौ कथञ्चिद्भक्त्युपयोगित्वेनैवेति। एवं सालोक्यसार्ष्टीत्यादौ तेषां मध्ये सेवनं विना यत्तन्न गृह्णन्ति किन्तु सेवनोपयोग्येव गृह्णन्ति इति कथ्यते, तत्रैकत्वलक्षणं सायुज्यन्तु स्वरूपत एव तद्विनाभूतम्। अन्यत्तु वासनाभेदेन। सारूप्यस्य च सेवोपकारित्वं शोभाविशेषेण। श्रीवैकुण्ठेऽपि तदीयनित्यसेवकानां तथैव तादृशत्वम्। लोकेऽपि किशोरविदग्धक्षितिपतिपुत्रैः समानरूपवयस्काः सेवकाः संगृहीता दृश्यन्ते श्लाघ्यन्ते च लोकैः। तस्माद्यथा तथा श्रीमत्प्रीतिरेव पुरुषार्थत्वमित्यायातम्। श्रीप्रीत्येकपुरुषार्थिनोऽपि भावविशेषेणान्यद्वाञ्छन्तु न वाञ्छन्तु वा स्वभक्तिजा त्वनुरूपा भक्तिपरिकराः पदार्थाः रुंसारद्धंसपूर्दकमुर्दना

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एव। न ते कदाचिद्व्यभिचरन्ति च। तदेतदुक्तम्—अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी। जरयत्याशु या कोषं निगीर्णमनलो यथा। नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः। येऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणि॥ पश्यन्ति ते मे रुचिराण्यम्ब सन्तः प्रसन्नवक्त्रारुणलोचनानि। रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति। तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः। हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो गतिमण्वीं प्रयुङ्क्ते। अथो विभूतिं मम मायाविनस्तामैश्वर्यमष्टाङ्गमनुप्रवृत्तम्। श्रियं भागवतीं वास्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते तु लोके। न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नो मेऽनिमिषो लेढ़ि हेतिः। येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टमिति। अण्वीं दुर्ज्ञेयां पार्षदलक्षणामित्यर्थः। तदेवं तत्क्रतुन्यायेन च शुद्धभक्तानामन्या गतिर्नास्त्येव। श्रुतिश्च—यथा क्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवतीति। क्रतुरत्र सङ्कल्प इति भाष्यकाराः। श्रुत्यन्तरञ्च—स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत् कर्म्म कुरुते यत् कर्म्म कुरुते तदभिसम्पद्यते इति। अन्यच्च—यद्यथा यथोपासते तदेव भवन्तीति। श्रीभगवत्प्रतिज्ञा च—ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति। तथैव ब्रह्मवैवर्त्ते—यदि मां प्राप्तुमिच्छन्ति प्राप्नुवन्त्येव नान्यथा इति। तत्र श्रीव्रजदेवीनां सा मतिः श्रीकृष्णसन्दर्भे सङ्गमितैवास्ति। मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते। दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापन इत्यादिबलेन वचनान्तराणामर्थान्तरस्थापनेन च। तथैव ताः प्रति स्वयमभ्युपगच्छति—सङ्कल्पो विदितः साध्व्यो भवतीनां मदर्चनम्। मयानुमोदितः सोऽसौ सत्यो भवितुमर्हति। न मय्यावेशितधियां कामः कामाय कल्पते। भर्ज्जिताः क्वथिता धानाः प्रायो वीजाय नेष्यते॥ ५१॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मदर्चनं पतिभावमयमदाराधनात्मको भवतीनां संकल्पो विदितो-ऽनुमोदितश्च सन् सत्यः सर्वदा तादृशमदर्चनाव्यभिचारी भवितुमर्हति युज्यत एव। स च परमप्रेमभवतीनां नान्यवत् फलान्तरापेक्षः, किन्तु स्वयमेवास्वाद्यः। यतः, न मय्यावेशितधियामिति। मय्यावेशितधियामेकान्तभक्तमात्राणां कामो मदर्चनात्मकः सङ्कल्पः कामाय फलान्तराभिलाषाय न कल्पते, किन्तु स्वयमेवास्वाद्यो भवतीर्थः। तत्रार्थान्तरन्यासः, भर्जिता इति। प्राय इति वितर्के। धाना भृष्टयवाः। ताः स्वरूपत एव भर्जिताः पुनः स्वादविशेषार्थं घृतेन वा भर्जिता गुड़ादिभिः क्वथिताश्च सत्यो बीजाय बीजत्वाय नेष्यते न कल्पन्ते। यववत्ताभिरन्यवफलनं नेष्यते, किन्तु ता एवास्वाद्यन्त इत्यर्थः। तस्मात्तादृशमदर्चनमेव भवतीनां परमफलमिति भावः। यच्च विषयमहिम्ना शान्तिरेवासां भविष्यतीति शान्तानामुत्प्रेक्षितं, तच्च ताभिः स्वयमेवानुभूयान्यविषयत्वेनैव स्थापितम्। सुरतवर्द्धनमित्यादिपद्ये तदधरामृतविशेषेण इतररागविस्मारणमित्यनेन। श्रीकृष्णविषयत्वे तु तदशान्तिरेव दर्शिता, सुरतवर्द्धनमित्यनेन॥ १०॥ २७॥ श्रीभगवान् व्रजकुमारीः ॥ ५१ ॥

तथा श्रीपट्टमहिष्यादीनां श्रीयादवादीनाञ्च गतिस्तथैव सङ्गतास्ति। एते हि यादवा सर्वे मद्गणा एव भामिनीत्यादि, रेमे रमाभिर्निजकामसंप्लुत इत्यादिवचनबलेन, जयति जननिवास इत्यादि स्फुटार्थदर्शनेन, लीलान्तरस्यैन्द्रजालिकत्वात्, कूर्मपुराणगतसाक्षात् सीताहरणप्रत्याख्यायिमायिकसीताहरणाख्यानतुल्यत्वस्थापनाय च तथैव तदीय(नित्य)गणविशेषाणां पाण्डवानामपि गतिर्व्याख्येया। तत्र श्रीमदर्जुनस्य यथा—एवं चिन्तयतो जिष्णोः कृष्णपादसरोरुहम्। सौहार्देनातिगाढ़ेन शान्तासीद्विमला मतिः। वासुदेवाङ्घ्र्यनुध्यानपरिबृंहितरंहसा। भक्त्या निर्मथिताशेषकषायधिषणोऽर्जुनः। गीतं भगवता ज्ञानं यत्तत् संग्राममूर्द्धनि। कालकर्मतमोरुद्धं पुनरध्यगमत्

द्विभुः । विशोको ब्रह्मसम्पत्त्या संछिन्नद्वैतसंशयः । लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसम्भवः ॥ ५२ ॥

ज्ञात्वा चेतसि चक्षुषीव भगवदाविर्भावेन दुःखरहिता, अतएव विमला तद्वृत्तिभूता ये कालुष्यविशेषास्तैरपि रहिता । वासुदेवेत्यादिनोत्तरपद्यद्वयेन तस्यैव विवरणम् । तत्रानुष्ठानं पूर्वोक्ता चिन्तैव । कषायः पूर्वोक्तं मलमेव । गीतं मामेवैष्यसीत्युक्तम् । कालो भगवल्लीलेच्छामयः । कर्म तल्लीला । तमस्तल्लीलावेशेन तदगुसन्धानम् । अध्यगमत् तन्महाविच्छेदस्य तस्यान्तेऽपि तथा तत्पुनर्मामेवैष्यसीत्येतद्वाक्यं यथार्थत्वेनानुभूतवान् । ततश्च कृतार्थोऽभवदित्याह, विशोक इत्यादि । ब्रह्मसम्पत्त्या श्रीमन्नराकारपरब्रह्मसाक्षात्कारेण । संछिन्न इयं मम चेतसि स्फूर्त्तिरेव साक्षात्कारस्त्वन्य इति द्वैते संशयो येन सः । तदा भगवत्प्राप्तौ नान्यवज्जन्मान्तरप्राप्तिकालसन्धिरप्यन्तरायोऽभवदित्याह, लीनेति । लीना पलायिता प्रकृतिर्गुणकारणं यस्मादेवम्भूतं यन्नैर्गुण्यं तस्माद्धेतोः गुणतत्कारणातीतत्वादित्यर्थः । तथैव अलिङ्गत्वात् प्राकृतशरीररहितत्वाच्च । असम्भवो जन्मान्तररहितः । तस्मादनन्तरं चक्षुष्याविर्भवतोत्येव विशेष इति भावः । अतः कलिं प्रति श्रीपरीक्षिद्वचनस्यार्थे—यस्त्वं दूरं गते कृष्णे सह गाण्डीवधन्वनेति । एवं येऽध्यासनं राजकिरीटजुष्टं सद्यो जहु भगवत्पार्श्वकामा इति श्रीमुनिवृन्दवाक्यञ्च । तस्मात् सर्वेषां पाण्डवानां तदीयानाञ्च सेव गतिः व्याख्येया । श्रीविदुरादीनां यमलोकादिगतिश्च तत्तदंशेनैव स्वस्वाधिकारपालनार्थं लीलया कायव्यूहेनेति ज्ञेयम् । तदित्थमेव श्रीभागवतभारतयोरविरोधः स्यादिति ॥ १ ॥ १५ ॥ श्रीसूतः ॥ ५२ ॥

अथ श्रीपरीक्षितो गतिश्च, स वै महाभागवतः परीक्षिद्येनापवर्गाख्यमदभ्रबुद्धिः । ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलमित्यनेन दर्शिता । एवमेवाहुः—सर्वे वयं तावदिहास्म-

ह्येय कलेवरं यावदसौ विहाय। लोकं परं विरजस्कं विशोकं यास्यत्ययं भागवतप्रधानः ॥ ५३ ॥

लोकशब्देन चात्र नान्यन्नच्चते। भगवत्यायं कामा इति तेषामेवोक्तिस्वारस्यात्। श्रीभागवतप्रधान इति च। तस्मादन्ते चेद् ब्रह्मकैवल्यं मन्येत, तथापि क्रमभगवत्प्राप्तिरीत्या तदनन्तरं भगवत्प्राप्तिस्त्ववश्यं मन्येतैव। यथाजामिलस्य दर्शितम् ॥ १ ॥ १८ ॥ श्रीमुनयः ॥ ५३ ॥

अथ सम्पद्यमानमाम्नाय भीष्मं ब्रह्मणि निष्कले इत्यत्रापि पूर्ववदेव समाधानम्। किंवा निष्कलब्रह्मशब्देन मायातीतो नराकृतिपरब्रह्मभूतः श्रीकृष्ण एवोच्यते। तस्मिन् संपद्यमानता तदाकृतिरेव। तथाह—अधोऽक्षजालम्भमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम्। तद्ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम् ॥ ५४ ॥

हृदये वर्त्तमानं हृदि भजध्वम् ॥ ४ ॥ १ ॥ श्रीप्रह्लादोऽसुरबालकान् ॥ ५४ ॥

सा च कृष्णसंगतिस्तस्य प्रापञ्चिकागोचरतयापि कृष्णरूपेणैवानन्तधामप्रकाशमानस्य श्रीकृष्णस्यैव प्रकाशान्तरे सम्भवेत्। अन्यथा विजसयखे रतिरस्तु मेऽनवद्या इति सङ्कल्पानुरूपा फलप्राप्तिर्विरुध्येत। अथ श्रीपृथोर्गतिरपि श्रीपरीक्षिद्वदेव व्याख्येया। तस्यापि ब्रह्मधारणानन्तरं ब्रह्मकैवल्यविलक्षणां श्रीकृष्णलोकप्राप्तिमेव तद्भार्याया अर्च्चिषो गतिदर्शनया सूचयन्ति—अहो इयं वधूर्धन्या या चैवं भूभुजां पतिम्। सर्वात्मना पतिं भेजे यज्ञेशं श्रीवधूरिव। सैषा नूनं व्रजत्यूर्द्ध्वमनुवैन्यं पृथुं सती। पश्यतास्मानतीत्यार्च्चिर्भुवि भाव्येन कर्म्मणा ॥ ५५ ॥

टीका च—त्रयोविंशे सभार्य्यस्य वने नित्यसमाधितः। विमानमधिरुह्याथ वैकुण्ठगतिरीर्य्यते इत्येषा ॥४॥२३॥ देव्यः परस्परम् ॥ ५५ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीभागवतस्यान्ते भक्तिनिष्ठाया एव सूचितत्वात् नान्या गति-र्विन्त्या। यथा तमुद्दिश्य तत्रापीत्यादिगद्ये—भगवतः कर्मबन्धन-विध्वंसनश्रवणस्मरणगुणविवरणचरणारविन्दयुगलं मनसा विदधदि-त्यादि ॥ ५६ ॥

स्पष्टम् ॥ ५ ॥ ८ ॥ श्रीशुकः ॥ ५६ ॥

रङ्गणमहिमानमुद्दिश्य च—एवं हि नृप भगवदाश्रिताश्रितानु-भाव इति ॥ ५७ ॥

स्पष्टम् ॥ ५ ॥ १३ ॥ श्रीशुकः ॥ ५७ ॥

यो दुस्त्यजेत्यादौ मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुरिति च ॥ ५८ ॥

स्पष्टम् ॥ ५ ॥ १४ ॥ श्रीशुकः ॥ ५८ ॥

अतो विष्णुरागाद्युक्ता ज्ञानिभरताद्याः कल्पभेदेनान्ये एव ज्ञेयाः। तदेवमन्येषामपि महाभक्तानां प्रीतेरुदासीना गतिर्न भव-त्येव। किमुत विरुद्धा। तदनुकूला सम्पत्तिस्त्वप्रार्थितैव भवतीति स्थितम्। प्रीतिमताञ्चायमतिशयः। यदि भगवता सा न दीयते तदा तेनादानेनापि प्रीतेरुल्लास एव भवति। यदि वा दीयते तदा तेनापीति। यथा—अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत्। इति कारुणिको नूनं धनं मे भूरि नाददत् ॥ ५९ ॥

अभूर्य्यपि। यथा च, नूनं वतैतन्मम दुर्भगस्य शश्वद्दरिद्रस्य समृद्धिहेतुः। महाविभूतेरवलोकतोऽन्यन्नैवोपपद्येत यदूत्तमस्येत्य-नन्तरं, नन्वब्रुवाणो दिशते समच्चम् इत्यादिकं किञ्चित् करोत्युर्व्वपि यत् स्वदत्तमित्यादिकं चोक्ता तद्गुणोद्दीपितप्रीतिराह—तस्यैव मे सौहृदसख्यमैत्रीदास्यं पुनर्जन्मनि जन्मनि स्यात्। महानुभावेन गुणालयेन विसज्जतस्तत्पुरुषप्रसङ्गः ॥ ६० ॥

निरुपाधिकोपकारमयं सौहृदम्। सहविहारितादिमयं तदेव सख्यम्। मैत्री स्निग्धत्वम्। दास्यं सेवकत्वमात्रमपि स्यात्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

द्वन्द्वैक्यम्। मद्दानुभावेन तेनैव। अतएव सा सम्पत्तिरपि भगवत्-सेवार्थमेव तेन नियुक्तेत्यायातम् ॥१०॥८१॥ श्रीदामविप्रः ॥५८॥६०॥

तदेवं भगवत्प्रीतेरेव परमपुरुषार्थता स्थापिता। अथ तस्याः स्वरूपलक्षणं श्रीविष्णुपुराणे प्रह्लादेनातिदेशद्वारा दर्शितम्—या प्रीतिरविवेकानां विषयेष्वनपायिनी। त्वामनुस्मरतः सा मे हृदयान्नापसर्पत्विति। या यल्लक्षणा सा तल्लक्षणा इत्यर्थः। न तु या सेवेति वक्ष्यमाणलक्षणैक्यात्। तथापि पूर्व्वस्या मायाशक्तिवृत्तिमयत्वेन उत्तरस्याः स्वरूपशक्तिवृत्तिमयत्वेन भेदात्। एतदुक्तं भवति—प्रीतिशब्देन खलु मुत्प्रमदहर्षानन्दादिपर्य्यायं सुखमुच्यते। भाव-हार्दसौहृदादिपर्य्याया प्रियता चोच्यते। तत्र उल्लासात्मको ज्ञान-विशेषः सुखम्। तथा विषयानुकूल्यात्मकस्तदानुकूल्यानुगततत्स्पृहा-तदनुभवहेतुकोल्लासमयज्ञानविशेषः प्रियता। अत एवास्यां सुख-त्वेऽपि पूर्व्वतो वैशिष्ट्यम्। तयोः प्रतियोगिनी च क्रमेण दुःखद्वेषौ। अतः सुखस्य उल्लासमात्रात्मकत्वादाश्रय एव विद्यते न तु विषयः। एवं तत्प्रतियोगिनो दुःखस्य च। प्रियतायास्त्वानुकूल्यस्पृहात्मक-त्वाद्विषयश्च विद्यते। एवं प्रातिकूल्यात्मकस्य तत्प्रतियोगिनो द्वेषस्य च। तत्र सुखदुःखयोराश्रयौ सुष्ठुदुष्टुकर्माणौ जीवौ। प्रियताद्वेषयो-राश्रयौ प्रीयमाणद्विषन्तौ। विषयौ च तत्प्रियद्वेष्यौ। तत्र प्रीत्यर्थानां क्रियाणां विषयस्याधिकरणत्वमेव दीव्यर्थवत्। द्वेषार्थानान्तु विषयस्य कर्म्मत्वं हन्त्यर्थवत्। एतदुक्तं भवति—कर्त्तुरीप्सिततमं खलु कर्म्म। ईप्सिततमत्वञ्च या क्रियारभ्यते साक्षात्तयैव साधयितु-मिष्टतमत्वम्। साधनञ्चोत्पाद्यत्वेन विकार्य्यत्वेन संस्कार्य्यत्वेन प्राप्यत्वेन च सम्पादनमिति चतुर्विधम्। तस्मादन्तर्भूतण्यर्थो यो धातुः स एव सकर्म्मकः स्यात् नान्यः। यथा घटं करोतीत्युक्ते घट उत्पद्यते तमुत्पादयतीति गम्यते, तण्डुलं पचतीति तण्डुलो विक्लिद्यति तं विक्लेदयतीत्यादि। सत्तादीप्यादीनान्तु न तादृशत्वं गम्यते द्रव्य-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कर्म्मकत्वमेवेति। न च प्रीतेर्ज्ञानरूपत्वेन सकर्म्मकत्वमाशङ्क्यम्। चेतनिप्रभृतीनां तद्विनाभावदर्शनात्। अतो ब्रह्मज्ञानवत् भूतरूपोऽयमर्थो न च यज्ञादिज्ञानवद्भव्यरूपो विधिसापेक्ष इति सिद्धम्। तदेवं प्रीतिशब्दस्य सुखपर्य्यायत्वे प्रियतापर्य्यायत्वे च स्थिते या प्रीतिरविवेकानामित्यत्र तूत्तरत्वमेव स्पष्टम्। न पूर्वत्वम्। पूर्वत्वे सति विषयेष्वनुभूयमानेषु या प्रीतिः सुखमित्यर्थः। उत्तरत्वे तु विषयेषु या प्रीतिः प्रियतेत्यर्थः। ततश्चानुभूयमानेष्वित्यध्याहारकल्पनया क्लिष्टा प्रतिपत्तिरिति। तदेवं पुत्रादिविषयकप्रीतेस्तदानुकूल्याद्यात्मकत्वेन भगवत्प्रीतेरपि तथाभूतत्वेन समानलक्षणत्वमेव। तत्र पूर्वस्या मायाशक्तिवृत्तिमयत्वम् इच्छा द्वेषः सुखं दुःखमित्यादिना श्रीगीतोपनिषदादौ व्यक्तमस्ति। उत्तरस्यास्तु स्वरूपशक्तिवृत्तिमयत्वमन्तिके दर्शयिष्यामः। तस्मात् साधु व्याख्यातं या यल्लक्षणा सा तल्लक्षणा इति। इयमेव भगवत्प्रीतिर्भक्तिशब्देनाप्युच्यते परमेश्वरनिष्ठत्वात् पित्रादिगुरुविषयकप्रीतिवत्। अतएव तदव्यवहितपूर्वपद्ये भक्तिशब्देनैवोपादाय प्रार्थितासौ, नाथ योनिसहस्रेष्वित्यादौ। अत्र या प्रार्थिता, सैव हि स्वरूपनिर्द्देशपूर्वकमुत्तरश्लोकेन या प्रीतिरित्यादिना विविच्य प्रार्थिता। अतएव न पौनरुक्त्यमपि। अतो द्वयोरैक्यादेव श्रीमत्परमेश्वरेणाप्यनुरुद्धेन तयोरेकयोक्तैवानुभाषितम्—भक्तिर्मयि तथास्त्येव भूयोऽप्येवं भविष्यतीति। तयोर्भेदे तु तद्वत् प्रीतिरप्यनुभाष्येत। अतएव हे नाथ लक्ष्मीपते सा विषयप्रीतिर्मम हृदयात् सर्पतु पलायतामिति विरक्तिप्रार्थनामयोऽर्थोऽपि न सङ्गच्छते, तस्या अप्यनुभाषणाभावात् नापसर्पत्विति प्रसिद्धपाठान्तरविरोधाच्च। ततस्तद्भक्तेरपि तत्प्रीतिपर्य्यायत्वे स्थितेऽपि प्रीणातिवन्न भजतिः सर्वप्रत्ययान्त एव, प्रीतिं वदति, प्रयोगादर्शनात्। * प्रयो-

* प्रीतिं दृष्ट्वा वदति प्रयोगादर्शनात् इति पाठान्तरम्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

गस्तु क्तिन्-क्त-प्रत्ययान्त एव दृश्यते। यदा च प्रीत्यर्थवृत्तिस्तदा प्रीणातिवदकर्मक एव भवतीति। तदेवं विषयप्रीतिदृष्टान्तेन श्रीभगवद्विषयानुकूल्यात्मकस्तदनुगतस्पृहादिमयो ज्ञानविशेषस्तत्प्रीतिरिति लक्षितम्। विषयमाधुर्य्यानुभववत् भगवन्माधुर्य्यानुभवस्तु ततोऽन्यः। अतएव भक्तिर्विरक्तिर्भगवत्प्रबोध इति भेदेनाम्नातम्। भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तपेति च। अथैनां भगवत्प्रीतिं साक्षादेव लक्षयति सार्द्धेन—देवानां गुणलिङ्गानामानुश्रविककर्म्मणाम्। सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या। अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी॥ ६१॥

पूर्वं श्रद्धा रतिर्भक्तिरनुक्रमिष्यतीत्युक्तम्। अत्र यद्यपि रतिभक्त्योर्द्वयोरपि तारतम्यमात्रभेदयोः प्रीतित्वमेव, तथापि प्रीत्यतिशयलक्षणायां प्रेमाख्यायां भक्तौ तदतिस्फुटं स्यादिति कृत्वा भक्तिपदेन तामुपादाय लक्षयति। अर्थश्चायम्—गुणलिङ्गानां गुणत्रयोपाधीनाम्। आनुश्रविकं श्रुतिपुराणादिगम्यं कर्माचरितं येषां ते तथोक्ताः। तेषां देवानां श्रीविष्णुब्रह्मशिवानां मध्ये सत्त्वे सान्निध्यमात्रेण सत्त्वगुणोपकारके स्वरूपशक्तिवृत्तिभूतशुद्धसत्त्वात्मके वा श्रीविष्णौ। एतच्चोपलक्षणम्। श्रीभगवदाद्याविर्भावेष्वेकस्मिन्नपीत्यर्थः। एवकारेण नेतरत्र, न च तत्रापि चेतरत्रापि च। एकमनसः पुरुषस्य या वृत्तिस्तदानुकूल्याद्यात्मको ज्ञानविशेषः। अनिमित्ता फलाभिसन्धिशून्या। स्वाभाविकी स्वरसत एव विषयसौन्दर्य्यादयत्नेनैव जायमाना, न च बलादापाद्यमाना। सा भागवती भक्तिः प्रीतिरित्यर्थः। प्रीतिसम्बन्धादेवान्यस्या भक्तेः स्वाभाविकत्वं स्यात्। तस्माद्वृत्तिशब्देन प्रीतिरेवात्र मुख्यत्वेन ग्राह्यति। सा च सिद्धेर्मोक्षाद्गरीयसी इति। सालोक्यसार्ष्टीत्यादिश्रवणात्। अतएव ज्ञानसाध्यस्यापि तिरस्कारप्रसिद्धेर्ज्ञानमात्रतिरस्कारार्थं सिद्धेर्ज्ञानादिति व्याख्यानमसदृशम्। अत्र

मोक्षाद्गरीयस्त्वेन तस्या वृत्तेर्गुणातीतत्वं ततोऽपि घनपरमानन्दत्वं श्रीभगवत्प्रसादविशेषेणैव समनुदितत्वं तत्रापि तत्तादात्म्येनैव तद्वृत्तिव्यपदेशत्वञ्च दर्शितम् ॥ ३ ॥ ५ ॥ श्रीकपिलदेवः ॥ ६१ ॥

अथ तदेव गुणातीतत्वादिकं दर्शयितुं पुनः प्रक्रिया। तत्र तस्या भगवत्सम्बन्धिज्ञानरूपत्वेन तत्सम्बन्धिसुखरूपत्वेन च गुणातीतत्वं श्रीभगवतैव दर्शितम्—कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकन्तु यत्। प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् इति। सात्त्विकं सुखमात्मोत्थं विषयोत्थन्तु राजसम्। तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयमिति च। एवमेव च प्रह्लादस्य सर्वाघधूनन-ब्रह्मानुभवानन्तरं परमप्रेमोदयो दर्शितः। तथास्याः स्वाभाविका-निमित्ततद्भक्तिरूपत्वेन च निर्गुणत्वं सिद्धमस्ति। मद्गुणश्रुतिमात्रेणे-त्यादिश्रीकपिलदेववाक्येन। एतदनन्तरञ्च सालोक्येत्यादिपद्ये सर्वाभ्योऽपि मुक्तिभ्यः परमानन्दरूपत्वं दर्शितम्। अन्येषु च तस्याः परमपुरुषार्थतानिर्णयवाक्येषु परितस्तदेव व्यक्तम्। तत्र यथा वर्ण-विधानमित्यादिगद्ये तस्या अपवर्गत्वनिर्देशेन गुणातीतत्वं नित्यत्वञ्च दर्शितम्। मुक्तिं ददाति कर्हिचिदित्यादौ मुक्तिदानमतिक्रम्यापि भगवत्प्रसादविशेषमयत्वेन तत्त्रयम्। वरान् विभो इत्यादिद्वयेऽपि कथं वृणीते गुणविक्रियात्मनामित्यत्रागुणविकारत्वं तत एव नित्यत्वम्। न कामये नाथेत्यादौ ततोऽप्यानन्दातिशयो दर्शितः। यस्यां वै श्रूय-माणायामित्यादौ परमार्थवस्तुप्रतिपादकश्रीभागवतस्य फलत्वेनापि तत्त्रयम्। तत्रैवात्मारामाणामपि तत्सुखश्रवणेन तद्बाध्यम्। माया-तीतवैकुण्ठादिवैभवगतानां तत्पार्षदानां तच्छ्रवणेन तु किमुत। तथैव तुष्टे च तत्रेत्यादौ किन्ते गुणव्यतिकरादिह ये स्वसिद्धा धर्मादय इत्युक्त्वा गुणातीतत्वं किमगुणेन च काङ्क्षितेनेत्युक्त्वा मोक्षादपि परमानन्द-रूपत्वं दर्शितम्। प्रत्यानीता इत्यत्रान्यस्य कालग्रस्तत्वमुक्त्वा मुक्ते-स्तस्याकालग्रस्तत्वेन साम्येऽपि तस्या आनन्दाधिक्यमुक्तम्। एवं



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नात्यन्तिकं विगणयन्तीत्यादौ मत्सेवया प्रतीतञ्च इत्यादौ या निर्वृति-स्त्वनुभूतामित्यादिश्रीध्रुववाक्येऽपि योज्यम्। सर्वमेतत् यस्यामेव कवय इत्यादिगद्ये व्यक्तमस्ति। तत्रैव तया परया निर्वृत्येत्यनेव साक्षादेव तस्या मोक्षादपि परमत्वमानन्दैकरूपत्वञ्च निगदेनैवोक्त-मस्ति। किं बहुना परमानन्दैकरूपस्य सर्वानन्दकदम्बावलम्बस्य श्रीभगवतोऽप्यानन्दचमत्कारिता तस्याः प्रीतेः श्रूयते। यथोक्तं, प्रीतिः स्वयं प्रीतिमगाद्गयस्येति। यथा चाह—अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज। साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः॥ ६२॥

यथा ह्यस्वतन्त्रो जीवः पराधीनो भवति, तथैवाहं स्वतन्त्रोऽपि भक्तपराधीन इत्यर्थः। तत्र हेतुः, भक्ताख्यैः साधुभिर्मुमुक्षापर्यन्त-कैतवरहितैर्ग्रस्तं भक्त्या परमवशीकृतं हृदयं यस्य सः। तत्र हेतुः, भक्तजनेषु प्रियः तत्प्रीतिलाभेनातिप्रीतिमान्। भगवदानन्दः खलु द्विधा; स्वरूपानन्दः स्वरूपशक्त्यानन्दश्च। अन्तिमश्च द्विधा; मानसा-नन्द ऐश्वर्यानन्दश्च। तत्रानेन तदीयेषु मानसानन्देषु भक्त्यानन्दस्य साम्राज्यं दर्शितम्। स्वरूपानन्देषु ऐश्वर्यानन्देषु चाह पद्याभ्याम्—नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना। श्रियं चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परा॥ ६३॥

नाशासे न स्पृहयामि॥ ९॥ ४॥ श्रीविष्णुर्दुर्वाससम्॥६२॥६३॥

तथैव भक्तश्रेष्ठत्वेन श्रीमदुद्धवं लक्ष्यीकृत्याह—न तथा मे प्रिय-तम आत्मयोनिर्न शङ्करः। न च सङ्कर्षणो न श्रीर्नैवात्मा च यथा भवान्॥ ६४॥

यथा भक्तत्वातिशयद्वारा भवान् मे प्रियतमः तथात्मयोनिर्ब्रह्मा पुत्रत्वद्वारा न प्रियतमः। न च शङ्करो गुणावतारत्वद्वारा। न च सङ्कर्षणो भ्रातृत्वद्वारा। न च श्रीर्जायात्वव्यवहारद्वारा। न चात्मा परमानन्दघनरूपताद्वारेत्यर्थः॥ ११॥ १४ श्रीभगवान्॥ ६४॥

अथ श्रुतौ च भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पुरुषो भक्तिरेव भूयसीति श्रूयते। तस्मादेवं विविच्यते। या चैतं भगवन्तं स्वानन्देन मदयति सा किंलक्षणा स्यादिति। न तावत् सांख्यानामिव प्राकृतसत्त्वमयमायिकानन्दरूपा, भगवतो मायानभिभाव्यत्वश्रुतेः, स्वतस्तृप्तत्वाच्च। न च निर्विशेषवादिनामिव भगवत्स्वरूपानन्दरूपा, अतिशयानुपपत्तेः। अतो नतरां जीवस्य स्वरूपानन्दरूपा, अत्यन्तक्षुद्रत्वात्तस्य। ततो ह्लादिनी सन्धिनी सम्वित्त्वय्येका सर्वसंश्रये। ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जित इति श्रीविष्णुपुराणानुसारेण ह्लादिन्याख्यतदीयस्वरूपशक्त्यानन्दरूपैवेत्यवशिष्यते यया खलु भगवान् स्वरूपानन्दविशेषीभवति। ययैव तं तमानन्दमन्यानप्यनुभावयतीति। अथ तस्या अपि भगवति सदैव वर्त्तमानतयातिशयानुपपत्तेस्त्वेवं विविचनीयम्। श्रुतार्थान्यथानुपपत्त्यर्थापत्तिप्रमाणसिद्धत्वात् तस्या ह्लादिन्या एव कापि सर्वानन्दातिशायिनी वृत्तिर्नित्यं भक्तवृन्देष्वेव निक्षिप्यमाना भगवत्प्रीत्याख्यया वर्त्तते। अतस्तदनुभवेन श्रीभगवानपि श्रीमद्भक्तेषु प्रीत्यतिशयं भजत इति। अतएव तत्सुखेन भक्तभगवतोः परस्परमावेशमाह—साधवो हृदयं मह्यं साधूनां हृदयं त्वहम्। मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि ॥ ६५ ॥

मह्यं मम। हृदयेन स्वस्य सामानाधिकरण्ये वीजमाह, मदन्यदिति। अत्यन्तावेशेनैकतापत्त्या ज्वलल्लोहादावग्निव्यपदेशवदत्राप्यभेदनिर्देश इत्यर्थः ॥ ९ ॥ ४ ॥ श्रीविष्णुर्दुर्वाससम् ॥६५॥

तेनैव परस्परं वशवर्त्तित्वमाह—अजित जितः सममतिभिः साधुभिर्भवान् जितात्मभिर्भवता। विजितास्तेऽपि च भजतामकामात्मनां य आत्मदोऽतिकरुणः ॥ ६६ ॥

टीका च—हे अजित अन्यैरजितोऽपि भवान् साधुभिर्भक्तैर्जितः स्वाधीन एव कृतः। यतो भवानतिकरुणः। तेऽपि च निष्कामा अपि भवता विजिताः। यो भवान् अकामात्मनामात्मानमेव ददाति-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्येषा। हरिभक्तिसुधोदये च प्रह्लादं प्रति श्रीमुखवाक्यम्—ससयं सम्भ्रमं वत्स मद्गौरवकृतं त्यज। नैष प्रियो मे भक्तेषु स्वाधीनप्रणयी भव। अपि मे पूर्णकामस्य नवं नवमिदं प्रियम्। निःशङ्क-प्रणयाद्भक्तो यन्मां पश्यति भाषते। सदा मुक्तोऽपि बद्धोऽस्मि भक्तेषु स्नेहरज्जुभिः। अजितोऽपि जितोऽहन्तैरवश्योऽपि वशीकृतः। त्यक्त-बन्धुजनस्नेहो मयि यः कुरुते रतिम्। एकस्तस्यास्मि स च मे न चान्योऽस्त्यावयोः सुहृदिति। तस्मात् साधु व्याख्यातं, भगवत्प्रीतिरूपा वृत्तिर्मायादिमयी न भवति। किन्तर्हि स्वरूपशक्त्यानन्दरूपा, यदा-नन्दपराधीनः श्रीभगवानपीति। यथाच श्रीमती गोपालोत्तरतापनी श्रुतिः—विज्ञानघन आनन्दघन सच्चिदानन्दैकरसे भक्तियोगे तिष्ठतीति॥ ६॥ १६॥ चित्रकेतुः श्रीसङ्कर्षणम्॥ ६६॥

तदेवं तस्य स्वरूपलक्षणमुक्तम्। तटस्थलक्षणमप्याह—स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम्। भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुमित्यादि॥ ६७॥

स्पष्टम्॥ ११॥ ३॥ श्रीप्रबुद्धो निमिम्॥ ६७॥

तथा—कथं विना रोमहर्षं द्रवता चेतसा विना। विनानन्दाश्रु-कलया शुध्येद्भक्त्या विनाशयः॥ ६८॥

टीका च—रोमहर्षादिकं विना कथं भक्तिर्गम्यते भक्त्या च विना कथमाशयः शुध्येदित्येषा॥ ११॥ १४॥ श्रीभगवान्॥ ६८॥

तदेवं प्रीतेर्लक्षणं चित्तद्रवस्तस्य च रोमहर्षादिकम्। कथञ्चि-ज्जातेऽपि चित्तद्रवे रोमहर्षादिके वा न चेदाशयशुद्धिस्तदापि न भक्तेः सम्यगाविर्भाव इति ज्ञापितम्। आशयशुद्धिर्नाम चान्यतात्पर्य-परित्यागः प्रीतितात्पर्य्यञ्च। अतएवानिमित्ता स्वाभाविकी चेति तद्विशेषणम्। यथाह्यक्रूरमुद्दिश्य—देहंभृतामियानर्थो हित्वा दम्भं भियं शुचं। सन्देशाद्यो हरेर्लिङ्गदर्शनश्रवणादिभिः॥ ६९॥

टीका च—ननु किमर्थमेवं व्युलुठत। नास्ति प्रेमसंरम्भे फलो-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

हेश इत्याह, देहंभृतामिति। देहभाजामेतावानेव पुरुषार्थः। कंसस्य सन्देशमारभ्य हरेः लिङ्गदर्शनश्रवणादिभिर्योऽयम् अक्रूरस्य वर्णित इत्येषा। अत्र दम्भं शुचं भयं हित्वा योऽयं जात इति योजनिकया चेवं गम्यते। यथाक्रूरस्य तत्र दम्भो नासीत्, न मय्युपैष्यत्यरिबुद्धिमच्युत इत्यादिचिन्तनात्। तथान्तःसुखान्तरतात्पर्य्यलक्षणो यदि दम्भो न स्यात्, यथा च कंसप्रतापितो यो बन्धुवर्गः, तत्प्रतापयितव्यश्च यः, तस्य तस्य हेतोर्निजकुलरक्षावतीर्णश्रीकृष्णपुरतो व्यञ्जितः शोको भीश्च तादृशावेशे हेतुर्नासीत्, तद्दर्शनाह्लादेत्याद्युक्तेः, प्रेमविभिन्नधैर्य्य इत्याद्युक्तेश्च। तथा यदि निजदुःखहानितात्पर्य्यं न स्यात्, तदाक्रूरस्य योऽयं प्रेमावेशो जातः, स इयान् एतावानपि देहिनामर्थः परमपुरुषार्थः स्यात्, किमुत ततोऽपि भूयानिति ॥ १० ॥ ३८ ॥ श्रीशुकः ॥ ६९ ॥

लौकिकशुद्धप्रीतिनिदर्शनेनापि स्वयं तथैव द्रढ़यति—मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते। न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा ॥ भजन्त्यभजतो ये वै करुणाः पितरौ यथा। धर्मो निरपवादोऽत्र सौहृदञ्च सुमध्यमाः ॥ ७० ॥

सष्टम् ॥

ततोऽपि स्वप्रीतेर्विशिष्ट्यमाह—नाहन्तु सख्यो भजतोऽपि जन्तून् भजाम्यमीषामनुवृत्तिवृत्तये। यथाधनो लब्धधने विनष्टे तच्चिन्तयान्यन्निभृतो न वेद ॥ ७१ ॥

भजन्त्यभजत इत्यत्र न करुणादीनां दयनीयादिकर्त्तृकप्रीत्यास्वादापेक्षा। तथा दयनीयादीनां करुणादिविषया या प्रीतिः सा करुणादिभजनजीवना स्यादित्यायाति। अत्र तु श्रीकृष्णस्य स्वभक्तेषु स्वप्रेमातिशयोदये प्रयत्नः। तदुदये च सति तदास्वादाद्भक्तविषयकप्रेमचमत्कारातिशयो न स्यादिति तद्भक्तानाञ्च तत्कृतौदासीन्येऽपि प्रेम्णो रेव वृद्धिः स्यादिति वैशिष्ट्यमागतम् ॥ १० ॥ ३२ ॥ श्रीभगवान् व्रजदेवीः ॥ ७२ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सा च शुद्धा प्रीतिः श्रीमतो वृत्रस्य दृश्यते। यथा—अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः। मनः स्मरेतासुपतेर्गुणानां गृणीत वाक् कर्म्म करोतु कायः। न नाकपृष्ठमित्यादि। अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्त्ताः। प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष दिदृक्षते त्वाम्। ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्म्मभिः। त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात्॥ ७२॥

अजातेति। अत्राजातपक्षा इत्यनेनानन्याश्रयत्वं तदनुगमनासमर्थत्वञ्च। तथा तत्सहितेन मातरमित्यनेन अनन्यस्वाभाविकदयालुत्वं तदीयदयाधिक्यञ्च व्यञ्जितम्। तेन तेन च मातरि तेषामपि प्रीत्यतिशयो दर्शितः। ततस्तत्साम्येन तद्दात्मनोऽपि भगवति प्रीत्याधिक्यहेतुका दिदृक्षा व्यञ्जिता। तथापि तन्मात्रा यद्वस्त्वन्तरमुपक्रियते तदेव तेषामुपजीव्यमास्वाद्यञ्चेति केवलतन्निष्ठत्वाभावादपरितोषेण दृष्टान्तान्तरमाह, स्तन्यमिति। अत्र दिदृक्षायोजनार्थं मातरमित्येवानुवर्त्तयितव्ये स्तन्यमित्युक्तिस्तस्यास्तैस्तदंशप्राचुर्य्यभावनया। वस्तुतस्तस्य तदीयशरीरांशतया च तदभेदविवक्षार्था। ततस्तन्यं स्तन्यरूपतदंशमयीं मातरमित्येव लब्धे तादृशी मातेव तैरुपजीव्यते आस्वाद्यते चेति पूर्वतः श्रैष्ठ्यं दर्शितम्। तथा वत्सतरा अत्यन्तबालवत्सास्तत एव स्वामिबद्धतया तदनुगतावसमर्था इति साधारण्येऽपि बहुसमयातिक्रमात् क्षुधार्त्ता इत्यनेन पूर्वतो वैशिष्ट्यम्। तथा गोजातेः स्नेहातिशयस्वाभाव्येन च तदनुसन्धेयम्। अथ तथाप्युत्तरदृष्टान्ते स्तन्यगवोः कार्य्यकारणभावेन भेदं वितर्क्य दृष्टान्तद्वयेऽप्यजातपक्षत्वादिविशेषणं रायत्वां तादृशप्रीतेरस्थिरतां चालोक्य दृष्टान्तान्तरमाह, प्रियमिति। सत्स्वपि वाचकान्तरेषु तयोः प्रियशब्देनैव निर्देशात् स्वाभाविकाव्यभिचारिप्रीतिमन्तावेव तौ गृहीतौ। यत्र वार्द्धक्ये वाल्येऽपि मह-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मरणादिकं दृश्यते ततस्तादृशी कापि प्रिया यथा तादृशं प्रियं व्युषितं विदूरप्रोषितं सन्तमनन्योपजीवित्वेन विषण्णा सती दिदृक्षते लोचनद्वारा तदास्वादाय भृशमुत्कण्ठते, तथा मम मनोऽपि त्वामित्यर्थः । अत्र दार्ष्टान्तिकेऽपि स्वकर्तृकत्वमनुक्त्वा मनःकर्तृकत्वोल्लेखेनाबुद्धिपूर्वकप्रवृत्तिप्राप्तौ प्रीतिः स्वाभाविकत्वेनाव्यभिचारित्वं व्यक्तम् । तथारविन्दाक्षेति मनसो भ्रमरतुल्यतासूचनेन भगवतः परममधुरिमोल्लेखेन च तस्यैवोपजीव्यत्वमास्वाद्यत्वञ्च दर्शितम् । अथ तद्दर्शनभाग्यं स्वस्यासम्भावयन्निदमपि मम स्यादिति सवास्यमाह, ममोत्तमेति । तदेतच्छुद्धप्रेमेऽङ्गारमयत्वेनैव श्रीमद्वृत्रवधोऽसौ विलक्षणत्वाच्छ्रीभागवतलक्षणेषु पुराणान्तरेषु गण्यते, वृत्रासुरवधोपेतं तद्भागवतमिष्यत इति ॥ ६ ॥ ११ ॥ श्रीवृत्रः ॥ ७२ ॥

तस्मात्, केवलतन्माधुर्य्यतात्पर्य्यत्वेनैव प्रीतित्वे सिद्धे तात्पर्य्यान्तरादौ सति प्रीतेरसम्यगाविर्भाव इति सिद्धम् । स च द्विविधः ; तदाभासस्यैवोदयः ईषदुद्गमश्च । अन्त्यश्च द्विविधः ; कदाचिदुद्भवत्तच्छविमात्रत्वं तस्या एवोदयावस्था च । तत्र यत्रान्यतात्पर्य्यं तत्र तदाभासत्वम् । यत्र प्रीतितात्पर्य्याभावस्तत्र कदाचिदुद्भवत्तच्छविमात्रत्वम् । यत्र तत्तात्पर्य्यमन्यासङ्गस्तु दैवात् तत्र तस्या उदयावस्था च । अन्यासङ्गस्य गौणत्वम् । तच्च द्विविधम् ; नष्टप्रायत्वमाभासमात्रत्वञ्च । तयोः पूर्वञ्च तस्याः प्रथमोदयावस्था । उत्तरत्र प्रकटोदयावस्था । तस्मात् प्रथमोदयपर्य्यन्त एवासम्यगाविर्भावः । प्रकटोदयस्य तु सम्यक्त्वमेव । यत्र त्वन्यासङ्ग एव न विद्यते तत्र दर्शितप्रभावनामान आविर्भावा ज्ञेयाः । तत्र प्रकटोदयमात्रस्यैव भक्त्याख्येऽपवर्गे जीवन्मुक्ताः । प्राप्तायां भगवत्पार्षदतायां परममुक्ताः । नित्यपार्षदास्तु नित्यमुक्ता ज्ञेयाः । तत्राभासमाह—एवं हरौ भगवति प्रतिलब्धभावो भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात् । औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमानस्तच्चापि चित्तवडिशं शनकैर्वियुङ्क्ते ॥ ७३ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एवं पूर्वोक्तयोगमिश्रभक्त्यनुष्ठानेन हरौ प्रतिलब्धभावो भवति। तत्र लिङ्गं भक्तेरित्यादि। भक्त्या स्मरणादिना। अपि एवमपि लब्धध्येयमधुरत्वस्य भावेन ताट्टशतापन्नं च तस्य चित्तं शनकैर्वियुङ्क्ते विमुक्तमपि भवति। येन योगाङ्गतया भक्तिरनुष्ठिता तस्मात् कैवल्येच्छा कैतवदोषादेवेति भावः। यथोक्तं, धर्म्मः प्रोज्झितकैतवोऽत्र परम इत्यत्र प्रशब्देन मोक्षाभिसन्धिरपि कैतवमिति। अतएव वड़िशशब्देन काठिन्यम् अरसविरस्व कौटिल्यं दाम्भिकत्वं स्वार्थसाधनत्वं च व्यञ्जितम्। शुद्धभक्तास्तु न कदाचित्तथा तं ध्येयं त्यजन्ति। यथोक्तं राज्ञा—धौतात्मा पुरुषः कृष्णपादमूलं न मुञ्चति। मुक्तसर्वपरिक्लेशः पान्थः स्वं शरणं यथा इति। श्रीनारदेन च—न वै जनो जातु कथञ्चनाव्रजेन्मुकुन्दसेव्यन्यवदङ्गसंसृतिम्। स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो जन इति। यो रसग्रहः स तु न त्यजतीत्यनेनान्येषां लौहपाषाणादितुल्यत्वं सूचितम्। न तु भगवानपि ततोऽन्यथा कुर्य्यात्। यदुक्तं श्रीब्रह्मणा—भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ हृदयाम्बुरुहात् स्वपुंसामिति। आविर्होत्रेण च—विसृजति हृदयं न यस्य साक्षादित्यादि। अतएव पूर्वत्र स्वपुंसामित्यत्र स्वेति विशेषणम्। तदेवमाभासोदाहरणे श्रीकपिलदेवस्यैव वाक्यं, भक्त्या पुमान् जातविराग इत्यादिकमपि ज्ञेयम्। तथाहि, अस्य पूर्वत्र श्रद्धा रतिर्भक्तिरनुक्रमिष्यतीति भक्तिमात्रं दर्शितम्। उत्तरत्र तस्या लक्षणे पृष्टे तल्लक्षणं वदतानेन भक्तिः सिद्धेर्गरीयसीति नैकात्मतां मे स्पृहयन्ति केचिदिति च मोक्षनिरपेक्षत्वेव तस्य मुख्याभिधेयत्वमुक्तम्। जरयत्याशु या कोषमिति च मायाकोषध्वंसनस्य तु तदानुषङ्गिकगुणत्वमुक्तम्। अत्र भक्त्या पुमानित्यादौ तु ताट्टश्या अपि तस्या भक्तेर्ज्ञानादिसाहाय्येनैव मोक्षमात्रसाधकत्वमुक्त्वा गौणाभिधेयत्वमुक्तम्। तस्मादत्रापि तस्या भक्तेराभास एव प्रथमतो दर्शितः। एवं दृष्ट्वा तमवनौ सर्वे ईक्षणाह्लादविक्लवाः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दण्डवत् पतिता राजन् शनैरुत्थाय तुष्टुवुरित्यत्रापि वृत्राख्यशत्रुनाश-स्वाराज्यप्राप्तितात्पर्य्यवतां देवानां भक्त्याभासत्वमुदाहार्थम् ॥३॥२८॥ श्रीकपिलदेवः ॥ ७३ ॥

अथ कदाचिदुद्भवत्यच्छविसालत्वमाह—सकृन्मनः कृष्णपदार-विन्दयोर्निवेशितं तद्गुणरागि यैरिह । न ते यमं पाशभृतश्च तद्भ-टान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः ॥ ७४ ॥

रागो रञ्जनमात्रम् । न तु तद्गुणमाधुरीयाथार्थ्यज्ञानेन साक्षात् प्रीतिः । अतएव तत्र तात्पर्य्याभावात् सकृदपीत्युक्तम् । तथाप्यस्यजा-मिलादिभ्यो विशेष इत्याह, न ते यममित्यादि ॥६॥१॥ श्रीशुकः ॥७४॥

अथ प्रथमोदयावस्थामाह—यत्रानुरक्ताः सहसैव धीरा व्यपोह्य देहादिषु सङ्गमूढ़म् । व्रजन्ति तत्पारमहंस्यमन्त्यं यस्मिन्नहिंसोप-शमः स्वधर्म्मः ॥ ७५ ॥

अन्त्यं पारमहंस्यं भागवतपरमहंसत्वम् । तस्यानुषङ्गिको गुणः, यस्मिन्निति ॥ १ ॥ १८ ॥ श्रीसूतः ॥ ७५ ॥

प्रकटोदयावस्थां श्रीप्रियव्रतमधिकृत्याह—प्रियव्रतो भागवत आत्मारामः कथं मुने । गृहे रमत यम्मूलः कर्म्मबन्धः पराभव इत्यादेः । संशयोऽयं महान् ब्रह्मन् दारागारसुतादिषु । सक्तस्य यत् सिद्धिरभूत् कृष्णे च मतिरच्युतेत्यन्तस्य राजप्रश्नस्यानन्तरेण गद्येन—बाढ़मुक्तं भगवत उत्तमःश्लोकस्य श्रीमच्चरणारविन्दमकरन्दरस आवे-शितचेतसो भागवतपरमहंसदयितकथां किञ्चिदन्तरायविहतां स्वां शिवतमां न प्रायेण हि हिन्वन्ति इति ॥ ७६ ॥

टीका च—अङ्गीकृत्य परिहरति वाढ़मिति । वाढ़म् अभिनिवे-शादिकं नास्तीति सत्यमेव । तथापि विघ्नवशेन तेषां प्रवृत्तिः पूर्वा-भ्यासबलेन पुनर्निवृत्तिश्च सङ्गच्छत इत्याह, भगवत इत्यादिका । अत एवोक्तं पृथुं प्रति श्रीविष्णुना । दृष्टासु सम्पत्सु विपत्सु सूरयो न विक्रियन्ते मयि बद्धसौहृदा इति । अगस्तस्य चेन्द्रद्युम्ने स्वावमान-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नया न कोपः, किन्तु वैष्णवोचितमहदादरचर्य्याया परित्यागे शिक्षार्थमेव मन्तव्यः। तयोरनुग्रहार्थाय शापं दास्यन्निदं जगौ इतिवत्। अथ श्रीपरीक्षितो ब्राह्मणावमानना तु श्रीकृष्णस्य तद्व्याजेन स्वपार्श्वनयनेच्छात एव। तस्यैव श्रीघस्य परावरेशो व्यासक्तचित्तस्य गृहेष्वभीक्ष्णम्। निर्वेदमूलो द्विजशापरूपो यत्र प्रसक्तो भयमाशु धत्त इति तदुक्तेः। एवमन्यत्रापि योजनीयम्। तस्माच्छ्रीप्रियव्रतस्यापि अभिनिवेशाद्यासङ्गाभासत्वमेवायातम्। तदपि दुःखदमेव तद्विधानामिति चाग्रे तन्निर्वेदेन दर्शयिष्यते, अहो असाध्वनुष्ठितमित्यादिना ॥ ५ ॥ १ ॥ श्रीशुकः ॥ ७६ ॥

प्रकटोदयावस्थायाश्चिह्नान्तरमाह—स उत्तमःश्लोकपदारविन्दयोर्निषेवयाकिञ्चनसङ्गलब्धया। तन्वन् परां निर्वृतिमात्मनो मुहुर्दुःसङ्गदीनस्य मनः समं व्यधात् ॥ ७७ ॥

टीका च—आत्मनः परां निर्वृतिं तन्वन् दुःसङ्गदीनस्य अपि मनः समं शान्तं व्यधादित्येषा। समं स्वमनसस्तुल्यमिति वा व्याख्येयम् ॥ ७ ॥ ४ ॥ श्रीनारदो युधिष्ठिरं प्रति ॥ ७७ ॥

अथ दर्शितप्रभावास्तदाविर्भावास्तु श्रीशुकदेवादिषु द्रष्टव्याः। यथा च श्रीनारायणपञ्चरात्रे—भावोन्मत्तो हरेः किञ्चिन्न वेद सुखमात्मनः। दुःखञ्चेति महेशानि परमानन्द आप्लुत इति। तदेवं सभेदा प्रीत्याख्या भक्तिर्दर्शिता। एषा श्रीगीतोपनिषत्सु च स्वरूपद्वारा गुणद्वारा च कथिता—अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते। इति मत्वा भजन्ते मां बुधा भावसमन्विताः॥ मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्। कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च॥ तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥ इति। अथ श्रीभगवत्प्रीतिलक्षणवाक्यानां निष्कर्षः। निखिलपरमानन्दचन्द्रिकाचन्द्रमसि सकलभुवनसौभाग्यसारसर्वस्वसत्त्वगुणोपजीव्यानन्तविलासमयामायिकविशुद्धसत्त्वानवरत-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्वादसमोर्द्धमधुरे श्रीभगवति कथमपि चित्तावतारादनपेक्षितविधिः स्वरसत एव समुल्लसन्ती विषयान्तरैरनवच्छेद्या तात्पर्य्यान्तरमसहमाना ह्लादिनीसारवृत्तिविशेषस्वरूपा भगवदानुकूल्यात्मकतदनुगततत्स्पृहादिमयज्ञानविशेषाकारा तादृशभक्तमनोवृत्तिविशेषदेहा पीयूषपूरतोऽपि सरसेन स्वेनैव स्वदेहं सरसयन्ती भक्तात्तताल्मरहस्यसङ्गोपनगुणमयरसनावाप्यसुक्तादिव्यक्तपरिष्कारा सर्व्वगुणैकनिधानस्वभावा दासोकृताशेषपुरुषार्थसम्पत्तिका भगवत्पातिव्रत्यव्रतवर्य्यापर्य्याकुला भगवन्मनोहरणैकोपायहारिरूपा भागवती प्रीतिस्तमुपसेवमाना विराजत इति। सेयमखण्डापि निजालम्बनस्य भगवत आविर्भावतारतम्येन स्वयं तारतम्ये नैवाविर्भवति। तदेवं सति श्रीकृष्णस्यैव स्वयं भगवत्त्वेन तत्सन्दर्भे दर्शितत्वात् तत्रैव तस्याः परा प्रतिष्ठा। अतएव बाहुल्येन तत्प्रीतिपरिपाटीमेवाधिकृत्य प्रक्रिया दर्शयितव्या। या च क्वचिदन्याधिकर्त्तव्या सा खलु कैमुत्येन तस्या एव पोषणार्थं ज्ञेया। अथ श्रीकृष्णे स्वयं भगवत्त्वेनाविर्भावपूर्णत्वदर्शनेन तस्याः पूर्णत्वं दर्शयन्ति—अद्य नो जन्मसाफल्यं विद्यायास्तपसो दृशः। त्वया सङ्गस्य सद्गत्या यदन्तः श्रेयसां परः॥ ७८॥

सतां त्वदेकनिष्ठानां तद्विशेषाणां गत्या त्वया श्रीकृष्णाख्येन सङ्गस्य नोऽस्माकं वशिष्ठचतुःसनवामदेवमार्कण्डेयनारदकृष्णद्वैपायनादीनां ब्रह्मानुभवतां भगवदीयनानाभक्तिरसविदां दृष्टनानाभगवदाविर्भावानामपि अद्य ईदृशप्राकट्यावच्छिन्नेऽस्मिन्नेवावसरे जन्मनः साफल्यं जातम्। यद्वे साफल्यं पूर्वलब्धानां तत्तदाविर्भावजाततत्तत्साफल्यरूपाणां श्रेयसां परमपुरुषार्थानां परोऽन्तः परमोऽवधिरिति॥१०॥८४॥ महामुनयः श्रीभगवन्तम्॥ ७८॥

एवमन्यत्रापि। अथ ब्रह्मात्मजैर्देवैः प्रजेशैरावृतोऽभ्यगात्। भवश्च भूतभव्येशो ययौ भूतगणैर्वृत इत्यादिकमुपक्रम्याह—व्यचक्षतावितृप्ताक्षाः कृष्णमद्भुतदर्शनमिति॥ ७९॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अत्राप्यद्भुतत्वं प्राकट्यात्तत्परापेक्षयैव ॥ १३ ॥ ६ ॥ श्रीशुकः ॥७९॥

किञ्च—यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम्।
विस्मापनं स्वस्य च सौभगर्द्धेः परं पदं भूषणभूषणाङ्गम् ॥ ८० ॥

स्वयोगमायाबलं स्वचिच्छक्तेर्वैभवम् एतादृशसौभाग्यस्यापि प्रकाशिकेयं भगवतोऽस्त्येवंविधं दर्शयताविष्कृतम्। सकलस्ववैभवविडम्बनविस्मापनायेति भावः। न केवलमेतावत् स्वस्यैव रूपान्तरे तादृशत्वाननुभवात् तत्रापि प्रतिक्षणमप्यपूर्वप्रकाशात्। स्वस्यापि विस्मापनम्। यतः सौभगर्द्धेः परं पदं परा प्रतिष्ठा। ननु तस्य भूषणं त्वस्ति सौभगहेतुरित्यत्राह, भूषणेति। कीदृशं, मर्त्यलीलौपयिकं, नराकृतीत्यर्थः। तस्मात् सुतरामेव युक्तमुक्तं श्रीमहाकालपुराधिपेनापि, द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीतेत्यादि। श्रीहरिवंशे कृष्णवचनेन च, मद्दर्शनार्थं ते बाला हृतास्तेन महात्मनेति। ॥ ३ ॥ २ ॥ श्रीमानुद्धवो विदुरम् ॥ ८० ॥

अतएव परीक्षिद्गुणवर्णने तद्गुणोपमात्वेनैकमेकं गुणं श्रीरामरमेशयोर्दर्शयित्वा सर्वसाद्गुण्योपमात्वेन श्रीकृष्णं दर्शयितुमत्युत्कर्षदृष्ट्याशङ्कमानैर्ब्राह्मणैरेष कृष्णमनुव्रत इत्येवोक्तम्। न तु स इवेति। अतएव परमप्रेमजनकस्वभावत्वमपि तस्य दृश्यते।
विजयरथकुटुम्ब इत्यादौ यमिह निरीक्ष्य हता गताः स्वरूपमित्यनन्तरं, ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमानाः।
कृतमनुकृतवत्य उन्मादान्धाः प्रकृतिमगन् किल यस्य गोपवध्वः ॥८१॥

तत्स्वभावमहिम्नः सारूप्यप्रापणत्वं नाम कियत्युत्कर्षः, यत एतावतोऽपि प्रेम्णो जनकत्वं दृश्यत इत्याह, ललितेति। अत्र कृतानुकरणं नाम लीलाख्यो नायिकानुभावः। तदुक्तं प्रियानुकरणं लीलेति। प्रकृतिं स्वभावम्। तादृशप्रेमावेशो जातः, येन तत्स्वभावनिजस्वभावयोरैक्यमेव तासु जातमित्यर्थः। यथा श्रीमदुज्ज्वलनीलमणौ महाभावोदाहरणम्। राधाया भवतश्च चित्तजतुनी

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

खेदैर्विलाप्य क्रमाद्युञ्जन्नद्रिनिकुञ्जकुञ्जरपतेर्निर्धूतभेदभ्रमम्। चित्राय स्वयमन्वरञ्जयदिह ब्रह्माण्डहर्म्योदरे भूयोभिर्नवरागहिङ्गुलभरैः शृङ्गारकारुः कृतीति ॥ १ ॥ ८ ॥ भीष्मः श्रीभगवन्तम् ॥ ८१ ॥

यस्याननं मकरकुण्डलचारुकर्णभ्राजत्कपोलसुभगं सुविलासहासम्। नित्योत्सवं न ततृपुर्दृशिभिः पिबन्त्यो नार्यो नराश्च मुदिताः कुपिता निमेश्च ॥ ८२ ॥

टीका च—तत्र प्रदर्शनार्थं मुखशोभामाहेत्यादिका। तद्दर्शनेऽपि निमेषकर्तृत्वेन निमेर्नियमे कुपिता बभूवुः। इयं खलु महाभावस्य गतिः। सा च तत्स्वभावतः सिद्धेत्यभिधानाद्युक्तमत्रास्योदाहरणम् ॥ ९ ॥ २४ ॥ श्रीशुकः ॥ ८२ ॥

किञ्च—का स्त्र्यङ्ग ते कलपदायतेत्यादौ यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्निति ॥ ८३ ॥

अन्यत्र च, अस्पन्दनं गतिमतां पुलकस्तरूणामित्यादि। अत एवोक्तं श्रीबिल्वमङ्गलेन—सन्त्ववतारा बहवः पुष्करनाभस्य सर्वतोभद्राः। कृष्णादन्यः को वा लतास्वपि प्रेमदो भवतीति ॥ १०॥२९ ॥ श्रीव्रजदेव्यः श्रीभगवन्तम् ॥ ८३ ॥

तदेवं श्रीभगवदाविर्भावतारतम्येन तत्प्रीतेराविर्भावतारतम्यं दर्शितम्। अथ तस्या एव गुणान्तरोत्कर्षतारतम्येन तारतम्यान्तरं भेदाश्च दर्श्यन्ते। तत्र गुणा द्विविधाः। भक्तचित्तसंस्क्रियाविशेषस्य हेतव एके तदभिमानविशेषस्य हेतवश्चान्ये। तत्र पूर्वेषां गुणानां स्वरूपाणि तैस्तस्यास्तारतम्यं भेदाश्च यथा;—प्रीतिः खलु भक्तचित्तमुल्लासयति, ममतया योजयति, विस्रम्भयति, प्रियत्वातिशयेनाभिमानयति, द्रावयति, स्वविषयं प्रत्यभिलाषातिशयेन योजयति, प्रतिक्षणमेव स्वविषयं नवनवत्वेनानुभावयति, असमोर्द्धचमत्कारेणोन्मादयति च। तत्रोल्लासमात्राधिक्यव्यञ्जिका प्रीतिः रतिः। यस्यां जातायां तदेकतात्पर्य्यमन्यत्र तुच्छत्वबुद्धिश्च जायते।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ममतातिशयाविर्भावेन समृद्धा प्रीतिः प्रेमा। यस्मिन् जाते तत्-प्रीतिभङ्गहेतवो यदीयमुद्यमं स्वरूपं वा न ग्लपयितुमीशते। ममता-तिशयेन प्रीतिसमृद्धिश्चान्यत्रापि दृश्यते। यथोक्तं मार्कण्डेये— मार्जारभक्षिते दुःखं यादृशं गृहकुक्कुटे। न तादृङ्ममताशून्ये कल-विङ्केऽथ मूषिके इति। अतएव प्रेमलक्षणायां भक्तौ प्रचुरहेतुत्व-ज्ञापनार्थं ममताया एव भक्तित्वनिर्देशः पञ्चरात्रे—अनन्यममता विष्णौ ममता प्रेमसंयुता। भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदै-रिति। अन्यममतावर्जिता ममतेत्यन्वयः। तदुक्तं सत्त्व एवैक-मनस इत्येवकारेण। अथ विस्रम्भातिशयात्मकः प्रेमा प्रणयः। यस्मिन् जाते संभ्रमादियोग्यतायामपि तदभावः। प्रियत्वाति-शयाभिमानेन कौटिल्याभासपूर्वकभाववैचित्रीं दधत्प्रणयो मानः। यस्मिन् जाते श्रीभगवानपि तत्प्रणयकोपात् प्रेममयं भयं भजते। चेतोद्रवातिशयात्मकः प्रेमैव स्नेहः। यस्मिन् जाते तत्सम्ब-न्धाभासेनापि महाबाष्पादिविकारः प्रियदर्शनाद्यतृप्तिस्तस्य परम-सामर्थ्यादौ सत्यपि केषाञ्चिदनिष्टाशङ्का च जायते। स्नेह एवाभिलाषातिशयात्मको रागः। यस्मिन् जाते क्षणिकस्यापि विरहस्यात्यन्तैवासहिष्णुता तत्संयोगे परं दुःखमपि सुखत्वेन भाति तद्वियोगे तद्विपरीतम्। स एव रागोऽनुक्षणं स्वविषयं नवनव-त्वेनानुभावयन् स्वयं च नवनवीभवन्ननुरागः। यस्मिन् जाते पर-स्परवशीभावातिशयः प्रेमवैचित्त्यं तत्सम्बन्धिन्यप्राणिन्यपि जन्म-लालसा विप्रलम्भे विस्फूर्त्तिश्च जायते। अनुराग एवासमोर्द्ध-चमत्कारेणोन्मादको महाभावः। यस्मिन् जाते योगे निमेषा-सहता कल्पक्षणत्वमित्यादिकं वियोगे क्षणकल्पत्वमित्यादिकम्। उभ-यत्र महोद्दीप्ताशेषसात्त्विकविकारादिकं जायते। इति संस्कार-हेतवो गुणा दर्शिताः। अथ भक्ताभिमानविशेषहेतवो गुणास्तत्-कृताः प्रीतेर्भक्तानाञ्च भेदास्तारतम्यञ्च यथा;-- सैव खलु प्रीतिर्भगवद्-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्वभावविशेषाविर्भावयोगमुपलभ्य कञ्चिदनुग्राह्यत्वेनाभिमानयति कञ्चिदनुकम्प्यत्वेन कञ्चिन्मित्रत्वेन कञ्चित् प्रियात्वेन च। भगवत्स्वभावविशेषाविर्भावहेतुश्च यस्य भगवत्प्रियविशेषस्य सङ्गादिना लब्धा प्रीतिस्तस्य प्रीतेरेव गुणविशेषो बोद्धव्यः। नित्यपरिकराणां नित्यमेव तद्द्वयम्। तत्रानुग्राह्यताभिमानमयी प्रीतिर्भक्तिशब्देन प्रसिद्धा। आराध्यत्वेन ज्ञानं भक्तिरिति हि तदनुगतम्। यथैवोक्तं मायावैभवे—स्नेहानुबन्धो यस्तस्मिन् बहुमानपुरःसरः। भक्तिरित्युच्यते सैव कारणं परमेष्ठितुरिति। स्नेहोऽत्र प्रीतिमात्रम्। एवं पाद्मे—महत्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाभिधीयत इति। तथापि भक्तेर्भगवति प्रीतिसामान्यपर्य्यायता मुनिभिर्भक्त्या प्रयुज्यत इति पूर्वमुक्तम्। क्वचिद्विशेषवाचका अपि सामान्ये प्रयुज्यन्ते। जीवसामान्ये नृप्रभृतिशब्दवत्। क्वचिद्भक्त्यतिशयलक्षणप्रेमण्यपि भक्तिशब्दप्रयोगो ब्राह्मणगोष्ठीषु ब्राह्मण्यातिशयवति अयं ब्राह्मण इतिवत्। यथोक्तं पञ्चरात्रे—माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः। स्नेहो भक्तिरिति प्रोक्तस्तया साष्ट्र्यादि नान्यथेति। मनोगतिममताधीनात्तु तत्सम्बन्धेनैव क्वचिद्भक्तिशब्दवाच्यतोक्ता। तदनुग्राह्यताभिमानमयी प्रीतिरेव भक्तिशब्दस्य मुख्योऽर्थः। ते चानुग्राह्याभिमानिनो द्विविधाः। पोषणमनुकम्पा चेत्यनुग्रहस्य द्वैविध्यात्। पोषणमत्र भगवता स्वरूपद्वारा स्वगुणद्वारा चानन्दनम्। अनुकम्पा च पूर्वेऽपि तस्मिन् निजसेवाद्यभिलाषं सम्पाद्य सेवकादिषु सेवादिसौभाग्यसम्पादिका भगवतश्चित्तार्द्रतामयी तदुपकारेच्छा। तेषु द्विविधेषु केषुचिद्भगवति निर्म्ममाः केषुचित् सममाश्च। तत्र भगवति परमात्मपरब्रह्मभावेनानन्दनीयाभिमानिनो निर्म्ममा ज्ञानिभक्ताः श्रीसनकादयः। तेषां तदभिमानित्वेऽपि तत्र निर्ममत्वम्। सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्। सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्ग इतिवत्। तत्र चन्द्रदर्शनवन्ममतां विनापि तेषां भगवद्दर्शनं प्रीतिदं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्यात्। आनुकूल्यं चात्र तत्प्रवणत्वतत्स्तुत्यादिना ज्ञेयम्। एषां प्रीतिश्च ज्ञानभक्ताख्या। ज्ञानत्वं ब्रह्मघनत्वेनैवानुभवात्। एषैव शान्त्याख्ययोच्यते। शमप्रधानत्वात्। शमो मन्निष्ठता बुद्धेरिति भगवद्वाक्यात्। अथानुकम्प्याः सममा भक्ताः। एषां हि अस्माकं प्रभुरयमिति भावेन ममतोद्भूता। एतदभिप्रेत्यैवानन्यममतेत्यादिवक्तृत्वं केवलभक्तानां श्रीभीष्मोद्धवप्रह्लादनारदादीनामिवोक्तं न तु सनकादीनामपि। अतो ममतोद्भवादेवानुकम्प्यास्तदभिमानिनश्च ते। अनुकम्प्यत्वं त्रिविधं पाल्यत्वं भृत्यत्वं लाल्यत्वञ्च। तत्त्रैविध्येन क्रमात्ते श्रीभगवति पालक इतिभावा द्वारकाप्रजादयः, सेव्य इतिभावाः श्रीदारुकादिसेवकाः, गुरुरितिभावाः श्रीप्रद्युम्नगदप्रभृतिपुत्रानुजादयः इति। एषां त्रिविधानामपि प्रीतिर्भक्तिरेव। पूर्वापेक्षया चैषां प्रीतेरानुकूल्यात्मताधिक्यादावृतज्ञानांशत्वेनास्यामेव श्रीरसामृतसिन्धौ प्रीतिरित्येवाख्या कृता। सा च भक्तिः क्रमेण पाल्यानामाश्रयात्मिका, भृत्यानां दास्यात्मिका, लाल्यानां प्रश्रयात्मिका ज्ञेया। या तु महद्बुद्ध्या चित्तादरलक्षणभक्तिर्नमस्कारादिकार्य्यव्यङ्ग्या सा खलु प्रीतिर्न भवतीति नात्र गण्यते। तत्तद्भावं विनैव केवलादरमयी प्रीतिश्चेद्भक्तिसामान्यत्वेन ज्ञेया। अथ पुत्रोऽयमित्यादिभावेनानुकम्पित्वाभिमानमयी प्रीतिर्वात्सल्यम्। वत्सवत्तो लातीति निरुक्तिर्हि तत्रैव झटिति प्रतीतिं गमयति। प्रीतिमात्रे तु तदुपलक्षणत्वेनैव प्रयोगः। लौकिकरसज्ञाश्च केचिदत्रैव वत्सलाख्यं रसं मन्यन्ते। तथोदाहृतं श्रीदेवहूत्याः पुत्रवियोगे—वत्से गौरिव वत्सलेति। तस्माद्वात्सल्यं श्रीव्रजेश्वरादीनाम्। अथ मत्सममधुरशीलवानयं निरुपाधिसत्प्रणयाश्रयविशेष इति भावेन मित्रत्वाभिमानमयी प्रीतिः मैत्र्याख्या द्विविधा ; परस्परनिरुपाधिकोपकाररसिकतामयी सौहृदाख्या, सहविहारशालिप्रणयमयी सख्याख्या चेति। ततो मित्राणि च द्विविधानि ; सुहृदः सखायश्चेति। तत्र सौहृदं श्रीयुधि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीभीमद्रौपद्यादिष्वंशेन दृश्यते। सख्यं श्रीमदर्जुनश्रीदामादिषु। अथ कान्तोऽयमिति प्रीतिः कान्तभावः। एष एव प्रियताशब्देन श्रीरसामृतसिन्धौ परिभाषितः। प्रियाया भावः प्रियतेति। लौकिकरसिकैरत्रैव रतिसंज्ञा स्वीक्रियते। एष एव कामतुल्यत्वात् श्रीगोपिकासु कामादिशब्देनाप्यभिहितः। स्मराख्यकामविशेषस्त्वन्यः, वैलक्षण्यात्। कामसामान्यं खलु स्पृहासामान्यात्मकम्। प्रीतिसामान्यन्तु विषयानुकूल्यात्मकस्तदनुगतविषयस्पृहादिमयो ज्ञानविशेष इति लक्षितम्। ततो द्वयोः समानप्रायचेष्टत्वेऽपि कामसामान्यस्य चेष्टा स्वीयानुकूल्यतात्पर्य्या। तत्र कुत्रचिद्विषयानुकूल्यञ्च स्वसुखकार्य्यभूतमेवेति तत्र गौणवृत्तिरेव प्रीतिशब्दः। शुद्धप्रीतिमात्रस्य चेष्टा तु प्रियानुकूल्यतात्पर्य्यैव। तत्र तदनुगतमेव चात्मसुखमिति मुख्यवृत्तिरेव प्रीतिशब्दः। अतएव यथापूर्वं सुखप्रीतिसामान्ययोरुल्लासात्मकतया साम्येऽप्यानुकूल्यांशेन प्रीतिसामान्यस्य वैशिष्ट्यं दर्शितम्। तथा कामप्रीतिसामान्ययोरपि स्पृहात्मकतया साम्येऽपि तदंशेनैव तज्ज्ञेयम्। तदेवं स्मराख्यकामविशेषकान्तभावाख्यप्रीतिविशेषयोः स्पृहाविशेषात्मकतया साम्येऽपि तेनैव वैशिष्ट्यं सिद्धम्। अत्र तु यत्ते सुजातचरणाम्बुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्क्कशेषु इत्यादिभिरतिक्रम्यापि स्वानुकूल्यं प्रियानुकूल्यतात्पर्य्यस्यैव दर्शितत्वात् शुद्धप्रीतिविशेषरूपत्वमेव लभ्यते। अतस्तद्विशेषत्वञ्च स्पृहाविशेषात्मकत्वात् सिद्धम्। ततोऽत्र श्रीकृष्णविषयत्वेन कुब्जादिसम्बन्धिकामवदप्राकृतकामत्वस्याप्यनभ्युपगमे सति प्राकृतकामत्वं तु सुतरामसिद्धम्। तथा दर्शितञ्च—विक्रीडितं व्रजवधूभिरिदञ्च विष्णोः श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद्यः। भक्तिं परां भगवति प्रतिलभ्य कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीर इत्यनेन। यद्विक्रीडितं खलु निजश्रवणद्वाराप्यन्येषां दूरदेशकालस्थितानामपि शीघ्रमेव यं काममपनयत् परमं प्रेमाणं वितनोति, तत् पुनस्तत्-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

काममयं न स्यात्, अपि तु परमप्रेमविशेषमयमेव। न हि पङ्केन पङ्कं चाल्यते। न तु वा स्वयमस्निग्धः स्नेहयति। अतएव तस्य भावस्य शुद्धप्रेममयत्वं निगदेनैवोक्ता शुद्धत्वे हेतुतया पुनस्तेन भगवत्प्रसादश्च दर्शितः—भगवानाह ता वीक्ष्य शुद्धभावप्रसादितः इति। तस्यात्मारामशिरोमणेस्तेन रमणञ्च दर्शितम्—कृत्वा तावन्तमात्मानमित्यादिभिः। वशीकृतत्वञ्च स्वयं दर्शितम्—न पारयेऽहं निरवद्यसंयुजामित्यादिना। तत्र निरवद्येति प्रीतेः शुद्धत्वम्। स्वसाधुकृत्यमिति परमोत्कृष्टत्वम्। न पारय इति स्ववशीकारित्वमिति। अतः शुद्धप्रेमजातिषु तस्य परमत्वादेव श्रीमदुद्धवेनाप्येवमुक्तम्—वाञ्छन्ति यद्भवभियो मुनयो वयञ्चेति। तस्मात् सर्वतः परमैव कान्तभावरूपा प्रीतिरिति स्थितम्। तदेवं ज्ञानभक्तिर्भक्तिर्वात्सल्यं मैत्री कान्तभाव इति तद्भावाभिमानयोर्भेदेन पञ्चविधा प्रीतिः। एताश्च ज्ञानभक्त्यादयः क्वचिन्मिश्रतयापि वर्त्तन्ते। तत्र श्रीभीष्मादौ ज्ञानभक्त्याश्रयभक्ती। श्रीयुधिष्ठिरे सौहृद्यान्तर्भूते आश्रयभक्तिवात्सल्ये। श्रीभीमस्य सख्यमपि। श्रीकुन्त्यामाश्रयभक्त्यन्तर्भूतं वात्सल्यम्। श्रीवसुदेवदेवक्योर्भक्तिसामान्यवात्सल्ये। तथा तथा दर्शनात्। श्रीमदुद्धवस्य दास्यान्तर्भूतं सख्यम्। त्वं मे भृत्यः सुहृत् सखेति श्रीभगवदुक्तेः। श्रीबलदेवस्य सख्यवात्सल्यभक्तयः। तत्र वात्सल्यसख्ये, क्वचित् क्रीड़ापरिश्रान्तं गोपोत्सङ्गोपबर्हणम्। स्वयं विश्रामयत्यार्य्यं पादसंवाहनादिभिः। नृत्यतो गायतः क्वापि वल्गतो युध्यतो मिथः। गृहीतहस्तौ गोपालान् हसन्तौ प्रशशंसतुरित्यादिषु। भक्तिश्च, प्रायो मायास्तु मे भर्तुरित्यादितदुक्तिषु। अत्र च तस्य व्रजे सख्यान्तर्भूते वात्सल्यभक्ती ज्ञेये। बाल्यमारभ्य सहविहारातिशयात्। यदुपुर्य्याञ्च भक्त्यन्तर्भूते वात्सल्यसख्ये। ऐश्वर्य्यप्रकाशमयलीलाविष्कारात्। व्रजे तस्याग्रजत्वञ्च श्रीवसुदेवनन्दयोर्भ्रातृत्वप्रसिद्धेः श्रीमन्नन्देन पुत्रतया पालनाच्च। यथोक्तम्—भ्रात मम सुतः कच्चिन्मात्रा सह भवद्व्रजे। तातं भवन्तं मन्वानौ

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भवद्भामुपलालित इति । वदन्ति तावका ह्येते कुमारस्तेऽजोऽप्यय-मिति च । एवं श्रीपट्टमहिषीषु दास्यमिश्रः कान्तभावः । श्रीमद्-व्रजदेवीषु सख्यमिश्र इत्यादिकं ज्ञेयम् । अथ तत्तद्भावाभिमानो विना तु या प्रीतिः सा सामान्या तादृशत्वायोग्यानां भवति । यथा मिथिला-प्रयाणे, आनर्त्तधन्वकुरुजाङ्गलकङ्कमत्स्याः पञ्चालकुन्तिमधुकैकय-कोशलार्णाः । अन्ये च तन्मुखसरोजमुदारहासस्निग्धेक्षणं नृप पपु-र्दृग्भिर्नृनार्य्य इत्यत्र केषाञ्चित् । एते च निर्ममा ज्ञेयाः । किञ्च तैर्वेतेषु भगवत्प्रियेषु सामान्यभ्रान्तौ तटस्थाख्यौ । अनयोः प्रीतिश्च तटस्थाख्या । ताभ्यामन्ये परिकराः । तेषां प्रीतिश्च ममताप्राचुर्य्या-न्ममताख्या । तेषु तु पालयस्त्वौ अनुगतौ । तयोर्भक्तिश्च संभ्रम-प्रीत्याख्या । लालयादयस्तु बान्धवाः । तेषां प्रीतिश्च बान्धवताख्या ज्ञेया । तैरेतैः प्रीतिभेदैः प्रियभेदान् प्रति स्वस्य भजनीयताभेदा उक्ताः—येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टमिति । प्रियः कान्तः । आत्मा परमात्मा । सुतः पुत्रभ्रातृजादिरूपः अनुज-रूपश्च । सखा प्रणयपूर्वकं सह खेलति यः । गुरुः पित्रादिरूपः । सुहृदो द्विविधाः ; सम्बन्धिनो निरुपाधिहितकारिणश्च । तत्र पूर्वेषां प्रियत्वादौ प्रवेशादुत्तरे गृह्यन्ते । दैवमिष्टमाश्रयणीयः सेव्यश्चेत्यर्थः । एतान् भवांश्च विना सामान्यप्रीतिविषय इति भावः । अथ पूर्वोक्ता रत्यादिभावा उदाह्रियन्ते । तत्र रतिमाह—तत्रान्वहं कृष्णकथाः प्रगा-यतामनुग्रहेणाशृणवं मनोहराः । ताः श्रद्धया मेऽनुपदं विशृण्वतः प्रियश्रवस्यङ्ग ममाभवद्रतिः ॥ तस्मिंस्तदा लब्धरुचेर्महामतेः प्रिय-श्रवस्य स्खलिता मति र्मम । ययाहमेतत् सदसत् स्वमायया पश्ये मयि ब्रह्मणि कल्पितं परे ॥ ८४ ॥

मयि शुद्धे जीवे व्यष्टिरूपं परे ब्रह्मणि च समष्टिरूपमध्यारोपि-तम् ॥ १ ॥ ५ ॥ श्रीनारदः श्रीव्यासम् ॥ ८४ ॥

प्रेमाणमाह—उपलब्धं पतिप्रेम पातिव्रत्यञ्च तेऽनघे । यद्वाक्यै-श्चाल्यमानाया न धीर्मय्यपकर्षिता ॥ ८५ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यत् यस्मात् धीर्मदीयज्ञानं मयि नापकर्षिता ममौदासीन्यवाक्येनायं मय्युदासीन इत्याशङ्क्य ततः किञ्चिदपि न्यूनत्वं त्वया न प्रापिता। किन्तु यथा सदा वर्त्तते तथैवावर्त्ततेत्यर्थः ॥ १० ॥ ६० ॥ श्रीभगवान् रुक्मिणीदेवीम् ॥ ८५ ॥

प्रणयमाह—उवाह कृष्णो भगवान् श्रीदामानं पराजित इति ॥ ८६ ॥

स्पष्टम् ॥ १० ॥ १८ ॥ श्रीशुकः ॥ ८६ ॥

मानमाह—एका भ्रुकुटिमाबध्य प्रेमसंरम्भविह्वलेति ॥ ८७॥

स्पष्टम् ॥ १० ॥ ३२ ॥ श्रीशुकः ॥ ८७ ॥

स्नेहमाह—सत्सङ्गान्मुक्तदुःसङ्गो हातुं नोत्सहते बुधः। कीर्त्यमानं यशो यस्य सकृदाकर्ण्य रोचनम् ॥ तस्मिन्न्यस्तधियः पार्थाः सहेरन् विरहं कथम्। दर्शनस्पर्शनालापशयनासनभोजनैः ॥ सर्वे तेऽनिमिषैरक्षैस्तमनुद्रुतचेतसः। वीक्षन्तः स्नेहसम्बद्धा विचेलुस्तत्र तत्र ह ॥ न्यरुन्धन्नुद्गलद्बाष्पमौत्कण्ठ्याद्देवकीसुते। निर्य्यात्यगाराबोऽभद्रमिति स्याद्बान्धवस्त्रियः ॥ ८८ ॥

विचेलुः अर्हणाद्यानयनार्थमितस्ततश्चलन्ति स्म। अभद्रं यात्रासमये दुःशकुनं माभूदिति न्यरुन्धन् आच्छादितवत्यः ॥ १ ॥ १० ॥ श्रीसूतः ॥ ८८ ॥

रागमाह—विपदः सन्तु ताः शश्वत्तत्र तत्र जगद्गुरो। भवतो दर्शनं यत् स्यादपुनर्भवदर्शनम् ॥ ८९ ॥

दर्शनमवलोकनम्। यत् यासु। अपुनर्भवम् अन्यत्र कुत्रापि तादृशमाधुर्य्याभावात् पुनर्न जातं दर्शनं साम्यप्रतीतिर्यस्य तत्। अपूर्वमित्यर्थः ॥ १ ॥ ८ ॥ श्रीकुन्ती श्रीभगवन्तम् ॥ ८९ ॥

अनुरागमाह—यद्यप्यसौ पार्श्वगतो रहो गतस्तथापि तस्याङ्घ्रियुगं नवं नवम्। पदे पदे का विरमेत तत्पदाच्चलापि यं श्रीर्न जहाति कर्हिचित् ॥ ९० ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

असौ श्रीकृष्णः। तासां श्रीमहिषीणां पार्श्वगतः समीपस्थः। तत्रापि रहो गतः एकान्ते वर्त्तते। पदे पदे प्रतिक्षणम्। तच्च तासां स्वाभाविकानुरागवतीनां नाश्चर्य्यम्। यतः का वा अन्यापि तत्-पदाद्विरमेत तत्पदास्वादेन तृप्ता भवेत्। तत्र कैमुत्येनोदाहरणं चला-पीति जगति चञ्चलस्वभावत्वेन दृष्टापि। अत्रोदाहरणपोषार्थं प्राकृताप्राकृतश्रियोरभेदविवक्षा ॥ १ ॥ ६१ ॥ श्रीसूतः ॥९०॥

महाभावमाह—गोपीनां परमानन्द आसीद्गोविन्ददर्शने। क्षणं युगशतमिव यासां येन विनाभवत् ॥ ९१ ॥

स्पष्टम् ॥ १० ॥ १९ ॥ श्रीशुकः ॥९१॥

एषा प्रीतिजातीरतिमात्रात्मा ज्ञानिभक्तेषु परमानन्दघनमात्र-तयानुभवसुखस्य ममत्वाभावेनातिशयकारणत्वायोगात्। एवं सामान्ये-ष्वपि। कामं भवः स्ववृजिनैर्निरयेषु नस्तादित्यादौ तु सनकादीनां तादृशरागप्रार्थनैव न तु साक्षादेव राग इति समाधेयम्। अथ पाल्येषु प्रेमपर्य्यन्तैव, ममतायाः स्पष्टत्वात्, न तु स्नेहादिपर्य्यन्ता। विदूरसम्बन्धेन तस्या अनौचित्यात्। यत्तु यर्ह्यम्बुजाक्षापससार भो भवानित्यादौ तत्राब्दकोटिप्रतिमः क्षणो भवेदिति द्वारकाप्रजावाक्ये तदतिशयः प्रतीयते, तत् खलु तत्रैव केषाञ्चित् नापितमालाकारा-दीनां साक्षात्तत्सेवाभाग्यवतां भावविशेषधारिणामुक्तित्वेन सङ्ग-तम्। अथ श्रीमद्भृत्येषु रागपर्य्यन्तापि संभाव्यते। तेषां ममता-धिक्येन सन्ततत्सेवालम्पटत्वेन तदेकजीवनत्वात्। लाल्येषु साक्षाच्छ्रीविग्रहसम्बन्धेन ततोऽपि ममताविशेषोर्जितत्वात् रागाति-शयो मन्तव्यः। तेभ्यः सखिभ्योऽपि ममताधिक्यात्। वत्सल-मुख्ययोः पित्रोः सर्वतस्तदतिशयः। अन्यत्रापि प्रायः। विपदः सन्तु ताः शश्वदित्यादिश्रीकुन्तीवाक्यात्। सखिषु प्रणयोत्कर्षांशेन तु तदाधिक्यमस्ति। सुहृत्सु नातिसन्निकर्षात् प्रेमातिशय एव। प्रणयमानौ तु सखिप्रेयस्योरेव सम्भवतः। अथ श्रीप्रेयसीषु श्रीमत्-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पट्टमहिषीणां महाभावतोऽनुसुखानुरागपर्य्यन्तैव। यद्विवर्त्तविशेषः प्रेमवैचित्त्याख्यो विप्रलम्भशृङ्गारस्तासाम् ऊचुर्मुकुन्दैकधिय इत्यादिना इतोऽष्टमेन भाविनेत्यन्तेन वर्णितः। ततोऽधिकं न च श्रूयते। ताभ्योऽन्यत्र त्वनुरागोऽपि न श्रूयते। ननु सतामयं सारभृतां निसर्ग इत्यादौ अन्यत्राप्यनुरागो वर्ण्यते प्रतिक्षणं नव्यत्वस्फुरणात्। नैवम्। अनुरागस्य न तादृशस्फुरणमात्रलक्षणत्वं किन्तूल्लासादिदुःखसुखलाभानपर्य्यन्तरत्यादिगुणलक्षणत्वमपि। अत्र तु सर्वत्र तत्तल्लक्षणोदयासम्भावनयानुरागो निर्णीयते इति। तथा नव्यवदेवेत्युक्तं न च नव्यमिति। श्रीव्रजदेवीनान्तु महाभावपर्य्यन्ता। तास्ताः क्षपाः प्रेष्ठतमेन नीता मयैव वृन्दावनगोचरेण। क्षणार्द्धवत्ताः पुनरङ्ग तासां हीना मया कल्पसमा बभूवुरित्यादिप्रसिद्धेः। निमेषासहत्वं तासामेव, कुटिलकुन्तलं श्रीमुखञ्च ते जड़ उदीक्षतां पक्ष्मकृद्दृशामिति। यस्याननमित्यादिकस्य नार्य्यो नराश्च मुदिताः कुपिता निमेश्चेत्यत्र सामान्यतो नरा नार्य्यश्च तावन्मुदिता बभूवुः। चकारात्तत्रैव काश्चिद्गोप्यो निमेर्नियमे निमेषकर्त्रे कुपिता बभूवुरित्यर्थः। अन्यत्र तदश्रवणादेव। अन्यथा कुरुक्षेत्रयात्रायां, गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्ति। दृग्भिर्हृदीकृतमलं परिरभ्य सर्वास्तद्भावमापुरपि नित्ययुजां दुरापमित्यत्र यत्प्रेक्षण इत्यादौ वैशिष्ट्यानापत्तिश्च स्यात्। यद्यपि श्रीकृष्णस्य तादृशभावजनकत्वं स्वभाव एव तथाप्याधारगुणमपेक्षते। स्वात्यम्बुनो मुक्तादिजनकत्वमिव। अत्र च तद्भावमापुरिति श्रीकृष्णविषयकमहाभावविशेषाभिव्यक्तिं दधुरित्यर्थः। अतएव नित्ययुजां दुरापमित्युक्तम्। नित्ययुक्शब्देनाप्यत्र तत्सलक्षणाः पट्टमहिष्य एव लभ्यन्ते। न तद्विलक्षणा अन्ये। दूरप्रतीतत्वात्। ततश्च नित्ययुजाम् एता विरहिण्यो वयन्तु प्रियसंयोगं दिनन्दिनमेव प्राप्नुम इति प्रेष्ठम्मन्यानामपीत्यर्थः। अतएव श्रुत्वा पृथा सुबलपुत्त्र्यथ याज्ञसेनी माधव्यथ क्षितिपपत्न्य उत

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्तगोप्यः । कृष्णेऽखिलात्मनि हरौ प्रणयानुबन्धं सर्वा विसिस्युरल-मप्युकलाकुलाध्व इत्यत्र क्वचिदन्यत्रादृष्टचरेण व्रजस्त्रियो यद्वाञ्छन्ति इत्यादि तदीयपूर्वोक्तरीत्या स्वीयभावतुल्यतास्पर्शिना प्रणयानुबन्धेन विस्मितानामपि श्रीगोपीनां विशेषणत्वेन स्तशब्दः पठितः परमान्त-रङ्गताविरोधिस्मया । तथा अहो अलं श्लाघ्यतमं यदोः कुलमित्यादि-पद्यत्रयात्मके प्रथमस्कन्धसम्बन्धिनि पुरस्त्रीवाक्येऽपि । तेषु प्रथमद्वयं सर्वस्य मथुराव्रजद्वारकावासिनो जनस्य भाग्यमहिमाप्रतिपादकम् । हतीयं खलु, नूनं व्रतस्नानहुतादिनेश्वरः समर्चितो ह्यस्य गृहीत-पाणिभिः । पिबन्ति याः सख्यधरामृतं मुहुर्व्रजस्त्रियः संमुमुहुर्यदा-शया इत्येतत् । अत्र पट्टमहिषीणां भाग्यश्लाघायामपि श्रीव्रजदेवीना-मेव हि परमोत्कृष्टत्वमास्वादाभिज्ञतरत्वञ्चायातम् । यस्यामृतस्य माधुर्य्यस्मरणे देवा अपि मुह्यन्ति तन्मनुष्येनाप्यनेनास्वाद्यत इतिवत् । तस्मात्तासामेव सर्वोत्तमभावना । अयमत्र सन्दर्भः । श्रीभगवतः स्वभावस्तावदुभयविधः ; ब्रह्मत्वलक्षणो भगवत्वलक्षणश्चेति । भक्ताश्च सामान्यतो द्विविधाः उक्ताः ; तटस्थाः परिकराश्चेति । तत्रैके तटस्थाः ब्रह्मतापुरस्कारेण तत्स्वभावेन प्रीयमानाः शान्ताख्याः । अन्ये च तटस्थाः परिकरवद्भगवत्ताविशेषेणापि प्रीयमाणाः परिकरत्वाभि-मानमप्राप्ताः । ततः स्फुटमेवैते परिकरात् प्रीतिविहीनाः । अथाद्या अपि प्रीतिकारणस्य प्रीतिकार्य्यस्य च निर्हीनत्वात् परिकरात् प्रीति-निर्हीनाः । कारणं चात्र साहाय्यम् । सहायो द्विविधः ; ममता-लक्षणोऽर्थस्तदङ्गं ब्रह्मत्वानुभवादयस्तदुपाङ्गानीति । अत्र तेषां ममत्वं नास्तीति दर्शितमेव । तच्च युक्तं सम्बन्धविशेषास्फुरणात् । ततो-ऽङ्गनिर्हीनत्वम् । उपाङ्गेषु च तेषां ब्रह्मत्वज्ञानमेव मुख्यम् । तदनु-शीलनस्वाभाव्यात् । भगवत्ताज्ञानन्तु तदनुगतम् । तस्या एव तादृशभावेन तेषामाकर्षणात् । यदुक्तम्—आत्मारामाश्चेत्यादौ इत्थ-भूतगुणो हरिरिति । वस्तुतस्तु प्रीतिसाहाय्ये भगवत्ताया एव मुख्यत्वं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तैरनुभूतम्। तस्यारविन्दनयनस्येत्यादौ चकार तेषां संक्षोभमक्षर-जुषामपि चित्ततन्वोरिति। तथापि तादृशस्वभावत्वापरित्यागादुपाङ्ग-निर्हीनत्वम्। अथ प्रीतिकार्य्यमपि तेषां निर्हीनम्। यतः प्रायशो भगवत्स्मरणमेव तत्कार्य्यं तद्दर्शनन्तु कादाचित्कमेव। परिकराणां पुनः साक्षात्तदङ्गसेवादिकमपि सन्ततमेव। अतएव तेषामेव सौभा-ग्यातिशयवर्णनम्। श्रीजयविजयशापप्रस्तावे तस्मिन् ययौ परम-हंसमहामुनीनामन्वेषणीयचरणौ चलयन् सहश्रीरित्युक्त्वा तं त्वागतं प्रतिहृतौपयिकं स्वपुंभिस्तेऽचक्षताक्षविषयं स्वसमाधिभाग्य-मिति। तथा विनतासुतांशे विन्यस्तहस्तमिति। तथा तदा जयः विजययोरेव भगवत आत्मीयत्वं स्पष्टमस्ति। मुनिषु तु गौरवम्। तत्र श्रीब्रह्मवाक्ये—एवं तदैव भगवानरविन्दनाभः स्वानां विबुध्य सदतिक्रममार्य्यहृद्य इति। श्रीवैकुण्ठनाथवाक्ये च—तद्वः प्रसा-दयाम्यद्य ब्रह्म देवं परं हि मे। तद्धि ह्यात्मकृतं मन्ये यत् स्वपुंभि-रसत्कृतम् इति। तच्च परिकराणां सौभाग्यं स्वयमपि दृष्ट्वा ते मुनयश्च तयोः स्वकृतशापादलज्जन्त। यं वानयोर्दममधीश भवान् विधत्ते वृत्तिं तु वा तदनुमन्महि निर्व्यलीकम्। अस्मासु वा य उचितो ध्रियतां स दण्डो येऽनागसौ वयमयुङ्क्ष्महि किल्बिषेणेति। तथा तयोस्तस्यात्मीय-त्वेनैव सह कारुण्यमपि मुनिषु निर्गतेषु व्यक्तमस्ति। भगवाननु-गावाह यातं मा भैष्टमस्तु शम्। ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छे मतं तु मे इति। तस्मात् कार्य्यनिर्हीनत्वमपि। तेभ्यश्च सर्वनिर्हीन-त्वेभ्यस्तटस्थानतिक्रम्य परिकराणां प्रीत्युत्कर्षौ दर्शितः। ननु निरु-पाधिप्रेमास्पदस्य प्रीतौ परिकरत्वाभिमान उपाधिः स्यात्। ततो ज्ञानात्मिकां सामान्याञ्च प्रीतिमपेक्ष्य तदभिमानिप्रीतयो गौण एव स्युः। किञ्च ममतायाः प्रति हेतुत्वे ज्ञाते च यस्यात्मनः सम्बन्धात् प्रीतिर्भवेत् तस्मिन्नेव तदाधिक्यं स्यात्। नैवम्। श्रीभगवतो यैव स्वभावेनैवानुभूते नाभिमानविशेषं विनापि तेषां प्रीतिरुदयते, तेनापि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

परिकराणामुदयते । तथा निजस्वभावसिद्धो वा तात्कालिको वा योऽभिमानविशेषस्तेनाप्युदयते । समुच्चये को विरोधः । प्रत्युतोल्लास एव । तत्र भगवत्स्वभावमयत्वं भक्ततात्कालिकाभिमानविशेषत्वञ्चाह—गोगोपीनां मातृतास्मिन्नासीत् स्नेहर्द्धिकां विना । पुरोवदिति ॥ ८२ ॥

स्पष्टम् ॥ १० ॥ १४ ॥ श्रीशुकः ॥ ८२ ॥

उभयस्वभावमयत्वमाह—यथा भ्राम्यत्ययो ब्रह्मन् स्वयमाकर्षसन्निधौ । तथा मे भिद्यते चेतश्चक्रपाणेर्यदृच्छया ॥ ८३ ॥

स्पष्टम् ॥ ७ ॥ ६ ॥ श्रीप्रह्लादः ॥ ८३ ॥

किञ्च भक्ताभिमानविशेषमयश्च प्रेमा भगवत्स्वभावाविर्भूत एवेति ब्रूमः । भगवति हि स्वरूपसिद्धाः सर्वे प्रकाशा नित्यमेव वर्त्तन्त इति श्रीभगवत्सन्दर्भादौ दर्शितमस्ति । आगमादावपि नानोपासनाः श्रूयन्ते । तत्र यथा यत्र प्रकाशस्तथा तत्राभिमानविशेषमयी प्रीतिरुदयते । प्रकाशवैशिष्ट्यहेतुश्च भक्तविशेषसङ्ग एव । नित्यसिद्धेषु तु नित्यसिद्ध एव तथा प्रकाशः प्रीतिरभिमानश्च । अथ प्रीत्यैव सहोदयात् तादृशोऽभिमानोऽपि प्रीतिवृत्तिविशेष इत्युक्तम् । तस्मादपि न तत्समवायेन प्रीतिहानिः प्रत्युतात्यन्तसन्निकर्षव्यञ्जकेन तत्तदभिमानेन तस्या उल्लास एव । किञ्च लौकिकोऽपि ममताविशेष आत्मनोऽप्याधिक्येन स्वास्पदे प्रीतिं जनयति । पुत्राद्यर्थमात्मव्ययादिर्दृश्यते । तथैवोक्तं व्रजेश्वरं प्रति श्रीभगवतैव—पित्रोरप्यधिका प्रीतिरात्मजेष्वात्मनोऽपि हि इति । भगवद्विषया ममता तु स्वात्मगततदीयाभिमानविशेषहेतुकैव । तदभिमानविशेषश्च तत्स्वभावविशेषहेतुक इत्युक्तम् । स च प्रथममाविर्भवति तदनन्तरमेव ममताविशेष आविर्भवतीति । तस्माद् यथा तथा तत्स्वभाव एव तत्प्रीतेर्मूलकारणम् । ब्रह्मन् परोद्भवे कृष्णे इयान् प्रेमा कथं भवेत् । योऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि कथ्यतामिति राजप्रश्नानन्तरं



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीशुकदेवेन च श्रीकृष्णप्रीतौ तत्स्वभावसिद्धत्वमुक्तम्। तत्स्वभावाविर्भावविशेषाविर्भूतममताविशेषेण तु केवलममताहेतुकप्रीतिमतिकृस्य वैशिष्ट्यं चाभिप्रेतम्। तस्मात् सर्वथा ममतासम्बन्धेन प्रीतेर्वैशिष्ट्यमेव भवतीति सिद्धम्। भगवत्सम्बन्धेनात्मन्यपि तेषां प्रीतिर्जायते। तथैवाहुः—सुदुस्तरान्नः स्वान् पाहि कालाग्नेः सुहृदः प्रभो। न शक्नुमस्त्वच्चरणं संत्यक्तुमकुतोभयम्॥ ८४॥

टीका च—न मृत्योर्बिभीमः किन्तु त्वच्चरणवियोगादित्याहुः न शक्नुम इतीत्येषा। न च त्वच्चरणं निजवियोगभयं न दूरीकर्त्तुमर्हतीत्याहुः, अकुतोभयमिति, यद्वा तव चरणसन्निधाने सत्यस्माकं सर्वमेव सुखाय कल्पते अन्यदा तु दुःखायैवेत्याहुः, न विद्यते कुतश्चिद्भयं येनेति॥ १०॥ १॥ श्रीव्रजौकसः श्रीभगवन्तम्॥ ८४॥

तथा तत्प्रीतेरेव तत्तदभिमानित्वमाह, एष वै भगवान् साक्षादित्यादौ, यं मन्यसे मातुलेयं प्रियं मित्रं सुहृत्तमम्। अकरोः सचिवं दूतं सौहृदादथ सारथिम्॥ सर्वात्मनः समदृशो ह्यद्वयस्यानहंकृतेः। तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित्॥ तथाप्येकान्तभक्तेषु पश्य भूपानुकम्पितम्। यन्मेऽसूंस्त्यजतः साक्षात् कृष्णो दर्शनमागतः॥८५॥

सौहृदात् तादृशप्रेम्ण एव हेतोः यं मातुलेयं मन्यसे प्रियं प्रीतिविषयं मित्रं प्रीतिकर्त्तारं सुहृत्तमम् उपकारानपेक्षोपकारकं च मन्यसे, अथ सारथिं सारथिमपीत्यर्थः, स एष साक्षाद्भगवानित्यादिकः पूर्वेणान्वयः। ननु भवतु प्रीतिविशेषाणामस्माकं तस्मिंस्तथा मतिस्तस्य सर्वेषां परमात्मनस्तस्मादेव समदृशः परमात्मत्वादेव सर्वेषां तच्छक्तिवैभवरूपाणामात्मनां तदनन्यत्वादद्वयस्य तस्मादेव मातुलेयोऽहमित्याद्यभिमानशून्यस्य तथा निर्दोषस्य च कथमहमस्य मातुलेयो न त्वमुष्येत्यादिरूपं मातुलेयत्वादिकृतं मतिवैषम्यं स्यादित्यादिपूर्वपक्षोट्टङ्कनपूर्वकं सिद्धान्तयति, सर्वात्मन इत्यादिद्वाभ्याम्। यद्यपि तादृशस्य तन्न संभवति, तथापि हे भूप, एकान्तभक्तेषु युष्मासु

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अनुकम्पां पश्य, येषां भक्तिविशेषेण परवशः सन्नसावपि तथा तथात्मानं वाढ़मेवाभिमन्यत इत्यर्थः । यः खलु शरीरस्यापि सम्बन्ध-हेतुः सोऽभिमान एव हि सम्बन्धहेतुर्मुख्यः, न शरीरम् । स्वति-त्वाविर्भावादिना शरीरसम्बन्धेऽपि तस्य मातुलेयत्वादिकं सुतरा-मेव सिध्यतीति तात्पर्य्यम् । तत्र हेतुगर्भो दृष्टान्तः, वत्से ऽस्नूनिति । यस्मात् युष्मत्सम्बन्धादेव हेतोः । तदेवं परमोपादेयत्वज्ञानादेव तत्सम्बन्धात्मक एव श्रीभगवानुत्क्रान्तावपि मुहुरेव निजात्मसम्बनो-क्तः—विजयसखे रतिरस्तु मेऽनवद्येति पार्थसखे रतिर्ममास्त्विति विजयरथकुटुम्ब इत्यारभ्य भगवति रतिरस्तु मे मुमूर्षोरिति च ॥१॥८॥ भीष्मः श्रीयुधिष्ठिरम् ॥ ८५ ॥

तमेवाभिमानममताभ्यां प्रीतेरतिशयं दर्शयति—राजन् पति-र्गुरुरलं भवतां यदूनां दैवं प्रियः कुलपतिः क्व च किङ्करो वः । अस्त्वेवमङ्ग भजतां भगवान् मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम् ॥ ८६ ॥

यस्मामेव कवय इत्यादिप्राक्तनगद्ये मुक्त्यधिकतया सामान्या प्रीतिलक्षणभक्तिरुक्ता । अत्र तु हे राजन् भवता यदूनामपि पत्यादि-रूपो भगवान्, एवं नाम दूरेऽस्तु श्रीभगवतस्ताद्दृशत्वप्रापकस्य प्रेमविशेषस्यास्य वार्त्ता, सर्वेषामपि दूरे स्थितेत्यर्थः, यतोऽन्येषां नित्यं भजतामपि मुकुन्दोऽसौ मुक्तिमेव ददाति न तु भक्तियोगं पूर्वोक्तमहिमप्रीतिसामान्यमपीति पतित्वादिभावमय्यां परम-वैशिष्ट्यमुक्तम् । अतस्तेष्वेव यत्किञ्चिद्रूपत्वमपि श्रीब्रह्मणा प्रार्थि-तं, तदस्तु मे नाथ स भूरिभाग इत्यादिना ॥५॥६॥ श्रीशुकः ॥८६॥

अथ परिकराणामपि भावेषु तारतम्यं विवेचनीयं, येषां भगवत्तै-वोपजीव्या । तत्र भगवत्ता तावत् सामान्यतो द्विविधैव ; परमैश्वर्य-रूपा परममाधुर्य्यरूपा चेति । ऐश्वर्य्यं प्रभुता । माधुर्य्यं नाम च शील-गुणरूपवयोलीलानां सम्बन्धविशेषाणाञ्च मनोहरत्वम् । परमत्वं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

चासमोर्द्धत्वम्। अथ भक्तादिचतुर्विधाः परिकरा अपि द्विविधाः; परमैश्वर्य्यानुभवप्रधानाः परममाधुर्य्यानुभवप्रधानाश्च। तत्रैश्वर्य्यमात्रस्य साध्वससम्भ्रमगौरवबुद्धिजनकत्वं, माधुर्य्यमात्रस्य प्रीतिजनकत्वमिति सर्व्वानुभवसिद्धमेव। ततस्तत्रैश्वर्य्यमाधुर्य्ययोः परमत्वमिति ताभ्यां यथासंख्यं साध्वसादीनां प्रीतेश्च परमत्वमेव स्यात्। अतएव देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ। कृतसंवन्दनौ पुत्रौ सस्वजाते न शङ्कितौ। पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः। माभूदिति निजां मायां ततान जनमोहिनीम्। उवाच पितरावेत्य साग्रजः सात्वतर्षभः। प्रश्रयावनतः प्रीणन्नम्ब तातेति सादरम्। इत्यावनन्तरम्, इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा। मोहितावङ्कमारोप्य परिष्वज्यापतुर्मुदम्। सिञ्चन्तावश्रुधाराभिः स्नेहपाशेन चावृतौ। न किञ्चिदूचतू राजन् वाष्पकण्ठौ विमोहितौ॥ ८७॥

उपलब्धो ज्ञातो जगदीश्वरत्वलक्षणोऽर्थो याभ्यां तथाभूतौ ज्ञात्वा। माभूदिति समारूढपितृत्वपदवीकत्वेन ज्ञानिभक्तजनकेवलभक्तजनादिदुर्लभपरमप्रेमैकयोग्ययोस्तयोस्तदाच्छादकं तज्ज्ञानं न भवत्विति निजां मायामावरणशक्तिं निजजगदीश्वरत्वाच्छादनाय ततान विस्तारितवान्। तदनन्तरं निजतादृशप्रेमपोषकं माधुर्य्यमेव व्यञ्जितवानित्याह उवाचेत्यादि। अथवा माया दम्भे कृपायाञ्चेति विश्वप्रकाशात् निजां स्वविषयां कृपां तदात्मिकां वात्सल्याख्यां प्रीतिं तयोस्ततान आविर्भावितवान्। किदृशीं, या निजमाधुर्य्येण सर्व्वमेव जनं मोहयति। कथं ततानेत्याशङ्क्य निजैश्वर्य्याच्छादकनिजमाधुर्य्यप्रकाशेनेत्याह उवाचेति। अथवा :माया वयुनं ज्ञानमिति निघण्टुदृष्ट्या निजां तादृशप्रेमजनकत्वेनान्तरङ्गां मायां निजमाधुर्य्यज्ञानं ततान। तत्प्रकारमाह उवाचेति। मायामनुष्यस्य अशेषविद्याप्रचुरस्य नराकृतिपरब्रह्मण इति॥१०॥४५॥ श्रीशुकः॥८७॥

तदेवं पारमैश्वर्य्यस्य भक्तौ यत् क्वचिदुद्दीपनत्वं, तत्तु संभ्रमगौ-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्वादितदवयवस्यैव। तत्राप्यवयविनि प्रीत्यंशे तु माधुर्य्यस्यैवो-द्दीपनत्वम्। उभयसमाहारस्य पुनः परमेश्वरभक्तिजनकत्वमिति विवेक्तव्यम्। तदेवं माधुर्य्यस्यैव प्रीतिजनकत्वे स्थिते तदनुभवश्च श्रीमद्गोकुलस्य स्वभावसिद्धः। आगन्तुकः खल्वैश्वर्य्यानुभवः। तथैव श्रीगोवर्द्धनोद्धारणानन्तरं, एवंविधानि कर्म्माणि गोपाः कृष्णस्य वीक्ष्यते। अतद्वीर्य्यविदः प्रोचुः समभेत्य सुविस्मिता इत्याद्यध्याये, दुस्त्यजश्चानुरागोऽस्मिन् सर्वेषां नो व्रजौकसाम्। नन्द ते तनयेऽ-स्मासु तस्याप्यौत्पत्तिकः कथमिति श्रीगोपगणप्रश्ने, श्रीव्रजेश्वरेण च तदैश्वर्य्यमाप्तवाक्यद्वारेव तेषां समाधानायोक्तं, माधुर्य्यन्तु स्वानुभव-सिद्धत्वेन व्यञ्जितम्। यथाह—श्रूयतां मे वचो गोपा व्येतु शङ्का च वोऽर्भके। एतं कुमारमुद्दिश्य गर्गो मे यदुवाच हेत्यादि। इत्यद्धा मां समादिश्य गर्गे च स्वगृहं गते। मन्ये नारायणस्यांशं कृष्णमक्लिष्ट-कारिणमित्यन्तम् ॥ ९८ ॥

अथ गर्गो मां यदुवाच हेति शब्दद्वारा परोक्षं ज्ञानमुक्तम्। तत्रापि मन्य इति वितर्क एव। अर्भककुमारशब्दप्रयोगस्तु बालभावमय-माधुर्य्ये स्वस्वभावानुभवस्य सूचक इत्यवगम्यते॥ १० ॥ २६ ॥ श्रीव्रजे-श्वरः ॥ ९८ ॥

तथा न चैवं तेषामज्ञानञ्च वक्तव्यम्। माधुर्य्यज्ञानेनैव परम-भगवत्ताज्ञानसद्भावात्। यत एव तेषामन्यत्वानावेशः। यदेव स्वात्मारामाणामपि मोदनम्। न च सर्वापि भगवत्ता सर्वेणोपा-स्यते अनुभूयते वा। अपि तु स्वस्वाधिकारप्राप्तैव। अनन्तत्वादनुप-युक्तत्वाच्च। अतएव वेदान्तेऽपि गुणोपासनावाक्येषु तत्तद्विद्यायां गुणसमाहारः पृथक् पृथगेव सूत्रकारेण व्यवस्थापितः। तथैवो-क्तम्—यस्य यस्य हि यः कामस्तस्य तस्य ह्युपासनम्। तादृशानां गुणानाञ्च समाहारं प्रकल्पयेदिति। तथा मल्लानामशनिरित्यादौ च टीकाचूर्णिका, तत्र च शृङ्गारादिरसकदम्बमूर्त्तिर्भगवांस्तत्तदभिप्राया-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नुसारेण वर्भो न साकल्येन सर्वेषामित्याहेत्येषा। अत्र परमतत्त्वतया जानतामपि न सम्यग्ज्ञानमित्यायातम्। युक्तञ्चेदं तत्तन्माधुर्य्यविशेषानुभवात्। माधुर्य्यानुभविनां भक्तानान्तु यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुरा इत्यादिन्यायेनानादृतमपि सर्वं ज्ञानं समयप्रतीक्षकमेव स्यात्। पूर्वत्रैव पद्ये तेषां परमविद्वत्तामभिप्रैति। यथा—मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्त्तिमान् गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः। मृत्युर्भोजपतेर्विराड़विदुषां तत्त्वं परं योगिनां वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः॥ ८९॥

अत्र खलु पद्ये त्रिविधा जना उक्ताः; प्रतिकूलज्ञाना मूढ़ा विद्वांसश्च। तत्र निरुपाधिपरमप्रेमास्वादस्वभावे तस्मिन् विरोधलिङ्गेन मल्लानां कंसपक्षीयासत्क्षितिभुजां कंसस्य च प्रतिकूलज्ञानत्वं बोध्यते। विराड़विदुषामिति पृथगुपादानेन विराड़्ज्ञानिनामेव मूढ़त्वम्। पारिशेष्यप्रमाणेनान्येषान्तु विद्वत्तैव। तत्र विराट्त्वं नाम विराड़ंशभौतिकदेहत्वं यत्किञ्चिन्नरदारकत्वमित्यर्थः। अतस्तत्र मूढ़ता। ते च भगवद्याज्ञामश्रद्दधानैर्याज्ञिकविप्रैः सदृशाः। केचित् तदंशज्ञातारो न द्वेष्टारो न च प्रीयमाणाः। अत्र तेषां भौतिकत्वस्फूर्त्तौ भक्तानां जुगुप्सा जायत इति वीभत्सरसश्च भगवता पोष्यते। नरवरत्वे तु तन्माधुर्य्यप्रभावयोरंशेनैव नरेषु तस्य श्रेष्ठत्वमनुभूतमिति तदनुभवसद्भावात् साधारणनृणामपि विद्वत्ता। अतएव च सामान्यभक्ताः। यथैव तेषां प्रीतिर्वर्णिता—निरीक्ष्य तावुत्तमपूरुषौ जना मञ्चस्थिता नागरराष्ट्रिका नृप। प्रहर्षवेगोत्कलितेक्षणाननाः इत्यादिना। एतेषां प्रजात्वेऽपि प्रायस्तदानीमजातममत्वात्र पाल्यान्तः प्रवेशः। अत्रैवं तेषामपि विद्वत्तायामन्येषां सुतरामेव सा। तत्रापि किमुत श्रीगोपानाम्। तथाहि तत्र नृणां सामान्यभक्तानां योगिनां तल्लीलादिदृक्षागताकाशादिस्थितचतुःसनप्रभृति-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ज्ञानिभक्तानाञ्च ममत्वसूचकपदविन्यासो न कृतः । तथा तद्वलाबल-वद्युद्धं समेताः सर्वयोषितः । ऊचुः परस्परं राजन् सानुकम्पा वरू-थश इत्यादौ क्व वज्रसारसर्वाङ्गावित्यादितद्वाक्योदाहृतानुकम्पामय-परमप्रीतिविकाराणां नानाभावस्त्रीणां मध्ये स्मरत्वेन विदितकृष्णानां गोप्यस्तपः किमचरन्नित्यादिगिरां स्त्रीविशेषाणां कान्तभावाख्यप्रीते-र्लोकप्रसिद्धस्मरेणापि मिश्रत्वेन श्रीव्रजदेवीवच्छुद्धत्वाभावः । तत्काल-दृष्टत्वेन ममत्वाभावश्चागतश्च । वृष्णिपितृगोपानां तु तत्तच्छब्दैर्ममता-विशेषः सूचितः । तस्मादेतेष्वेव परममाधुर्य्यानुभवेषूत्तमत्वं मतम् । तत्र च गोपानां स्वजनो वृष्णीनां परदेवतेत्यनेन श्रीगोपानां बान्धव-भावापादकमाधुर्य्यज्ञानं स्वाभाविकं वृष्णीनान्तु परदेवताभावापाद-कैश्वर्य्यज्ञानं स्वाभाविकमित्यङ्गीकृतम् । सम्बन्धाद्वृष्णय इति तु तथा गौणस्यापि बन्धुभावस्य तदनुगतौ स्वतः प्राबल्यापेक्षयोक्तम् । किञ्च तेषु यथा कंसादयः प्रतिकूलज्ञाना वृष्ण्यधमाः, तथैवा-विद्वांसः शतधन्वप्रभृतयः सन्ति । तदपेक्षयैव न यं विदन्त्यमी भूपा एकारामाश्च सात्वता इत्यादिकं ज्ञेयम् । अत उत्तमवृष्णितया सामा-न्यतो लब्धमैश्वर्य्यज्ञानमुत्तमस्यैव श्रीवासुदेवदेवक्योः सम्मतम् । ततः तत्संदृष्टत्वेऽपि लीलाविशेषवशादेव पित्रोः शिशुरित्यनेन माधुर्य्यज्ञानं व्यज्यते । अतो गौणत्वादेव, नातिचित्रमिदं विप्रा वसुदेवो बुभुत्-सया । कृष्णं मत्वार्भकं यन्नः पृच्छति श्रेय आत्मन इत्यादौ श्रीनारदेन तन्नानुमोदितम् । राज्ञा तु स्वाभाविकत्वात् श्रीव्रजेश्वर-योस्तदनुमोदितं, नन्दः किमकरोद्ब्रह्मन्नित्यादौ । तयो-रैश्वर्य्यज्ञानस्य स्वाभाविकत्वञ्च जन्मक्षणमारभ्य तादृशस्तुत्यादौ प्रसि-द्धम् । अतएव पितरावुपलब्धार्थौ विदित्वेत्यत्र टीकाकारैरपि तयो-रैश्वर्य्यज्ञानं सिद्धमेव, पुत्रतया प्रेम तु दुर्लभमित्युक्तम् । तथा श्रीगो-पानां स्वजनत्वं सामान्यतो निर्द्दिष्टम् । तच्च कंसादिवन्न व्रजे क्वचिदपि जने व्यभिचरति । आबालवृद्धवनिताः सर्वेऽङ्ग पशुवृत्तय ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

निर्जग्मुर्गोकुलाद्दीना: कृष्णदर्शनलालसा इत्यादिदर्शनात्। तदेवं सति स्वयमेव गोपराजे कदाप्यव्यभिचारित्वात्स्वत्वे वैशिष्ट्यमायातमिति तस्यापि शिशुरिति किं वक्तव्यमिति भाव: ॥ १० ॥ ४६ ॥ श्रीशुक: ॥ ९९ ॥

तदेवं परममाधुर्य्यातिशयानुभवस्वभावत्वेन परमज्ञानित्वमेव श्रीगोपालानामङ्गीकृतम्। अतएव दृष्टचतुर्भुजाद्यनन्ततदाविर्भावेनापि ब्रह्मणा तेषामालम्बनं रूपमेव निजालम्बनीकृतम्—नौमीड्य तेऽभ्रवपुष इत्यादिना। तेषामपि यत्स्वभावत्वेन सकलप्रीतिजातिचूड़ामणिरूपा परा प्रीति: स्वभावत एवोदयते। यत्स्वभावत्वेनैव चागन्तुकादन्यज्ज्ञानात् नासौ प्रीतिर्व्यभिचरति। प्रत्युत तदेव तिरस्करोति। तेनान्तरायप्राये वर्द्धते च। विषयिणां विषयप्रीतिरिव। यतो विषयिणां विषयेषु सदोषत्वे श्रुते दृष्टेऽपि रागप्राप्तगुणवत्त्वबुद्धि: प्रवला दृश्यते। तथैवोक्तं या प्रीतिरविवेकानामिति। अत्र च श्रीसङ्कर्षणं प्रति श्रीमन्नन्दयशोदावचनं—चिरं न: पाहि दाशार्ह सानुजो जगदीश्वर:। इत्यारोप्याङ्कमालिङ्ग्य नेत्रै: सिषिचतुर्जलैरित्यादि। येन वसुदेवपुत्रत्वे क्षत्रियत्वे परमेश्वरत्वे च व्यक्ते श्रीबलदेवस्यापि तत्पुत्रोचितभावो नान्यथा जात:। यथा तत्पूर्वमुक्तम्—बलभद्र: कुरुश्रेष्ठ भगवान्रथमास्थित:। सुहृद्दिदृक्षुरुत्कण्ठ: प्रययौ नन्दगोकुलम्। परिष्वक्तश्चिरोत्कण्ठै गोपैर्गोपीभिरेव च। रामोऽभिवाद्य पितरावाशीर्भिरभिनन्दित इति। परमैश्वर्य्यादिज्ञानस्वभावानामपि प्रीतिप्राबल्यसमये तत्तिरस्कारो दृश्यते। यथा श्रीदेवहूत्या:—वनं प्रव्रजिते पत्यावपत्यविरहातुरा। ज्ञाततत्त्वाप्यभून्नष्टे वत्से गौरिव वत्सलेति। श्रीदेवकीदेव्या:—समुद्विजे भवद्धेतो: कंसादहमधीरधीरिति। श्रीयुधिष्ठिरस्य—अजातशत्रु: पृतनां गोपीथाय मधुद्विष:। परेभ्य: शङ्कित: स्नेहात् प्रायुङ्क्त चतुरङ्गिनीमिति। इदञ्च तस्य प्रशंसार्थमेवोक्तम्—अथ दूरागतान् शौरि: कौरवान् विरहातुरान्। संनिवर्त्त्य दृढ़स्निग्धान्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रायात् स्वनगरीं प्रियैरित्युक्तवाक्येऽपि तादृगभिप्रायात्। तथा श्रीसङ्कर्षणस्य च—श्रुत्वैतद्भगवान् रामो विपक्षीयनृपोद्यमम्। कृष्णं चैकं गतं हर्त्तुं कन्यां कलहशङ्कितः। बलेन महता सार्द्धं भ्रातृस्नेहपरिप्लुतः। त्वरितः कुण्डिनं प्रायाद् गजाश्वरथपत्तिभिरिति। भगवान् सर्वज्ञोऽपीत्यर्थः। अतएव, कृष्णं महावकग्रस्तं दृष्ट्वा रामा-द्योऽर्भका इत्यादिकमपि। तदेवं माधुर्य्यज्ञानस्यैव बलवत्सुख-मयत्वे स्थिते तस्मिंश्च श्रीगोपानामिव स्वाभाविकतया लब्धे ब्रह्मत्वे-श्वरत्वानुभवमतिक्रम्य तेषामेव भाग्येन श्रीशुकदेवोऽपि युक्तमेव चमत्-कृतिमवाप। इत्थं सतां ब्रह्मसुखानुभूत्येत्यादौ, नेमं विरिञ्चो न भव इत्यादौ, नायं सुखाप इत्यादिकस्य गोपिकासुत इत्यत्र। नायं श्रियोऽङ्ग इत्यादौ च। क्वचिच्च तादृशस्वभावेषु तेष्वैश्वर्य्यप्रकटनमपि विस्मयद्वारा माधुर्य्यज्ञानमेव पुष्णाति। अस्माकं पुत्रादिरूपोऽयं कथ-मीदृशक्रियावानिति। तथा, नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः। कृष्णञ्च तत्र छन्दोभिस्तूयमानं सुविस्मिता इत्यादि। तदेवं शुद्धत्वा-च्छ्रीगोकुलवासिनामेव प्रीतिः प्रशस्ता। यथोक्तम्—एषां घोष-निवासिनामुत भवानित्यादि। यत्रैव पशूनामपि परमः स्नेहो दृश्यते। यथा कालीयह्रदावगाहे, गावो वृषा वत्सतर्य्यः क्रन्दमानाः सुदुः-खिताः। कृष्णे न्यस्तेक्षणा भीता रुदन्त्य इव तस्थिरे इति। तथा तत्र उत्थाने, नरा गावो वृषा वत्सा लेभिरे परमां मुदमिति। तथा स्थावराणामपि तत्रैव, कृष्णं समेत्य लब्धेहा आसन् शुष्का नगा अपीति। अतएव श्रीब्रह्मणापि प्रार्थितम्—तद्भूरिभाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकमिति। तदेवं परममाधुर्य्यैकज्ञाननिधौ श्रीमति गोकुलेऽपि अनुगता बान्धवाश्चेति द्विविधानां तत्प्रियाणां मध्ये ममताविशेषधारित्वादन्यानां महानेवो-त्कर्षः। यथोक्तम्—अहो भाग्यमहो भाग्यमित्यादिना। अत्र व्रजौ-कसां कनिष्ठेष्वपि तेन मित्रतया स्वीकार इति यदुच्यते तत् खलु



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मित्रतायाः प्रशंसामिवावक्ष्यतीति । अथ तेष्वपि सखीनां तावदुत्कर्ष-माह—इत्थं सतां ब्रह्मसुखानुभूत्या दास्यं गतानां परदैवतेन । माया-श्रितानां नवदारकेण सार्द्धं विजह्रुः कृतपुण्यपुञ्जाः ॥ १०० ॥

सतां ज्ञानिनां ब्रह्मत्वेन स्फुरंस्तावद्विरलप्रचारः । दास्यं गतानां मुक्तानामपि सिद्धानां नारायणपरायणः सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने इत्यनुसारेण परदैवतत्वेन स्फुरंस्ततोऽपि विरलप्रचारः । मायाश्रितानान्तु ज्ञानभक्तिमैत्रीहीनानां चिदेकरूपत्वेन न स्फुरति न च परमेश्वरत्वेन न च प्रेमास्पदत्वेन । ततस्तदीयासाधारणतास्फूर्त्तौ योग्यताश्रयाभावात्, अवजानन्ति मां मूढा मानुषीं तनुमाश्रित-मित्युक्तदिशा, यत्किञ्चिन्नृबालत्वेन स्फुरन्, नाहं प्रकाशः सर्वस्य योग-मायासमावृत इति न्यायेन अलभ्य एवेति पादत्रयेण तस्योदयमात्र-दौर्लभ्यं विवेचितम् । ततश्चैवंभूतो योऽसुलभस्फूर्त्तिः श्रीकृष्णस्तेन समं साक्षादेव प्रेमभूमिकोत्कर्षमधिरूढेन परमसख्येनापि विजह्रुरिति श्रीशुकदेवस्य चमत्कारः । अथवा सोऽयमहो तदानीं विषूचीनया कृपया मायाश्रितानां साधारणजनानामपि दर्शितसर्वाकारातिक्रमिमाहा-त्म्येन साक्षान्नराकृतिपरब्रह्मत्वेन स्फुरंस्ततोऽपि विरलप्रचारः । तत-श्चैवं दुर्लभे दुर्लभतरे दुर्लभतमेऽपि तथा तथा लब्धे बन्धुभावस्तु तैर्न लब्धः । सखायस्तु तथाभूतेन तेन सार्द्धं बन्धुभावोत्कर्षरूपेण सख्येन विजह्रुरित्यतस्त एव कृतपुण्यपुञ्जाः श्रीभगवत्पारितोषिकानेकसत्-कर्म्मकारिवृन्देषु परमश्रेष्ठा इत्यर्थः । अतएव बान्धवान्तरेषु नेदृशं सख्यमस्तीति तेभ्योऽपि माहात्म्यमायातम् । अतएव किमेषां सखीनां साक्षात्तेन समं प्रणयलक्षणहार्दविशेषेण विहरतां भाग्यं वर्णनीयम् । ये साधारणा अपि व्रजवासिनस्तेषामप्यास्तां तत्तदन्यद्भाग्यम् । तद्-व्रजस्थलभाग्यमपि परेषां महामुनीनां परमदुर्लभमेवेत्यभिप्रायेण यत्-पादपांशुर्बहुजन्मकृच्छ्रत इत्यनन्तरपद्यमपि व्याकृत्यैतदेव सखीनां महाभाग्यवर्णनं पोषणीयम् । अतएवाक्रूरेण तथावरूढ इत्यत्र नमस्य

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ख्याख्य सखीन् वनौकस इति च उक्तम्। तदेतत्तावदस्तु। येषु सखीषु वत्सेष्वपि ब्रह्मणा हृतेषु अन्यान् सृज्यांस्तत्तुल्यान् दृष्ट्वा स्वयमेवैतत्तया बभूव। तेष्वपि परितोषमप्राप्य तान् सखीनेवानिनायेत्यनुसन्धेयम् ॥ १० ॥ १२ ॥ श्रीशुकः ॥ १०० ॥

अथ तेभ्योऽपि श्रीपित्रोरुक्तम्—ततो भक्तिर्भगवति पुत्रीभूते जनार्दने। दम्पत्योर्नितरामासीद्गोपगोपीषु भारतेत्यनेन। भक्तिः प्रेम। नितरां स्नेहरागपराकाष्ठाभ्यारूढ़त्वात्। गोपाः सर्वे गोप्यस्तत्प्रेयसीर्गवर्जिताः ; वक्ष्यमाणानुरोधात्। अथ सर्वेभ्योऽपि सुमिगणप्रशस्तया सर्वतोऽपि प्रेमप्रणयमानरागवैशिष्ट्यपुष्ट्या विशेषतोऽनुरागमहाभावसम्पत्तिधारिण्या स्वप्रीत्या वशीकृतकृष्णानां श्रीव्रजदेवीनां तत्समोद्गमेव तद्‌वैभवम्। एतत्क्रमेणैवोद्धवस्याप्यनुज्ञापनक्रमो दृश्यते। यथा—अथ गोपीरनुज्ञाप्य यशोदां नन्दमेव च। गोपानामन्त्र्य दाशार्हो यास्यन्नारुरुहे रथम् ॥ १०१ ॥

स्पष्टम् ॥ १० ॥ ४ ॥ श्रीशुकः ॥ १०१ ॥

अतएव सर्वमपि गोकुलमतिक्रम्य, दृष्ट्वैवमादि गोपीनां कृष्णावेशात्मविक्लवम्। उद्धवः परमप्रीतस्तान्नमस्यन्निदं जगौ। एताः परं तनुभृतो भुवि गोपवध्वो गोविन्द एवमखिलात्मनि रूढ़भावाः। वाञ्छन्ति यद्भवभियो मुनयो वयञ्च किं ब्रह्मजन्मभिरनन्तकथारसस्य ॥ १०२ ॥

परं केवलमेतास्तनुभृतः सफलजन्मानः। अतोऽखिलात्मनि परमात्मत्वेन सर्वेषामपि दुर्लभस्फूर्त्तिमात्रे स्वसन्निधौ तु गोविन्दे साक्षात् श्रीगोकुलेन्द्रतया विराजमाने एवम् ईदृग्प्रभावविशेषमाधुर्य्येण रूढ़भावाः उद्भूतमहाभावा जाताः। यदेव महाभावतात्पर्य्यान्तर्गतसमर्थं भावविशेषमाधुर्य्यं यदि यदृच्छया वर्णनद्वारा कर्णगोचरं स्यात् तदा स्वस्वभावं परित्यज्य यत् यं भावं प्रेम्णः पराकाष्ठेयमित्यनुभावमहिमद्वारा वितर्क्य भवभियो मुमुक्षवो मुनयो मुक्ता अपि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वाञ्छन्ति। वयं भक्तविशेषा अपि वाञ्छाम एव, न तु ते सर्वे वयं प्राप्नुमः। एतासामिवास्माकं तन्माधुर्य्यविशेषास्वादयोग्यत्वाभावादिति भावः। तत्र तदवाञ्छकं निन्दति। अनन्तस्यानन्तलीलस्य श्रीकृष्णस्य कथासु कथामात्रेषु किमुत ईदृशीषु कथासु अरसो रसाभावो यस्य तस्यासंख्यैर्विरिञ्चिजन्मभिरपि किं, न किञ्चिदपीत्यर्थः। ननु ते मुक्ता मुमुक्षवश्च तत्तद्भावेन शास्त्रप्रशस्ता एव। भक्तास्वतितमाम्। तर्हि तद्विधानां कथमन्यत्र वाञ्छा, तत्राह, क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः कृष्णे क्वचैष परमात्मनि रूढ़भावाः। नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षाच्छ्रेयस्तनोत्यगदराज इवोपयुक्तः॥१०॥

तत्र तासु श्रीमदुद्धवस्योपक्रमोपसंहारादिषु महाभक्तेरेव स्पष्टत्वात् तासां श्रीकृष्णभजने व्यभिचारित्वस्य सुतरां तद्दोषस्य च रासान्ते गोपीनां तत्पतीनाञ्च सर्वेषामपि देहिनाम् योऽन्तश्चरति सोऽध्यक्ष एष क्रीड़नदेहभाक् इत्यादिना निराकृतत्वात् स्वयमेवाधुनापि परमात्मनीति तस्यैव सूच्यमानत्वात् दुर्धियां मते वा तासां व्यभिचारशीलत्वस्य तु आर्य्यपथं हित्वेति प्राप्तस्यैव परित्यागोपपत्तेः स्वयमेव निराक्रियमाणत्वादन्यथार्थस्याप्रस्ताव्यत्वमिति वक्ष्यमाण एवार्थः समञ्जसः। यथा— इमा वनचर्य्यः वृन्दावनविहारिण्यः स्त्रियः कृष्णे तद्रूपे आश्रये क्व कांवा भूमिकामधिकृत्य वर्त्तन्ते। तथा व्यभिचारदुष्टा एतादृशभावोत्कर्षाभावेन यो व्यभिचारो गाढ़तदासक्त्यभावस्तेन दुष्टा अन्ये भवभीप्रभृतयो वयं वा तस्मिन् क्व कां भूमिकामधिकृत्य वर्त्तामहे। ततो महदेवान्तरमिति भावः। कथम्। एष श्रीगोपवधूषु तासु दृश्यमानः परमात्मनि सर्वेषामेव भजनीयत्वेन स्पृहास्पदे परमेश्वरे रूढ़भाव उद्भूतमहाभावः समुज्जृम्भते नत्वस्मास्विति। तर्हि ताभिरनुभूयमानस्य तादृशभावजनकस्य श्रीकृष्णगुणविशेषस्यानभिज्ञा यूयं कथं तद्वाञ्छयापि तत् प्राप्स्यथ, तत्राह, नन्विति। अविदुषोऽपि। तत्र मर्मैव अकस्मात् स्वयमत्र प्रख्यापितस्य दृष्टान्तत्वमितिभावः। यथोक्तं स्वयं-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मेव—विरहेण महाभागा महान् मेऽनुग्रहः कृत इति। अथवा पूर्वमेवार्थं तद्रसविमुखीनां महापतिव्रतानामपि निन्दया द्रढ़यति, क्वेमा इति। इमाः श्रीवृन्दावनविहारिण्यः श्रीकृष्णप्रेयस्यः स्त्रियः क्व। अकारप्रश्लेषेण याश्चावनचर्य्यस्तद्वनविहारिणीभ्यस्ताभ्यो भिन्नाः अथच स्त्रियो व्रतैस्त्वामित्यादि केतुमालवर्षवर्णनस्थितलक्ष्मीवचनरीत्या परमात्मनि स्वतः सर्वपतौ श्रीकृष्णे वैमुख्येन व्यभिचारदुष्टाः स्त्रियः क्व। महदेवान्तरमिति भावः। यतश्चेतास्वेव सर्वपुरुषार्थशिरोमणिरूपो रूढ़भावो दृश्यते न तु तास्विव तल्लेशस्याप्यभाव इति। एवं परमप्रेमवतीष्वासु तस्य सौहृदमपि परमकाष्ठापन्नं भवेत्। यतो भक्तमात्राणां स्वभावत एव सुहृदसावित्याह, नन्विति। किं बहुना, नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः स्वर्य्योषितां नलिनगन्धरुचां कुतोऽन्याः। रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठलब्धाशिषां य उदगाद्व्रजसुन्दरीणाम् ॥ १०४ ॥

अङ्गे तदीये श्रीवैकुण्ठनाथाख्यश्रीविग्रहविशेषे परमप्रेयसीरूपायाः श्रियो या नितान्तरतिः प्रगाढ़ः कान्तभावः तस्या अपि अयं एतान् प्रसादः सौख्यप्रकाशो नास्ति। यदि श्रियोऽपि नास्ति तदा नलिनस्य तत्रत्यदिव्यस्वर्णकमलस्येव गन्धो रुक् कान्तिश्च यासां तादृशीनामपि स्वर्य्योषितां वैकुण्ठपुराङ्गनानामन्यासां सुतरामेव नास्ति। ततः कुतोऽन्याः। अन्याः पुनर्दूरतोऽपि निरस्ता इत्यर्थः। कासामिव कियान् प्रसादो नास्ति, तत्राह, रासेति। अस्य श्रीव्रजेन्द्रनन्दनरूपस्य यद्वाञ्छया श्रीर्ललनाचरत्तप इत्युक्तदिशा तस्या अपि स्पृहनीयस्य इत्यर्थः। ततो न केवलं विप्रलम्भ एवासामीदृशो भावोत्कर्षः परन्तु सम्भोगेऽपि लब्धा अपि स्पृहणीयः। तेन मद्विधानां का वार्त्ता इति भावः। भुजदण्डगृहीतकण्ठलब्धाशिषां परमावेशेन गृहीतकण्ठतया प्राप्तपरममनोरथानां रासोत्सवे यः यावानुदगात् सततं निगूढ़मन्तः सन्नपि प्राकट्यं प्रापेति। अपि यत्स्पृहा श्रीरित्यत

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

लक्ष्मीसर्वांमयवाक्ये व्रजसुन्दरीणामिति सुन्दरीपदविन्यासः सौन्द-र्य्यादिकमपि तासां तद्वदधिकमिति सूचयति। तच्च युक्तं, यस्यास्ति भक्तिर्भगवत्यकिञ्चनेति न्यायेन तदुत्कर्षेत उत्कर्षप्राप्तेः। अत्र सर्वभावशिरोमणिना कान्तभावांशेनैवोभयत्र तारतम्यं दर्शितम्। न तु न च सङ्कर्षणो न श्रीरित्यादाविव भक्तिजायात्वांशाभ्याम्। ततो नान्येन साधारण्यं मन्तव्यम्। श्रीकृष्णलक्षणस्वयंभगवद्विषयतया विशेषा-न्तरं त्वस्त्येवेति ज्ञेयम्। तस्मादास्तां तावदासां भावच्छविलाभाभि-लासः। मम त्विदमेव प्रार्थनीयमित्याह—आसामहो चरणरेणु-जुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम्। या दुस्त्यजं स्वजनमार्य्यपथञ्च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥१०५॥

अयमर्थः—मय्यासां श्रीकृष्णप्रेमविशेषच्छविस्पर्शोऽपि न सम्भव-त्येव विजातीयजन्मवासनत्वात्। ततश्च साक्षाच्चरणस्पर्शोऽपि नेति किं वक्तव्यम्। यद्येवं तदासां चरणस्य यो रेणुस्तस्य स्पर्शभागधेयानां श्रीगुल्मलतौषधीनां मध्ये किमपि यत्किञ्चिदनादृतरूपमपि स्यामिति। अहो इत्यभिलाषकृतहृदयार्त्तौ। कथंभूतानामित्याह या इति। याः खलु कुलवधूत्वात् आपातविचारेण स्वयं दुस्त्यजं स्वजनम् आर्य्य-पथञ्च हित्वा रागातिशयेन लोकवेदमर्य्यादामुल्लङ्घ्येत्यर्थः। वस्तुतस्तु श्रुतिभिर्विमृग्यां सर्वश्रुतिसमन्वयेन परमपुरुषार्थशिरोमणितया निर्णे-याम् ईदृशपरमप्रेमलक्षणां मुकुन्दस्य प्रस्तुतत्वात् श्रीव्रजेन्द्रनन्दन-रूपस्य पदवीं तदीयसंयोगानन्दपद्धतिं भेजुरिति। तदेवमार्य्यपथं त्यजाम इति तु तासां भ्रम एवेति भावः। य एव तत्संयोगानन्दः श्रीप्रभृतीनां परमदुर्लभ एवेति स्वयमेव व्यनक्ति। या वै श्रियार्चित-मजादिभिराप्तकामैर्योगेश्वरैरपि सदात्मनि रासगोष्ठ्याम्। कृष्णस्य तद्भगवतः प्रपदारविन्दं न्यस्तं स्तनेषु विजहुः परिरभ्य तापम् ॥१०६॥

या रासगोष्ठ्यां विराजमानस्य श्रीकृष्णस्य भगवतः परममाधुर्य्य-सारभागवत्ताप्रकाशिनस्तदनिर्वचनीयमाधुर्य्यं प्रकृष्टं पदारविन्दं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न्यस्तं तेन स्वयमर्पितं परिरभ्य तापं साक्षात्तदप्राप्तिहेतुकम् आधिं जहुः। तत्तु योगेश्वरैर्भक्तियोगप्रवीणैः श्रीशुकादिभिरपि आत्मनि मनस्येवार्चितम्। यद्वाञ्छया श्रीर्ललनाचरत्तप इत्युक्तदिशा श्रियापि यत् प्राप्तुं मनस्येवार्चितम्। तच्च सदैवानादित एव न तु कदाचिदपि साक्षात्प्राप्तम्। तदश्रवणादिति भावः। एवं तासामेव साक्षान्नमस्कारे कृतचित्ततया तथाविधं गायन्नेवासौ पुनरपि महामाहिमस्फूर्त्तेरतिदैन्यभरसङ्कुचिततया तत्राप्यात्मनोऽनधिकारितां मन्यमानस्तत्पादरेणुमेव नमस्कुर्वन् तत्रापि दैन्येन तदेकवर्गसम्बन्धात् साधारणव्रजस्त्रीणामेव नमस्करोति। वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः। यासां हरिकथोद्गीतं पुनाति भुवनत्रयम्॥ १०७॥

उत्तरार्द्धेन तादृशीनामप्यासां साक्षादेव पादरेणुं वन्दे तदेतदप्यहो अस्माकं भाग्यमस्तीत्येतदपि महदद्भुतमिति भावः। अत्रेतदुक्तं भवति—एते हि यादवाः सर्वे मद्गणा एव भाविनि। सर्वदा मत्प्रिया देवि मत्तुल्यगुणशालिनो इति पाद्मकार्त्तिकमाहात्म्यदृष्टश्रीभगवद्वाक्यानुसारेण शय्यासनाटनालापेत्याद्यनुसारेण च यादवा एव तावत् स्वयं भगवतः श्रीकृष्णदेवस्य परमप्रेष्ठाः। अतः प्रादुर्भावान्तरभक्तास्तु स्वतो दूरत एव स्थिताः। अथ भक्तान्तरेषु यादवेष्वपि किन्तु भागवतेष्वहं त्वं मे भृत्यः सुहृत् सखा नोद्धवोऽण्वपि मन्न्यूनः न च सङ्कर्षणो न श्रीर्नैवात्मा च यथा भवानित्यादिकासकृच्छ्रीकृष्णवाक्यानुसारात् भक्तश्रेष्ठेन तु सर्वतोऽप्युद्धव एव श्रेयान् तस्य तु श्रीव्रजदेवीष्वेवं दैन्यवचनं न जातु महिषीष्वपीति जातान्यस्यापि चाक्षुषमेवेदं तासां यशोराकाचन्द्रमःसौन्दर्य्यमिति॥ १०॥ ४॥ श्रीमदुद्धवः॥ १०७॥

तत्र स्वेभ्यः षोड़शसहस्रसंख्याभ्यः श्रीयदुदेवस्य पत्नीभ्यस्तथाष्टभ्यः पट्टमहिषीभ्यश्च तासां माहात्म्यं वदन्त्यः परमकाष्ठापन्नतया श्रीराधादेव्या आहुः—न वयं साध्वि साम्राज्यं स्वाराज्यं भोज्यमप्युत

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वैराज्यं पारमेष्ठ्यं वा आनन्त्यं वा हरेः पदम्। कामयामह एतस्य श्रीमत्पादरजःश्रियः। कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः॥ व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः। गावश्चारयतो गोपाः पादस्पर्शं महात्मनः॥ १०८॥

हे साध्वि साम्राज्यादिकं न कामयामहे। तत्र साम्राज्यं सार्वभौमं पदम्। स्वाराज्यम् ऐन्द्रं पदम्। भौज्यं तदुभयभाक्त्वम्। भुनक्तीति भुक् तस्य भाव इति। विविधं राजत इति विराट् तस्य भावो वैराज्यम्। अणिमादिसिद्धिभाक्त्वमित्यर्थः। पारमेष्ठ्यं ब्रह्मपदम्। आनन्त्यं ये ते शतमित्यादिश्रुतिरीत्या मनुष्यानन्दमारभ्य शतगुणितत्वेन प्राजापत्यस्य गणनायाः परां काष्ठां दर्शयित्वा परब्रह्मणि तु यतो वाचो निवर्त्तन्त इत्यनेन यदानन्दस्यानन्त्यं दर्शितं तदपीत्यर्थः। किं बहुना, हरेः श्रीपतेः पदं सामीप्यादिकमपि यत् तदेतदपि न कामयामहे नाधीनं कर्त्तुमिच्छाम इत्यर्थः। तर्हि किमधिकं लब्धुं कामयध्वे तत्राहुः, एतस्यास्तत्पतित्वेन सर्वविज्ञातस्य गदाभृतः श्रीमत्पादरज एव तावन्मूर्ध्ना वोढुं कामयामहे। तत्रापि यत् श्रियः कुचकुङ्कुमगन्धेनाढ्यं तद्गन्धेन प्राप्तसम्पद्विशेषं तत् पुनरधिकं कामयामह इत्यर्थः। ननु श्रीपतेरेव पदं श्रीकुङ्कुमगन्धाढ्यं तत् स्यादिति गम्यते। ततस्तदवबोधाय पुनर्विशिष्यताम्, तत्राहुः; व्रजस्त्रिय इति। पूर्णाः पुलिन्द्य उरुगाय इत्यादि स्ववाक्याद्यनुसारेण व्रजस्त्र्यादयो यद्वाञ्छन्ति ववाञ्छुरित्यर्थः। वर्त्तमानप्रयोगेन तत्तदविच्छेद उत्प्रेक्ष्यते। अत्र पुलिन्द्यादिनिर्देशस्तु स्वेषामपि तत्प्राप्तियोग्यताविवक्षया। तृणवीरुधो दूर्वाद्याः। आसां तादृगनुभवश्च तत्कुचकुङ्कुमसौरभवासितत्वाविच्छिन्नतत्पदप्रभावादेवेति भावः। गावो गाः। चारयतश्चारयन्तः। गोपा इत्यन्ते निर्देशस्तु केषाञ्चित् प्रियनर्मसखादीनां तदनुमोदकारित्वेऽपि पुरुषत्वात्तत्रायोग्यताविवक्षया। अयं भावः—श्रीत्वेन प्रसिद्धायाः श्रियस्तत्र

नामनैव श्रूयते न तु सङ्गतिः । यद्वा लक्ष्म्या श्रीरिति नागपत्नीनां या वै श्रियार्चितमित्युद्धवस्याप्युक्तेः । न च रुक्मिणीत्वेन प्रसिद्धायाः श्रियस्तत्र सङ्गतिः कालदेशयोरन्यतमत्वात् । न च व्रजस्त्रीणां सम्बन्ध-लालसा युक्ता, नायं श्रिय इत्यादिना ततोऽपि परमाधिक्यश्रवणात् । तस्माद्रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने वन इति मात्स्यानुसारेण (मात्स्ये रुक्मिण्या सह पठिता शास्त्रदृष्ट्या तूपदेशो वामदेववदिति न्यायरीत्या महेन्द्रेण परमेश्वर इव दुर्गयाप्यवंशद्वोपासनाशास्त्रदृष्ट्या स्वाभेदेनोपदिष्टा । श्रीराधा तु सर्वतः पूर्णा तल्लक्ष्मीः । तथा,) देवी कृष्णमयी प्रोक्ता राधिका इत्यादि बृहद्गौतमीयानुसारेण राधया माधवो देवो माधवेनैव राधिका इत्यादि ऋक्परिशिष्टानुसारेण च तासु राधात्वेन प्रसिद्धा सर्वतो विलक्षणा या श्रीर्विराजते तामुद्दिश्यैव तासां तदिदं वाक्यम् । यथा च, अनयाराधितो नूनं भगवानित्यादि । अप्येणपत्न्युपगत इत्यादिद्वयञ्च । ततश्च तासां यथा तत्र स्पृहास्पदता तथास्माकं चेति । तदेवं तादृशप्रेमस्फूर्त्ति-मयतद्गन्धाढ्यतायाः संप्रत्यप्यस्मासु प्रकाशः स्यादिति दर्शितम् । न केवलं तादृशं तद्रज एव वाञ्छन्ति अपि तु तादृशपादस्पर्शञ्च । ततो वयमपि तं कामयामह इत्यर्थः । यद्वा तद्रजस एव विशेषणं पाद-स्पर्शमिति । तदव्यभिचारिफलत्वादभिन्नमेवेत्यर्थः । एतस्य तत्र कीदृशस्य महान् सर्वचत्वादपि स्वभावादुत्तम आत्मा सौन्दर्यादि-प्रकाशमयः स्वभावो यस्य तादृशस्य । तत्रालिशुशुभे ताभिर्भगवानिति श्रीशुकोक्तेः ॥ १० ॥ १३ ॥ श्रीमहिष्यो द्रौपदीम् ॥ १०८ ॥

अथ तत्रैव श्रीराधादेव्याः आदिपुराणे—त्रैलोक्ये पृथिवी धन्या तत्र वृन्दावनं पुनः । तत्रापि गोपिकाः पार्थ तत्र राधाभिधा मम ॥ इति । पाद्मे कार्त्तिकमाहात्म्ये—यथा राधा प्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा । सर्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा ॥ इति । अतएव तस्या एव प्रेमाधिक्यं वर्णितमाग्नेये । वासनाभाष्योद्धृतं वचनम्—



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

गोप्यः पप्रच्छुरुषसि कृष्णानुचरमुद्धवम् । हरिलीलाविहारांश्च तत्रैकां राधिकां विना ॥ राधा तद्भावसंलीना वासनाया विरामिता ॥ इति। भवन्मावस्थाप्राप्तत्वेन प्रश्नादिवासनाया विरामिता तस्यामसमर्थेत्यर्थः। तस्मादनेन सर्वव्रजदेवीष्वपि श्रेष्ठ्यादिचिह्नेन श्रीरासविहारे ताभिरेव स्वयं कस्याः पदानि इत्यादिना वर्णितसौभाग्यातिशया श्रीराधिकैव भवेत्। अतस्तन्नाम्नैव ताः सूचयामासुः—अनयाराधितो नूनं भगवान् हरिरीश्वरः। यन्नो विहाय गोविन्दः प्रीतो यामनयद्रहः ॥ १०८॥

अनया राधया भगवान् राधितः साधितो वशीकृत इत्यर्थः। नूनमिति वितर्के। यतश्च राधयतीति निरुक्त्या तस्या राधेति संज्ञापि जातेति भावः। राधितत्वे हेतुः यन्न इति। गोविन्दः श्रीगोकुलेन्द्रः ॥ १० ॥ ३० ॥ श्रीव्रजदेव्यः ॥ १०८ ॥

तदेवं तथाभूतश्रीभगवत्प्रीतिमाधुरीषु श्रीराधायास्तन्माधुरीसर्वोद्धमधिरूढ़ेत्येतावत्तत्परावस्थास्थापनापर्य्यन्तेन सन्दर्भेण तत्प्रीतिजातितारतम्यं दर्शितम्। एषा च प्रीतिर्लौकिककाव्यविदां रत्यादिवत् कारणकार्य्यसहायैर्मिलिता रसावस्थामाप्नुवती स्वयं स्थायी भाव उच्यते। कारणाद्याश्च क्रमेण विभावानुभावव्यभिचारिण उच्यन्ते। तत्र तस्या भावत्वं प्रीतिरूपत्वादेव। स्थायित्वञ्च विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः। आत्मभावं नयत्यन्यान् स स्थायी लवणाकर इति रसशास्त्रीयलक्षणव्याप्तेः। अन्येषां विभावत्वादिकञ्च तद्विभावनादिगुणेन दर्शयिष्यमाणत्वात्। ततः कारणादिस्फूर्त्तिविशिष्टव्यक्तस्फूर्त्तिविशेषा तन्मिलिता भगवत्प्रीतिस्तदीयप्रीतिरसमय उच्यते। भक्तिमयो रसो भक्तिरस इति च। यथाहुः, भावा एवाभिसम्पन्नाः प्रयान्ति रसरूपतामिति। यत्तु प्राकृतरसिकैः रससामग्रीविरहाद्भक्तौ रसत्वं नेष्टं, तत् खलु प्राकृतदेवादिविषयमेव सम्भवेत्। सामग्री हि रसत्वापत्तौ त्रिविधा ; स्वरूपयोग्यता परिकरयोग्यता पुरुषयोग्यता च। तत्र लौकिकेऽपि रसे रत्यादेः स्थायिनः स्वरूपयोग्यता, स्थायि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भावरूपत्वात् सुखतादात्म्याङ्गीकारादेव च। भगवत्प्रीतौ तु स्थायिभावत्वं तद्विधाशेषसुखतरङ्गार्णवब्रह्मसुखादधिकतमत्वञ्च प्रतिपादितमेव। तथा तत्र कारणादयस्तत्परिकराश्च लौकिकत्वाद्विभावनादिषु स्वतोऽक्षमाः किन्तु सत्कविनिबद्धचातुर्य्यादेवालौकिकत्वमापन्नास्तत्र योग्या भवन्ति। तत्र तु ते स्वत एवालौकिकाद्भुतरूपत्वेन दर्शिता दर्शनीयाश्च। पुरुषयोग्यता च श्रीप्रह्लादादीनामिव तादृशवासना। तां विना च लौकिककाव्येनापि तन्निष्पत्तिं न मन्यते। यथोक्तम्—पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिमिति। न जायते तदास्वादो विना रत्यादिवासनामिति च। लौकिकरसस्योत्पत्तिः स्वरूपमास्वादप्रकारश्चैवमेवोच्यते। यथा—सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः। वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः। लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः। साकारवदभिन्नत्वेनायमास्वाद्यते रसः॥ इति। अत्र तु अप्राकृतविशुद्धसत्त्वहेतुत्वम्। सत्त्वं विशुद्धं वसुदेवशब्दितम् इत्यादेः। दर्शितं चास्य सत्त्वस्याप्राकृतत्वं भगवत्सन्दर्भे। तथा ब्रह्मास्वादादप्यधिकत्वं या निर्वृतिस्तनुभृतामित्यादेः। नात्यन्तिकं विगणयन्त्यपि ते प्रसादमित्यादेश्च। तत्चमत्कारश्च सुतरामेव। विस्मापनं स्वस्य च सौभगर्द्धेरित्यादेः। किञ्चालौकिकलौकिकरसविदां प्राचीनानामपि मतानुसारेण सिध्यत्यसौ रसः। तत्र सामान्यतः श्रीभगवन्नामकौमुदीकारैर्दर्शितः। तस्य विशेषतश्च शान्तादिषु पञ्चसु भेदेषु वक्तव्येषु श्रीस्वामिचरणैर्मल्लानामशनिरित्यादौ ते पञ्चैव दर्शिताः। स्त्रीणां शृङ्गारः। सवयसां गोपानां हास्यशब्दसूचितनर्म्ममयसख्यस्थायी सख्यमयः प्रेयान्। ततस्तन्मते गोपानां श्रीदामादीनामित्येवार्थः। पित्रोर्दयापरपर्य्यायवात्सल्यस्थायी वत्सलः। योगिनां ज्ञानभक्तिमयः शान्तः। वृष्णीनां भक्तिमय इति। तथा सामान्यप्रीतिमयरसश्च नृणां दर्शितः। तत्राद्भुतनिर्देशश्च सर्वस्यैव रसस्य तत्प्राणत्वात् शान्तत्वादिवैशिष्ट्याभावे तदेव निर्दिष्टमिति। यदाह धर्म्मदत्तः—रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते। तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः। तस्मादद्भुतमेवाह

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्ती नारायणो रसमिति। ये तु मल्लादीनां रौद्रादिरसास्तेषां स्वामिभिरङ्गीकृतास्ते खलु प्रीतिविरोधित्वान्नानादृताः। तदेतदलौकिकरसविन्मतम्। तथा केश्चिल्लौकिकरसविद्भिर्भोजराजादिभिः प्रेयान् वत्सलश्च रसः सम्मतोऽस्ति। तथाचोक्तम्—स्नेहस्थायिभावः प्रेयान्। यथा, यदेव रोचते मह्यं तदेव कुरुते प्रिया। इति वेत्ति न जानाति तत् प्रियं यत् करोति सेति। दम्पत्योरनयोः सख्यविशेषविवक्षया तदिदमुदाहृतम्। एवं, स्फुटं चमत्कारितया वत्सलञ्च रसं विदुः। स्थायी वत्सलतास्येह पुत्राद्यालम्बनं मतमित्यादि। तथा सुदेवाद्येभक्तिमयश्चेति। किञ्च, लौकिकस्य रत्यादेः सुखरूपत्वं यथाकथञ्चिदेव। वस्तुविचारे दुःखपर्य्यवसायित्वात्। तदुक्तं स्वयं भगवता—सुखं दुःखसुखात्ययः। दुःखं कामसुखापेक्षेति। तदीयः शमोऽपि शमो मन्निष्ठता बुद्धेरिति वदता तेनैवानादृतः। जुगुप्सादीनान्तु सुखरूपता लौकिकैरपि दुष्प्रा। तत्तन्निन्दा भागवतरसश्लाघा च श्रीनारदवाक्ये—न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित्। तद्वायसं तीर्थमुशन्ति मानसा न यत्र हंसा निरमन्त्युशिक्क्षयाः। तद्वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि। नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधव इति। श्रीरुक्मिणीवाक्येऽपि—त्वक्श्मश्रुरोमनखकेशपिनद्धमन्तर्मांसास्थिरक्तकृमिविट्कफपित्तवातम्। जीवच्छवं भजति कान्तमतिर्विमूढ़ा या ते पदाब्जमकरन्दमजिघ्रती स्त्रीति। तस्माल्लौकिकस्यैव विभावादेः रसजनकत्वं न श्रद्धेयम्। तज्जनकत्वे च सर्वत्र बीभत्सजनकत्वमेव सिध्यति। श्रीभागवतरसस्य तु विषयिणमारभ्य मुक्तपर्य्यन्ते जने तद्वद्धो अनिन्द्रिये चैतन्यशून्येऽपि विकारहेतुत्वात् कथं तत्रासम्भावनापि स्यात्। यथोक्तम्—निवृत्ततर्षैरुपगीयमानादित्यादि। अस्पन्दनं गतिमतां पुलकस्तरूणामिति। कृष्णं समेत्य लब्धेहा आसन् शुष्का नगा अपीति। तदेतदभिप्रेत्य श्रीभा-

वत्प्रीत्येकव्यञ्जकस्य श्रीभागवतपुराणस्य रसात्मकत्वं शब्देनैव निर्दिशति—निगमकल्पतरोरित्यादि ॥ ११० ॥

हे भावुकाः, परममङ्गलायनाः ये रसिका भगवत्प्रीतिरसज्ञा इत्यर्थः, ते यूयं वैकुण्ठात् क्रमेण भुवि पृथिव्यामेव गलितमवतीर्णं निगमकल्पतरोः सर्वफलोत्पत्तिभुवः शाखोपशाखाभिर्वैकुण्ठमध्यारूढ़स्य वेदरूपतरोर्यत् खलु रसरूपं श्रीभागवताख्यं फलं तत् भुव्यपि स्थिताः पिवत आस्वाद्यान्तर्गतं कुरुत। अहो इत्यलभ्यलाभव्यञ्जना। भागवताख्यं यच्छास्त्रं तत् खलु रसवदपि रसैकमयताविवक्षया रसशब्देन निर्दिष्टम्। भागवतशब्देनैव रसस्यान्यदीयत्वं व्यावृत्तम्। भागवतस्य तदीयत्वेन रसस्यापि तदीयत्वाक्षेपात्। शब्दश्लेषेण च भगवत्सम्बन्धि रसमिति गम्यते। स च रसो भगवत्प्रीतिमय एव। यस्यां वै श्रूयमाणायाम् इत्यादिफलश्रुतेः। यन्मयत्वेनैव श्रीभगवति रसशब्दः श्रुतौ प्रयुज्यते रसो वै रस इति। स एव च प्रशस्यते। रसं ह्येवायं लब्ध्वानन्दीभवतीति। तत्र रसिका इत्यनेन प्राचीनार्वाचीनसंस्काराणामिव तद्विज्ञत्वं दर्शितम्। गलितमित्यनेन तस्य सुपाकिमत्वेनाधिकस्वादुमत्त्वमुक्ता शास्त्रपक्षे सुनिष्पन्नार्थत्वेनाधिकस्वादुत्वं दर्शितम्। रसमित्यनेन फलपक्षे त्वगष्ठ्यादिराहित्यं व्यञ्ज्यान्न च पक्षे हेयांशराहित्यं दर्शितम्। भागवतमित्यनेन सत्स्वपि फलान्तरेषु निगमस्य परमफलत्वेनोक्ता तस्य परमपुरुषार्थत्वं दर्शितम्। एवं तस्य रसात्मकस्य फलस्य स्वरूपतोऽपि वैशिष्ट्ये सति परमोत्कर्षबोधनार्थं वैशिष्ट्यान्तरमाह, शुकेति। अत्र फलपक्षे कल्पतरुवासित्वादलौकिकत्वेन शुकोऽप्यमृतमुखोऽभिप्रेयते। ततस्तन्मुखं प्राप्य यथा तत् फलं विशेषतः स्वादु भवति तथा परमभागवतमुखसम्बन्धं भगवद्वर्णनमपि। ततस्तादृशपरमभागवतवृन्दमहेन्द्रश्रीशुकदेवमुखसम्बन्धं किमुतेति भावः। अतएव परमस्वादपरमकाष्ठाप्राप्तत्वात् स्वतोऽन्यतश्च तृप्तिरपि न भविष्यतीत्यालयं मोक्षानन्द-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मप्यभिवाप्य पिवतेत्युक्तम्। तथाच वक्ष्यते परिनिष्ठितोऽपीत्यादि। अनेनास्वाद्यान्तरवन्नेदं कालान्तरेऽप्यास्वादबाहुल्येऽपि व्ययिष्यति इत्यपि दर्शितम्। यद्वा तत्र तस्य रसस्य भगवत्प्रीतिमयत्वेऽपि द्वैविध्यम्। तत्प्रीत्युपयुक्तत्वं तत्प्रीतिपरिणामत्वञ्चेति। यथोक्तं द्वादशे—कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम्। विज्ञानवैराग्यविवक्षया विभो वचोविभूतीर्न तु पारमार्थ्यम्। यस्तूत्तमश्लोकगुणानुवादः संगीयतेऽभीक्ष्णममङ्गलघ्नः। तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समान इति। ततः सामान्यतो रसत्वमुक्त्वा विशेषतोऽप्याह, अमृतेति। अमृतं तल्लीलारसः। हरिलीलाकथाव्रातामृतानन्दितसत्सुरमिति द्वादशे श्रीभागवतविशेषणात्। लीलाकथारसनिषेवणमिति तस्यैव रसत्वनिर्देशाच्च। सत्सुरमिति सन्तोऽत्रात्मारामाः इत्थं सतामित्यादिवत्। तएव सुराः अमृतमात्रस्वादित्वात्। अत्र त्वमृतद्रवपदेन लीलारसस्य सार एवोच्यते। तस्मादेवं व्याख्येयम्। यद्यपि प्रीतिमयरस एव श्रेयान् तथाप्यस्यान्न विवेकः। रसानुभविनो ह्यत्र द्विविधाः; पिवतेत्युपदेश्याः; स्वतस्तदनुभविनो लीलापरिकराश्च। तत्र लीलापरिकरा एव तस्य सारमनुभवन्ति अन्तरङ्गत्वात्। परे तु यत्किञ्चिदेव वहिरङ्गत्वात्। यद्यप्येवं तथापि तदनुभवमयं रससारं स्वानुभवमयेन रसेनैकतया विभाव्य पिवत। यतस्तादृशतया तादृशशुकमुखाद्गलितं प्रवाहरूपेण वहन्तमित्यर्थः। तदेवं भगवत्प्रीतिः परमरसत्वापत्तिः शब्दोपात्तैव। अन्यत्र च सर्ववेदान्तसारं हीत्यादौ तद्रसामृततृप्तस्येत्यादि। एवमेवाभिप्रेत्य भावुका इत्यत्र रसविशेषभावनाचतुरा इति टीका। तथा स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो जन इत्यादि ॥ १ ॥ १ ॥ श्रीवेदव्यासः ॥ ११० ॥

एवं विभावादिसंयोगेन भगवत्प्रीतिमयो रसो व्यक्तीभवति। तत्र लौकिकनाट्यरसविदामपि पञ्चचतुष्कम्। रसस्य मत्स्यया,

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वृत्त्यानुकार्य्ये प्राचीने नायक एव वृत्तिः । नटे तूपचारादित्येकः पक्षः । पूर्वत्र लौकिकत्वात् पारिमित्याद्भयादिसान्तरायत्वाच्चानुकर्त्तरि नट एव द्वितीयः । तस्य शिक्षामात्रेण शून्यचित्ततयैव तदनुकर्त्तृत्वात् सामाजिकेष्वेवेति तृतीयः । यदि च द्वितीये सचेतस्त्वं तदोभयत्रापि कथं न स्यादिति चतुर्थः । इति । श्रीभागवतानान्तु सर्वत्रैव तत्प्रीतिमयरसस्वीकारः । लौकिकत्वादिहेतोरभावात् । तत्रापि विशेषतोऽनुकार्य्येषु तत्परिकरेषु येषां नित्यमेव हृदयमध्यारूढ़ः पूर्णो रसोऽनुकर्त्रादिषु सञ्चरति तत्र भगवत्प्रीतेरलौकिकत्वमपरिमितत्वञ्च स्वत एव सिद्धम्। न तु लौकिकरत्यादिवत् काव्यकृतम् । तच्च स्वरूपनिरूपणे स्थापितम्। भयाद्यनवच्छेद्यत्वं श्रीप्रह्लादादौ श्रीव्रजदेव्यादौ च व्यक्तम् । जन्मान्तराव्यवच्छेद्यत्वं श्रीवृत्रगजेन्द्रादौ दृष्टम् । श्रीभरतादौ वा । किं बहुना, ब्रह्मानन्दाद्यनवच्छेद्यत्वमपि श्रीशुकादौ प्रसिद्धम् । एवं तत्कारणादेश्चालौकिकत्वं ज्ञेयम् । तत्रालम्बनकारणस्य श्रीभगवतोऽसमोर्द्ध्वातिशयिभगवत्त्वादेव सिद्धम् । तत्परिकरस्य च तत्तुल्यत्वादेव । तच्च श्रुतिपुराणादिदुन्दुभिघोषितम् । अथोद्दीपनकारणानां तदीयानाञ्च तदीयत्वादेव । तच्च यथा दर्शितम्—तस्यारविन्दनयनस्येत्यादौ चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोरिति, गोप्यस्तपः किमचरन्नित्यादि, कास्त्र्यङ्ग इत्यादौ यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्निति, विविधगोपचरणेषु विदग्ध इत्यादि । वेणुवाद्यवर्णने सवनशस्तदुपधार्य्य सुरेशाः शक्रसर्वपरमेष्ठिपुरोगाः । कवय आनतकन्धरचित्ताः कश्मलं ययुरनिश्चिततत्त्वा इति । आगन्तुका अपि तच्छत्रत्य,पद्मं हितत्वेन सादृश्यात्तत्स्फूर्त्तिमयत्वेन चालौकिकीं दशामाप्नुवन्ति । यथोक्तम्—प्रावट्श्रियञ्च तां वीक्ष्य सर्वभूतसुखावहाम् । भगवान् पूजयाञ्चक्र आत्मशक्त्यु,पद्मं हितामिति । यथा मेघादयश्च । तथा कार्य्यरूपाः पुलकादयोऽप्यलौकिकाः । ये खलु अस्पन्दनं गतिमतां पुलकस्तरूणाम् इत्यादौ तर्वादिष्वप्युद्भवन्तो मनु-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ष्वेषु स्वस्यात्यङ्ग तोदयमेव ज्ञापयन्ति । एवं निर्वेदाद्याः सहायाद्या-लौकिका मन्तव्याः । यत्र लौकिकविलक्षणवैचित्त्यविप्रलम्भादिष्वेव उन्मादादय उदाहरिष्यन्ते। क्वचित्तु सर्वेषामपि स्वत एवालौकिकत्वम्। श्रीब्रह्मसंहितायामपि—श्रियः कान्ताः कान्तः परमपुरुषः कल्प-तरवो द्रुमा भूमिश्चिन्तामणिगणमयी तोयममृतम्। कथा गानं नाट्यं गमनमपि वंशी प्रियसखी चिदानन्दं ज्योतिः परमपि तदास्वाद्यमपि च। स यत्र क्षीराब्धिः सरति सुरभीभ्यः सुमहान् निमेषार्द्धाख्यो वा व्रजति न हि यत्रापि समयः। भजे श्वेतद्वीपं तमहमिह गोलोक-मिति यं विदन्तस्ते सन्तः क्षितिविरलचाराः कतिपये इति। गानं नाट्यमिति तद्वद्रसाधायकमित्यर्थः। तदेवमलौकिकत्वादिनानुकार्ये-ऽपि रसे रसत्वापादनशक्तौ सत्यां प्रीतिकारणादयस्ते तदापि विभा-वाद्याख्यां भजन्ते। तथैव हि तेषां तत्तदाख्या। यथोक्तम्—विभा-वनं रत्यादेर्विशेषेणास्वादाङ्कुरयोग्यतानयनम्। अनुभावनम् एवं-भूतस्य रत्यादेः समनन्तरमेव रसादिरूपतया भावनम्। सञ्चारणं तथाभूतस्य तस्यैव सम्यक् चारणमिति। किञ्च स्वाभाविकालौकिकत्वे सति यथा लौकिकरसविदां लौकिकेभ्योऽपि काव्यसंश्रयादलौकिक-शक्तिं दधानेभ्यो विभावाद्याख्याप्राप्तकारणादिभ्यः शोकादावपि सुखमेव जायते इति रसत्तापत्तिस्तथैवास्माभिर्वियोगादावपि मन्तव्यम्। तत्र वहिस्तदीयवियोगमयदुःखेऽपि परमानन्दघनस्य भगवतस्तद्भावस्य च हृदि स्फूर्त्तिर्विद्यत एव। परमानन्दघनत्वञ्च तयोस्त्वन्तमशक्यत्वात्। ततः क्षुधातुराणामत्युष्णमधुरदुग्धवन्न तत्र रसत्वव्याघातः। तदा तद्भावस्य परमानन्दरूपस्यापि वियोगदुःखनिमित्तत्वं चन्द्रादीनां ताप-नत्वमिव ज्ञेयम्। तथा तस्य दुःखस्य च भावानन्दजन्यत्वादायत्यां संयोगसुखपोषकत्वाच्च सुखान्तःपात एव। तथा तदीयस्य करुणस्यापि रसस्य सर्वज्ञवचनादिरचितप्राप्त्याशामयत्वात् संयोगावशेषत्वात्तत्र तथैव गतिः सिद्धा। तदेवमनुकार्य्ये रसोदयः सिद्धः। स एव च मुख्यः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रवणजानुरागाद्दर्शनजानुरागस्य श्रेष्ठत्वात् । श्रुतमात्रोऽपि यः स्त्रीणां प्रसह्याकर्षते मनः । उरुगायोरुगीतो वा पश्यन्तीनां कुतः पुनरिति न्यायेन । अतस्तव विक्रीड़ितं व्रजत्रित्यादिकोद्धववचनमयं पद्यद्वयं चाहार्य्यम् । अथानुकर्त्तोऽप्यत्र भक्त एव सम्मतः । अन्येषां सम्यक् तदनुकरणासामर्थ्यात् । ततस्तत्रापि तद्रसोदयः स्यादेव । किन्तु भक्तैर्भक्तविषयको भगवद्रसः प्रायो नोदयते भक्तिविरोधादेव । तत्ता नानुक्रियते च । तदनुभवस्य भगवत्सम्बन्धित्वेनैव भवति नात्मीयत्वेन । स च भक्तरसोद्दीपकत्वेनैव चरितार्थतामापद्यते । ततः क्वचित्क्षुद्रभक्तानामपि यदि तदनुभावानुकरणं स्यात्तदा तदीयत्वेनैव तैस्तच्छ्लाघ्यते न तु स्वीयत्वेनेति समाधेयम् । यत्र तु भक्त्यविरोधः, यथा गदादितुल्यभावानां वसुदेवादौ तत्रोदयतेऽपि, अथ सामाजिका अपि भक्ता एवेष्टा इति, तत्रापि सिद्धिः । इति दृश्यकाव्येषु रसभावनाविधिः । श्रव्यकाव्येष्वपि वर्णनीयवर्णकश्रोतृभेदेन यथायथं बोद्धव्यः । किञ्चात्र प्रायस्तत्तदपेक्षा रत्यङ्कुरवतामेव । प्रेमादिमतान्तु यथाकथञ्चित् स्मरणमपि तत्र हेतुः । येषां षड्जादिमयस्वरमात्रमपि तत्र हेतुर्भवति । यथोक्तं नारदमुद्दिश्य चतुर्थे—स्वरब्रह्मणि निर्भातहृषीकेशपदाम्बुजे । अखण्डं चित्तमावेश्य लोकाननुचरन्मुनिरिति । ततः प्रेमादिभाव एव तेषु सर्वां सामग्रीमुद्भावयति । यथोक्तं श्रीप्रह्लादमुद्दिश्य, क्वचिद्रुदति वैकुण्ठचिन्ताशवलचेतनः इत्यादिना, क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः । अस्पन्दप्रणयानन्दसलिलामीलितेक्षण इत्यन्तेन । लौकिकरसज्ञैरपि हीनाङ्गत्वेऽपि तत्तदङ्गसमाक्षेपाद्रसनिष्पत्तिरभिमता । किञ्च भगवत्प्रीतिरसिका द्विविधाः ; तदीयलीलान्तःपातिनस्तदन्तःपातिताभिमानिनश्च । तत्र पूर्वेषां प्राक्तनयुक्त्या स्वत एव सिद्धो रसः । उत्तरेषान्तु द्विविधा गतिः । तत्तल्लीलान्तःपातिसहितभगवच्चरितश्रवणादिनैका । भगवन्माधुर्य्यश्रवणादिना चान्या । तत्र पूर्वत्र यदि समानवासनस्तल्लीलान्तः-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पातो भवेत् तदा स्वयं सदृशो भाव एव तस्य तल्लीलान्तः-पातिविशेषस्य विभावादिकं तादृशत्वाभिमानिनि साधारणीकरोति। यथा, परस्य न परस्येति ममेति न ममेति च। तदास्वादे विभावादेः परिच्छेदो न विद्यत इति। यदि तु विलक्षणवासन-स्तदा विभावानां सञ्चारिणामनुभावानाञ्च प्रायश एव साधारण्यं भवति। तेन तद्भावविशेषस्योद्दीपनमात्रं स्यात्। न तु रसोद्बोधः। यदि तु विरुद्धवासनः स्यात्, यथा वत्सलेन प्रेयसी, तदापि तस्य प्रीतिसामान्यस्यैव वात्सल्यादिदर्शनेनोद्दीपनं भवति। न भावविशेषस्य। न च रसोद्बोधो जायते। अथोत्तरत्र श्रीभगवन्माधुर्य्यादिश्रवणादौ तल्लीलान्तःपातिवत् स्वतन्त्र एव रसोद्बोध इति। तदेवं भगवत्प्रीतेः रसत्वापत्तौ सिद्धायामेवं विभाव्यते। विभावादिभिः सम्वलिता तत्प्रीतिस्तत्प्रीतिमयो रस इति। तदुक्तम्—यथा खण्डमरिचादीनां सम्मेलनादपूर्व इव कश्चिदास्वादः प्रपानकरसे जायते, विभावादिसम्मेलनादिहापि तथेति। स चायं रसो भगवन्माधुर्य्यानुभूत्यानुभवलक्षणास्वादेनोद्दीपनविभावरूपेण स्वांशेनास्वादरूपः। भगवदादिलक्षणालम्बनविभावादिरूपेणास्वाद्यरूपश्च। अत उभयथा व्यपदेशः। तत्र विभावा द्विविधा आलम्बन उद्दीपनश्च। यथोक्तमग्निपुराणे—विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते। विभावो नाम स द्वेधालम्बनोद्दीपनात्मक इति। आलम्बनो द्विविधः। प्रीतिविषयत्वेन स्वयं भगवान् श्रीकृष्णः। तत्प्रीत्याधारत्वेन तत्प्रियवर्गश्च। उभयत्रैव यत्रेति सप्तम्यर्थत्वव्याप्तेः। तत्र श्रीकृष्णो यथा पूर्वमुदाहृतः, यस्याननं मकरकुण्डलेत्यादिना, गोप्यस्तपः किमचरन् यदमुष्य रूपमित्यादिना च। तस्य तत्तन्माधुर्य्यानभिव्यक्तावपि स्वभावत एव प्रियतमत्वं दर्शयति—प्राणबुद्धिमनःस्वात्मदारापत्यधनादयः यत्सम्पर्कात् प्रिया आसंस्ततः को नु परः प्रियः ॥१११॥

स्वः शुद्धो जीवः। आत्मा देहः। यस्य सम्पर्कात् परम्परासम्

त्वात्। अहं तावत् परमानन्दघनरूप इति स्वतः प्रियः। स्वस्य ममांश-त्वादन्तर्यामी पुरुषोऽपि प्रियः। तस्य च जीवरूपोऽंश इति मत्सम्बन्ध-परम्परया प्रियः। तदध्याससम्बन्धपरम्परया च प्राणादयः प्रिया इत्यर्थः। एवं व्यक्तीकृतरूपान्तरेऽपि श्रीरामेणानुभूतम्। किमेतदद्भुतमिव वासु-देवेऽखिलात्मनि। व्रजस्य सात्मनस्तोकेष्वपूर्वं प्रेम वर्द्धते इति। ततः, श्यामं हिरण्यपरिधिं वनमाल्यबर्हधातुप्रवालनटवेशमनुव्रतांशे। विन्यस्तहस्तमितरेण धुनानमब्जं कर्णोत्पलालककपोलमुखाब्जहास-मित्येतन्मच्चरणेषु ममाविर्भाविषु युष्माकं प्रीत्युत्कर्षोदयो नापूर्वं इति भावः॥ १०॥ २३॥ श्रीभगवान् यज्ञपत्नीः॥ १११॥

तथा तत्प्रियवर्गश्च पूर्वं दर्शितः, तुलयाम लवेनापीत्यादिना। यस्य भगवद्विषयप्रीत्यालम्बनत्वमपि युक्तम्। स्मरणादिपथं गते यस्मिंस्तदाधारा सा प्रीतिरनुभूयते। आलम्बनशब्दस्य विषयाधारयो-र्वर्त्तत इति। अतएवोक्तम्—तत् कथ्यतां महाभाग यदि कृष्णकथा-श्रयम्। अथवास्य पदाम्भोजमकरन्दलिहां सतामिति। तदेवमपि यमाश्रित्य श्रीभगवति सः प्रीतिविशेषः प्रवर्त्तते स एवालम्बनो ज्ञेयः। अन्ये तूद्दीपनाः। अथैवं सवासनभिन्नवासनकद्विविधतत्प्रियवर्गविषया च या प्रीतिः सापि तत्प्रीत्याधारत्वेनैव। न तु स्वसम्बन्धादिना। अतएव तत्प्रियवर्गेऽपि सम्बन्धहेतुकां प्रीतिं निषिध्य श्रीभगवत्येव तामभ्यर्थ्य पुनस्तत्प्रियवर्गे तदाधारत्वेनैव प्रीतिमङ्गीकरोति। अथ तत्र निषेधः—अथ विश्वेश विश्वात्मन् विश्वमूर्त्ते स्वकेषु मे। स्नेह-पाशमिमं छिन्धि दृढं पाण्डुषु वृष्णिषु॥ ११२॥

अथाभ्यर्थना—त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत्। रति-मुद्वहतादद्धा गङ्गेवौघमुदन्वति॥ ११३॥

अथाङ्गीकारः—श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंश-दहनानपवर्गवीर्य। गोविन्द गोद्विजसुरार्त्तिहरावतार योगेश्वरा-खिलगुरो भगवन्नमस्ते॥ ११४॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अत्र श्रीकृष्णसखेत्यादिसम्बोधनैस्तत्प्रीत्याधारत्वेनार्जुनादिष्वपि प्रीतिरङ्गीकृता ॥ १ ॥ ८ ॥ श्रीकुन्ती श्रीभगवन्तम् ॥ ११४ ॥

एवं वृक्ण इत्यादिद्वयं श्रीमदुद्धववाक्यमपि सङ्गमनीयम्। यथा— वृक्णश्च मे सुदृढ़ः स्नेहपाशो दाशार्हवृष्ण्यन्धकसात्वतेषु। प्रसारितः सृष्टिविवृद्धये त्वया स्वमायया ह्यात्मसुबोधहेतिना। नमोऽस्तु ते महायोगिन् प्रपन्नमनुशाधि माम्। यथा त्वच्चरणाम्भोजे रतिः स्यादनपायिनी ॥ ११५ ॥

सृष्टिविवृद्धये त्वया स्वाधीनया मायया यो देहादिसम्बन्धजः स्नेहपाशः प्रसारितः स वृक्णश्छिन्नः। केन आत्मसुबोधहेतिना, त्वदीयप्रीत्युत्पादकशोभनज्ञानलक्षणशस्त्रेण। अधुना त्वत्सम्बन्धेनैव स भातीत्यर्थः। अतएवोत्तरपद्यमपि तथैव। इयञ्चोक्तिः श्रीमदुद्धवस्य सिद्धत्वान्न सम्भवतीति स्वव्याजेनान्यानुद्दिश्यैवेति ज्ञेयम्। अथ कुन्तीवाक्यस्यान्यावतारिका, यथा, गमने पाण्डवानामकुशलं अगमने वृष्णीनामित्युभयतो व्याकुलचित्ता सती तेषु स्नेहच्छेदव्याजेनोभयेषामपि त्वदविच्छेद एव क्रियतामिति च व्यज्यते। ततश्चोत्तरत्र श्रीसूतवाक्ये तां वाढ़मित्युपासन्त्येत्यत्र भगवदभ्युपगमोऽपि सर्वत्रैव सङ्गच्छते। तथार्थस्य वृक्णश्चेत्यादिवाक्यस्य सङ्गमनार्थं तत्तथावतारितम् ॥ ११ ॥ २९ ॥ श्रीमदुद्धवः ॥ ११५ ॥

एवं श्रीदेवक्याः षड़्गर्भानयने तान् प्रति यः स्नेहो दृश्यते स खलु स्वपीतशेषस्तन्यप्रसादेन तदुद्धरणार्थं श्रीभगवतैव प्रपञ्चितः। यथोक्तम्—अपाययत् स्तनं प्रीता सुतस्पर्शपरिप्लुतम्। मोहिता मायया विष्णोर्यया सृष्टिः प्रवर्त्तते। पीत्वामृतं पयस्तस्याः पीतशेषं गदाभृता इत्यादि, ययुर्विहायसा धामेत्यन्तम्। तथापि तन्माया तत्सहोदरतास्फूर्त्तिमेवावलम्ब्य तां मोहितवतीति मन्तव्यम्। अथ श्रीरुक्मिण्यापि स्नेहस्तद्दैन्यादिकौतुकं दिदृक्षुणा श्रीभगवतैव वा तदर्थं तल्लीलाशक्त्यैव वा रक्षितोऽस्तीति लभ्यते। स च भक्तिस्फोरकांश-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मेवावलम्ब्य तस्या ह्यैश्वर्य्यज्ञानसंवलितत्वादन्तःकरणमेवं जातम् । अयं परमेश्वरः । अयं त्वतिनिकृष्टः । तस्मादस्मिन्नयं विप्रकुर्वन्नपि किञ्चित् कर्त्तुमशक्त एव । ततोऽतिदीनोऽयमिति तथा श्रीभगवच्चरणाश्रिताया मम देहसम्बन्धवानिति दीनदयालोर्भक्तसम्बन्धपरम्परामात्रेणोभयदादस्मात्तन्नार्हतीति । एवं ह्यैश्वर्य्यदृष्ट्यैव तत्प्रार्थनम् । योगीश्वराप्रमेयात्मन्नित्यादि । अथ श्रीवलदेवस्य स्वशिष्यीभूतदुर्य्योधनपक्षपातोऽप्येवं मन्तव्यः । क्वचित्तत्र तत्क्षयकरः क्रोधोऽपि दृश्यते । यथा लक्ष्मणाहरणे । सर्वमेतत्तु वैचित्रीपोषार्थं श्रीभगवल्लीलाशक्त्यैव प्रपञ्चात इत्युक्तम् । अथोद्दीपनाः । यद्विशिष्टतया श्रीकृष्ण आलम्बनस्त एव भावविभावनहेतुत्वेन पृथङ्निर्दिष्टा उद्दीपनाः कथ्यन्ते । ते च तस्य गुणजातिक्रियाद्रव्यकालरूपाः । गुणाश्च त्रिविधाः, कायवाङ्मानसाश्रयाः । सर्व एवैते न प्राकृता इत्युक्तम्—मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् । सुहृदं प्रियमात्मानं साम्यासङ्गादयो गुणा इत्यादिना । तानेव श्रीकृष्णमालम्बनीकृत्य समुद्दिशति—सत्यं शौचं दया क्षान्तिस्त्यागः सन्तोष आर्जवम् । शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम् ॥ ज्ञानं विरक्तिरैश्वर्य्यं शौर्य्यं तेजो बलं स्मृतिः । स्वातन्त्र्यं कौशलं कान्तिर्धैर्य्यं मार्दवमेव च ॥ प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः । गाम्भीर्य्यं स्थैर्य्यमास्तिक्यं कीर्त्तिर्मानोऽनहङ्कृतिः ॥ इमे चान्ये च भगवन्नित्या यत्र महागुणाः । प्रार्थ्या महत्त्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित् ॥ ११६ ॥

सत्यं यथार्थभाषणम् ॥ १ ॥ शौचं शुद्धत्वम् ॥ २ ॥ दया परदुःखासहनम् ॥ ३ ॥ अनेन शरणागतपालकत्वं ॥ ४ ॥ भक्तसुहृत्त्वञ्च ॥ ५ ॥ क्षान्तिः क्रोधापत्तौ चित्तसंयमः ॥ ६ ॥ त्यागो वदान्यता ॥ ७ ॥ सन्तोषः स्वतस्तृप्तिः ॥ ८ ॥ आर्जवमवक्रता ॥ ९ ॥ अनेन सर्वशुभङ्करत्वञ्च ॥ १० ॥ शमो मनोनैश्चल्यम् ॥ ११ ॥ अनेन सुदृढ़व्रतत्वञ्च ॥ १२ ॥ दमो वाह्येन्द्रियनैश्चल्यम् ॥ १३ ॥ तपः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्षत्रियत्वादिलीलावतारानुरूपः स्वधर्म्मः ॥ १४ ॥ साम्यं शत्रुमित्रादि-बुद्ध्यभावः ॥ १५ ॥ तितिक्षा स्वस्मिन् परापराधसहनम् ॥ १६ ॥ उप-रतिर्लाभप्राप्तावौदासीन्यम् ॥ १७ ॥ श्रुतं शास्त्रविचारः ॥ १८ ॥ ज्ञानं पञ्चविधम् । बुद्धिमत्त्वं ॥१९॥ कृतज्ञत्वं ॥२०॥ देशकालपात्रज्ञत्वं ॥२१॥ सर्वज्ञत्वं ॥ २२ ॥ आत्मज्ञत्वञ्च ॥ २३ ॥ विरक्तिरसद्विषयवैतृष्णम् ॥ २४ ॥ ऐश्वर्य्यं नियन्तृत्वम् ॥ २५ ॥ शौर्य्यं संग्रामोत्साहः ॥ २६ ॥ तेजः प्रभावः ॥ २७ ॥ अनेन प्रतापश्च । स च प्रभावविख्यातिः ॥ २८ ॥ बलं दक्षत्वम् । तच्च दुष्करक्षिप्रकारित्वम् ॥ २९ ॥ धृतिरिति पाठे क्षोभकारणे प्राप्तेऽव्याकुलत्वम् । स्मृतिः कर्त्तव्यार्थानुसन्धानम् ॥ ३० ॥ स्वातन्त्र्यमपराधीनता ॥३१॥ कौशलं त्रिविधं । क्रियानिपुणता ॥३२॥ युगपद्भुरिसमाधानकारितालक्षणा चातुरी ॥३३॥ कलाविलासविदग्धता-लक्षणा वैदग्धी च ॥ ३४ ॥ कान्तिः कमनीयता । एषा चतुर्विधा। अवयवस्य ॥ ३५ ॥ हस्ताद्यङ्गादिलक्षणस्य ॥ ३६ ॥ वर्णरसगन्धस्पर्श-शब्दानाम् ॥ ३७ ॥ तत्र रसस्त्वाधरचरणस्पृष्टवस्तुनिष्ठो ज्ञेयः ॥ ३७ ॥ वयसश्चेति ॥ ३८ ॥ एतया नारीगणमनोहारित्वमपि ॥ ३९ ॥ धैर्य्य-मव्याकुलता ॥ ४० ॥ मार्दवं प्रेमार्द्रचित्तत्वम् ॥ ४१ ॥ अनेन प्रेम-वश्यत्वञ्च ॥ ४२ ॥ प्रागल्भ्यं प्रतिभातिशयः ॥ ४३ ॥ अनेन वाव-दूकत्वञ्च ॥ ४४ ॥ प्रश्रयो विनयः ॥ ४५ ॥ अनेन ह्रीमत्त्वं ॥ ४६ ॥ यथायुक्तसर्वमानदातृत्वं ॥ ४७ ॥ प्रियंवदत्वञ्च ॥ ४८ ॥ शील सुस्वभावः ॥ ४९ ॥ अनेन साधुसमाश्रयत्वञ्च ॥ ५० ॥ सहो मनः पाटवम् ॥ ५१ ॥ ओजो ज्ञानेन्द्रियपाटवम् ॥ ५२ ॥ बलं कर्मेन्द्रिय-पाटवम् ॥ ५३ ॥ भगस्त्रिविधः । भोगास्पदत्वं ॥ ५४ ॥ सुखित्वं । सर्वसमृद्धिमत्त्वञ्च ॥ ५६ ॥ गाम्भीर्य्यं दुर्विबोधाशयत्वम् ॥ ५७ ॥ स्थैर्य्य-मचञ्चलता ॥ ५८ ॥ आस्तिक्यं शास्त्रचक्षुष्ट्वम् ॥ ५९ ॥ कीर्त्तिः साद्गुण्यख्यातिः ॥ ६० ॥ अनेन रक्तलोकत्वञ्च ॥ ६१ ॥ मानः पूज्य-त्वम् ॥ ६२ ॥ अनहङ्कृतिस्तथापि गर्वरहितत्वम् ॥ ६३ ॥ चकाराद्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ब्रह्मण्यत्व- ॥ ६४ ॥ सर्वसिद्धिनिषेवितत्व- ॥ ६५ ॥ सच्चिदानन्दघनविग्रहत्वादयो ज्ञेयाः ॥ ६६ ॥ महत्त्वमिच्छद्भिः प्रार्थ्या इति महागुणा इति च वरीयस्त्वमपि गुणान्तरम् ॥ ६७ ॥ एतेन तेषां गुणानाम् अन्यत्र स्वल्पत्वं चलत्वञ्च तत्रैव पूर्णत्वम् अविनश्वरत्वञ्चोक्तम्। अतएव श्रीसूतवाक्यम्—नित्यं निरीक्ष्यमाणानां यदपि द्वारकौकसाम्। न वितृप्यन्ति हि दृशः श्रियो धामाङ्गमच्युतमिति। तथा नित्या इति न वियन्ति इति सदा स्वरूपसंप्राप्तत्वमपि गुणान्तरम् ॥ ६८ ॥ अन्ये च जीवालभ्या यथा। तत्राविर्भावमात्रत्वेऽपि सत्यसङ्कल्पत्वम् ॥ ६९ ॥ वशीकृताचिन्त्यमायत्वम् ॥ ७० ॥ आविर्भावविशेषत्वेऽपि अखण्डसत्त्वगुणस्य केवलस्वयमवलम्बनत्वम् ॥ ७१ ॥ जगत्पालकत्वम् ॥७२॥ यथा तथा हतारिस्वर्गदातृत्वम् ॥ ७३ ॥ आत्मारामगणाकर्षित्वम्॥७४॥ ब्रह्मरुद्रादिसेवितत्वम् ॥ ७५ ॥ परमाचिन्त्यशक्तित्वम् ॥ ७६ ॥ आनन्त्येन नित्यनूतनसौन्दर्य्याद्याविर्भावत्वम् ॥ ७७ ॥ पुरुषावतारत्वेऽपि मायानियन्तृत्वम् ॥ ७८ ॥ जगत्सृष्ट्यादिकर्त्तृत्वम् ॥ ७९ ॥ गुणावतारादिबीजत्वम् ॥ ८० ॥ अनन्तब्रह्माण्डाश्रयरोमविवरत्वम् ॥ ८१ ॥ वासुदेवत्वनारायणत्वादिलक्षणभगवत्त्वाविर्भावेऽपि स्वरूपभूतपरमाचिन्त्याखिलमहाशक्तिमत्त्वम् ॥ ८१ ॥ स्वयं भगवल्लक्षणकृष्णत्वे तु हतारिमुक्तिभक्तिदायकत्वम् ॥ ८३ ॥ स्वस्यापि विस्मापकरूपादिमाधुर्य्यवत्त्वम् ॥ ८४ ॥ अनिन्द्रियाचेतनपर्य्यन्ताशेषसुखदातृस्वसान्निध्यत्वम् ॥ ८५ ॥ इत्यादयः ॥ १ ॥ १६ ॥ श्रीपृथिवी धर्म्मम् ॥११६॥

तदेतद्वि[illegible]माच्चदर्शनम्। यत आह—गुणात्मनस्तेऽपि गुणान् विमातुं हितावतीर्णस्य क ईशिरेऽस्येत्यादि ॥ ११७ ॥

स्पष्टम् ॥ ब्रह्मा श्रीभगवन्तम् ॥ ११७ ॥

ते च तस्य गुणाः केचिन्मिथो विरुद्धा अपि अचिन्त्यशक्तित्वेनैकाश्रयाः। श्रुतेस्तु शब्दमूलत्वादिति न्यायेन। मल्लानामशनिरित्यादिदर्शनात्। शिशोरनोऽल्पकप्रवालमृद्वङ्घ्रिहतं व्यवर्त्त-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तेत्यादेश्च। तत्र केवलकोमल्यगुणाविष्कारे सति क्वचित् पल्लव-तल्पेषु नियुद्धश्रमकर्षित इत्यादिकमपि यथार्थमेव। एवमेव श्रीदामविप्रानीतकदन्नभोजननिवारणे लक्ष्म्या अपि प्रवृत्तिः। यथैव तच्चरितेन व्यक्तम्—वालव्यजनमादाय रत्नदण्डं सखीकरादित्यादौ। अतएव इति मुष्टिमित्यादौ सा तत्परेत्युक्तम्। अत्र च एतेनैव मदंश-लेशरूपाया विभूतेरनुग्रहभाजनमयं जात इति कदन्नभोजनेनाल-मिति भावः। विरुद्धार्थसद्भावेऽपि न तु दोषास्तत्र सम्भाव्याः। अप-हतपाप्मेति श्रुतेः। यथाचोक्तं कौर्मे—ऐश्वर्य्ययोगाद्भगवान् विरुद्धार्थोऽभिधीयते। तथापि दोषाः परमे नैवाहार्य्याः समन्ततः इति। ततस्तद्गुणानामन्यदीयानामिव दोषमिश्रत्वं निषेधति—ततस्ततो नूपुरवल्गुशिञ्जितैर्विसर्पती हेमलतेव सा बभौ। विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारिसद्गुणम्। गन्धर्वसिद्धासुर-यक्षचारणत्रैपिष्टपेयादिषु नान्वविन्दत् ॥ ११८ ॥

सा लक्ष्मीः। पदमाश्रयं ध्रुवं नित्यम्। अव्यभिचारिणो नित्याः सन्तश्च गुणा यस्मिन्। तदेव व्यनक्ति त्रिभिः—नूनं तपो यस्य न मन्यु-निर्जयो ज्ञानं क्वचित्तच्च न सङ्गवर्जितम्। कश्चिन्महांस्तस्य न काम-निर्जयः स ईश्वरः किं परतो व्यपाश्रयः। धर्म्मः क्वचित्तत्र न भूत-सौहृदं त्यागः क्वचित्तत्र न मुक्तिकारणम्। वीर्य्यं न पुंसोऽस्त्यजवेग-निष्कृतं न हि द्वितीयो गुणसङ्गवर्जितः। क्वचिच्चिरायुर्न हि शील-मङ्गलं क्वचित्तदप्यस्ति न वेद्यमायुषः। यत्रोभयं कुत्र च सोऽप्य-मङ्गलः सुमङ्गलः कश्चन काङ्क्षते हि माम् ॥ ११९ ॥

अत्र तपआदिभिरपि न साम्यं विवक्षितम्। असाम्यप्रसिद्धेः। यथोक्तम् इमे चेत्यादौ प्रार्थ्या महत्त्वमिच्छद्भिरिति। यस्य दुर्वास-आदेः। क्वचिद्गुरुशुक्रादौ। कश्चिद्ब्रह्मसोमादिः। यः परतो व्यपाश्रयः परापेक्ष इन्द्रादिः स किमीश्वरः। क्वचित् परशुरामादि-तुल्ये तदानीन्तने न भूतसौहृदम्। शिविराजतुल्ये न मुक्तिकारणं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्याग: । पुंसः कार्त्तवीर्य्यादितुल्यस्य वीर्य्यमस्ति, किन्त्वजवेगनिष्कृतं कालवेगपरिहृतं न भवति । यतस्तेषां तत्तद्गुणत्वमपि मायागुणकृतमेव न तु तदतीततद्गुणत्वमिति परामृशति, नहीति । हि यस्मात् द्वितीयः श्रीमुकुन्दादन्यः । अनेन सनकादय आत्मारामा अपि परिहृताः । तेषां शमदमादिगुणानां मायिकत्वात् । तथा शिवोऽपि परिहृतः । शिवः शक्तियुतः शश्वत्त्रिलिङ्गो गुणसंवृत इति । हरिर्हि निर्गुणः साक्षादित्याद्युक्तेः । अथ प्रकारान्तरेण शिवं परिहर्त्तुमुपक्रमते । क्वचिन्मार्कण्डेयादौ चिरायुश्चिरजीविता । शीलमङ्गलशब्देनात्र भोग उच्यते । इन्द्रियदमनशीलत्वादिति टीकायां हेतुविन्यासात् । अभोगिनो ह्यमङ्गलस्वभावत्वेन लोके नामाग्रहणदर्शनाच्च । यद्वा क्वचिन्मयदानवादौ चिरजीवितास्ति, शीले स्वभावे मङ्गलं माङ्गल्यं नास्तीत्यर्थः, असुरस्वभावत्वादेव । बलिप्रभृतिषु शीलमङ्गलमप्यस्ति, किन्त्वायुषो वेद्यं वेदनं नास्ति, मरणानिश्चयात् । यत्र शिवे मङ्गलः स्वभावो नित्यत्वाच्चायुषो वेद्यं चेत्युभयमप्यस्ति । सोऽप्यमङ्गलः वहिः श्मशानवासाद्यमङ्गलचेष्टितः । श्रीमुकुन्दं लक्ष्यीकृत्याह, यः कश्चन कोऽपि तत्तद्गुणातिक्रम्यनन्तगुणत्वात्तत्तद्दोषहीनत्वाच्च सुमङ्गलः अतिशयेन सर्वेषां मङ्गलनिधानरूपः । स तु मां स्वरूपेण परमानन्दरूपां शक्त्या च सर्वसम्पत्तिदायिनीमपि न हि काङ्क्षति । स एव स्वरूपगुणसम्पत्तिभिः पूर्ण इत्यर्थः । अथच प्रेमवशोऽसौ प्रेमवतीं मां कथं नाकाङ्क्षेदित्यभिप्रेत्य श्लेषेण कश्चन कोऽपि सुमङ्गलोऽसौ हि निश्चितं मां काङ्क्षतीत्यपि भावितम् । इदमत्र तत्त्वम् । परमानन्दरूपे तस्मिन् गुणादिसम्पल्लक्षणानन्तशक्तिवृत्तिका स्वरूपशक्तिर्द्विधा विराजते । तदन्तरेऽनभिव्यक्तनिजमूर्त्तित्वेन तद्वहिरप्यभिव्यक्तलक्ष्म्याख्यमूर्त्तित्वेन । इयं च मूर्त्तिमती सती सर्वगुणसम्पदधिष्ठात्री भवति । ततः स्वस्मिन् परमानन्दत्वस्य सर्वगुणसम्पत्तेश्च स्वरूपसिद्धपरमसंपूर्णत्वात् उभयथापि न तां पृथग्भूय स्थितां मूर्त्तिमतीमपेक्षते । यथा खल्वन्यः । किन्तु



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भक्तवश्यतास्वभावेन तां प्रेमवतीमपेक्षत एवेति प्रकरणं निगमयति—

एवं विमृश्याव्यभिचारिसद्‌गुणैर्वरं निजैकाश्रयतागुणाश्रयम्। वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम् ॥ १२० ॥

मुकुन्दं वरं वव्र इत्यन्वयः। तं विशिनष्टि। अव्यभिचारिभिः सद्भिर्निर्दोषैश्च गुणैर्वरं सर्वोत्तमम्। निजैकाश्रयतया अन्यनिरपेक्षत्वेनैव च गुणाश्रयं स्वरूपसिद्धतत्तद्‌गुणमित्यर्थः। अतएव तेषां गुणानां प्रकृतिसम्बन्धित्वमपि खण्डितम्। स्वतः परमानन्दघनरूपत्वात् सर्वगुणैरपेक्षितं स्वयं निरपेक्षम्। अतएव निजाभीप्सितमिति ॥ ८।८॥ श्रीशुकः ॥ १२० ॥

अथ पूर्वोक्तगुणविरोधत्वाद्दोषमात्रं तस्मिन्नास्त्येव। तत्र सामार्थ्यैश्वर्ये दयाविपरीतं परमसमर्थस्य तस्याभक्तनरकादिसंसारदुःखामुद्धारित्वं प्राकृतदुःखास्पृष्टचित्तत्वेन परमात्मसन्दर्भादौ परिहृतमस्ति। पाण्डवादिवत् क्वचित् प्राकृतदुःखाभावात् तद्वियोगाद्वा उत्थिते भक्तिरससञ्चारिलक्षणभक्तदैन्येऽपि कदाचित् तत्प्रसाददर्शनाभावश्च तेन पुष्टेन सञ्चारिणा भक्तिरसपोषणार्थं एव। भक्तियोगविधानार्थं कथं पश्येमहि स्त्रिय इति तस्यैव मुख्यप्रयोजनत्वात्। ब्रह्मन् यमनुगृह्णामि तद्विशो विधुनोम्यहमिति सुदुस्तरान्नः स्वान् पाहि इत्यादौ न शक्नुमस्त्वच्चरणं संत्यक्तुमिति विपदः सन्तु ताः शश्वदिति नाघ्नन्तु सख्यो भजतोऽपीति च दैन्येन तत्पोषणश्रवणात्। एवमेव श्रीमद्व्रजबालानां ब्रह्मद्वारा मोहनमपि व्याख्येयम्। तस्मिन् वह्निर्मोहेऽपि तेषां मनसि भोजनमण्डलावस्थितमात्मानमनुसन्दधानानां वत्सान्वेषणार्थागतश्रीकृष्णप्रत्यागमनभावनासातत्येन प्रेमरसपोषणात्। यथोक्तम्—ऊचुश्च सुहृदं कृष्णं स्वागतं तेऽतिरंहसा। नैकोऽप्यभोजि कवल एहीतः साधु भुज्यतामिति। यज्ञपत्नीनामस्वीकारस्तासां आग्रहीत्वात्तादृशलीलायां सर्वेषामनभिरुचेः। भजते तादृशीः क्रीड़ा याः श्रुत्वा तत्परो भवेत् इति न्यायात्। नैतत् पूर्वंकृतं त्वया न करिष्यति

चापरि। यस्त्वं दुहितरं गच्छेरनिगृह्याङ्गजं प्रभुः। तेजीयसा-मपि ह्येतन्न सुश्लोक्यं जगद्गुरो इत्यत्र तेजीयसामपि तदनुचितता श्रूयते इति। एवमेवाह—न प्रीतयेऽनुरागाय ह्यङ्गसङ्गो नृणामिह। तन्मनो मयि युञ्जाना अचिरान्मामवाप्स्यथ॥ १२१॥

इह ब्राह्मणजन्मनि भवतीनामङ्गस्सङ्गः साक्षान्मत्परिचर्य्यारूपो-ऽपि नृणां एतच्चरितद्रष्टृश्रोतॄणां प्रीतये रुचिमात्राय न भविष्यति किमुत नानुरागायेति। तत्तस्मात् अचिरात् अनन्तरजन्मनि इति ॥१०॥२३॥ श्रीभगवान् यज्ञपत्नीः॥ १२१॥

, अनेन क्वचित् भक्तसुहृत्त्ववैपरीत्याभासोऽपि व्याख्यातः। किञ्च भक्ता द्विविधाः; दूरस्था परिकराश्च। तत्र दूरस्थभक्तार्थं क्वचिद्भक्त-सुहृत्त्वलक्षणेन परमप्रबलेन गुणेन ब्रह्मण्यत्वाद्यावरणमपि प्रायो दृश्यते श्रीमदम्बरीषचरितादौ। परिकरार्थन्तु न दृश्यते श्रीजयविजय-शापादौ। स्कान्दद्वारकामाहात्म्यगतदुर्वाससो दुर्वृत्तविशेषे च। उभयमपि तत्र तत्र सुहृत्त्वस्यैव चिह्नम्। तथैव हि पूर्व्वत्रात्मीयत्वम् उत्तरत्र चात्मैकत्वं प्रसिध्यति। तथोक्तम्, अहं भक्तपराधीन इत्या-दिना। तद्धि ह्यात्मकृतं मन्ये यत् स्वपुंभिरसत्कृता इत्यादिना च। तदेवं भक्तसुहृत्त्वमात्रस्य तादृशत्वे स्थिते प्रेमार्द्रत्वं तद्वश्यत्वञ्च सुतरा-मेव सर्वाच्छादकम्। तच्च प्रेम्णः स्वरूपनिरूपणे दर्शितम्। अतएव सर्वोद्दीपनगणमुख्यत्वेन तत्र तत्र सचमत्कारमनुस्मृतम्। तत्रो-ल्लासाख्येनानुभावेन व्यञ्जितं तस्य प्रेमार्द्रत्वं यथा—भगवानपि विश्वात्मा पृथुनोपहूतार्हणः। समुज्जिहानया भक्त्या गृहीतचरणा-म्बुजः। प्रस्थानाभिमुखोऽप्येनमनुग्रहविलम्बितः। पश्यन् पद्म-पलाशाक्षो न प्रतस्थे सुहृत् सताम्। स आदिराजो रचिताञ्जलि-र्हरिं विलोकितुं नाशकदश्रुलोचन इत्यादि॥ १२२॥

स्पष्टम्॥ ४॥ २०॥ श्रीशुकः॥ १२२॥

अथ सात्त्विकेनापि व्यञ्जितं यथा। तत्र भक्त्यार्द्रत्वमाह—यस्मिन्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भगवतो नेत्रान्न्यपतन्नश्रुबिन्दवः। कृपया संपरीतस्य प्रपन्नेऽर्पितया भृशम्। तद्वै बिन्दुसरो नामेत्यादि ॥ १२३ ॥

भगवतः श्रीशुक्लाख्यस्य। प्रपन्ने भक्ते श्रीकर्दमाख्ये ॥ ३ ॥ २१ ॥ श्रीमैत्रेयः ॥ १२३ ॥

वात्सल्यार्द्रत्वमाह—कृष्णरामौ परिष्वज्य पितरावभिवाद्य च। न किञ्चनोचतुः प्रेम्णा साश्रुकण्ठौ कुरूद्वह ॥ १२४ ॥

पितरौ कुरुक्षेत्रमिलितौ श्रीयशोदानन्दाख्यौ मातापितरौ ॥ १० ॥ ८२ ॥ श्रीशुकः ॥ १२४ ॥

मैत्र्यार्द्रत्वमाह—तं विलोक्याच्युतो दूरात् प्रियापर्य्यङ्कमास्थितः। सहसोत्थाय चाभेत्य दोर्भ्यां पर्य्यग्रहीन्मुदा। सख्युः प्रियस्य विप्रर्षे-रङ्गसङ्गातिनिर्वृतः। प्रीतो व्यमुञ्चदबिन्दून्नेत्राभ्यां पुष्करेक्षणः ॥१२५॥

तं श्रीदामविप्रम् ॥ १० ॥ ८० ॥ श्रीशुकः ॥ १२५ ॥

कान्ताभावार्द्रत्वमाह—तासां रतिविहारेण श्रान्तानां वदनानि सः। प्रामृजत् करुणः प्रेम्णा शन्तमेनाङ्ग पाणिना ॥ १२६॥

तासां श्रीगोपीनाम्। प्रेम्णा करुणः साश्रुनेत्र इत्यर्थः। सात्त्विकान्तरं चोक्तं वैष्णवे—गोपीकपोलसंश्लेषमभिपत्य हरेर्भुजौ। पुलकोद्गमसस्याय स्वेदाम्बुघनतां गताविति ॥ १० ॥ ३३ ॥ श्रीशुकः ॥१२६॥

अथ प्रेमवश्यत्वं यथा। तत्र भक्तिवश्यत्वमाह, गद्येन—यस्य भगवान् स्वयमखिलजगद्गुरुर्नारायणो द्वारि गदापाणिरवतिष्ठते निज-जनानुकम्पितहृदय इति ॥ १२७ ॥

यस्य श्रीबलेः ॥ ५ ॥ १४ ॥ श्रीशुकः ॥ १२७ ॥

वात्सल्यवश्यत्वमाह—गोपीभिः स्तोभितोऽनृत्यद्भगवान् बालवत् क्वचित्। उद्गायति क्वचिन्मुग्धस्तद्वशो दारुयन्त्रवदित्यादि ॥ १२८ ॥

स्पष्टम् ॥ १० ॥ ११ ॥ श्रीशुकः ॥ १२८ ॥

मैत्रीवश्यत्वमाह—सारथ्यपारषदसेवनसख्यदौत्यवीरासनानुगमन-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्रवनप्रणामान् । स्निग्धेषु पाण्डुषु जगत्प्रणतिञ्च विष्णोर्भक्तिं करोति नृपतिश्चरणारविन्दे ॥ १२९ ॥

स्निग्धेषु पाण्डुषु विष्णोर्यानि सारथ्यादीनि कर्म्माणि तानि शृण्वन् तथा विष्णोर्जगत्कर्त्तृकां प्रणतिञ्च शृण्वन् नृपतिः परीक्षित् विष्णोश्चरणारविन्दे भक्तिं करोति । पारषदं पार्षदत्वं सभापतित्वम् । सेवनं चित्तानुवृत्तिः । वीरासनं रात्रौ खड्गहस्तस्य तिष्ठतो जागरणम् ॥ १ ॥ १६ ॥ श्रीसूतः ॥ १२९ ॥

कान्तभाववश्यत्वमाह—न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः । या माभजन् दुर्जरगेहशृङ्खलां संवृश्च्य तद्वः प्रतियातु साधुना ॥ १३० ॥

निरवद्या परमशुद्धभावविशेषमात्रेण प्रवृत्तत्वात् परमशुद्धा संयुक् संयोगो यासां तासां वः स्वसाधुकृत्यं तदनुरूपमदीयपरमसुखदसेवां न पारये न प्रत्युपकारेणानुकर्त्तुं शक्नोमीत्यर्थः । केनापि न पारये, विगतो बुधो गणनाविज्ञो यस्मात् तेन स्वभावनित्येनाप्यायुषेत्यर्थः । तासामनुरागस्य साधिष्ठत्वं लोकधर्म्मातिक्रान्तत्वादाह, या इति । तस्माद्वः साधुना सौशील्येनैव तत् प्रतियातु प्रत्युपकृतं भवतु । अहन्तु भवतीनाम् ऋणएवेति भावः ॥ १० ॥ ३२ ॥ श्रीशुकः ॥ १३० ॥

तदेवं तस्य प्रेमार्द्रत्वादिके स्थिते तदादिकस्य तस्मिन् परमसाधुगणे च परमहृद्यसुखदत्वात् तद्धेतुकं कादाचित्कं सत्यादिवैपरीत्यमपि परमगुणशिरोमणिशोभां भजते । तत्र सत्यविरोध्यपि गुणो यथा—स्वनिगममपहाय मत्प्रतिज्ञामृतमधिकर्त्तुमित्यादि ॥ १३१ ॥

स्पष्टम् ॥ १ ॥ ९ ॥ श्रीभीष्मः ॥ १३१ ॥

शौचविरोधी यथा—अंसन्यस्तविषाणासृक्मदबिन्दुभिरङ्कित इत्यादि ॥ १३२ ॥

स्पष्टम् ॥ १० ॥ ४३ ॥ श्रीशुकः ॥ १३२ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्षान्तिविरोधी च, यस्तान् द्वेष्टि स मां द्वेष्टि यस्ताननु स मामन्वित्यादिमहाभारतस्थश्रीभगवद्वाक्यात्। यथा, धनं हरत गोपाना-मित्याद्यनन्तरम्, एवं विकत्थमाने वै कंसे प्रकुपितोऽव्ययः ॥ १३३ ॥

स्पष्टम् ॥ १० ॥ ४४ ॥ श्रीशुकः ॥ १३३ ॥

सन्तोषविरोधी च, अपि मे पूर्णकामस्येत्यादेः भक्तिसुखोदयस्थ-भगवद्वाक्यात्। यथा, तमङ्कमारूढ़मपाययत् स्तनं स्नेहस्नुतं सस्मित-मीक्षती मुखम्। अतृप्तमुत्सृज्येत्यादि ॥ १३४ ॥

एवं जघास हैयङ्गवमन्तरं गत इत्यादौ स्तोऽपि तत्तल्लीलावेशः।

१० ॥ ९ ॥ श्रीशुकः ॥ १३४ ॥

एवं वालिप्रभृतावार्जवादिगुणविरोधी च सुग्रीवहनुमदादिपक्ष-पातमयो ज्ञेयः। सर्वशुभङ्करत्वञ्च क्रोधोऽपि देवस्य वरेण तुल्य इति न्यायेन सिद्धम्। अथ शमविरोधी कामश्च तस्य प्रेष्ठजन-विशेषरूपासु तासु प्रेमविशेषरूप एव। तथाहि—स एष नरलोके-ऽस्मिन्नवतीर्णः स्वमायया। रेमे स्त्रीरत्नकूटस्थो भगवान् प्राकृतो यथा ॥ १३५ ॥

स्वेषु निजजनेषु या माया कृपा तत्सुखचिकीर्षामयप्रेमा तया लोकेऽवतीर्ण इति तस्या एव सर्वावतारप्रयोजननिमित्तत्वात् स्त्रीरत्नकूटस्थोऽपि तादृशरमणवशकारिप्रेमविशेषरूपया तयैव रेमे, न तु प्रसिद्धकामेनेत्यर्थः। अत्र रत्नपदेन तासामपि तद्योग्यत्वं बोधयित्वा तादृशप्रेमविशेषमयत्वं बोधितम्। एवं भाववैलक्षण्ये-ऽपि क्रियया साम्यमित्याह, प्राकृतो यथेति। अत्र श्रीभगवतो-ऽप्यप्राकृतत्वं दर्शयित्वा तद्वत् कामविषयत्वं निराकृतम्। अथ पुनरपि तादृशप्रेमवतीषु तास्वपि प्राकृतकामाधिकारो नास्तीति दर्शनेन तस्यापि कामुकवैलक्षण्येन तदेव स्थापयति—उद्दामभावपिशु-नामलवल्गुहासव्रीड़ावलोकनिहतो मदनोऽपि यासाम्। संमुह्य चाप-मजहात् प्रमदोत्तमास्ता यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः ॥१३६॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मदनः प्राकृतः कामः । उन्नटभावसूचकनिर्म्मलमनोहराभ्यां हासव्रीड़ावलोकाभ्यां निहतः तन्महिमदर्शनेन स्वयमेवोत्तार्थीकृत-स्वास्त्रादिबलोऽभूत् । अतएव संमुह्य चापमजहात् । भ्रूपल्लवं धनु-रपाङ्गतरङ्गितानि वाणा इत्यादिवत् । तत्र निजास्त्रप्रयोगं न कुरुत एवेत्यर्थः । तथाभूता अपि प्रमदोत्तमाः प्रमोदेन प्रकृष्टप्रेमानन्दविशे-षेण परमोत्कृष्टास्ताः स्वच्छन्द एव याः स्वतोऽप्युत्कृष्टप्रेमवत्यस्तासां साम्येच्छया कुहकैस्ताद्दशप्रेमाभावेन कपटांशप्रयुक्तैः सद्भिः कपटा-दिभिर्यस्येन्द्रियं विमथितुं तद्वद्विशेषेण मथितुं न शेकुः । किन्तु स्वप्रे-मानुरूपमेव शेकुरिति । तस्मात् प्रेममात्रोत्थायिविकारत्वात्तस्य कामुक-वैलचण्यमिति भावः । तस्मादेतत्तत्त्वमविज्ञायैव, तमयं मन्यते लोको ह्यसक्तमपि सङ्गिनम् । आत्मौपम्येन मनुजं व्यापृण्वानमतोऽबुधः ॥१३७॥

अयं साधारणो लोकः असक्तमपि प्राकृतगुणेष्वनासक्तमपि । यतः आत्मौपम्येन मनुजं व्यापृण्वानं कामादिव्यापारयुक्तं मन्यते । यथा आत्मनः प्राकृतमनुष्यत्वादि तथैव मन्यत इत्यर्थः । अतएवाबुध एवासौ लोक इति । प्राकृतगुणेष्वसक्तत्वे हेतुः, एतदीशनमीशस्य प्रकृतिस्थो-ऽपि तद्गुणैः । न युज्यते सदात्मस्थैर्यथा बुद्धिस्तदाश्रया ॥ १३८ ॥

अवतारादौ प्रकृतिगुणमये प्रपञ्चे तिष्ठन्नपि सदैव तद्गुणैर्न युज्यते इति यत् एतदीशस्येशनमैश्वर्य्यम् । तत्र व्यतिरेके दृष्टान्तः, यथेति । तदाश्रया प्रकृत्याश्रया बुद्धिर्जीवज्ञानं यथा युज्यते तथा नेति । अन्वये वा । तदाश्रया श्रीभगवदाश्रया परमभागवतानां बुद्धिर्यथा प्रकृतिस्था कथञ्चित्तत्र पतितापि न युज्यते तद्वत् । एवमेवोक्तं श्रीमदु-द्धवेन तृतीये—भगवानपि विश्वात्मा लोकवेदपथानुगः । कामान् सिषेवे द्वार्वत्यामसक्तः सांख्यमास्थित इति । ननु तादृशमैश्वर्य्यं तस्य ताः किं जानन्ति । यदि जानन्ति, तदा रहोलीलायां बुध्यत्येव तादृश-प्रेमेत्याशङ्क्याह—तं मेनिरेऽवला मौढ्यात् स्त्रैणं चानुव्रतं रहः । अप्र-माणविदो भर्त्तुरीश्वरं मतयो यथा ॥ १३९ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ईश्वरमपि तं रह एकान्तलीलायां मौग्ध्यात् तादृशप्रेममोहात् भर्त्तुरप्रमाणविदस्तादृशैश्वर्य्यज्ञानरहिताः स्त्रैनम् आत्मवश्यम् अनुव्रतमनुवृतं च मेनिरे। तच्च नायुक्तमित्याह, यथा तासां मतयः प्रेमवासनाः तथैव स इति, ये यथा मामित्यादेः, स्वेच्छामयस्येत्यादेश्च प्रामाण्यादिति भावः॥ १॥ १॥ श्रीसूतः॥ १३६—१३६॥

तथा चान्यत्र। गृहादनपगं वीक्ष्य राजपुत्रोऽच्युतं स्थितम्। प्रेष्ठं न्यमंसतात्मानमतत्त्वविदः स्त्रियः॥ १४०॥

आत्मानं प्रत्येकमेव प्रेष्ठं सर्वतः प्रियतमम् अमंसतेत्यर्थः। अतएव अतत्त्वविदः। ऊर्द्ध्वोर्द्ध्वप्रेयसीसद्भावात्। नन्वात्मारामस्य कथं पत्नीषु प्रेम, उच्यते, तासु रमणत्वेनैव लोकवन्न तस्य प्रेम, किन्तु शुद्धप्रेमसम्बन्धेनैव। तथाहि—चार्वब्जकोषवदनायतबाहुनेत्रसप्रेमहासरसवीक्षितवल्गुजल्पैः। सम्मोहिता भगवतो न मनो विजेतुं स्वैर्विभ्रमैः समशकन् वनिता विभूम्नः॥ १४१॥

अत्र प्रेमेति तासु श्रीकृष्णप्रेम दर्शितम्। अतएव वनिताशब्दप्रयोगः। वनिताजनितात्यर्थानुरागायाञ्च योषितीति नानार्थवर्गात्। तेन तस्मिन् तासाञ्च प्रेम दर्शितम्। अतस्तत्प्रेममात्रविजितं यद्भगवतो मनस्तत्तु स्वैः केवलस्त्रीजातीयैर्विभ्रमैर्विजेतुं न शेकुरित्यर्थः। स्त्रीजातीयविभ्रमानुवादपूर्वकं पूर्वार्थमेव विशदयति—स्मायावलोकलवदर्शितभावहारि-भ्रूमण्डलप्रहितसौरत-मन्त्रशौण्डैः। पत्न्यस्तु षोड़शसहस्रमनङ्गवाणैर्यस्येन्द्रियं विमथितुं करणैर्न शेकुः॥ १४२॥

स्वयमेवानङ्गवाणरूपैः करणैर्भावहावादिभिर्न शेकुः। तानि विशिनष्टि स्मायेति। स्मायः स्मितम्। भावोऽभिप्रायः। तादृशभ्रूमण्डलैः प्रहिता विक्षिप्ताश्च ते सौरतमन्त्रैः सुरतरूपार्थसाधकमन्त्रैः शौण्डाः प्रगल्भाश्च ते तादृशैः॥ १०॥ ६७॥ श्रीशुकः॥ १४०—१४२॥

अथ श्रीरघुनाथचरिते स्त्रीसङ्गिनां गतिमिति प्रथयंश्चचारित्या-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दिकवाक्येष्वन्तस्तत्प्रेमवश एव स्त्रीसङ्गिनां कामिनां गतिं प्रथयन् क्रियासाम्येन वहिर्विख्यापयन् इत्येवाभिप्रायः । उक्तञ्च तदध्यायान्ते, प्रेम्णानुवृत्त्या शीलेन प्रश्रयावनता सती । धिया ह्रिया च भावेन भर्त्तुः सीताहरन्मन इति । तदनन्तराध्यायेऽपि, तां श्रुत्वा भगवान् रामो रुन्धन्नपि धिया शुचः । स्मरंस्तस्या गुणांस्तांस्तान्नाशक्नोद्रोद्धु-मीश्वर इत्यनेनान्तस्तत्प्रेमवशतां भक्तिविशेषसौख्याय व्यज्य वहिः कामुकक्रियासाम्यदर्शनया साधारणजनवैराग्यजननायोक्तम् । स्त्रीपुं-प्रसङ्ग एतादृक् सर्वत्र त्रासमावहेदित्यादि । युक्तं चोभयविधत्वं भगवच्चरितस्य चतुरस्रहितत्वात् । तस्मात्तत्कामस्य प्रेयसीविष-यकप्रीतिविशेषमात्रशरीरत्वम् । ततो न दोषः । तन्मात्रशरीरत्वे-नैवं विशिष्योक्तम् । रेमे रमाभिर्निजकामसंप्लुत इति । स सत्यकामो-ऽनुरतावलागण इति । अथ साम्यमपि भक्तादन्यत्रैव । समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः । ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहमित्यादेः । अथ भक्तप्रेमविशेषमयनरलीलाविशमये क्वचित्तत्प्रकाशविशेषे कदाचित् सर्वज्ञत्वादिविरोधिमोहादिकोऽपि दृश्यते । सोऽपि गुण एव । तादृशमोहादिकस्य तल्लीलामाधुर्य्य-राहित्येन विदुषामपि प्रीतिसुखदत्वात् । न तु दोषः, स्वेच्छया-ङ्गीकृतत्वात् । अतएवाह—रच्चो विदित्वाखिलभूतहृत्स्थितः स्वानां निरोद्धुं भगवान् मनो दधे । तावत् प्रविष्टा स्वसुरोदरान्तर-मिति ॥ १४३ ॥

तथा, ततो वत्सानदृष्ट्वेत्यादि ॥ १० ॥ १३ ॥ श्रीशुकः ॥१४३॥

यदा च तस्य स्वेच्छा न भवति प्रतिकूलैर्मोहादिना योजयितु-मिष्यते च सः तदा सर्वथा तेन न युज्यत एव । यथा शात्वमायया तस्य मोहाभावं स्थापयन्नाह—एवं वदन्ति राजर्षे ऋषयः केचना-न्विता इत्यादौ, क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसम्भवाः क्वचाखण्डितविज्ञानज्ञानैश्वर्य्यः पुरेड़ित इत्यादि ॥ १४४ ॥

CC.0 Jangamwadi Math Collection. Digitized by eGangotri

पूर्वोक्तरीत्यैवोक्तं ये त्वङ्गसम्भवाः परमायादिपारवश्यमाचक्षताः शोकादयस्ते चेति ॥ १० ॥ ७७ ॥ श्रीशुकः ॥१४४॥

भक्तप्रेमपारवश्यसम्बन्धेन तु शोकादयोऽपि वर्णिता एव। श्रुत्वा तां भगवान्नाम इत्यादौ श्रीरामचरिते। सख्युः प्रियस्य विप्रर्षे रित्यादौ श्रीदामविप्रचरिते। तथाह—गोप्याददे त्वयि कृतागसि दाम तावद्-या ते दशाश्रुकलिलाञ्जनसम्भ्रमाच्चम्। वक्त्रं निनीय भयभावनया स्थितस्य सा मां विमोहयति भीरपि यद्बिभेति ॥ १४५ ॥

अत्र भीरपि यद्बिभेति इत्युक्त्या तस्या ऐश्वर्य्यज्ञानं व्यक्तम्। ततो यदि सा भीः सत्यमेव भवति तदा तस्या मोहोऽपि न सम्भवेदिति गम्यते। स्फुटमेव चान्तर्भयमुक्तं भयभावनया स्थितस्येति ॥ १ ॥ ८॥ श्रीकुन्ती श्रीभगवन्तम् ॥१४५॥

अथ स्वातन्त्र्यं भक्तसम्बन्धं विनैव, अहं भक्तपराधीन इत्यादेः। अथ गोचारणादावपि सुखित्वगुणानुकूल्यमेव मन्तव्यम्। तद्व्याजेन नानाक्रीड़ासुखमेव ह्युपचीयते। यथाह, व्रजे विक्रीड़तोरेवं गोपाल-च्छद्ममायया। ग्रीष्मो नामर्त्तुरभवन्नातिप्रेयान् शरीरिणाम्। स च वृन्दावनगुणैर्वसन्त इव लक्षितः ॥ १४६ ॥

क्रियाकृतस्य दुःखस्य निषेधः, व्रजे विक्रीड़तोरिति। छद्म व्याजः। माया वञ्चनम्। गोपालव्याजेन यद्वञ्चनं तेन विक्रीड़तोः, प्रातस्तद्व्याजेन नानाजनान् वञ्चयित्वा व्रजाद्वनं गत्वा स्वच्छन्दं निजाभीष्टाः क्रीड़ाः कुर्वतोरित्यर्थः। सायं व्रजाव[illegible]गमने चान्या इति। कालकृतस्य दुःखस्य निषेधः, स चेति। अनेन देशकृतस्य च इति ज्ञेयः ॥ १० ॥ १८ ॥ श्रीशुकः ॥१४६॥

अथ पूर्ववत् स्थैर्य्यविरोधी वाल्यादिचाञ्चल्यमपि गुणत्वेनैव स्फुटं दृश्यते। यथा, वत्सान् मुञ्चन् क्वचिदसमये इत्यादि। रक्तालोकनं यथाह—स्निग्धस्मितावलोकेन वाचा पीयूषकल्पया। चरित्रेणान-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ह्रवेन श्रीनिकेतेन चात्मना । इमं लोकममुञ्चैव रमयन् सुतरां यदून् ।
रेमे क्षणदया दत्तक्षणस्त्रीक्षणसौहृदः ॥ १४७ ॥

रजन्या दत्तावसरः स्त्रीणां क्षणः उत्सवरूपं सौहृदं यस्य ॥३॥३१॥
श्रीमानुद्धवः ॥१४७॥

अत्र एवं लीलानरवपुरित्यादिकमपि उदाहार्य्यम् । एवमपि
यदसुराणामपरक्तत्वं तत्र कारणमाह, पापच्यमानेन हृदातुरेन्द्रियः
समृद्धिभिः पूरुषबुद्धिसाक्षिणाम् । अकल्प एषामधिरोढुमञ्जसा परं
पदं द्वेष्टि यथासुरा हरिम् ॥ १४८ ॥

, स्पष्टम् ॥ ४ ॥ ३ ॥ श्रीशिवः ॥ १४८ ॥

यद्यप्येषां गुणानां सर्वेषामपि भगवति नित्यत्वमेव तथापि तत्त-
ल्लीलासिद्ध्यर्थं तेषां क्वचित् कस्यचित् प्रकाशश्च भवति । अतएवाह—
प्रयुक्ताशिषः सत्यास्तत्र तत्र द्विजेरिताः । नानुरूपानुरूपाश्च निर्गु-
णस्य गुणात्मनः ॥ १४९ ॥

निर्गुणस्य मध्यपदलोपेन निर्गता गुणेभ्यो गुणा यस्य तस्य प्राकृत-
गुणातीतनित्यगुणस्य नानुरूपाः नित्यतत्परिपूर्णत्वेन लाभान्तरा-
योगात् । गुणात्मनः तदाशीर्वादाङ्गीकारद्वारा तद्गुणविशेषप्रवर्त्तक-
निवर्त्तकस्य अनुरूपाश्च । तदङ्गीकारे हेतुः, सत्या इति । तदेवं
प्रकाशनाप्रकाशनहेतोरेव श्रीभगवतश्चन्द्रपरपराह्णोज्ज्वलतादिके
सत्यपि तल्लीलामाधुर्य्यविस्तारकस्तमिस्रादिव्यवहारः सिध्यति॥१॥१०॥
श्रीसूतः ॥ १४९ ॥

अतएवावसरविशेषं प्राप्य तत्तद्गुणसमुदायविशेषाविर्भावादेक
एवासौ तत्र पृथक् पृथगेव धीरोदात्तादिव्यवहारचतुष्टयमपि प्रकाश-
यति । तत्र तत्र धीरोदात्तो यथा, गम्भीरो विनयी क्षन्ता करुणः सुदृढ़-
व्रतः । अकत्थनो गूढ़गर्वो धीरोदात्तः सुसत्त्वभृदिति । एते च गुणा
गोवर्द्धनोद्धरणादिशक्रसम्भाषान्तलीलायां व्यक्ताः सन्ति । अथ धीर-
ललितः, विदग्धो नवतारुण्यः परिहासविशारदः । निश्चिन्तो धीर-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ललितः स्यात् प्रायः प्रेयसीवशः ॥ एते च श्रीमद्व्रजदेवीसच्चित-लीलायां सुष्ठु व्यक्ताः । अथ धीरशान्तः, शमप्रकृतिकः क्लेशसहनश्च विवेचकः । विनयादिगुणोपेतो धीरशान्त उदीर्य्यते॥ एते च तादृशानां युधिष्ठिरादीनां सन्निधौ तत्पालनलीलायामुज्जृम्भन्ते । अथ धीरोद्धतः, मात्सर्य्यवानहङ्कारी मायावी रोषणश्च यः । विकत्थनश्च विद्वद्भिर्धीरोद्धत उदाहृतः । एते च तादृशानसुरान् प्राप्य क्वचिदुदयन्ते । अतएव दुष्टदण्डनहेतुत्वादेषां गुणत्वञ्च। तदेवमुद्दीपनेषु गुणा व्याख्याताः। अथ तेषु जातिर्द्विविधा; तस्य तत्सम्बन्धिनाञ्चेति । तत्र तस्य जातिर्गोपत्वक्षत्रियत्वादिका । श्यामत्वकिशोरत्वादिकमन्यच्च तदुपमा-बुद्धिजनकञ्च । तत्सम्बन्धिनां जातिस्तु गवादिका ज्ञेया । अथो-द्दीपनेषु क्रिया लीला एव । ताश्च द्विविधाः । तत्र तत्सान्निध्येन मायया दर्शिताः सृष्ट्यादयो मायिक्यः । तदीयश्रीविग्रहचेष्टास्तु स्मित-विलासखेलानृत्ययुद्धादयः स्वरूपशक्तिमय्यः । श्रीविग्रहस्य स्वरूपा-नन्दैकरूपत्वात् । रमयात्मशक्त्या यद्यत् करिष्यतीति तृतीयस्थब्रह्म-स्तवाच्च । ईश्वरस्यापि तस्य वर्त्तत एव स्वाभाविकं तदिच्छाकौतुकं लोकवत्तु लीलाकैवल्यमिति न्यायेन । यथाह—एक एवेश्वरस्तस्मिन् सुरकार्य्ये सुरेश्वरः । विहर्त्तुकामस्तानाह समुद्रोन्मथनादिभिः ॥१५०॥

एक एवेश्वरः समर्थोऽपीति टीका च । अतएव तत्तज्जाति-लीलाभिनिवेशः श्रूयते यथा विष्णुधर्मोत्तरे—यस्यां यस्यां यदा योनौ प्रादुर्भवति कारणात् । तद्योनिसदृशं वत्स तदा लोके विचेष्टते। संहर्त्तुं जगदीशानः समर्थोऽपि तदा नृप । तद्योनिसदृशोपायैर्बध्यान् हिंसति यादवेत्यादि ॥ ८ ॥ ६ ॥ श्रीशुकः ॥ १५० ॥

तत्र श्रीविग्रहचेष्टा द्विविधाः; ऐश्वर्य्यमय्यो माधुर्य्यमय्यश्चेति। तत्र निजजनप्रेमसयत्नान्माधुर्य्यमय्य एव रमणाधिक्ये हेतवः । यथैव परमविस्मयहर्षाभ्यामाह—एवं निगूढ़ात्मगतिः स्वमायया गोपात्मजत्वं चरितैर्विड़म्बयन् । रेमे रमालालितपादपल्लवो ग्राम्यैः समं ग्राम्य-वदीशचेष्टितः ॥ १५१ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीनारायणादिरूपेषु स्वाविर्भावेषु रमालालितपादपल्लवोऽपि स्वेषु अलौकिकेष्वपि व्रजवासिषु निरीक्ष्य तद्वपुरम्बरे चरदित्यादौ हलधर ईषदत्रसदिति न्यायलब्धेन तल्लीलामाधुर्य्यविशेषावेशेन लौकिकवद्व्यवहरत्सु या माया कृपा साधवो हृदयं मह्यमित्यादि-न्यायेन तत्कृतैक्यव्यवहारः तया निगूढ़ात्मगतिस्तिरोहितपारमै-श्वर्य्यस्थितिः सन् लौकिकं यद्गोपात्मजत्वं तदेव अलौकिकगोपात्मजत्व-मयैश्चरितैर्विड़म्बयन् अनुकुर्वन् रेमे स्वयमपि रतिसुवाह्व । अत-स्तादृशरमणेषु यथा तदिच्छा, न तथा रमालालितपादपल्लवत्वेऽपीति दर्शितम् । रमणमेव दर्शयति । यथाधुनापि ग्राम्यैर्वालकैः समं कश्चिद्ग्रामाधिपवालको रमते तद्वत् । तत्तल्लीलाप्रधान एव रमते नत्वैश्वर्य्यप्रधान इत्यर्थः । दृश्यते च तत्तल्लीलावेशः, स जातकोपस्फुरि-तारुणाधर इत्यादौ, रहोऽपि जाततादृशभावात् । तान् वीक्ष्य कृष्ण इत्यादौ वालानां स्वकरापच्युतताजातानुतापात् दिष्टकृतत्वमननाच्च । अतएव तस्य तत्तल्लीलासु लोकानुसारि यद्यद्बुद्धिकर्म्मसौष्ठवं तत्तत् सुष्ठु मुनिभिरपि सचमत्कारं वर्ण्यते । यथोक्तं श्रीशुकेन जरा-सन्धयुद्धान्ते, स्थित्युद्भवान्तं भुवनत्रयस्य यः समीहतेऽनन्तगुणः स्वलीलया । न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्यानुविधस्य वर्ण्यत इति । तेषु चरितेषु यदलौकिकमासीत्तदपि तत्तल्लीलारसमात्रासक्तस्य तस्य स्वभावसिद्धैश्वर्य्यत्वेन लीलाख्या शक्तिरेव स्वयं सम्पादितवती-त्याह, ईशं तत्तल्लीलोचितसुघटदुर्घटसर्वार्थसाधकं चेष्टितं लीलैव यस्य स इति । यथोक्तम्—तथोवाच हृषीकेशं नारदः प्रहसन्निव । योगमायोदयं वीक्ष्य मानुषीमीयुषोरिति । यथा च—यद्येवं तर्हि व्यादेहीत्युक्तः स भगवान् हरिः । व्यादत्ताव्याहतैश्वर्य्यः क्रीड़ामनुज-वालकः । सा तत्र ददृशे विश्वमिति । अत्र यदि सत्यगिरस्तर्हि समक्षं पश्य मे मुखमित्यन्ता तदीयसरसक्तैव लीला पूर्व्वमुक्ता । अव्या-हतैश्वर्य्य इत्यादिका तु तल्लीलाशक्तिकृतैव । सा च व्रजेश्वर्य्या वात्सल्य-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पोषिके विस्मयशङ्के पुष्णाति। नाहं भक्षितवानम्बेति सम्भ्रमेण मिथ्यैव कृष्णवाक्यञ्च सत्यापयति। एवं श्रीदामोदरलीलायां यावत्तस्य बन्धनेच्छा न जातासीत् तावद्रज्जुपरम्पराभ्यस्तस्मिन् द्व्यङ्गुलाधिकत्वप्रकाशः। तदुक्तं तद्दामेत्यादिना। यदा तु मातृश्रमेण तदिच्छा जाता तदा न तत्प्रकाशः। तदुक्तं स्वमातुः स्विन्नगात्राया इत्यादिना। एवं श्रीकृष्णकृपादृष्टिप्रभावेनैव विषमयमोहात् सखीनां समुद्धरणं तदावेशेनैव दावाग्निपाने चिकीर्षितमात्रे स्वयं तन्नाश इत्यादिकं ज्ञेयम्। क्रीड़ामनुजबालक इति क्रीड़या लीलया मनुजबालकस्थितिं प्राप्तोऽपीत्यर्थः। अन्यत्र च क्रीड़ामानुषरूपिण इति। एवं, कार्य्यमानुष इत्यत्रापि कार्य्यं क्रीड़ैव। तस्मात् साधु व्याख्यातम् एवं निगूढ़ात्मगतिरित्यादि ॥ १० ॥ १५ ॥ श्रीशुकः ॥ १५१ ॥

अन्यत्र च पूर्वरीत्यैवाह—कृत्वा तावन्तमात्मानं यावतीर्व्रजयोषितः। रराम भगवांस्ताभिरात्मारामोऽपि लीलया ॥ १५२ ॥

तादृशोऽपि ताभिः सह रेमे। तस्यारविन्दनयनस्येत्यादौ चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोरितिवत्। तत्र सर्वाभिरेव युगपल्लीलेच्छा यदा जाता तदैव तावत्प्रकाशा अपि तयैव लीलाशक्त्या घटिता इत्याह कृत्वेति। लीलया लीलाशक्तिद्वारैव न तु स्वद्वारा तावन्तमात्मानम् आत्मनः प्रकाशं कृत्वा प्रकटय्य ॥१०॥३३॥ श्रीशुकः ॥ १५२ ॥

तदेवं माधुर्य्यमय्याया लीलाया उत्कर्षो दर्शितः। अस्यां माधुर्य्यमय्याञ्च युगपद्विचित्रलीलाविधानस्य तस्यापि ऐश्वर्याधिक्यहेतुत्वेन पूर्वदर्शितविलासमय्येव श्रीशुकदेवादीनामपि (श्रीशिवब्रह्मादीनामपि) परममधुरत्वेन भासते। पूर्वत्र यथा इत्थं सतां ब्रह्मसुखानुभूत्येत्यादिषु च तादृशत्वेन वर्णनात्। उत्तरत्र शक्रसर्वपरमेष्ठिपुरोगाः कश्मलं ययुरित्यादिषु तत्रैव मोहश्रवणाच्च। अथ क्रीड़ामानुषरूपिणस्तस्यान्या लोकमर्य्यादामयी धर्मानुष्ठानलीला तु धर्म-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वीरादिभक्तानामेव मधुरत्वेन भासते न तादृशानाम् । यथाह,—ब्रह्मन् धर्मस्य वक्ताहं कर्त्ता तदनुमोदिता । तच्छिक्षयन् लोकमिममास्थितः पुत्र माखिद ॥ १५२ ॥

तत्र हि श्रीनारदो नानाक्रीड़ान्तरदर्शनेन सुखं लब्धवान् धर्मानुष्ठानदर्शनेन तु खेदं तत्राह, ब्रह्मन्निति ॥ १० ॥ ६९ ॥ श्रीभगवान्नारदम् ॥ १५३ ॥

अथ पूर्ववदेव कनिष्ठज्ञानिभक्तानामेव मधुरत्वेन भासमानां तदौदासीन्यलीलामप्याह—तस्यैव रममाणस्य संवत्सरगणान् बहून् । गृहमेधेषु योगेषु विरागः समजायत ॥ १५४ ॥

गृहमेधेषु गार्हस्थ्योचितधर्मानुष्ठानेषु । वैराग्यमौदासीन्यम् ॥ ३ ॥ ३ ॥ श्रीमानुद्धवो विदुरम् ॥ १५४ ॥

अथोद्दीपनेषु तदीयद्रव्याणि च परिष्कारास्त्रवादित्रस्थानचिह्नपरिवारभक्ततुलसीनिर्माल्यादीनि । तत्र परिष्कारा वस्त्रालङ्कारपुष्पादयः । ते च तदीयास्तत्स्वरूपभूतत्वेनैव भगवत्सन्दर्भे दर्शिताः । तथापि भूषणभूषणाङ्गमिति न्यायेन तत्सौन्दर्य्यसौरभ्यादिपरिष्क्रियमाणतयैव तं परिष्कुर्वन्ति, न केवलस्वगुणेन । स च तत्तद्रूपान् तान् स्वशक्तिविलासान् प्राप्य स्वीयतत्तद्गुणान् विशेषतः प्रकाशयतीति तस्य तत्तदपेक्षापि सिध्यति । अतएव पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथ इत्यादौ अभिव्यक्तासमोर्द्धसौन्दर्य्यस्यापि परिष्कारत्वेन वर्णितयोः स्रक्पीताम्बरयोऽपि तादृशत्वं गम्यते । ईदृशान्येव वासांसि नित्यं गिरिवनेचरा इति रजकवाक्यं त्वासुरदृष्ट्या । श्रीविष्णुपुराणे लौकिकदृष्ट्यापि सुवर्णाञ्जनचूर्णाभ्यां तौ तदा भूषिताम्बरावित्युत्तमत्वावगमात् । तथा मूले च । श्यामं हिरण्यपरिधिमित्यादि । आस्तां तदपि । कालिय-वरुण-गोविन्दाभिषेककर्त्तृमहेन्द्राद्युपहृतासङ्ख्यवस्त्रादीनां तद्दिने चावश्यं विचित्रपरिहितानां तेनान्यथा प्रतीयमानत्वमेव ज्ञायते । ततः कंसाहृतवाससां स्वीकारश्च तदीयस्वरूपशक्त्यैक-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रादुर्भावरूपाणां नरकाहृतकन्यानामिवेति ज्ञेयम्। अथास्त्राणि यष्टिचक्रादीनि, वादित्राणि वेणुशृङ्गादीनि, स्थानानि वृन्दावनमथुरादीनि, चिह्नानि पदाङ्कादीनि, परिवारा गोपाद्याः, निर्माल्यानि गोपीचन्दनादीनि यथायथं तत्र तत्र ज्ञेयानि। अथोद्दीपनेषु कालाश्च तदीयजन्माष्टम्यादयः। तथा भक्तस्य स्वयोग्यता च तदुद्दीपनत्वेन दृश्यते। यथा—ततो रूपगुणौदार्य्यसम्पन्ना प्राह केशवम्। उत्तरीयान्तमाकृष्य सस्मयं जातहृच्छया ॥ १५५ ॥

स्पष्टम् ॥ १० ॥ ४२ ॥ श्रीशुकः ॥ १५५ ॥

तथा तद्रसविशेषेषु श्रीभगवदङ्गविशेषा अपि उद्दीपनवैशिष्ट्यं भजन्ते। यथा श्रियो निवासो यस्योरः पानपात्रं मुखं दृशाम्। बाहवो लोकपालानां सारङ्गाणां पदाम्बुजम् ॥ १५६ ॥

श्रियः प्रेयस्याः। याः सर्वेषामेव प्रियवर्गाणां दृशश्चक्षूंषि तासाम्। लोकपालानां पाल्यानाम्। सारङ्गाणां सर्वेषामेव भक्तानां निवास आश्रयः। यथास्वं भावोद्दीपनत्वात् ॥ १ ॥ ११ ॥ श्रीसूतः ॥१५६॥

क्वचिद्विरोधिनोऽपि प्रतियोगिमुखेन तदुद्दीपना भवन्ति। सूर्य्यादितापा इव जलाभिलाषस्य। यथा—श्रुत्वैतत् भगवान् रामो विपक्षीयनृपोद्यमम्। कृष्णञ्चैकं गतं हर्त्तुं कन्यां कलहशङ्कितः। बलेन महता सार्द्धं भ्रातृस्नेहपरिप्लुत इत्यादि ॥ १५७ ॥

एवं वात्सल्यादौ श्रीकृष्णस्य धूलिपङ्कक्रीड़ादिकृतमालिन्यादयोऽपि ज्ञेयाः। कान्तभावादौ वृद्धादिप्रातिकूल्यादयोऽपि। यदा च ते भयानकादिगौणरससप्तकं जनयन्ति तदापि पञ्चविधमुख्यप्रीतिरसपोषकतामेव प्रपद्यन्ते। यथोक्तं भक्तिरसामृतसिन्धौ—अमी पञ्चैव शान्ताद्या हरेर्भक्तिरसा मताः। एषु हासादयः प्रायो बिभ्रति व्यभिचारितामिति ॥ १० ॥ ५३ ॥ श्रीशुकः ॥ १५७ ॥

तदेवमुद्दीपना उद्दिष्टाः। एषु च श्रीवृन्दावनसम्बन्धिनस्तु प्रशस्ताः। श्रहो यत्र सर्वेषामेव परमप्रीत्येकास्पदस्य श्रीकृष्णस्यापि परमप्रीता-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्पदत्वं श्रूयते। वृन्दावनं गोवर्द्धनमित्यादौ। श्लाघितञ्च स्वयमेव, अहो अमी देववरामरार्च्चितमित्यादिभिः। तथा तदीयपरमभक्तैश्च तद्भूरि भाग्यमिह जन्मेत्यादिना, आसामहो चरणरेणुजुषामित्यादिना, वृन्दावनं सखि भुवो वितनोति कीर्त्तिमित्यादिना च। अतएव श्रीकृष्णस्यापि तत्रस्थाः प्रकाशा लीलाश्च परमवरीयांसः। यथा त्रैलोक्यसम्मोहनतन्त्रे तदीयश्रीमदष्टादशाक्षरप्रस्तावे—सन्ति तस्य महाभागा अवताराः सहस्रशः। तेषां मध्येऽवताराणां बालत्वमतिदुर्लभमिति। बाल्यञ्च षोड़शवर्षपर्य्यन्तमिति प्रसिद्धम्। तथाच हरिलीलाटीकायामुदाहृता स्मृतिः—गर्भस्थसदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः। बालस्त्वाषोड़शाद्वर्षात् पौगण्डश्चेति प्रोच्यते इति। अन्यत्र च श्लाघितम्—नन्दः किमकरोद्ब्रह्मन् श्रेय एवं महोदयम्। यशोदा वा महाभागा पपौ यस्याः स्तनं हरिः॥ पितरौ नान्वविन्देतां कृष्णोदारार्भकेहितम्। गायन्त्यद्यापि कवयो यल्लोकशमलापहमित्यादिना। अतएवैकादशे सर्वश्रीकृष्णचरितकथनान्ते समान्यतः श्रीकृष्णचरितस्य भक्त्युद्दीपनत्वमुक्त्वा वैशिष्ट्यविवक्षया बाल्यचरितस्य पृथगुक्तिः—इत्थं हरेर्भगवतो रुचिरावतारवीर्य्याणि बालचरितानि च शन्तमानि। अन्यत्र चेह च श्रुतानि गृणन् मनुष्यो भक्तिं जनः परमहंसगतौ लभेतेति। सोऽयं च तत्प्रकाशलीलानामुत्कर्षो बहुविधः। ऐश्वर्य्यगतस्तावत् सत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तिब्रह्माण्डकोटीश्वरदर्शनादौ। कारुण्यगतश्च पूतनाया अपि साक्षान्मातृगतिदाने। माधुर्य्यगतस्तु तावङ्घ्रियुग्ममनुकृष्य सरीसृपन्तावित्यादौ। वत्सान् मुञ्चन् क्वचिदसमय इत्यादौ। गोपीभिः स्तोभितोऽनृत्यदित्यादौ। क्वचिद्वादयतो वेणुमित्यादौ। क्वचिद्वनाशाय मनो दधद्व्रजादित्यादौ। क्वचिद्गायति गायत्स्वित्यादौ। तं गोरजश्छुरितकुन्तलबद्धबर्हमित्यादौ। कृष्णस्य नृत्यतः केचिदित्यादौ। धेनवो मन्दगामिन्य इत्यादौ। श्यामं हिरण्यपरिधिमित्यादौ। भगवानपि ता


CC.0- Jangamwadi Math Collection. Digitized by eGangotri

रात्नोरित्यादौ। वामबाहुकृतवामकपोल इत्यादौ च। किं बहुना सर्वत्रैव सहृदयैः सर्वं एवावगन्तव्यः। अथानुभावाश्चित्तस्थभावानामवबोधकाः। ते द्विविधाः; उद्भास्वराख्याः सात्त्विकाख्याश्च। तत्र भावजा अपि बहिश्चेष्टाप्रायसाध्या उद्भास्वराः। ते चोक्ताः। नृत्यं विलुठितं गानं क्रोशनं तनुमोटनम्। हुङ्कारो जृम्भणं श्वासभूमालोकानपेक्षिता। लालास्रवोऽट्टहासश्च घूर्णाहिक्कादयोऽपि चेति। अथ सात्त्विकाः अन्तर्विकारैकजन्याः। यत्नान्तर्विकारोऽपि तदंश इति भावत्वमपि तेषां मन्यन्ते, तत्र ते स्तम्भस्वेदरोमाञ्चाः स्वरभेदोऽथ वेपथुः। वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः। एषु प्रलयो नष्टचेष्टता। भगवत्प्रीतिहेतुकप्रलये च बहिश्चेष्टानाशः। नत्वन्तर्भगवत्स्फूर्त्त्यादेरपि। यथोक्तं श्रीमदुद्धवमुद्दिश्य—स मुहूर्त्तमभूत्तूष्णीं कृष्णाङ्घ्रिसुधया भृशम्। तीव्रेण भक्तियोगेन निमग्नः साधुनिर्वृत इत्यादिना, शनकैर्भगवल्लोकान्नृलोकं पुनरागत इत्यन्तेन। यथा गारुडे—जाग्रत्स्वप्नसुषुप्तेषु योगस्थस्य च योगिनः। या काचिन्मनसो वृत्तिः सा भवेदच्युताश्रयेति। अतएव तदानीं तत्तद्रसानामास्वादभेदस्फूर्त्तिरप्यवगन्तव्या। अथ सञ्चारिणः, ये व्यभिचारिणश्च भण्यन्ते, सञ्चारयन्ति भावस्य गतिमिति विशेषेणाभिमुख्येन चरन्तः स्थायिनं प्रतीति च निरुक्तेः, ते च त्रयस्त्रिंशत्। निर्वेदोऽथ विषादो दैन्यं ग्लानिश्रमौ च मदगर्वौ। शङ्कात्रासावेगा उन्मादापस्मृती तथा व्याधिः। मोहो मृतिरालस्यं जाड्यं व्रीड़ावहित्था च। स्मृतिरथ वितर्कचिन्तामतिधृतयो हर्ष उत्सुकत्वञ्च। औग्र्यामर्षासूयाश्चापल्यं चैव निद्रा च। सुप्तिर्बोध इतीमे व्यभिचारिणः समाख्याताः। एषां लक्षणमुज्ज्वले दर्शनीयम्। एषु त्रासः वत्सलादिषु भयानकादिदर्शनात् तदर्थं तत्सङ्गतिहानितर्केणात्मार्थञ्च भवति। निद्रा तच्चिन्तया शून्यचित्तत्वेन तत्सङ्गत्यानन्दव्याप्त्या च भवति। श्रमः परमानन्दमयतदर्थायासतादात्म्यप्राप्तौ भवति। आलस्यं तादृश-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अमहेतुकं कृष्णेतरसम्बन्धिक्रियाविषयकं भवति । बोधश्च तद्दर्शनादि-वासनायाः स्वयमुद्बोधेन भवतीत्यादिकं ज्ञेयम् । किञ्च निर्वेदादीनाञ्चामीषां लौकिकगुणमयभावायमानानामपि वस्तुतो गुणातीतत्वमेव, तादृशभगवत्प्रीत्यधिष्ठानात् । अथैतत्संवलनात्मको भगवत्प्रीतिमयो रसोऽपि व्यञ्जित एव । स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् । भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुम् । क्वचिद्रुदन्त्यच्युतचिन्तया क्वचिद्धसन्ति नन्दन्ति वदन्त्यलौकिकाः । नृत्यन्ति गायन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृता इत्यनेन । अत्र हरिरालम्बनो विभावः । स्मरणमुद्दीपनः । स्मारणादिक उद्भास्वराख्योऽनुभावः । पुलकः सात्त्विकः । चिन्तादयः सञ्चारिणः । संजातया भक्त्येति स्थायी । भवन्ति तूष्णीं परमेत्य निर्वृता इति तत्सम्वलनम् । परं परमरसात्मकं वस्त्वित्यर्थः । एष च भगवत्प्रीतिमयरसः पञ्चधा प्रीतिभेदपञ्चकेन । ते च ज्ञानभक्तिमयवत्सलमैत्रीमयोज्ज्वलाख्याः क्रमेण ज्ञेयाः । एतेषाञ्च स्थायिनां भावान्तराश्रयत्वात् नियताधारताच्च मुख्यत्वम् । ततस्तदीयरसानामपि मुख्यता । ये त्वन्येऽद्भुतादिरसस्थायिनो विस्मयादयस्तेषां तत्प्रीतिसम्बन्धेनैव भागवतरसान्तःपातात् पञ्चविधेषु प्रियेषु कादाचित्कोद्भवत्वेनानियताधारत्वाच्च गौणता । ततस्तदीयरसानामपि गौणता । तत्र मुख्या मधुरेण समापयेदितिन्यायेन गौणरसानां रसाभासानामप्युपरि विवरणीयाः । गौणाः सम्प्रति विव्रियन्ते । येषु विस्मयादयो विभाववैशिष्ट्यवशेन स्वयं तत्प्रीत्युत्थाऽपि तत्प्रीतिमात्मसात्कृत्य वर्द्धमानाः स्थायितां प्रपद्यन्ते, ते च अद्भुतो हास्यवीरौ च रौद्रो भीषण इत्यपि । वीभत्सः करुणश्चेति गौणाः सप्त रसाः स्मृताः । तत्र तत्प्रीतिमयोऽयमद्भुतो रसः । यत्रालम्बनो लोकोत्तराकस्मिकक्रियादिमत्त्वेन विस्मयविषयः श्रीकृष्णः । तदाधारस्तत्प्रियश्च । उद्दीपनास्तादृशतच्चेष्टाः । अनुभावाः नेत्रविस्ताराद्याः । व्यभिचारिणश्चावेगहर्षजाड्याद्याः । स्थायी तत्प्रीतिमयो

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विस्मयः। तदुदाहरणञ्च, चित्रं बतैतदेकेन वपुषा युगपत् पृथक्। गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत् इत्यादिकम् ज्ञेयम्। अथ तन्मयो हास्यो रसः। तत्रालम्बनश्चेष्टावाग्वेषवैकृत्यविशेषवत्त्वेन तत्प्रीतिमयहासविषयः श्रीकृष्णः। तदाधारस्तत्प्रियश्च। तथा यदि तद्विशिष्टत्वेनैव तत्प्रियाप्रियौ च तत्प्रीतिमयहासविषयौ भवतस्तदापि तत्कारणस्य प्रीतेर्विषयः श्रीकृष्ण इति स एव मूलमालम्बनम्! हास्यस्यापि तद्विशिष्टत्वेनैव प्रवृत्तेस्तु सुतरामेव। अतः केवलस्य हासांशस्य विषयत्वेन विज्ञाततत्प्रियाप्रियौ वहिरङ्गावेवालम्बनाविति। एवं दानयुद्धवीररसादिष्वपि ज्ञेयम्। उद्दीपनास्तु तज्जनकस्य चेष्टावाग्वेषवैकृतादयः। अनुभावाश्च नासौष्ठगण्डविस्पन्दनादयः। व्यभिचारिणो हर्षालस्यावहित्थादयः। स्थायी च तत्प्रीतिमयो हासः। स च स्वविषयानुमोदनात्मकस्तदुत्प्रासात्मको वा चेतोविकाशः। ततस्तदात्मकत्वेन विषयोऽप्यस्यास्ति। तस्योदाहरणे तु मोदनात्मको यथा, वत्सान् मुञ्चन् क्वचिदसमये क्रोशसञ्जातहास इत्यादि। हस्ताग्राह्ये रचयति विधिमिति। एवं धार्ष्ट्यान्युशति कुरुते इत्यादि। इत्थं स्त्रीभिः सभयनयनश्रीमुखालोकिनीभिर्व्याख्यातार्था प्रहसितमुखी न ह्युपालब्धुमैच्छदित्यन्तम् ॥ १५८ ॥

व्याख्यातस्तदीयचापल्यलक्षणोऽर्थो यस्यै सा ॥ १० ॥ ८ ॥ श्रीशुकः ॥ १५८ ॥

उत्प्रासात्मको यथा—तासां वासांस्युपादाय नीपमारुह्य सत्वरः। हसद्भिः प्रहसन् वालैः परिहासमुवाच ह ॥ १५९ ॥

स्पष्टम् ॥ १० ॥ २२ ॥ श्रीशुकः ॥ १५९ ॥

यथा च—कत्थनं तदुपाकर्ण्य पौण्ड्रकस्याल्पमेधसः। उग्रसेनादयः सभ्या उच्चकैर्जहसुस्तदा ॥ १६० ॥

स्पष्टम् ॥ ११ ॥ श्रीशुकः ॥ १६० ॥

अथ तत्प्रीतिमयो वीररसः। तत्र वीररसश्चतुर्द्धा। धर्म्मदयादान-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

युद्धात्मकत्वेनोत्साहस्य स्थायिनश्चातुर्विध्यात्। तत्र धर्म्मवीररसः। तत्रालम्बनो धर्म्मचिकीर्षातिशयलक्षणस्य धर्मोत्साहस्य विषयाभावात् प्रीतिमयत्वेनैव लब्धो विषयः श्रीकृष्णः। तदाधारस्तद्भक्तश्च। उद्दीपनाः सच्छास्त्रश्रवणादयः। अनुभावा नयश्रद्धादयः। व्यभिचारिणो मति-स्मृत्यादयः। स्थायी तत्प्रीतिमयो धर्मोत्साहः। तदुदाहरणञ्च, क्रतुराजेन गोविन्द राजसूयेन पावनीः। यक्ष्ये विभूतिर्भवतस्तत् सम्पा-दय नः प्रभो इत्यादिकम्। अथ तन्मयो दयावीररसः। अत्रालम्बन-स्तत्प्रीतिजातया तदीयतावगनसर्वभूतविषयकदययात्मव्ययेनापि स-त्यर्थमाणदीनवेषाच्छन्ननिजरूपः श्रीकृष्णः। तादृशदयाधारो भक्तः। पित्रादीनां तादृशी दया तु वत्सलादिकमेव पुष्णाति करुणं वा। उद्दी-पनास्तदार्त्तिव्यञ्जनादयः। अनुभावा आश्वासनोक्त्यादयः। व्यभि-चारिणः औत्सुक्यमतिहर्षादयः। स्थायी तत्प्रीतिमयो दयोत्साहः। उदाहरणञ्च, कृच्छ्रप्राप्तकुटुम्बस्य क्षुत्तृड्भ्यां जातवेपथोः। अतिथि-र्ब्राह्मणः काले भोक्तुकामस्य चागमत्। तस्मै संव्यभजत् सोऽन्नमादृत्य श्रद्धयान्वितः। हरिं सर्वत्र संपश्यन्नित्यारभ्य, एवं प्रभाष्य पानीयं म्रियमाणः पिपासया। पुक्कसायाददाद्धीरो निसर्गकरुणो नृपः। तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम्। आत्मानं दर्शयाञ्चक्रु-र्माया विष्णुविनिर्मिता इत्यन्तम् ॥ १६१ ॥

स्पष्टम् ॥ ९ ॥ २१ ॥ श्रीशुकः ॥ १६१ ॥

अथ तन्मयो दानवीररसः। द्विधा चायं सम्पद्यते। बहुप्रदत्वेन समुपस्थितदुरापार्थत्यागेन च। तत्र प्रथमस्यालम्बनम् अन्यसम्प्र-दानके च दाने दानद्रव्येण तत्तृप्तेरेव मुख्योद्देशेन तदुद्देशे पर्य्यवसानात्। तत्संप्रदानके तु स्पष्टतदुद्देशात् दित्सातिशयलक्षणस्य दानोत्साहस्य विषयः श्रीकृष्णस्तदाधारस्तत्प्रियश्च। अन्यः संप्रदानस्तु वहिरङ्गः। उद्दीपनाः सम्प्रदानवीक्षाद्याः। अनुभावा वाञ्छाधिकदानस्मिताद्याः। व्यभिचारिणो वितर्कौत्सुक्यहर्षाद्याः। स्थायी तत्प्रीतिमयो दानोत्-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

साहः। उदाहरणञ्च, नन्दस्त्वात्मज उत्पन्ने ज़ाताह्लादो महामनाः। इत्यादि ॥ १६२ ॥

स्पष्टम् ॥ १० ॥ ६ ॥ श्रीशुकः ॥ १६२ ॥

तथा, एवं ग्रस्तः स्वगुरुणा सत्यान्न चलितो महान्। वामनाय ददावेतामर्चित्वोदकपूर्वकम् ॥ १६३ ॥

एतां पृथ्वीम् ॥ ८ ॥ २० श्रीशुकः ॥ १६३ ॥

अथ द्वितीयस्यालम्बनः। उपस्थिततद्दुरापार्थत्यागेच्छातिशयलक्षणस्य तदुत्साहस्य धर्मोत्साहवदेव विषयः श्रीकृष्णास्तदाधारस्तद्भक्तश्च। उद्दीपनाः कृष्णालापस्मितादयः। अनुभावास्तदुत्कर्षवर्णनदृढ़िमादयः। सञ्चारिणो धृतिप्रचुराः। स्थायी तत्प्रीतिमयस्त्यागोत्साहः। तदुदाहरणं सालोक्यसार्ष्टिसारूप्येत्यादिकमेव। अथ तन्मयो युद्धवीररसः। तत्र योद्धा तत्प्रियतमः। तस्यैव तत्प्रीतिमययुद्धोत्साहात् प्रतियोद्धा तु क्रीड़ायुद्धे श्रीकृष्णो वा तत्पुरस्तस्यैव मित्रविशेषो वा। साक्षाद्युद्धे पुनस्तत्प्रतिपक्षः। तत्र श्रीकृष्णप्रतियोद्धृकत्वे तत्प्रीतिमययुयुत्सातिशयलक्षणतदुत्साहविषयतया तस्यैवालम्बनत्वं सर्वथा सिद्धम्। इतरप्रतियोद्धृकत्वेऽपि हास्यरसवत्तत्प्रीतिमयत्वेन मूलमालम्बनत्वं तस्यैव। तत्प्रतिपक्षस्तु युयुत्सांशमात्रस्य वहिरङ्ग आलम्बनः। तत्र योद्धृप्रतियोद्धारौ मित्रविशेषावाधारत्वविषयत्वाभ्यामालम्बनाविति। उद्दीपनाः प्रतियोद्धृकत्स्मितादयः। व्यभिचारिणो गर्वावेगादयः। स्थायी तत्प्रीतिमयो युद्धोत्साहः। उदाहरणञ्च त्रिविधप्रतियोद्धृक्रमेण—भ्रामणैर्लङ्घनैः क्षेपैरास्फोटनविकर्षणैः। चिक्रीड़तु र्नियुद्धेन काकपक्षधरौ क्वचित् ॥ १६४ ॥

काकपक्षचूड़ाकरणात् प्राक्तनाः केशाः। तद्धारिणौ रामकृष्णौ। नियुद्धेन बाहुयुद्धेन। तच्च भ्रामणादिभिः। एवमेव हरिवंशे— तथा गाण्डीवधन्वानं विक्रीड़न् मधुसूदनः। जिगाय भरतश्रेष्ठ कुन्त्याः प्रमुखतो विभुरिति ॥ १० ॥ १८ ॥ श्रीशुकः ॥ १६४ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथा, रामकृष्णादयो गोपा ननृतुर्युयुधुर्जगुरिति ॥ १६५ ॥

अत्र तदग्रे परेऽपि गोपास्तं सन्तोषयन्तो युयुधुरित्यागतम् ॥ १० ॥ १८ ॥ श्रीशुकः ॥ १६५ ॥

तथा जरासन्धबधे—संचिन्त्यारिबधोपायं भीमस्यामोघदर्शनः । दर्शयामास विटपं पाटयन्निव संज्ञया । तद्विज्ञाय महासत्त्वो भीमः प्रहरतां वरः । गृहीत्वा पादयोः शत्रुं पातयामास भूतले ॥ १६६ ॥

स्पष्टम् ॥ १० ॥ ७२ ॥ श्रीशुकः ॥१६६॥

अथ तत्प्रीतिमयो रौद्ररसः । तत्रालम्बनस्तत्प्रीतिमयक्रोधस्य विषयः श्रीकृष्णस्तदाधारस्तत्प्रियजनश्च । तस्य विषयश्चेत्तद्धितस्तदहितः स्वाहितो वा भवति तदापि पूर्ववत्तत्प्रीते विषयत्वेन तस्यैव मूलमालम्बनत्वम् । अन्ये तु क्रोधांशमात्रस्य बहिरङ्गालम्बनाः । तत्र प्रमादादिना श्रीकृष्णात् सख्या अत्याहिते सख्याः क्रोधविषयः श्रीकृष्णः । तेन वध्वादीनामवगते सङ्गमे वृद्धादीनाञ्च स एव । अथ तद्धितस्य प्रमादेन तदनवेक्षणादन्यस्य क्रोधविषयः स्यात् । तदहितो दैत्यादिः । स्वाहितस्तु स्वस्य तत्सम्बन्धबाधकः । अथोद्दीपनाः क्रोधविषयस्यावज्ञादयः । अनुभावा हस्तनिष्पेषादयः । व्यभिचारिण आवेगादयः । स्थायी तत्प्रीतिमयः क्रोधः । वृद्धायास्तत्प्रीतिमयः क्रोधः । वृद्धायास्तत्प्रीतिमयत्वं व्रजजनत्वात्तदापि स्वाभाविक्याः प्रीतेरन्तर्भावमात्रेण अन्येषां तद्विकारत्वेन । तच्च तस्यैव मङ्गलकामनाप्रायतया । तत्र पूर्वेषां त्रयाणामुदाहरणमन्यत्रान्वेष्यम् । उत्तरयोर्द्वयोस्तु यथा—

ततः पाण्डुसुताः क्रुद्धा मत्स्यकैकयसृञ्जयाः । उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः ॥ १६७ ॥

स्पष्टम् ॥ १० ॥ १४ ॥ श्रीशुकः ॥१६७॥

तथा, मैवंविधस्याकरुणस्य माभूदक्रूर इत्येवमतीवदारुणः । योऽसावनाश्वास्य सुदुःखितं जनं प्रियात् प्रियं नेष्यति पारमध्वनः ॥१६८॥

स्पष्टम् ॥ १० ३९ ॥ श्रीगोप्यः ॥१६८॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अथ तत्प्रीतिमयो भयानकरसः। तत्रालम्बनश्चिकीर्षिततत्पीड़-नाद्यारणात् यत्तदीयप्रीतिमयं भयं तस्य विषयः श्रीकृष्णः। तदाधार-स्तत्प्रियजनश्च। किञ्च, स्वस्य तद्विच्छेदं कुर्वाणाद् यत्तादृशं भयं यच्च स्वापराधकदर्थितात् श्रीकृष्णादेव वा स्यात्तस्य तस्य स्वविषयकत्वेऽपि पूर्ववत् प्रीतेर्विषयत्वात् श्रीकृष्ण एव मूलालम्बनः। भयहेतुस्तूद्दीपन एव भवेत्। विभाव्यते हि रत्यादिर्यत्रेति सप्तम्यर्थत्वस्य पूर्वत्रैव व्याप्तेः। येनेति तृतीयार्थस्य तूत्तरत्रैव व्याप्तेश्च स्वविषयत्वे तु य एव विषयः स एवाधार इति भयांशमात्रविषयत्वेन पूर्ववद्बहिरङ्ग एवालम्बनो-ऽसौ। तदाधारत्वेन त्वन्तरङ्गोऽपि। अथोद्दीपनाः भीषणभ्रूकुट्याद्याः। अनुभावा मुखशोषाद्याः। व्यभिचारिणश्चापल्याद्याः। स्थायी तत्प्रीति-मयं भयम्। तदुदाहरणञ्च, जन्म ते मय्यसौ पापो माविद्यान्मधुसूदन। समुद्विजे भवद्धेतोः कंसादहमधीरधीः॥ १६९॥

अत्र विषयत्वेनैव हेतुत्वं न तु कारकान्तरत्वेन ॥ १०॥ ३॥ श्रीदेवकी श्रीभगवन्तम् ॥१६९॥

तथा, शङ्खचूड़दौरात्म्ये क्रोशन्तं कृष्णरामेति विलोक्य स्वपरिग्रह-मिति॥ १७०॥

स्पष्टम्॥ १०॥ ३४॥ श्रीशुकः॥१७०॥

तथाच, अथ क्षमस्वाच्युत मे रजोभुवो ह्यजानतस्त्वत्पृथगीश-मानिनः। अजावलेपान्धतमोऽन्धचक्षुष एषोऽनुकम्प्यो मयि नाथ-वानिति॥ १७१॥

स्पष्टम्॥ १०॥ १४॥ ब्रह्मा श्रीभगवन्तम्॥ १७१॥

अथ तन्मयो वीभत्सरसः। अत्रापि अन्यजुगुप्सायास्तत्प्रीति-मयत्वेन पूर्ववत्तत्प्रीतिविषयत्वाच्छ्रीकृष्ण एव मूलालम्बनः। तदा-धारस्तत्प्रियजनश्च। जुगुप्सामात्रांशस्य विषयोऽन्यस्तु वहिरङ्गा-लम्बनः। उद्दीपना अन्यगतामेध्यतादयः। अनुभावा निष्ठीवनादयः। व्यभिचारिणो विषादादयः। स्थायी च तत्प्रीतिमयी जुगुप्सा। उदा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

हरणञ्च, त्वक्‌श्मश्रुरोमनखकेशपिनद्धमित्यादिकं श्रीरुक्मिणीवाक्यमेव। अथ तत्प्रीतिमयप्रेमानिष्टाप्तिपदतावेद्यत्वेन तत्प्रीतिमयकरुणाविषयः श्रीकृष्णस्तदाधारस्तत्प्रियश्च। उद्दीपनास्तत्कर्म्मगुणरूपाद्याः। अनुभावा मुखशोषविलापाद्याः। व्यभिचारिणो जाड्यनिर्वेदादयः। स्थायी तत्प्रीतिमयः शोकः। उदाहरणञ्च, अन्तर्ह्रदे भुजगभोगपरीतमारात् कृष्णं निरीहमुपलभ्य जलाशयान्ते। गोपांश्च मूढ़धिषणान् परितः पशूंश्च संक्रन्दतः परमकश्मलमापुरार्त्ता इत्यादि ॥ १७२ ॥

स्पष्टम् ॥ १० ॥ १६ ॥ श्रीशुकः ॥१७२॥

प्रीतिमतो जनस्य च यद्यन्योऽपि तत्कृपाहीनो जनः शोचनीयो भवति तदा तत्रापि तन्मय एव करुणः स्यात्। यथा—न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये वहिरर्थमानिनः। अन्धा यथान्धैरुपनीयमानास्तेऽपीशतन्त्र्यामुरुदाम्नि बद्धाः ॥ १७३ ॥

स्पष्टम् ॥ ७ ॥ ५ ॥ श्रीप्रह्लादो गुरुपुत्रम् ॥ १७३ ॥

किञ्च तएव विस्मयादयो यदि श्रीकृष्णाधारा भवन्ति तएव तत्प्रीतिमयचित्तेषु सञ्चरन्ति तदापि तत्प्रीतिमयाद्भुतरसादयो भवन्ति। यथा, अहो अमी देववरामरार्चितमित्यादिषु। अजातप्रीतीनान्तु तत्सम्बन्धेन ये विस्मयादयो भावास्तदीयरसाश्च दृश्यन्ते, तेऽत्र तदनुकारिण एव ज्ञेयाः। अथ रसानामाभासतापत्त्यादिज्ञानायाश्रयनियमः परस्परं व्यवहारोऽप्युद्दिश्यते। तत्र आश्रयनियमः श्रीकृष्णसम्बन्धानुरूप एव। यथा पित्रादिषु प्राकृतस्य वात्सल्यस्याश्रयत्वं नियतम्। तथा मुख्यानां पञ्चानां मिथो व्यवहारस्तदाश्रयाणां जनानामिव। स च कुलीनलोकत एवावगन्तव्यः। ततो येषां यैर्मिलित्वा नर्म्मविहारादौ यथा सङ्कोचार्हता, तदीयानां रसानां तदीयैरसैरपि मिलने तथा तदर्हता। यथा न, तथा न। यथोल्लासस्तथोल्लास इति। यथा तत्प्रेयस्यादीनां तद्वत्सलादिभिस्तदादिकम्।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अथ गौणानां सप्तानामपि रसानां तेषु मुख्येषु पञ्चसु प्रतीपत्वम् उदासीनत्वमनुगामित्वञ्च यथायुक्तमवगन्तव्यम्। यथा हास्यस्य वियोगात्मकेषु भक्तिमयादिषु चतुर्षु प्रतीपत्वम्। शान्ते उदासीनत्वम्। अन्यत्रानुगामित्वमित्यादि। अथ गौणानां गौणैरपि वैरमाध्यस्थ्य-मैत्राणि ज्ञेयानि। यथा हास्यस्य करुणभयानकौ वैरिणौ। वीरा-दयो मध्यस्थाः। अद्भुतो मित्रमित्यादि। एवं तेषु द्वादशस्वपि स्थायिनां सञ्चारिणामनुभावानां विभावानां विषयान्तरगतभावादीना-मपि प्रतीपत्वौदासीन्यानुगामित्वानि विविचनीयानि। तदेवं स्थिते श्रीकृष्णसम्बन्धिषु काव्येषु च रसस्यायोग्यरसान्तरादिसङ्गत्या बाध्य-मानास्वाद्यत्वमाभासत्वम्। यत्र तु तत्सङ्गतिर्भङ्गिविशेषेण योग्यस्य स्थायिन उत्कर्षाय भवति तत्र रसोल्लास एव। केनाप्ययोग्यस्योत्-कर्षे तु रसाभासस्यैवोल्लास इति। अथ तत्र मुख्यस्य मुख्यसङ्गत्या-भासित्वं यथा—स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनीति, नूनं व्रतस्नानहुतादिनेश्वरः समर्चितो ह्यस्य गृहीत-पाणिभिः। पिवन्ति याः सख्यधरामृतं मुहुरित्याद्यन्तम्॥ १७४॥

ज्ञानविवेकादिप्रकाशेनात्र हि शान्त एवोपक्रान्तः। उपसंहृत-स्त्वोज्ज्वलः। तेन चास्य वत्सलेनैव मिलने सङ्कोच एवेति परस्पर-योग्यसङ्गत्याभास्यते। अत्र समाधीयते चान्यैः। स वै किलेत्यादिक-मन्येषां वाक्यम्। नूनमित्यादिकन्त्वन्यासाम्। एवम्विधा वदन्तीना-मित्यादि श्रीसूतवाक्यं च सर्वानन्दनपरमेवेति॥ १॥ १०॥ कौरवेन्द्र-पुरस्त्रियः॥ १७४॥

तथा, अथाभजे त्वाखिलपूरुषोत्तमं गुणालयं पद्मकरेव लालसः। अप्यावयोरेकपतिस्पृधोः कलिर्न स्यात् कृतत्वच्चरणैकतानयोः। जग-ज्जनन्यां जगदीशवैशसं स्यादेवेत्यादि॥ १७५॥

अत्र दासभावाख्यभक्तिमयस्य प्रकृतत्वेन योग्यस्य तदयोग्योज्ज्वल-सङ्गत्याभासितत्वम्। तत्र दासभावस्तत्प्रकरणसिद्ध एव। उज्ज्वल-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सङ्गतिश्च पद्मकरेव लालस इत्यादिनावगम्यते। अत्र समाधानञ्च। न खल्वस्य तद्वत् कान्तभाववासना जाता किन्तु भक्तिवासनैव। दृष्टान्त-स्तत्र तस्या भक्तांशश्च एव। तया स्पर्द्धा तु तत्परमकृपोन्नतत्वेन वीराख्य-दासतां प्राप्तस्य नायोग्येति। अन्ये त्वेवं मन्यन्ते। तत् खलु तदीय-दीनविषयकक्कपासूचकसप्रेमवचनविनोदमात्रं न तु लक्ष्मीस्पर्द्धा-वहम्। करोषि फल्ग्वप्युरुदीनवत्सल इति स्वस्मिंस्तुच्छत्वमननात्। एवं श्रीत्रिविक्रमेण बलिशिरसि चरणेऽर्पिते नेमं विरिञ्चो लभते प्रसादमित्यादिकं श्रीप्रह्लादवाक्यमपि दृष्टम्। श्रीनरसिंहकृतायां स्वानुकम्पायामपि—क्वाहं रजःप्रभव ईश तमोऽधिकेऽस्मिन् जातः सुरेतरकुले क्व तवानुकम्पा। न ब्रह्मणो न च भवस्य न वै रमाया यन्मे कृतः शिरसि पद्मकरप्रसाद इति। अत्र ब्रह्मादेरधुना विद्य-मानस्यापि ममैव शिरसीत्यर्थः। अत उभयत्रापि तत्तदवतारसमया-पेक्षयैव तादृशप्रसादाभावो विवक्षित इति ज्ञेयम् ॥ ४ ॥ २० ॥ पृथुः श्रीविष्णुम् ॥ १७५ ॥

तथा श्रीवसुदेवादीनामपि पित्रादित्वेन योग्यस्य वत्सलस्य तद-योग्यभक्तिमयसङ्गत्याभासितत्वं तत्र तत्र दृश्यते। तत्र समाधान-ञ्चाग्रे अथ बलदेवादावित्यादौ चिन्त्यम्। मनसो वृत्तयो नः स्युरित्या-दिकानि श्रीव्रजेश्वरादिवाक्यानि तु न तादृशानि। अभिप्रायविशेषेण वत्सलरसस्यैव पुष्टतया स्थापयिष्यमाणत्वात्। तथा, किमस्माभि-रनिर्वृत्तं देवदेव जगद्गुरो। भवता सत्यकामेन येषां वासो गुरावभूदि-त्यादि ॥ १७[illegible] ॥

अथ सख्यमयस्यैश्वर्य्यज्ञानसम्वलितभक्तिमयसङ्गमेनाभासोक्तिः। अस्य श्रीदामविप्रस्य सख्यं हि कृष्णस्यासीत् सखा कश्चिदित्यादिना। कथयाञ्चक्रतुरित्यादौ करौ गृह्य परस्परमित्यनेन च प्रकृतं दृश्यत इति। अत्र च समाधानं श्रीबलदेवादिवदेव चिन्त्यम् ॥ १० ॥ ८० ॥ श्रीशुकः ॥ १७६ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथा, त्वं न्यस्तदण्डमुनिभिर्गदितानुभाव आत्मात्मदश्च जगता-मिति मे वृतोऽसि इति ॥ १७७ ॥

आत्मा परमात्मा। आत्मदो मोक्षेषु तत्तदात्माविर्भावप्रकाशकः। कान्तात्वेन योग्य उज्ज्वल आत्मादिशब्दव्यञ्जिततदयोग्यशान्तसङ्गमे-नाभास्यते। अत्र समाधीयते च। अस्याः स्त्रीयात्वेन कान्तभावे दासीत्वाभिमानमयी भक्तिरपि युज्यत एव पतिव्रताशिरोमणि-त्वात्। यथोक्तं तदाद्या एवोद्दिश्य दासीशता अपि विभोर्विदधुः स्म दास्यमिति। श्रीरुक्मिण्यास्तु लक्ष्मीरूपत्वेनैश्वर्य्यस्वरूपज्ञान-मिश्रताहशभक्तिमिश्रकान्तभावत्वादत्र ताहशभक्तिमात्रपोषाय ताह-गप्युक्तं युक्तमिति ॥ १० ॥ ६० ॥ श्रीरुक्मिणी ॥ १७७ ॥

अथ तन्माधुर्य्यमात्रानुभवमयकेवलकान्तभावानामपि श्रीव्रज-देवीनां न खलु गोपिकानन्दनो भवानित्यादिषु या शान्तादिसङ्गति-र्दृश्यते, सा तु पुरतः सोपालम्भादिश्लेषवाग्भङ्गिमयत्वेन व्याख्यास्य-मानत्वात् प्रत्युत रसोल्लासायैव स्यात्। तथा, बद्धान्यया स्रजा काचि-दित्यादौ वात्सल्यसङ्गतिः सङ्गत्यन्तरेण व्याख्यास्यते। तथा प्रकृतो-ज्ज्वले रसे रासवर्णने दुःसहप्रेष्ठविरह इत्यादिकं श्रीमुनीन्द्रवचनं तथा तदनन्तरं कृष्णं विदुः परं कान्तमित्यादिके राजमुनीन्द्रप्रश्नो-त्तरे च मोक्षप्रस्तावव्यञ्जितशान्तरससङ्गत्या रसाभासत्वमकुर्वन्नित्यत्र समाधानञ्च श्रीकृष्णसन्दर्भे तथैवाग्रे च तात्कालिकश्रीकृष्णप्राप्त्य-न्तरायनिरासमात्रमेव तत्प्रसङ्गे दर्शितं, न त्वन्यो मोक्ष इत्यत-श्चिन्त्यम्। तथा, तं काचिन्नेत्ररन्ध्रेण इत्यादौ योगीवानन्दसंप्लुता इति चैवं व्याख्यायते। योगीति क्लीवैकवचनं, तच्च क्रियाविशे-षणम्। लज्जया यद्यपि मनसि निधायैवोपगुह्यास्ते तथाप्यत्यन्ता-भिनिवेशेन योगि संयोगि यथा स्यात्तदैवोपगुह्यास्ते इत्यर्थः। एवमन्यत्रान्यत्रापि यथायोगं समाधेयम्। अथ श्रीबलदेवादौ विरुद्धभावावस्थानं चैवं चिन्त्यम्। यत्रैव श्रीकृष्णस्तत्तद्भक्तसुखव्यञ्जक-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नानालीलार्थं विरुद्धानपि गुणान् धारयति न च तैर्विरुध्यते अचिन्त्य-शक्तित्वात्, तथा तल्लीलाधिकारिणस्तेऽपि। अस्ति चैषां तद्-योग्यता। यथा श्रीबलदेवस्य ज्येष्ठत्वात् वत्सलत्वम्। एकात्मत्वा-द्बाल्यमारभ्य सहविहारित्वाच्च सख्यम्। पारमैश्वर्यज्ञानसद्भावा-द्भक्तत्वमिति। ततः श्रीकृष्णस्य यादृशलीलासमयस्तादृश एव भाव-स्तद्विधस्याविर्भवति। ततो न विरोधोऽपि। ततः शङ्खचूडवध-प्रस्तावहोरिकालीलायां श्रीकृष्णेन समं युग्मीभूय गानादिकं तद्द्वारा द्वारकातः श्रीव्रजदेवीषु सन्देशश्च नासमञ्जसः। एवं श्रीमदुद्धवादी-नामपि व्याख्येयम्। अथ मुख्यस्यायोग्यगौणसङ्गत्याभासत्वम्। देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ। कृतसंवन्दनौ पुत्रौ सस्वजाते न शङ्कितावित्यादिषु ज्ञेयम्। अत्र श्रीकृष्णविभावितभयानक-सङ्गत्या तद्विषयो वत्सल आभास्यते। अत्र समाधानञ्च प्राक्तनम् एव। अथ गौणस्यायोग्यगौणसङ्गत्याभासत्वम्। यथा कालियह्रद-प्रवेशलीलायाम्—तां स्तथा कातरान् वीक्ष्य भगवान् माधवो बलः। प्रहस्य किञ्चिन्नोवाच प्रभावज्ञोऽनुजस्य सः॥ १७८॥

अत्र श्रीबलदेवस्य ऐश्वर्यज्ञानवतोऽप्याधुनिकसामाजिकभक्तस्येव व्रजजनाधारककरुणानुभवमयः करुणो योग्यः। स च हाससङ्गत्या-भास्यते। समाधानञ्च पूर्ववन्नानाभावस्यापि तद्विधस्य तल्लीलाविशेष-रचासमयानुरूपभावोदयात्। तद्विधा हि तस्य लीलाप्रवर्त्तकपरि-करा इति। हासस्य कारणं प्रभावज्ञानं हि अत्र तेषां प्राणरक्षार्थमेव भावान्तरान्धतिक्रस्योदितम्। ततश्चैवं हि तेषां ज्ञानमभूत्। अयं चेत्तस्य परमप्रेष्ठो मर्म्मवेत्ता च हसति तदा नास्त्येव काचिच्चिन्तेति। पुनरपि तदर्थैव तस्य चेष्टा दृष्टा। कृष्णप्राणान्निर्विशतो नन्दादीन् वीक्ष्य तं ह्रदम्। प्रत्यषेधत् स भगवान्रामः कृष्णानुभावविदित्यत्र लीलान्ते पुनः श्रीकृष्णलाभे रामश्चाच्युतमालिङ्ग्य जहासास्यानुभावविदित्यत्र तु हासः श्रीकृष्णं प्रत्युपालम्भव्यञ्जक एव। श्रीरुक्मिणीहरणलीलादौ

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तु भ्रातृस्नेहपरिप्लुतत्वं वर्णितम्। तस्मात्तदिष्टलीलानुरूप्यान्न वैरूप्यमिति तत्र हास्योऽपि नायोग्यः ॥ १० ॥ १६ ॥ श्रीशुकः ॥ १७८॥

अथ स्थायिभावायोग्यत्वं प्रतिलक्षणत एव प्रतिपन्नम्। ततः प्रीत्याभासत्वेऽवगते रसाभासत्वमप्यवगम्यम्। अथायोग्यसञ्चारिसङ्गत्याभासत्वं यथा—स्ववचस्तद्दतं कर्त्तुमस्मद्दृग्गोचरो भवान्। यदात्थैकान्तभक्तान्मे नानन्तः श्रीरजः प्रियः ॥ १७९ ॥

अत्र भक्तिरनन्तादिहेलनलक्षणगर्वसङ्गत्याभास्यते। तत्समाधानञ्च व्याख्यान्तरेण। तद्यथा, एकान्तभक्तान्मे मम अनन्तः स्वधामत्वेनापि श्रीर्जायात्वेनापि अजः पुत्रत्वेनापि न प्रियः। किन्तु तेऽप्येकान्तभक्तश्रेष्ठत्वेनैव मम प्रेष्ठा इत्यर्थः। तदेतद्यदात्थ तत् स्ववचः ऋतं सत्यं कर्त्तुं दर्शयितुं भवानस्मद्दृग्गोचरोऽभूत्। तदनुगामितांशेनैवास्मान् प्रत्यपि कृपां कृतवानित्यर्थः ॥ १० ॥ ८६ ॥ मैथिलः श्रीभगवन्तम् ॥

तथा, तयोरित्थं भगवति कृष्णे नन्दयशोदयोः। वीक्ष्यानुरागं परमं नन्दमाहोद्धवो मुदा ॥ १८० ॥

इत्थं तद्वियोगजमहादुःखव्यञ्जनाप्रकारेण। अत्र श्रीव्रजेश्वरयोः श्रीकृष्णवियोगदुःखानुभवमयी श्रीमदुद्धवस्य भक्तिस्तदयोग्येन हर्षेणाभास्यते। समाधानञ्च श्रीबलदेवहासवदेव कार्य्यम्। तेषां सान्त्वनार्थमागतस्य तस्यापि दुःखाभिव्यक्तिर्न योग्या। ततस्तदयोग्यस्तदीयानुरागमहिमाचमत्कारजो हर्ष एव तदर्थमुदितः। अनन्तरं तथैव सान्त्विताश्च ते इति ॥ १० ॥ ४६ ॥ श्रीशुकः ॥१८० ॥

तथा, एहि वीर गृहं यामो न त्वां त्यक्तुमिहोत्सहे। त्वयोन्मथितचित्तायाः प्रसीद मधुसूदन ॥ १८१ ॥

अत्र नायिकायाः सर्वेषामग्रत एतादृशं चापल्यमत्ययोग्यम्। तत्सङ्गतिश्चोज्ज्वलमाभासयति। समाधानञ्चास्याः सामान्यत्वाददोष इति ॥ १० ॥ ४२ ॥ सैरिन्ध्री भगवन्तम् ॥ १८१ ॥

अत्र तव सुतः सति यदाधरबिम्ब इत्यादिके तु न तथा चापल्यं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मन्तव्यम् । तेषां पद्यानां युगलेन युगलेन पृथक् पृथक् सम्वादसंग्रह-रूपत्वात् । श्रीव्रजेश्वरीसभास्थितायाश्चास्याः सामान्यतस्तन्माधुर्य्यवर्णनमेव । तेन च शक्रादीनामेव मोह उक्तः । न तु व्रजति तेन वयमित्यादिवत् व्योमयानवनिता इत्यादिवच्च स्वभावस्य सजातीयभावस्य वा प्रकाशनमिति । एवं कुन्ददामित्यादावपि ज्ञेयम् । तथा मैवं विभोऽर्हति भवानित्यादिषु प्रकटतत्सङ्गप्रार्थनदैन्यादिकमयोग्यत्वेन प्रतीतमपि पुरतः श्लेषेण निषेधार्थादितया व्याख्यास्यमानत्वात् परमरसावहत्वेनैव स्थापनीयम् । अथायोग्यानुभावसङ्गत्याभासत्वं यथा—यद्यप्यसावधर्म्मेण मां बध्नीयादनागसम् । तथाप्येनं न हिंसिष्ये भीतं ब्रह्मतनुं रिपुमित्यादिद्वयम् ॥ १८२ ॥

अत्र शुक्रवञ्चनार्थंप्रयुक्तस्यापि अधर्मादिशब्दप्रयोगस्य तत्रायोग्यत्वादाभास्यत एव भक्तिमयः । समाधानञ्च तदानीं साक्षात् भक्तेरजातत्वात् श्रीत्रिविक्रमपादस्पर्शानन्तरमेव च जातत्वान्न विरोध इति ॥ ८ ॥ २० ॥ श्रीबलिः शुक्रम् ॥ १८२ ॥

तथा, जरासन्धवधः कृष्ण भूर्य्यर्थायोपकल्पत इति ॥ १८३ ॥

अत्रायोग्येन साक्षान्नाम्ना सम्बोधनेन दास्यमय आभास्यते । वस्तुतस्तु तदादिनाम्नां तत्परमहिममयत्वात् तन्मयनाम्नाञ्च दासादिभिरपि साक्षादग्रहणदर्शनात् तददोष इति । यस्य नाम महद्यश इति श्रुतेः ॥ १० ॥ ७० ॥ उद्धवः श्रीभगवन्तम् ॥ १८३ ॥

तथा, सतां शुश्रूषणे जिष्णुः कृष्णः पादावनेजने ॥ १८४ ॥

पादावनेजने इति णिजन्तम् । अत्र पाण्डवराजकृततादृशश्रीकृष्णनियोगस्यायुक्तत्वात्तस्य भक्तिमयस्तेनाभास्यते । वस्तुतस्तु बान्धवाः परिचर्य्यायां तस्यासन् प्रेमबन्धना इत्युक्तत्वात् तेषु नियोज्येषु बान्धवाः स्वयमेवावर्त्तन्त नेतरे इव तन्नियुक्ता एव । ततः श्रीकृष्णस्य तु सुतरामेव स्वेच्छाप्रवृत्तिः । तेन च चिन्तितमिदमिति गम्यते । सर्वाणि कर्म्माण्यन्यैः सेत्स्यन्ति पादावनेजनं तु नान्यैः साभिमानत्वात् । ततश्च

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मम बन्धूनामेषां कर्म्म विगीताङ्गं स्यादिति मयैवात्राग्रहीतव्यमिति। तदेवं तस्येच्छायास्तदाश्रितैर्दुर्लङ्घ्यत्वात् तद्बलादेव तत्र तस्य प्रवृत्तिः। एवं स्वयमेव नारदादिपादप्रक्षालनेऽपि दृष्टम्। तं प्रति च स्वेच्छयैव हि भगवान् ब्राह्मणत्वेन भक्तत्वेन च व्यवहरति। तत एव क्वचित् पुत्र माखिद इत्यपि वदतीति ॥ १० ॥ ७५ ॥ श्रीशुकः ॥१८४॥

तथा, श्रीदामानामगोपालो रामकेशवयोः सखा। सुवलस्तोककृष्णाद्या गोपाः प्रेम्णेदमब्रुवन्। राम राम महासत्त्व कृष्ण दुष्टनिवर्हण इतोऽविदूरे सुमहद्वनं तालालिसङ्कुलमित्यादि ॥१८५॥

अत्रायोग्येन भयस्थानगमननियोगेन सख्यमय आभास्यते। वस्तुतस्तु समानशीलत्वेन श्रीकृष्णस्य वीर्य्यज्ञानात्तैस्तन्नियोगोऽपि नायोग्यः प्रत्युत तेषां तद्वीरस्वभावानां तन्मयप्रीतिपोषायैव भवति। साकं कृष्णेन सन्नद्धो विहर्त्तुं विपिनं महत्। बहुव्यालमृगाकीर्णं प्राविशत् परवीरहेत्यर्ज्जुनचरितवत्। अतएव प्रेम्णेति महासत्त्वदुष्टनिवर्हणेति चोक्तम्। अन्यत्र च, अस्मान् किमत्र ग्रसिता निविष्टानयं तथा चेद्वकवद्विनङ्क्ष्यति इति ॥ १० ॥ १५ ॥ श्रीशुकः ॥ १८५ ॥

एवं द्वारकाजलविहारे न चलसीत्यादौ वसुदेवनन्दनाङ्घ्रिमिति ॥ १८६ ॥

अत्रायोग्येन श्वशुरनामग्रहणेन स्वीयानां कान्तभाव आभास्यते। वस्तुतस्तु देवस्य परमाराध्यस्य श्वशुरस्य यो नन्दनो मुख्यः पुत्रः अस्मत्पतिरित्यर्थः तस्याङ्घ्रिं वसु परमधनस्वरूपमित्येव तन्मनसि स्थितम्। तथापि दैवात्तन्नामानुकरणदोषसमाधानञ्चोन्मत्तवचस्त्वेनोपक्रान्तत्वात् ॥ १० ॥ ९० ॥ श्रीपट्टमहिष्यः ॥१८६॥

तथा, तमात्मजैर्दृष्टिभिरन्तरात्मना दुरन्तभावाः परिरेभिरे पतिम्। निरुद्धमप्यास्रवदम्बु नेत्रयोर्विलज्जतीनां भृगुवर्य्य वैक्लवात् ॥ १८७ ॥

दुरन्तभावा उद्भटभावा अतएव निरुद्धमप्यास्रवत्। अत्रात्मजद्वारालिङ्गनेन कान्तभाव आभास्यते। तद्द्वारा तत्सम्भोगायोग्यत्वात्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

समाधानञ्च प्रीतिसामान्यपरिपोषायैव तथाचरितं न तु कान्तभाव-पोषाय। तत्पोषस्तु दृष्ट्यादिद्वारैव। तस्मान्न दोष इति॥ १ ॥ ११ ॥ श्रीसूतः ॥ १८७ ॥

अथायोग्यविभावसङ्गत्याभासत्वमुदाह्रियते। तत्रायोग्योद्दीपन-सङ्गत्या यथा, यदर्चितमित्यादौ यद्गोपिकानां कुचकुङ्कुमाङ्कित-मिति ॥ १८८ ॥

अत्रानेन रहस्यलीलाचिह्नेन दासानुसन्धानायोग्येन दास्यभाव-मय आभास्यते। समाधानञ्च। अत्रास्य भक्तिमात्रसुखभत्वचिन्त-नेऽभिनिवेशः न तु तादृशलीलाविशेषानुसन्धाने। यथोक्तं टीकायाम्—यद्गोपिकानामिति प्रेममात्रसुलभत्वमित्येतत्। ततोऽननुसन्धायैव तद्विशेषं भक्तिमात्रोपोद्बलकत्वेन निर्दिष्टत्वान्न दोष इति। एवं सम-र्हणं यत्रेत्यादिकं व्याख्येयम् ॥ १० ॥ ३८ ॥ अक्रूरः ॥ १८८ ॥

एवमुज्ज्वलेऽपि पुत्ररूपस्योद्दीपनत्वायोग्यता यं वै मुहुरित्यादौ गम्या। तच्चाग्रे समाधानं व्याख्येयम्। अथालम्बनायोग्यतायां तादृश-प्रीत्याधारायोग्यतयाभासत्वे यज्ञपत्नीनां पुलिन्दीहरिण्यादीन्यां तत्त-ज्जातिरूपमयोग्यमुदाहार्य्यम्। अथ तादृशप्रीतिविषयायोग्यत्वं यथा, अक्षण्वतामित्यादौ वक्त्रं व्रजेशसुतयोरित्यादि ॥ १८९ ॥

अत्र यद्यपि श्रीरामोऽपि श्रीकृष्णव्यूहत्वात् स एव, तथापि श्रीकृष्णत्वाभावात् तत्प्रेयसीभावविशेषायोग्य एव। ततस्तेनात्रोज्ज्वल-माभास्यते। वस्तुतस्त्वग्रेऽवह्नित्यागर्भेण व्रजेशसुतयोर्मध्ये अनु पश्चात् वेणुजुष्टं यन्मुखम् इत्यादिव्याख्यानेन रसोत्कर्ष एव साधयितव्यः। एवमेव टीकायामपि रामः चपासु भगवान् गोपीनां रतिमावहन् इत्यत्र व्याख्यातं गोपीनां रतिमिति श्रीकृष्णक्रीडासमयेऽनुत्पन्नानाम् अतिबालानां चान्यासामित्यभियुक्तप्रसिद्धिरिति॥ १० ॥ २१ ॥ श्रीव्रज-देव्यः ॥ १८९ ॥

अथायोग्यस्य विषयान्तरगतभावादिकस्य सङ्गत्याभासत्वं यथा



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

देवहूतिवर्णने,—काम: स भूयादित्यादौ च्छिपतीमिव श्रिय-मिति ॥ १९० ॥

अत्र देवहूतिगतेनेदृशरूपेणानुभावेन श्रीकर्दमस्य भक्तिराभासते। वस्तुतस्तु तेन जगत्सम्पत्तिरूपां प्राकृतीं श्रियमेवोद्दिश्य तथोक्त-मिति न दोषः ॥ ३ ॥ २२ ॥ श्रीकर्दमः ॥ १९० ॥

तथा—उवास तस्यां कतिचिन्मिथिलायां समा विभुः। ततोऽ-शिक्षद्गदां काले धार्त्तराष्ट्रः सुयोधनः। मानितः प्रीतियुक्तेन जन-केन महात्मना ॥ १९१ ॥

विभुः श्रीसङ्कर्षणः। मानित इत्यादिकं च तस्यैव विशेषणमिति समाधानञ्च ॥ १० ॥ ५७ ॥ श्रीशुकः ॥ १९१ ॥

एवमग्रे च केचिदन्ये रसाभासाः परिहरिष्यन्ते। अथ यदुक्तं अयोग्यसङ्गतिरपि भङ्गीविशेषेण योग्यस्य स्थायिन उत्कर्षाय चेत्तदा रसोल्लास इति, तत्र मुख्यसङ्गत्या मुख्यस्योल्लासो यथा, अहो भाग्य-महो भाग्यमित्यादौ। अत्र ब्रह्मणा व्रजवासिप्रसङ्गे ज्ञानभक्तिबन्धु-भावौ भाजितौ। योग्यस्तत्र बन्धुभाव एव भावयितुम्। तदीय-स्वाभाविकतद्भावास्वादे सत्यन्यस्य विरसत्वप्रतिभानात्। तथापि तत्र परब्रह्मपदव्यञ्जिताया ज्ञानभक्तेरयोग्याया भावना ज्ञानभक्त्यंश-वासितसहृदयचमत्काराय तदीयभाग्यप्रशंसावैशिष्ट्यशंसनभङ्ग्या तमे-वोत्कर्षयितुं प्रवर्त्तितत्वात्तु सत्येव रसः। एवम् इत्थं सतां ब्रह्मसुखानु-भूत्या इत्यादिकमपि व्याख्येयम्। तथा—भ्रात्रेयो भगवान् कृष्णः शरण्यो भक्तवत्सलः। पैतृष्वसेयान् स्मरति रामश्चाम्बुरुहेक्षणः ॥ १९२ ॥

अत्र पितृष्वसुस्तस्या ऐश्वर्यज्ञानमयी भक्तिरयोग्या, वात्-सल्यन्तु योग्यम्। तथापि भगवदादिपदव्यञ्जिततादृशसङ्गति-र्यासीत्, तामतिक्रम्य भ्रात्रेय इति पैतृष्वसेयानिति अम्बुरुहेक्षण इति चोक्तिभङ्ग्या वात्सल्यस्योत्कर्षे सति रसोल्लासः ॥ १० ॥ ४८ ॥ श्रीकुन्ती ॥ १९२ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एवं श्रीराघवेन्द्रस्य केवलमाधुर्य्यमयलीलायां हनूमतः केवलतन्मयदासभावेऽपि स्वरूपैश्वर्य्यादिज्ञानमयतद्भावसङ्गतिर्नातिर्योग्यापि पश्चान्माधुर्य्यमय एव पर्य्यवसायिताभङ्ग्या तस्यैवोत्कर्षाय जातेति रसोल्लास एव योजनीयः। तत्रैश्वर्य्यमाधुर्य्ययोर्महिमज्ञानं तस्याह—ॐ नमो भगवते उत्तमश्लोकायेत्यादि ॥ १८३ ॥

अत्र भगवत इत्यैश्वर्य्यम् उत्तमश्लोकायेति माधुर्य्यं दर्शितम्। स्वरूपज्ञानमाह—यत्तद्विशुद्धानुभवमात्रमेकमित्यादि ॥ १८४ ॥

यत्तत् प्रसिद्धं श्रीरामचन्द्रस्य दुर्वादलश्यामस्वरूपम्। अत्र प्रकाशैकलक्षणवस्तुनः सूर्य्यादिज्योतिषः प्रकाशकत्वं गोलादिमत्त्वमित्यादिधर्म्मवत् गुणरूपादिलक्षणतत्स्वरूपधर्म्मस्यापि तदात्मकत्वदृष्ट्या तन्मात्रत्वमुक्तम्। य एव धर्म्मः स्वरूपशक्तिरिति भगवत्सन्दर्भादौ स्थापितम्। अतएवैकमपि। तस्याश्च शक्तेर्भावातिरिक्तत्वमाह, स्वतेजसा ध्वस्तगुणव्यवस्थितमिति। स्वरूपशक्त्या दूरीभूता त्रैगुणात्मिका मायाशक्तिर्यस्मात् तत्। अतः प्रशान्तं सर्व्वोपद्रवरहितम्। अनुभवमात्रत्वे हेतुः, प्रत्यक्दृश्यादन्यत्। न चक्षुषा पश्यति रूपमस्य यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वामिति श्रुतेः। तत् कुतः, अनामरूपम्। एनास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीतिप्रसिद्धप्राकृतनामरूपरहितम्। तत्र हेतुः, निरीहमिति। आत्मशब्देन हि श्रुतावस्यां परमात्मनो जीवाख्यशक्तिरूपोऽंश उच्यते। अनेनेति पृथक्त्वनिर्देशात्। तद्रूपेण च प्रवेशो नामदेवताशब्दवाच्यतेजोवारिमृल्लक्षणोपाध्यभिनिवेशः। स च तस्य जीवस्य तत्राहन्ताध्यासादेव भवति। ततोऽन्तर्य्यामिरूपेण स्वयं तत्र स्थितस्यापि तदध्यासाभावादुपाधिकृतनामरूपराहित्यं युक्तमेवेत्यर्थः। सर्व्वथाहङ्कारराहित्ये सति व्याकरवाणीतिप्रयोगस्यानर्हत्वादितिभावः। ननु श्रीरामरूपं न सर्व्वैरेवं प्रतीयते तत्राह, सुधियोपलम्भनम्। शुद्ध-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

चित्तेन स्वरूपतयैवोपलभ्यत इत्यर्थः। नातः परं परम यद्भवतः स्वरूपमित्यादि श्रीब्रह्मवाक्यात्। नर्व्वेवंभूतेषु मर्त्येषु प्राकट्ये किं प्रयोजनम्? उच्यते। गौणे सत्यपि प्रयोजनान्तरे मुख्यन्तु भक्तेषु लीलामाधुर्य्याभिव्यञ्जनमेवेत्याह,—मर्त्त्यावतारस्त्विहेत्यादि ॥ १९५ ॥

तुशब्द आशङ्कानिवृत्त्यर्थः। मर्त्यलोके योऽवतार आविर्भावः, स तु साधुजनोद्वेजकरक्षोवधायैव केवलं न भवति, किन्तु मर्त्यशिक्षणमपि। मर्त्येषु शिक्षणं तदर्थप्रकाशनं यत्तन्मयमपि। तत्र वहिर्मुखेषु विषयासङ्गदुर्वारताप्रकाशनमानुषङ्गिकम्। उद्देश्यन्तु स्वभक्तिवासितेषु चित्तार्द्रताकरविरहसंयोगमयनिजलीलाविशेषमाधुर्य्यप्रकाशनम्। ततस्तदर्थमेवेत्यर्थः। अन्यथा यदि केवलं तद्वधायैव स्यात्तदा आत्मनः परमात्मत्वेन परिपूर्णस्य ईश्वरस्य सर्वान्तर्य्यामिणः स्वे स्वरूपे तदेकरूपे वैकुण्ठे च रममाणस्य सीताकृतव्यसनानीति कुतः स्यात्। मनसैव तद्वधे शक्तत्वात् तद्व्यसनासम्भवाच्च। निजमाधुर्य्यप्रकाशनपक्षे तु तत्तत् सम्भवत्येवेति भावः। अत्र कृपारूपं तादृशलीलारूपञ्च माधुर्य्यमधिकं श्लाघितम्। तत्र श्रीसीतावियोगदुःखञ्च लीलामाधुर्य्यान्तर्गतमेवेति न दोष इत्यपि दर्शितम्। तादृशलीला च न प्राकृतवत् कामादिसक्ततया, किन्तु स्वजनविशेषविषयककृपाविशेषेणैवेत्याह,—स वै इत्यादि ॥ १९६ ॥

स वै खलु त्रिलोक्यां न सक्तः। तत्र हेतुः, आत्मा परमात्मा भगवान् परिपूर्णैश्वर्य्यादिः। वासुदेवः सर्वाश्रयश्चेति। किन्तु आत्मवताम् आत्मा स्वयमेव नाथत्वेन विद्यते येषां तेषां स्वविषयकममताधारिणां भक्तविशेषाणामित्यर्थः। तेषामेव सुहृत्तमः। तस्माद्यथान्ये स्त्रीकृतं स्त्रीत्वहेतुकं कश्मलं अश्नुवते तथा नासावश्नुवीत। अतस्तस्या आत्मवत्त्वेनैव तादृशकश्मलहेतुतत्प्रीतिविषयतापीतिभावः। तथा देवदूतसमयातिक्रमेण आत्मवतोऽपि लक्ष्मणस्य परित्यागो यः, स खलु नात्यन्तिक इत्याह, न लक्ष्मणमिति। विहातुमपि नार्हति न शक्नोति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

झटित्येव स्वर्गस्थतया स्वागमनं प्रतीक्षमाणैस्तदादिभिः सह स्वधिष्ण्यारोहात्। अधुनापि तेन सीतादिभिश्च सहैवास्मिन् किंपुरुषवर्षेऽप्यस्माभिर्दृश्यमानत्वात्। ततो मर्य्यादारक्षार्थमेव किञ्चित्तत्तदनुकरणमिति भावः। पूर्वार्थमेव स्थापयितुं भक्तैकरक्तकारणकारुण्यप्रमुखपरममाधुर्य्यं सर्वोर्द्ध्वमाह, द्वाभ्याम्—न जन्म नूनं महतो न सौभगं न वाङ्न बुद्धिर्नाकृतिस्तोषहेतुः। तैर्यद्विसृष्टानपि नो वनौकसश्चकार सख्ये वत लक्ष्मणाग्रजः॥ १९७॥

महतः पुरुषाज्जन्म। सौभगं सौन्दर्य्यम्। आकृतिः जातिः। यद्यस्मात्। तैर्जन्मादिभिर्विसृष्टान् त्यक्तानस्मान् तदीयपरमभक्तश्रीसीतान्वेषणादिभक्तितुष्टत्वेन वत अहो लक्ष्मणस्य सर्वसद्गुणलक्ष्मलक्षितस्य सुमित्रानन्दनस्याग्रजोऽपि सखित्वे कृतवान् दास्यायोग्यानपि सहविहारादिना सखीनिव कृतवानित्यर्थः। सुग्रीवमुपलक्ष्य वा तथोक्तम्। तस्मात्,—सुरोऽसुरो वाप्यथ वानरो नरः सर्वात्मना यः सुकृतज्ञमुत्तमम्। भजेत रामं मनुजाकृतिं हरिं य उत्तराननयत् कोशलान्दिवम्॥ १९८॥

पूर्वं स्वरूपज्ञानमयभक्त्या मनुजाकृताविव परमस्वरूपत्वं दर्शितवान्। सम्प्रति माधुर्य्यज्ञानमयभक्त्यापि विशिष्य तमेवाराधयति मनुजाकृतिं हरिमिति। तत्रापि श्रीकपिलादिकं व्यावर्त्तयति, राममिति। उत्तमम् असमोर्द्ध्वगुणं सुकृतज्ञं स्वल्पयापि भक्त्या सन्तुष्यन्तमिति॥ ५॥ १९॥ श्रीहनूमान्॥ १९३—१९८॥

तथा सैवं विभोऽहंतीत्यादौ प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मेत्यत्रापि नर्म्मालापमयश्लेषभङ्ग्या स्वीयभावोत्कर्षेण रसोल्लासः पुरतो दर्शनीयः। अथायोग्यगौणसङ्गत्यापि मुख्यस्योल्लासो यथा, त्वक्श्मश्रुरोमनखकेशेत्यादिकं श्रीरुक्मिणीवाक्यम्। अत्र प्रतीपत्वेनायोग्यस्यापि वीभत्सस्य सङ्गतिः प्रकृतकृष्णविषयककान्तभावप्रशंसाकारिवचनभङ्ग्यैव कृतेति तदुत्कर्षायैव जाता। ततो रसोल्लास

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एवेति। तथान्यत्र—एताः परं स्त्रीत्वमपास्तपेशलं निरस्तशौचं वत साधु कुर्वते। यासां गृहात् पुष्करलोचनः पतिर्न जात्वपैत्याहृतिभिर्हृदि स्पृशन् ॥ १९८ ॥

स्त्रीत्वं स्त्रीजातिः सा च श्रीरुक्मिण्याद्यवरतज्जातिभेदत्वे नैवात्र गृहीता। अपास्तपेशलत्वादिकं हि तज्जात्यन्तराश्रयं न तु रुक्मिण्याद्याश्रयम्। ताभिस्तासामपि साधुत्वकरणात्। ततश्चान्यां तत्तद्दोषयुक्तां स्त्रीजातिमपि या निजकीर्त्यादिना शुद्धां कुर्वन्तीत्यर्थः। तासां तत्तद्दोषरहितसर्वगुणालङ्कृतत्वे तदवरासां साधुत्वविधाने च हेतुमाह, यासामिति। स्वयं तथाविधोऽपि आहृतिभिः प्रेयसीजनोचितः गुणसमाहारैर्या एव हृदि स्पृशन् मनस्यासज्जन् यासां गृहादपि न जात्वपैतीति। तस्मादत्रापि बीभत्ससङ्गतिः पूर्ववद्व्याख्येया ॥१॥१०॥ कौरवेन्द्रपुरस्त्रियः ॥ १९८ ॥

अथ गौणेष्वयोग्यमुख्यानां सङ्गतावपि पूर्वरीत्यां रसोल्लासो यथा—गोप्योऽनुरक्तमनसो भगवत्यनन्ते तत्सौहृदस्मितविलोकगिरः स्मरन्तः। ग्रस्तेऽहिना प्रियतमे भृशदुःखतप्ताः शून्यं प्रियव्यतिहृतं ददृशुस्त्रिलोकम् ॥ २०० ॥

अत्र गौणः करुणरस एव योग्यः। तत्र प्रतीपे सम्भोगाख्य उज्ज्वलस्त्वयोग्यः। तथापि तत्र स्मितविलोकादिरूपतत्सङ्गतिः स्मर्यमाणमात्रत्वेन तत्तद्भावाभिव्यञ्जनभङ्ग्या शोकमुत्कर्षयति। ततो रसोल्लास एवेति ॥ १० ॥ १६ ॥ श्रीशुकः ॥ २०० ॥

अथ मुख्येष्वयोग्यसञ्चारिसङ्गतावपि यथा—ता वार्यमाणाः पतिभिरित्यादि ॥ २०१ ॥

अत्र च तेषामग्रे तादृशं चापल्यमयोग्यमपि तदानीं मोहातिरेकाभिव्यञ्जनाभङ्ग्या महाभावाख्यं सर्वानुसन्धानरहितं कान्तभावस्य उत्कर्षमेव गमयामास। तत उल्लसत्येव रस इति ॥ १० ॥ २९ ॥ श्रीशुकः ॥ २०१ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एवमुदाहरणान्तराण्यप्यन्वेयानि। अथ यदुक्तम् अयोग्यस्योत्कर्षे तु रसाभासत्वस्यैव उल्लास इति तत्रोदाहरणम्—युवां न नः सुतौ साक्षात् प्रधानपुरुषेश्वराविति ॥ २०२ ॥

अत्र पितृभावेनाभिव्यक्तस्य श्रीवसुदेवस्य एव योग्यं वात्सल्यमतिक्रम्य सङ्गता भक्तिर्न रसत्वायोपपद्यत इति। समाधानञ्च पूर्वानुसारेण श्रीबलदेववदेव योजनीयम्। रसाभासप्रसङ्गे समाधानानि चैतानि तेष्वेव निर्द्दोषेषु क्रियन्ते। तदितरेषु न तदर्थमाग्रह्यते। तस्मात् सर्वथा परिहार्य्यस्तत्प्रसङ्गः। योग्येन योग्यसङ्गत्या रसोल्लासस्योदाहरणानि तु स्वयमूह्यानि। अथ तत्प्रीतिविशेषमया रसाः प्रकर्त्तव्याः। तत्र शान्तापरनामा ज्ञानभक्तिमयो रसः। तत्रालम्बनः परब्रह्मत्वेन स्फुरन् ज्ञानभक्तिविषयश्चतुर्भुजादिरूपः श्रीभगवान्। तदाधारा भगवल्लीलागतमहाज्ञानिभक्ताश्च। तत्र भगवान्, एवं तदैव भगवानरविन्दनाभ इत्यादिभिः श्रीसनकादीनां वैकुण्ठगमने दर्शितः। ज्ञानिभक्ताश्च आत्मारामाश्च मुनय इत्यादिना वर्णिताः। तेषु च श्रीचतुःसनाद्या एव तादृशाः। श्रीशुकदेवस्य तु लीलारसमाधुर्य्याकृष्टतया श्रीभागवताभिनिवेशात्। यत्रैव श्रीमद्भागवतं सर्वोत्तमत्वमभिप्रैति तत्रैव स्पष्टता भवेत्। अथोद्दीपनाश्च तस्य गुणक्रियाद्रव्यप्रायाः। तत्र गुणाः, सच्चिदानन्दसान्द्राङ्गत्वं सदा स्वरूपसंप्राप्तत्वं भगवत्त्वं परमात्मत्वं विद्याशक्तिप्रधानत्वं विभुत्वं हतारिमुक्तिदायकत्वं शान्तभक्तप्रियत्वं समत्वं दान्तत्वं शान्तत्वं शुचित्वम् अद्भुतरूपवत्त्वमित्यादयः। द्रव्याणि च, महोपनिषत् ज्ञानिभक्तपादरजस्तुलसीतदीयस्थानादीनि। अथानुभावाः, तत्तद्गुणादिप्रशंसा परब्रह्मपरमात्मादिनामोच्चारणं ब्रह्मसुखावधारणपूर्वकभगवदुन्मुखत्वमित्यादयः, नासाग्रन्यस्तदृष्टित्वावधूतचेष्टा-ज्ञानमुद्रादिपूर्वकजृम्भाङ्गमोटनहरिनतिस्तुतिप्रभृतयश्च। सात्त्विकाश्च, प्रायः प्राकृता एव। अथ सञ्चारिणः, निर्वेद-धृति-हर्ष-मति-स्मृति-विषादोत्सुकतावेग-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वितर्काद्याः। अथ स्थायी ज्ञानभक्तिः। सा च योऽन्तर्हितो हृदि गतोऽपि दुरात्मनां त्वं नाद्यैव नौ नयनमूलमनन्त राद्व इत्यादिभिर्व्यञ्जिता। तन्मयरसव्यञ्जकञ्च तत्रैव, तस्यारविन्दनयनस्य पदारविन्द किञ्जल्कमिश्रतुलसीमकरन्दवायुः। अन्तर्गतः स्वविवरेण चकार तेषां सङ्क्षोभमक्षरजुषामपि चित्ततन्वोरित्यादिकम्। अत्रारविन्दनयन आलम्बनः, वायुरुद्दीपनः, सात्त्विकविशेषश्चानुभावः चित्तसंक्षोभिरूपो हर्षः सञ्चारी। अक्षरजुषामपीतिनिर्देशविशिष्टेन तन्निर्देशेन लब्धा ज्ञानभक्तिः स्थायी। तत्समूहस्यैकत्वानुभवेन समर्थनात् ज्ञानभक्तिमयो रस इति विवेचनीयम्। अथ भक्तिमयेषु रसेषु आश्रयभक्तिमयो रस उदाह्रियते। तत्रालम्बनः पालकत्वेन स्फुरन्नाश्रयभक्त्याश्रयः श्रीकृष्णस्तदाधारास्तल्लीलागतपरमपाल्याश्च। अत्र श्रीकृष्णोऽन्यत्रत्येषु श्रीमन्नराकारताप्रधानः परमेश्वराकारश्च। श्रीमद्व्रजवासिषु तु परमधुरप्रभावश्रीमन्नराकार एव। अथ ते पाल्या द्विविधाः; प्रपञ्चकार्याधिकृता वहिरङ्गाः, तदीयचरणच्छायैकजीवनाश्चान्तरङ्गाः। तत्र पूर्वेषां ब्रह्मशिवादयस्तु भक्तिविशेषसद्भावात्तदन्तरङ्गा एव। अथोत्तरे त्रिविधाः; साधारणाः, श्रीयदुपुरवासिनः, श्रीमद्व्रजपुरवासिनश्च। तत्र प्रथमे जरासन्धबद्धराजादयः मुनिविशेषादयश्च। उत्तरवर्गद्वयं श्रेणीजनादिकम्। अथोद्दीपनेषु गुणाः। तत्र परमेश्वराकारावलम्बनानां भगवत्त्वम् अवतारावलीवीजत्वम् आत्मारामाकर्षित्वं पूतनादीनामपि तद्वेशानुकरणेन महाभक्तभावदातृत्वं परमात्मत्वम् अनन्तब्रह्माण्डाश्रयैकरोमविवरांशत्वमित्यादयो वक्ष्यमाणमिश्राः। श्रीमन्नराकारावलम्बनानां कृपाम्बुधित्वम् आश्रितपालकत्वम् अचिन्त्यमहाशक्तित्वं परमाराध्यत्वं सर्वज्ञत्वं सुदृढव्रतत्वं समृद्धिमत्त्वं क्षमाशीलत्वं दाक्षिण्यं सत्यं दाक्ष्यं सर्वशुभङ्करत्वं प्रतापित्वं धार्मिकत्वं शास्त्रचक्षुष्ट्वं भक्तसुहृत्त्वं वदान्यत्वं तेजः कीर्त्तिः ओजः सहो बलानि

CC-0- Jangamwadi Math Collection. Digitized by eGangotri

प्रेमवश्यत्वादयश्च । अथ जातयः । पूर्वेषां तत्तदनुकारितया प्रतीता गोपत्वादयः तत्स्मारकाः श्यामत्वादयश्च । उत्तरेषां तत्तच्छ्रेष्ठत्वेनैव प्रतीतास्ते उभये । अथ क्रियाः । पूर्वेषां सृष्टिस्थित्यादिकृतो विश्वरूपदर्शनाद्याः वक्ष्यमाणमिश्राः । उत्तरेषां परपक्षनिवर्हण-स्वपक्षपालनसानुग्रहावलोकनाद्याः । अथ द्रव्याणि । तदीयास्त्रवादित्र-भूषणस्थानपदाङ्कभक्तादीनि । तानि च पूर्वेषामलौकिकतयैव स्पष्टानि । उत्तरेषाञ्च तान्येव लौकिकत्वेऽपि लौकिकायमानतयैव दर्शितप्रभावानि । अथ कालाश्चोभयत्र तज्जन्मतद्विजयादिसम्बन्धिन इति । अथानुभावाः । तत्सम्बन्धेनैव वसतिस्तत्प्रभावादिमयगुण-नामकीर्त्तनमित्यादयः । तथा पूर्वोक्ता अपि । अथ सञ्चारिणः । तत्र योगे हर्षगर्वधृतयः । अयोगे क्लमव्याधी । उभयत्र निर्वेदशङ्का-विषाददैन्यचिन्तास्मृतिव्रीड़ामत्यादयः मृतिश्च । सा योगेऽपि यथा श्रीभीष्मान्तिमचरिते—विशुद्धया धारणयेत्यादि ॥ २०३ ॥

एवं तत्र युधि तुरगरज इत्यादौ मम निशितशरैर्विभिद्यमानत्व-चौत्यनेनैव स्वापराधद्योतकवाक्ये दैन्यमुदाहार्य्यम् । शितविशिखहत इत्यादिकेऽपि ॥ १ ॥ ९ ॥ श्रीसूतः ॥ २०३ ॥

अथ स्थायी चाश्रयभक्त्याख्यः । यथा—भवाय नस्त्वं भव विश्व-भावन त्वमेव माताथ सुहृत् पतिः पिता । त्वं सद्गुरुर्नः परमञ्च दैवतं यस्यानुवृत्त्या कृतिनो बभूविम ॥ २०४ ॥

अत्र विभावोद्भास्वरानुभाववैशिष्ट्येनैव सात्त्विकादीनामपि लब्ध-त्वात् तत्सम्वलनचमत्कारात्मकरसोदाहरणमपि ज्ञेयम् । यथोक्तम्— सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत् । झटित्यन्यसमाक्षेपात्तदा दोषो न विद्यते । अत्र समाक्षेपश्च प्रकरणवशादिति ॥ १ ॥ ११ ॥ द्वारका-प्रजाः श्रीभगवन्तम् ॥ २०४ ॥

आश्रयभक्तिमयो रसो द्विविधः; अयोगात्मको योगात्मकश्च । अयोगो द्विविधः; प्रथमाप्राप्तिर्वियोगश्च । योगश्च द्विविधः; क्रमेण



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

द्विविधायोगानन्तरजः, सिद्धिस्तुष्टिश्चेति। तत्र प्रथमाप्राप्तप्रात्मक-मयोगमाह—इति मागधसंरुद्धा भवद्दर्शनकाङ्क्षिणः। प्रपन्नाः पादमूलं ते दीनानां शं विधीयताम् ॥ २०५ ॥

अत्र भवद्दर्शनकाङ्क्षिण इत्यनेन तद्दर्शनार्थैव बहुमुमुक्षापि विज्ञापिता। ततः स्थायी दर्शितः। पादमूलमालम्बनम्। संरोधो विरोध-मुखेनोद्दीपनः। प्रपत्तिरुद्भास्वरः। औत्सुक्यं दैन्यञ्च सञ्चारिणौ। ताभ्यां सात्त्विकादयश्च ज्ञेयाः ॥१०॥२॥ राजदूतः श्रीभगवन्तम् ॥२०५॥

एतदनन्तरं सिद्धाख्यं योगं तेषामेवाह—ददृशुस्ते घनश्यामं पीतकौशेयवाससम्। श्रीवत्साङ्कं चतुर्बाहुमित्यारभ्य पिबन्त इव नेत्राभ्यां लिहन्त इव जिह्वया। जिघ्रन्त इव नासाभ्यां रम्भन्त इव बाहुभिः। प्रणेमुर्हतपाप्मानो मूर्द्धभिः पादयोर्हरेः। कृष्णसन्दर्शना-ह्लादध्वस्तसंरोधनक्लमाः। प्रशशंसुर्हृषीकेशं गीर्भिः प्राञ्जलयो नृपाः ॥ २०६ ॥

पिबन्त इत्यादाविवशब्द उत्प्रेक्षायाम्। तदद्भुतरूपदर्शनेन चक्षुषोरत्यन्तविस्फारणात् पिबन्त इवेत्युक्तम्। एवं तदीयमधुरगन्ध-जातचरणारविन्दलेहनलोभात् पुनः पुनर्या जृम्भा जाता तल्लिङ्गेन तच्चरणारविन्दं लिहन्त इवेत्युक्तम्। अतएव जिघ्रन्त इव नासाभ्या-मिति। नासापुटफुल्लतालिङ्गेन तस्य सर्वाङ्गमिव युगपज्जिघ्रन्त इवेत्युक्तम्। तदर्थमिव तद्विस्तारणं कृतमित्यर्थः। तथापि भक्त-त्वात्तच्चरणस्यैवावलेहेच्छा युक्तेति तथा व्याख्यातम्। एवमुत्तरत्रापि। परमावेशकृतबाहुचालनलिङ्गेन तच्चरणारविन्दं श्लिष्यन्त इवापीति सर्वथा तदावेश एव तात्पर्य्यम् ॥ १० ॥ २७३ ॥ श्रीशुकः ॥ २०६ ॥

अथ वियोगः। यर्ह्यम्बुजाक्षापससारेत्यादौ श्रीद्वारकाप्रजावाक्ये तासां प्रभावो व्यक्तः। श्रीव्रजप्रजानाञ्च यदुपतिर्द्विरदराजविहार इत्यादौ मोचयन् व्रजगवां दिनतापमित्यनेन सूचितः। व्रज एव तिष्ठतां इडवाङ्गवामपि किमुत मनुष्याणामित्यर्थः। अथ तदनन्तरजं तुष्ट्याख्यं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

योगं द्वारकाप्रजानामाह—आनर्त्तान् स उपव्रज्य स्वृद्धान् जनपदान् स्वकान् । दध्मौ दरवरं तेषां विषादं शमयन्निवेत्यादि ॥ २०७ ॥

नुवेति वाक्यालङ्कारे ॥ १ ॥ ११ ॥ श्रीसूतः ॥ २०७ ॥

श्रीव्रजप्रजानामपि मोचयन्नित्यादिनैव व्यक्तः । तथा व्रजवनस्थितानामपि श्रीव्रजदेवीवाक्यैः वृन्दावनं सखि भुवो वितनोति कीर्त्तिमित्यादिभिः, हन्त चित्रमवला शृणुतेदमित्यादिभिश्च ज्ञेयः । अथ दास्यभक्तिमयो रसः । तत्रालम्बनः, प्रभुत्वेन स्फुरन् दास्यभक्त्याश्रयः श्रीकृष्णः, तदाधाराः श्रीकृष्णलीलागतस्वोत्कृष्टतदीयभृत्याश्च । श्रीकृष्ण इह परमेश्वराकारः श्रीमन्नराकारश्चेति द्विविधः पूर्वोक्ताविर्भाव एव । तद्भृत्याश्च तदनुशीलित्वेन द्विविधाः । पुनस्ते च त्रिविधाः ; अङ्गसेवकाः पार्षदाः प्रेष्याश्च । तत्राङ्गसेवका अङ्गव्यञ्जकताम्बूलवस्त्रगन्धसमर्पकादयः । पार्षदा मन्त्रिसारथिसेनाध्यक्षधर्म्माध्यक्षदेशाध्यक्षादयः । विद्याचातुर्य्येण सभारञ्जकाश्च । पुरोहितस्य प्राधान्यात् गुरुवर्गान्तःपात एव । पार्षदत्वमप्यंशेन । प्रेष्याः सादिपदातिशिल्पिप्रभृतयः । एते च यथापूर्वं प्रायः प्रियतराः । श्रीमदुद्धवदारुकप्रभृतीनान्त्वङ्गसेवादिवैशिष्ट्यमप्यस्तीति सर्वतोऽप्याधिक्यम् । तत्रापि श्रीमदुद्धवस्य बहुशोऽपि त्वं मे भृत्यः सुहृत् सखेत्याद्युक्तेः । अथोद्दीपनाः पूर्वोक्ता एव । तत्र विशेषतोऽङ्गसेवकेषु गुणाः सौन्दर्य्यसौकुमार्य्यादयः । क्रियाः शयनभोजनादिकाः । द्रव्याणि तत्सेवोपयोग्यानि तदुच्छिष्टानि च । पार्षदेषु गुणाः प्रभुत्वादयः । प्रेष्येषु प्रतापादय इत्यादि । अथानुभावाः प्रायः पूर्वोक्ता एव । तथा योगी स्वस्वकर्म्मणि तात्पर्य्यम् । यत् खलु सेवासमये कम्पस्तम्भाद्युद्गमपि विलापयति । तत्तत्कर्म्मतात्पर्य्यं हि तस्यासाधारणो धर्म्मः कम्पादिस्तु सर्व्वसाधारणस्ततः पूर्वस्यैव बलवत्त्वमिति । एवमन्यत्रापि रसे यथायथमुन्नेयम् । अथायोगेऽपि स्वस्वकर्म्मानुसन्धानं तदर्च्चास्वपि तत्तत्कृतिरेव वा । अथ

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सञ्चारिणोऽपि प्रागुक्ता एव। अथ स्थायो च दास्यभक्त्याख्यः। स चाक्रूरादीनामैश्वर्य्यज्ञानप्रधानः। श्रीमदुद्धवादीनां तत्तत्सद्भावेऽपि माधुर्य्यज्ञानप्रधानः। श्रीव्रजस्थानान्तु माधुर्य्यैकमय एव। अथाप्येषां प्रीतिर्भक्तित्वं श्रीगोपराजकुमारपरमगुणप्रभावत्वादिनैवादरसद्भावात्। तत्राक्रूरस्य ददर्श रामं कृष्णञ्च व्रजे गोदोहनं गतावित्यादिलीलाया-मनुभूततादृशमाधुर्य्यस्यापि यमुनाह्रदे दृष्टेन तदैश्वर्य्यविशेषेणैव चमत्कारपरिपोषात्तत्प्रधानत्वं व्यक्तम्। श्रीमदुद्धवस्य माधुर्य्यप्रधान-त्वन्तु श्रीगोकुलभाग्यश्लाघायां स्फुटमेव व्यक्तम्। अतएव तादृशस्यापि तस्यैवं स्वेच्छामयनरलीलामाधुर्य्यावेशः स्मर्य्यमाणो मम तद्वियोगखेदं वर्द्धयतीति भगवदन्तर्द्धानानन्तरं स्वयमाह—मां खेदयत्येतदजस्य जन्म विडम्बनं यद्वसुदेवगेहे। व्रजे च वासोऽरिभयादिव स्फुटं पुराद्-व्यवात्सीद्यदनन्तवीर्य्य इत्यादि ॥ २०८ ॥

अतएव श्लाघितं यन्मर्त्यलीलौपयिकमिति। अग्रे परममधुरत्वेन तां लीलामपि वर्णयति—वसुदेवस्य देवक्यां जातो भोजेन्द्रबन्धने। चिकीर्षुर्भगवानस्याः शमजेनाभियाचितः। ततो नन्दव्रजमितः पित्रा कंसाद्विबिभ्यता। एकादशसमास्तत्र गूढार्च्चिः सबलोऽवसत्। परीतो वत्सपैर्वत्सांश्चारयन् व्यहरद्विभुः। यमुनोपवने कूजद्द्विज-सङ्कुलिताङ्घ्रिपे। कौमारीं दर्शयंश्चेष्टां प्रेक्षणीयां व्रजौकसाम्। रुदन्निव हसन् मुग्धबालसिंहावलोकन इत्यादि ॥ २०९ ॥

रुदन्निव हसन्निति जनन्याद्यग्रे कौमारचेष्टाविशेषः ॥ ३ ॥ २ ॥ श्रीमानुद्धवः ॥ २९० ॥

अथ श्रीव्रजस्थानां माधुर्य्यज्ञानैकमयत्वमाह—पादसम्वाहनं चक्रुः केचित्तस्य महात्मनः। अपरे हतपाप्मानो व्यजनैः समवीजयन् ॥ २१० ॥

महात्मनो महागुणगणगुम्फितस्य। हतपाप्मानो न तु वयमिव तादृशभाग्यान्तरायलक्षणपाप्मयुक्ता इति श्रीशुकदेवस्य दैन्योक्तिस्तत्-स्पृहातिशयं व्यञ्जयति ॥ १० ॥ १५ ॥ श्रीशुकः ॥ २११ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथा, हन्तायमद्रिरबला हरिदासवर्य्य इत्यादि ॥ २११ ॥

स्पष्टम् ॥ १० ॥ २७ ॥ श्रीगोप्यः ॥ २११ ॥

तदेतद्विभावादि-स्थाय्यन्त-सम्वलनचमत्कारात्मको रसो ज्ञेयः । स च पूर्व्ववत् प्रथमाप्राप्त्यात्मको यथा—अप्यद्य विष्णोर्मनुजत्वमीयुषो भारावताराय भुवो निजेच्छया । लावण्यधाम्नो भवितोपलम्भनं मह्यं न न स्यात् फलमञ्जसा दृशः ॥ २१२ ॥

स्पष्टम् ॥ १० ॥ ३८ ॥ अक्रूरः ॥ २१२ ॥

तदनन्तरप्राप्तिलक्षणसिद्ध्यात्मको यथा—भगवद्दर्शनाह्लादवाष्प-पर्य्याकुलेक्षणः । पुलकाचित औत्कण्ठ्यात् स्वाख्यानेऽपि हि नाशक्नत् ॥ २१३ ॥

स्वाख्याने अक्रूरोऽहं नमस्करोमि इत्येतल्लक्षणे ॥ १० ॥ ३८ ॥ श्रीशुकः ॥ २१३ ॥

अथ भगवदन्तर्द्धानानन्तरं वियोगात्मको यथा—इति भागवतः पृष्टः क्षत्त्रा वार्त्तां प्रियाश्रयाम् । प्रतिवक्तुं न चोत्सेहे औत्कण्ठ्यात् स्मारितेश्वरः । यः पञ्चहायनो मात्रा प्रातराशाय याचितः । तन्नैच्छद्रचयन् यस्य सपर्य्यां वाललीलया । स कथं सेवया तस्य कालेन जरसं गतः । पृष्टो वार्त्तां प्रतिब्रूयात् भर्त्तुः पादावनुस्मरन् ॥ २१४ ॥

भागवतः श्रीमानुद्धवः । क्षत्त्रा श्रीविदुरेण । जरसं वर्षाणां पञ्चविंशत्युत्तरशतस्य तादृशानां प्राकट्यमर्य्यादाकालस्यान्तिमं भागमित्येव विवक्षितं न तु जीर्णत्वम् । श्रीकृष्णसवयसस्तस्यापि तद्वन्नित्यवयस्त्वेन श्रीकृष्णसन्दर्भे स्थापितत्वात् । नोद्धवोण्वपि मन्न्यून इति श्रीभगवद्वाक्य-वैशिष्ट्यात् । तत्र प्रवयसोऽप्यासन् युवानोऽतिमहौजस इत्यादिना कैमुत्याच्च ॥ ३ ॥ २ ॥ श्रीशुकः ॥ २१४ ॥

अत्र कृष्णद्युमणिनिम्लोचे इत्यादौ दुर्भगो बत लोकोऽयमित्यादिषु चात्मीयविगर्हादिलक्षणो विलापश्च ज्ञेयः । अथ वियोगानन्तरायोपलक्षणतुष्ट्यात्मक उदाहार्य्यः । तत्र साक्षात्कारतुल्यस्फूर्त्त्यात्मको यथा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदनन्तरमेव श्रीमदुद्धवस्य—स मुहूर्त्तमभूत्तूष्णीं कृष्णाङ्घ्रिसुधया भृशम्। तीव्रेण भक्तियोगेन निमग्नः साधुनिर्वृत इत्यादि ॥ २१५ ॥

स्पष्टम् ॥ ३ ॥ २ ॥ श्रीशुकः ॥ २१५ ॥

एवमेव व्रजे तद्विरहदुःखमग्ने कृपया व्यवहाररक्षार्थं केषुचिद्-व्यवच्छेदेनैव स्फुरतोऽत एव श्रीमदुद्धवप्रवेशे केषाञ्चित् सुखमपि वर्णितम्। वासितार्थऽभियुद्धद्भिरित्यादिभिश्च। ता दीपदीप्तै मणिभिर्विरेजुरित्यादिना च। अतएव श्रीभगवतापि प्रायः पितरौ प्रेयसीश्चैवोद्दिश्य सन्दिष्टम्—गच्छोद्धव व्रजं सौम्येत्यादिना। पित्रादीनान्तु सर्वत्र दुःखमात्रस्फुरणादन्येषां सुखमपि नानुभवपदवीमारोहति। अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन्। गोपान् व्रजञ्चात्मनाथं गावो वृन्दावनं गिरिमित्यादि श्रीव्रजेश्वरवचनात्। तत्र श्रीमदुद्धववासे तु प्रायः सर्वेषामपि तादृशीं स्फुर्त्तिं वर्णयति—उवास कतिचिन्मासान् गोपीनां विनुदन् शुचः। कृष्णलीलाकथा गायन्नमयामास गोकुलम् ॥ यावन्त्यहानि नन्दस्य व्रजेऽवात्सीत् स उद्धवः। व्रजौकसां क्षणप्रायाण्यासन् कृष्णस्य वार्त्तया ॥ सरिद्वन-गिरिद्रोणीर्वीक्षन् कुसुमितान् द्रुमान्। कृष्णं संस्मारयन् रेमे हरिदासो व्रजौकसाम् ॥ २१६ ॥

अथ साक्षात्कारलक्षणतुष्ट्यात्मकं श्रीमदुद्धवस्याह—ततस्तमन्तर्हृदि संनिवेश्य गतो महाभागवतो विशालाम्। यथोपदिष्टां जगदेकबन्धुना तपः समास्थाय हरेरगाद्गतिम् ॥ २१७ ॥

गम्यत इति गतिः। यथोपदिष्टां गतिमित्यस्य द्वितीयानुसारेणायमर्थः। पूर्वं तत्र तं प्रति श्रीभगवता वेदाहमन्तर्मनसेप्सितं ते ददामि यत्तद्दुरवापमन्यैरित्यनेन तदभीप्सितं दातुं प्रतिश्रुतम्। त्वदीप्सितपूर्त्यर्थं यदन्यैर्दुरवापं तद्ददामीत्यर्थः। तच्च देयं पुरा मया प्रोक्तमजाय नाभ्य इत्यादिना संक्षेपभागवतरूपमित्युद्दिष्टम्। अथ तादृशतत्प्रतिश्रुतश्रवणेन परमोत्सुकतया परमनिजाभीप्सितमसौ

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्वयमेव निवेदितवान्—को न्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह । तथापि नाहं प्रवृणोमि भूमन् भवत्पदाम्भोजनिषेवनोत्सुक इत्यनेन । अथागन्तुकं निजमोहविशेषञ्च निवेदितवान्—कर्म्माण्यनीहस्य भवोऽभवस्येत्यादिभ्याम् । तच्च साक्षात्तदुपदेशबलेन प्रायः परप्रत्यायनार्थमेव ज्ञेयम् । नोद्धवोऽण्वपि मन्न्यून इत्यादेः । अथ तत्तदर्थोपयुक्ततया भगवदुद्दिष्टार्थमपि प्रार्थितवान् । ज्ञानं परं स्वात्मरहःप्रकाशं प्रोवाच कस्मै इत्यादिना । तत्र यद्वृजिनं तरेमेति तादृशसेवाविरहदुःखम् । तादृशलोकमोहदुःखञ्च तत्तरणस्य तद्रहस्यज्ञानाधीनत्वादिति भावः । ततश्च मदभीष्टं श्रीभगवानपि सम्पादितवानिति श्रीविदुरं प्रति कथितं श्रीमदुद्धवेन स्वयमेव—इत्यावेदितहार्द्दाय मह्यं स भगवान् परः । आदिदेशारविन्दाक्ष आत्मनः परमां स्थितिमिति । द्वितीये ब्रह्मणेऽपि परमवैकुण्ठं दर्शयता तेनात्मनः परमभगवत्तारूपा स्थितिर्दर्शिता । सा च श्रीद्वारकावैभवरूपेणेति श्रीभगवत्सन्दर्भे स्थापितमस्ति । संक्षेपश्रीभागवतरूपया चतुःश्लोक्या च । तस्य तादृशत्वेऽपि विचित्रलीलाभक्तपरवशत्वरूपासाविति तत्रैव बोधितम् । ततस्तदनुभवेनोभयत्रापि श्रीमदुद्धवस्य धैर्य्यं जातमिति तत्तदुपयोगः । ततश्च तामेव तदुपदिष्टां गतिं जगामेत्यर्थः । तथैवोद्दिष्टमन्ते तं प्रत्येकादशे—ज्ञाने कर्म्मणि योगे च वार्त्तायां दण्डधारणे । यावानर्थो नृणां तात तावांस्तेऽहं चतुर्विधः ॥ इति । तस्य श्रीकृष्णरूपा गतिस्त्वियं श्रीशुकद्वारा श्रीभागवतप्रचारात् पूर्व्वमेव ज्ञेया । स्वज्ञानप्रचारार्थमेव हि सोऽयं पृथिव्यां रक्षितः । तदनन्तरं चरितार्थत्वात् न प्रयोजनमिति । किन्तु कायव्यूहेन श्रीमद्व्रजेऽप्यस्य तत्प्राप्तिर्ज्ञेया । आसामहो चरणरेणुजुषामहं स्यामिति दृढ़मनोरथावगमात् ॥ ११ ॥ २८ ॥ श्रीशुकः ॥ २१६ ॥ २१७ ॥

अथ प्रश्रयभक्तिमयो रसः । तत्रालम्बनो लालकत्वेन स्फुरन् प्रश्रयभक्तिविषयः श्रीकृष्णश्च पूर्व्ववत् परमेश्वराकारः श्रीमन्नराकार-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्चेति द्विविधाविर्भावः। तत्तदाश्रयत्वेन च लाल्याश्च त्रिविधाः। तत्र परमेश्वराकाराश्रया ब्रह्मादयः। श्रीमन्नराकाराश्रयाः श्रीदशाचरध्यानदर्शितश्रीगोकुलपृथुकाः। उभयाश्रयाः श्रीद्वारकाजन्मानः। ते च सर्वे यथायथं पुत्रानुजभ्रातुष्पुत्रादयः। तत्र पुत्राः केचिद्गुणतः केचिदाकारतः केचिदुभयतश्च तदनुहारिप्रायाः। तत्र गुणानुहारित्वमाह—एकैकशस्ताः कृष्णस्य पुत्रान् दशदशाबलाः। अजीजनन्ननवमान् पितुः सर्वात्मसम्पदा ॥ २१८ ॥

तत्र साम्बादीनां श्रीकृष्णश्लाघितगुणत्वमाह—जाम्बवत्याः सुता ह्येते साम्बाद्याः पितृसम्मता इति ॥ २१९ ॥

अतः श्रीसाम्बस्यैकादशादौ श्रुतमन्यथाचेष्टितं श्रीकृष्णस्य मर्य्यादादर्शकतत्तल्लीलेच्छयैव। तत्र श्रीरुक्मिणीपुत्रास्तु तेष्वपि श्रेष्ठा इत्याह—प्रद्युम्नप्रमुखा जाता रुक्मिण्या नावमाः पितुरिति ॥ २२० ॥

अत्र पुनरुक्तिरेव श्रैष्ठ्यबोधिका ॥ १० ॥ ६२ ॥ श्रीशुकः ॥ २१८-२२० ॥

तत्र श्रीप्रद्युम्नस्यातिशयमाह—कथं त्वनेन संप्राप्तं सारूप्यं शार्ङ्गधन्वनः। आकृत्यावयवैर्गत्या स्वरहासावलोकनैः ॥ २२१ ॥

स्पष्टम् ॥ १० ॥ ५५ ॥ श्रीरुक्मिणी ॥ २२१ ॥

किञ्च यं वै मुहुः पितृसरूपनिजेशभावास्तन्मातरो यदभजन् रहरूढभावाः। चित्रं न तत् खलु रमास्पदविम्बविम्बे कामे स्मरेऽक्षविषये किमुतान्यनार्य्यः ॥ २२२ ॥

यं प्रद्युम्नं तन्मातरो मुहुरभजन् द्रष्टुमागताः। पुनर्लज्जया रह एकान्तदेशं च अभजन् निलिल्युरित्यर्थः। तदेवं यदभजन् तत् खलु रमास्पदविम्बस्य लक्ष्मीविलासभूमिमूर्त्तेर्विम्बे प्रतिमूर्त्तौ तस्मिन् चित्रम्। वालकस्य पितृसादृश्ये मातॄणां वात्सल्योद्दीप्तिसम्भवात्। तत्र यच्च रहः अभजत् तदपि न चित्रमित्याह, पितृसरूपनिजेशभावाः। तदनन्तरं पितुः श्रीकृष्णस्य सरूपेण सारूप्यातिशयेन निजेशस्य आत्मीयप्रभुमात्रबुद्ध्यावगतस्य न तु रमणबुद्ध्यावगतस्य

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीकृष्णस्य भावःस्फूर्त्तिर्यासु ताः। ततो लज्जाहेतुकं रहोभजनलक्षणं पलायनमप्युचितमेवेति भावः। तथोक्तमेतत्प्रागेव तं दृष्ट्वा जलदश्याममित्यादौ कृष्णं मत्वा स्त्रियो भीता निलिल्युस्तत्र तत्र हेति। तत्र प्रभुत्वमात्रस्फूर्त्तौ हेतुः, रूढ़भावाः, रूढ़ः श्रीकृष्णे बद्धमूलः भावः कान्तभावो यासां ताः। कदाचिदन्यत्र चेतसि तत्साहृश्यातिशयेनेश्वरभावः स्फुरतु नाम रमणभावस्तु न सर्वथेत्यर्थः। श्रीरुक्मिण्यास्तत्सहृशवत्सलाया अन्यस्याश्चेश्वरभावोऽपि नोदयते किन्तु सर्वथा पुत्रभाव एव तत्सारूप्येणोद्दीप्तः स्यात्। यथोक्तं श्रीरुक्मिणीदेव्यैव कथं त्वनेन संप्राप्तमित्याद्यनन्तरं स एष वा भवेन्नूनं यो मे गर्भे धृतोऽर्भकः। अमुष्मिन् प्रीतिरधिका वामः स्फुरति मे भुज इति। तदेवं तासामपि यत्र रमास्पदविम्बविम्बत्वेन तादृशी भ्रान्तिस्तत्र परममोहने रमास्पदविम्बस्यैवाप्राकृतकामरूपांशे जगद्गतनिजांशेन स्मरे स्मरणपथं गत्वापि क्षोभके संप्रति तु स्वयमेवाक्षविषयतां प्राप्ते सति अन्यनार्य्यः किमुत सुष्टेव मोहं प्राप्तमुदिता इत्यर्थः ॥१०॥६६॥ श्रीशुकः ॥ २२२ ॥

अथोद्दीपनाः। गुणाः स्वविषयकश्रीकृष्णवात्सल्यस्मितप्रेक्षादयः। तथा तस्य कीर्त्तिबुद्धिबलादीनां परमसहत्त्वञ्च। तथा जातिक्रियादयोऽपि यथायोगमवगन्तव्याः। अथानुभावाः वाल्ये मुहुस्तं प्रति मृदुवाचा स्वैरप्रश्नप्रार्थनादिकम्। तदङ्गुलिवाह्वाद्यालम्बनेन स्थितिः। तदुत्सङ्गोपवेशः। तत्ताम्बूलचर्वितादानमित्याद्याः। अन्यदा तदातदनुज्ञाप्रतिपालनतच्चेष्टानुस्मरणस्वैरताविमोक्षादयः। उभयत्र तदनुगतिः। सात्विकाश्च सर्वे। अथ व्यभिचारिणः पूर्वोक्ता एव। अथ स्थायी च प्रश्रयभक्त्याख्यः। तत्र वाल्येति लाल्यताभिमानमयत्वेन प्रश्रयवीजस्य दैन्यांशस्य सद्भावात्तदाख्यत्वम्। तत्र वालशोदाहरणमवगन्तव्यम्। अन्यदीयं यथा निशम्य प्रेष्ठमायान्तमित्यादौ। प्रद्युम्नश्चारुदेष्णश्च साम्बो जाम्बवतीसुतः प्रहर्षवेगोच्छ्वसितशयनासनभोजनाः। वारणेन्द्रं पुरस्कृत्य ब्राह्मणैः ससुमङ्गलैः। शङ्खतूर्य्यनिना-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

देन ब्रह्माघोषेण चाहताः। प्रत्युज्जग्मूरथैर्हृष्टाः प्रणयागतसाध्वसाः॥ २२३॥

प्रणयोऽत्र भक्तिविशेषः॥ १॥ ११॥ श्रीसूतः॥ २२३॥

एवमत्र विभावादिसंवलनात्मके प्रश्रयभक्तिमये रसे पूर्ववद्-योगादयोऽपि भेदाः। इति भक्तिमयो रसः। अथ वात्सल्यमयो वत्सलाख्यो रसः। तत्रालम्बनः लाल्यत्वेन स्फुरन् वात्सल्य-विषयः श्रीकृष्णस्तदाधारास्तत्पित्रादिरूपा गुरवश्च। तत्र श्रीकृष्णः श्रीमन्नराकार एव। अथ गुरवः। तत्र भक्त्यादिमिश्राः श्रीवसुदेव-देवकीकुन्तीप्रभृतयः। शुद्धास्तु श्रीयशोदानन्दतत्सवयोवल्लवी-वल्लवप्रभृतयः। स्वाभाविकं चैषां वात्सल्योपयोगि वैदुष्यं गोप्यः संस्पृष्ट-सलिला अङ्गेषु करयोः पृथक्। न्यस्यात्मन्यथ बालस्य वीजन्यास-मकुर्वतेत्यादिभिः स्पष्टम्। अथोद्दीपनेषु गुणाः। तत्र प्रथमतस्तस्य तदीयलाल्यभावमाह—तां स्तन्यकाम आसाद्य मथ्नतीं जननीं हरिः। गृहीत्वा दधिमन्थानं न्यषेधत् प्रीतिमावहन्॥ २२४॥

स्पष्टम्॥ १०॥ ९॥ श्रीशुकः॥ २२४॥

एवम्, उवाच पितरावेत्य साग्रजः सात्वतर्षभः। प्रश्रयावनतः प्रीणन्नम्बतातेति सादरमित्यादि, इति मायामनुष्यस्येत्याद्य-न्तम्॥ २२५॥

पितरौ श्रीदेवकीवसुदेवौ। प्रीणन् प्रीणयन्॥ १०॥ ४५॥ श्रीशुकः २२५॥

अथ शैशवचापल्यमाह — शृङ्ग्यग्निदंष्ट्र्यसिजलद्विजकण्टकेभ्यः क्रीड़ापरावतिचलौ स्वसुतौ निषेद्धुम्। गृह्याणि कर्त्तुमपि यत्र न तज्जनन्यौ शेकात आपतुरलं मनसोऽनवस्थाम्॥ २२६॥

तथा—कृष्णस्य गोप्यो रुचिरं वीक्ष्य कौमारचापलम्। शृण्वन्त्याः किल तन्मातुरिति होचुः समागताः। वत्सान्मुञ्चन् क्वचिदसमये इत्यादि॥ २२७॥

गोप्यस्त्वेताः श्रीव्रजेश्वर्याः सवयसः सम्बन्धिन्यः श्रीकृष्णस्यैव

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रौढ़त्वात्लजायाश्च । अन्यदा प्रश्रयो लज्जा प्रियत्वदत्वं सारल्यं दाढ्ल-मित्यादयः । तत्राद्योदाहरणं कुरुचेत्रयात्रायां, कृष्णरामौ परिष्वज्य पितरावभिवाद्य चेत्यादिकम् । अतो बालत्वेन मतत्वादिन्द्रमख-प्रसङ्गे प्रागल्भ्यमपि तेषां सुखदम् । कान्त्यवयववयसां सौन्दर्यं सर्व-सल्लक्षणत्वं पूर्णकैशोरपर्य्यन्तं वृद्धिरित्यादयस्तु सर्वदैव । तत्र कान्त्या यथा—कालेन व्रजता तात गोकुले रामकेशवौ । जानुभ्यां सह-पाणिभ्यां रिङ्गमाणौ विजह्रतुरित्यादि ॥ २२८ ॥

तथा—कालेनाल्पेन राजर्षे रामः कृष्णश्च गोकुले । अघृष्टजानुभिः पद्भिर्विचक्रमतुरोजसा ॥ २२९ ॥

स्पष्टम् ॥ १० ॥ ८ ॥ सः ॥२२६—२२९ ॥

तथा—ततश्च पौगण्डवयः श्रितौ व्रजे बभूवतुस्तौ पशुपालसम्मतौ इत्यादि ॥ २३० ॥

स्पष्टम् ॥ १० ॥ १५ ॥ सः ॥ २३० ॥

जातिस्तु पूर्वोक्ता । क्रियाश्च जन्मबाल्यक्रीड़ादयः । तत्र नन्दस्त्वा-त्मज उत्पन्न इत्यादिना जन्म दर्शितम् । बाल्यक्रीड़ामाह—तावङ्घ्रि-युग्ममनुकृष्य सरीसृपन्तौ घोषप्रघोषरुचिरं व्रजकर्दमेषु । तन्नाद-हृष्टमनसावनुसृत्य लोकं मुग्धप्रभीतवदुपेयतुरन्ति मात्रोरित्यादि । यर्ह्यङ्गनादर्शनीयकुमारलीलावन्तर्व्रजे तदबलाः प्रगृहीतपुच्छैः । वत्सैरितस्तत उभावनुकृष्यमाणौ प्रेक्षन्त्य उज्झितगृहा जहृषु-र्हसन्त्यः ॥ २३१ ॥

स्पष्टम् ॥ १० ॥ ८ ॥ सः ॥ २३१ ॥

अथ आदिग्रहणात् पौगण्डादौ मान्यमाननादयोऽपि ज्ञेयाः । कालाश्च तज्जन्मदिनादयः । द्रव्याणि च तत्क्रीड़ाभाण्डवसनादीनि । तत्र जन्मदिनं यथा—कदाचिदौत्थानिककौतुकाप्लवे जन्मर्क्षयोगे समवेतयोषिताम् । वादित्रगीतद्विजमन्त्रवाचनैश्चकार सूनोरभिषेचनं सतीत्यादि ॥ २३२ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्पष्टम् ॥ १० ॥ १६ ॥ सः ॥ २३२ ॥

अथानुभावेषूद्भास्वराः। तत्र लालनम्—तयोर्यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले। यथाकालं यथाकामं व्यधत्तां परमाशिषः। गताध्वानश्रमौ तत्र मज्जनोन्मर्दनादिभिः। नीविं वसित्वा रुचिरं दिव्यस्रग्गन्धमण्डितौ। जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलालितौ। संविश्य वरशय्यायां सुखं सुषुपतु र्व्रजे ॥ २३३ ॥

स्पष्टम् ॥ १० ॥ १८ ॥ सः ॥ २३३ ॥

शिरोघ्राणम्—नन्दः स्वपुत्रमादाय प्रोष्यागत उदारधीः। मूर्द्ध्न्यवघ्राय परमां मुदं लेभे कुरूद्वह ॥ २३४ ॥

स्पष्टम् ॥ १० ॥ ६ ॥ सः ॥ २३४ ॥

आशीर्वादः—ता आशिषः प्रयुञ्जानाश्चिरं जीवेति बालके। हरिद्राचूर्णतैलाद्भिः सिञ्चन्त्योऽजनमुज्जगुः ॥ २३५ ॥

स्पष्टम् ॥ १० ॥ ६ ॥ सः ॥ २३५ ॥

हितोपदेशदानम्—कृष्ण कृष्णारविन्दाक्ष तात एहि स्तनं पिब। अलं विहारैः क्षुत्क्षान्तः क्लान्तश्चवान् भोक्तुमर्हतीत्यादि ॥ २३६ ॥

स्पष्टम् ॥ १० ॥ ११ ॥ श्रीव्रजेश्वरी श्रीकृष्णम् ॥ २३६ ॥

इदमखिलं साधारणवत्सलानामपि स्यात्। पित्रोस्तु विशेषतः। तत्र हितप्रवर्त्तनार्थतर्जनादिकं यथा—एकदा क्रीड़मानास्ते रामाद्या गोपदारकाः। कृष्णो मृदं भक्षितवानिति मात्रे न्यवेदयन्। सा गृहीत्वा करे पुत्रमुपालभ्य हितैषिणी। यशोदा भयसंभ्रान्तप्रेक्षणाक्षमभाषत। कस्मान्मृदमदान्तात्मन् भवान् भक्षितवान्रहः। वदन्ति तावका ह्येते कुमारास्तेऽग्रजोऽप्ययम् ॥ २३७ ॥

स्पष्टम् ॥ १० ॥ ८ ॥ सः ॥ २३७ ॥

यथा च दधिमन्थभाजनभेदनादिचापल्यानन्तरम्—कृतागसं तं प्ररुदन्तमक्षिणी कषन्तमञ्जन्मषिणी स्वपाणिना। उद्वीक्षमाणा भयविह्वलेक्षणं हस्ते गृहीत्वा भिषयन्त्यवागुरत्। त्यक्त्वा यष्टिं सुतं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भीतं विज्ञायार्भकवत्सला । इयेष किल तं बन्धुं दाम्नातद्वीर्य्य-कोविदा ॥ २३८ ॥

स्पष्टम् ॥ १० ॥ ९ ॥ सः ॥ २३८ ॥

अथ तज्जनविस्वादौषधपायनादिवत्तदात्वभवं तत्सुखमप्यति-क्रम्यायतिभद्रायैतत्समृद्धये चेष्टा यथा—तमङ्कमारूढ़मपाययत् स्तनं स्नेहस्नुतं सस्मितमीक्षती मुखम् । अतृप्तमुत्सृज्य जवेन सा ययावुत्सिच्यमाने पयसि त्वधिश्रिते ॥ २३९ ॥

यन्नामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृत इत्यनेन कैमुत्य-प्राप्तेस्तद्गृहसम्पत्तिसंपादनप्रयत्नस्तु सुतरामेव तदायतिसमृद्ध्यर्थ एव । तत्र गोपजातीनां सत्यपि महासम्पत्त्यन्तरे तत्कारणे च दुग्ध-हेतुकसम्पत्त्यर्थमेव महानाग्रहः स्वाभाविकः । तस्मादायतीयतत्-सम्पत्तिवर्द्धनार्थं दुग्धरक्षायामौत्सुक्यमिदं वात्सल्यविलसितमेव सत् वात्सल्यं पुष्णाति । समुद्रमिव तरङ्गसंघः । अत्र तस्या हृदय-मीदृशम् । अयं स्वसम्पत्तिरक्षां न जानाति । ततः सम्प्रति मदेक-कर्त्तव्यासाविति । अत्र च स्नेहस्नुतमिति स्वाभाविकगाढ़स्नेहं दर्शयित्वा तथैव सूचितम् । एवं तत्कृते दधिमण्डभाण्डभङ्गेऽपि तस्या वहिरेव कोपाभासो दर्शितः । मनसि तु प्रबलचापल्यदर्शनेन हर्ष एव । यथाह—उत्तार्य्य गोपी सुस्मृतं पयः पुनः प्रविश्य संदृश्य च दध्यमत्रकम् । भिन्नं विलोक्य स्वसुतस्य कर्म्म तत् जहास तं चापि न तत्र पश्यती ॥ २४० ॥

स्पष्टम् ॥ १० ॥ ९ ॥ सः ॥ २४० ॥

अथ दुःखेऽपि तत्प्रस्तोभनार्थं मृषाहास्यादिकमपि यथा—उलू-खलं विकर्षन्तं दाम्ना बद्धं स्वमात्मजम् । विलोक्य नन्दः प्रहसद्वदनो विमुमोच ह ॥ २४१ ॥

प्रहसद्वदनमिति तु पाठः क्वचित् ॥ १० ॥ ११ ॥ सः ॥ २४१ ॥

अत्र दुष्टजीवादिभ्योऽनिष्टशङ्कामाह—जन्म ते मय्यसौ पापो

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

माविद्यान्मधुसूदन। समुद्विजे भवद्धेतोः कंसादहमधीरधीः ॥२४२॥

स्पष्टम् ॥ १० ॥ ३ ॥ श्रीदेवकी ॥ २४२ ॥

एवं शृङ्ग्यग्निदंष्ट्र्यहिजलद्विजेत्यादिकं दर्शितम्। अथ तच्छ्रेयो-निबन्धना देवादिपूजा—तैस्तैः कामैरदीनात्मा यथोचितमपूजयत्। विष्णोराराधनार्थाय स्वपुत्रस्योदयाय च ॥ २४३ ॥

अनेन विष्णुः प्रीणातु तेन च मत्पुत्रस्योदयो भवत्विति सङ्कल्प्य सर्वान् यथोचितमपूजयदित्यर्थः ॥ १० ॥ ५ ॥ सः ॥ २४३ ॥

तथान्येषां सम्यङ्निर्णीत एव प्रभावे तत्कार्य्यस्य प्रकारान्तर-कारणताभावना सम्भवति। यथा—अहो बतात्यद्भुतमेव रक्षसा बालो निवृत्तिं गमितोऽभ्यगात् पुनः। हिंस्रः स्वपापेन विहिंसितः खलः। साधुः समत्वेन भयात् प्रमुच्यते इति। श्रीमत्पित्रोस्तु सम्यक् निर्णीतेऽपि सम्भवति। यथा श्रीमती माता किं स्वप्न इत्या-दिना श्रीकृष्णस्य विश्वोदरादित्वं स्वभावं मत्वापि पुनस्तदसम्भवं मन्वाना अथो यथावन्नवितर्कगोचरमित्यादिना तच्च परमेश्वरनिर्मित-मित्यङ्गीकृतवती। उत्पातवत्तन्निवृत्त्यर्थं तच्चरणारविन्दमेव शरणत्वेना-श्रितवती च। पुनश्चाहं ममासावित्यादिना निजभावमेव दृढ़ीकृत्य तच्छरणत्वमेवावधारितवती। अहं ममासौ पतिरेष मे सुत इत्यादिक-मिदन्तानिर्दिष्टत्वेन प्रत्यक्षसिद्धमेव। तथापि यन्मायया इत्थम् एत-न्नानाप्रकारेण विश्वरूपदर्शनाकारा कुमतिः स एवेश्वरो मम गति-रित्यर्थः। यच्चेत्थं विदिततत्त्वायामित्यादिकं तदन्ते श्रीशुकवाक्यं तच्चापि तत्त्वं पुष्टत्वम्। स ईश्वर इति श्रीकृष्णस्यैवेश्वररूपो य आविर्भाव-विशेषः यत्रैव प्रणतास्मि तत्पदमिति तद्वाक्याननुसन्धानमपि पर्य्यव-सितं स एव व्यज्यते। वैष्णवीमिति विशेषणेन मायाशब्दस्य शक्ति-मात्रवाचकत्वेन तस्यास्तत्स्वरूपशक्तित्वं बोध्यते दयामात्रवाचकत्वेन वा। अतएव यथा श्चोपनिषद्भिस्त्वेत्यादिना नायं सुखापो भग-वानित्याद्यन्तेन ग्रन्थेन तत्प्रशंसापि कृता। एवम् अपि स्मरति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नः कृष्ण इत्यादिकस्य अप्यायास्यति गोविन्द इत्यादिकस्य च स्वभावोचितश्रीव्रजेश्वरवाक्यस्यान्ते लोकरीत्या तद्दुःखशान्त्यर्थं श्रीमदुद्धवेन युवां श्लाघ्यतमौ नूनमित्यादिना तत्स्तुतिगर्भतत्त्वोपदेशे कृतेऽपि तद्भावनैश्चल्यं दर्शितम् । एवं निशा सा ब्रुवतोर्व्यतीता नन्दस्य कृष्णानुचरस्य राजन्निति । एवं श्रीव्रजेश्वरस्य वियोगदुःखव्यञ्जनाप्रकारेण श्रीमदुद्धवस्य तत्सान्त्वनाप्रकारेणेत्यर्थः । अतस्तद्भावनैश्चल्यं तत्त्वोपदेशस्य वास्तवमर्थान्तरन्तु श्रीकृष्णसन्दर्भे दर्शितमस्ति । एवं कुरुक्षेत्रयात्रायां परितः स्तुवत्स्वपि तादृशमहामुनिगोष्ठीप्रभृतिषु विख्यायमानेऽपि श्रीवसुदेवपुत्रत्वे श्रीव्रजेश्वरयोस्तद्भावनैश्चल्यं यथा— तावात्मासनमारोप्य बाहुभ्यां परिरभ्य च । यशोदा च महाभागा सुतौ विजहतुः शुच इति । अतएव मनसो वृत्तयो नः स्युरित्यादिद्वये श्रीमदुद्धवं प्रति श्रीकृष्णैश्वर्यप्रतिपादकतदुपदेशाभ्युपगमवादेनापि तथोक्तम् । तादृशेऽपि तस्मिन् प्रतिजन्मैव स्वीयां रतिमेव प्रार्थयामह इत्यर्थः । एषा तेषां रतिप्रार्थना चानुरागमय्येव न तु तद्भावमयी । तं निर्गतं समासाद्य नानोपायनपाणयः । नन्दादयोऽनुरागेण प्रावोचन्नश्रुलोचना इत्युक्तत्वात् । तस्मात्तदीयानुरागयोग्यमेव व्याख्येयम् । नत्वैश्वर्यज्ञानकृतभक्तियोग्यम् । यथा यद्यपि तत्प्राप्तिभाग्यमस्माकं दूरे वर्त्तते तथापि तदीया रतिरस्तु मापयात्विति काकुः । कर्मभि र्भ्राम्यतादृशरागानुरूपमेव जीवान्तरसाधारण्येनोक्तम् । माणानामिति । तदेवं केवलवात्सल्यानुरूपमर्थान्तरञ्च सिध्यति । यतः पादशब्दप्रयोगो वात्सल्येऽपि सम्प्रति प्राप्त्यसम्भावनामयात् दूरदेशवियोगाद्दैन्येन युक्तः । तथैव हि चित्रकेतोः करुणरसे दृष्टमस्ति । पूर्ववदेतत्प्रह्वनञ्च तत्कर्त्तृकं प्रह्वनं नमस्कार इत्यर्थः । पूर्ववदीस्वरशब्दश्च लालनयैव प्रयुक्तः । लोकेऽपि तादृगुक्तिदर्शनादिति । इत्यादय उद्भास्वराः । अथ सात्त्विकाश्च पूर्ववदष्टौ । मातुस्तु नव । स्तन्यस्रवसहितत्वात् । अथ सञ्चारिणोऽप्यत्र प्रसिद्धा एव । ते च

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

साक्षाच्छ्रीकृष्णकृत-लीलाजातास्तल्लीलाशक्तिकृतैश्वर्य्यमयलीलाजाताश्च ज्ञेयाः। क्रमेण यथा—कस्मान्मृदमदान्तात्मन्नित्यादावमर्षः। सा तत्र दृष्ट्वा विश्वमित्यादौ विस्मयः शङ्का चेत्यादि। अथ वात्सल्याख्यः स्थायी। स यथा—तन्मातरौ निजसुतौ घृणया स्नुवन्त्यौ पङ्काङ्गराग-रुचिरावुपगुह्य दोर्भ्याम्। दत्वा स्तनं प्रपिवतोः स्म मुखं निरीक्ष्य मुग्ध-स्मितात्पदशनं ययतुः प्रमोदम्॥ २४४॥

तयोः श्रीकृष्णरामयोर्मातरौ। घृणया कृपया॥ १०॥ ८॥ श्रीशुकः॥ २४४॥

तदेवं विभावादिसम्बलनचमत्कारात्मको वत्सलरसः। तस्य च प्रथमाप्राप्तिमयो भेदो यथा—गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतो-द्भवम्। आत्मानं भूषयाञ्चक्रुर्वस्त्राकल्पाञ्जनादिभिः॥ इत्यादि॥२४५॥

स्पष्टम्॥ १०॥ ५॥ सः॥ २४५॥

अथ तदनन्तरप्राप्तिलक्षणसिद्धात्मको यथा ता आशिष इत्यादौ। अथ वियोगात्मको यथा—इति संस्मृत्य संस्मृत्य नन्दः कृष्णानुरक्तधीः। अत्युत्कण्ठोऽभवत्तूष्णीं प्रेमप्रसरविह्वलः। यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च। शृण्वत्यश्रूण्यवास्राक्षीत् स्नेहस्नुतपयोधरा॥ २४६॥

स्पष्टम्॥ १०॥ ४६॥ सः॥ २४६॥

अथ तदनन्तरतुष्ट्यात्मको योगो यथा। तावाङ्कमासनमारोप्य इत्यादौ। यथा च तत्रैव। नन्दस्तु सख्युः प्रियकृत् प्रेम्णा गोविन्द-रामयोः। अद्य श्व इति मासांस्त्रीन् यदुभिर्मानितोऽवसत्॥ २४७॥

गोविन्दरामयोः प्रेम्णा हेतुना मासांस्त्रीन् अवसत्। तच्च मास-त्रयम् अद्य श्व इति कृत्वा अवसदित्यर्थः। अत्यन्तपरमानन्देन, तत्र दिनद्वयमिवावसदित्यर्थः। कथम्भूतः सन्नवसत्। सख्युः श्रीवसुदेवस्य प्रियकृदेव सन्। तदग्रे श्रीकृष्णं प्रति स्वपुत्रभावाप्रकटनेन व्यवहार-स्तस्य व्रजनयनाग्रहं साक्षान्न कुर्वन्नित्यर्थः। तथा यदुभिर्मानितश्चा-वसदिति। तदनन्तरमपि पुनर्वियोगात्मको यथा—ततः कामैः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पूर्य्यमाणः सव्रजः सहबान्धवः । परार्द्ध्याभरणक्षौमनानानर्घ्यपरिच्छदैः । वसुदेवोग्रसेनाभ्यां कृष्णोद्धवबलादिभिः । दत्तमादाय पारिबर्हं यदुभिर्यापितो ययौ । नन्दो गोप्यश्च गोपाश्च गोविन्दचरणाम्बुजे । मनः क्षिप्तं पुनर्हर्त्तुमनीशा माथुरान् ययुः ॥ २४८ ॥

कामैः श्रीकृष्णव्रजागमनादिरूपैरभिलाषैर्निधृतं श्रीकृष्णेन पूर्य्यमाणः तदङ्गीकारेण सन्तोष्यमाण इत्यर्थः । श्रीरामव्रजगमने तामुद्दिश्य कृष्णे कमलपत्राक्षे संन्यस्ताखिलराधस इति श्रीशुकोक्तेः । तत्रैव कृष्णे कृष्णप्राप्त्यर्थं संन्यस्ताखिलराधसस्त्यक्तसर्वविषया इति टीकोक्तेः । अतः श्रीवसुदेवादिभिः कर्त्तृभिः परार्द्ध्याभरणादिभिः कृत्वा दत्तं यत् पारिबर्हं तत्तेषां प्रीतिमयत्वेनैवादायेत्यर्थः । यापितो महता सैन्येन प्रस्थापितः । तदनन्तरं तेषां पुनरत्यन्तप्रेमावेशं वर्णयति, नन्द इत्यादि । माथुरानिति तत्रैव तेन रूपेणैव केवलस्वसम्बन्धितयैव तेषां श्रीकृष्णप्राप्त्याग्रहो दर्शितः ॥ १० ॥ ८४ ॥ सः ॥ २४७।२४८॥

एतदनन्तरं यर्ह्यम्बुजाक्षापससार भो भवान् कुरून्मधून् वाथ सुहृद्दिदृक्षया इति श्रीद्वारकाप्रजावाक्यानुसारेण श्रीकृष्णसन्दर्भोत्थापितपाञ्चगद्यानुसारेण च नित्यैव तुष्टिरवगन्तव्या । इति वत्सलाख्यो रसः । अथ मैत्रीमयः । तत्रालम्बनः मित्रत्वेन स्फुरन् मैत्रीविषयः श्रीकृष्णस्तदाश्रयरूपाणि तल्लीलागतानि स्वोत्कृष्टसजातीयभावानि तदीयमित्राणि च । तत्र श्रीकृष्णः क्वचिच्चतुर्भुजोऽपि श्रीमन्नराकारत्वेनैव प्रतीतः । यथा श्रीगीतासु श्रीमदर्जुनेन तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्त्ते इति स्वप्रार्थनानन्तरं तद्रूपे प्रादुर्भूते दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन । इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गत इत्युक्तम् । अतएव विश्वरूपादीनां तद्दर्शनजातसाध्वसादिभावानां च न कथमपि तदभीष्टत्वम् । अथ तन्मित्रादि । सुहृदः सखायश्च । तत्र पूर्वोक्तलक्षणाः सुहृदः श्रीभीमसेनद्रौपदीप्रभृतयः । सखायः श्रीमदर्जुनश्रीदामविप्रादयः । श्रीमति गोकुले श्रीदामादयश्च । ते च

CC.0 Jangamwadi Math Collection. Digitized by eGangotri

श्रीभागवतादौ प्रसिद्धाः। तत्रागमे वसुदेवकिङ्किण्यादयः। भविष्योत्तरे मल्ललीलायां सुभद्रमण्डलीभद्रभद्रवर्द्धनगोभटाः। यक्षेन्द्रभट इत्याद्या गणिताः। गणना तु तेनैव साकं पृथुकाः सहस्रश इत्युक्ता। एषामपि श्रीकृष्णसाम्यमेव। गोपैः समानगुणशीलवयोविलासवेषैश्चेत्यादौ दर्शितम्। गोपजातिप्रतिच्छन्न इत्यादिपद्ये श्रीकृष्णसन्दर्भे तथैव व्याख्यातम्। एषां स्वाभाविकवैदुष्यलक्षणमपि टीकायां पशुसंख्यायां इत्यादिपद्यमस्ति। वैदग्ध्यमपि क्वचिन्नृत्यत्सु बालेषु इत्यादौ श्रीभगवतापि श्लाघितगुणत्वेन व्यञ्जयिष्यते। ते च त्रिविधाः। सखायः प्रियसखाः प्रियनर्मसखाश्च। तत्तद्भाववैशिष्ट्यात्। तत्र श्रीदामादयः परममाधुर्य्यं कमयप्रणयातिशयविहारलालित्येनाधिकाः। इत्थं सतामित्यादिनोक्तेः। तत्र श्रीकृष्णस्यालम्बनत्वञ्च वर्हापीड़ं नटवरवपुरित्यादिना वर्णितम्। अथोद्दीपनेषु गुणाः। अभिव्यक्तमित्रभावता आर्जवं कृतज्ञत्वं बुद्धिः पाण्डित्यं प्रतिभा दाक्ष्यं शौर्यं बलं क्षमा कारुण्यं रक्तलोकत्वमित्यादयः। अवयववयःसौन्दर्य्यं सर्वसल्लक्षणत्वमित्यादयश्च। तत्र सौहृद्यमये आर्जवादीनां प्राधान्यम्। सख्यमये तु वैदग्ध्यसौन्दर्य्यादिमिश्राणां तेषाम्। तदुभयांशमिश्रायां मैत्र्यां तु यथास्वमंशद्वयस्य। तत्राभिव्यक्ततत्तद्भावता श्रीमदर्जुनानुतापे यथा, सख्यं मैत्रीं सौहृदञ्चेत्यग्रे वक्ष्यते। श्रीगोपेषु च तां व्यनक्ति—तान् दृष्ट्वा भयसंत्रस्तानूचे कृष्णोऽस्य भीभयम्। मित्राण्याशान्माविरमतेहात्रेष्ये वत्सकानहमित्यादि। ततो वत्सानदृष्ट्वैत्य पुलिनेऽपि च वत्सपान्। उभावपि वने कृष्णो विचिकाय समन्तत इत्यन्तम्॥ २४९॥

स्पष्टम्॥ १०॥ १५॥ श्रीशुकः॥ २४९॥

तथा—अन्वमंसत तद्राजन् गोविन्दानुग्रहेक्षितमित्यादि॥ २५०॥

स्पष्टम्॥ १०॥ १५॥ सः॥ २५०॥

तथा—अहोऽतिरम्यं पुलिनं वयस्या इत्यादि॥ २५१॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्पष्टम् ॥ १० ॥ १७ ॥ श्रीभगवान् ॥ २५१ ॥

तथा—क्वचित् पल्लवतल्पेषु नियुद्धश्रमकर्षितः। वृक्षमूलाश्रयः शेते गोपोत्सङ्गोपबर्हणः ॥ २५२ ॥

स्पष्टम् ॥ १० ॥ १५ ॥ श्रीशुकः ॥ २५२ ॥

तथा—कुन्ददामेत्यादौ नर्म्मदः प्रणयिनां विजह्रारिति ॥ २५३ ॥

तथा मणिधर इत्यादौ प्रणयिनोऽनुचरस्य कदांसे प्रक्षिपन् भुजमगायत यत्रेति ॥ २५४ ॥

स्पष्टम् ॥ १० ॥ ३५ ॥ श्रीगोप्यः ॥ २५४ ॥

अथ जातिश्च क्षत्रियत्वम्। यत्र सौहृदमयस्य प्राचुर्य्यम्। तथा गोपत्वं, यत्र सख्यमयस्य प्राचुर्य्यम्। अथ क्रियाश्च। सौहृदमये विक्राव्यादिप्रधानाः। सख्यमये तु नर्म्मगाननानाभाषांसनगवाह्वानवेणुवाद्यादिकलावाव्याद्युचितक्रीड़ादयः। तत्र नर्म्म यथा—बिभ्रद्वेणुं जठरपटयोरित्यादौ तिष्ठन्मध्ये स्वपरि सुहृदो हासयन् नर्म्मभिः स्वैरित्यादि ॥ २५५ ॥

स्पष्टम् ॥ १० ॥ ११ ॥ सः ॥ २५५ ॥

अन्याश्च यथा—एवं वृन्दावनं श्रीमत् प्रीतः प्रीतमनाः पशून्। रेमे सञ्चारयन्नद्रेः सरिद्रोधःसु सानुषु। क्वचिद्गायति गायत्सु मदान्धालिष्वनुव्रतैः। उपगीयमानचरितः पथि सङ्कर्षणान्वितः। अनुजल्पति जल्पन्तं कलवाक्यैः शुकं क्वचिदित्यादि ॥ २५६ ॥

तथा—मेघगम्भीरया वाचा नामभिर्दूरगान् पशून्। क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया ॥ चकोरक्रौञ्चेत्यादि ॥ २५७ ॥

स्पष्टम् ॥ १२ ॥ १५ ॥ सः ॥ २५७ ॥

तथा—तत्रोपाहूय गोपालान् कृष्णः प्राह विहारवित्। हे गोपा विहरिष्यामो द्वन्द्वीभूय यथायथमित्यादि ॥ २५८ ॥

स्पष्टम् ॥ १८ ॥ १० ॥ सः ॥ २५८ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथा—वर्हप्रसूनवनधातुविचित्रिताङ्गः प्रोद्दामवेणुदलशृङ्गरवोत्सवाढ्य इत्यादि ॥ २५९ ॥

स्पष्टम् ॥ १० ॥ १८ ॥ सः ॥ २५९ ॥

अनेन गोपवेशश्च दर्शितः। गोगोपकैरनुवनं नयतोरित्यादौ निर्योगपाशकृतलक्षणयोर्विचित्रमित्यनेन च। विचित्रत्वं चात्र पट्टसूत्रमुक्तादिमयत्वेनावगन्तव्यम्। तथा वर्हिणस्तवकधातुपलाशैर्बद्धमल्लपरिवर्हविडम्ब इत्यादिषु मल्लवेषः। श्यामं हिरण्यपरिधिमित्यादौ नटवेषमित्यनेन नटवेषः। महार्हवस्त्राभरणकञ्चुकोष्णीषभूषिताः। गोपाः समाययूराजन्नित्यनुसारेण राजवेषश्च। एष तु द्वारकादौ प्रचुरः। तथा तत्र गोकुले च परीधानीयोत्तरीयाभ्यां धार्मिकगृहस्थवेषश्चावगन्तव्यः। एष एव नीविं वसित्वा रुचिरामित्यनेन दर्शितः। तैस्तैरेव हि तत्तल्लीलाः शोभन्त इति। अथ द्रव्याणि च वसनभूषणशङ्खचक्रशृङ्गवेणुयष्टिप्रेष्ठजनप्रभृतीनि। कालाश्च तत्तत्क्रीड़ोचिताः। ते तु यथा—एवं वनं तद्वर्षिष्ठं पक्वखर्जूरजम्बुमत्। गोगोपालैर्वृतो रन्तुं सबलः प्राविशद्धरिः। धेनवो मन्दगामिन्य इत्यादि। वनौकसः प्रमुदिता इत्यादि। क्वचिद्वनस्पतिक्रोड़े इत्यादि। दध्योदनमुपानीतमित्यादि। शाद्वलोपरि संविश्येत्यादि। प्रावृट्श्रियञ्च तां वीक्ष्येत्याद्यन्तम् ॥ २६० ॥

स्पष्टम् ॥ १० ॥ २० ॥ सः ॥ २६० ॥

एवमन्येऽपि स्मर्त्तव्याः। अथानुभावेषूद्भास्वराः। तत्र सौहृदमयी निरुपाधितदीयहितानुसन्धानयुक्तायुक्तादिकथनसम्मितगोष्ठीप्रभृतयः। सख्यमये असङ्कुचितप्रीतिमयचेष्टाः। ताश्च सहनानाक्रीड़ासङ्गीतादिकलाभ्यासभोजनोपवेशशयनादयः नर्म्मरहोलीलावर्णनकथादयश्च ज्ञेयाः। इत्थमित्यादिना या एव प्रशस्ताः। तथोदाह्रियन्ते—प्रवालवर्हस्तवकस्रग्धातुकृतभूषणाः। रामकृष्णादयो गोपा ननृतुर्युयुधु जंगुः। कृष्णस्य नृत्यतः केचिज्जगुः केचिदवादयन्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वेणुपाणिदलैः शृङ्गैः प्रशशंसुरथापरे। गोपजातिप्रतिच्छन्ना देवा गोपालरूपिणः। ईडिरे कृष्णं रामञ्च नटा इव नटं नृप। भ्रामणै-र्लङ्घनैः क्षेपैरास्फोटनविकर्षणैः। चिक्रीड़तुर्नियुद्धेन काकपक्षधरौ क्वचित्। क्वचिन्नृत्यत्सु चान्येषु गायकौ वादकौ स्वयम्। शशंसतु-र्महाराज साधु साध्विति वादिनौ। क्वचिद्बिल्वैः क्वचित् कुम्भै-रित्यादि ॥ २६१ ॥

स्पष्टम् ॥ १० ॥ १८ ॥ श्रीशुकः ॥ २६१ ॥

तथा—कृष्णस्य विष्वक् पुरुराजिमण्डलैरभ्याननाः फुल्लदृशो व्रजा-र्भकाः। सहोपविष्टा विपिने विरेजुश्छदा यथाम्भोरुहकर्णिकायाः। केचित् पुष्पैर्दलैः केचिदित्यादि। सर्वे मिथो दर्शयन्तः स्वस्वभोज्य-रुचिं पृथक्। हसन्तो हासयन्तश्चाभ्यवजह्रुः सहेश्वराः ॥ २६२ ॥

स्पष्टम् ॥ १० ॥ १३ ॥ सः ॥ २६२ ॥

एवमन्या अपि। तथा सौहृदसख्ययोः सात्त्विकाश्चोन्नेयाः। तत्र सौहृदेऽस्रु यथा—तं मातुलेयं परिरभ्य निर्वृतो भीमः स्मयन् प्रेम-जवाकुलेन्द्रियः। यमौ किरीटी च सुहृत्तमं मुदा प्रवृद्धवाष्पाः परि-रेभिरेऽच्युतम् ॥ २६३ ॥

अत्र सत्यप्यग्रजानुजत्वव्यवहारे सुहृत्तममित्यनेन तदंशस्यैवो-ल्लासोऽभ्युपगतः ॥ १० ॥ ७१ ॥ सः ॥ २६३ ॥

सख्ये प्रलयोऽपि यथा—तं नागभोगपरिवीतमदृष्टचेष्टमालोक्य तत्प्रियसखाः पशुपा भृशार्त्ताः। कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामाः दुःखानुशोकभयमूढ़धियो निपेतुः ॥ २६४ ॥

स्पष्टम् ॥ १० ॥ १६ ॥ सः ॥ २६४ ॥

एवं तत्र तत्र सञ्चारिणश्चोन्नेयाः। यथा सौहृदे तं मातुलेय-मित्यादौ हर्षः। यथा च सख्ये कृष्णं ह्रदाद्विनिष्क्रान्तमित्या-द्यनन्तरम् उपलभ्योत्थिताः सर्वे लब्धप्राणा इवासवः। प्रमोद-निभृतात्मानो गोपाः प्रीत्याभिरेभिरे ॥ २६५ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्पष्टम् ॥ १० ॥ १६ ॥ सः ॥२६५॥

अथ स्थायी मैत्राख्यः। स चैश्वर्य्यज्ञानसङ्कुचितः श्रीदामविप्रादीनाम्। सङ्कोचितैश्वर्य्यज्ञानः श्रीमदर्जुनादीनाम्। शुद्धः श्रीगोपबालानाम्। अतएव कदाचिदपि न विकरोति। तथैव श्रीरामव्रजागमने समुपेत्याथ गोपाला हास्यहस्तग्रहादिभिरित्यादिकव्यवहारः। तत्र सौहृदाख्यो भेदः तं मातुलेयं परिरभ्य निर्वृत इत्यादौ ज्ञेयः। सख्यं यथा—एकदा रथमारुह्य विजयो वानरध्वजः। गाण्डीवं धनुरादाय तूणौ चाक्षयसायकौ। साकं कृष्णेन संनद्धो विहर्त्तुं विपिनं महत्। बहुव्यालमृगाकीर्णं प्राविशत् परवीरहा ॥ २६६ ॥

कृष्णेन साकं विहर्त्तुमित्यन्वयः ॥ १० ॥ ५८ ॥ सः ॥ २६६ ॥

यथा च—तेनैव साकं पृथुकाः सहस्रशः स्निग्धाः सुशिग्वेत्रविषाणवेणवः। स्वान् स्वान् सहस्रोपरिसंख्ययान्वितान् वत्सान् पुरस्कृत्य विनिर्ययुर्मुदा ॥ २६७ ॥

एवकारेण तदासक्तिरूपो भावो दर्शितः। यदि दूरं गतः कृष्णो वनशोभेक्षणाय तम्। अहं पूर्वमहं पूर्वमिति संस्पृश्य रेमिरे ॥२६८॥

स्पष्टम् ॥ १० ॥ १२ ॥ सः ॥ २६८ ॥

यथा च—ऊचुश्च सुहृदः कृष्णं स्वागतं तेऽतिरंहसा। नैकोऽप्यभोजि कवल एहीतः साधु भुज्यताम् ॥ २६९ ॥

स्पष्टम् ॥ १० ॥ १४ ॥ सः ॥ २६९ ॥

श्रीकृष्ण एव तेषां जीवनमित्याह—कृष्णं महावकग्रस्तं दृष्ट्वा रामादयोऽर्भकाः। बभूवुरिन्द्रियाणीव विना प्राणं विचेतसः। मुक्तं वकास्यादुपलभ्य दारका रामादयः प्राणमिवेन्द्रियोगणः। स्थानागतं तं परिरभ्य निर्वृता प्रणीय वत्सान् व्रजमेत्य तज्जगुः ॥ २७० ॥

स्पष्टम् ॥ १० ॥ ११ ॥ सः ॥ २७० ॥

तदेवं विभावादिसम्वलनात्मको मैत्रीमयो रसः। अस्य च सौहृदमयः सख्यमय इति भेदद्वयं तत्र तत्रावगन्तव्यम्। तस्य प्रथमस्य प्राप्त्या-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्मकसिद्धरात्मको भेदो पूर्ववदूह्यो। वियोगात्मको भेदो यथा—एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञाविकल्पितः। नानाशङ्कास्पदं रूपं कृष्णविश्लेषकर्षितः॥ शोकेन शुष्यद्वदनो हृत्सरोजो हतप्रभः। विभुं तमेवानुध्यायन्नाशक्नोत् प्रतिभाषितुम्। कृच्छ्रेण संस्तभ्य शुचः पाणिनामृज्य नेत्रयोः। परोक्षेण समुन्नद्धप्रणयौत्कण्ठ्यकातरः। सख्यं मैत्रीं सौहृदञ्च सारथ्यादिषु संस्मरन्। नृपमग्रजमित्याह वाष्पगद्गदया गिरेत्यादि॥ २७१॥

कृष्णोऽर्जुनः। आविकल्पित इति च्छेदः। नानाशङ्कास्पदं रूपम् आलक्ष्य विकल्पित इत्यर्थः। शुचः शोकाश्रूणि आमृज्य च। परोक्षेण दर्शनागोचरेण श्रीकृष्णेन हेतुना। अतएवानिष्टशङ्काया अभावात् नात्र करुणरसावकाशः। तदभावश्चैषामैश्वर्य्यज्ञानसद्भाविनां भवत्येव। इति वञ्चितोऽहमित्यादिकं वक्ष्यमाणं विलापम्। अथ तदनन्तरं तुष्ट्यात्मकयोगो यथा—ते साधुकृतसर्वार्था ज्ञात्वात्यन्तिकमात्मनः। मनसा धारयामासुर्वैकुण्ठचरणाम्बुजम्। तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे। तस्मिन् नारायणपदे एकान्तमतयो गतिम्। अवापुर्दुरवापां ते असद्भिर्विषयात्मभिः। विधूतकल्मषास्थानं विरजेनात्मनैव हि॥ २७२॥

ते पाण्डवाः साधु यथा स्यात्तथा कृतसर्वार्था वशीकृतधर्म्मार्थकाममोक्षा अपि वैकुण्ठस्य श्रीकृष्णस्य चरणाम्बुजमेव आत्यन्तिकं परमपुरुषार्थं ज्ञात्वा तदेव मनसा धारयामासुः। नारायणः श्रीकृष्णः। पुनर्गतिमेव विशिनष्टि, विधूतकल्मषं यत् आस्थानं नित्यश्रीकृष्णप्रकाशास्पदं तदीया सभा। आत्मना स्वशरीरेणैव। तत्र हेतुः विरजेनाप्राकृतेन। हिशब्दोऽसम्भावनानिवृत्त्यर्थः। तथा—द्रौपदी च तदाज्ञाय पतीनामनपेक्षताम्। वासुदेवे भगवति ह्येकान्तमतिराप तम्॥ २७३॥

आत्मानं प्रति अनपेक्षमाणानाम्। तत् कृष्णसङ्गमनम् आज्ञाय

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सम्यक् ज्ञात्वा। वासुदेवे श्रीवसुदेवनन्दने। ह्रि प्रसिद्धौ। तस्मिन्ने-कान्तमतिस्तमेव प्राप्तवती ॥ १ ॥ १५ ॥ श्रीसूतः ॥ २७३ ॥

श्रीव्रजकुमाराणां देशान्तरवियोगात्मोदाहरणं तदनन्तरतुष्ठ्यात्मोदाहरणञ्च वत्सलानुसारेणैव ज्ञेयम्। इति मैत्रीमयो रसः। अथोज्ज्वलः। अत्रालम्बनः कान्तत्वेन स्फुरन् कान्तभावविषयः श्रीकृष्णः। तदाधाराः सजातीयभावास्तदीयपरमवल्लभाश्च। तत्र श्रीकृष्णो यथा—श्रुत्वा गुणान् भुवनसुन्दर शृण्वतां ते निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम्। रूपं दृशां दृशिमतामखिलार्थलाभं त्वय्यच्युताविशति चित्तमपत्रपं मे ॥ २७४ ॥

स्पष्टम् ॥ १० ॥ ५२ ॥ श्रीरुक्मिणी ॥ २७४ ॥

यथाच—तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः। पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥ २७५ ॥

मन्मथस्यापि मन्मथो मदनः ॥ १० ॥ ३२ ॥ श्रीशुकः ॥ २७५ ॥

अथ तद्वल्लभासु सामान्या सैरिन्ध्री यथा—सैव कैवल्यनाथं तं प्राप्य दुष्प्रापमीश्वरम्। अङ्गरागार्पणेनाहो दुर्भगेदमयाचतेति दर्शिता। पूर्वं तादृशदुर्भगापि अङ्गरागार्पणमात्रलक्षणेन भजनेन तं प्राप्य। अहो आश्चर्य्ये। तेन हेतुना इदं सहोष्यतामित्यादिलक्षणमपि अयाचत याचितुं योग्याभूत्। तं कथंभूतमपि। केवलः शुद्धप्रेमवान् तस्य भावः कैवल्यं तत्रैव नाथं वल्लभमपि। ततोऽस्या आत्मतर्पणैकतात्पर्य्यायाः संप्रत्यपि श्रीव्रजदेव्यादिवच्छुद्धप्रेमाभावो दर्शितः। स्वीयाः श्रीरुक्मिण्यादयः या एवोद्दिश्य स्तौति—याः संपर्य्यचरन् प्रेम्णा पादसंवाहनादिभिः। जगद्गुरुं भर्त्तृबुद्ध्या तासां किं वर्ण्यते तपः ॥ २७६ ॥

स्पष्टम् ॥ १० ॥ ९० ॥ श्रीशुकः ॥ २७६ ॥

तथा—इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम्। भेजुर्मुदाविरतमेधितयानुरागहासावलोक-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नवसङ्गमलालसाढ्यम् । प्रत्युद्गमादरभयार्हणपादशौचताम्बूलविश्रमणवीजनगन्धमाल्यैः । केशप्रसारशयनस्नपनोपहार्य्यैर्दासीशता अपि विभोर्विदधुः स्म दास्यम् ॥ २७७ ॥

अतएव येषां भजन्ति दाम्पत्य इत्यादि निन्दा त्वन्यपरत्वेनैव निर्दिष्टा । दिष्ट्या गृहेश्वरीत्याद्युत्तरवाक्यात् । यथैव केतुमालवर्षे श्रीकामदेवाख्यभगवद्व्यूहस्तुतौ लक्ष्मीवाक्यम्—स्त्रियो व्रतैस्त्वा हृषीकेश्वरं स्वतो ह्याराध्य लोके पतिमाशासतेऽन्यमित्यादिकम् ॥१०॥६१॥ श्रीशुकः ॥ २७७ ॥

अथ वस्तुतः परमस्वीया अपि प्रकटलीलायां परकीयायमाणाः श्रीव्रजदेव्यः । या एवासमोर्द्ध्वं स्तुताः । नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः । रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठलब्धाशिषां य उदगाद्व्रजसुन्दरीणामित्यादिषु । गोप्यस्तपः किमचरन् यदमुष्य रूपमित्यादौ या एवासमोर्द्ध्वं रूपं पश्यन्तीत्यत्र । तथाचाहुः—या दोहनेऽवहनने मथनोपलेपेत्यादौ धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः ॥ २७८ ॥

उरुक्रमचित्तमेव यानं यासां ताः । यास्तच्चित्तं यत्र यत्र गच्छति तत्र तत्रैव तदारूढ़ास्तिष्ठन्ति इत्यर्थः । चिन्तयाना इति पाठे चितिश्चिन्ता भावनेति पूर्ववदेवार्थः ॥ १० ॥ ४४ ॥ माथुरपुरस्त्रियः ॥ २७८ ॥

अतएवासामेव तत्र तत्र दर्शित उत्कर्षः परकीयायमाणत्वेन निवारणादिमात्रांशे लौकिकरसविदामपि तेन सेवितः । यथाह भरतः—बहु वार्य्यते यतः खलु यत्र प्रच्छन्नकामुकत्वञ्च । या च मिथो दुर्लभता सा परमा मन्मथस्य रतिरिति । रुद्रः—वामता दुर्लभत्वञ्च स्त्रीणां या च निवारणा । तदेव पञ्चवाणस्य मन्ये परममायुधमिति । विष्णुगुप्तः—यत्र निषेधविशेषः सुदुर्लभत्वञ्च यन्मृगाक्षीणाम् । तत्रैव नागराणां निर्भरमासज्जते हृदयमिति । अतएव कासा-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

च्चिद्गोपकुमारीणां कात्यायनीजपानुसारेण पतिभावेऽप्याधिक्यमनुवर्त्तते इति। केचित्तु वारणादित एवासां प्रेमाधिक्यं मन्यन्ते। तन्न। जातितोऽप्याधिक्यात्। तच्च व्रजस्त्रियो यद्वाञ्छन्तीति वाञ्छन्ति यद्भव-भिय इत्यादिना व्यक्तम्। न हि वारणाद्यंशमङ्गीकृत्य तेषां लोभो जातः। अनभीष्टत्वात्। ततो जात्यंशमेवेति गम्यते। अतः प्रबल-जातित्वान्निवारणादिकमप्ययमतिक्रामतीत्येवमेव श्लाघ्यते या दुस्त्यज-मित्यादिना। मत्तहस्तिनां बलस्य दुर्गातिक्रमवन्निवारणाद्यतिक्रमो हि तासां प्रेमबलस्य व्यञ्जक एव न तूत्पादकः। जात्यंशेनैव प्राबल्ये सति निवारणादिसाम्येऽपि तासां स्वेषु प्रेमतारतम्यं सम्भवति। यथा ताभिरपि श्रीराधायाः प्रेमवैशिष्ट्येन श्रीकृष्णवशीकारित्ववैशिष्ट्यं दर्शितम्। अनयाराधितो नूनमित्यादिना। या च तासां क्षोभे सति प्रेम्णः प्रफुल्लता सा खलु कृष्णसर्पस्येव स्वत एव सिद्धतया, नत्व-परत आहार्य्यतया। केवलौपपत्यस्य प्रेमवर्द्धनत्वं तु ताभिरेव स्वयं निःस्वं त्यजन्ति गणिका जारा भुक्त्वा रतां स्त्रियमिति निन्दितम्। यत्तु कश्चित् परकीयासु लघुत्वं वक्ति, तत् खलु प्राकृतनायक-मवलम्बमानासु युक्तं; तत्रैव जगुप्सितत्वात्। अत्र तु गोपीनां तत्पतीनाञ्चेत्यादिना तत्प्रत्याख्यानात्। अत्र च तत्पतीना-मिति तद्व्यवहारदृष्टिमात्रेणोक्तं, न तु परमार्थदृष्ट्या। तद्दृष्ट्या तु श्रीकृष्णसन्दर्भे तासां स्वरूपशक्तित्वमेवात्र परत्र च स्थापितम्। तथास्य श्रीकृष्णलक्षणस्य नायकस्य तादृशभावेनैव प्राप्तौ एताः परं तनुभृत इत्यादिषु सर्वोद्ध्वं श्लाघाश्रवणात् परमगरीयस्त्वमेव। अत-एवोक्तम्—नेष्टा यदङ्गिनि रसे कविभिः परोढ़ा तद्गोकुलाम्बुज-दृशां कुलमन्तरेण। आशंसया रसविधेरवतारितानां कंसारिणा रसिकमण्डलशेखरेणेति। अथ तासां स्वपत्याभाससम्बन्धमपि वार-यितुं योजयति—नासूयन् खलु कृष्णाय मोहितास्तस्य मायया मन्य-मानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः॥ २७९॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एवं श्रीभगवन्नित्यप्रियाणां तासां सर्वदैव बोद्धव्यमिति भावः। ततश्च तस्य मायया मोहिताः सन्तो माययैव ये स्वे स्वे दारास्तान् स्वस्वपार्श्वस्थान् मन्यमानाः जानन्तो नासूयन्नित्यर्थः ॥ १० ॥ ३३ ॥ श्रीशुकः ॥ २७९ ॥

तदेवं भावत उत्कर्षो दर्शितः। दैहिकं तमाह—ताभिः समेताभिरुदारचेष्टित इत्यादौ व्यरोचतैणाङ्क इवोडुभिर्वृत इति ॥ २८० ॥

स्पष्टम् ॥ १० ॥ २९ ॥ सः ॥ २८० ॥

किञ्च—तत्रातिशुशुभे ताभिर्भगवान् देवकीसुतः।
मध्ये मणीनां हैमानां महामारकतो यथा ॥ २८१ ॥

स्पष्टम् ॥ १० ॥ ३३ ॥ सः ॥ २८१ ॥

गुणवैभवकृतमप्याह—ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः। व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा ॥ २८२ ॥

स्पष्टम् ॥ १० ॥ ३२ ॥ सः ॥ २८२ ॥

कलावैदग्धीकृतमाह—पादन्यासैर्भुजविधुतिभिरित्यादि। उच्चैर्जगुर्नृत्यमाना रक्तकण्ठ्यो रतिप्रियाः। कृष्णाभिमर्षमुदिता यद्गीतेनेदमावृतम् ॥ २८३ ॥

इदं जगत्। अद्यापि यासां गीतांश एव जगति प्रचरन्तीत्यर्थः। यदुक्तं सङ्गीतसारे—तावन्त एव रागाः स्युयावत्यो जीवजातयः। तेषु षोड़शसाहस्री पुरा गोपीकृतावरेति। अन्ते च तेषामेव विभागश्च तत्र स्वर्गादिषु दर्शित इति। किञ्च—काचित् समं मुकुन्देन स्वरजातीरमिश्रिताः। उन्निन्ये पूजिता तेन प्रीयता साधुसाध्विति। तदेव ध्रुवमुन्निन्ये तस्यै मानञ्च बह्वदात् ॥ २८४ ॥

स्वराः षड़्जादयः सप्त जातयस्तेषु रागोत्पत्तिहेतवः। ता उभयोरपि परमप्रवीणत्वात् स्वरान्तरेण जात्यन्तरेण चामिश्रिताः शुद्धा एव उन्निन्ये उत्कर्षेण जगौ। अत्र शक्रसर्वपरमेष्ठिपुरोगानिश्चितत्त्वगानस्य श्रीमुकुन्दस्यापि सहार्थत्वेनाप्राधान्यं विवक्षितम्। तत्रा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्युत्कर्षेण। अतएव तेन पूजिता। तदैव तालान्तरेण निबद्धं गीतं ध्रुवाख्यं तालविशेषं ज्ञात्वा यया ततोऽप्युत्कर्षेण जगौ तस्यै पूर्वस्या अप्यधिकं मानमदात् १० ॥ ३३ ॥ सः ॥ २८४ ॥

अथ तासु सामान्यासु सैरिन्ध्री मुख्या। स्वकीयासु पट्टमहिषीषु श्रीरुक्मिणीसत्यभामे मुख्ये। यथा श्रीहरिवंशे—कुटुम्बस्येश्वरी चासीद्रुक्मिणी भीष्मकात्मजा। सत्यभामोत्तमा स्त्रीणां सौभाग्ये चाधिकाभवदिति। अथ श्रीव्रजदेवीषु मुख्या भविष्योत्तरोक्ताः— गोपाली पालिका धन्या विशाखा ध्याननिष्ठिका। राधानुराधा सोमाभा तारका दशमी तथेति। दशम्यपि तारकानाम्नीत्यर्थः। स्कान्दप्रह्लादसंहितायान्तु ललिता शैव्या पद्मा भद्रेति चतस्रोऽन्याः। अन्यत्र चन्द्रावली च श्रूयते। सा चात्रार्थसाम्यात् सोमाभैवानुमेया। क्वाप्यन्ये तु प्रमदाशतकोटिभिराकुलिते इत्यागमोपदेशः। एतास्वपि श्रीराधिकैव मुख्या। सैव रासोत्सवे श्रीकृष्णेन परमप्रेमान्तर्धापितेति श्रीकृष्णसन्दर्भे दर्शितमस्ति। प्रसिद्धा च तथा सैव सर्वत्रेति। अतः श्रेष्ठ्यचिह्नेन गोपालतापन्युक्ता गान्धर्विकैव सेत्यनुमेया। अथ ताः श्रीकृष्णवल्लभास्त्रिविधा दृश्यन्ते मुग्धा मध्या प्रगल्भा इति। तादृश्यश्च नवयौवनस्पष्टयौवनसम्यग्यौवनैर्वयोभेदैस्तत्तच्चेष्टाभिश्च। सम्यग्यौवनञ्च प्राप्तषोड़शवर्षत्वमेव, नाधिकम्। कन्याभिर्द्वाष्टवर्षाभिरिति गौतमीयतन्त्रात्। तथा स्वभावभेदेन धीरा अधीरा मिश्रगुणाश्चेति पुनस्त्रिधावगन्तव्याः। प्रेमतारतम्येन श्रेष्ठाः समा लघव इति च। अथ ता लीलावस्थाभेदेनैकैका अभिसारिका वासकसज्जोत्कण्ठिता खण्डिता विप्रलब्धा कलहान्तरिता प्रोषितप्रेयसी स्वाधीनभर्तृकेत्यष्टौ नामानि भजन्ति। तथा परस्परं भावानां सादृश्यकिञ्चित्साद्दश्यास्फुटसादृश्यानि विरोधित्वं चेतद्भेदचतुष्टयात् पुनश्चत्वारि। सखी सुहृत् तटस्था प्रातिपक्षिकी चेति भावभेदाश्च स्थायिनिरूपणे ज्ञेयाः। तत्र सखी यथा—

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अप्येणपत्नीत्यादिद्वये पुरतो दर्शनीया। अत्र हि तन्वन् दृशां सखि सुनिर्वृतिमिति स्वीयतद्दिदृक्षाद्योतनात् सखीति तद्दर्शनसुखोपभोगसौभाग्यभागितासाम्येन तस्यां सख्यारोपणात् कान्तेति कृष्णसङ्गिन्याः सौभाग्यातिशयस्य कुलपतेरिति श्रीकृष्णस्य कान्ताङ्गसङ्गेत्यादिना तयोर्मिथोऽङ्गसङ्गस्य तदीयपरिमलस्य चानुमोदनात् सख्यमेव स्पष्टम्। अतएव तल्लीलानुमोदनमपि, बाहुं प्रियांस इत्यादिना। सुहृद्यथा—अनयाराधितो नूनं भगवान् हरिरीश्वरः। यन्नो विहाय गोविन्दः प्रीतो यामनयद्रहः॥ २८५॥

अस्याश्च तद्भाग्यमात्रप्रशंसनात् व्यक्तं सौहृद्यम्। तटस्था यथा—अप्येणपत्नीति सखीवाक्यानन्तरं पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पतेः। नूनं तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो॥ २८६॥

अत्र सखीवचनं श्रुत्वापि तत्रौदासीन्यात्ताटस्थ्यमेव व्यक्तम्। एवमनयाराधितो नूनमिति सुहृद्वाक्यानन्तरमपि धन्या अहो अमी आल्य इत्यादिवाक्ये च। अथ प्रातिपक्षिकी यथा—अस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत्। यैकापहृत्य गोपीनां धनं भुङ्क्तेऽच्युताधरम्॥ २८७॥

अथ प्रकट एव मत्सर इति ताभ्यो विलक्षणत्वम्। तथैव श्रीहरिवंशादौ पारिजातहरणे श्रीरुक्मिणीं प्रति सत्यभामायाः स्पष्टम्। १०॥ ३०॥ श्रीशुकः॥ २८५—२८७॥

अत्र विचार्य्यते। ननु भगवद्भक्तेषु परस्परं प्रतिपक्षित्वमसम्भवमहृद्यञ्च। तथा तासां तत् सौभगमदमित्यादौ तदीर्षामदमानादिदूरोचिकीर्षा श्रीभगवतोऽपि दृश्यते। तथा श्रीमता मुनिना स्वयमपि ताभिस्तत्र दौरात्म्यशब्दः प्रयुक्तोऽस्तीति। तत्रोच्यते। सर्वैव हि श्रीभगवतः क्रीडा प्रीतिपोषायैव प्रवर्त्तते। भजते तादृशीः क्रीड़ा याः श्रुत्वा तत्परो भवेदित्यादि। श्रुत्वापीत्यर्थः। तत्र शृङ्गारक्रीड़ायाश्चास्याः स्वभावोऽयं यत् खल्वीर्षामदमानादिलक्षणतत्तद्भाववैचित्रीपरिकरतयैव रसं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पुष्णाति। यत एव तादृशतयैव कविभिर्वर्ण्यते। श्रीभगवता च स्वलीलायामङ्गीक्रियते। स्वस्मिन्नपि दक्षिणानुकूलशठधृष्टतेति चतुर्भेद-नायकत्वं यथास्थानं व्यज्यते, तस्मात्तल्लीलाशक्तिरेव तासु तत्त-द्भावं दधाति। तच्च भावानुरूपेणैवेनि दर्शितम्। अतएव यदा सर्वासामेव तद्विरहो भवति, तदा दैन्येनैकजातीयभावत्वापत्त्या सर्वंच सख्यमेवाभिव्यज्यते। यथा—अन्विच्छन्त्यो भगवतो मार्गं गोप्यो-ऽविदूरतः। ददृशुः प्रियविश्लेषान्मोहितां दुःखितां सखीमित्यत्र तस्यां पूर्वासामेव सखीत्वव्यञ्जना। विरहलीला च तासां झटिति श्रीकृष्ण-विषयकतृष्णातिशयवर्द्धनार्थैव। नागरचूड़ामणीन्द्राय श्रीकृष्णाय च तासां तद्वद्विरत्यर्थं रोचते। यथोक्तम्—नाहन्तु सख्यो भजतो-ऽपि जन्तूनित्यादिना। तस्मान्मध्ये मध्ये विरहोऽपि भवति। तदा श्रीकृष्णस्य मदमानादिविनोदमतिक्रम्यापि तदध्यवसायः स्यात्। ततो मदमानयोः प्रशमाय स्वविषयकतृष्णातिशयरूपप्रसादाय चेति तासां तत् सौभगेत्यत्रार्थः। सर्वसमुदितरासलीलार्थं मदस्य प्रशमाय-मानस्य च प्रसादाय प्रसादनायेत्यर्थो वा। ततस्तद्दर्शनेच्छाप्यानु-षङ्गिकीति समानम्। अथ जाते च विरहे दैन्येनैव तासां तत्र दौरात्म्य-बुद्धिः। न तु वस्तुत एव तद्दौरात्म्यं प्रेमैकविलासरूपत्वात्। श्रीमु-नीन्द्रोऽपि तद्भावानुसारित्वेनैव तद्वाक्यमनुवदति—तया कथित-माकर्ण्येत्यादि। स्वयन्तु पूर्वं तस्मिंस्तदीये मदे दोषं प्रत्याख्यात-वानस्ति। यथा—रेमे तया स्वात्मरत आत्मारामोऽप्यखण्डितः। कामिनां दर्शयन् दैन्यं स्त्रीणाञ्चैव दुरात्मताम्॥ २८८॥

स्वात्मरतः स्वतस्तुष्टोऽपि आत्मारामः स्वक्रीड़ोऽपि अखण्डितः स्त्र्यां सततासक्तः सन् रेमे। तादृशश्चेत् किमिति तदासक्तो बभूव तथा रेमे च। अत आह, तया इत्थंभूतगुणो हरिरितिवत् तथाभूत-गुणतया तदीयप्रेमसर्वस्वसाररूपयेत्यर्थः। अतस्तस्यान्येन तादृशत्वा-सम्भवात् प्रेमविशेष एवासौ स्फुरति न तु कामः। स च प्रेमविशेष

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दृष्टशप्रवलः यत् कामिवदेव दैन्यादिकं तयोः प्रकटीभवतीत्याह, कामिनामिति। मदमानाद्यात्मके कामिनीनां प्रेमणि कामिनां यद्दैन्यं लोकप्रसिद्धं तदेव स्वद्वारा तत्प्रेमविशेषपारवश्येन दर्शयन् प्रकटयन् रेमे। यद्वा ययैव लीलया स्वयमेव तुच्छीभूताः सर्वेऽप्यन्ये नागरम्मन्या इत्याह, कामिनामिति। स्वलीलामहिम्ना कामिनां प्राकृतानां दैन्यं रससम्पत्तिहीनत्वं स्त्रीणां च प्राकृतानां तं विनान्यस्य भजनेन दुरात्मतां दुष्टभावतां दर्शयन्निति दर्शयद्विधुपराजयं रमावक्त्रमुल्लसति धूतलाञ्छन इतिवत् ॥ १० ॥ ३० ॥ श्रीशुकः ॥ २८८ ॥

इत्यालम्बनो व्याख्यातः। अथोद्दीपनेषु गुणाः। नारीमोहनशीलत्वम् अवयववर्णरसगन्धस्पर्शशब्दसल्लक्षणवयोवनानां कमनीयता। नित्यनूतनत्वम्। अभिव्यक्तभावत्वम्। प्रेमवश्यत्वम्। सौबुद्धसत्प्रतिभादयश्च। तत्र नारीमोहनशीलत्वादिकं यथा—कृष्णं निरीक्ष्य वनितोत्सवरूपशीलमिति ॥ २८९ ॥

स्पष्टम् ॥ १० ॥ २१ ॥ श्रीव्रजदेव्यः ॥ २८९ ॥

नित्यनूतनत्वञ्च यद्यप्यसौ पार्श्वगत इत्यादौ दृष्टम्। अथाभिव्यक्तभावत्वम्। तत्र पूर्वरागे—शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा। सुरतनाथ तेऽशुल्कदासिका वरद निघ्नतो नेह किं बधः ॥ २९० ॥

हे दृशैव सुरतयाचक। तत्रापि हे कात्यायन्यर्चनान्ते वरप्रद। तत्रापि भावविशेषदर्शितया दृशा कृत्वैवाशुल्कदासिकातुल्यत्वं प्राप्तास्तयैव पुनर्निघ्नतस्तव न किं बधः स्त्रीहत्यापि न भवति। दृशस्तादृशत्वे महामोहनचौरत्वं दर्शयति, शरदुदाशय इत्यादि। तत्र मोहनत्वं द्विविधं स्वरूपकृतं दुष्क्रियाकृतञ्च। तदुभयमपि तत्तद्विशेषणैर्व्यक्तम्। तथा—मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण। विधिकरीरिमा वीर मुह्यतीरधरसीधुनाप्याययस्व नः ॥ २९१ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मधुरयेति स्वरूपमाधुर्य्यं वल्गुवाक्ययेत्यर्थमाधुर्य्यं बुधमनोज्ञयेति बुधानां तादृशभावाभिज्ञजनानामेव मनोज्ञयेति भावविशेषमाधुर्य्यं व्यञ्जितम्। तथा—प्रहसितं प्रिय प्रेमवीक्षितं विहरणञ्च ते ध्यानमङ्गलम्। रहसि संविदो या हृदिस्पृशः कुहक नो मनः क्षोभयन्ति हि ॥ २९२ ॥

संविदः सङ्केतनर्म्माणि। तथा—दिनपरिक्षये नीलकुन्तलैर्वनरुहाननं बिभ्रदावृतम्। घनरजस्वलं दर्शयन्मुहुर्मनसि नः स्मरं वीर यच्छसि ॥ २९३ ॥

मुहुः पुनः पुनर्व्याजेन परावृत्त्येत्यर्थः। तथा—पतिसुतान्वयभ्रातृबान्धवानतिविलङ्घ्य तेऽन्त्यच्युतागताः। गतिविदस्तवोद्‌गीतमोहिताः कितव योषितः कस्त्यजेन्निशि। रहसि संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम्। बृहदुरःश्रियो वीक्ष्य धाम ते मुहुरतिस्पृहा मुह्यते मनः ॥ २९४ ॥

गतिविदस्तवोद्‌गीतमोहिता इति अस्माकं मोहनप्रकारज्ञानेनैव त्वं तथा वेणुना गीतवानित्यर्थः ॥ १० ॥ ३१ ॥ श्रीगोप्यः परोक्षस्थितं श्रीभगवन्तम् ॥ २९०—२९४ ॥

एवं गवां हिताय तुलसी गोपीनां रतिहेतवे। वृन्दावने त्वं वपिता सेविता विष्णुना स्वयमिति स्कान्दे रेवाखण्डीयतुलसीस्तववचनमपि तत्पूर्वरागे दर्शनीयम्। तथा सम्भोगेऽपि—इति विक्लवितं तासामित्यादौ प्रहस्येति। ताभिः समेताभिरुदारचेष्टित इति। उदारहासद्विजकुन्ददीधितिरिति च। उपगीयमान इत्यादौ उद्‌गायन्निति। बाहुप्रसारेत्यादिकं चाभिव्यक्तभावत्वोदाहरणम्। अथ प्रेम्णा वश्यत्वं द्विविधं, प्रेमान्तरेण प्रेयसीप्रेम्णा च। तत्र पूर्वेण नर्म्मदः प्रणयिनां विजहारेत्यत्र दर्शितम्। अथोत्तरेण। तत्र पूर्वरागात्मकेन यथा—तथाहमपि तच्चित्तो निद्राञ्च न लभे निशि इति ॥ २९५ ॥

स्पष्टम् ॥ १० ॥ ५३ ॥ श्रीभगवान् रुक्मिणीदूतम् ॥ २९५ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथा—भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः । वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः ॥ २८६ ॥

योगमायां तासामसंख्यानामसंख्यवाञ्छापूरिकां स्वशक्तिं स्वभावत एवाश्रित इत्यर्थः । सम्भोगात्मकेन यथा—इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः । प्रहस्य सदयं गोपीरात्मारामोऽप्यरीरमत् ॥ २८७ ॥

अत्र विक्लवितमिति तासां प्रेमातिशयज्ञापकं सदयमिति तस्य तत्प्रेमवश्यत्वातिशयाभिधायकम् । आत्मारामोऽपीति तासां प्रेम-गुणमाहात्म्यप्रदर्शकम् । आत्मारामाश्च मुनय इत्यादौ इत्थम्भूतगुणो हरिरितिवत् ॥ १० ॥ २८ ॥ श्रीशुकः ॥ २८६ ॥ २८७ ॥

एवं रेमे स्वयं स्वरतिरत्र गजेन्द्रलील इति ॥ २८८ ॥

स्वासु तासु रतिर्यस्य सः । तथा तासां रतिविहारेण इत्यादि-कम् । गोपीकपोलसंश्लेषेत्यादिकं विष्णुपुराणपद्यमप्युदाहृतम् । किञ्च—एवं परिष्वङ्गकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः । रेमे रमेशो व्रजसुन्दरीभिर्यथार्भकः स्वप्रतिबिम्बविभ्रमः ॥ २८९ ॥

अत्र रमेश इत्यनेन तस्य रमावशीकारित्वं दर्शितम् । परिष्वङ्गे-त्यादिना तत्रापि स्निग्धेक्षणेत्यादिना रेमे इत्यनेन च तासां प्रेम्णा तस्य वश्यत्वं व्यक्तम् । दृष्टान्तेन तु तदा तस्य तासां चासंकप्रति-बिम्बयोरिव गाननृत्यादिविलासेषु एकचेष्टतापत्तिसूचनया मिथः परमप्रेमासक्तिर्दर्शिता । अपिच—एवं शशाङ्कांशुविराजिता निशाः स सत्यकामोऽनुरताबलागणः । सिषेव आत्मन्यवरुद्धसौरतः सर्वाः शरत्काव्यकथारसाश्रयाः ॥ ३०० ॥

एवं पूर्वोक्तप्रकारेण अनुरतो निरन्तरमनुरक्तोऽबलागणो यत्र तादृशः स श्रीकृष्णचन्द्रः आत्मनि चित्तेऽवरुद्धं समन्तान्निरुद्ध्य स्थापितं सौरतं सुरतसम्बन्धिभावहावादिकं येन तथाभूतः सन् अतएव सत्य-कामः व्यभिचाररहितप्रेमविशेषः सन् शरत्सम्बन्धिन्यो यावत्यो रसा-श्रयाः काव्यकथाः सम्भवन्ति ताः सर्वा एव सिषेवे । शरच्छन्दोऽत्रा-

CC.0. Jangamwadi Math Collection. Digitized by eGangotri

खण्डमेव वा संवत्सरं वदति। ततः शशाङ्कांशुविराजितत्वमुपलक्षणमिति व्याख्येयम्। एवं सौरतसंलापैरिति श्रीरुक्मिणीपरिहासेऽपि सौरतशब्दस्तात्पर्यत्वेन प्रयुक्तः ॥ १० ॥ ३३ ॥ श्रीशुकः ॥ ३०० ॥

अत्रैवमपि स्वयमुक्तं न पारयेऽहमित्यादि। अथ प्रवासात्मकेन यथा—वृष्णीनां सम्मतो मन्त्री कृष्णस्य दयितः सखा। शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः॥ तमाह भगवान् प्रेष्ठं भक्तमेकान्तिनं क्वचित्। गृहीत्वा पाणिना पाणिं प्रपन्नार्त्तिहरो हरिः॥ गच्छोद्धव व्रजं सौम्य पित्रोर्नः प्रीतिमावह। गोपीनां मद्वियोगाधिं मत्सन्देशैर्विमोचय॥ ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिका इत्यादि ॥ ३०१ ॥

तथाच स्कान्दप्रह्लादसंहिताद्वारकामाहात्म्ये ता: प्रति श्रीमदुद्धववाक्यम्—भगवानपि दाशार्हः कन्दर्पशरपीड़ितः। न भुङ्क्ते न स्वपिति च चिन्तयन् वो ह्यहर्निशमिति। एवं राजकुमारीणां परिणयोऽपि ताभिर्गोपकुमारीभिरेकात्मत्वात् प्रायस्तद्विरहकालक्षपणार्थ एव तासां प्राणपरित्यागपरिहारार्थ एव च। यथोक्तं पाद्मे—कैशोरे गोपकन्यास्ता यौवने राजकन्यका इति। यथा च रुक्मिणीवाक्यम्—यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं जह्यामसून् व्रतकृशान् शतजन्मभिः स्यामिति। अथोद्दीपनेषु जातिः। तत्र गोपत्वरूपामाह—विविधगोपचरणेषु विदग्धो वेणुवाद्य उरुधा इत्यादिना ॥ २०२ ॥

स्पष्टम् ॥ १० ॥ ३४ ॥ श्रीव्रजदेव्यः ॥ ३०२ ॥

यादवत्वरूपां साहश्यरूपाञ्चाह—मेघ श्रीमंस्त्वमसि दयितो यादवेन्द्रस्य नूनमित्यादिना ॥ ३०३ ॥

स्पष्टम् ॥ १० ॥ ९० ॥ श्रीपट्टमहिष्यः ॥ ३०३ ॥

अथ क्रियाः। तास्च द्विविधाः; भावसम्बन्धिन्यः स्वाभाविकविनोदमय्यश्च। पूर्वा यथा—निशम्य गीतं तदनङ्गवर्द्धनमित्यादि ॥ ३०४ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्पष्टम् ॥ १० ॥ २९ ॥ श्रीशुकः ॥ ३०४ ॥

उत्तराः—वामबाहुकृतवामकपोलो वल्गितभ्रूरधरार्पितवेणुरित्यादि ॥ ३०५ ॥

स्पष्टम् ॥ १० ॥ ३५ ॥ श्रीव्रजदेव्यः ॥ ३०५ ॥

विविधगोपचरणेषु इत्यादौ च ता ज्ञेयाः। अथ द्रव्याणि। तत्र तस्य प्रेयस्यो यथा—उषस्युत्थाय गोत्रैः स्वैरन्योन्याबद्धबाहवः। कृष्णमुच्चैर्जगुर्यान्त्यः कालिन्द्यां स्नातुमन्वहम् ॥ ३०६ ॥

गोत्रैर्वर्गैः ॥ १० ॥ श्रीशुकः ॥ ३०६ ॥

तद्व्रजस्त्रिय आश्रुत्येत्यादौ च स्वसखीभ्योऽन्ववर्णयन्नित्युदाहार्य्यम्। तत्परिकरास्तं वीक्ष्य कृष्णानुचरं व्रजस्त्रिय इत्यादि ॥३०७॥

स्पष्टम् ॥ १० ॥ ४७ ॥ सः ॥ ३०७ ॥

मण्डनम्—पूर्णाः पुलिन्द्य उरुगायपदाब्जरागश्रीकुङ्कुमेन इत्यादि ॥ ३०८ ॥

वंशी—गोप्यः किमचरदयं कुशलं स्म वेणुरित्यादि ॥ ३०९ ॥

स्पष्टम् ॥ १० ॥ २१ ॥ ताः ॥ ३०८—३०९ ॥

पदाङ्कः—पदानि व्यक्तमेतानि नन्दसूनोर्महात्मन इत्यादि ॥३१०॥

पदधूलिः—धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः। यान् ब्रह्मेशौ रमा देवी दधुर्मूर्ध्न्यघनुत्तये ॥ ३११ ॥

अत्र प्रेमैव तदुत्कर्षं गमयति नत्वैश्वर्य्यज्ञानम्। स्वभावः खल्वयं प्रीतिपरमोत्कर्षस्य यत् स्वविषयं सर्वत उत्कर्षेणानुभावयति। यथादिभरतेन मृगप्रेम्णा तदीयखुरस्पर्शात् पृथिव्या अपि महाभागधेयत्वं वर्णितम्—किम्वा अरे आचरितं तपस्तपस्विन्या यदियमवनिरित्यादिना। एवमेव—किन्ते कृतं क्षिति तपो वत केशवाङ्घ्रिस्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि। अप्यङ्घ्रिसम्भव उरुक्रमविक्रमाद्वा आहो वराहवपुषः परिरम्भणेन ॥ ३१२ ॥

अत्र पूर्वार्द्धं प्रेम्णा श्रीकृष्णमाधुर्य्यमहिमोक्तिः। उत्तरार्द्धे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तेनैवान्यत्र ध्येयतोक्तिः। अत्र च अपीति किमर्थं। ततश्च एषोऽङ्घ्रि-सम्भवो हर्षविकारः उरुक्रमस्य त्रिविक्रमस्य विक्रमाद्वाऽपिपादविक्षे-पाद्वा अपि किं जातः। अहो इति पक्षान्तरे। वराहवपुषः कान्त-भावतोऽपि परिरम्भणेन वा एषोऽङ्घ्रिसम्भवः किं जातः। न हि न ह्येत्यर्थः। अपीति स्तोकार्थं वा। सर्पिषोऽपि स्यादितिवत्। ततश्च उरुक्रमविक्रमादपि एषोऽङ्घ्रिसम्भवो विकारः स्यात्। किन्तु स्तोक एव स्यादित्यर्थः॥ १०॥ ३०॥ ता:॥ २१०—२१२॥

नखाङ्कः—पृच्छतेमा लता बाहूनित्यादावेव ज्ञातः। एवं वृन्दा-वनयमुनादीन्यप्युदाहार्याणि। अथ कालश्च रासोत्सवादिसम्बन्धी। स यथा—ताः किं निशाः स्मरति यास्वित्यादि॥ २१३॥

स्पष्टम्॥ १०॥ ४१॥ ताः॥ २१३॥

तदेवं यथा तदीयगुणादयः उद्दीपनास्तथैव तादृशसेवोपयोगि-त्वेन तत्प्रेयसीगुणा अपि ज्ञेयाः। ते च तासामात्मसम्बन्धिन आत्माभीष्टतद्वल्लभासम्बन्धिनश्चेत्युभयेऽप्यूह्याः। अथानुभावाः। तत्र सैरिन्ध्र्यादीनां यथा—सा मज्जनालेपदुकूलभूषणा स्रग्गन्धताम्बूलसुधा-सवादिभिः। प्रसाधितात्मोपससार माधवमित्यादि॥ २१४॥

स्पष्टम्॥ १०॥ ४८॥ श्रीशुकः॥ २१४॥

श्रीपट्टमहिषीणाम् इत्थं रमापतिमवाप्येत्यादिष्वेव एव विदिताः। श्रीव्रजदेवीनां यथा—आसामहो इत्यादौ या दुस्त्यजमित्यादि। तत्र च विवरणम्—तं गोरजश्छुरितकुन्तलबद्धबर्हवन्यप्रसूनरुचिरेक्षण-चारुहासम्। वेणुं क्वणन्तमनुगैरुपगीतकीर्त्तिं गोप्यो दिदृक्षितदृशो-ऽभ्यगमन् समेताः। पीत्वा मुकुन्दमुखसारघमक्षिभृङ्गैस्तापं जहु-र्विरहजं व्रजयोषितोऽह्नि। तत्सत्कृतिं समधिगम्य विवेश गोष्ठं सव्रीड़हासविनयं यदपाङ्गमोक्षमित्यादि॥ २१५॥

स्पष्टम्॥ १०॥ १५॥ श्रीशुकः॥ २१५॥

अथ प्रायः सर्वासां ते चतुर्विधाः उद्भास्वरसात्त्विकालङ्कारवाचि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

काख्याः । ततोऽङ्गास्तरा उक्ताः । नीव्युत्तरीयधम्मिल्लस्रंशनं गात्रमो-टनम् । जृम्भा गात्रस्य फुल्लत्वं निश्वासाद्याश्च ते मता इति । यथा—तदङ्गसङ्गप्रमुदाकुलेन्द्रियाः केशान् दुकूलं कुचपट्टिकां वा । नाञ्जः प्रतिव्योढ़ुमलं व्रजस्त्रियो विस्रस्तवस्त्राभरणाः कुरूद्वहेत्यादि ॥ ३१६ ॥

सात्त्विकाः—तत्रैकांसगतं वाहुं कृष्णस्योत्पलसौरभम् । चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥ ३१७ ॥

स्पष्टम् ॥ १० ॥ ३३ ॥ श्रीशुकः ॥ ३१७ ॥

अलङ्काराश्च विंशतिः । तेषां भावहावहेलाख्ययोऽङ्गजाः । शोभा-माधुर्य्यप्रागल्भ्यौदार्य्यधैर्य्यादयः सप्त यत्नजाः । लीलाविलासकिलकिञ्चितविभ्रमविव्वोकललितमोट्टायितविकृतादयो दश स्वभावजा इति । तत्र निर्व्विकारात्मके चित्ते भावः प्रथमविक्रिया । स यथा—चित्तं सुखेन भवतापहृतं गृहेष्वित्यादि ॥ ३१८ ॥

स्पष्टम् ॥ १० ॥ २९ ॥ श्रीगोप्यः ॥ ३१८ ॥

ग्रीवारेचकसंयुक्तो भ्रूनेत्रादिविकाशकृत् । भावादीषत्प्रकाशो यः सः हाव इति कथ्यते । स यथा श्रीलक्ष्मणास्वयम्बरे—उन्नीय वक्त्रमुरुकुन्तलकुण्डलत्विड़्गण्डस्थलं शिशिरहासकटाक्षमोक्षैः । राज्ञो निरीक्ष्य परितः शनकैर्मुरारेरंसेऽनुरक्तहृदया निदधे स्वमालाम् ॥३१९॥

वक्त्रमुन्नीय राज्ञस्तत्रागतान् परितो निरीक्ष्य शिशिरहासकटाक्षै-रुपलक्षिता मुरारेरंसे मालां शनकैर्निदध इत्यन्वयः । अत्र शनकै-रिति लज्जया क्षणं तिर्य्यग्ग्रीवाप्यतिष्ठदिति ग्रीवारेचकस्यापि सूचनम् ॥ १० ॥ ८३ ॥ सैव ॥ ३१९ ॥

एवं हाव एव भवेद्धेला व्यक्तशृङ्गारसूचक इति लक्षणानुसारेण हेलाप्युदाहार्य्या । सा शोभा रूपभोगाद्यैर्यत् स्यादङ्गविभूषणम् । सा यथा—तासां रतिविहारेणेत्यादि गोप्यः स्फुरत्पुरटकुण्डलेत्याद्यन्तद्वयम् ॥ ३२० ॥

माधुर्य्यं नाम चेष्टानां सर्व्वावस्थासु चारुता । तद्यथा—काचि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

द्रासपरिश्रान्ता पार्श्वस्थास्य गदाभृतः । जग्राह बाहुना स्कन्धं श्लथ-द्वलयमल्लिका ॥ ३२१ ॥

स्पष्टम् ॥ १० ॥ ३३ ॥ श्रीशुकः ॥ ३२१ ॥

निःशङ्कत्वं प्रयोगेषु बुधैरुक्ता प्रगल्भता । सा च—तत्रैकांसगतं बाहुमित्यादौ दर्शिता । औदार्य्यं विनयं प्राहुः सर्वावस्थां गतं बुधाः ॥ तद्यथा—हा नाथ रमण प्रेष्ठेत्यादि ॥ ३२२ ॥

स्पष्टम् ॥ १० ॥ ३० ॥ स्वयमेव श्रीराधा ॥ ३२२ ॥

तथा, अपि वत मधुपुर्य्यामित्यादौ ज्ञेयम् । स्थिरा चित्तोन्नति-र्यातु तद्धैर्य्यमिति कीर्त्त्यते । तद्यथा—मृगयुरिव कपीन्द्रमित्यादौ दुस्त्यजस्तत्कथार्थं इति ॥ ३२३ ॥

स्पष्टम् ॥ १० ॥ ४६ ॥ सैव ॥ ३२३ ॥

एवं शोभैव कान्तिराख्याता मन्मथाप्यायनोज्ज्वला । कान्तिरेव वयोभोगदेशकालगुणादिभिः । उद्दीपितातिविस्तारं प्राप्ता चेद्दीप्ति-रुच्यते । इत्यनुसारेण कान्तिदीप्ती अप्युदाहार्य्ये । प्रियानुकरणं लीला रम्यैर्वेशक्रियादिभिः । तस्यां वेशक्रियया तच्चेष्टानुक-रणं यथा—अन्तर्हिते भगवतीत्याद्यनन्तरं गत्यानुरागस्मितेत्यादि ॥ ३२४ ॥

तासां बाहुप्रसारेत्यादिनोक्तास्तदीयलीला इत्यर्थः । पश्चादावेशेन तदभेदभावनारूपं गतिस्मितप्रेक्षणभाषणादिष्वित्यादि ॥ ३२५ ॥

एवं स्वविलासरूपां लीलामुक्त्वापि तासां निजो भावो निगूढ़ तिष्ठत्येव यथा वक्ष्यते यतन्तुशन्निदधेऽम्बरमित्यत्र यतन्तीति । अथैत-दग्रेऽपि कालक्षेपार्थं या लीला याभिर्गातुं प्रवर्त्तिताः प्रेमावेशेन ता लीला एव तास्वाविष्टा इति तत्तदनुकरणविशेषे हेतुर्ज्ञेयः । एतदनु-करणञ्च प्रायो लीलाशब्दवाच्यम् । बाल्यादिरूपस्यानालम्बनत्वेनो-ज्ज्वलरसाङ्गत्वाभावात् । तत्र पूतनादीनां प्रीतिमात्रविरोधिभावाना-मपि तथा श्रीकृष्णजनन्यादीनां निजप्रीतिविशेषविरोधिभावानामपि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

चेष्टानुकरणं श्रीकृष्णानुकर्त्रीणां गोपिकानां सखीभिस्तासां विरह-कालक्षेपाय तत्तद्भावपोषार्थं कृत्रिमतयैवाङ्गीकृतं न तु तत्तद्भावेनेति समाधेयम् । क्वचिच्चैवं व्याचक्षते पूतनावधलीलास्मरणावेशे सति कासाञ्चित् पूतनानुकरणमपि श्रीकृष्णानिष्टाशङ्कया भयेनैव भवति । यथा लोकेऽपि आत्मानिष्टाशङ्कया भयोन्मत्तस्य तद्भयहेतुव्याघ्राद्यनु-करणं भवति । ततस्तदनुकरणेऽपि आत्मनीव श्रीकृष्णे प्रीतिरेवो-ल्लसति न तु द्वेषः । सा प्रीतिर्यथात्मनि तद्रूपतयैव तिष्ठति तथैव तासां श्रीकृष्णेऽपि स्वभावोचितैवानुवर्त्तते । ततो बद्ध्वान्यया स्रजा काचिदित्यादौ श्रीयशोदानुकरणञ्च तथैव मन्तव्यम् । पूर्वं हि दामो-दरलीलास्मरणावेशेन तस्याः श्रीकृष्णभावः । ततश्च वक्त्रं निलीय भय-भावनया स्थितस्येत्युक्तरीत्या श्रीयशोदातो भयमपि जातम् । वात्स्य-स्वभावानुस्मरणेन तदनुकरणञ्च । ततश्च सैव स्वयमन्यां काञ्चि-त्तल्लीलावेशेनैव कृष्णायमानां च बबन्ध । तथापि पूर्ववत् स्वभावो-चितैव प्रीतिस्तस्यामन्तर्वर्त्तत एव । सा हि प्रीतिस्तत्तद्भावस्य परमा-श्रयरूपा । ततो बहिरेव तत्तदनुकरणात् श्रीयशोदाभावस्य च मध्ये श्रीकृष्णभावव्यवधानेन निजभावास्पर्शान्न विरोध इति ॥ १० ॥ ३० ॥ श्रीशुकः ॥ ३२५ ॥

गतिस्थानासनादीनां मुखनेत्रादिकर्म्मणाम् । तात्कालिकन्तु वैशिष्ट्यं विलासः प्रियसङ्गजम् । स यथा—तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्ल-दृशोऽबला इति ॥ ३२६ ॥

स्पष्टम् ॥ १० ॥ ३२ ॥ सः ॥ ३२६ ॥

गर्वाभिलासरुदितस्मितासूयाभयक्रुधाम् । सङ्करीकरणं हर्षा-दुच्यते किलकिञ्चितम् ॥ तद्यथा—तस्य तत् क्ष्वेलितं श्रुत्वा गोप्यः प्रेमपरिप्लुता इत्यादि एवं ब्रुवति गोविन्दे इत्यादि मानयं भोः क्वथा इत्यादि श्यामसुन्दर ते दास्य इत्याद्यन्तम् ॥ ३२७ ॥

स्पष्टम् ॥ १० ॥ २२ ॥ सः ॥ ३२७ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वल्लभप्राप्तिवेलायां मदनावेशसम्भ्रमात्। विभ्रमो हारमाल्यादि-भूषास्थानविपर्य्ययः ॥ स यथा—व्यत्यस्तवस्त्राभरणाः काश्चित् कृष्णान्तिकं ययुरिति ॥ ३२८ ॥

इष्टेऽपि गर्व्वमानाभ्यां विब्बोकः स्यादनादरः। स च एका भ्रुकुटिमाबध्येत्यादावुदाहरिष्यते। विन्यासभङ्गिरङ्गानां भ्रूविलास-मनोहरा। सुकुमारा भवेद् यत्र ललितं तदुदाहृतम् ॥ तच्च पूर्व्वत्रैव ज्ञेयम् ॥ १० ॥ २९ ॥ सः ॥ ३२८ ॥

कान्तास्मरणवार्त्तादौ हृदि तद्भावभावतः। प्राकट्यमभिलाषस्य मोट्टायितमितीर्य्यते। तच्च कृष्णं निरीक्ष्य वनितोत्सवेत्यादावेव ज्ञेयम्। ह्रीमानेर्षादिभिर्यत्र नोच्यते स्वविवक्षितम्। व्यज्यते चेष्टयैवेदं विकृतं तद्विदुर्बुधाः ॥ तद्यथा—परिधाय स्ववासांसि प्रेष्ठसङ्गम-सज्जिताः। गृहीतचित्ता नो चेलुस्तस्मिन् लज्जायितेक्षणाः ॥ ३२९ ॥

स्पष्टम् ॥ १० ॥ २२ ॥ सः ॥ ३२९ ॥

एवम् आकल्पकल्पनाल्पापि विच्छित्तिः कान्तिपोषकृत्। कृष्णो-नाङ्गस्य संस्पर्शे हृत्प्रीतावपि संभ्रमात्। वहिःक्रोधो व्यथितवत् प्रोक्तं कुट्टमितं बुधैरित्यनुसारेण विच्छित्तिकुट्टमिते अपि ज्ञेये। अथ वाचिकाः। तत्र चाटुप्रियोक्तिरालापः। स यथा—का स्त्र्यङ्ग ते कलपदामृतवेणुगीतसंमोहितेत्यादि ॥ ३३० ॥

स्पष्टम् ॥ १० ॥ २९ ॥ श्रीगोप्यः ॥ ३३० ॥

विलापो दुःखदं वचः। स यथा—परं सौख्यं हि नैराश्यमित्यादि ॥ ३३१ ॥

स्पष्टम् ॥ १० ॥ ४३ ॥ ताः ॥ ३३१ ॥

उक्तिप्रत्युक्तिमद्वाक्यं संलाप इति कीर्त्त्यते। स यथा—स्वागतं वो महाभागा इत्यादिकं व्यक्तं भवान् व्रजभयार्त्तिहरोऽभिजात इत्याद्यन्तम् ॥ ३३२ ॥

अत्र श्रीकृष्णवाक्येषु प्रथमोऽर्थस्तासु वैरस्यादिमोहितास्वपि वाम्य-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

माचरन्तीषु सङ्गप्रार्थनारूपः । द्वितीयस्तु परिहासाय तद्भावपरीक्षणाय च तदागमनकारणस्वसङ्गप्रत्याख्यानरूपः । तथैव तासां वाक्येष्वपि तत्प्रार्थनाप्रत्याख्यानरूपः प्रथमः । द्वितीयस्तु उत्कण्ठास्वभाव-व्यञ्जितस्वत्सङ्गप्रार्थनारूपः । अतएव पारस्परिकसमानवैदग्धीमय-त्वादतितरां रसः पुष्येत । स्वागतमिति उभयत्र समानमेव । रजन्येषेति यदि कथञ्चिदागता एव तदधुना तु रजन्या घोररूपादित्वात् व्रजं प्रति न यात यातुं नार्हथ । किन्तु स्त्रीभिर्युष्माभिरिह मम वीरस्य सन्निधावेव स्थेयं स्थातुं योग्यमिति । सुमध्यमा इति पुनर्गमने खेदमपि दर्शितवान् । न च मत्सन्निधाववस्थाने बन्धुभ्यो भेतव्यमित्याह, मातर इति । बन्धुभ्यः साध्वसं माशङ्कं यतस्ते मात्रादयो बन्धवो रात्रा-वस्मिन् अपश्यन्त एव विचिन्वन्ति । ततो नास्ति तेषामत्रागमनसम्भा-वनेति भावः । पुत्राः देवरमन्यादिपुत्राः स्वपत्यादिपुत्रा वा । निजारामे-दर्शनया तासां भावमुद्दीपयति दृष्टं वनमिति । निगमयति तद्यथेति । यस्माद्रजन्येषा घोररूपेत्यादिको हेतुः । तत्तस्माच्चिरकालं व्याप्य घोषं मायात । अचिरमधुनैव मायातेति वा । ततस्तत्र गत्वा पतीन् युष्मत्पतित्वेन क्लृप्तांस्तानपि माशुश्रूषध्वम् । हे सतीः सत्यः परमो-त्तमाः । ये च वत्सादयस्ते च माक्रन्दन्ति ततस्तान् मापाययत तदर्थं मादुह्यत चेति । यदि स्वयमेव भवत्यो मदनुरागेणैवागता न तत्र मत्प्रार्थनापेक्षापि तदा तदतीव युक्तमाचरितमित्याह अथवेति । मम मयि । यदि जन्तुमात्राण्येव मयि प्रीयन्ते तदा भवतीनां कामि-नीनां कान्तभावात्मक एव सः स्नेहो भवेदिति भावः । ननु भर्तृशुश्रू-षणपरित्यागे स्त्रीणां दोषस्तत्राह भर्त्तुः शुश्रूषणमिति । अमायया यो भर्त्ता तस्यैव शुश्रूषणं परो धर्मः । तथा तद्बन्धूनाञ्च । युष्माकन्तु अनुपभुक्तात्वेन लक्ष्यमाणानां दाम्पत्यव्यवहाराभावात् केनापि माय-यैव तत् कल्पितमिति लक्ष्यते । ततो न दोष इति भावः । अङ्गी-कृत्यापि पतित्वं प्रकारान्तरेण तत्सेवां स्तुतिवाक्यद्वारापि परिहरति


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दुःशील इति। अपातस्त्वेव न हातव्यः। ते तु पातकिन एवेति सासूयो भावः। अपातकित्वाङ्गीकारमाशङ्क्य छलेन स्मृतिवाक्यान्तरमन्यथार्थतया व्यञ्जयन्नपि तत्सेवां प्रत्याचष्टे अस्वर्ग्यमिति। उप समीपे पतिर्यस्याः सा उपपतिस्तस्या भाव औपपत्यं पतिसामीप्यमित्यर्थः। तत् खल्वस्वर्ग्यादीति। अथ मय्यपि जातो भावः क्लेशायैव भवतीत्याशङ्क्यापि मा पराङ्मुखीभवतेत्याह श्रवणादिति। यथा श्रवणादिना सद्भावो मदप्राप्त्या दुःखमयस्तथा सन्निकर्षेण मत्प्राप्त्या न भवति। ततस्तस्माद्गृहान् गृहसदृशान् कुञ्जान् प्रतियात प्रविशत। पर्य्युदासोऽत्र नञेति। तदेवं श्रीकृष्णवाक्यस्य प्रार्थनारूपोऽर्थो व्याख्यातः। अर्थान्तरं तु प्रसिद्धम्। तत्र पुत्रा इति सपरिहासदोषोद्गारेणापि प्रत्याख्यानम्। अथ तादृशकृष्णवाक्यश्रवणानन्तरं तासामवस्थावर्णनम्—इति विप्रियमाकर्ण्येत्यादिभिः। अर्थद्वितयस्यैव तर्केण तदभिप्रायनिश्चयाभावादुत्कण्ठास्वाभाव्येन प्रत्याख्यानस्यैव सुष्ठु स्फुरितत्वात्। तद्वाक्यस्य विप्रियत्वं तासां विषादादिकञ्च। तत्रोभयत्रापि चिन्ताया युक्तत्वात् सुखनमनादिचेष्टास्वपि न रसभङ्गः। पदा भूलेखनं चात्र नायिकया स्वयमभियोगेऽप्युक्तमस्ति। अथ तासामपि तदनुरूपं वाक्यं मैवमित्यादि। मेति तत्प्रार्थनानिराकरणे सर्वविषयान् पतिपुत्रादीन् संत्यज्य यास्तव पादमूलं भक्तास्ता एव दुरवग्रहं निरर्गलं यथा स्यात्तथा भजस्व। पादमूलमिति तासु निजोत्कर्षख्यापनम्। अस्मान् पुनरतथाभूतान् आ सम्यग्दर्शनप्रसङ्गादिष्वपि त्यज। तत्रान्यासां भजने स्वेषां त्यागे च सदाचारं दृष्टान्तयति देव इति। स हि त्यक्तविषयकर्म्मादितया स्वं भजतो मुमुक्षूनेव भजति नान्यानिति। अथ शास्त्रार्थद्वारा तदुपदेशं निराकुर्वन्ति यत् पत्यपत्येति। स्वधर्म्मः सुष्ठु अधर्म्मः। धर्म्मविदेति सोपहासम्। उक्तं छलेन प्रतिपादितम्। भर्त्तुः शुश्रूषणमित्यादावन्यथायोजनाभिप्रायात्। एतदधर्म्मनिराकरणोपदेशवाक्यम्। तत्-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पदे उपदेष्टरि ईदृशे स्वतन्त्राचारे त्वय्येवास्तु त्वमेवाधर्म्मान्निवर्त्तस्वे-त्यर्थः । ततो युष्माकं किमित्यत आहुः प्रेष्ठ इति । बन्धुरात्मा सुन्दरस्वभावो भवान् प्राणिमात्राणां किल प्रेष्ठः । ततस्तेनैव सर्वं वयं मङ्गलिनः स्यामित्यर्थः । अथवा मदभिस्नेहादित्यादिकं निरा-कुर्वन्ति कुर्वन्ति ह्वीति । आर्त्तिं द्यन्ति छिन्दन्तीति तादृशैः पत्या-दिभिर्हेतुभूतैः स्वे आत्मनि देहादौ नित्यप्रिये सति याः कुशला भवन्ति ताः किं त्वयि रतिं कान्तभावं कुर्वन्ति अपि तु नैवेत्यर्थः । तत्तस्मात् नोऽस्मभ्यं प्रसीद इमं दुराग्रहं त्यजेत्यर्थः । तत्र वरदे-श्वरेति सोपालम्भं सम्बोधनम् । एष एव वरोऽस्मभ्यं दीयतामिति बोधकम् । तदेव व्यञ्जयन्ति त्वयि चिराद्धृता अवस्थिता या आशा तृष्णा तां व्याप्य वयं मा स्म मा भवाम । तस्यां त्वन्मनःस्थितायां तृष्णायां वयमुदासीना एव भवाम इत्यर्थः । ततस्तां छिन्ध्या इति । अरविन्दनेत्रेति । एतादृशेऽपि नेत्रे कौटिल्यं न युक्तमिति भावः । मा स्मेत्यस्तेर्माडयोगे लङि रूपम् । आशायाः कर्म्मत्वञ्च गोदोह-मस्तीतिवत् । अवणाद्दर्शनादित्यादिसूचितं निजभावजल्पापलपन्ति चित्तमिति । नोऽस्माकं चित्तं सुख एव वर्त्तते न तु भवता तस्मादप-हृतम् । यस्मात् गृहेषु निविंशति । तत्र चिह्नं करावपि गृह्य-कृत्यार्थं निर्विंशत इति । यदुक्तं सुमध्यमा इति तत्राहुः, पादौ कथं तव पादमूलात् पदमपि न चलतः । अपि तु दूरमेव चलतः । ततः कथं व्रजं न यामः अपितु याम एवेत्यर्थः । यत्तूक्तं व्रजं प्रति न यात किन्त्विहैव स्थीयतामिति तत्राहुः, करवाम किं वेति । अगृ-हान् प्रतियातेति सत्यं यदुक्तं तत्राहुः सिञ्चेति । अङ्ग हे कामुक नोऽस्माकं स्वाभाविकात् हासावलोकसहितात् कलगीताज्जातो यस्तव हृच्छयाग्निस्तं त्वदधरामृतपूरकेणैव सिञ्च । अस्मदीयस्य तस्य कथञ्चिदप्राप्यत्वादिति । अन्योऽपि रसलुब्धो लोभ्यवस्तुनोऽप्राप्तौ निजौष्ठमेव लेढ़ीति नर्म्म च व्यञ्जितम् । तत्र हेतुमाहुः नो इति ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भक्ते पदं त्वमविता यदि विन्नमूर्द्धीत्यादिवत् अत्र चेच्छब्दोऽपि निश्चये। ततश्च यस्मात् निश्चितमेव वयं ते तव विरहजाग्न्युपयुक्त-देहा नो भवामः ततो ध्याने विषयेऽपि तव पदयोः पदवीमपि न यामः न स्पृशामः। सखे इति सम्बोध्य प्राचीनमिथोवाल्यक्रीड़ा-गतसौहृद्यप्रकटनेन निजवचस आर्जवं प्रकटितवत्यः। ननु सख्येन वाल्यक्रीड़ायामपि स्पर्शादिकं जातमेवास्ति तर्हि कथमहो इदानी-मुदासीनाः स्थ तत्राहुः यर्हीति। हे अम्बुजाक्ष अरण्यजनाः पशुपक्ष्या-दयस्तेषां प्रियस्य वाल्यभावेन तैरेव क्षतमैत्रस्य तव यर्हि यदा क्वचि-दपि रमाया रमण्या दत्तावसरं पादतलं जातं तदनुगतावुम्बुखं वभूवि-त्यर्थः तत्प्रभृत्येव वयं तदपि नास्प्राक्ष्म न स्पृष्टवत्यः। किमु-तान्यदङ्गम्। तदेवं निजदार्ढ्येनैव पूर्वं तयाभिरमिताः कारितवाल्य-क्रीड़ा अपि वयम् अधुना अङ्ग्रः अनायासेन अन्येषां गुरुजनादीनां समक्षं स्थातुं पारयामः। वर्त्तेति शङ्कायाम्। अन्यथा तैरपि त्यज्येमहीति भावः। अथ प्रीयन्ते मम जन्तव इत्यत्र कामिन्यो यूयं कान्तभावा-त्मकमेव स्नेहं कर्त्तुमर्हथेति यदभिप्रेतं तत्र लक्ष्म्यादिरूपमुदाहरण-माशङ्क्य परिहरन्ति श्रीरिति। श्रीरपि वक्षसि तथा प्रसिद्धे श्रीविष्णो-रुरसि पदं लब्ध्वापि यस्य तव श्रीगोकुलवृन्दावनस्थितं पदाम्बुजरज-स्तुलस्या वृन्दया सह चकमे। त्वज्जन्मत आरभ्य नन्दस्य व्रजो रमा-क्रीड़ो बभूवेति तुलसीरूपरूपान्तरा वृन्दादेवी वृन्दावने नित्य-वासमकरोदिति च मुनिजनप्रसिद्धेः। कथम्भूतमपि रजश्चकमे। भृत्यैर्व्रजसम्बन्धिभिर्जुष्टं शिरोधारणादिनोपभुक्तमपि। सा तु कीदृङ्-महिमापि। यस्याः स्वविषयकक्षपावीक्षणे ऽन्त अपि अन्यसुराणां तत्-पार्षदादीनामपि प्रयासस्तादृशमहिमापि। वयञ्चेति चशब्दः काकु-सूचकस्तापिशब्दस्य समानार्थः। ततो यथा श्रीर्यथा च वृन्दा तद्व-द्वयमपि मुग्धाः सत्यः तस्य तव पादरजः प्रपन्नाः अपि तु नैवे-त्यर्थः। प्राकृतं वाक्यं निगमयन्ति, तत् इति। वृजिनार्दनेति कर्म्मक्षय-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न एव। हे सर्वदुःखनिवारक ततस्तस्मात् नोऽस्मान् प्रति प्रसीद इमां दुर्दृष्टिं त्यजेत्यर्थः। ननु यूयमपि ब्रह्मादित्यागेनात्रागत्य तद्वदेव मत्पादरजः प्रपन्नाः तत्राहुः न तेऽङ्घ्रिमूलमिति। तद्वद्वसतीर्विसृज्य त्वदुपासनाशाः सत्यस्तवाङ्घ्रिमूलं न प्राप्ता अपि तु कौतुकेनैव ज्योत्स्नायां वृन्दावनदर्शनार्थमागता इत्यर्थः। अतस्त्वदीयताट्टशनिरीक्षणजाततीव्रकामेन तप्तात्मनो यास्तासामेव दास्यं देहि न तु माट्टशीनाम्। अत्र षष्ठी चात्यन्तदानाभावे सम्प्रदानत्वं न भवतीति विवक्षया। अतस्तदपि दानं गोकुलेऽस्मिन् नातिस्थिरीभविष्यतीति भावः। पुरुषभूषणेति सम्बोधनञ्च श्लिष्टम्। पुरुषान् गोकुलगतान् सखिजनानेव भूषयति न त्वन्यापि गोकुलरमणीं काञ्चिदपि। अतस्तादृशतप्तात्मानोऽपि नायिकाः कल्पनामात्रमय्य इति भावः। अत्र भावान्तरेणागतिसूचनात् दृष्टं वनं कुसुमितम् इत्यनेन तद्भावोद्दीपनमपि नादृतम्। अथ श्रवणादित्यादौ दर्शनान्मयि भाव इत्यनेन यन्निजसौन्दर्य्यबलं दर्शितं तत्राहुः वीक्ष्येति। अत्राप्यन्तरशब्दः काक्काम्। पूर्वस्तु तत्तदुक्तसमुच्चये। एतदपि एतच्चापि विलोक्य दास्यो भवाम अपि तु न सर्वथैव इत्यर्थः। ननु यद्येवं दृढ़व्रता भवथ तर्हि कथमिहैव सर्वां रात्रिं न तिष्ठथेत्याशङ्क्य पुनः सशङ्कमाहुः का स्त्र्यङ्ग ते इति। यद्यप्येवं तथापि अङ्ग हे कलपदायतवेणुगीत हे सम्मोहित सम्मोहनाख्यकामबाणमोहित। त्रैलोक्याम् एषा का स्त्री या ते त्वत्तः सकाशात् आर्य्यचरितात् सदाचाराद्धेतोरपि न चलेत्। अस्त्वस्माकं परस्त्वसाधुमर्य्यादाव्रतानां दूरतो वार्त्ता। तदेवं तत्चलने हेतुं संबोधनद्वयेन गुणगतं भावगतं च तदीयं दोषमुक्त्वा रूपगतञ्चाहुः त्रैलोक्येति। तथा आर्य्यचरितादेव हेतोरिदञ्च रूपं विलोक्य का न चलेत्। यत् यस्मात् गोद्विजेति। सुन्दरीणां सुन्दरपरपुरुषनिकटस्थितिर्हि वाढ़ं लोकविगानाय स्यादिति। रजन्येषेत्यादौ इह वीरस्य मम सन्निधौ स्थेयमित्यत्र बलात्कारमप्याशङ्क्य सस्तुतिकमिव प्रार्थयन्ते

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

व्यक्तं भवानिति। यस्मात् ईदृशो जातस्तस्मात् हे आर्त्तबन्धो धर्म्म-च्युतिभयतोऽपि व्रजजनांस्त्रायमाणं किङ्करीनां गृहदासीनामपि भव-द्दर्शनजातकामतप्तेष्वपि स्तनेषु करपङ्कजं नो निधेहि नार्पय। अस्तु तावत् स्तनानां वार्त्ता। तासां शिरःसु मा निधेहि। तदेवं सति मादृशीनान्तु सत्कुलजातानां परमसतीनां तत्तद्वार्त्तां मनसापि न निधेहीति भावः। तदेवं श्रीकृष्णप्रार्थनाप्रत्याख्यानरूपोऽर्थो व्याख्यातः। स्वयम् आदृत्य विशेषेण प्रार्थनारूपो व्यङ्गोऽर्थश्च प्रायः प्रसिद्ध एव। तत्र धर्म्मशास्त्रोपदेशबलेन यत् पत्यादीनामनुवृत्ते-र्नित्यत्वं श्रीभगवता स्थापितं ज्ञानशास्त्रमालम्ब्य तन्निराकर्त्तुं प्रतिभा-वचनेनैव तस्य परमात्मत्वं कल्पयन्त्यः सर्वोपदेशानां तदनुगतावेव तात्पर्य्यं स्थापयन्ति यत् पत्यपत्येति। एतत् स्वधर्मोपदेशवाक्यं सर्वोपदेशवाक्यानां तात्पर्य्यास्पदे त्वय्येवास्तु त्वद्भजन एव पर्य्यवस्य-त्वित्यर्थः। कथमहं तदास्पदं तत्राहुः त्वम् आत्मा परमात्मेति। तत-स्तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्तीत्यादिशास्त्रबलेन त्वमेव तस्य पदमित्यर्थः। अथ मम परमात्मत्वमपि कुतस्तत्र सप्रतिभमाहुः किल प्रसिद्धो, तनुभृतां प्रेष्ठः निरुपाधिप्रेमास्पदं बन्धुर्निरु-पाधिहितकारी च भवानिति। तच्च द्वयं परमात्मलक्षणत्वेन आत्म-नस्तु कामाय सर्वं प्रियं भवतीत्यादिज्ञानशास्त्रे प्रसिद्धम्। तस्मात् त्वमेव परमात्मेति सिद्धम्। तस्मात्त्वदुपासनोन्मुखानामस्माकं ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेनेति बलवत्तरज्ञानशास्त्रोपदेशेन स्वधर्म्म-परित्यागेऽपि न दोष इति भावः। तासां तन्नैश्वर्य्यज्ञानञ्च तन्माधुर्य्यानुभवातिशयेनोदेतुं न शक्नोतीति पूर्वमेव दर्शितम्। तत्र च विशेषतः सदाचारं प्रमाणयन्ति कुर्वन्ति हीति। कुशलाः सारासारविद्वांसः सन्तः। हि प्रसिद्धौ। विशेषत इत्यर्थः। स्व आत्मनि परमात्मनीति पूर्वाभिप्रायेण। स्वे आत्मनि अन्तःकरणे नित्यप्रियत्वे-नानुभूयमानो यस्त्वं तस्मिंस्त्वयीत्यर्थः इत्यभिप्रायेण वा। यस्मात्ते

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

चैवंभूते त्वय्येव रतिं कुर्वन्ति न तु धर्मादौ तद्धेतौ गृहादौ वा। तस्मादस्माकं पत्यादिभिः किम् । यच्चाम्बुजाक्षेत्यादिषु रमादिशब्दाः श्रीर्यत्-पदाम्बुजेत्यादिवदेव व्याख्येयाः। इति वाचिकानुभावेषु संलाप-व्याख्या ॥ १० ॥ २९ ॥ श्रीशुकः ॥ २३२ ॥

सन्देशस्तु प्रोषितस्य स्ववार्त्ताप्रेषणं भवेत्। स यथा—हे कृष्ण हे रमानाथ व्रजनाथार्त्तिनाशन । मग्नमुद्धर गोविन्द गोकुलं वृजिनार्णवे ॥ २३३ ॥

अन्यार्थकथनंयत्तु सोऽपदेश इतीर्य्यते। स यथा—निःस्वं त्यजन्ति गणिका इत्यादि जारा भुक्त्वा रतां स्त्रियमित्यन्तम् ॥ २३४ ॥

स्पष्टम् ॥ १० ॥ ४७ ॥ श्रीगोप्य उद्धवम् ॥ २३४ ॥

यत्तु शिक्षार्थवचनमुपदेशः स उच्यते। स यथा श्रीबलदेवा-गमने—किं नस्तत्कथया गोप्यः कथाः कथयतां पराः । यात्यस्माभि-र्विना कालो यदि तस्य तथैव नः ॥ २३५ ॥

स्पष्टम् ॥ १० ॥ ६५ ॥ ताः ॥ २३५ ॥

व्याजेनात्माभिलाषोक्तिर्व्यपदेश इतीर्य्यते । स यथा—कृष्णं निरी-क्ष्येत्यादौ देव्यो विमानगतयः स्मरनुन्नसारा इत्यादि ॥ २३६ ॥

स्पष्टम् ॥ १० ॥ ४३ ॥ ताः ॥ २३६ ॥

एवं प्रलापानुलापापलापातिदेशनिर्देशा अपि पञ्च वाचिकेषु ज्ञेयाः। इत्यनुभावाः। अथ व्यभिचारिणः। तत्र निर्वेदः सावमाने स्यात्। चरणरज उपास्ते यस्य भूतिर्वयं का इति ॥ २३७ ॥

स्पष्टम् ॥ १० ॥ ४३ ॥ ताः ॥ २३७ ॥

अनुतापो विषादकः। अक्षण्वतां फलमिदमित्यादौ हृश्यः । दैन्य-मौर्जित्यराहित्ये। तन्नः प्रसीद वृजिनार्दनेत्यादि ॥ २३८ ॥

स्पष्टम् ॥ १० ॥ २९ ॥ ताः ॥ २३८ ॥

उल्लासे विवेकशमनो मदः। तदङ्गसङ्गप्रमुदाकुलेन्द्रिया इत्यादि ॥ २४० ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्कन्धम् ॥ १० ॥ ३३ ॥ श्रीशुकः ॥ ३४० ॥

अन्यस्य हेलने गर्वः। संप्रापुरच्युत तृषा भवतोपदिष्टा इत्यादि ॥ ३४१ ॥

स्कन्धम् ॥ १० ॥ ६० ॥ श्रीरुक्मिणी ॥ ३४१ ॥

शङ्का स्वानिष्टतर्किते। अपि मय्यनवद्यात्मा दृष्ट्वा किञ्चिज्जुगुप्सितमित्यादि ॥ ३४२ ॥

स्कन्धम् ॥ १० ॥ ५३ ॥ सा ॥ ३४२ ॥

त्रासो भिया मनःक्षोभे। क्रीडन्तं रासकृष्णेति विलोक्य स्वपरिग्रहमिति ॥ ३४३ ॥

स्कन्धम् ॥ १० ॥ ३४ ॥ श्रीशुकः ॥ ३४३ ॥

आवेगश्चित्तसम्भ्रमे। दुहन्त्योऽभिययुः काश्चिदित्यादि ॥ ३४४ ॥

स्कन्धम् ॥ १० ॥ २९ ॥ सः ॥ ३४४ ॥

उन्मादो हृदयभ्रान्तौ। गायन्त्य उच्चैरमुमेव संहता इत्यादि ॥ ३४५ ॥

स्कन्धम् ॥ १० ॥ ३० ॥ सः ॥ ३४५ ॥

अपस्मारो मनोलये। मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः। स्मरन्त्योऽङ्ग विमुह्यन्ति विरहौत्कण्ठ्यविह्वलाः ॥ ३४६ ॥

व्याधिस्तत्प्रभवे भावे। धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चनेति ॥ ३४७ ॥

स्कन्धम् ॥ १० ॥ ४६ ॥ श्रीभगवानुद्धवम् ॥ ३४७ ॥

मोहो हृन्मूढतात्मनि। निजपादाब्जदलैरित्यादौ कुजगतिं गमिता इत्यादि ॥ ३४८ ॥

स्कन्धम् ॥ १० ॥ ३५ ॥ श्रीगोप्यः ॥ ३४८ ॥

प्राणत्यागो मृतिः काश्चिन्नसिद्धवपुषां रतौ। अन्तर्गृहगताः काश्चिदित्यादौ कृष्णसन्दर्भे व्याख्याता। अन्यत्र कृष्णकृत्येभ्यो बलिनः कोपशङ्कया। आलस्यमचिकीर्षायां शक्तिमं तेषु चोज्ज्वले। तत्र

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कृष्णकृत्येभ्योऽन्यत्र तद्यथा। तदङ्गसङ्गेत्यादौ केशान् दुकूलं कुचपट्टिकां वा। नाञ्जः प्रतिव्योढुमलं व्रजस्त्रिय इति ॥ ३४९ ॥

अत्राञ्जः सुखेन न समर्था इति तादृशेऽपि कृत्ये क्लमशङ्कां निगमयति ॥ १० ॥ ३३ ॥ श्रीशुकः ॥ ३४९ ॥

यथोक्ते कृष्णसहितविहारकृत्येषु च क्लमं तद्यथा—न पारयेऽहं चलितुमित्यादि ॥ ३५० ॥

स्पष्टम् ॥ १० ॥ ३० ॥ श्रीराधा ॥ ३५० ॥

जाड्यमप्रतिपत्तौ स्यात्। तमागतं समाज्ञाय वैदर्भी कृष्णमानसा। अपश्यतो ब्राह्मणाथ प्रियसन्यत्ननास सा ॥ ३५१ ॥

स्पष्टम् ॥ १० ॥ ३१ ॥ श्रीशुकः ॥ ३५१ ॥

व्रीड़ेत्याद्युदाहृतम्। पत्युर्बलं शरासारैश्छन्नं वीक्ष्य सुमध्यमा। सव्रीड़मैक्षत्तद्वक्त्रं भयविह्वललोचना ॥ ३५२ ॥

इदं भावसाङ्कर्य्येऽप्युदाहार्य्यम् ॥ १० ॥ ५४ ॥ सः ॥ ३५२ ॥

अवहित्थाकारगुप्तौ। सभाजयित्वा तमनङ्गदीपनमित्यादि ॥३५३॥

सभाजनादिना कोपाच्छादनम् ॥ १० ॥ ३२ ॥ सः ॥ ३५३ ॥

स्मृतिः प्राग्ज्ञातचिन्तने। ताः किं निशाः स्मरति यासु तदा प्रियाभिर्वृन्दावने कुमुदकुन्दशशाङ्करम्ये इत्यादौ दर्शिता। ऊहो वितर्क इत्युक्तः। न लक्ष्यन्ते पदान्यत्रेत्यादि ॥ ३५४ ॥

स्पष्टम् ॥ १० ॥ ३० ॥ श्रीगोप्यः ॥ ३५४ ॥

ध्यानं चिन्तेति भण्यते। कृत्वा मुखान्यवशुच इत्यादि ॥ ३५५ ॥

स्पष्टम् ॥ १० ॥ २९ ॥ श्रीशुकः ॥ ३५५ ॥

मतिः स्यादर्थनिर्द्धारे। त्वं न्यस्तदण्डमुनिभिर्गदितानुभाव आत्मात्मदश्च जगतामिति मे वृतोऽसीति ॥ ३५६ ॥

स्पष्टम् ॥ १० ॥ ६० ॥ श्रीरुक्मिणी ॥ ३५६ ॥

औत्सुक्यं समयाक्षमा। निशम्य गीतं तदनङ्गवर्द्धनमित्यादि ॥३५७॥

स्पष्टम् ॥ १० ॥ २९ ॥ श्रीशुकः ॥ ३५७ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीश्रंग्र चान्ये कल्पितं क्वापि। यथा क्रूरस्त्वमक्रूर इत्यादौ। तच्च क्वापि कल्पितं यथा—देहि वासांसि धर्मज्ञ नो चेद्राज्ञे ब्रुवामहे इति ॥ ३५८ ॥

स्पष्टम् ॥ १० ॥ २२ ॥ श्रीव्रजकुमार्यः ॥ ३५८ ॥

असंस्कृतस्त्विष्णुता। पतिसुतान्वयेत्यादौ कितव योषितः कस्त्यजेन्निशीति ॥ ३५९ ॥

स्पष्टम् ॥ १० ॥ ३१ ॥ श्रीगोप्यः ॥ ३५९ ॥

असूयान्योदयद्वेषे। तस्या अमूनि नः क्षोभमित्यादौ। चापलं चित्तलाघवे। श्वो भाविनि त्वमजितोद्वहन इत्यादौ मां राक्षसेन विधिनोद्वह वीर्यशुल्कामिति ॥ ३६० ॥

स्पष्टम् ॥ १० ॥ ५२ ॥ श्रीरुक्मिणी ॥ ३६० ॥

चेतोनिमीलनं निद्रा। एवं चिन्तयती बाला गोविन्दहृत-मानसा। न्यमीलयत कालज्ञा नेत्रे अश्रुकलाकुले ॥ ३६१ ॥

स्वप्नः सुप्तिरितीर्य्यते। एष च जगाद्दृष्टान्तेनानुमेयः। बोधो निद्रादिविच्छेद इति लिंगत्रयाधिका। न्यमीलयत कालज्ञा नेत्रे इत्यनन्तरम् एवं वध्वाः प्रतीक्षन्त्या गोविन्दागमनं नृप। वाम ऊरुर्भुजो नेत्रमस्फुरन् प्रियभाषिणः ॥ ३६२ ॥

तेन स्फुरणेन जजागारेत्यर्थः ॥ १० ॥ ५७ ॥ श्रीशुकः ॥ ३६२ ॥

अथ कान्तभावः स्थायी। तस्य च हेतुद्वयम्। श्रीकृष्णस्वभावो वामाविशेषस्वभावश्चेति। प्रथमो यथा—कान्त्यं अयोत तव पाद-सरोजगन्धमाघ्रायेत्यादिषु ॥ ३६३ ॥

उत्तरो यथा—नैवालोकसहं मन्ये वचस्ते मधुसूदन। अम्बाया इव हि प्रायः कन्यायाः स्याद्रतिः क्वचित्। व्यूढाया अपि पुंश्चल्या मनोऽभ्येति नवं नवमिति ॥ २६४ ॥

यद्भवतोक्तम् अथात्मनोऽनुरूपमित्यादिकं तत्तव वाक्यं स्त्रीजातौ प्रायो नानृतं मन्ये। यत अम्बाया यथा क्वचिदेकत्र शाल्व एव रति-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ढ़ीता तथान्यस्याः कन्याया एकत्र रतिः प्राय एव स्यात् । न तु निय-मेन । किञ्च व्यूढ़ाया अपीति । यद्वा कन्याया अपि क्वचिदेकत्र रतिः स्यात् । प्राय इति साम्यता एवेत्यर्थः । तत्र दृष्टान्तः अम्बाया इवेति । पुंवल्यास्तु व्यूढ़ाया अपि मनो नवं नवमस्येति । तस्मात् परमपुरुष-शीलाया एव त्वयि स्वभावतो रतिर्भवेदिति भावः ॥ १० ॥ ६० ॥ श्रीरुक्मिणी ॥ २६४ ॥

एष च स्थायी साक्षादुपभोगात्मकस्तदनुमोदनात्मकश्चेति द्विविधः । पूर्वः साक्षान्नायिकानाम् । उत्तरः सखीनाम् । उभयव्यपदेशानामुभा-वपि । तत्रोपभोगात्मकः स सामान्यतो यथा—कृष्णं निरीक्ष्य वनितोत्सवरूपशीलमिति ॥ २६५ ॥ ।

स्पष्टम् ॥ १० ॥ २१ ॥ श्रीगोप्यः ॥ २६५ ॥

स एव पुनः सम्भोगेच्छानिदानः सैरिन्ध्र्यादौ यथा—सहोष्यता-मिह प्रेष्ठेत्यादि ॥ २६६ ॥

स्पष्टम् ॥ १० ॥ ४८ ॥ सैव ॥ २६६ ॥

क्वचिद्भेदितसम्भोगेच्छुः पट्टमहिषीषु यथा, स्मायावलोकलव-दर्शितेत्यादौ । स्वरूपाभिन्नसम्भोगेच्छः श्रीव्रजदेवीषु यथा, यत्ते सुजातचरणाम्बुरुहमित्यादिषु । आसां चैष स्वाभाविक एव । अत-एव स्वपरित्यागजातेर्ष्यया दोषं कल्पयित्वा तत्परित्यागासामर्थ्योक्तिः । एष यथा, मृगयुरिव कपीन्द्रमित्यादौ दुस्त्यजस्तत्कथार्थ इति । एष चासु बहुभेदो वर्त्तते । एकत्र भावे खलु मिथुनस्य मिथ आदर-विशेषः । यत्र [१]प्रेयसीनां त्वदीयत्वाभिमानातिशयेन कान्तं प्रति पारतन्त्र्यविनयस्तुतिदाक्षिण्यप्राचुर्य्यम्, अन्यत्र मदीयत्वातिशयः, एतद्-यत्र परतन्त्रकान्ततयान्तर्गर्भितानर्मकौटिल्याभासप्राचुर्य्यम्, एतद्-युगलस्य च भेदस्य वर्त्तमस्वत्वांशतत्साङ्कर्य्यभेदेनोपरासु च बहुविध इति । एते च भावा यथोक्ताः । काचित् कराम्बुजं शौरेर्जगृहेऽञ्जलिना मुदा । काचिद्दधार तद्बाहुमंसे चन्दनरूषितम् ॥ काचिदञ्जलिना-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्कृष्टात्तन्वी ताम्बूलचर्वितम्। एका तदङ्घ्रिकमलं संतप्ता हृदये व्यधात्॥ एका भ्रुकुटिमाबध्य प्रेमसंरम्भविह्वला। घ्नतीवैक्षत् कटाक्षैर्निर्दष्टदशनच्छदा। अपरानिमिषद्दृग्भ्यां जुषाणा तन्मुखाम्बुजम्। आपीतमपि नातृप्यत् सन्तस्तच्चरणं यथा॥ तं काचिन्नेत्ररन्ध्रेण हृदिकृत्य निमील्य च। पुलकाङ्ग्युपगुह्यास्ते योगीवानन्दसंप्लुता॥ सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः। जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनाः॥ २६७॥

अत्रादरविशेषमयप्रागुक्तभावा काचित् कराम्बुजमित्यत्र प्रथमोक्ता। इयञ्च सर्वाग्रस्थितत्वादादौ वर्ण्यते। ततो ज्येष्ठेति गम्यते। ततश्च सर्वादौ तयैव मिलनं कृष्णस्य। तथा तस्यामेव श्रीकृष्णस्याप्यादरातिशयोऽवगम्यते। एवं तयाञ्जलिना करग्रहणात् तस्या अपि तस्मिन्नादरो व्यक्तः। तत्प्रायतल्पप्रान्तिकमपि। मध्यस्थितत्वं चास्याः। ततः साध्वेवेदं प्रथमोदाहरणम्। अथ मदीयत्वातिशयमयद्वितीयोदाहरणम्। एका भ्रुकुटिमाबध्येत्यादि। एषा खलु मध्यतो वर्णनया मध्यस्थितेत्यवगम्यते। मध्यस्थितत्वं चास्याः परमदुर्लभतां व्यनक्ति। ततो भावविशेषधारिता चास्या गम्यते। तस्य साक्षात्प्रत्यायकञ्च मदीयत्वातिशयादिबोधकभ्रूभङ्ग्यादिकमेवास्ति। इयञ्च श्रीराधैव ज्ञेया। ईदृश एव भावोऽस्याः कार्त्तिकप्रसङ्गे व्रतरत्नाकरधृतभविष्यवचने दृश्यते—तस्मिन् दिने च भगवान् रात्रौ राधागृहं ययौ। सा च क्रुद्धा तमुदरे काञ्चीदाम्ना बबन्ध ह॥ कृष्णस्तु सर्वमावेद्य निजगेहमहोत्सवम्। प्रियां प्रसादयामास ततः सा तममोचयदिति॥ ततः सिद्धे च तस्या भावस्य तादृशत्वे यथा राधा प्रियेत्यादि पाद्मादिवचनानुसारेण अनयाराधितो नूनमित्याद्यनुसारेण च तन्माहात्म्यात्तादृशभावमाहात्म्यमेव स्फुटमुपलभ्यते। द्वारकायामेतदनुगतभावत्वेनैव श्रीसत्यभामापि सर्वतः प्रशस्ता। तत्र भावसादृश्यं सर्वतः प्रशस्तत्वञ्च यथा श्रीविष्णुपुराणे—यदि मे तद्वचः सत्यं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सत्यात्वर्थं प्रियेति मे । मद्‌गेहनिष्कुटार्थाय तदायं नीयतां तरुरिति । पाद्मकार्त्तिकमाहात्म्ये श्रीकृष्णवाक्यञ्च यथा—न मे त्वत्तः प्रियतमेत्यादि । श्रीहरिवंशे वैशम्पायनवचनञ्च तन्निर्द्धारकम्—सौभाग्ये चाधिकाभवदिति । अथ या च पूर्वभावोपलक्षिता सापि तद्भावविरोधिभावत्वेन तत्प्रतिपक्षनायिका स्यात् । चन्द्रावल्येव सेति च प्रसिद्धम् । यथोक्तं,श्रीविल्वमङ्गलेन—राधामोहनमन्दिरादुपगतश्चन्द्रावलीमूचिवान् राधे क्षेममिहेति तस्य वचनं श्रुत्वाह चन्द्रावली । कंसक्षेममये विमुग्धहृदये कंसः क्व दृष्टस्त्वया राधा क्वेति विलज्जितो नतमुखः स्मेरो हरिः पातु व इति । अत्र चन्द्रावल्याः सदृशभावा काचिदञ्जलिनेत्यादिना वर्णिता । एका तदङ्घ्रिकमलमित्यादिना च । एते तत्सख्यौ पद्माशैव्ये इत्यभियुक्तप्रसिद्धिः । श्रीराधायाः सदृशभावा, च अपरानिमिषदृग्भ्यामित्यादिना वर्णिता । तं काचिदित्यादिना च । मदीयोऽसौ मामनुभविष्यतीति स्वयंग्राहस्पर्शाद्यभावेन वाम्यस्पर्शात् । ततश्चैते तत्सख्यौ । एते च प्रायस्तत्सनामत्वात् तदनुगततया पाठाच्चानुराधाविशाखे भवेताम् । ये खलु विशाखा ध्याननिष्ठिकेति राधानुराधेति भविष्योत्तरपटिते तत्रानुराधैव ललितेत्यभियुक्तप्रसिद्धिः । सङ्करभावा च काचिद्दधारेत्यादिनोक्ता तद्बाहोरंसे धारणेन पूर्वस्या दाक्षिण्यांशेन साम्यात् । उत्तरस्या मदीयत्वातिशयांशेनेत्यादिकं ज्ञेयम् । अस्या मदीयत्वांशप्राबल्यात् श्रीराधायां सौहार्द्दम् । एषा खलु श्यामलेत्यभियुक्तप्रसिद्धिः । अत्राष्टमी च विष्णुपुराणोक्ता यथा—काचिदायान्तमालोक्य गोविन्दमतिहर्षिता । कृष्णकृष्णेति कृष्णेति प्राह नान्यदुदीरयदिति । अस्या नातिस्फुटभावत्वात्ताटस्थ्यम् । एषा च भद्रेत्यभियुक्तप्रसिद्धिः । तेषां भावानां परमानन्दैकरूपत्वं दर्शयति सर्वा इति ॥ १० ॥ २२ ॥ श्रीशुकः ॥ २६७ ॥

अथानुमोदनात्मके कान्तभावे साध्ये तत्सम्भावनार्थं तदीयलेशानु-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मोदनमात्रस्योदाहरणं यथा—अस्यैव भार्य्या भवितुं रुक्मिण्यर्हति नापरा। असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः। किञ्चित् सुचरितं यन्नस्तेन तुष्टस्त्रिलोककृत्। अनुगृह्णातु गृह्णातु वैदर्भ्याः पाणिमच्युतः। एवं प्रेमकलाबद्धा वदन्ति स्म पुरौकसः॥ ३६८॥

अत्र नानावासनजनानामेषां हृदि तत्तन्नानाविलासमयस्य कान्तभावस्य पूर्णस्वरूपस्पर्शायोग्यत्वात् कथञ्चित्तद्गाम्भीर्य्यस्थितिमात्र-लक्षणस्य तदीयसामान्यांशस्यैवानुमोदनमात्रं जातम्। अतएव प्रेम-कलाबद्धा इत्युक्तम्। प्रेम्णः कान्तभावस्य या कला कोऽपि लेश-स्तेन बद्धास्तदनुमोदनसुखाकुला इत्यर्थः। तत एवं यस्य कलयापि विषमभावानामपि सर्वेषां पुरौकसां तथा चित्तवृन्दमुल्लासितम्। यथा युगपदेकमत्यमिव सर्वभावातिक्रमेण सर्वेषां जातम्। स एव यत्र भावराजाधीशः स्वयमुदयते तच्चित्तानां तादृश उल्लासस्तु परात्पर एव स्यादिति भावः॥ १०॥ ५३॥ सः ३६८॥

अथ साक्षात्तदनुमोदनात्मकपूर्णकान्तभावस्योदाहरणमाह—अप्येण-पत्न्युपगतः प्रिययेह गात्रैस्तन्वन् दृशां सखि सुनिर्वृतिमच्युतो वः। कान्ताङ्गसङ्गकुचकुङ्कुमरञ्जितायाः कुन्दस्रजः कुलपतेरिह वाति गन्धः। बाहुं प्रियांस उपधाय गृहीतपद्मो रामानुजस्तुलसिकालि-कुलैर्मदान्धैः। अन्वीयमान इह व स्तरवः प्रणामं किं वाभिनन्दति चरन् प्रणयावलोकैः॥ ३६९॥

एणपत्नि एणत्वप्रयोगेन हे प्रशस्तनेत्रे पत्नीत्वप्रयोगेन वृद्धा तु हे मादृशमानुषीतुल्ये इत्यर्थः। तत्रापि हे सखि वक्ष्यमाणसौभाग्य-भरेण हे लब्धमद्विधसख्ये। प्रियया सह अच्युतः श्रीकृष्णः। श्लेषेण तस्याः सकाशादविश्लिष्टः सन् गात्रैरुभयोः परस्परमासङ्गेन शोभाविशेषं प्राप्तैरङ्गैः कृत्वा वस्त्वादृशीनां दृशां नेत्राणां सुनिर्वृतिं केवलश्रीकृष्णादर्शनजानन्दादपि अतिशयितमानन्दं तन्वन् विस्तारयन् उत्तरोत्तरमुत्कर्षयन् अपि किम् उपगतः युष्मत्समीपं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्राप्तोऽभूत्। ननु कथमिदं भवतीभिरनुमितम् इत्याशङ्क्यानुमानलिङ्गं तन्मिथुनश्लाघागर्भवचनेनाहुः कान्तेति। कुलपतेर्व्रजनाथवंशतिलकस्य या कुन्दस्रक् तस्या गन्धः सौरभ्यमिह वाति वायुसङ्गेन प्रसरति। कथम्भूतायाः स्रजः कान्ता सर्वस्मादुत्तमत्वेन तस्यापि लालसास्पदरूपा या स्यात्तस्या अङ्गसङ्गे कुचकुङ्कुमेन रञ्जितायाः। अतः सन्ततपरिचयविशेषेण तत्तत्सौरभ्यविशेषस्यास्माभिरवधारितत्वात् भवतीनामत्र चरन्तीनां समीपं प्राप्त एवासौ तया युत इत्यर्थः। अथ तां तद्दर्शनजातेन हर्षेण सम्प्रति तद्वियोगजातेन दुःखेन च स्खगितवचनामाशङ्क्य तेन च तयोः सङ्गममेव निर्द्धार्य परमानन्देन तदवसरोचितं तदीयविलासविशेषं वर्णयन्त्यस्तत्र पुष्पादिभरनम्राणां तरूणामपि तदीयसौविदल्लादिभृत्यविशेषभावेन तन्नमस्कारमुत्प्रेक्ष्य पुनस्तेषामेव तत्सन्निधिजन्यसौभाग्यविशेषे तान् प्रत्येव पृच्छन्त्यस्तयोस्तादृशविलासावेशातिशयमाहुः, बाहुं प्रियांस इति। अन्वीयमानः अनुगम्यमानः। परस्परं प्रणयावलोकेश्वरन् क्रीड़न्। इह वो युष्माकं प्रणामं किं वाभिनन्दति सादरं बुध्यते। अपि तु विलासाविष्टस्य तस्य तदभिनन्दनं न सम्भावयाम इत्यर्थः॥ १०॥ ३०॥ श्रीराधासख्यः॥ २६८॥

तदेवमालम्बनादिस्थायन्तभावसम्बलनं चमत्कारावहतया उज्ज्वलाख्यो रसः स्यात्। तस्य च भेदद्वयं विप्रलम्भः सम्भोगश्चेति। तत्र विप्रलम्भो विप्रकर्षेण लम्भः प्राप्तिर्यस्य स तथा। यथोक्तम्—यूनोरयुक्तयोर्भावो युक्तयोर्वा तयोर्मिथः। अभीष्टालिङ्गनादीनामनवाप्तौ प्रहृष्यते। स विप्रलम्भो विज्ञेयः सम्भोगोन्नतिकारक इति। तदुन्नतिकारकत्वमन्यत्र चोक्तम्—न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते॥ काषायिते हि वस्त्रादौ भूयान् रागोऽभिवर्द्धत इति। यदुक्तं श्रीकृष्णेन—नाहन्तु सख्यो भजतोऽपि जन्तूनित्यादि। अन्यत्र च—यत्त्वहं भवतीनां वै दूरे वर्त्ते प्रियो दृशाम्। मनसः सन्निकर्षार्थं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मदनुध्यानकाम्यया॥ यथा दूरचरे प्रेष्ठे मन आविश्य वर्त्तते। स्त्रीणाञ्च न तथा चेतः सन्निकृष्टेऽक्षिगोचर इति। तस्य विप्रलम्भस्य चत्वारो भेदाः; पूर्वरागो मानः प्रेमवैचित्त्यं प्रवासश्चेति। अथ सम्भागश्च यूनोः सङ्गतयोः सम्बद्धतया भोगो यत्र स भाव उच्यते। यथोक्तम्—दर्शनालिङ्गनादीनामानुकूल्यान्निषेवया। यूनोरुल्लासमारोहन् भावः सम्भोग उच्यत इति। स च पूर्वारागानन्तरज इत्यादिसंज्ञया चतुर्विधः। तत्र पूर्वरागः। रतिर्या सङ्गमात् पूर्वं दर्शनश्रवणादिजा। तयोरुन्मीलति प्राज्ञैः पूर्वरागः स उच्यते। स च पट्टमहिषीषु श्रीरुक्मिण्या यथा—सोपश्रुत्य मुकुन्दस्य रूपवीर्य्यगुणश्रियः। गृहागतैर्गीयमानास्तं मेने सदृशं पतिमित्यादि॥ २७०॥

स्पष्टम्॥ १०॥ ४२॥ श्रीशुकः॥ २७०॥

अथ व्रजदेवीनाम्। तत्र यदासां क्वचिद्बाल्येऽपि सम्भोगो वर्ण्यते तत् खलु औत्पत्तिकभाववतीनां तासां मध्ये कासाञ्चिन्निमित्तविशेषं प्राप्य कदाचित् कदाचित्तद्भावाविर्भावप्रभावेन कैशोराविर्भावात् सङ्गच्छते। यथा भविष्ये कार्त्तिकप्रसङ्गे—बाल्येऽपि भगवान् कृष्णः कैशोरं रूपमाश्रित इत्यादिनोक्तम्। अन्यदा तदाच्छादने सति तत् कैशोरादिकमाच्छन्नमेव तिष्ठति। तस्माद्भावादीनामविच्छेदाभावान्नातिरसाधायकत्वमिति नात्रोट्टङ्क्यते। अथ महातेजस्वितया षष्ठवर्षमेवारभ्य कैशोराविर्भावाविच्छेदे सति तासामपि पुनः पूर्वरागो जायते। ततोऽन्यासान्तु सुतरां स तूदाह्रियते। यथा—आश्लिष्य समशीतोष्णं प्रसूनवनमारुतम्। जनास्तापं जहुर्गोप्यो न कृष्णहृतचेतसः॥ २७१॥

गोप्यस्तु न जहुः। तत्र हेतुः कृष्णेति। विरहे प्रत्युत तापकरत्वादिति भावः॥ १०॥ २०॥ श्रीशुकः॥ २७१॥

तद्विवरणञ्च—इत्थं शरत्स्वच्छजलं पद्माकरसुगन्धिना। न्यविशद्वायुना वातं सगोगोपालको वनम्॥ कुसुमितवनराजिशुष्मिभृङ्ग-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

द्विजकुलघुष्टसरःसरिन्महीध्रम् । मधुपतिरवगाह्य चारयन् गाः सह-पशुपालबलश्चुकूज वेणुम् ॥ तद्व्रजस्त्रिय आश्रुत्य वेणुगीतं स्मरोदयम् । काश्चित् परोक्षं कृष्णस्य स्वसखीभ्योऽन्ववर्णयन् । तद्वर्णयितुमारब्धाः स्मरन्त्यः कृष्णचेष्टितम् । नाशकन् स्मरवेगेन विक्षिप्त-मनसो नृप । बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं बिभ्रद्वासः कनककपिशं वैजयन्तीञ्च मालाम् । रन्ध्रान् वेणोरधरसुधया पूरयन् गोपवृन्दैर्वृन्दारण्यं स्वपदरमणं प्राविशद्गीतकीर्त्तिः । इति वेणुरवं राजन् सर्वभूतमनोहरम् । श्रुत्वा व्रजस्त्रियः सर्वा वर्णयन्त्योऽभिरेभिरे ॥ श्रीगोप्य ऊचुः । अक्षण्वतां फलमिदं न परं विदामः सख्यः पशूननुविवेशयतोर्वयस्यैः । वक्त्रं व्रजेशसुतयोरनुवेणुजुष्टं यैर्वा निपीतमनुरक्तकटाक्ष-मोक्षम् । चूतप्रवालबर्हस्तवकोत्पलाब्जमालानुपृक्तपरिधानविचित्र-वेशौ । मध्ये विरेजतुरलं पशुपालगोष्ठ्यां रङ्गे यथा नटवरौ क्व च गायमानौ । गोप्यः किमाचरदयं कुशलं स्म वेणुर्दामोदराधर-सुधामपि गोपिकानाम् । भुङ्क्ते स्वयं यदवशिष्टरसं ह्रदिन्यो हृष्यत्त्वचोऽश्रु मुमुचुस्तरवो यथार्य्याः ॥ ३७२ ॥

तथा, वृन्दावनं सखि भुवो वितनोति कीर्त्तिमित्यादि । धन्याः स्म मूढ़मतयोऽपि हरिण्य एता इत्यादि । कृष्णं निरीक्ष्येत्यादि । गावश्च कृष्णमुखेत्यादि । गोगोपकैरित्यादिकञ्च स्मर्त्तव्यम् । इत्थमिति । इत्थं पूर्वाध्यायवर्णितप्रकारेण । कुसुमितेति पूर्वेणान्वयः । अतत्यं वनं तदन्तर्वनम् । शुष्मिणो मत्ताः । तद्व्रजेति कृष्णस्य वेणुगीतं आश्रुत्य । तथापि परोक्षं लज्जया निजभावावरणाय तदप्रजादिवर्णन-सहयोगेनाच्छन्नं यथा स्यात् तथैवावर्णयन् । समुचितवर्णनं हि प्रीतिमात्रं बोधयति न तु कान्तभावमिति । तद्वर्णितमिति तथापि नाशकन् । परोक्षवर्णनायां न समर्था बभूवुः । तत्र हेतुः स्मरन्त्य इति । तत्र च हेतुः स्मरवेगेनेति । पूर्वोक्तं कृष्णचेष्टितं वर्णयन्ति बर्हापीडमिति । अधरसुधयेति फुंत्कारस्य तत्प्राचुर्य्यं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विवक्षितम्। ततश्च युक्त एव तदनुभवेन तासां तादृशो मोह इति भावः। नाम्रकन्नित्येतद्विवृणोति वृतीति। अभिरेभिरे उन्मदा बभूवुः। अथ यथा नाम्रकंस्तथा तद्वाक्यद्वारैव दर्शयति श्रीगोप्य ऊचुरित्यादिना। तत्र द्विधा परोक्षीकरणाशक्तिः। एकत्राज्ञानतोऽपि भावप्राबल्येनैवार्थान्तराविर्भावेन। अन्यत्र भावपारवश्येन ज्ञानत एव तदुद्घाटनेन। तत्र प्रथमेन यथा अक्षण्वतामिति। अर्थान्तरं चात्र व्रजेशसुतयोर्मध्ये कनिष्ठत्वेन तदनु पश्चात् वेणुजुष्टं मुखं तत् यैर्निपीतमिति योज्यम्। अथोत्तरेण यथा चूतप्रवालेत्यादिद्वयम्। तत्र प्रथमं परोक्षीकरणे। द्वितीयं तदशक्ताविति ज्ञेयम्। एवमग्रे च गावश्च कृष्णमुखनिर्गतवेणुगीतेत्यादिषु विजातीयभाववर्णनमपि परोक्षविधाने मन्तव्यम्। अथोपसंहारः—एवंविधा भगवतो या वृन्दावनचारिणः। वर्णयन्त्यो मिथो गोप्यः क्रीडास्तन्मयतां ययुः॥ ३७३॥

तन्मयतां तदाविष्टताम्। स्त्रीमयः षिङ्ग इतिवत्॥ १०॥ २१॥ श्रीशुकः॥ ३७३॥

तथा तासु कुमारीणां, हेमन्ते प्रथमे मासि नन्दव्रजकुमारिकाः चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्च्चनव्रतमित्यादि॥ ३७४॥ स्पष्टम्॥ १०॥ २२॥ सः॥ ३७४॥

अत्र कामलेखादिप्रस्थापनं मतम्। तत्रोदाहरणं, श्रुत्वा गुणान् भुवनसुन्दर शृण्वतां त इत्यादि श्रीरुक्मिणीसन्देशादिकं ज्ञेयम्। अथ पूर्वरागानन्तरजः सम्भोगः। तत्र सम्भोगस्य सामान्याकारेण सन्दर्शनसंजल्पसंस्पर्शसंप्रयोगलक्षणभेदचतुष्टयभिन्नत्वं दृश्यते। सन्दर्शनं सम्यग्दर्शनं यत्र स भावः इत्यादि। अथ रुक्मिण्याः सन्दर्शनसंस्पर्शनाख्यौ तदनन्तरजौ सम्भोगौ यथा—सैवं शनैश्चलयती चरणाब्जकोषौ प्राप्तिं तदा भगवतः प्रसमीक्षमाणा। उत्सार्य्य वामकरजैरलकानपाङ्गैः प्राप्तान् ह्रियैक्षत नृपान् ददृशेऽच्युतं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सा । तां राजकन्यां रथमारुरुक्षतीं जहार कृष्णो द्विषतां समीक्षता-मिति ॥ ३७५ ॥

भगवतः प्राप्तिं तत्तागमनं क्रिया प्रसमीक्षमाणा सलज्जं द्रष्टुमा-रभमाणा प्राप्तान् पुरतः स्थितान् नृपानैक्षत । ततश्च व्याकुलचित्ता तत्रैव पुनरच्युतमपि ददर्श इत्यर्थः ॥ १० ॥५३ ॥ श्रीशुकः ॥ ३७५ ॥

अथ व्रजकुमारीणां सन्दर्शनसंजल्पौ यथा—तासां वासांस्युपा-दाय नीपमारुह्य सत्वरः । हसद्भिः प्रहसन् बालैः परिहासमुवाच हेत्यादि ॥ ३७६ ॥

अत्रैवं विवेचनीयम् । तेन यद्यपि तासां स्वविषयप्रेमोत्कर्षो ज्ञायत एव तथापि तदभिव्यञ्जकचेष्टाविशेषद्वारा साक्षात्तदास्वादाय तादृशी लीला सनर्म्म विस्तारिता । विदग्धानाञ्च यथा वनितानुरागास्वादने वाञ्छा न तथा तत्स्पर्शादावपि । तत्र लज्जाच्छेदो नाम पूर्व्वानुराग-व्यञ्जको दशाविशेषो वर्त्तते । तथोक्तम्—नयनप्रीतिः प्रथमं सम्भोग-स्तथा सङ्कल्पः । निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः । उन्मादो मूर्च्छा मृतिरित्येता स्मरदशा दशैव स्युरिति । तेषु च व्यञ्जकेषु कुलकुमारीणां लज्जाच्छेद एव पराकाष्ठा । ता हि दशमीमप्यङ्गी-कुर्व्वन्ति न तु वैजात्यम् । ततोऽनुरागातिशयास्वादनार्थं तथा परिहसितम् । सखायश्चेति । न मयोदितपूर्व्वं वा अनृतं तदिमे विदुरिति सन्ततदविनाभावव्यक्त्या हसद्भिरित्यादौ बालशब्द-प्रयुक्त्या च तदीयसख्यव्यतिरिक्तभावान्तरास्पर्शिनस्तदङ्गनिर्व्विशेषा अत्र बाला एव च । ये चोक्ता गौतमीयतन्त्रे प्रथमावरणपूजायाम्—दामसुदामवसुदामकिङ्किणीगन्धपुष्पकैः । अन्तःकरणरूपास्ते कृष्णस्य परिकीर्त्तिताः । आत्माभेदेन ते पूज्या यथा कृष्णस्तथैव ते इति । ततो रहस्यत्वात् तादृशानुरागास्वादकौतुकप्रयोजनकनर्म-परिपाटीमयत्वात्तस्यां लीलायां न रसत्वव्याघातः प्रत्युत तदुल्लास एव । तथैव तस्यां लीलायां श्रीकृष्णस्याभिप्रायं मुनीन्द्र एव व्याचष्टे ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भगवानाहृता वीक्ष्य शुद्धभावप्रसादितः। स्कन्धे निधाय वासांसि प्रीतः प्रोवाच सस्मितम् ॥ २७७ ॥

आहृता आगताः। लज्जात्यागेऽपि स्त्रीजातिस्वभावेन लज्जांशाव-शेषात् नम्रतयेषद्गम्नदेहा वा एवमुत्कण्ठाभिव्यक्त्या तद्भावमुग्ध-त्वाभिव्यक्त्या च शुद्धः परमौज्ज्वल्येनावगतो यो भावस्तेन तदास्वादनेन जनितचित्तप्रसत्तिः। अथ पुनरपि यूयं विवस्त्रा यदपो धृतव्रता इत्यादिकं तल्लज्जांशावशेषनिःशेषतादर्शनकौतुकार्थं श्रीकृष्णनर्म-वाक्यम्। तदनन्तरम् इत्यच्युतेनेत्यादिकं तासामपि तथैव तद्वचन-स्मितत्वव्यञ्जकं मुनीन्द्रवाक्यं पूर्वतोऽप्युत्कण्ठां भावमुग्धत्वञ्च व्यञ्ज-यति। तदनन्तरमपि स्वयं तथैव व्याचष्टे। दृढं प्रलब्धा त्रपया च हापिताः प्रस्तोभिता क्रीडनवच्च कारिताः। वस्त्राणि चैवापहृता-न्यथाप्यमुं ता नाभ्यसूयन् प्रियसङ्गनिर्वृताः ॥ २७८ ॥

दृढमत्यर्थं प्रलब्धा वञ्चिताः यूयं विवस्त्रा इत्यादिना। त्रपया लज्जया च हापिता अत्रागत्य स्ववासांसीत्याग्रहेण। प्रस्तोभिता उपहसिताः सत्यं ब्रुवाणि नो नर्मेत्यादिना। क्रीडनवत् कारिताश्च बद्धाञ्जलिमित्यादि प्रायश्चित्तच्छलेन। न च तासां तत्र दोषोऽस्ति, येन वञ्चनादिकं कृतं, प्रत्युत तस्यैवेत्याह स्वयं तेनैव, वस्त्राणि च हृतानि इति। तथापि तं प्रति ता नाभ्यसूयन् प्रत्युत प्रियस्य तस्य सङ्गेन निर्वृताः परमानन्दमग्ना बभूवुरिति। १० ॥ २२ ॥ श्रीशुकः ॥ २७८ ॥

अथ यज्ञपत्नीनां ब्राह्मणीत्वेन योग्यत्वाभावात् श्रीकृष्णस्य तासु भावेऽनुदिते सति पूर्वराग इव प्रतीयमानो यो भावस्तदनन्तरं च सन्दर्शनसंजल्परूपसम्भोग इव प्रतीयमानो यः स तु सम्भोगाभासस्तस्य हेमन्तस्यानन्तरं निदाघे द्रष्टव्यः। यथाह—अथ गोपैः परिवृतो भगवान् देवकीसुतः। वृन्दावनाद्गतो दूरं चारयन् गाः सहाग्रजः ॥ २७९ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अथ व्रजकुमार्य्यनुग्रहानन्तरं कश्चिन्निदाघदिन इत्यर्थः। आनन्तर्य्यमिह आगामिनिदाघान्तरं व्यवच्छिनत्ति। तस्मिंश्च दिने श्रीबलदेवोऽपि सङ्ग आसीदित्याह सहाग्रज इति। वृन्दावनान्नातो दूरमिति पर्वतमयकाम्यकवनगमनात्। ततश्च धातुरागवेशस्तेन तरूणां नम्रशाखानां मध्येन यमुनां गत इत्यनेन च लब्धत्वात्। तदेवञ्च व्रजं दक्षिणीकृत्य गतत्वात् सङ्गतम्। यमुनोपकण्ठगत्या पश्चादेव भाण्डीरनाख्यं कुट्टिमं च गत इति ज्ञेयम्। यस्य च दक्षिणतो मधुपुरादुत्तरतो याज्ञिकब्राह्मणा ऊषुरिति च। अतः कंससमीपवासत्वात् कंसाद्भीता न चाचलन्नित्यनेन तेषां ब्राह्मणानां श्रीभगवन्मिलनं न जातमिति क्रमोऽत्र कर्त्तव्यः। तस्य दिनस्य गुणेन शब्देन च निदाघसम्बन्धित्वमाह—निदाघार्कातपे तिग्मे छायाभिः स्वाभिरात्मनः। आतपत्रायितान् वीक्ष्य द्रुमानाह व्रजौकसः। इत्यादि ॥ ३८० ॥

निदाघस्य अर्कतापे तिग्मे सति। अथ सम्भोगाभासो यथा—यमुनोपवने रम्ये तरुपल्लवमण्डिते। विचरन्तं वृतं गोपैर्ददृशुः साग्रजं स्त्रियः॥ श्यामं हिरण्यपरिधिं वनमाल्यबर्हधातुप्रवालनटवेशमनुव्रतांसे। विन्यस्तहस्तमितरेण धुनानमब्जं कर्णोत्पलालककपोलमुखाब्जहासम्। प्रायः श्रुतप्रियतमोदयकर्णपूरैर्यस्मिन्निमग्नमनसस्तमथाक्षिरन्ध्रैः। अन्तः प्रवेश्य सुचिरं परिरभ्य तापं प्राज्ञं यथाभिमतयो विजहुर्नरेन्द्र ॥ ३८१ ॥

अभिमतयोऽहङ्कारवृत्तयः यथा प्राज्ञं सुषुप्तिसाक्षिणं प्राप्य नानाभिमन्तव्यकृतं तापं जहति तथा ता अपि तदप्राप्तितापमित्यर्थः। तत्र तासां कस्याश्चित्तु तदेवायोग्यतानाशेन स पूर्वरागान्तरजः सम्भोगः संस्पर्शनाद्यात्मकोऽपि बभूवेत्याह—तत्रैका विधृता भर्त्रा भगवन्तं यथाश्रुतम्। हृदोपगुह्य विजहौ देहं कर्मानुबन्धनम् ॥ ३८२ ॥

कर्मानुबन्धब्राह्मणदेहपरित्यागेन तदयोग्यत्वे नष्टे यथा हृदो-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पगूढ़ोऽसौ तथैव तं प्राप्तवतीत्यर्थः। यं यं वापि स्मरन् भाव-मित्यादि श्रीगीतोपनिषदादिभ्यः। सा च तस्यास्तत्प्राप्तिः गोपीरूप-प्राप्तेरेव सम्भवति न ब्राह्मणीरूपेणेति सूचितम्। एवं लीलानर-वपुरित्यादौ गवादिका एव रमयन् रेमे नान्या इत्यर्थेन। यथा चात्र व्रजे तस्यास्तदैव तत्प्राप्तेरप्रसिद्धत्वादघटमानत्वाच्च न तत् सम्भावनीयम्। श्रीपस्य व्रजस्य च लोकाप्रकटतयाप्यनन्तधा प्रकाश-भेदानां श्रीकृष्णसन्दर्भादौ स्थापितत्वात्। तथात्र साक्षाद्दशमी दशापि न दोषाय। तादृशकृच्छ्रेण तत्प्राप्तौ तदनुसन्धानाविच्छेदेनोत्कण्ठा-पुष्ट्या तस्या रसस्यैवोत्कर्षात् ॥ १० ॥ २२ ॥ श्रीशुकः ॥२७९-२८२॥

अथ तदनन्तरमेव शरदि सर्वासामेव श्रीव्रजदेवीनां सन्दर्शनादि-सर्वात्मक एव पूर्वरागान्तरजः सम्भोगो वर्ण्यते। तत्र कुमारीणामपि तादृशप्राप्तावक्रतार्थमन्यानां पूर्वरागांशो नातिगतः। कस्याश्चित् पूर्णाः पुलिन्द्य इत्यनुसारेण कासाञ्चित्तु यर्ह्यम्बुजाक्षेत्यादावस्याञ्च तत्-प्रभृतीत्यनेन श्रुतो यः स्पर्शः सोऽपि वेणुगीतकृततन्मूर्च्छादिशमना-नुरोधेनैव न तु सम्भोगरीत्येति मन्तव्यः। अत एव तस्य तासामपि अपूर्ववत् प्रत्याख्यानप्रार्थनावाक्ये संगच्छेते। अथ तासां यथा—निशम्य गीतं तदनङ्गवर्द्धनं व्रजस्त्रियः कृष्णगृहीतमानसाः। आजग्मु-रन्योन्यमलक्षितोद्यमाः स यत्र कान्तो जवलोलकुण्डला इत्यादि ॥ २८३ ॥

स्पष्टम् ॥ १० ॥ २९ ॥ श्रीशुकः ॥ २८३ ॥

अथ तदन्तराले मानरूपो विप्रलम्भः। तत्र यथोक्तम्। अहेरिव गतिः प्रेम्नः स्वभावकुटिला भवेत्। अतो हेतोरहेतोश्च यूनोर्मान उदञ्चति। तथा अहेतो नेति नेत्युक्ते हेतोर्यन् मान उच्यते। अस्य प्रणय एव स्यान्मानस्य पदमुत्तममिति। ततोऽस्य सहेतुर्निर्हेतु-श्चेति भेदद्वये च सति हेतुरपि यथोक्तः—हेतुरीर्ष्याविपक्षादे-र्वैशिष्ट्ये प्रेमसात्कृते। भावः प्रणयमुख्योऽयमीर्षामानत्वमृच्छति इति। यथा च—स्नेहं विना भयं न स्यान्नेर्षा च प्रणयं विना।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तस्मान्मानप्रकारोऽयं द्वयोः प्रेमप्रकाशकः इति। अतएव हरिवंशे—कुपितामिव तां देवीं स्नेहात् सङ्कल्पयन्निव। भीतभीतोऽति शनकैर्विवेश यदुनन्दनः॥ रूपयौवनसम्पन्ना सौभाग्येन च गर्विता। अभिमानवती देवी श्रुत्यैवेर्षावशं गतेति॥ अतः प्रियकृतस्नेहभङ्गानुमानेन सहेतुरीर्षामानो भवति। एष च विलासः श्रीकृष्णस्यापि परमसुखदः। यथा चोक्तं श्रीरुक्मिणीं प्रति स्वयमेव—त्वद्वचः श्रोतुकामेन क्ष्वेल्याचरितमङ्गने। मुखञ्च प्रेमसंरम्भस्फुरिताधरमीक्षितुमित्यादि। श्रीरुक्मिण्यामपि तदविच्छेपित्वं व्यक्तं, जाड्यं वचस्तव गदाग्रजेत्यादौ। युक्तञ्च तत्, कान्ताभावाख्यायाः प्रीतेः पोषकत्वेन तद्भावस्यावगमात् प्राचीनकविसम्प्रदायसम्मतत्वाच्च। तस्मादादरणीय एव मानाख्यो भावः। तत्र सर्वासां युगपत्त्यागेन सङ्गमाश्रयेन च तथानुदयान्निगूढ़स्तन्मानलेशो रासे श्रीव्रजदेवीनां जातः। स च परित्यागजेर्षाहेतुक एव ज्ञेयः। यथा—सभाजयित्वा तमनङ्गदीपनं सहासलीलेक्षणविभ्रमभ्रुवा। संस्पर्शनेनाङ्ककृताङ्घ्रिहस्तयोः संस्तुत्य ईषत् कुपिता वभाषिरे इत्यादि॥ ३८४॥

स्पष्टम्॥१०॥३२॥ श्रीशुकः॥ ३८४॥

एष च स्तुत्यादिभिः शाम्यति। यथैव ता स्तुष्टाव। एवं मदर्थोज्झितलोकवेदस्वानां हि वो मय्यनुवृत्तयेऽबलाः। मया परोक्षं भजता तिरोहितं मासूयितुं मार्हथ तत् प्रियं प्रियाः। न पारयेऽहं निरवद्यसंयुजामित्यादि॥ ३८५॥

स्पष्टम्॥ १०॥ ३२॥ श्रीभगवान्॥ ३८५॥

अथ निर्हेतुः प्रणयमानः। निर्हेतुत्वञ्चात्र केवलप्रणयविलसितत्वेन हेत्वभावान्मन्यते। एष नायकस्यापि भवति। भगवत्प्रीतिमये रसे स तूद्दीपनोऽपि प्रसङ्गादत्रोदाहरणीयः। यत्र तासां तत्सौभगमदं वीक्ष्य मानञ्च केशव इत्यादिप्रकरणं योजनान्तरेण मन्यते, तत्र मानः प्रणयमानः। तस्य हेतुः सौभगमदः। ततो मानस्य प्रशमरूपाय

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तासां प्रसादाय स्वयमपि प्रणयमानेनैवान्तरधीयत। तथाग्रेऽपि—यां गोपीमनयत् कृष्णो विहायान्याः स्त्रियो वन इत्यादौ तस्याः प्रणयमानः। येनैवोक्तम्—न पारयेऽहं चलितुं नय मां यत्र ते मन इति। अथ पूर्ववत्तस्यापि प्रणयमानः। प्रणयकोपेनैव सोऽप्येतदनन्तरमेनां स्कन्ध आरुह्यतामितुरक्तवान् ततोऽन्तर्हितवांश्च। अत्र श्रीव्रजदेवीनामहेतुः श्रीकृष्णस्य तु हेत्वाभासजोऽसौ। यासां खलु प्रणयः स्वप्रवाहाद्युद्रेकेण स्वरसावर्त्तरूपं कौटिल्यं सृगन्मानाख्यप्रीतिविशेषतां प्राप्नोति, तासामेव मानाख्यविप्रलम्भोऽपि शुद्धो जायते। ततोऽन्यासां पुनर्हेतुलाभेऽपि विषादभयचिन्ताप्राय एव जायते। यथा श्रीरुक्मिणीं प्रति श्रीकृष्णस्य प्रणयपरिहासवचनमयेऽध्याये तद्वृत्तम्। तत्र श्रीकृष्णस्य सकौतुकोऽयमभिप्रायः। इयं खलु सरलप्रेमवती परमगाम्भीर्यवती च। ततो ममाभीष्टः प्रियाकोपविलासः प्रेमनिर्वन्धप्रकाशकसविकारकण्ठोक्तिविशेषो वा नास्यां स्फुटमुपलभ्यते। तस्मात् कोपविलासो वा तज्जननाभावे तु तादृशोक्तिर्वा यथास्यां प्रकाशते, तथा वाढं परिहासेन प्रयतिष्ये। तत्र यस्यां कोपजनने भ्रातृवैरूप्यादिकमपि कारणं नासीत् तस्यां तत्रान्यत् परमायोग्यमेव। किन्तु मद्विश्लेषसुखमेवास्याः सर्वस्वमिति तद्दर्पन्यक्कारेणैव कोपः संभवेत्। यदि ततोऽपि कोपो नाविर्भवेत् तथापि मद्विश्लेषभयेन पूर्वानुरागवदधुनापि विकारविशेषसहितनिगदेनैव प्रेमनिर्वन्धः प्रकाश्यतेति। तथाहि तत्र राजपुत्रीप्सिता भूपैरित्यादिकस्य तस्य श्रीकृष्णवचनस्य सप्रणयत्वं परिहासमयत्वञ्च तां रूपिणीमित्यादौ प्रीतः स्मयन्नित्यनेन व्यक्तम्। परिहासमयत्वन्तु विशेषतोऽप्युक्तम्। प्रसङ्गेन तस्याः प्रेमसारल्यादिद्वयमपि। तद्दृष्ट्वा भगवान् कृष्णः प्रियायाः प्रेमबन्धनम्। हास्यप्रौढिमजानन्त्याः करुणः सोऽन्वकम्पतेति हास्यं परिहासः तत्र प्रौढिः अवश्यमेनां सरलप्रेमाणमपि गम्भीरामपि क्षोभयिष्यामीति गर्वः तां प्रणयरसकौटिल्याभावेनाजानन्त्या इत्यर्थः। एवमग्रेऽपि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

हास्यप्रौढ़िभ्रंमच्चित्तामित्युक्तम् । तत्र तेन परिहासेन कोपविला-सादिदर्शनमेवाभीष्टमिति स्वयमेवोक्तम् । मा मां वैदर्भ्यसूयेथा जाने त्वां मत्परायणाम् । त्वद्वचः श्रोतुकामेन क्ष्वेल्याचरितमङ्गने । मुखञ्च प्रेमसंरम्भस्फुरिताधरमीक्षितुम् । कटाक्षेपारुणापाङ्गं सुन्दरभ्रुकुटीतटम् । अयं हि परमो लाभो गृहेषु गृहमेधिनाम् । यद्नर्मैर्नीयते यामः प्रियया भीरु मानिनीति । अत्र यद्यपि तस्याः प्राग्भयमेव वर्णितं तथापि तत्रासूयाप्रयोगः प्रोत्तम्भनार्थं एव । तत्प्रयोगेण हि स्वस्य तदधीनताच्चिप्यते । अतएव भामिनीत्यपि संबोधितम् । अथ तस्य प्रेमनिर्बन्धप्रकाशकविकारदर्शनेच्छापि प्राक्तनेनैव वाक्येन व्यक्ता । तद्दृष्ट्वा भगवान् कृष्णः प्रियायाः प्रेमबन्धनमित्यनेन । तथा निगदेनैव तद्व्यक्तिदर्शनेच्छा स्वयमेव व्यञ्जिता । साध्वेतच्छ्रोतुकामैस्त्वं राजपुत्रप्रलम्भितेति । पूर्वं हि त्वं वै समस्तपुरुषार्थमयः फलात्मेत्यादिकं तयापि निगदितमस्ति । अत्र परिहासश्रवणानन्तरं तद्दिष्टचिता किञ्चित् कोपव्यक्तिश्च जातास्ति । जाड्यं वचस्तव गदाग्रजेत्यादिषु । जाड्यस्य प्राचुर्य्यविवक्षया जाड्यमेव वच इति सामानाधिकरण्येनोक्तम् । माधुर्य्यमेव नु मनो नयनामृतं न्वितिवत् । अथ तदविश्लेषदर्पन्यक्कार एव तत्क्षोभहेतुरित्यत्रापि श्रीशुकवाक्यम् । एतावदुक्त्वा भगवानात्मानं वल्लभामिव । मन्यमानामविश्लेषात्तद्दर्पघ्न उपारमदिति । अन्यस्य च तत्र हेतुत्वं स्वयमेव निराकृतम् । भ्रातुर्विरूपकरणं युधि निर्जितस्य प्रोद्वाहपर्वणि च तद्वधमक्षगोष्ठ्याम् । दुःखं समुत्थमसहोऽस्मदयोगभीत्या नैवाब्रवीः किमपि तेन वयं जितास्ते इति । अत्र च प्रकरणे तस्याः प्रणयस्यापि तादृशलाभावात् मानायोग्यत्वमपि दर्शितम् । तस्मात् साधूक्तं यासां खलु प्रणय इत्यादि । अथ मानानन्तरजः सम्भोगो यथा— इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः । जहुर्विरहजं तापं तदङ्गोपचिताशिष इत्यादि ॥ ३८६ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्पष्टम् ॥ १० ॥ ३२ ॥ श्रीशुकः ॥ ३८६ ॥

अथ प्रेमवैचित्त्यम्। तत्तच्चरणं प्रियस्य सन्निकर्षेऽपि प्रेमो-न्मादभ्रमाद्भवेत्। या विश्लेषधियार्त्तिस्तत् प्रेमवैचित्त्यमुच्यते। तद्यथा—कृष्णस्यैवं विहरतो गत्यालापेक्षितस्मितैः। नर्मक्ष्वेल्यो-परिष्वङ्गैः स्त्रीणां किल हृता धियः। ऊचुर्मुकुन्दैकधियो गिर उन्मत्त-वज्जडम्। चिन्तयन्त्योऽरविन्दाक्षं तानि निगदतः शृणु। श्रीमहिष्य ऊचुः। कुररि विलपसि त्वं वीतनिद्रा न शेषे स्वपिति जगति रात्र्या-मीश्वरो गुप्तबोधः। वयमिव सखि कच्चिद्गाढनिर्विद्धचेता नयननलिन-हासोदारलीलेक्षितेन। तथा नेत्रे निमीलयसीत्यादि। भोः भोः सदा निष्टनसे उदन्वन्नित्यादि। त्वं यक्ष्मणेत्यादि। किन्नाचरित-मित्यादि। मेघ श्रीमन्नित्यादि। प्रियदारेत्यादि। न चलसीत्यादि। शुष्यद्ध्रदा इत्यादि। हंस स्वागतमास्यतां पिब पयो ब्रूह्यङ्ग शौरेः कथां दूतं त्वां नु विदाम कच्चिदजितः स्वस्त्यास्त उक्तं पुरा। किं वा नश्चलसौहृदः स्मरति तं कस्माद्भजामो वयं क्षौद्रालापय कामदं श्रियमृते सैवेकनिष्ठा स्त्रियाम् ॥ ३८७ ॥

एवं विहरतः कृष्णस्य गत्यादिभिः स्त्रीणां धियो हृताः। ततश्च ता मुकुन्दैकधियः समाहिता इव चरमगिरः सत्यः पुनरनुरागविशेषेण उन्मत्ता इव विहरन्तमपि तमरविन्दाक्षं परोक्षवच्चिन्तयन्त्यो जडं विवेकशून्यं यथा स्यात् तथा ऊचुः। तानि वचनानि मे मम गदती वाक्यतः शृणुति। अथ विरहस्पर्शीनि तान्येवोन्मादवाक्या-न्याहुः कुररीत्यादि। हे कुररि जगति त्वमेवैका रात्र्यां विलपसि। अतएव न शेषे न निद्रासि। ईश्वरः अस्मत्स्वामी तु गुप्तबोधः क्वचि-दाच्छन्नः स्वपिति। तस्मादस्माकं तव च विलापादिसाधर्म्यादिद-मनुमीयत इत्याहुः, वयमिवेति। एवमन्यत्रापि योजनीयम्। तदैव दैवादागतं हंसं दूतं कल्पयित्वाहुः हंसेति। नोऽस्मान् प्रति पुरा रहसि उक्तं किम्वा स्मरति। स्मरतु नामेत्याशयेनाहुः तमिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यदि च तदाग्रहस्तदा हे चौद्र सौहृद्यचाञ्चल्येन क्षुद्रस्य तस्य दूत। तमेव कामदं युवतिजनक्षोभकमत्रालापय आह्वय। किन्तु यामासज्य वयं त्यक्ताः तां श्रियमृते। तां सोल्लुण्ठं स्तौति। स्त्रियां मध्ये सैव एकत्र तस्मिन् निष्ठा यस्यास्तादृशी। ततः कथं तस्यां नासज्येतेति व्यञ्जितम्। काक्वा स्वेषामपि तन्निष्ठत्वं व्यज्य सोल्लुण्ठत्वं दर्शितम्। अथ तासां तद्विधाशेषविप्रलम्भानन्तरजं नित्यमेव सर्वात्मकसम्भोगमाह—इतीदृशेन भावेन कृष्णे योगीश्वरेश्वरे। क्रियमाणेन माधव्यो लेभिरे वैष्णवीं गतिम् ॥ ३८८ ॥

विष्णोः श्रीकृष्णस्य सम्बन्धिनीं गतिं नित्यसंयोगं लेभिरे। अत्र हेतुः माधव्यः मधुवंशोद्भवस्य श्रीकृष्णस्येव नित्यप्रेयस्यस्ताः ॥ १० ॥ ९० ॥ श्रीशुकः ॥ ३८८ ॥

अथ प्रवासः। नानाविधश्चैष तदनन्तरसङ्गस्य श्रीव्रजदेवीरेवाधिकृत्योदाहरणीयः। सङ्गत्यर्थं तत्र प्रवासलक्षणम्। पूर्वसङ्गतयोर्यूनोर्भवेद्देशान्तरादिभिः। व्यवधानन्तु यत् प्राज्ञैः स प्रवास इतीर्य्यते। तज्जन्यविप्रलम्भोऽयं प्रवासत्वेन कथ्यत इत्यर्थः। अत्र चिन्ताप्रजागरोद्वेगौ तानवं मलिनाङ्गता। प्रलापो व्याधिरुन्मादो मोहो मृत्युर्दशा दश। अयञ्च किञ्चिद्दूरगमनमयः सुदूरगमनमयश्च। तत्र पूर्वोऽपि द्विविधः; एकलीलागतः लीलापरम्परान्तरालगतश्च। अपभ्रंस्तमपूर्वो यथा, अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः। अपश्यंस्तमचक्षाणाः करिण्य इव यूथपमित्यादि ॥ ३८९ ॥

तथा, ततश्चान्तर्दधे कृष्णः सा वधूरन्वतप्यतेति ॥ ३९० ॥

स्पष्टम् ॥ १० ॥ ३० ॥ सः ॥ ३९० ॥

अत्र प्रलापाख्या दशा च। हा नाथ रमण प्रेष्ठेत्यादि ॥ ३९१ ॥

स्पष्टम् ॥ १० ॥ ३० ॥ श्रीराधा ॥ ३९१ ॥

तथा, जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि। दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न्वते। तथा, शरदुदाशये साधुजातेत्यादि। विषजलाप्ययेत्यादि। न खलु गोपिकानन्दनेत्यादि। मधुरया गिरेत्यादि। विरचिताभयमित्यादि। व्रजजनार्त्तिहन्नित्यादि। प्रणतदेहिनामित्यादि। तव कथामृतमित्यादि। प्रहसितमित्यादि। चलसि यद्व्रजादित्यादि। दिनपरिक्षय इत्यादि। प्रणतकामदमित्यादि। सुरतवर्द्धनमित्यादि। अटति यद्भवानित्यादि। पतिसुतान्वयेत्यादि। रहसि सम्विदमित्यादि। व्रजवनौकसामित्यादि। यत्ते सुजातचरणाम्बुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्कशेषु। तेनाटवीमटसि तद्व्यथते न किं स्वित् कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः ॥ २८२ ॥

तत्र विषजलाप्ययादित्यादिकं सर्वस्यैव गोकुलस्य स्वरक्षणीयतादृष्ट्याप्यस्मानधुना रक्षेत्यभिप्रायम्। वृषात्मजात् वत्सात् मयात्मजात् व्योमासुरादित्यर्थः। पुनश्च तत्तदलौकिककर्म लक्षीकृत्य न खलु गोपिकानन्दनो भवानित्यादिद्वये याचकरीत्या दैन्येन तत्र परमेश्वरत्वारोप इयं स्तुतिः। ततो विश्वस्यापि स्वरक्षणीयतादृष्ट्याप्यस्मानधुना रक्षेति पूर्ववत्। तत्रापि सात्वतानां वैष्णवानां श्रीमन्नन्दादीनां कुलेऽवतीर्णत्वात्। तत्रापि वाल्येऽस्मत्सखित्वात् वैशिष्ट्यमेव युज्यते इत्यर्थः। वृष्णिधुर्य्य इति तेषामपि यदुवंशोत्पन्नत्वात्। तथाच स्कान्दे मथुरामाहात्म्ये—गोवर्द्धनश्च भगवान् यत्र गोवर्द्धनो धृतः। रक्षिता यादवाः सर्वे इन्द्रवृष्टिनिवारणादिति। तत्रैवान्यत्र अपि श्रीगोविन्दकुण्डप्रस्तावे—यत्राभिषिक्तो भगवान् मघोना यदुवैरिणेति। अथवा विषजलाप्ययादित्यादिना स्तुत्वा पुनः सप्रणयेर्षमाहुः, न खल्वित्यर्द्धेन। एवं दुरवस्थापन्नानामस्माकम् उपेक्षया भवान् खलु निश्चयेन गोपिकायाः सर्वेषां व्रजवासिनामस्माकं रक्षाकारिण्याः श्रीव्रजेश्वर्य्या नन्दनो नास्ति किन्तु कस्यापि सुखेन दुःखेन चास्पृष्टत्वात् अखिल-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

देहिनाम् अन्तरात्मदृक् शुद्धजीवद्रष्टा परमात्मास्ति। एवमपि नूनं ब्रह्मणार्थितत्वे नानासक्ततयैव सर्वैरप्यवतीर्णत्वात् मास्मानुपेक्षितुमर्हति इति पुनः सदैन्यमाहुः विखनसेत्यर्द्धेन। पूर्ववत् तदभिप्रायेणैव विरचिताभयमित्यादिकमप्युक्तम्। प्रणतदेहिनामिति। श्रीनिकेतनमपि प्रणतदेहिप्रभृतीनां पापकर्षणादिरूपं तत एव परमकरुणामयत्वेनावगतमस्माकं कुचेष्वपि हृच्छयकर्त्तनाय कर्त्तुमुचितमित्यर्थः। हृच्छयनिदानं तदनुरूपं प्रतीकारान्तरं चाहुः मधुरयेति। नूनं यत्सौरभ्यदिग्धतयैव तव गीर्मधुरा मनो मोहयति तदेवाधरसीधु भवेदत्रौषधमित्यर्थः। अहो तवाधरसीधु तादृशपुण्यहीनाभिः कथं सुलभं स्यात्। यतः सा मधुरा गीरप्यस्तु दूरे। गुरुगोष्ठीनियमबन्धनकलत्वमापन्नाभिरस्माभिः प्रसङ्गान्तरेणापि जनपरम्पराप्रख्यायमानमपि तव चरितामृतमपि दुर्लभमित्याह, तव कथामृतमिति। तद्ये गृणन्ति तेऽपि अस्मभ्यं भूरिदा जाताः। कुतः पुनर्युष्माकं मय्येतावाननुरागस्तत्राहुः, प्रहसितमित्यादि। कथं मम प्रहसितादीनामेतादृशत्वं तत्राहुः, हे कुहकेति। तादृशी कापि कुहना या त्वयि विद्यते तां त्वमेव वेत्सीत्यर्थः। एवमन्यान्यपि योजनीयानि। परमप्रकर्षेणाहुः, यत्ते सुजातेति ॥ १० ॥ ३१ ॥ श्रीगोप्यः ॥ ३९२ ॥

एतदनन्तरं सम्भोगोदाहरणञ्च दर्शितम्। तं विलोक्यागतं प्रेष्ठमित्यादिभिः। अत्र च क्रमेण विरहसन्तापधुतिः। तत्र प्रथमतो यथा—सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः। जहुर्विरहजं तापं तदङ्गोपचिताशिषः ॥ ३९३ ॥

स्पष्टम् ॥ १० ॥ ३२ ॥ श्रीशुकः ॥ ३९३ ॥

अथ द्वितीयं किञ्चिद्दूरप्रवासमाह—गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः। कृष्णलीलाः प्रगायन्त्यो निन्युर्दुःखेन वासरान् ॥ ३०४ ॥

तत्र च तासां प्रलापाख्यामवस्थामाह—श्रीगोप्य ऊचुः। वाम-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वामहुतवामकपोलो वल्गितभ्रूरधरार्पितवेणुः। कोमलाङ्गुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुन्दः। व्योमयानवनिताः सहसिद्धैर्विस्मितास्तदुपधार्य सलज्जाः। काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः॥ ३९५॥

तथा, हन्त चित्रमबलाः शृणुतेदमित्यादि वृन्दशो व्रजवृषा इत्याद्यन्तम्। बर्हिणस्तवकेत्यादि तर्हि भग्नगतय इत्याद्यन्तम्। अनुचरैरित्यादि वनलता इत्याद्यन्तम्। दर्शनीयतिलक इत्यादि सरसि सारसेत्याद्यन्तम्। सहबल इत्यादि महदतिक्रमेत्याद्यन्तम्। विविधगोपचरणेष्वित्यादि सवनश इत्याद्यन्तम्। निजपदाब्जदलैरित्यादि व्रजति तेन वयमित्याद्यन्तम्। मणिधर इत्यादि क्वणितवेणुरवेत्याद्यन्तम्। कुन्ददामेत्यादि मन्दवायुरित्याद्यन्तञ्च तत्तद्युगलं स्मर्त्तव्यम्। अत्र सहसिद्धैरिति तेषामपि तादृशवेणुवाद्यमहिम्ना वनिताभावापत्तिः सूचिता। अनुचरैरिति। अत्रादिपूरुष इवाचलभूतिरित्यनेनैव बोध्यते। एवमेव सर्वत्र तासां प्रेमकृतसर्वोत्तमतास्फूर्त्या क्वचित्तदैश्वर्यवर्णनमुत्प्रेक्षैव यत्पत्यपत्येत्यादिवदिति। वनलता इति। अत्र विष्णुं सर्वत्रैव स्फुरन्तं श्रीकृष्णमित्यर्थः। निजपदाब्जेति। अत्र व्रजभूशब्देन तत्स्थानि तृणादीनि लक्ष्यन्ते। तेषाञ्च खुरतोदशमनं स्पर्शमाहात्म्येन नित्यमङ्कुरशालित्वकरणात्। अतएवापरिमितचतुष्पदविगाहेऽपि तच्चारस्य समावेशः सिध्यतीति ज्ञेयम्। एतदनन्तरं दर्शनात्मकसम्भोगो यथा—वत्सलो व्रजगवां यदगध्रो वन्द्यमानचरणः पथि वृद्धैः कृत्स्नगोधनमुपोह्य दिनान्ते गीतवेणुरनुगेडितकीर्त्तिः। उत्सवं श्रमरुचापि दृशीनामुन्नयन् खुररजश्छुरितस्रक्। दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः॥ ३९६॥

अत्र देवकीजठरभूरिति सङ्केतनामग्रहणम्। सङ्केतमूलन्तु प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मज इति ज्ञेयम्। अथवा अनेनैवाप्रसिद्धोऽपि देवकीशब्दोऽत्र श्रीयशोदायामेव ज्ञेयः। तत्र तस्या एव तन्मातृत्वेन

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रसिद्धत्वात् । नाभेरसावृषभ आस सुदेविसूनुरित्यत्र मेरुदेव्या एव सुदेवीति संज्ञावत् । द्वे नाम्नी नन्दभार्य्याया यशोदा देवकीति चेति पुराणान्तरवचनञ्च । एवं मदविघूर्णितलोचन ईषदिति यदुपति-र्द्विरदराजविहार इति स्मर्त्तव्यम् । व्रजगवामिति तत्र स्थिता बाल-वृद्धा गावस्तेषामप्युपलक्षणत्वेनोक्ताः । तथैतदग्रे—एवं व्रजस्त्रियो राजन् कृष्णलीलानुगायतीः । रेमिरेऽहःसु तच्चित्तास्तन्मनस्का महो-दयाः ॥ ३९७ ॥

एवमपराह्णेषु तदीयागमनानन्देन नित्यमहःस्वपि रेमिरे ॥१०॥ ३५ ॥ श्रीशुकः ॥ ३७७ ॥

अथ दूरप्रवासः । स च भावी भवन् भूतश्चेति त्रिविधः । तत्र भावी यथा—गोप्यस्तास्तदुपश्रुत्य बभूवु र्व्यथिता भृशम् । रामकृष्णौ पुरीं नेतुमक्रूरं व्रजमागतमित्यादि ॥ ३९८ ॥

तासां विलापश्च । अहो विधातस्तव न क्वचिद्दया संयोज्य मैत्र्या प्रणयेन देहिनः । तांश्चाकृतार्थान् वियुनङ्क्ष्यपार्थकं विचेष्टितं तेऽर्भक-चेष्टितं यथा ॥ ३९९ ॥

तथा, यस्त्वं प्रदर्श्यासितकुन्तलावृतमित्यादि । क्रूरस्त्वमक्रूरेत्यादि । न नन्दसूनुः क्षणभङ्गसौहृद इत्यादि । सुखं प्रभाता रजनीयमित्यादि । योऽह्नः क्षये व्रजमनन्तसख इत्यादिकञ्च स्मर्त्तव्यम् । भवन् यथा—गोप्यश्च दयितं कृष्णमनुव्रज्यानुरञ्जिताः । प्रत्यादेशं भगवतः काङ्क्षन्त्यश्चावतस्थिरे इत्यादि । ता निराशा निववृतुर्गोविन्दविनिवर्त्तने । विशोका अहनी निन्युर्गायन्त्यः प्रियचेष्टितमित्यन्तम् ॥ ४०० ॥

विशोका विविधशोकवृत्तयः सत्यः । तत्तद्गाने तत्तल्लीलायाः साक्षादिव स्फूर्त्तेर्वा विशोकप्राया अहनी अहोरात्रं निन्युर्यापया-मासुः ॥ १० ॥ ३९ ॥ श्रीशुकः ॥ ४०० ॥

भूतो यथा—ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिका इत्या-दिना दर्शितः । अत्र दूतमुखेन परस्परसन्देशश्च दृश्यते । दूता

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्फुरितसख्यांशा उद्धवबलदेवादयः। तत्र तं प्रश्रयेणावनताः सुसत्कृतं सव्रीड़हासेक्षणसूनृतादिभिरित्यादिदिशा पूर्वं रचिताकारगुप्तीनामपि तासां महार्त्तानां महासङ्कोचपरित्यागमप्याह—इति गोप्यो हि गोविन्दे गतवाक्कायमानसाः। कृष्णदूते व्रजायाते उद्धवे त्यक्तलौकिकाः ॥ ४०१ ॥

अपृच्छन्निति प्राक्तनक्रियया‍न्वयः ॥ १० ॥ ४७ ॥ श्रीशुकः ॥४०१॥

अतएव गोप्यो हसन्त्यः पप्रच्छ रामसन्दर्शनादृताः। कच्चिदास्ते सुखं कृष्णः पुरस्त्रीजनवल्लभ इत्यादि ॥ ४०२ ॥

हसन्त्यः प्रेमेर्ष्यया कृष्णमुपहसन्त्य इत्यर्थः ॥१०॥६६॥ सः ॥४०२॥

यथैव श्रीमदुद्धवसन्निधावुन्मादवचनमपि दर्शितम्—काचिन्मधुकरं दृष्ट्वा ध्यायन्ती कृष्णसङ्गमम्। प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ॥ ४०३ ॥

काचिच्छ्रीराधा। तथैव व्याख्यातं वासनाभाष्ये। एतद्विवरणञ्च श्रीदशमटिप्पन्यां दृश्यमिति। तत्र उन्मादेनैव मानिनीभङ्ग्याह अष्टभिः। मधुप कितवबन्धो इत्यादि ॥ ४०४ ॥

माने कारणमाह—सकृदधरसुधामित्यादि ॥ ४०५ ॥

अत्र किम्वदन्तीमाश्रित्य पद्मायाः प्रतिनायिकात्वेनोपन्यासः क्रियते। दूतप्रस्तुतिप्रत्याख्यानम्। किमिहेति ॥ ४०६ ॥

विजयते सर्वं वशीकरोतीति विजयः श्रीकृष्णः स एव सखा त्वद्बन्धुः। तस्य सखीनां सम्प्रति माथुरीणामिवाग्रतः तस्य विजयस्य तद्वशीकारपर्य्यन्तस्य प्रसङ्गः। तथापि तदासक्तौ तद्दोष एव कारणमिति स्वदोषं परिहरन्तो दैन्यमालम्ब्य तस्य निर्द्दयत्वं प्रतिपादयति दिवि भुवि चेत्यादि ॥ ४०७ ॥

अपि च एवमपि अस्मद्विधकृपणपक्षपाते सत्येव तत्र उत्तमश्लोकशब्दो भवितुमर्हति संप्रति तु तस्य तदभावदर्शनान्न सदयत्वं तदभावान्नतरामुत्तमश्लोकत्वमपि इति भावः। स्वकीमत्यमुद्रया जनितं तच्चाटुकारोद्यमातिशयं मत्वाह विसृज शिरसीत्यादि ॥ ४०८ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ततः प्रणयेर्ष्यया तस्मिन् दोषमारोप्यापि स्वस्यास्तदीयासक्तिपरित्यागासामर्थ्यं वर्णयन्ती तत्तद्दोषं परिहरति मृगयुरिवेत्यादि ॥ ४०९ ॥

यतस्तेऽप्यसिता एवंविधास्तस्मात् असितस्य श्यामजातिमात्रस्य सख्यैः प्रणयबन्धैः । पुनः तत्कथाया यद् दुस्त्यजत्वं तत् खलु तस्यापि दोषत्वेनैव स्थापयति यदनुचरितेत्यादि ॥ ४१० ॥

कर्णस्यैव पीयूषं न तु मनस इत्यापातमात्रस्वाद्यत्वं बोधितम् । विधूतद्वन्द्वधर्म्मत्वादेव विनष्टा अचेतनप्राया जाताः । इह वृन्दावने विहङ्गाः शुकादयोऽपि । भिक्षोः सन्यासिनश्चर्य्यां देहादिनैरपेक्ष्यं चरन्ति आचरन्तो दृश्यन्त इत्यर्थः । ततः सानुतापमाह, वयमृतमिवेति ॥ ४११ ॥

तदेवमष्टकेन मानभङ्गीं व्यज्य स्वकाठिन्यातिशयेन दूतं निवर्त्तमानमाशङ्क्य कलहान्तरिताभङ्ग्या द्वयेनाह प्रियसखेति ॥ ४१२ ॥

तत्रापि सकौटिल्यमर्द्धेनाह नयसीति । द्वन्द्वं मिथुनीभावः । दुस्त्यजद्वन्द्वत्वे हेतुः सततमिति । अत्र तद्वक्षसि स्थिता लक्ष्मीरेखैव प्रेमेर्ष्यया साक्षात्तद्रूपत्वेनोत्प्रेक्षिता । अन्ते सदैन्यमाह, अपि वतेति ॥ ४१३ ॥

अत्र तासां सान्त्वनं तद्दूतेन द्विधा क्रियते स्वकृतस्तुतिवाक्येन श्रीकृष्णसन्देशेन च । अत्र स्तुतिवाक्यम् । अहो यूयं स्म पूर्णार्था इत्यादि । श्रीकृष्णसन्देशो यथोदाहृतः श्रीकृष्णसन्दर्भे । भवतीनां वियोगो न इत्यादिकः । अत्र प्रकाशान्तरेण सर्वव्रजसहितस्य तस्य नित्यवृन्दावनविहाररूपोऽर्थस्तत्रैव प्रतिपादितः । यस्तु व्यक्तो ज्ञानयोगप्रतिपादकः स च दुःखादौ शमयितव्ये लोकरीत्या सम्भवतीत्येके । तत्र ज्ञानयोगोपदेशेन तासां न शान्तिरिति द्वितीयसन्देशो यत्त्वहं भवतीनां वै इत्यादिकः । या मया क्रीड़ता रात्र्यामित्यन्तः । अत्र यत्त्वहमित्यादौ अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया गतानित्यादिवक्ष्यमाणानुसारेण कार्य्यान्तरस्यापि भवत्प्रेमसुखवृद्धिफलत्व-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मेवेत्यभिप्राय:। ततस्ताः कृष्णसन्देशैर्व्यपेतविरहज्वराः। उद्धवं पूजयाञ्चक्रुर्ज्ञात्वात्मानमधोक्षजमित्यत्रापि व्यपेतविरहज्वरत्वं तदा-गमनादिश्रवणेनापातशान्तिरूपमेव। क्वचित्तदाग्रजः सोऽस्येत्या-युक्तेः। आत्मानं तस्य तद्भूततया तत्प्रेष्ठत्वेनान्तःकरणाधिष्ठातारम् अधोक्षजं श्रीकृष्णमेव मत्वा तदात्मत्वेनोद्धवं पूजयाञ्चक्रुरित्यर्थः। यथा चोक्तम्—तमागतं समागम्य कृष्णस्यानुचरं प्रियम्। नन्दः प्रीतः परिष्वज्य वासुदेवधियार्चयदिति ॥१०।४७॥ श्रीशुकः ॥४०२—४१३॥

एवं श्रीबलदेवद्वारकसन्देशोऽप्यनुमेयः। सङ्कर्षणस्ताः कृष्णस्य सन्देशैर्हृदयङ्गमैः। सान्त्वयामास भगवान् नानानुनयकोविद इत्य-नुसारेण। अथ तदनन्तरजः सन्दर्शनादिमयः सम्भोगः कुरुक्षेत्रे प्रसिद्धः। यथा—गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्ति। दृग्भिर्हृदीकृतमलं परिरभ्य सर्वास्तद्भाव-मापुरपि नित्ययुजां दुरापम् ॥ ४१४ ॥

तदेवं तासां अवस्थामुक्त्वा श्रीभगवतोऽपि तद्विषयकस्नेहमयी-मौहामाह—भगवांस्तास्तथाभूता विविक्त उपसङ्गतः। आश्लिष्या-नामयं पृष्ट्वा प्रहसन्निदमब्रवीत् ॥ ४१५ ॥

अन्तःसंक्षोभेणापि रुक्ष एव प्रहासोऽयं स्वापराधं क्षमयता प्रप-ञ्चितः। तत्र स्वव्यवहारोपपत्त्या सान्त्वयति—अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया। गतांश्चिरायितान् शत्रुपक्षक्षपण-चेतसः ॥ ४१६ ॥

किंवा रोषेण स्मरणमपि न कुरुथेति भावः। तत्र स्वदोषनिवा-रणं स्वानामिति। स्वानां स्वेषामस्मत्पितुः श्रीव्रजराजस्य बन्धु-वर्गाणां यादवानाम्। उभयेषामपि यादवत्वेन ज्ञातीनामिति वा। तत्रातिविलम्बे कारणं शत्रुपक्षेति। ततश्च भवतीनां निर्विघ्नः संयोगोऽप्यनेन भविष्यतीति भावः। आत्मनो वामान्तरसङ्गमाशङ्का-मुदस्येश्वरपारतन्त्र्योपपादनेन सान्त्वयति—अप्यवध्या यथात्मान्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्विदक्तत्त्वाविभङ्ग्या। नूनं भूतानि भगवान् युनक्ति वियुनक्ति चेत्यादि द्वयम् ॥ ४१७ ॥

स्वस्य परमेश्वरत्वप्रसिद्धिमाशङ्क्य सङ्कुचन् तथापि विरहजात-प्रेमातिशयोऽयं युष्मदभीष्टाव्याघातायैव जात इत्याह—मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते। दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापनः ॥ ४१८ ॥

टीका च—मयि भक्तिमात्रमेव तावदमृतत्वाय कल्पते। यत्तु भवतीनां मत्स्नेह आसीत् तद्दिष्ट्या अतिभद्रम्। कुतः मदापनः मत्-प्रापण इत्येषा। तत्र स्वप्राप्तौ विश्वासार्थं देशान्तरस्थितस्यापि स्वस्य श्रीकृष्णात्मरख्यनराकृतिपरब्रह्मणः सर्वाश्रयत्वमनुभावयति—अहं हि सर्वभूतानामित्यादिद्वये ॥ ४१९ ॥

उक्तञ्च दामोदरलीलायां न चान्तर्न बहिर्यस्य इत्यादि। अत्र च पद्यद्वये प्रकाशान्तरेण वृन्दावन एव सर्वब्रजसहिततदीयनित्यविहारः श्रीकृष्णसन्दर्भे दर्शितः। स एवात्रानुसन्धेयः। तत्र च तासां तथैवा-नुभवोदयो जात इत्याह—अध्यात्मशिक्षयेति ॥४२०॥

आत्मानं स्वं श्रीकृष्णमधिकृत्य या शिक्षा तया। विरहोद्भूत-तदनुस्मरणजीर्णदेहास्तं श्रीकृष्णं तथैवान्वभवन्निति। एके त्वाहुः, अहं हीत्यादिकं लोकरीत्या दुःखनिवारणार्थमेव ब्रह्मज्ञानमुक्तं न तु तत्र तात्पर्य्यम्। यथा रुक्मिवैरूप्यकृतौ श्रीबलदेवेन श्रीरुक्मिण्यै तदुपदिष्टं तस्याः साक्षात् लक्ष्मीत्वात् लौकिकलीलाविशेषत्वमेव वहति न तु तत्र तात्पर्य्यं तद्वत्। तदेवमेव तादृशाध्यात्मशिक्षयापि तास्तमेवाध्यगान् न तु ब्रह्मेति। तथापि तासां साक्षात्प्राप्त्युत्कण्ठा-माह—आहुश्च ते नलिननाभ पदारविन्दमित्यादि ॥४२१॥

तत्र हे नलिननाभ नोऽस्माकं दुःखोद्रेकेण त्वच्चिन्तनारम्भजाय-मानमूर्च्छानां ते तव पदारविन्दं मनस्यप्युदियात्। यत् खलु यथा भवतोपदिष्टं तदनुसारेणाक्षुभितभावैर्बोधैर्योगेश्वरैर्हृदि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विचिन्त्यमित्यादिश्रीकृष्णसन्दर्भव्याख्या द्रष्टव्या ॥ १० ॥ ८२ ॥ श्रीशुकः ॥ ४१४—४२१ ॥

तदेवं सन्दर्शनसंस्पर्शनसंजल्पात्मकसम्भोगोऽत्र दर्शितः। तस्मिन् मासत्रयसम्वासात्मके च वैशिष्ट्यान्तरमप्यूह्यम्। अथ पुनस्तदनन्तर-जातविप्रलम्भानन्तरमपि भावी यः पुनर्विच्छेदः सम्भोगः स च स च तत्रैव सूचितोऽस्ति। यथा, तथानुगृह्य भगवान् गोपीनां स गुरुर्गति-रिति ॥ ४२२ ॥

आहुश्चेत्यादिना यथा तासां साक्षात्तत्प्राप्तिपर्य्यन्तमभीष्टं तथानु-गृह्य गतिर्नित्यतया प्राप्तव्यः ॥ १० ॥ ८८ ॥ श्रीशुकः ॥ ४२२ ॥

एवमेव श्रीकृष्णसन्दर्भे पाद्मोत्तरखण्डाद्यनुसारेण दर्शितमस्ति। तत्र हि श्रीकृष्णस्य द्वारकातो वृन्दावने पुनरागमनम्। तदा प्रापञ्चिकलोकप्रकटतया मासद्वयं ताभिः क्रीड़ा। तदनन्तरं च तद-प्रकटतया ताभ्यो नित्यसंयोगदानमिति। एकादशेऽपि स्वयमेवोद्धवं प्रति तदेव स्पष्टमुक्तम्। तत्र रामेण सार्द्धं मथुरां प्रणीत इत्यादिद्वये वियोगतीव्राधयस्ता मत्तोऽन्यं सुखाय न ददृशुरिति। तास्ताः क्षपा मया हीनाः कल्पसमा वभूवुरिति चातीतप्रयोगेण तदानीं विरहस्य नास्तित्वं बोधितम्। तदनन्तरं स्वप्राप्तिसुखोल्लासश्च वर्णितः। ता नाविदन्मय्यनुषङ्गबद्धधिय इत्यादिद्वयेन। अनु महाविरहस्य पश्चादयः सङ्गस्तेन बद्धधियः सत्यः परमानन्दावेशेन तदानीं किमपि नाविदन्। हर्षमोहं प्रापुरित्यर्थः। तत्र तज्ज्ञानस्य कृष्णैकताननतायां दृष्टान्तः यथेति। अस्यार्थान्तरमपि श्रीकृष्णसन्दर्भे कृतमस्ति। मत्-कामा रमणं जारमित्यादौ तदनन्तरपद्ये तच्च यादृशं प्रापुस्तथा विशिनष्टि। विवृतञ्च तत्रैव संक्षेपतश्च। मां श्रीकृष्णाख्यं परमं ब्रह्म प्रापुः। तच्च मन्नित्यप्रेयसीलक्षणं स्वस्वरूपमजानन्त्यो जाररूपं पूर्वं प्रापुः। तथापि मयि कामः रमणत्वेनाभिलाषो यासां तादृश्यः सत्यो रमणरूपं तु पश्चादिति। अतः परकीयाभासत्वञ्चासां काल-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कतिपयमयत्वेनैव व्याख्यातम्। एवमेवाभिप्रेतमस्मदुपजीव्यश्रीम-च्चरणानामुज्ज्वलनीलमणौ तत्रोपक्रमो नेष्टा यदङ्गिनि रसे कविभिः परोढ़ा तद्गोकुलाम्बुजदृशां कुलमन्तरेण। आशंसया रसविधेरव-तारितानां कंसारिणा रसिकमण्डलशेखरेणेत्यत्र अवतारसमय एव तथा व्यवहारनिगमनात्। उपसंहारे च ललितमाधवस्य दग्धं हन्त दधानया वपुरित्यादावौपपत्यभ्रमहानानन्तरलीलायां सर्वफलस्य समृद्धिमदाख्यस्य सम्भोगस्य दर्शितत्वात्। तदेवमस्य विप्रलम्भचतुष्टय-पुष्टस्य सम्भोगचतुष्टयस्य सन्दर्शनादित्रयात्मकस्यावान्तरभेदा अन्येऽपि ज्ञेयाः। यथा लीलाचौर्य्यं सङ्गानं रासः जलक्रीड़ा वृन्दावनविहार इत्यादयः। तत्र लीलाचौर्य्यं यथा—तासां वासांस्युपादाय नीपमारुह्य सत्वर इत्यादि ॥ ४२३ ॥

स्पष्टम् ॥ १० ॥ २२ ॥ श्रीशुकः ॥ ४२३ ॥

सङ्गानम्—काचित् समं मुकुन्देनेत्यादौ। एवं कदाचिदथ गोविन्दो रामश्चाद्भुतविक्रमः। विजह्रतुर्व्रजे रात्र्यां मध्यगौ व्रज-योषिताम्। उपगीयमानौ ललितं स्त्रीजनैर्बद्धसौहृदैः। स्वलङ्कृता-नुलिप्ताङ्गौ स्रग्विनौ विरजाम्बरौ। इत्यादि ॥ ४२४ ॥

प्रायो होरिकावसरोऽयम्। व्रज एव गानेन सम्भ्रात्कस्यापि तस्य स्त्रीजनैर्विहारात्। तथा भविष्योत्तरविधानात्। तथैवाद्या-प्यार्य्यावर्त्तीयप्रजानामाचारोऽपि दृश्यते। अत्र च निशामुखं मानयन्ता-वुदितोडुपतारकमिति तन्महोत्सवशालिन्यां फाल्गुनपौर्णमास्यां हेमन्तशिशिरर्हिमकुज्झटिकान्ते चन्द्राद्युल्लासे तदुल्लासो वर्णितः। तस्मात्तदानीं सख्योल्लासधारिणा श्रीरामेणापि युतिः सङ्गतैव। वने रात्र्यामिति पाठस्तु क्वाचित्क एव। तत्र च व्रजान्तस्थमेव वनं ज्ञेयम् ॥ १० ॥ ३४ ॥ श्रीशुकः ॥ ४२४ ॥

रासः—तत्रारभत गोविन्दो रासक्रीड़ामनुव्रतैः इत्यादि ॥४२५॥

जलक्रीड़ा—सोऽम्भस्यलं युवतिभिः परिषिच्यमान इत्यादि ॥४२६॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वृन्दावनविहारः—ततश्च कृष्णोपवने जलस्थलप्रसूनगन्धानिल-जुष्टदिक्तटे इत्यादि ॥ ४२७ ॥

स्पष्टम् ॥ १० ॥ ३३ ॥ सः ॥ ४२५—४२७ ॥

अथ संप्रयोगो यथा, बाहुप्रसारपरिरम्भकरालकोरुनीवीत्यादि ॥ ४२८ ॥

स्पष्टम् ॥ १० ॥ २९ ॥ सः ॥ ४२८ ॥

इयञ्च श्रीकृष्णचन्द्रस्योज्ज्वललीला राससम्बन्धिन्यप्यनन्तत्वेन क्षम्यता एवं शशाङ्कांशुविराजिता निशा इत्यादौ। अथ सर्वसौभाग्यवती-मूर्द्धमणेः श्रीराधिकायाः सम्बन्धिनीं लीलां वर्णयन्ति—कस्याः पदानि चैतानि याताया नन्दसूनुना। अंसन्यस्तप्रकोष्ठायाः करेणोः करिणा यथा ॥ अनयाराधितो नूनं भगवान् हरिरीश्वरः। यन्नो विहाय गोविन्दः प्रीतो यामनयद्रहः ॥ धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः। यान् ब्रह्मेशौ रमा देवी दधुर्मूर्द्ध्न्यघनुत्तये ॥ तस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत्। यैकापहृत्य गोपीनां धनं भुङ्क्तेऽच्युताधरम् ॥ न लक्ष्यन्ते पदान्यत्र तस्या नूनं तृणाङ्कुरैः। खिद्यत्सुजाताङ्घ्रितलामुन्निन्ये प्रेयसीं प्रियः ॥ इमान्यधिकमग्नानि पदानि वहतो वधूम्। गोप्यः पश्यत कृष्णस्य भाराक्रान्तस्य कामिनः ॥ अत्रावरोपिता कान्ता पुष्पहेतो र्महात्मना। अत्र प्रसूनावचयः प्रियार्थे प्रेयसा कृतः ॥ प्रपदाक्रमणे एते पश्यतासकले पदे। केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतम्। तानि चूड़यता कान्तामुपविष्टमिह ध्रुवम् ॥ ४२९ ॥

अत्र कस्या इति सर्वासां वाक्यम्। अनया इति सुहृदाम्। धन्या इति तटस्थानाम्। तस्या इति प्रतिपक्षाणाम्। न लक्ष्यन्त इति ताः खेदयन्तीनां सखीनाम्। इमानीति तदसहमानानां प्रति-पक्षाणाम्। अत्रावरोपितेति सार्द्धं पुनः सखीनाम्। केशेति पुनः प्रति-पक्षाणामर्द्धम्। तानीति पुनः सखीनामिति ज्ञेयम्। तन्मियन-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विषयकातत्तच्छब्दप्रयोगेण सौहृदादिव्यञ्जनात् । या तु विलोक्यार्त्ताः समभुवन्निति सर्वासामेवार्त्तिकृता सापि स्वस्योत्कण्ठाविशेषेण सर्वत्र सङ्गच्छत एव ॥ १० ॥ ३० ॥ श्रीव्रजदेव्यः ॥ ४२९ ॥

तत्र तस्याः श्रीवृन्दावनेश्वर्य्या लीलायां प्राक्प्रदर्शितमप्येणपत्नीत्यादिद्वयं चानुसन्धेयम् ॥ * ॥

अत्र विस्तरशङ्कातो या या व्याख्या न विस्तृता ।
सा श्रीदशमटिप्पन्यां दृश्या रसमभीप्सुभिः ॥

तदेवमनेन सन्दर्भेण शास्त्रप्रयोजनं व्याख्यातम् । तथा चैवमस्तु ।

आलीभिः परिपालितः प्रबलितः सानन्दमालोकितः ।
प्रत्याशं सुमनःफलोदयविधौ सामोदमास्वादितः
वृन्दारण्यभुवि प्रकाश⸺धुरः सर्वातिशायिश्रिया
राधामाधवयोः प्रमोदयतु मामुल्लासकल्पद्रुमः ॥
तादृशभावं भावं प्रथयितुमिह योऽवतारमायातः ।
आदुर्जनगणशरणं स जयति चैतन्यविग्रहः कृष्णः ॥ *

इति कलियुगपावनस्वभजनविभजनप्रयोजनावतारश्रीश्रीभगवत्-
कृष्णचैतन्यदेवचरणानुचरविश्ववैष्णवराजसभासभाजनभाजन
श्रीरूपसनातनानुशासनभारतीगर्भे प्रीतिसन्दर्भो
नाम षष्ठः सन्दर्भः ॥ ६ ॥

श्रीभागवतसन्दर्भे सर्वसन्दर्भगर्भगे ।
प्रीत्याख्यः षष्ठसन्दर्भः समाप्तिमिह सङ्गतः ॥

समाप्तोऽयं षष्ठः सन्दर्भः ।

सम्पूर्णोऽयं ग्रन्थः ।

---

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तत्त्वसन्दर्भस्य मूलम्—२५ श्लोकाः। लेख्याः ४७५ श्लोकाः।

भगवत्सन्दर्भस्य मूलम्—११२ श्लोकाः। लेख्याः २७४० श्लोकाः।

परमात्मसन्दर्भस्य मूलम्—१०९ श्लोकाः। लेख्याः २७५८० श्लोकाः।

श्रीकृष्णसन्दर्भस्य मूलम्—१८९ श्लोकाः। लेख्याः ३१७५ श्लोकाः।

भक्तिसन्दर्भस्य मूलम्—३४० श्लोकाः। लेख्याः ४६२६ श्लोकाः।

प्रीतिसन्दर्भस्य मूलम्—४२९ श्लोकाः। लेख्याः ४३०० श्लोकाः।

लेख्याः साकल्येन १८०७४ श्लोकाः।

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY.
Jangamwadi Math, VARANASI.
Acc. No. 1284 1494

धन्या

इति ता.

पञ्चाणाम्

पञ्चाणामर्द्ध

JAGADGURU VISHWARADHYA
A SIMHASAN JNANAMANDIR
LIBRARY,
...wadi Math, VARANASI.
No.

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

